# मुग्धबोधं व्याकरणम्

मुकुन्दं सच्चिदानन्दं प्रणिपत्य प्रणीयते।
मुग्धबोधं व्याकरणं परोपकृतये मया।।

जीवानन्द विद्यासागर

# मुग्धबोधं व्याकरणम् ।

---

महामहोपाध्यायेन श्रीमता बोपदेवेन विरचितम्

श्रीमद्दुर्गादासविद्यावागीश-श्रीरामतर्क-

वागीश-कृतटीकाद्वयसमेतम् ।

॥ श्रीः ॥

विद्याभवन प्राच्यविद्या ग्रन्थमाला
७४

# मुग्धबोधं व्याकरणम् ।

महामहोपाध्यायेन श्रीमता वोपदेवेन विरचितम्
श्रीमद्दुर्गादासविद्यावागीश-श्रीरामतर्क-
वागीश-कृतटीकासमेतम् ।

पण्डितकुलपतिना बि, ए, उपाधिधारिणा
श्रीजीवानन्दविद्यासागरभट्टाचार्य्येण
संस्कृतं प्रकाशितञ्च ।



चौखम्बा विद्याभवन
वाराणसी

प्रकाशक

**चौखम्बा विद्याभवन**

( भारतीय संस्कृति एवं साहित्य के प्रकाशक तथा वितरक )

चौक ( बनारस स्टेट बैंक भवन के पीछे )

पो० ब्ला० नं० १०६९, वाराणसी २२१००१

दूरभाप : ३२०४०८






पुनर्मुद्रित संस्करण १९९४

मूल्य २५०-००

अन्य प्राप्तिस्थान

**चौखम्बा सुरभारती प्रकाशन**

के० ३७/११७, गोपालमन्दिर लेन

पो० बा० नं० ११२९, वाराणसी २२१००१

दूरभाप : ३३३४३१

*

**चौखम्बा संस्कृत प्रतिष्ठान**

३८ यू. ए., बंगलो रोड, जवाहरनगर

पो० बा० नं० २११३

दिल्ली ११०००७

दूरभाष : २३६३९१

मुद्रक

**भोजी मुद्रणालय**

**वाराणसी**

# निर्घण्टः ।

# मुग्धबोधं व्याकरणम् ।

## मङ्गलाचरणम् ।

मुकुन्दं सच्चिदानन्दं प्रणिपत्य प्रणीयते ।
मुग्धबोधं व्याकरणं परोपकृतये मया ॥

---

लक्ष्मीकान्तं निखिलजगतां सर्गसंहारहेतुं,
दुर्गादासो धरणिपतितः कोटिकृत्वः प्रणम्य ।
पर्य्यालोच्याखिलबुधमतं धीमतां पाठकानां,
सन्तोषार्थं रचयतितरां मुग्धबोधस्य टीकाम् ॥
श्रीमद्विद्यानिवासाद्यैराद्यैर्यद्यपि सूरिभिः ।
भूरिभिर्विहिता व्याख्या तथाप्याख्यायते मया ॥
अयुक्तं यदिह प्रोक्तं प्रमादेन भ्रमेण वा ।
वचो मया दयावन्तः सन्तः संशोधयन्तु तत् ॥

श्रीवोपदेवः स्वयं कृतस्य ओं नमः शिवायेत्यादि बहुलं ब्रह्मणीत्यन्तस्य सूत्ररूपव्याकरणस्य दुरूहत्वात् स्वयं वृत्तिं चिकीर्षुस्तस्य झटिति समाप्तये शिष्टाचारप्राप्तं मङ्गलमाचरन् सारासारमयविस्तरव्याकरणान्तरपाठविमुखानां नानादिग्देशीयशिष्याणां झटिति प्रवृत्तये ग्रन्थनाम निर्दिशन् शिष्यशिक्षार्थमादौ तन्निबध्नाति मुकुन्दमित्यादि ।

मया मुकुन्दं प्रणिपत्य मुग्धबोधं व्याकरणं प्रणीयते प्रकर्षेण तात्पर्य्यार्थं नीयते वृत्त्या इति यावत् । मुकुन्दमिति मुक्तिं ददातीति मुकुन्दः मनीषादित्वात् मुक्तेर्मुकुरादेशो विभक्तेरलुक् च । अथवा मुकुर्मुक्तौ महेशे मुः कुः पृथिव्यामशोभने इति हड्डचन्द्रात् । मुकुं ददातीति मुकुन्द इति । "मुकुमव्ययमान्तञ्च निर्वाणमोक्षवाचकम् । यस्तद्ददाति भक्तेभ्यो मुकुन्दस्तेन कीर्त्तितः ।" विष्णुकृष्णादि नाम त्यक्त्वा मुक्तिदायकनाम्ना मुक्तिलिप्सूनां प्रवृत्तिं सम्भाव्य आयुर्ज्ञानसुखार्थिनां प्रवृत्तये विशेषणमाह सच्चिदानन्दमिति । सन् नित्यः चित् ज्ञानस्वरूपः आनन्दः सुखस्वरूपः आनन्दयतीति पचादित्वादन् आनन्द इति विशेष्यं पदम । संश्रासौ चित्चासा-

## १ । ओं नमः शिवाय ।

ओं ।१।, नमः ।१।, शिवाय ४। ।

### इति नमस्कारसूत्रम् ।

---

वानन्दश्चेति सच्चिदानन्दस्तं सच्चिदानन्दम् अथवा सन्तौ नित्यौ चिदानन्दौ ज्ञानसुखे यस्येति विग्रहः। प्रणिपत्य प्रकर्षेण नत्वा भक्तिश्रद्धातिशययुक्तनमस्कारं कृत्वेत्यर्थः। नमस्कारस्तु स्वापकर्षबोधकव्यापारविशेषः स्वाधिकोत्कर्षताया ज्ञापकमिति वा। मुग्धबोधमिति। मुग्धः सुन्दरमूढयोरिति विश्वप्रकाशः। मुग्धः सुन्दरो बोधो ज्ञानं पदपदार्थानां भवत्यस्मादिति मुग्धबोधम्। अथवा मुग्धान् मूढान् अल्पबुद्धिजनान् बोधयतीति मुग्धबोधं द्वातृषणिति षण्। व्याकरणमिति। व्याक्रियन्ते प्रकृतिप्रत्ययभेदेन व्युत्पाद्यन्ते शब्दा अनेनास्मिन् वेति करणे अधिकरणे वा अनट्। ननु कातन्त्रादिवदन्ये वृत्तिं कुर्वन्तु स्वयं कथं करोषि इत्याशङ्क्याह परोपकृतये इति। परा श्रेष्ठा चासौ उपकृतिश्चेति परोपकृतिस्तस्यै मदीया वृत्तिः सर्वाभिप्रायान् व्यञ्जयिष्यतीति शिष्याणां श्रेष्ठोपकारः सूचितः। ननु मङ्गलं कथं क्रियते। मङ्गलाद्विघ्नध्वंसो विघ्नध्वंसात् प्रारिप्सितसमाप्तिरिति चेन्न। बाणभट्टादिर्मङ्गले सत्यपि ग्रन्थसमाप्त्यभावात् माघादौ मङ्गलाभावेऽपि समाप्तिदर्शनात्। उच्यते। बाणभट्टादिर्मङ्गलेन बहुतरविघ्नानां नाशयितुमशक्यत्वात् ग्रन्थसमाप्तिर्न जाता। माघादेर्दुरदृष्टाभावेन विघ्नाभावात् मङ्गलाभावेऽपि समाप्तिर्जातेति। ततश्च दुरदृष्टमस्ति नवेति सन्दिहन्तः सर्वे किमपि प्रारिप्समाना मङ्गलं कुर्वन्त्येव। मङ्गलन्तु दुरदृष्टसत्त्वे तन्नाशयति तदसत्त्वे पुण्यं जनयतीति निष्कर्षः।

ओमिति लुप्तप्रथमैकवचनम्। ओंकारोच्चारणमेकं मङ्गलम्। "ओंकारश्चाथशब्दश्च द्वावेतौ ब्रह्मणः पुरा। कण्ठं भित्वा विनिर्जातौ तेन माङ्गलिकावुभौ ॥"इति स्मरणात्। विघ्नबाहुल्यशङ्कया मङ्गलान्तरमाचरयति नमःशिवायेति। महादेवनमस्कारात्मकमपरं मङ्गलम्। अथवा ओमिति लुप्तचतुर्थ्येकवचनम्। ओं नमः विष्णुशिवब्रह्मभ्यो नम इत्यर्थः। "अकारो विष्णुरुद्दिष्ट उकारस्तु महेश्वरः। मकारेणोच्यते ब्रह्मा प्रणवेन त्रयो मताः ॥" इति स्मरणात्। तेभ्यो नमः कथमित्याह शिवायेति तादर्थ्ये चतुर्थी। शिवाय ग्रन्थस्य झटिति समाप्तिरूपकल्याणायेत्यर्थः। कायिकं मानसञ्च नमस्कारं हित्वा आचार्य्येण कथं वाचिको नमस्कारः कृत इति शिष्याणां सन्देहमुच्छिन्दन् ग्रन्थस्य प्रयोजनाभिधेयसम्बन्धांश्च ज्ञापयन्नाह ॥ १ ॥

## २। शं शब्दैः।

शं।१।, शब्दैः ३।।।।

शब्दैर्मङ्गलं स्यात्। इति प्रयोजनाभिधेयसम्बन्धाः।

---

# स्याद्यन्ताधिकारः।

## सन्ध्यध्यायः।

### १म पादः—संज्ञा।

## ३। अ इ उ ऋ ऌ क, ए ओ ङ, ऐ औ च, ह य व र ल, ञ ण न ङ म, झ ढ ध घ भ,

---

शब्दैर्मङ्गलं स्यात्। इति प्रयोजनाभिधेयसम्बन्धाः शंशब्दैरिति। शमिति शब्देनेह मङ्गलप्रयोजनाभिधेयसम्बन्धा उच्यन्ते अव्ययानामनेकार्थत्वात्। शब्दैर्मङ्गलं स्यादिति। अत्र शब्दैरेव मङ्गलं सूचितं स्यादित्यर्थः। शब्दव्युत्पादकशास्त्रारम्भे शब्दैरेव मङ्गलं कर्त्तव्यमिति न्यायात्। इति प्रयोजनाभिधेयसम्बन्धा इति। इति शब्दस्याव्ययत्वेन प्रयोजनपक्षे सम्बन्धपक्षेऽपि तृतीयान्तत्वम् अभिधेयपक्षे तु प्रथमान्तत्वं बोध्यम्। इति एभिः शब्दैः सह व्याकरणस्य प्रयोजनम्। व्याकरणव्युत्पन्नशब्दज्ञानाधीनं शास्त्रान्तरज्ञानं तदधीना च वैदिकी क्रिया तत्फलं स्वर्गादिरित्यभिप्रायः। इति इमे शब्दा व्याकरणस्याभिधेया वाच्याः। इति एभिः शब्दैः सह व्याकरणस्य सम्बन्धः शब्दव्याकरणयोर्व्युत्पाद्यव्युत्पादकभावः सम्बन्ध इत्यर्थः। अत्र सूत्रे शब्द इति लिङ्गस्य अभिधेयपक्षे प्रथमान्ततया वक्तुमुचितत्वेऽपि मङ्गलप्रयोजनसम्बन्धानामनुरोधात् तृतीयान्तत्वम्। विरुद्धधर्मसमवाये भूयसां स्यात् सधर्मकत्वमिति जैमिनिसूत्रात्। ग्रन्थस्य प्रयोजनाभिधेयसम्बन्धानामवश्यवक्तव्यत्वे प्रमाणन्तु "सर्वस्यैव हि शास्त्रस्य कर्मणो वापि कस्यचित्। यावत् प्रयोजनं नोक्तं तावत्तत् केन गृह्यते॥ सिद्धार्थं सिद्धसम्बन्धं श्रोतुं श्रोता प्रवर्त्तते। ग्रन्थादौ तेन वक्तव्यः सम्बन्धः सोऽभिधेयकः॥" इति प्राञ्चः। ग्रन्थस्य सङ्क्षेपनिर्वाहार्थं सङ्केतेन संज्ञाः परिभाषाश्चादौ भाष्यन्ते॥ २॥

अ इ उ इत्यन्तं लुप्तप्रथमाबहुवचनान्तं छन्दोवत् सूत्राणि भवन्तीति न्यायात्

**ज ड़ द ग व, ख फ छ ठ थ, च ट त क प, श ष साद्यन्ताख्याः।**

अ—स ।१।।।, आद्यन्ताख्याः १।।। ।

**एषां मध्ये ये वर्णास्ते आदिवर्णान्तवर्णसमाहारसंज्ञाः स्युः।**

---

बहुलं ब्रह्मणीति जसो लुक्। एवं सर्वत्र। अथ इयेत्यादिवत्। आदिश्च अन्तश्च आद्यन्तौ तौ मिलितौ आख्या येषां ते आद्यन्ताख्याः। अथवा आदिना सहितोऽन्तः आद्यन्तः स आख्या येषां ते आद्यन्ताख्याः। एषां मध्ये इति मध्यशब्दस्येह अधिकरणमात्रवाचित्वम् अत्र सूत्रे ये वर्णा इत्यर्थः। मध्यावयववाचित्वे तु अकारसकारयोः प्राप्तिर्न स्यात्। आदिवर्णान्तवर्णयोर्यः समाहारः क्रमपठितौ यौ आदिवर्णान्तवर्णौ तावेव संज्ञा येषां ते आदिवर्णान्तवर्णसमाहारसंज्ञाः। अत्र अक् अच् अव् अम् अव् इति पञ्च। इक् इङ् इच् इल् इति चतस्रः। ऋक् इत्येका। एङ् एच् एह् इति तिस्रः। ऐच् इत्येका। हल् हव् हस् इति तिस्रः। यल् यम् यप् इति तिस्रः। वस् इत्येका। ञम् ञप् ञस् इति तिस्रः। णङ् णम् णप् इति तिस्रः। झभ् झव् झप् झस् इति चतस्रः। ढभ् इत्येका। जव् इत्येका। खय् खप् खस् इति तिस्रः। छत् इत्येका। चक् चप् इति द्वे। शस् इत्येका। इति चत्वारिंशत् संज्ञानां यथास्थानं प्रयोजनं बोध्यम्। किन्तु पृ॰णोऽदान्ते इत्यत्र प्रथमवकारान्तोऽव अन्यत्र शेषवकारान्त अव इति बोध्यम्। ननु एते वर्णा आद्यन्ताख्या इत्युक्त्या अस् इत्येकैव संज्ञा प्रतीयते अक् इक् इत्यादयः कथमिति चेत् सत्यम्। तथात्वे आद्यन्ताख्या इति नोक्त्वा अस् इत्येवावदिष्यत्। अत्र रामानन्दस्तु चर्पोदितेति वक्ष्यमाणपरिभाषया ह्रस्वैर्गृहीतानां दीर्घाणामपि अक् संज्ञा सिद्धेत्याह। अक्संज्ञाया असिद्ध्या सवर्णग्रहणपरिभाषाया अपि असिद्धिस्तदसिद्ध्या च अक्संज्ञाया असिद्धिरित्यन्योन्याश्रयदोषापत्तेः। वस्तुतस्तु अकारादीनामेव मात्राधिक्यादाकारादयो नतु पृथग्वर्णाः। अतएव अ आ अ इत्यादौ वक्तव्ये अत्रयमित्यादि स्वयं वक्ष्यति। नच तर्हि इद्रहितेनाका र्णो गृह्यते इति परिभाषैव व्यर्थेति वाच्यम् इद्युक्तेनाका सवर्णो न गृह्यत इति निषेधार्थमवश्यं वक्तव्यत्वात्। आवत् स्वर्धप्लु इत्यस्य वृत्तौ अ आ अ इत्येषां वर्णत्रयत्वेनोपन्यासस्तु पृथक् संज्ञाविधानार्थं पृथक्त्वोपचारात्॥ २॥

## ४। इत् कृते।

इत्।१।, कृते।४।।

कस्मैचित् कार्य्यायोच्चार्य्यमाणो वर्ण इत्संज्ञः स्यात्। तस्य कार्य्येऽनुच्चारः। यथा अचि क ङ चाः संज्ञार्थाः। हसे अकार उच्चारणार्थः॥

## ५। आवत् स्वर्घप्लु।

आ।१।, वत्।१।, स्वर्घप्लु।१।।

अ आ अ इति वर्णत्रयं क्रमेण स्वर्घप्लुसंज्ञं स्यात्। वत् शब्दात् इ ई इ इत्यादिषु च। स्व एज् नास्ति।

---

कृते इत्येकारान्तमव्ययं प्रयोजनवाचकं लुप्तचतुर्थ्यकं कार्य्याणां बहुलतया स्वरूपेण निर्देष्टुमशक्यत्वात् कस्मैचित् कार्य्यायेत्युक्तम्। इण् गतौ क्विप् इत्। एति गच्छति न तिष्ठतीति व्युत्पत्त्यैव इतोऽस्थायित्वं सिद्धम्। अतएव आह तस्य कार्य्येऽनुच्चार इति। हसेऽकार उच्चारणार्थ इति परवर्णसम्बन्धं विना हसानामुच्चारणं न सम्भवतीति विज्ञापनेनैव हसानां परवर्णयोगः सूचितः। उच्चारणार्थोऽपि वर्ण इत् संज्ञः स्यात् अतएव दध्यस्थीत्यादिना अनङादेशे अङाविताविति स्वयं वक्ष्यति॥ ४॥

अश्च आश्च अश्चेति समाहारेऽपि मतत्वात् क्लीवत्वाभावेन ह्रस्वाभावे आ इत्येवम्। स्वश्च घश्च प्लुश्चेति यत्र चेति वर्णद्वयं दृश्यते तत्र समाहारो बोध्यः। रामानन्दकाशीश्वरौ तु आ इव आवदित्येवं पदं मत्वा अ आ अ इत्येतेषां संज्ञात्रयं सिद्धवत् कृत्वा तदादिवर्णानामपि विधीयत इत्याहतुः। तदिदं स्वयमसिद्धः कथं परान् साधयतीति न्यायादसिद्धस्य सिद्धवत् करणेन अतीव हास्यास्पदत्वात्। वस्तुतस्तु आ इति लुप्तप्रथमैकवचनं वदिति लुप्तप्रथमैकवचनं यद्वा यथा तथैवैवं साम्ये इत्यमरोक्ताऽव्ययवच्छब्दोऽयं नतु वतुप्रत्ययः। किञ्च वच्छब्दस्य इवार्थेन साकाङ्क्षत्वा दाकारेणैव सम्बन्धः सन्निहिते बुद्धिरन्तरङ्गेति न्यायात्। ततश्च आ स्वर्घप्लुसंज्ञं स्यादित्येकोऽर्थः। आवदन्योऽपि स्वर्घप्लुसंज्ञः स्यादित्यपरोऽर्थः। इ ई इ इत्यादिषु चेत्यनेन सर्वेषामेव अचां संज्ञात्रयप्राप्तौ एचः स्वसंज्ञां निषेधयति स्वएज् नास्तीति। एचः स्वसंज्ञा न भवतीत्यर्थः। एचां स्वभावेन द्विमात्रत्वादिति शेषः। तथाचोक्तम्। 'एकमात्रो भवेद्ध्रस्वो द्विमात्रो दीर्घ उच्यते। त्रिमात्रस्तु प्लुतो ज्ञेयो व्यञ्जनश्चार्द्ध-

## ६। जपोऽक् समोर्णं ऋक् च।

जप: १।, अक् ।१।, सम ।१।, र्ण: १।, ऋक् ।१।, च ।१।।

समानो जपोऽक् च परस्परं र्णसंज्ञ: स्यात् ऋक् च। साम्यं तु एकस्थानत्वम्।

अत्रयं ए ह क ख ग घ ङा: कण्ठ्या:।

इत्रयं च छ ज झ ञ शा ए ऐ या स्तालव्या:।

ऋत्रयं ट ठ ड ढ ण र षा मूर्द्धन्या:।

लृत्रयं त थ द ध न ल सा वो दन्त्या:।

उत्रयं प फ ब भ म वा ओ औ ओष्ठ्या:।

तेषां यो येन सम: स तस्य तत्र तत:।

---

मात्रकमिति।' अत्र पूर्वाचार्य्यप्रसिद्धसंज्ञानामेकदेशविधानं तत्संज्ञास्मरणार्थम्। तेन ह्रस्वदीर्घप्लुता एव वक्तव्या: एवमन्यत्रापि सङ्क्षेपकृत: प्रसिद्धसंज्ञानामेकदेश-विधानमविरुद्धं भवति। अतएव आकामावैचनन्तकमिति स्मृति:॥ ५॥

जपोऽक् इति पृथक् पदकरणेन सम इत्यस्य जपेन अका च प्रत्येकेन सम्बन्धात् समो जप: परस्परं र्णसंज्ञ: स्यात् समोऽक् परस्परं र्णसंज्ञ: स्यादित्यर्थ:। नतु जपाकौ: परस्परं र्णसंज्ञेति। अकोऽन्तर्गतस्यापि ऋक: पृथगुपादानेन ऋवर्ण-लृवर्णावसमानावपि परस्परं र्णसंज्ञौ स्त:। जपस्य सवर्णसंज्ञाफलन्तु लिलसौरित्यादौ उकारिता चपेन सवर्णस्य ग्रहणात् तवर्गादिप्राप्ति:। समानज्ञानाधीनं सवर्णज्ञान-मिति समानं निरूपयति। साम्यं तु एकस्थानत्वमिति। एकं स्थानम् उत्पत्तिस्थानं येषां ते एकस्थाना: तेषां भाव: एकस्थानत्वम्। ततश्च एकस्थानज्ञानाधीन सवर्णज्ञानमिति स्थानं निरूपयति। अत्रयमित्यादि। अत्रयम् अ आ अ इति ह्रस्वदीर्घप्लुता:। एवं इत्रयमित्यादि च। ए ह इति संज्ञा ए ओ ऐ औ ह इति पञ्च। ए ह क ख ग घ ङा इत्येकपदोक्त्या एषामुत्पत्तिस्थानं कण्ठमुक्त्वा पश्चात् ए ऐ इत्युभयं तालव्यमध्येऽपि ए ऐ या इति भिन्नपदे पठितवान्। ओ औ इत्युभय-मोष्ठ्यकार्य्यार्थमोष्ठ्यमध्येऽपि ओ औ ओष्ठ्या इति भिन्नपदे पठितवान्। तालव्यकार्य्यञ्च इवर्णस्य समत्वात् गुण एकार वृद्धिरैकार:। इयाज इत्यादौ यकारस्य जरिकार:। ओष्ठ्यकार्य्यन्तु उवर्णस्य समत्वात् गुण ओकार: वृद्धिरौकार:। उवास

## ७। चपोदिताकानिता र्णः।

चपा ३।, उदिता ३।, अका ३।, अनिता ३।, र्णः १।।

### उकारिता चपेन इद्रहितेनाका र्णो गृह्यते।

---

इत्यादौ वकारस्य जिह्वकारः। एवं यवरलोप्यवकारस्य प फ ब भ म वा इत्येक पदोक्त्या उत्पत्तिस्थानमोष्ठमुक्ता दन्त्यकार्य्यार्थं दन्त्यमध्येऽपि त थ द ध न ल सा व इति भिन्नपदं पठितवान्। यथा संवृवृषतोत्यादौ वकारस्य ओष्ठ्यत्वादुरौ दन्त्यत्वादनुस्वारस्य मकारो न स्यात्। वैदिकास्तु अस्य उत्पत्तिस्थानं दन्त्य एवेत्युक्ता तद्विषौः परमं पदमित्यादौ तथैवोच्चारयन्ति। स्वभावात् कण्ठजातानामपि तालव्य ओष्ठाकार्य्यकारित्वं कथमिति चेन्न। यतः कुन्त्या प्रसूतस्य कर्णस्य राधाप्रतिपालनात् राधेयत्वं सङ्गच्छते। समानासमानयोर्द्वयोरेकादोत्पत्तिसन्देहे व्यवस्थामाह। तेषां यो येनेत्यादि। तेषां कण्ठतालव्य-मूर्द्धन्य-दन्त्य-ओष्ठ्यानां मध्ये यो वर्णो येन वर्णेन समो भवति स एव तस्य स्थाने भवति। यथा अभविद्धमित्यादौ झपभसोरित्यनेन सस्य द एव। एवं यो येन समः स एव तस्मिन् परे भवति यथा शान्त इत्यादावनुस्वारस्य नकार एव। एवञ्च यो येन समः स एव तस्मात् परो भवति। यथा वाग्घरिरित्यादौ हकारस्य घकार एव। ननु तद्भिन्नत्वे सति तद्गतभूयोधर्म्मवत्त्वं समानत्वमिति समानलक्षणात् साम्यं भेदमपेक्षते। अतएव चन्द्रसमानं सुखमित्येवोच्यते न तु चन्द्रसमानश्चन्द्र इति। ततश्च ह्रस्वदीर्घयोश्च भेदाभावात् समत्वाभावेन सवर्णसंज्ञानुपपत्तिरिति चेन्न, समानं गोत्रं यस्य असौ सगोत्रः समानः पतिरस्या असौ सपत्नीत्यादावभेदेऽपि समानशब्दप्रयोगात्। अत्र तस्मात् तस्य तत्र इति नोक्ता यत् व्यतिक्रमनिर्देशः कृतस्तत्पूर्वपूर्वविधेरभावे परविधेर्विषयज्ञापनार्थं तेन सर्वत्र स तस्य बोध्यम्। यथा चिन्मयं तस्याभावे तत्र यथा हरिश्भज तयोरभावे तस्मात् यथा वाग्घरिरित्यादि॥ ६॥

उत् इत् यस्य स उदित् तेन। नास्ति इत् यस्य सोऽनित् तेन। उकारिता चपेन सवर्णो गृह्यते। यथा लिलसोरित्यादौ तु इत्यादिना तवर्गादिर्गृह्यते। इद्रहितेनाका सवर्णो गृह्यते। यथा आदिगेचोरित्यादौ अ इत्यादिना अवर्णादि गृह्यते। किञ्च धिप्सति धीप्सतीत्युभयपदसाधनाय दभोयाविश्वत ह्रस्वदीर्घयोर्वादेशयोः पृथग्विधानज्ञापकादादेशेन प्रत्ययेन च सवर्णो न ग्राह्यः। ज्ञापकसाधिता विधयो लक्षणमनुसरन्तीति न्यायात्। तेन मघोनस्तुङ्वेत्यत्र अर्वणो

## ८। इङोऽरलेङ् गुः।

इङः ६।, अर् अल् एङ् ।१।, गः १। ।

इङः स्थाने अर् अल् एङ् एते गुसंज्ञाः स्युः।

## ९। अच आरालैज् व्रिः।

अचः ६।, आ आर् आल् ऐच् ।१।, व्रिः १। ।

अचः स्थाने आ आर् आल् ऐच् एते व्रिसंज्ञाः स्युः।

## १०। प्रपरापसंन्यवानुनिर्दुर्व्यधिसूत्परि-प्रत्यभ्यत्यप्युपाङ् गिः।

प्र—आङ् ।१।, गिः १। ।

एते विंशतिर्गिसंज्ञाः स्युः।

---

नञ इत्यत्र च तुङादेशेन सवर्णो न गृह्यते। त्यदां टेर इत्यत्र अकारादेशेन सवर्णो न गृह्यते। एवम् अर्भ आदेर इत्यादौ अकारादिप्रत्ययेन च सवर्णो न गृह्यते। किञ्च उकाररूपस्य स्थाने जायमानो य उकाररूपस्तस्य आदेशत्वेऽपि सवर्णो ग्राह्यः। कारणगुणाः कार्य्यगुणमारभन्ते इति न्यायात्। तेन जत्र चप जश्चुः खेरित्यत्रमुत्र भिरित्यत्रापि च आदेशेन टुभिरित्यत्र टु आदेशेन चुङ् कुङ् इत्यत्र कुङादेशेन च सवर्णो गृह्यते। एवञ्चात्र ह्रस्वेनैव अका सवर्णो गृह्यते नतु दीर्घेणेति बोध्यम्। अन्यथा आदीपीः इत्यादौ प्रथमोपस्थितं ह्रस्वं परित्यज्य दीर्घग्रहणं वृथा स्यादिति ॥७॥

अर् च अल् च एङ् चेति आदिगेचोरित्यादौ इगादेर्निर्देशेनेवेष्टसिद्धावपि गर्घुङ्याकङितेति इत्यादौ गोकार्य्ये इङोनिर्देशं विनापि इङ्प्राप्त्यर्थं इह इङो निर्देशः समत्वादिवर्णे एकारयोरिकारः उवर्णे ओकारयोरोकारः। ततोऽवशिष्टौ अर् अलौ, रलयोः समत्वात् क्रमेण ऋवर्ण-ऌवर्णयोः स्याताम्। समुदायसाम्याभावे आंशिकसाम्यस्यापि ग्राह्यत्वात्। गुर्गुणः ॥ ८ ॥

आश्च आर् च आल् च ऐच्चेति। आरालैजित्यत्र मन्त्रत्वात् चेक्यादित्यादिना अप्रत्ययो न स्यात्। समासविधेरनित्यत्वात्। आदिगेचोरित्यादौ एजादेर्निर्देशेनेष्टसिद्धावपि व्रजवदरल इत्यादावचः प्राप्त्यर्थम् इहाचो निर्देशः उत्पत्तिस्थानव्यवस्था तु पूर्ववत्। व्रिर्वृद्धिः ॥ ९ ॥

एते विंशतिरिति। एते प्रादयो विंशतिसंख्यया संख्येया इत्यर्थः। विंशतेरेकत्वन्तु विंशत्याद्याः सदैकत्वे सर्वाः संख्येयसंख्ययोरित्यमरोक्तेः। अत्र निर्दुःशब्दौ

**अत्वार्चायां स्वती नातिक्रमेऽतिः पर्य्यधी गतौ ।**
**अपिः पदार्थसंभाव्यगर्हानुज्ञासमुच्चये ॥**

---

दन्त्यसान्तौ रेफान्तौ च। तथा च दुर्दुःखभावने कोपे निर्निश्चयनिषेधयोः। अञ्जसाशब्द आख्यातसत्वदृष्टान्तयोरपीति दन्त्यसान्ते मेदिनी। "दुर्निषेधे च कष्टे च निर्निषेधे च निश्चये। परिः स्यात् सर्वतोभावे" इति रेफान्ते मेदिनी। प्रादीनामर्थानाह पुरुषोत्तमदेवः प्र गत्यारम्भोत्कर्षसर्वतोभावप्राथम्यख्यात्युत्पत्तिव्यवहारेषु। परा भङ्गानादरप्रत्यावृत्तिन्यग्भावेषु। अप अनादरभ्रंशाऽसाकल्यवैरूप्यत्यागनञर्थेषु। सम प्रकर्षश्लेषनैरन्तर्य्यौचित्याभिमुख्येषु। निर्निश्चयनिषेधयोः। अव निश्चयासाकल्यानादरेषु। अनु पश्चात्सादृश्यलक्षणवीप्सा इत्थम्भावभागहीनसहार्थसामीप्यदीर्घपुनरर्थेषु। निर् अत्यर्थनिषेधनिश्चयवहिष्कारणेषु दुर् निषेधकष्टनिन्दाऽवक्षेपणेषु। वि विशेषवैरूप्यनञर्थगतिदानेषु। अधि उपरिभावे। सु पूजनायासातिशयेषु। उत् ऊर्द्धोत्कर्षप्राकट्यनैकट्येषु। परि सर्वतोभाववातिशयवीप्सा इत्थम्भावचिह्नभागत्यागनियमेषु। प्रति लक्षणव्यावृत्तिप्रशस्तोत्थम्भावत्यागप्रत्यर्पणसादृश्यविरोधवीप्सासमाधिषु। अभि समन्तादुभयार्थलक्षणवीप्सा इत्थम्भावधर्षणेषु। अति अतिशयक्रान्तिपूजनासम्भावनेषु। अपि आहरणसम्भावननिन्दाऽनुज्ञाऽल्पत्वसमुच्चयेषु। उप अनुगतिपश्चाद्भावानुकम्पा आधिक्यहीनसामीप्यप्राथम्येषु। आङ् समन्तादग्रहणप्रत्यावृत्तीषदर्थमर्य्यादाव्याप्तिषु। इति गिरुपसर्गः। अत्वार्चायामित्यादि। अत प्रादिषु स्वती अर्चायां प्रशंसायां गिसंज्ञौ न स्तः। यथा सुस्तौति अतिस्तौति। अतिरतिक्रमे गिसंज्ञो न स्यात्। अतिक्रमः फलोदयेऽपि क्रियाप्रवृत्तिः। यथा अतिसिञ्चति शालीन्। पर्य्यधीगतौ गिसंज्ञौ न स्तः। परेः सर्वतोभावोऽधेरुपरिभावः प्रसिद्धावर्थौ। गत्यर्थधातौ परे पर्य्यधी यदा गतिं द्योतयतस्तदा गिसंज्ञौ न स्त इत्यर्थः। यथा परिसेधति गङ्गां जनः। अतएव "तस्मिन्नात्मचतुर्भागे प्राङ्नाकमधितस्थुषि। राघवः शिथिलं तस्थौ भुवि धर्मस्त्रिपादिव"। इति रघौ। धातूनामनेकार्थतया स्थाधातोरगत्यर्थे अधेर्गतिद्योतकत्वादुपसर्गत्वाभावे गीक इत्यादिना षत्वं न स्यादिति रघुटीकाकारः। अपिः पदार्थादिषु पञ्चसु गिसंज्ञो न स्यात्। पदार्थोऽल्पत्वं यथा अपिसिञ्चति अल्पं सिञ्चतीत्यर्थः। सम्भाव्यं क्रियासु योग्यताध्यवसायः। यथा अपिसिञ्चेन्मूलसहस्रम्। गर्हा निन्दा यथा अतिस्तौति वृषलं ब्राह्मणकः। अनुज्ञा जिज्ञासानन्तरमनुमतिः। यथा सिञ्च्यामीति

## ११। भ्वादिर्धुः।

भ्वादिः १।, धुः १।।

**भू सत्तायामित्यादिर्गणो धुसंज्ञः स्यात्।**

---

प्रश्ने अपिसिञ्च। समुच्चयः परस्परं क्रियासंश्लेषः यथा अपिसिञ्च अपिस्तुहि। उभयं कुरु इत्यर्थः। एषु गिसंज्ञाभावात् व्यस्य ग्यनुकारेति समासाभावे गौक इत्यादिना षत्वं न स्यात् सुस्तुत्वा इत्यादौ क्वाचो यप् च न स्यादिति फलम्। स्वती इत्यादौ अनुकरणत्वादव्ययसंज्ञाभावेऽपि विभक्तिकार्य्यं तु हि च स्म ह वै पादपूरणे स्वतीत्य-सरोक्तन्तु प्रकृतिभ्रमनिरासार्थम्। "धात्वर्थं बाधते कश्चित् कश्चित्तमनुवर्त्तते। तमेव विशिनष्ट्यन्य उपसर्गगतिस्त्रिधेति" विस्तरवृत्तिः। क्रमेणोदाहरणानि। आदत्ते गृह्णातीत्यर्थः। प्रसूते अत्र प्रसवएव धात्वर्थः। प्रशब्दस्तमेवार्थं द्योतयति प्रणमति प्रकर्षेण नमतीत्यर्थः। उपसर्गास्तत्तदर्थानां द्योतका एव नतु वाचकाः। क्रिया-वाचित्वमाख्यातुं प्रसिद्धार्थः प्रदर्शितः। प्रयोगतोऽन्ये मन्तव्या अनेकार्था हि धातव इतिश्लोकपदेवचनात्। केवलधातोरनेकार्थत्वे अवश्यवक्तव्ये उपसर्गपूर्वकत्वेनान्यार्थोऽपि धातोरेव कल्प्यते लाघवात्। धातूनामनेकार्थत्वम् उपसर्गाणामप्यनेकार्थत्वमिति विधिद्वयकल्पने, गौरवः स्यादिति। एवं "सम्भवत्येकवाक्यत्वे वाक्यभेदो न चेष्यत इति" जैमिनिमतात्। अतएव "निपाताश्चादयो ज्ञेया उपसर्गाश्च प्रादयः। द्योतक-त्वात् क्रियायोगे लोकादवगता इमे" इत्युक्तम्। निपाता अपि द्योतका एव नतु वाचकाः तेषां वाचकत्वे तु घटस्य समुच्चय इत्यत्र यथा सम्बन्धे षष्ठी तथा घटश्च इत्यत्रापि षष्ठ्यापत्तिः। इदानीन्तु घटशब्दस्यैव लक्षणया समुच्चयवाचित्वाच्चकारस्य तद्द्योतकत्वान्न षष्ठी राम इव इत्यत्र तु न षष्ठी। एवञ्च घटस्य अभाव इत्यत्र षष्ठी घटो न इत्यत्र न स्यात्॥ १०॥

भ्वादिरादिर्यस्य स भ्वादिः मध्यपदस्य लोपः लम्बकर्णमानय इत्यादिवत् तद्गुण-संविज्ञानबहुव्रीहिः। तेन भ्वादिदशगणा धातव इत्यर्थः। भवतेः सर्वधातूनां प्राथमिकत्वात् भ्वादिशब्दो दशगणपठितसमस्तधातुवाची। भ्वाद्यध्याय इत्यत्र तु गणविशेषवाची। तथाच "भ्वाद्यदादी जुहोत्यादिर्दिवादिः स्वादिरेव च। तुदादिश्च रुधादिश्च तनक्र्यादिचुरादयः"॥ भू इत्यादयः प्रकृतयो यदा सत्तादिक्रियावाचिका-स्तदैव धातुसंज्ञाः स्युः। भूसत्तायामित्यादिर्गणपाठे तु अनुकरणात् स्यादेरावश्यकत्वे-ऽपि स्यादेरनुत्पत्तिः प्रकृतिभ्रमनिरासार्था। अन्यथा मन्थविलोड़ने इति वक्तव्ये संयोगान्तलोपे मनविलोड़ने इति स्यात्। धुर्धातुः॥ ११॥

## १२ । सित्यादिः क्तिः ।

सित्यादिः १।, क्तिः १। ।

स्यादिस्त्यादिश्च क्तिसंज्ञः स्यात् ।

## १३ । काद्व्वान्येकद्विबहुष्वेकशः ।

काद्व्वानि १।।।, एकद्विबहुषु ७।।।, एकशः १।।। ।

तेष्वेकैकं वचनं क्रमात् काद्व्वसंज्ञं स्यात् । तानि च क्रमादेकद्विबहुष्वर्थेषु प्रयुज्यन्ते ।

## १४ । क्त्यन्तान्यौ दली ।

क्त्यन्तान्यौ १।।, दली १।। ।

क्त्यन्तःशब्दो दसंज्ञः स्यात् । अन्यस्तु लिसंज्ञः ।

---

सिश्च तिश्च सिती, सिती आदी यस्य स सित्यादिः द्वन्द्वात् परः श्रूयमाणः शब्दः प्रत्येकमभिसम्बध्यते इति न्यायात् स्यादिस्त्यादिश्चेत्यर्थः । क्तिर्विभक्तिः ॥ १२ ॥

रामो जयति रामलक्ष्मणौ जयतः रामलक्ष्मणसीता जयन्ति । दारवर्षासिकताजलौकोवस्त्रान्तवाचिदशा-बहुला-कृत्तिका-मघालाजेभ्यः पुंलिङ्गगृहाच्च नित्यं व्वम् । एभ्यो नित्यं बहुवचनं स्यात् । दाराः वर्षाः सिकताः जलौकसः दशाः । वस्त्रान्तवाचीति किम् ? दशेयं ते शुभाऽभवत् । बहुलाः कृत्तिकाः मघाः लाजाः गृहाः । पुंलिङ्गादिति किम् ? गृहं गृहे गृहाणि । अप्सरः सुमनोवल्लजादेर्वा । एभ्यो बहुवचनं स्याद्वा । गौरयं गाव इमे । संख्याविशिष्टस्य तु एका गौः एको व्रीहिः । गुरुशब्दविशेषणस्य युष्मद एकत्वे बहुवचनं स्याद्वा । त्वं मे गुरुः यूयं मे गुरवः । अविशेषणस्यास्मद एकत्वे द्वित्वे च बहुवचनं स्याद्वा । अहं ब्रवीमि आवां ब्रूव इत्यर्थे वयं ब्रूमः । अविशेषणस्य किम् ? पण्डितोऽहं ब्रवीमि । गौरवे सर्वेभ्यः एकत्वे बहुवचनं स्याद्वा । भट्टारकपादाः समादिशन्ति भट्टारकपादः समादिशति । प्रोष्ठपदाफल्गुनीभ्यां नक्षत्राभ्यां द्वित्वे बहुवचनं स्याद्वा । पूर्वे फल्गुन्यौ पूर्वाः फल्गुन्यः । पुष्यार्थपुनर्वसूनाम् । द्वन्द्वे बहुत्वेऽपि द्विवचनं नित्यम् । पुष्यः स्वभावादेकः पुनर्वसु स्वभावात् द्वौ । पुष्यश्च पुनर्वसु च पुष्यपुनर्वसू । एवं सिद्धपुनर्वसू तिष्यपुनर्वसू ॥ १३ ॥

क्तिरन्ते यस्य स क्त्यन्तः यथा रामो भवति इत्यादि । त्यलोपे त्यलक्षणमिति न्यायात् लुप्तविभक्तिकानां पदत्वन्तु आतिदेशिकम् । यथा उमा गौरी विद्वान्

## १५ । लुपि न सन्ध्याद्यविधी ।

लुपि ७।, न ।१।, सन्ध्याद्यविधी १॥ ।

**लुबिति लोपे कृते यो लुप्तस्तदाद्यन्तयोः सन्धिर्न स्यात्तदाद्यस्य च यो विधिः स च न स्यात् ॥**

---

वारि हरिवत् वागीश इत्यादि । तेन चतुर्थं षष्ठ इत्यत्र आतिदेशिकमनित्यमिति न्यायात् दान्तत्वाभावाद्विरामाभावे विसर्ग उकारौ न स्तः । क्वन्तश्च अन्यश्च क्वान्तान्यौ सन्निहिते बुद्धिरन्तरङ्गेति न्यायादन्यशब्दस्य क्वन्तेन सम्बन्धात् क्वन्तादन्य इत्यर्थः । शब्द्यते उच्चार्य्यते असाविति शब्दः । क्वन्तशब्दो दसंज्ञः स्यात् । तद्भिन्नशब्दो लिङ्गसंज्ञः स्यादित्यर्थः । दं पदं त्रिलिङ्गम् । एतेन कृदन्ततद्धितान्तादीनां धातूनां विभक्तीनाञ्च लिङ्गत्वमायातम् । अत्र कातन्त्राद्या धातुविभक्ती वर्जयित्वा अन्यस्य लिङ्गसंज्ञां कुर्वन्तीति विरोधः । रामानन्दस्तु पूर्वतोऽनुवर्त्तमानाभ्यां धातुविभक्तिभ्यामप्यन्यशब्दस्य सम्बन्धात् धातुविभक्तिविभक्त्यन्तेभ्योऽन्यशब्दो लिरित्याह । तद्धेयम् । सन्निहितक्वन्तशब्दसम्बन्धेनैव अन्यशब्दस्य चरितार्थत्वादाकाङ्क्षाभावे धातुविभक्त्योरनुवृत्त्यभावात् । सत्यामप्याकाङ्क्षायां धातुविभक्त्योरनुवृत्तिवत् प्रादेरप्यनुवृत्तौ तस्यापि लिङ्गसंज्ञानुपपत्तेः । न च विप्रादन्य इत्युक्ते यथा विप्रसजातीयः क्षत्रियादिरेव गृह्यते नतु गवादिः, तथात्रापि क्वन्तादन्य इत्युक्ते क्वन्तसजातीयस्य कृत्तद्धितप्रत्ययान्तस्यैव ग्रहणात् धातुविभक्त्योर्लिङ्गत्वं न स्यादिति वाच्यम् । ज्यन्तसनन्त भाविबुभूषादेर्धातोरपि लिङ्गत्वापत्तेः । न च तत्रैव धातुसंज्ञयैव लिङ्गसंज्ञा वाधितव्येति वाच्यम् । संज्ञायाः संज्ञान्तरस्य वाधकत्वाभावात् । अतएव एकस्यैव सिरित्यस्य प्रत्ययत्वं विभक्तित्वं प्रथमात्वम् एकवचनत्वं धित्वं घित्वञ्च संगच्छते । वस्तुतस्तु धातुविभक्त्योर्लिङ्गत्वमस्ति चेदस्तु तेन का नो हानिः । ताभ्यां स्यादिप्रसक्तिरिति चेन्न यतो लिङ्गसंज्ञा सामान्यविधिः धातुसंज्ञा विशेषविधिः । ततश्च लेः सि औ जसिति सामान्यविधेर्धोस्तिबित्यादिविशेषविधिना वाधितत्वाद्धातोर्न स्याद्युत्पत्तिः । विभक्तेस्तु केवलायाः प्रयोगाभावात् प्रकृतेः परत्र जातायाश्च समुदायस्य पदत्वादेव स्यादिर्नोत्पद्यते इति नास्ति विरोधः ॥ १४ ॥

लोपनं लुप् तस्मिन् लुपि । अत्र आद्य आदिवर्णस्तस्य विधिराद्यविधिः । यथा राजभ्यामित्यादौ नस्य लुपि आक्तिमभवीति आकारो न स्यात् । क्वचिदादिनिमित्तकोऽपि विधिर्न स्यात्तेन राजभिरित्यादौ अकारमाश्रित्य न ऐस् । क्वचि-

## १६। चादिर्गिर्निः।

चादिः १।, गिः १।, निः १।।

**चादिर्गणो गिश्च निसंज्ञः स्यात्**

---

दादिनिमित्तकः स्यान्न तेन शार्ङ्गिषु पिपक्ष इत्यादिषु षत्वं स्यादेवेति रामानन्दः। वस्तुतस्तु अः अवर्णः आदिश्च अश्च इयोः समाहार आद्यं तस्य विधिराद्यविधिः सन्धिश्च आद्यविधिश्च सन्ध्याद्यविधी। लपि सन्धिर्न स्यात् यथा हर एहि शिव उग्र इत्यादि। लुप्तस्य य आदिवर्णस्तत्सम्बन्धी विधिर्न स्यात् यथा राजभ्यामित्यादौ न आ। एवं वज्रमाचष्टे इति ञौ टिलोपे क्विपि ञेर्लोपे वज्र इति निङ्गात् सौ स्यान्तस्याराददिति रेफस्य लुपि जकारस्य चजिति कुङ् न स्यात् तेन वज् इत्येव। लुप्तस्य अवर्णासम्भवादवर्णशब्देन इह लुप्तस्य आदिरवर्ण एवोच्यते। ततश्च लुप्तस्य सर्वेषामेव आदिवर्णानां विधेर्निषेधेनेवेष्टसिद्धौ अवर्णग्रहणमवर्णनिमित्तक विधेर्निषेधार्थम्। तेन राजभिरित्यादौ न ऐस्। शार्ङ्गिषु पिपक्ष इत्यादिषु षत्वानुपपत्तिश्च न स्यात्। एवम् आद्ययोर्विधेर्निषेधेनैवेष्टसिद्धौ सन्धिग्रहणं सन्ध्यध्यायमतेण लुप्येव न सन्धिरिति ज्ञापनार्थम्। उद्वृत्तो हि ग्रन्थः समाधिक फलमाचष्टे इति न्यायात्। अतएव दामोदर इत्यत्र सन्धिग्रहणात् सन्धिलुप्येव न सन्धिरिति स्वयं वक्ष्यति। नच भो अच्युत इत्यादौ सन्धिनिषेधार्थं सन्धि-ग्रहणमिति वाच्यम्। गङ्गेऽत्र इत्यादौ ब्वेद्देऽमोयु इत्यनेन एकारस्य सन्धिनिषेधे तन्निमित्तकस्य अकारलोपस्यापि निषेधदर्शनेन सन्धिनिषेधप्रसङ्गे आदिविधेर्निषेधेनैव तन्निमित्तकविधेर्निषेधस्यापि प्राप्तत्वात्। केचित्तु आदिश्चासावश्चेति आद्यस्तस्य विधिराद्यविधिरिति विगृह्य लुप्तवर्णस्य आदेरवर्णस्य स्थाने विधिर्न स्यात्तन्निमित्त-कोऽपि विधिर्न स्यादित्याहुः। तन्न। भो इह इत्यादौ सन्धिनिषेधात् सार्थकस्य सन्धि शब्दस्य उद्वृत्तत्वाभावे सन्धिग्रहणादित्यादि वोपदेवीयवचसोऽसङ्गतेः। चैक्याद्रदषहोऽ-रित्यत्र अकारस्य लुपि कृतेऽपि विसर्गस्य रेफविधानं ज्ञापयति। अत्र नञोऽन्यार्थत्व-मिति। तेन "सरसीः परिशीलितुं मया गमिकर्मीकृतनैकनीवृता" इति नैषधादौ "चौ नोलुप्फे धौ" इत्यनेन नस्य लुपि कृतेऽपि नञा निर्दिष्टमनित्यमितिन्यायात् तदादे रवर्णस्य ईकारः स्यादेव। एवं अधनी धनीकृत इत्यादावपि बोध्यम्॥ १५॥

चादिस्तु च वा ह्राहैव नूनं वै अह आहो अथो उतो। अहो उताहो हौ हौ रे

## १७ । णमितोऽन्त्याचोऽन्तेऽन्त्यस्यादौ ।

णम् इतः १॥, अन्त्याचः ५।, अन्ते ७।, अन्त्यस्य ६।, आदौ ७। ।

णित् यस्योच्यते तस्यान्त्यादचः परो निदन्ते ङिदन्त्यस्य स्थाने मिदादौ स्यात् ।

## १८ । परस्त्यः ।

परः १।, त्यः १। ।

प्रकृतेः परो यः स त्यसंज्ञः स्यात् ।

## १९ । अं अः नुवी ।

अं अः १॥, नुवी १॥ ।

अकार उच्चारणार्थः बिन्दुद्विबिन्दुमात्रौ वर्णौ क्रमान्नुविसंज्ञौ स्तः ।

अं इहि हे अहे । उरि ए ऐ तिर्य्यक् ओ औ अमा किल खलु नञादयोऽपि बहवः णिशब्दे नेह णिसंज्ञापठितशब्दा एव गृह्यन्ते । तेन स्वरादीनामचादौ णिसंज्ञाऽभावेऽपि निसंज्ञा त्यसंज्ञा च ततश्च राजानमतिक्रान्ता अतिराज्ञी इत्यादौ त्यं पूर्वमिति पूर्वनिपातः । निर्निपातः ॥ १६ ॥

णम्संज्ञा इत् येषां ते णमितः । णिद्यस्योच्यते इत्यादि णकारेदागमो यस्योच्यते तस्य अचां मध्ये अन्त्यादचः परः स्यादिति परिभाषितम् । यथा नुम्यमादावित्यादिना ज्ञानानि पयांसि । एवं नकारेदागमो यस्योच्यते तस्यान्ते स्यात् । यथा नणट्टङ्शक न्नित्यादौ ङकारेदादेशो यस्योच्यते तस्यान्त्यस्य स्थाने स्यात् । यथा वेरयङ्गामीत्यादौ मकारेदागमो यस्योच्यते तस्यादौ स्यात् । यथा नुमासः स्वद्यावित्यादौ । यस्योच्यते इति षष्ठ्यन्तनिर्देशात् प्रत्ययेषु न प्रसङ्गः । तेन ङकारेतौ विभक्तयो लिङ्गात्परा एव मङ्न्यणकारेतो णवादयो धातोः परा एवेति ॥ १७ ॥

अत्र पूर्वञ्जायमानस्यापि वह्नेः प्रत्ययत्वं वक्तव्यमिति रामानन्दकाशीश्वरौ । वस्तुतस्तु ञेर्वह्नः प्रागिति सूत्रस्य लेः परो वह्नः स्यात् स च वह्नः परत्र जातोऽपि प्राक् स्यात् तस्य पूर्वनिपातः स्यादित्यर्थ इति व्याख्यानादेवास्य प्रत्ययत्वम् ॥ १८ ॥

अं अः इति लुप्तप्रथमाद्विवचनान्तम् । नुरनुस्वारः विर्विसर्गः ॥ १९ ॥

## २०। क+पौ⁀मून्यौ।

क+पौ⁀१॥, मून्यौ १॥।

कपावुच्चारणार्थौ वज्रगजकुम्भाकृती वर्णौ क्रमान्मूनी संज्ञौ स्तः।

## २१। होभस्।

ह: १।, भस् ।१।।

हकारो भस्संज्ञः स्यात्।

इति संज्ञापादः।

---

कपावुच्चारणार्थौ। मूर्जिह्वामूलीयः। नीरुपध्मानीयः। जिह्वामूले उच्चार्यतेऽसाविति जिह्वामूलीयः। उपध्मानीयस्य उत्पत्तिस्थानमोष्ठः सर्पश्वासवदुच्चारणम्। "नुवी पूर्वेण सम्बद्धौ मून्यौ तु परगामिनौ। चत्वारोऽयोगवाहाख्या णत्वकर्मण्यची मताः। अचः स्वयं विराजन्ते हसन्तु परमाश्रयेत्।" ॥ २०॥

बृंहितं इत्यादावनुस्वारार्थं अवोढ इत्यादौ सिलोपार्थञ्च एतद्विधानम्। ननु अ इ उ ऋ ऌ इत्यादि सूत्रे शषसह इति हकारस्य पुनरुक्तौ भहरुंज्ञयैवेष्टसिद्धौ एतद्विधानं कथमिति चेन्न एकवर्णस्य उभयत्र पाठेन कौशलाभावात् ॥ २१॥

इति संज्ञापादः।

एकार्थावच्छिन्नसूत्रसमूहः पादः। परिभाषादौ सत्यपि प्रधानाप्रधानयोः प्रधानेन व्यपदेशा भवन्ति इति न्यायादेकार्थावच्छिन्नत्वम्। अथ सूत्रलक्षणम्। सूत्रयति अर्थं ग्रथ्नाति इति सूत्रम्। सूत्रत्वग्रन्थे पचादित्वादन्। तथाच ;— "अल्पाक्षरमसन्दिग्धं सारवद् विश्वतोमुखम्। अस्तोभमनवद्यञ्च सूत्रं सूत्रविदो विदुः॥" तच्च षड्विधं "संज्ञा च परिभाषा च विधिर्नियम एव च। अतिदेशोऽधिकारश्च षड्विधं सूत्रलक्षणम्॥" व्यवहारार्थं शास्त्रे कृतः सङ्केतः संज्ञा यथा इत्कृते इत्यादि। ग्रन्थस्य संक्षेपनिर्वाहार्थं सङ्केतविशेषः परिभाषा। यथा चपीदिता इत्यादि। अप्राप्तप्रापको विधिः। सतु द्विविधः। वर्णोत्पादनरूपोऽभावरूपश्च। वर्णोत्पादनरूपो यथा सहर्णोर्घ इत्यादि॥ अभावरूपो द्विविधः नाशो निषेधश्च। नाशविधिर्यथा लोपऽस्योमाङोरित्यादि। निषेधविधिर्यथा नाजोऽन्त इत्यादि। सामान्यप्राप्तस्य

# द्वितीयः पादः।

## अच् सन्धिः।

### २२। सह गों घः।

सह।१।, गों ७।, घः १।।

गों परे पूर्वस्य गोन सह घः स्यात्। मुरारिः, लक्ष्मीशः, विष्णूत्सवः धातृद्धिः, शकल्लृदन्तः, होतृकारः। ( मुर-अरिः,

---

विशेषावधारणं नियमः। यथा रङौत्रिः सुपीत्यादि। अन्यधर्मस्याऽन्यत्रारोपण-मतिदेशः। यथा ङ्णवदिक इत्यादि। पूर्वसूत्रस्थितपदस्य परसूत्रेषूपस्थितिरधिकारः। स तु त्रिविधः। "सिंहावलोकिताख्यश्च मण्डूकप्लुतिरेव च। गङ्गास्रोत इति ख्यातः अधिकारास्त्रयो मताः। सिंहावलोकितो यथा वावर्गोदान्ते इत्यस्मात् दान्ते इति पदस्य ऋकागित्यन्तेषूपस्थितिः। मण्डूकप्लुतिर्यथा। टाभिस्ङेङसि इत्यस्मादत इति पदस्य आत्तमभवीत्यत्रोपस्थितिः। गङ्गास्रोतो यथा ङः सि औ जसित्यस्माङ्गि-रितिपदस्य तद्धितपर्य्यन्तेषूपस्थितिरिति। एवं "कार्य्यी कार्य्यं निमित्तञ्च त्रिभिः सूत्रमुदाहृतम्। कदाचित् कार्य्यिकार्य्याभ्यां क्वचित् कार्य्यनिमित्ततः। यस्य निर्दिश्यते कार्य्यं स कार्य्यी गदितो बुधैः। क्रियते यत्तु तत्कार्य्यमादेशप्रत्ययागमैः। यस्मात् परं परं यस्मिन् तन्निमित्तं द्विधा मतम्। आकाङ्क्षायान्तु सर्व्वेषामनुवृत्तिः परं भवेदिति" एवञ्च "वहिरङ्गविधिभ्यः स्यादन्तरङ्गविधिर्बली। प्रत्ययाश्रितकार्य्यन्तु वहिरङ्गमुदा-हृतम्। प्रकृत्याश्रितकार्य्यं स्यादन्तरङ्गमिति ध्रुवम्। प्रकृतेः पूर्वपूर्वं स्यादन्तरङ्गतरं तथा। सावकाशविधिभ्यः स्याद्बली निरवकाशकः। कस्यचित् भिन्नकार्य्यस्य प्रथमं परतस्तथा। सम्भवेद्विषयो यस्य स विधिः सावकाशकः। आदौ हि विषयो यस्य परतो न हि सम्भवेत्। स पण्डितगणैरुक्तो विधिर्निरवकाशकः। तथा सामान्य-कार्य्येभ्यो विशेषकविधिर्बली। बहवो विषया यस्य स समान्यविधिर्भवेत्। अल्पः स्याद्विषयो यस्य स विशेषविधिर्मतः। आगमादेशयोर्मध्ये वलीयानागमो विधिः। प्रकृतेः प्रत्ययस्यापि सम्बन्धे यो भवेदपि। तयोरनुपघाती स्यादागमः स बुधैर्मतः। आदेश उपघाती यः प्रकृतेः प्रत्ययस्य वा। सकलेभ्योविधिभ्यः स्याद्बली लोपविधि-स्तथा। लोपस्वरादेशयोस्तु स्वरादेशविधिर्बलीति।" सन्धिज्ञानं विना पदसाधन-स्याशक्यत्वात् सन्ध्यध्यायमेवादौ निरूपयति ॥ २१ ॥

लक्ष्मी-ईशः विष्णु-उत्सवः, धातृ-ऋद्धिः, शकॢ-ऌदन्तः, होतृ-ऌकारः )।

### २३। आद्गुणेचोर्गुणौ।

आत् ५।, इक् एचोः ६॥, गुणौ १॥।

अवर्णात् परयोरिगेचोरवर्णेन सह क्रमात् गुणौ स्तः। हृषीकेशः दामोदरः। ( हृषीक-ईशः, दामन्-उदरः )। सन्धिग्रहणात् सन्धिलुप्यैव न सन्धिः। माधवर्द्धिः, शिवल्कारः, कृष्णैकत्वं, मुकुन्दौकः, कृष्णैक्यं, भवौषधम्। (माधव-ऋद्धिः, शिव-ऌकारः, कृष्ण-एकत्वं, मुकुन्द-ओकः, कृष्ण-ऐक्यं, भव-औषधं)।

---

ननु पिता सहागतः पुत्र इत्यादौ यथा द्वयोः पृथगागमनं प्रतीयते तथात्रापि द्वयोरिव दीर्घोऽस्त्विति चेन्न वालुकाभिः सह मृत्पिण्डो घटो जायत इत्यादिवदपृथक् साहित्यस्यैव ग्राह्यत्वात्। सहशब्दस्य गम्यमानत्वेऽपि तृतीयाविधानात् णेन घ इत्यनेनैवेष्टसिद्धौ सहर्णे घ इति विधानं पूर्वस्य दीर्घविधाननियमार्थम्। अन्यथा दीर्घस्य पौर्वापर्य्यनियमाभावात् परस्यापि पूर्वेण सह दीर्घत्वेऽपि होतॢकार इत्यनिष्टापत्तिः। ननु अवर्णादिर्दीर्घविधौ कण्ठत्वेन समानः एकारादिः कथं न स्यादिति चेन्न एकारादेरांशिकतालव्यत्वेन विरुद्धत्वे असाधारणसमानस्याकारादेरेवौचित्यात्। किञ्च दीर्घस्य अज् धर्मत्वात् वाक्करोति तद्ददाति इत्यादौ न प्रसङ्गः। मुरारिः इत्यादौ द्वयोरेकस्मिन् दीर्घे पूर्वहसस्य तेनैव सम्बन्धः हसेऽकार उच्चारणार्थ इति स्वरसात्। हसानां परवर्णसम्बन्धं विनापि उच्चारणं न सम्भवतीति परवर्णयोगसिद्धेः। शकॢ धातुः शकॢनामा कश्चिद्वा। शकॢदन्त इति ॡकारस्य दीर्घस्य प्रयोगो नास्तीति पाणिनिक्रमदीश्वरौ। होतॄकार इति होत्रा उच्चारितो लिखितो वा ॡकार इत्यर्थः ॥ २२ ॥

हृषीकेश इत्यत्र अकारेण सहितस्य ईकारस्य एकारे कृते पूर्वस्य परेण योगः। एवं सर्वत्र। दामोदर इति दाम रज्जुरुदरे यस्य इति विग्रहे दान्तत्वादिरामे नोलुप् फधौ इत्यनेन नस्य लुपि "लुपिन सन्ध्याद्यविधौ" इत्यनेन सन्धिनिषेधेऽपि कथं सन्धिः स्यादित्याशङ्क्याह। सन्धिग्रहणात् सन्धिलुप्यैव न सन्धिरिति। अस्यार्थः सन्धिग्रहणात्

## २४। गेर्धोरनेधिन एङ्‌ऋटकोः।

गेः ६।, धोः ६।, अन् एध् इनः ६।, एङ् ऋटकोः ६॥।

गेरवर्णात् परयोरेधिनवर्जितस्य धोरेङृटकोरवर्णेन सह क्रमात् गुव्रौ स्तः। प्रेजते, परौखति, अपार्च्छति। (प्र-एजते, परा-ओखति, अप-ऋच्छति)। अनेधिनः किं, उपैधते अवैति। (उप-एधते, अव-एति)।

## २५। लिधोर्वा।

लिधोः ६।, वा ।१।।

लिधोस्तु पूर्वोक्तं कार्य्यं वा स्यात्। प्रेकीयति, प्रैकीयति (२३ सू), प्रोघीयति, प्रौघीयति, प्रार्च्छीयति, प्रर्च्छीयति, प्राल्कारीयति प्रल्कारीयति। (प्र-एकीयति, प्र-ओघीयति, प्र-ऋच्छीयति, प्र-ऌकारीयति)।

---

लुपि न सन्ध्याद्यविधौ इति सूत्रे उद्वर्त्तितस्य सन्धिशब्दस्य ग्रहणात् सन्धिलुप्येव सन्ध्यध्यायसूत्रेण लुप्येव सन्धिर्न स्यात् अध्यायान्तरसूत्रेण लुपि तु सन्धिः स्यादेवेति। सन्धिरत्र सन्ध्यध्यायसूत्रविहितकार्य्यं नतु वर्णद्वयमेलनम्। तेन पिपचादिशब्दानां संयोगान्तलुपि ककारस्य झप्झसोरित्यनेन चपे जवे च कृते पिपक् पिपग् इत्यादि सिद्धम् यद्यपि आदिगेजूटोर्गुव्री इति कृते एच्च ऊट् च द्वयोः समाहारे एजूट् ततः इक्च् एजूट् च इगेजूटौ तयोः। इति व्याख्याने आदूटौव्रिरिति सूत्रं कर्त्तव्यं न स्यात् तथापि इगेचोरिति कृतं ज्ञापयति। स्वभावादेकपदे क्विपः प्राक् समासे च आदूटोव्रिरित्यनेन व्रिः स्यात्। यथा शव विकारे क्वौ शौतिः धावुञ जवे धौतिः जनान् अवतीति जनौः इति अन्यत्र अवतीति ऊः तव ऊः मम ऊः इत्यादौ गुण एवेति। एवम् उभयत्र समाहारे आरान्नैच इत्यादिवत् सूत्रत्वात्सैक्यादिना अप्रत्ययाभावे आसुव्रीगेच इत्यनेनापीष्टसिद्धौ कथमेतत् गौरवं ? स्पष्टार्थम्॥ २३॥

न विद्यते एधिनौ यत्र सोऽनेधिन् तस्य। ननु यादृग्जातीयस्य विप्रतिषेधो विधिरपि तादृग्जातीयस्येति न्यायादेधिनोर्धात्वोर्वर्जनादेव धातोः प्राप्तौ धोरित्युपादानं व्यर्थमिति चेन्न उद्धृत्तोहि ग्रन्थः समाधिकफलमाचष्टे इति न्यायादप्राप्तलिङ्ग-

## २६। लोपोऽस्योमाङोः।

लोपः १।, अस्य ६।, ओम् आङोः ७॥।

अवर्णस्य ओमाङोः परयोर्लोपः स्यात्। शिवायोन्नमः, शिवेहि, ब्रह्मोतं, राजर्षिः। (शिवाय-ओम्नमः, शिव-आ-इहि, ब्रह्म-आ-ऊतम्,(आ-ऋषिः अर्षिः) राज-अर्षिः। स्थानिवदादेशः। द्वयोर्विभाषयोर्मध्ये विधिर्नित्यः।

---

मन्त्रस्यैव धातोः प्राप्तत्वात्। अतएव प्रकृष्ट एजकः प्रैजकः इत्यादौ न गुणः स्यात्। धातोर्ऌकाराभावादिङ्कृतीरित्यनेनैवेष्टसिद्धौ ऋकोग्रहणं परत्वानुवृत्त्यर्थमेव ॥२४॥

लिश्चासौ धुश्चेति लिधुः तस्य एकस्मिन् लिलधुलयोरसम्भवात् आदौ लिः पश्चात् धुरित्यर्थः। एकमिच्छति एकमिवाचरति वा इति क्यं कृते अवर्णस्य इकारे सनद्याद्यिर्धुरिति धातुसंज्ञायां तिप्शपौ। ततश्च प्रकर्षेण एकीयति इति व्यस्यग्यनुकारेति समासेऽनेन गुणः पक्षे वृद्धिः। एवं सर्वत्र। प्रोङ्कारीयति इत्यादौ पूर्वापरयोः परोविधिर्बलवान् इति न्यायादवर्णस्य लोप एव ॥ २५ ॥

धर्मिकल्पनातोहि धर्मकल्पना लघीयसीति न्यायात् पूर्ववर्णस्य अर्थवशाद्विभक्ति-विपरिणाम इति न्यायेन षष्ठ्यन्ततया अनुवृत्तावपि इष्टसिद्धौ पुनरिहावर्णोपादानं सामान्यावर्णप्राप्त्यर्थं सहशब्दनिवृत्त्यर्थञ्च। अन्यथा गेरवर्णस्यैव लोपः स्यादिति शिवायोन्नमः इत्यत्र अकारलोपस्य स्थानिवत्त्वाददान्तत्वे यस्य न लुप्। एवं तात एहि इत्यादौ तकारस्य न दः। अनादिष्टे आङि अवर्णलोपस्य वैयर्थ्यादादिष्टे एव आङि-परेऽवर्णलोपो भवतीत्यत आह शिवेहि इत्यादि आङ्पूर्व इण् गतौ हि एहि। वेञ तन्तुसन्ताने क्तः ऊतम् आ सम्यक् प्रकारेण ऊतमोतम् आसम्यक्प्रकारेण ऋषिरर्षिः। स्थानिवदादेश इति। सन्धावजादेशः पूर्वविधिं प्रति स्थानिवत् स्यादित्यर्थः। यथा शिवेहीत्यादौ एकारस्य आङ्तुल्यत्वे पूर्वस्य अकारलोपः। अजादेशः किं संयन्तीत्यत्र यस्य स्थानिवत्त्वाभावात् मस्यानुस्वारः प्रतीयन्तीत्यादौ न दीर्घः। पूर्वम्प्रतीति किं स्मृतः उः शिवो येन सः स्मृतोः तस्योत्सवः स्मृतवुत्सवः। अत्र ओकारस्य स्थानिवत्त्वाभावात् दीर्घो न स्यात्। सन्धेरन्यत्र तु सर्व आदेशः पूर्वम्प्रति परं प्रति च स्थानिवत् स्यात्। पूर्वम्प्रति यथा विकीर्य इत्यादौ क्वाचोऽपि अगुणत्वादिर्। परम्प्रति यथा हे स्मृतो इत्यादौ स्थानिवत्त्वेन ह्रस्वपरत्वाङ्ङेर्लोपः। नच एभ्यः आमादीनां नुमादिप्रसक्तौ

## २७। एवेऽनियोगे।

एवे ७।, अनियोगे ७।।

अवर्णस्य एवे परे लोपः स्यात् अनियोगे। अद्येव (अद्य-एव)। नियोगे तु अद्यैव गच्छ। (अद्य-एव गच्छ)।

## २८। वौष्ठोत्वोः से।

वा ।१।, ओष्ठोत्वोः ७॥, से ७।।

अवर्णस्य ओष्ठोत्वोः परयोर्लोपः स्यात् वा से सति। बिम्बोष्ठः बिम्बौष्ठः, स्थूलोतुः, स्थूलौतुः। (बिम्ब-ओष्ठः, स्थूल-ओतुः)। से किं तवौष्ठः। (तव-ओष्ठः)।

---

वह्वनिष्टापत्तिरिति वाच्यम्। आतिदेशिकमनित्यमिति न्यायात् येषु अनिष्टं तेषु स्थानिवत्त्वानङ्गीकारात्। अतएव प्राञ्चोऽपि इष्टसाधनार्थमेव न्यायः स्वीक्रियते नत्वनिष्टार्थमिति प्राहुः। पूर्वतो वा शब्दानुवृत्तौ कथमिदं नित्यमित्याशङ्क्याह। द्वयोर्विभाषयोरित्यादि। यत्र वाशब्दः केवलं विकल्पवाची तत्रैवायं नियमः। यत्र तु व्यवस्थावाची तत्र विभाषाद्वयमध्यवर्त्तिन इष्टत्वान्नित्यत्वम् अनिष्टत्वादनित्यत्वमिति बोध्यम्। तेन अयांयूर्लुब्वेति गोर्वेत्येतयोर्मध्ये एङोऽत इत्यस्य नित्यत्वं सतुकखपफेवेति यवाचीत्येतयोर्मध्ये शसिशसीति कखपफयोर्मून्यावित्येतयोर्द्वयोर्विकल्पः। अतोऽद्व्युरिति अभोभगो इत्यादौ द्वयोर्नित्यत्वं संगच्छते॥ २६॥

निपूर्वस्य युनक्तेर्घञि सिद्धेन नियोगशब्देनेह अवधारणमेवोच्यते धातूनामनेकार्थत्वात्। एवशब्देनेह सादृश्यसम्भावनावधारणान्युच्यन्ते। तत्र सादृश्यसम्भावनयोर्वर्त्तमान एव शब्दे परे अवर्णस्य लोपः स्यात् अवधारणवाचके एवशब्दे लोपो न स्यात् इत्यर्थः। अतएव एवे अनवधारणे इति काश्मीरकाः पठन्ति। अद्येवेति। ह्यो यत् कृतं तत् अद्यकृतमिव लक्ष्यते इत्यर्थः। एवं चर्मेव रज्जुरित्यादि। सम्भावनायान्तु तदद्येवाभूदित्यादि। अवधारणे तु अद्यैव गच्छ अन्यदिवसे न इत्यर्थः। एवं मिथ्यैव श्रीः श्रियंमन्या इति भट्टिः। तथैव सोऽभूदन्वर्थो राजा प्रकृतिरञ्जनात् इति रघुः। अपदोषतैव विगुणस्य गुण इत्यादि॥ २७॥

वाशब्दस्येह व्यवस्थावाचित्वात् प्रोष्ठो वृषः प्रोष्ठी मत्स्यविशेषः। इति संज्ञायां

**२९। त्रीसे त्वृतोब्रिं।**

त्रीसे ७।, तु ।१। ऋतः १।, ब्रिं २।।

अवर्णात्पर ऋतौ ब्रिमाप्नोति त्रीसे सति। शीतार्त्तः ( शीत-ऋतः )। त्रीसे किं परमर्त्तः। ( परम-ऋतः )। ( अत्र कर्मधारयसमासे गुणः )। त्वन्तस्य नानुवृत्तिः।

**३०। ऋणप्रवसनवत्सरवत्सतरदशकम्बलस्यर्णः।**

ऋण—कम्बलस्य ६।, ऋणः १।।

एषामवर्णात् पर ऋणो ब्रिमाप्नोति। ऋणार्णं प्रार्णं। ( ऋण-ऋणं, प्र-ऋणं )।

**३१। स्वाक्षयोरीरोहिण्यौ।**

स्व अक्षयोः ६॥, ईर ऊहिण्यौ १॥।

अनयोरवर्णात् परावेतौ ब्रिमाप्नुतः। स्वैरं, अक्षौहिणी। ( स्व-ईरं, अक्ष-ऊहिणी )।

---

नित्यम्। आ ओष्ठादोष्ठम् इत्यव्ययीभावेऽनेन आङोलोपे लोपोऽप्यादेश उच्यते इति न्यायाल्लोपस्य आदेशत्वे स्थानिवदादेश इति न्यायादाङ्लोपस्य आङ्तुल्यत्वे तवोष्ठं ममोष्ठमित्यादौ लोपोऽस्योमाङोरित्यकारलोपः॥ २८॥

निमित्तकार्य्यिणोरव्यवहितसम्बन्धादृकारस्यैव वृद्धिः। अन्यथा येन विधिस्तदन्तस्येति न्यायादकारस्यैव वृद्धिः प्रसज्येत। एवम् ऋण प्रवसनेत्यादौ च व्याख्येयं त्वन्तस्य इत्यादि। त्वन्तस्य पदस्य परसूत्रेऽनुवृत्तिर्नास्तीत्यर्थः। ( त्रीसे तृतीयातत्पुरुषसमासे। शीतेन ऋतः पीड़ित इत्यादि विग्रहवाक्यं स्यात् )॥ २९॥

एवं वसनार्णं वत्सरार्णं वत्सतरार्णं दशऋणानि सन्त्यस्य इति दशार्णो देशः दशार्णा नदी उभयत्र ऋणशब्देन जलदुर्गमभूमिरुच्यते। कम्बलार्णम्। ( ऋणात्परं ऋणं ऋणार्णं प्र प्रकृष्टमृणं प्रार्णं, वसनाय ऋणं वसनार्णं, वत्सरेण देयमृणं वत्सरार्णं, वत्सतरार्थमृणं वत्सतरार्णम् इत्यादि )॥ ३०॥

ऊहिणीति मूर्द्धन्यनिर्देशात् अक्षानूहितुं शीलमस्या इति वाक्ये संज्ञायां णत्वे अक्षौहिणी सेना पाशकस्त्री च। अन्यत्र अक्षौहिनी॥ ३१॥

## ३२ । प्रस्योढ़ोढ्यूहाः ।

प्रस्य ६।, ऊढ़ ऊढ़ि ऊहाः १॥।।

प्रस्यावर्णात् परा एते व्रिं यान्ति । प्रौढ़ः प्रौढ़िः प्रौहः । ( प्र-ऊढ़ः, प्र-ऊढ़िः, प्र-ऊहः ) ।

## ३३ । वैषैष्यौ ।

वा ।१।, एष एष्यौ १॥ ।

प्रस्यावर्णात् परावेतौ व्रिं वा प्राप्नुतः । प्रैषः, प्रेषः प्रैष्यः प्रेष्यः । ( प्र-एषः, प्र-एष्यः ) ।

## ३४ मनीषाः ।

१॥। ।

मनीषाद्या निपात्यन्ते । मनीषा, हलीषा, लाङ्गलीषा,

---

वहेर्भावे प्राप्तौ क्तः ऊढ़ः क्तिः ऊढ़िः ऊहङ तर्के घञ् ऊहः ॥ ३२ ॥

वाशब्देनेह समुच्चयार्थतया वृद्धेः पूर्वोऽवर्णलोपः समुच्चीयते । तेन प्रस्यावर्णात् परावेषैष्यौ वृद्धिं वा प्राप्नुतः । एवम् एषैष्ययोः परयोः प्रस्यावर्णस्य लोपश्च स्यात् इत्यर्थः । यत्तु वृद्धेरभावपक्षे गेर्धोरित्यादिना गुणविधानं तद्धेयम् । इषधातोर्घञ् व्यणोरुत्पत्तौ द्वितीयचरणे लिङ्गसंज्ञायां गेर्धोरित्यादेरनवकाशात् ॥ ३३ ॥

बहुवचनं गणार्थं गणश्च दशाध्यायी सूत्रव्युत्पाद्यमयः । नच तदा अध्यायान्तरे निपातनसूत्रैरलमिति वाच्यं तेषामस्यैवोदाहरणार्थकत्वात् यल्लक्षणेनानुत्पन्नं तत् सर्वं निपातनात् सिद्धमिति भाष्यं निपातनलक्षणं यथा "वर्णागमोवर्णविपर्य्ययश्च, द्वौ चापरौ वर्णविकारनाशौ । धातोस्तदर्थातिशयेन योगस्तदुच्यते पञ्चविधं निरुक्तमिति" प्राञ्चः । मनीषेत्यादि ईषेति ईषङगतिदानेक्षणहिंसे इति मूर्द्धन्यान्तस्वरूपम् । मनस ईषा मनीषा एवं हलीषा लाङ्गलीषा शकौ देशविशेषः शकानामन्धुः कूपः शकन्धुः । कुलानि अटतीति कुलटा वेश्या । अन्यत्र कुलाटा कुलवधूः । सीमानमन्तति बध्नाति इति सीमन्तः केशविन्यासः । अन्यत्र सीम्नोरन्तः सीमान्तः पतन्नञ्जलिरस्येति पतञ्जलिर्मुनिविशेषः । सारमङ्गं यस्यासौ सारङ्गश्चातकादिः । अन्यत्र साराङ्गो मल्लः । एवं तालव्यवत्यामीशायां हललाङ्गलयोरकारलोपो वा हलीशा हलेशा

शकन्धुः, कुलटा, सीमन्तः, पतञ्जलिः, सारङ्गः। (मनस-ईषा, हल-ईषा, लाङ्गल-ईषा, शक-अन्धुः, कुल-अटा, सीम-अन्तः, पतत्-अञ्जलि, सार-अङ्गः)।

---

लाङ्गलीषा लाङ्गलेषा समीऽर्थो यस्य स समर्थः हनूरस्यास्तीति हनूमान्। हिनस्तीति सिंहः। कं दर्पयतीति कन्दर्पः। शतात्परं परःशतं सहस्रात् परं परःसहस्रं पारं करीतीति पारस्करी देशः। एकाधिका दश एकादश षड़धिका दश षोड़श उन्नतोऽम्बरः उडुम्बरः। शुद्ध ओदनो यस्य स शुद्धोदनः। उषसि बुध्यते उषर्बुधः। गवां पदं गोष्पदम्। गोभिः सेवितो देशः मानञ्च। काम्यकर्माणि माकर्त्तुं शीलमस्येति मस्करी भिक्षुः। अपस्करो रथाङ्गम्। अवस्करः पुरीषम् अटान् अवतीति अटवी अरण्यं तत्करोतीति तस्करश्चौरः। बृहतां देवानां पतिः बृहस्पतिः। समसमशनं समशनम्। अङ्गन्त्यस्मिन् इति अङ्गणम्। उत्थानम् मूर्द्धन्यान्तम्।

गवांयुतिर्गव्युतिः क्रोशयुगम्। वनस्य पतिः वनस्पतिः पुष्पं विना फलितो वृक्षः। आस्पदं प्रतिष्ठा। आश्चर्य्यमद्भुतम्। पृषद्‌दरं यस्य स पृषोदरः पृषदुद्यानं पृषोद्यानम्। केशिनमवधीत् केशवः। अक्षिभ्यां परं परोक्षं पश्चादर्द्धं पश्चार्द्धं हरिरिव चन्द्रो रमणीयो हरिश्चन्द्रः। भवोलोकः भूर्लोकः मुक्तिं ददातीति मुकुन्दः। पक्षे मुक्तिदः। विष्किरो विकिरः पक्षी। अर्द्धमशनम् अर्द्धाशनमिति केचित्। आकृत्यान्येऽपि वक्तव्याः प्रस्कन्नाद्यामनीषिभिः। अन्योन्यं परस्परमितरेतरम्। एते व्यतीहारे निपात्यन्ते। एषां क्लीवत्वमेकत्वञ्च नित्यम्। अन्योन्येन परस्परेण इतरेतरेण पुंभिः स्पर्द्धते। स्त्रीक्लीवयोर्विभक्तेराम् वा। अन्योऽन्येन अन्योऽन्यां स्त्रीभ्यां स्त्रीभिर्वा धनाभ्यां धनैर्वा स्पर्द्धते। एवमनादिस्थयोरज्ञातयोर्यवयोर्हसि लुक्। अवतीति ऊः नद्या ऊः नद्यूः तस्येहा नद्यीहा। इः कामः पटुश्चासौ इश्चेति पट्विः तस्योत्सवः पट्व्युत्सवः। अनादिस्थयोः किम्? इश्च उश्च ऋटश्चय्वृतः उश्च इश्च ऋटश्च व्यृतः। हसि किम्? नद्येषा सख्वीहा। इतावुञ्चोवा ऊः। ऊइति उ इति विति। चपोञम् सानुनासिके न द्विः। चपो ञम् स्याद्वा सानुनासिके परे तस्य च द्वित्वं न स्यात्। विणँ इति विड्ँ इति तन्ँ इति तद्ँ इति दृड्ँ इति दृग्ँ इति। नोरनुनासिकः खसे। अनुस्वारस्यानुनासिकः स्याद्वा खसे परे। अनुनासिकोऽर्द्धचन्द्राकृतिवर्णः। भवाँश्चन्द्रः भवांश्चन्द्रः भवाँष्टङ्कः भवांष्टङ्कः भवाँस्तव भवांस्तव काँस्कान्

कांक्षान्। मनयवलयुक्त हे मनयवलाश्चेन। मनयवलयुक्ते हकारे परे अनुस्वारस्य स्थाने क्रमादनुनासिकसहिता मनयवला वा स्युः। सँम्ह्मलयति संह्मलयति सँनह्नुते संह्नुते किँय्ह्यो भूतं, किं ह्योभूतं, किँव्ह्वलयति किंह्वलयति किँल्ह्लादयति किंह्लादयति। चपः खयः शसि। चपस्य खयः स्याद्वा शसि परे। वाख्शूरः वाक्शूरः वाक्शूरः दिठ्षष्ठः दिट्षष्ठः तथ्साधुः तत्साधुः अफ्सोमा अप्सोमा अफ्सरसः अप्सरसः। भथ्र्सनं भर्त्सनम्। हसाल्लोपो ये यस्य। हसात् परस्य यस्य लोपः स्याद्वा ये परे। आस्ये भवम् आसम् आस्यं हसात् किं शय्यते केचित्तु अभति यभति मभतीनां रेफस्य यकारे परे लोपं विभाषया विधाय अय्यते अभाते वभते वभ्राते मभ्यते, मभाते इत्याहुः। झसिर्गे झसः। झसात् परस्य झसस्य लोपः स्याद्वा सवर्णे झसि परे। भिन्ते भिन्त्ते कन्डे कन्ड्डे। हसात् किं दिक्करोति। खप् परे शसिवेः खप्परो यस्मात् तस्मिन् शसि परे विसर्गस्य लोपः स्याद्वा। कश्चोतति कःश्चोतति कष्ठीवति कःष्ठीवति कस्तौति कःस्तौति। एकाधिकरणे राज्ञि प्रचेतसोऽस्ति रेफः। एकाधिकरणे राज्ञि परे प्रचेतसो विसर्गस्य रेफः स्याद्वा न तु समासे। हेप्रचेताराजन् हेप्रचेतोराजन्। एकाधिकरणे किम्? एहि प्रचेतोराजन् गच्छ। असमासे किं प्रचेतोराजस्य धनम्। स्यादर्होहसोऽनचि तु डिः। ऋस्मात् परो रेफहकारवर्जोहसोडिः स्याद्वा न त्वचि। चित्तं चित्तं सिद्ध्यति सिध्यति गृद्ध्रः गृध्रः कल्पप्यते कल्प्यते। त्वक्क त्वक् मक्क मक्। दीर्घादपीति केचित्। गात्त्रं गात्रं वाक्क वाक् अर्हः किं जागर्त्ति अच रलोपे पूर्वस्य दीर्घापत्तिः। मुह्यति। अनचि किं वदति। अचो रहाभ्यां यपः। अचः पराभ्यां रेफहकाराभ्यां परो यपो डिः स्याद्वा। हर्य्यक्षो हर्यक्षो पूर्व्वः पूर्वः निर्ण्णयः निर्णयः कर्म्म कर्म वर्द्धते वर्धते गर्ब्भः गर्भः मूर्क्खः मूर्खः अर्च्चा अर्चा प्रह्ल्लादते प्रह्लादते। अचः किं पितृव्य संह्लादते यपः किं अर्हणं दर्शनम्। खपाच्छसः। खपात्परः शसो डिः स्याद्वा। त्वक्श्शय्या त्वक्शय्या त्वक्श्शय्या त्वक्शय्या अफ्स्सरसः अफ्सरसः अप्स्सरसः अप्सरसः। खपात् किं हलषु। शसः किं वाक्चारुः। शसात् खपः। शसात्परः खपो डिः स्याद्वा। कश्च्चौरः कश्चौरः। कष्ठ्ठीवति कःष्ठीवति कस्त्तौति कःस्तौति। णपाद्यलः। णपात्परो यलो डिः स्याद्वा। नद्यात्र नद्यत्र मध्व्वत्र मध्वत्र वज्रे पूर्वरेफस्य लोपः शुक्ल्लः शुक्लः णपात् किं शिष्यः। यलः किं दुग्धम्। यलात् णपः। यलात्परो णपो डिः स्याद्वा। अभ्यय्क्करोति अभ्यय्करोति मूलव्क्खनति मूलव्खनति। वल्क्कलं वल्कलम्। ईयकारकयोरन्धस्य दन् नित्यम्। अन्धस्य नित्यं दन् स्यात् ईये कारके च परे। अन्धस्येदम् अन्धदीयं अन्धत्कारकम्। आशीरागाश्च।

## ३५। यलायवायावोऽचीचः।

यल अय् अव् आय् आव: १।॥, अचि ७।, इचः ६।।

इचः स्थाने य् व् र् ल् अय् अव् आय् आव् एते अचि परे क्रमात् स्युः। त्र्यम्बकः, विष्ण्वीशौ, धात्रच्युतौ, लाकृतिः, हरये, शम्भवे, नायकः, पावकः। ( त्रि-अम्बकः, विष्णु-ईशौ, धातृ अच्युतौ, ऌ-आकृतिः, हरे-ए, शम्भो-ए, नै-अकः, पौ-अकः )।

## ३६। वावगोर्दान्ते।

वा।१।, अव।१।, गोः ६।, दान्ते ७।।

गोरिचः स्थाने अवः स्याद्वा अचि परे दान्ते। गवेशः, गवीशः ( ३५ सू )। ( गो-ईशः )। दान्ते किं गवे। ( गो-ए )। गवेन्द्र-गवाक्षौ नित्यम्। ( गो इन्द्रः, गो-अक्षः। उभयत्र गवादेशो नित्यम्। )

---

स्थितीदूत्युत्सुकरागेष्वन्नीषीसे। अन्यस्य दुन् स्यादेषु परेषु नतु तृतीयाषष्ठीतत्पुरुषयोः। अन्यदाशीः अन्यदाशा अन्यदास्था अन्यदास्थितः अन्यदूतिः अन्यदुत्सुकः अन्यद्रागः। तृतीयाषष्ठीतत्पुरुषयोस्तु ऽन्यस्य अन्येन वा आशीः अन्याशीः। वार्थे। अन्यस्य दुन् स्याद्वा अर्थे परे नतु तृतीया षष्ठीतत्पुरुषयोः। अन्यदर्थः अन्यार्थः। तृतीया षष्ठीतत्पुरुषयोस्तु अन्येन अन्यस्य वा अर्थः अन्यार्थः ॥ ३४ ॥

त्र्यम्बक इति त्रीणि अम्बकानि चक्षूंषि यस्येति विग्रहः। लोचनं चक्षुरम्बकमिति शाश्वतः। लक्ष्मीश इत्यादौ सामान्यविशेषयोर्मध्ये विशेषविधिर्बलवान् इति न्यायाद्दीर्घएव। ऌकारस्याकृतिरिव आकृतिर्यस्य स लाकृतिर्नवमोऽङ्कः ॥ ३५ ॥

वृत्तौ गोरिचो ग्रहणात् गवावादेरिति ह्रस्वे उकारस्याप्यवादेशे चित्रगवाचार्थे इत्यादि सिद्धमित्येके। अव इत्यकारान्तः। गवीश इत्यत्र अयांयोरित्यादिना वकारलोपाभावस्तु तत्सूत्रीय-वाशब्दस्य व्यवस्थावाचित्वात्। गवेन्द्रेति विभाषाद्वयमध्यवर्त्तित्वादस्य नित्यत्वम् ॥ ३६ ॥

## ३७। अयां य्वोर्लुब् वा।

अयां ६॥, य्वोः ६॥, लुप् ।१।, वा ।१।।

दान्ते स्थितानामयादीनां यवयोर्लुप् स्याद्वा। हरएहि हरयेहि, शम्भइदं शम्भविदं, श्रिया एति श्रियायेति, विष्णा-उत्कः विष्णावुत्कः। (हरे-एहि, शम्भो-इदं, श्रियै-एति, विष्णौ-उत्कः)।

## ३८। एङोऽतः।

एङः ५।, अतः ६।।

दान्ते स्थितादेङः परस्य अकारस्य लुप् स्यात्। हरेऽव विष्णोऽव। (हरे-अव, विष्णो-अव)।

---

अयामिति बहुवचननिर्देशादय् अव् आय् आव्स्वरूपाणां आदेशानामनादेशानाञ्च ग्रहणम्। न च उपस्थितत्वादादेशानामेव ग्रहणमिति वाच्यम्। सनिच्छायामित्यस्मात् इच्छार्थे सनोऽनुवृत्तावपि गुणोनिमीत्यनेन स्वार्थे सनन्ते चिकित्सतीत्यादावपि गुणनिषेधदर्शनात्। ततश्च आन्तक्विबन्तानामय् अव् आय् आव् स्वरूपाणामपि यवयोर्लुब्वेति। तत्र वाशब्दस्य व्यवस्थावाचित्वादवे परे एवेति बोध्यम्। यथा रामं याति पापं वृश्चति गङ्गां याति लतां वृश्चतीति क्विप् रामयाः पापवृट् गङ्गायाः लतावृट्। ततस्तमाचष्ट इति औणीमंश्चेति डित्वात् टिलोपे पुनः क्विप् वेर्लोपे राम आस्ते रामयास्ते पापएष पापवेषः गङ्गाअयं गङ्गाययं लताएकः लतावेकः। रामभ्यां रामय्भ्यां पापगच्छति पापव्गच्छति गङ्गाधीरः गङ्गाय्धीरः लतादण्डः लताव्दण्डः। स्वसेतु रामय्करोति गङ्गाय्साधुः। एवं सति आदद्वोरिति कृते अवर्णात् परयोर्यवयोर्लुप् इत्यनेनैवेष्टसिद्धौ अयामिति कृतन्तु अयादीनामेकपदीयत्वज्ञापनार्थं तेन पुव पठय् इति पुव पठव् इति पुव पठ माय् इति पुस्त पठमाव् इत्यादौ भिन्नपदे नातिप्रसङ्गः। अथवा अवर्णस्य य्वोर्दान्तत्वमिति सन्देहनिरासार्थमयामिति। लुक्करणात् हर एहि इत्यादौ न सन्धिः॥ ३७॥

दान्ते किं शयनं भवनम्। (शे-अनं, भो-अनं)॥ ३८॥

## ३९। गोर्वा।

गोः ६।, वा ।१।।

गोरति वा सन्धिः। गोऽग्रं (३८ सू), गोअग्रं (३८सू), गवाग्रं (३६ सू)। (गो-अग्रं)।

## ४०। नाजोअन्तोऽनाङिः प्लुश्च।

न ।१।, अच् ।१।, ओ-अन्तः १।, अनाङ् ।१।, निः १।, प्लु: १।, च ।१।।

अज्मात्र ओकारान्तश्च निराङ्वर्ज्जः सन्धिं नाप्नोति प्लुश्च। अ अनन्त, ई ईश्वर, उ उमेश, अहो ईशान, कृष्ण एहि। अनाङ् किम्?।

मर्य्यादायामभिविधौ क्रियायोगेषदर्थयोः।
य आकारः स ङित् प्रोक्तो वाक्यस्मरणयोरङित्॥
आत्मबोधादैकदेशादालोक्योधरतैर्हरिः।
आ एवं तत्त्वमर्य्यादा आ एवं तत् कृतं मया

---

इह लुपोऽनुवृत्तौ वावगोरिति विशेषविधेरप्राप्तिपक्षे एङोऽत इत्यस्य चरितार्थत्वादेतत्सूत्रस्यैव वैफल्यं स्यादिति प्रकरणबलात् सन्धिर्विभाष्यते। न च सर्वविधिभ्यो लोपविधिर्बलवान् इति न्यायादादौ प्रवृत्तस्य एङोऽत इत्यस्य विभाषार्थोऽयं विधिरिति वाच्यम्। लोपविधेर्विशेषेतरत्रैव बलवत्त्वात्। अन्यथा सुवृट् इत्यादौ षङ् बाधित्वा स्यान्तस्यारादित्यादिना लुप् प्रसज्येत। न च तत्र षङः सार्थकत्वार्थमेव लुप् न स्यात् इति वाच्यम्। द्रष्टव्यमित्यादौ षङः सार्थकत्वात्। ततश्च अर्थवशाद्विभक्तेर्विपरिणाम इति न्यायात्। अत इति पदं सप्तम्यन्तं भूत्वा अनुवर्त्तते। इत्यत आह गोरतीति। अत्र वाशब्दीयव्यवस्थया गामञ्चतीति क्विपि गवाङ्। अत्र अवौ नित्यः॥३९॥

ओ अन्त इति पृथक् करणादच्पदेन तन्मात्रं प्रतीयते। अन्यथा व्रजवदरत्नजनिम इत्यादिवत् अजन्तस्यैव प्राप्तिः स्यात्। किञ्च ओ इति पृथक् पाठेनापि ओदन्तप्राप्तौ ओदन्तग्रहणम् ओदन्तस्य अन्तावयवीयसन्धेरेव निषेधो ननु सर्ववर्णानामिति ज्ञापनार्थम्। अन्तावयवीयसन्धिश्च अचिपर एव सम्भवतीति अचि पर एव निषेधः। तत्साहचर्य्यात् अज्मात्रप्लुतयोरपि अचि पर एव सन्धिनिषेध इति

### ४१। व्वद्देऽमीय्वे।

व्वद्दे ७।, अमीय्वे ।१।, ( ई-ऊ-ए = य्वे )।

**व्वे निष्पन्नोऽमौशब्दो द्वे निष्पन्न ईदूदेदन्तस्य सन्धिं नाप्नोति। अमी ईशाः, हरी एतौ, विष्णू इमौ, गङ्गे इमे। व्वद्दे किं? अम्ययं, बध्वर्थः। ( अमी-अयं, बधू-अर्थः )।**

---

बोध्यम्। तेन अनन्त अ, ईशान अद्दी इत्यादौ सन्धिः स्यादेव। नच अनन्त अ इत्यादिषु अकारादेः सन्धिस्थानिवत्त्वाभावादेव सन्धिनिषेधस्य न प्रसङ्ग इति वाच्यम्। यस्य यस्य सन्धिनिषेधस्तन्निमित्तकसन्धेरपि निषेध इति अवश्यवक्तव्यत्वात्। अन्यथा गङ्गे अत्र इत्यादावपि अकारलोपः प्रसज्येत। अतएव अवगणितमवमताव-ज्ञाते अवमानितञ्च परिभूते। मङ्गलानन्तरारम्भप्रश्नकार्त्स्न्येष्वथो अथ इत्यमरोक्तिः संगच्छते। कृष्ण एहीति दूराह्वाने प्लुतः प्रयुक्तः। तथाचोक्तं "दूराह्वाने च गाने च रोदने च प्लुतो मतः"। ननु कृष्ण एहीत्यादौ प्लुतात् परस्य सेर्लोपः कथमिति चेत् सत्यम् आदौ कृत्वात् सिलोपे पदसंज्ञायां पश्चाद्दूराह्वानादौ प्लुतत्वे सन्धिनिषेधः। शिवेहीत्यादौ निकटाह्वाने प्लुतो न स्यात्। अनुबन्धशून्यस्य आकारस्य आङश्च भेदज्ञानं कथं स्यादित्यत आह मर्य्यादायामित्यादि। य आकारो मर्य्यादायां अभिविधौ क्रियायोगेषदर्थयोश्च वर्त्तते स ङित् प्रोक्तः। मर्य्यादा सीमा, अभिविधिः व्याप्तिः, क्रियायोगः क्रियावाचकधातुपूर्ववर्त्तित्वम्, ईषदर्थोऽल्पार्थः। य आकारो वाक्यस्मरणयोर्वर्त्तते सोऽङित् प्रोक्तः। वाक्यं वाक्यार्थः स्मरणं पूर्ववाक्यार्थानुभवः। आत्मबोधादित्यादि। आ उपरतेरीषद्विरक्तैर्जनैः आ आत्मबोधात् आत्मज्ञानपर्य्यन्तं आ एकदेशात् एकदेशं करचरणादिकं व्याप्य हरिः आकृष्णः आ अलोकि दृष्टः इत्यर्थः। एषु मर्य्यादादौ वर्त्तमानत्वादाङः सन्धिरभूत्। हरिं दृष्टवता उपरतेन सन्तुष्टेन उच्यते। आ एवमित्यादि। आ एवं तत्त्वस्य ब्रह्मणो मर्य्यादा इति वाक्यं तत्त्वं ब्रह्मणि तद्भावे इति धरणिः। यस्मान्मया अधर्मेनापि तद्धरिदर्शनं कृतमिति स्मरणं इत्युभयत्र सन्धिर्न स्यात्। अत्र नञा निर्दिष्टमनित्यमिति न्यायात्। "प्लुतस्येतौ परे सन्धिः प्लुतेकारस्य वा भवेत्" इति कृष्णेति गौरीति गौरि इति॥ ४०॥

ईश्च ऊश्च एश्च इति य्वे अमीश्च य्वे चेति अमीय्वे अत्र एकारस्य सन्धिनिषेधात् तन्निमित्तस्यापि सन्धेर्निषेधो बोध्यः। तेन गङ्गे अत्र इत्यादौ न अकारलोपः।

## ४२। स्योदितौ।

स्योत् १।, वा ।१।, इतौ ७।। ( सि+ओत् = स्योत् )।

सौ जात ओकारः सन्धिं वा नाप्नोति इतौ परे। विष्णो-इति, विष्णइति ( ३७ सू ), विष्णविति ( ३५ सू )। ( विष्णो इति )।

## ४३। उञ् णपात्त्वचि व वा।

उञ् ।१।, णपात् ५।, तु ।१।, अचि ७।, व ।१।, वा ।१।।

उञ् सन्धिं वा नाप्नोति इतौ परे। णपात् परस्तु वो वा स्यादचि। उ इति, विति, किम्वुक्तं, किमु उक्तम्। ( उ-इति, किमु-उक्तम् )।

---

अव्ययमिति अमीरोगः। अमीऽस्यास्तीति अमी। वध्वा अर्थौ वध्वर्थः। अत्र नार्य्यौ-रर्थौ नार्य्यर्थः इत्यादौ द्विवचनान्तत्वेऽपीकारस्य द्विवचननिष्पन्नत्वाभावात् सन्धिः स्यादेव। इहापि नञा निर्दिष्टमनित्यमिति न्यायात् द्विवचने अदस एकारस्य सन्धिः स्यादिति अमुके इह अमुकयिह अमुकेऽत्र एकारस्य किम्? अमू अत्र एवं मणीवादिषु द्विवचननिष्पन्नस्य ईकारस्यापि इवे परे सन्धिः स्यादिति। मणीवादयश्च "मणी भार्य्यापती चैव दम्पती रोदसी तथा। वाससी जम्पती चैव शिवे जायापती तथा। अन्यैरपीह पठ्यन्ते ेचुषीप्रभृतीन्यपि" इति। यद्यपि शावकं व यशः पपुरिति कादम्बखण्डितदलानि व पङ्कजानीत्यादिवत् वशब्देनापि निर्वाहः तथापि इवेऽनिष्टं स्यादत उक्तम्। मणीवादिषु सन्धिर्नित्यमिति कालापाः। विकल्पेनेति क्रमदीश्वरः॥४१॥

सौजात इति प्रायिकाभिप्रायेणोक्तम्। स्यन्त इत्यर्थः। तेन हृष्ट उः शिवो येन स हृष्टोरस्यापि सम्बोधने हे हृष्टो इति हे हृष्टविति हे हृष्ट इति स्यात् किञ्च वाशब्दस्य व्यवस्थावाचित्वात् सम्बोधन एवायं विधिरिति तेन गवित्ययमाह हृष्टगवित्ययमाह इत्यादौ न स्यात्॥ ४२॥

ञकारोऽस्य नञवदव्ययत्वज्ञापकः। पूर्वतोऽनुवर्त्तमानेन वाशब्देन उञ् सन्धिं वा नाप्नोति इतौ परे इत्यर्थो लभ्यते इह तु वकारसम्बन्धार्थः पुनर्वाशब्दः णपात् पर उञवकारः स्याद्वा अचि परे। तस्य च वकारस्य अजवद्भावो बोध्यः। वा शब्दस्य

### ४४। वेक् ह्रस्वश्चार्णेऽसे।

वा।१।, इक्।१।, ह्रस्वः १।, च।१।, अर्णे ७।, असे ७।

इक् सन्धिं वा नाप्नोति ह्रस्वश्च वा स्यादर्णे परे, न तु से, दान्ते। शार्ङ्गी अत्र शार्ङ्गिअत्र शार्ङ्ग्यत्र। (शार्ङ्गी अत्र)। असे किं हर्य्यर्च्चा। (हरि-अर्च्चा)।

### ४५। ऋत्यक्।

ऋति ७।, अक्।१।

अक् सन्धिं वा नाप्नोति ऋति परे ह्रस्वश्च वा स्यात्। ब्रह्मा-ऋषिः, ब्रह्म ऋषिः, ब्रह्मर्षिः। (ब्रह्मा-ऋषिः)।

इति अच् सन्धि पादः।

---

व्यवस्थावाचित्वात्। अतएव किम्बुक्तमित्यत्र दान्तेम इत्यादिना मस्यानुस्वारो न स्यात्। एवं सुगण्वुदके पचन्नीहते क्रुङिङ्वन्द्र इत्यादौ ङ्णाच्ङ इत्यादिना द्वित्वञ्च स्यात्। वकारस्याभावपक्षे नाजोऽन्त इति सन्धिनिषेधे किमु उक्तमिति। न च मकारेण सम्बन्धस्य उञः केवलत्वाभावात् कथं सन्धिनिषेध इति वाच्यम्। स्वभाव-केवलस्य शब्दान्तरीयवर्णेन सम्बन्धेऽपि केवलत्वात्॥ ४३ ॥

सन्धिनिषेधसम्बन्धी वाशब्दः पूर्वादनुवर्त्तत एव। इह तु पुनर्वाग्रहणं ह्रस्व-सम्बन्धार्थम् अन्यथा सन्धिनिषेधसम्बन्धस्य वाशब्दस्य सन्धिनिषेधेनैव चरितार्थत्वे ह्रस्वस्य नित्यत्वापत्तिः। नच पूर्वादनुवर्त्तमानस्यैव वाशब्दस्य द्वाभ्यां सम्बन्धो भवतु इति वाच्यम्। पञ्चतिप्पञ्चणव्वाहस्य इत्यत्र तिबाद्यादेशसम्बन्धस्य वाशब्दस्य आहादेशे सम्बन्धाभाव-दर्शनात्। किञ्च वाशब्दस्येह व्यवस्थावाचित्वात् कदाचिदनित्यसमासे ह्रस्वादि स्यादिति बोध्यम्। तेन नद्या अम्भ इति समासेऽपि नदी अम्भः नदि अम्भः नद्यम्भः इति। नित्यसमासे तु कुव्यर्थः जान्वर्थः इत्यादि॥ ४४ ॥

इह वाद्वयमनुवर्त्तते। अत्रापि वाशब्दस्य व्यवस्थावाचित्वात् कदाचिदनित्यसमासे ह्रस्वादि स्यादिति बोध्यम्। तेन महा ऋषिः मह ऋषिः महर्षिरिति एवमुच्चारित-

## तृतीयः पादः ।

### हस् सन्धिः ।

४६ । स्तु श्चुभिः श्चु शात् ।

स्तु ।१।, श्चुभिः ३।।।, श्चु ।१।, अशात् ५। ।

सकार-तवर्गौ शकारेण चवर्गेण वा योगे शकारचवर्गौ क्रमात् प्राप्नुतः । न तु शात्परौ । सच्चित् । शार्ङ्गिञ्जय । अशात् किं प्रश्नः । (सत्-चित्, शार्ङ्गिन्-जय, प्रश्-नः ) ।

---

रुचिर-रुचां चाननानां चतुर्णामिति सूर्य्यशतकं हिम ऋतावपि ताः स्म भृशं विद इत्यादयः सिद्धाः । नित्यसमासे तु अम्बर्च्चौ वध्वृच्छीत्यादि ॥ ४५ ॥

इत्यच्सन्धिपादः ।

---

स च तुश्चेति स्तु शश्च चवश्च श्चवः तैश्चुभिरिति बहुवचनं यथासंख्यानिरासार्थम् । अन्यथा समानवचनात्तत्त्वे सकारः शकारेण योगे अव्यवहितशकारं प्राप्नोति । तवर्गश्चवर्गेण योगे चवर्गं प्राप्नोति इत्यनिष्टं स्यात् । श्चुभिरिति तृतीयान्तेन साहित्यस्य सूचनात् योगो लभ्यते । योगश्च अव्यवहितपूर्वापरैकतरवर्त्तित्वं शकारे परे यथा तच्छिवः सञ्शम्भुः । चवर्गे परे यथा सच्चित् शार्ङ्गिञ्जय । चवर्गात्परस्य सकारस्य यथा अच्शु नञ्शु । तवर्गस्य यथा याञ्ञा यज्ञः राज्ञ इत्यादि । अत्र अच्सन्धिरिति अप्यच् ताच्येप्पिरित्यादिज्ञापकात् विभक्त्यन्तचवर्गान्तात् परौ सकारतवर्गौ शकारचवर्गौ न स्याताम् इति बोध्यम् । ज्ञापकज्ञापिता विधयो लक्षण-मनुसरन्तीति न्यायात् तेन नञ्समासः क्नञ्धातुरित्यादयः सिद्धा । किञ्च अच्शु नञ्शु इत्यादौ सभयोः चवर्गस्य दान्ततुल्यत्वेऽपि विभक्त्यन्तत्वाभावात् सपः सस्य तालव्य शकारत्वम् । शकारचवर्गौ प्राप्नुतः इति भावप्रधाननिर्देशः । तेन शकारचवर्गयोर्भावं प्राप्नुत इत्यर्थः । शकारचवर्गौ स्यातामिति यावत् ॥ ४६ ॥

## ४७ । ष्टुभिः ष्टुष्यदान्तटोः ।

ष्टुभिः ३।।।, ष्टु ।१।, अषि ७।, अदान्तटोः ५। ।

सकार-तवर्गौ षकारेण टवर्गेण वा योगे षकार-टवर्गौ क्रमात् प्राप्नुतः, न तु षकारे परे, न च दान्तात् टवर्गात् परौ। तट्टीका, चक्रिण्ढौकसे । अषि किं सत् षष्ठः । अदान्तटोः किं षट्सन्तः षट् ते । ( तत्-टीका, चक्रिन्-ढौकसे ) ।

## ४८ । षण्णां षण्णवति षण्णगर्य्यः ।

१।।। । ( षष् नाम्, षट् नवतिः, षट् नगर्य्यः ) ।

एते निपात्यन्ते ।

## ४९ । ले लस्तोः ।

ले ७।, लः १।, तोः ६। ।

लेपरे तोर्लकारः स्यात् । तल्लयः, विद्वाँल्लिखति । ( तत्-लयः, विद्वान्-लिखति । )

---

षच टवश्च ष्टवः तैः ष्टुभिरिति बहुवचनं यथासंख्यानिरासार्थम् । अन्यथा पूर्वोक्तमनिष्टं स्यात् । न षः अषः तस्मिन् अषि । दान्तश्चासौ टुश्चेति दान्तटुः । न दान्तटुः अदान्तटुः तस्मात् । पूर्वस्य सकारस्य यथा हरिष्टीकते । तवर्गस्य यथा तट्टीका । षकारात् परस्य तवर्गस्य यथा कृष्णः षष्ठः । टवर्गात् परस्य तवर्गस्य यथा वहज्ञे वोढव्यः कटी गत्यां कट्टः कट्टवान् । ऋणदुङ्गतौ तिकि ऋण्टिरित्यादि । अत्र येन विधिस्तदन्तस्येति न्यायात् अदटोरित्यनेनैव अदान्तटोः प्राप्तौ अन्तग्रहणं ज्ञापयति भूतपूर्वदान्तटवर्गादपि परस्य तवर्गस्य टवर्गो न स्यादिति । तेन षट्सन्तः इत्यत्र नणट्टङ इत्यादिना कृतस्य तकारस्य टकारो न स्यात् ॥ ४७ ॥

षष्शब्दादामी नुमागमे निपातनात् षस्य णत्वे षण्णामिति । यत्र तु गौणत्वा न्नुमागमो न स्यात् तत्र न निपातनम् । तेन अतिषषामित्येव । षडधिका नवतिः षण्णवतिः षण्णां नगरी षण्णगरी । एतयोः पचे चपोऽवे जव् इति न स्यात् ॥ ४८ ॥

विद्वाँल्लिखतीत्यत्र अनुनासिकस्य हेतुमाह । यलौ द्विधेत्यादि । अनुनासिक-शब्दोऽर्द्धचन्द्राकारवर्णे रूढ़ः किञ्च नासिकामनुलक्षीकृत्य उच्चार्य्यतेऽसाविति व्युत्पत्त्या

यलो द्विधारो निरनुनासिकः सानुनासिकः ।
ञमोऽनुनासिकस्तेन तत्स्थाने सानुनासिकः ॥

## ५० । म्नोर्नुर्झस्यदान्ते ।

म्नोः ६॥, नुः १।, झसि ७।, अदान्ते ७। ।

अदान्ते स्थितयोर्मनयो र्नुः स्यात् झसि परे। रंस्यते बृंहितम् । ( रम्-स्यते, बृन्-हितम् ) ।

## ५१ । ञपे ञम्नोः ।

ञपे ७।, ञम् ।१।, नोः ६। ।

अदान्ते स्थितस्य नोर्ञपे परे ञम् स्यात् । शान्तः अङ्कितः । ( शाम्-तः, अन्-कितः ) ।

---

अनुस्वारे ञमे च वर्त्तते। अरो रेफभिन्नो यलो निरनुनासिकः इति सानुनासिकश्च इति द्विधा भवति। निरनुनासिकोऽर्द्धचन्द्राकारवर्णशून्यः। सानुनासिकोऽर्द्धचन्द्राकारवर्णपूर्वक इत्यर्थः। अत्र सानुनासिकश्चेत्यपपाठः। अन्यथा श्लोकत्वव्याघातः। न च चकारं विना कथं समुच्चयो बोद्धव्यः इति वाच्यं हसोऽन्तःफ इत्यादौ चकारं विनापि समुच्चयबोधात्। ञमः स्वभावादनुनासिकः। नासिकामनुलक्षीकृत्य उच्चार्य्यमाणस्तेन हेतुना तस्य स्थाने जायमानो यलः सानुनासिकोऽर्द्धचन्द्राकारवर्णपूर्वक एव स्यात् कारणगुणाः कार्य्यगुणमारभन्ते इति न्यायादित्यर्थः। तस्य चार्द्धचन्द्राकारवर्णस्य अनुस्वारवत् पूर्व्वेणैव सम्बन्धः। अर इति किं अवावरी इत्यादौ नस्थाने जातोऽपि रङ् निरनुनासिक एव ॥ ४९ ॥

रंस्यते इति रमुङ्जौक्रीड़े स्यते मस्यानुस्वारः। बृंहितं इति बृहिधनद्धर्यौः। अतएवेदितो णन् क्तः इमि नस्यानुस्वारः ॥ ५० ॥

ननु अर्थवशाद्विभक्तेर्विपरिणाम इति न्यायान्नुरिति प्रथमान्तस्य षष्ठ्यन्तत्वेनानुवृत्तावपीष्टसिद्धौ नोरिति पुनरुपादानं कथमिति चेन्न। कार्य्यिण आकाङ्क्षायां कार्य्यिणि सति कार्य्यस्य कार्य्यित्वेनानुवर्त्तमानताया अकार्य्यत्वात्। किञ्च म्नोरित्यस्यानुवृत्तावपीष्टसिद्धौ नोर्वचनं परसूत्रे यंयम्यते इत्यादौ ञम् जप् जभ् इत्यादिना कृतस्यानुस्वारागमस्य प्राप्त्यर्थम्। शान्त इति शमुभिर्यशमे क्तः ञमुङोझस्यणाविति दीर्घः। अङ्कित इति अङ्काङ्कत्व पदे लक्ष्मणि इत्यस्य नकारजावनुस्वार पञ्चमौ झवि

## ५२ । वा त्वरयपेऽरयम् ।

वा ।१।, तु ।१।, अरयपे ७।, अरयम् ।१। ।

**दान्ते अदान्ते वा स्थितस्य नो रेफवर्ज-यपे परे रेफवर्ज-यम् वा स्यात् । यमोऽनुनासिकः । यँय्यम्यते यंयम्यते, हरिम्भज हरिंभज । ( यं-यम्यते, हरिम्-भज ) । कम्पते इति पूर्वेण नित्यम् । ( कन्-पते ) । अरे किं रंरम्यते । ( रम्-रम्यते ) ।**

## ५३ । दान्ते मोऽसम्राजो हसे नुः ।

दान्ते ७।, मः ६।, असम्राजः ६।, हसे ७।, नुः १। ।

**दान्ते स्थितस्य मस्य हसे परे नुः स्यात् नतु सम्राजः । शिवं**

---

धातुश्चिति स्वरसात् ञस्य नप्रकृतिकत्वे अन्क इति स्थिते ञिः क्त इमि ञेर्लोपः नस्यानुस्वारे तस्यानेन ङकारः ॥ ५१ ॥

पृथग्योगाददान्ते इति नानुवर्त्तते । तेन दान्तेऽदान्ते वायं विधिः । अथवा तुकारस्यार्थः तेन अदान्ते इतिपूर्वतोऽनुवर्त्तते एव तुकाराद्दान्ते च इत्यर्थः । यमो अनुनासिक इति । अत्र जायमानयलानां मध्ये रेफवर्जनात् यवल इत्यचरत्रयम् अनुनासिकः अनुनासिकवान् अर्श आदित्वादः अर्द्धचन्द्राकारवर्णपूर्वक इत्यर्थः । यथा यँय्यम्यते यंयम्यते वँव्वम्यते वंवम्यते लँल्लम्यते लंलम्यते । यमो अनुनासिक इति लिपिकरप्रमादपाठः । तथात्वे हरिम्भज इत्यादावपि अनुनासिकपूर्वकत्वमापत्तेः वाशब्दस्येह व्यवस्थावाचित्वाददान्ते स्थितस्य ञम् जप् जभेत्यादिना विहितस्यानुस्वारागमस्य विंजादिदयेत्यादि चतुःसूत्रीविहितस्यामोऽनुस्वारस्य च अनेन ञम् वा स्यात् । यथा जञ्जप्यते जंजप्यते । इन्दाञ्चकार इन्दांचकार दरिद्राम्बभूव दरिद्रांबभूव विदाङ्करोतु विदांकरोतु जुहवाञ्चकार जुहवांचकार इति । धात्ववयवसम्बन्धिनोऽनुस्वारस्य पूर्वेण नित्यं ञमं दर्शयित्वा कम्पत इत्यादिना च प्रकृतेर्मध्ये जायमानानुस्वागमादेः सम्बन्धिनोऽनुस्वारस्य नित्यं ञमिति सूचितम् । यथा कम्पते स्वाम्पि भवन्ती भुजम्भिष्ट रुन्धन्ति इत्यादि । दान्ते तु सर्वत्र निर्विरोधो विकल्पः । यथा त्वँय्यत्त त्वंयत्त सँव्वृणोमि संवृणोमि त्वँल्लुभ्यः त्वंलुभ्य इदङ्कुरु इदंकुरु रिपुञ्जय रिपुंजय त्वण्टीकसे त्वंटीकसे इदन्तव इदंतव त्वम्पच त्वंपच इत्यादि ॥ ५२ ॥

स्तौति। ( शिवम्-स्तौति ) असम्राजः किं सम्राडिति। (सम्-राट् इति)।

## ५४। पुंसः सन् खय्यम्परेऽख्ये।

पुंसः ६।, सन् ।१।, खपि ७।, अम्परे ७।, अख्ये ७।

पुंसो मस्य सन् स्यादम्परे खपि परे, नतु ख्ये। पुंस्कोकिलः। ( पुम्-कोकिलः )। अम्परे किं ? पुंक्षीरम्। ( पुम्-क्षीरम् )। अख्ये किं ? पुंख्यातः। ( पुम्-ख्यातः )।

## ५५। नोऽप्रशामम्कृते।

नः ६।, अप्रशामः ६।, कृते ७।

दान्ते स्थितस्य नस्य सन् स्यादम्परे कृते परे नतु प्रशामः। शार्ङ्गिंश्छिन्धि चक्रिंस्त्राहि। (शार्ङ्गिन्-छिन्धि, चक्रिन्-त्राहि)। अम्परे किं ? सन्त्सरुः। ( सन्-त्सरुः )। अप्रशामः किं प्रशान्तनोति ( प्रशाम्-तनोति )।

## ५६। कांस्कान् नॄंः पि वा।

कांस्कान् ।१।, नॄंः ।१।, पि ७।, वा ।१।।

कांस्कान् कान्कान्, नॄंः पाहि नॄन् पाहि। ( कान्-कान्, नॄन्-पाहि )।

---

सम्राडिति। इति शब्देन सम्राट्शब्दो यस्मिन्नर्थे रूढः तत्रैव वर्जनमिति बोध्यते। रूढिस्तु "येनेष्टं राजसूयेन मण्डलस्येश्वरश्च य.। शास्ति यश्चाज्ञया राज्ञः स सम्राडित्यमरोक्तिः"। तेन सं शोभनं राजते संराट् चन्द्र इत्यत्र स्यादेव। मोबिन्दुरवसाने वेति वर्द्धमानः। रामं रामम् भवं भवम् ॥ ५३॥

अम्परो यस्मात् सोऽम्परः तस्मिन्। पुमस्शब्दस्य समासे विभक्तेर्लुकि स्यान्तस्याद्विति सलोपे मकारस्यैव सन्धिः प्रसज्येत इति ज्ञापनाय पूर्वतो मकारानुवृत्तिः ॥५४॥

किन्तरामित्यादि ज्ञापकादत्र सन्धिजातेतरनकार एव ग्राह्यः तेन किन्त्वत्यादौ वात्वरयपे इत्यादिना कृतस्य नकारस्य सन् न स्यात् ॥ ५५ ॥

कान्कान् इति पदद्वयस्य कांस्कानिति निपात्यते वा। पकारे परे तु नॄन् इति

## ५७। न ण ट्न ङश्चकन् श शस् स शसि वा ।

नणट्नङः ६।, चकन् ।१।, शशस् सशसि ७।, वा ।१। ।

दान्ते स्थितस्य नस्य चन् शे, णस्य टन् शसि, टनयोस्तन् से ङस्य कन् शसि स्याद्वा। सञ्छम्भुः सञ्च्छम्भुः सञ्शम्भुः, सुगण्ट् षष्ठः सुगण् षष्ठः, षट्त्सन्तः षट् सन्तः, सन्त्सः सन्सः, प्राङ्क्-षष्ठः प्राङ् षष्ठः। ( सन्-शम्भुः, सुगण्-षष्ठः, षट्-सन्तः, सन्-सः प्राङ्-षष्ठः )।

## ५८। चपोऽवे जब् ।

चपः ६।, अवे ७।, जब् ।१। ।

दान्ते स्थितस्य चपस्य जब् स्यादवे परे। वागीशः चिद्रूपः। ( वाक् ईशः, चित्-रूपः )।

---

पदस्य नृँः इति अनुस्वारविसर्गसहितं रूपं निपात्यते वा इत्यर्थः। केचित्तु वीप्सायां द्विरुक्तौ कान् कान् इति पदस्य काँस्कान् इति निपात्यते। अन्यत्र शिष्यान् कान् कान् ग्रन्थान् पाठयसीत्यादौ न स्यादित्याहुः ॥ ५६ ॥

टच नच ट्न नश्च णश्च ट्नच ङश्चेति नणट्नङ् तस्य। चकन्निति चक्संज्ञा तेन चन् टन् तन् कन् इत्यर्थः वाग्रहणं परत्र वाधिकारनिवृत्त्यर्थम्। नणट्नङ इत्यस्य पञ्चम्यन्तत्वे चकि कृतेऽपीष्टसिद्धौ षष्ठ्यन्तस्य चकन् विधानं तद्भक्तत्वेन चनादीनां पदान्तत्वार्थम्। तेन सुगण्ट् साधुरित्यादौ णकारसम्बन्धितया टस्य दान्तत्वात् ष्टुभिरित्यादिना साधोः सस्य षत्वं न स्यात्। अत्र रामानन्दस्तु षट्त्सन्त इत्यादौ टस्य तनि कृते टस्यादान्तत्वेऽपि तन्करणसामर्थ्यात्तकारस्य ष्टुभिरित्यादिना टत्वं न स्यादित्याह। तद्वेयं यथावेः स इत्यादिना चछटठतथेषु विहितौ दन्त्यसकारः पश्चात्चछयोर्योगे तालव्यः टठयोर्योगे मूर्द्धन्यः स्यात्तथात्रापि टनयोर्विहिततकारस्य टयोगे टत्वापत्तेरनिवार्य्यत्वात्। वस्तुतस्तु ष्टुभिरित्यत्र अन्तग्रहणज्ञापकात् भूतपूर्वदान्तात्टवर्गादपि परस्य तवर्गस्य टवर्गो न स्यादितिव्याख्यानादेव टत्वं न स्यादेव। भवान् स्थिर इत्यादौ खपे परे सकारे तन्न स्यादिति सौपद्माः खमते तु तद्दाशब्दाद्द्रवस्याप्यम् ॥ ५७ ॥

यद्यपि अत्र अमे इत्युक्ते उद्गच्छति इत्यादौ झप्झसोरित्यनेनापीष्टसिद्धिस्तथाप्यव्ग्रहणं कथं दान्तादान्तचप्विषयकस्य झप्झसोरित्यस्य दान्तचप्विषयकेण चपोऽवे-

## ५९। ञमे ञम् वा।

ञमे ७, ञम् ।१।, वा ।१।।

दान्ते स्थितस्य चपस्य ञमे परे ञम् स्यात् वा। एतन्मुकुन्दः, एतद् मुकुन्दः। ( एतत्-मुकुन्दः)।

## ६०। त्ये।

त्ये ७।।

त्ये मे परे दान्ते स्थितस्य चपस्य ञम् स्यान्नित्यम्। चिन्मयं वाङ्मयम्। (चित्-मयं, वाक्-मयं)।

## ६१। शहोश्चपाद्वामि छझभौ।

शहोः ६॥, चपात् ५।, वा ।१।, अमि ७।, छझभौ १॥।

दान्ते स्थिताच्चपात् परयोः शहकारयोः स्थाने क्रमेण अमि परे छ झभौ वा स्तः। तच्छिवः तच्शिवः, वाग्घरिः वाग्हरिः। ( तत्-शिवः, वाक्-हरिः ) अमि किं ? वाक्श्च्योतति। ( वाक्-श्च्योतति )।

---

जव् इत्यनेन नियमितत्वाद्दान्तचपस्य अमे एव जबो न तु झबेपरे। झप्झसोरित्यस्य तु झबे परे दान्तेतरचपस्य जबविधायकतया चरितार्थत्वादिति शङ्कानिरासार्थम्। तात एहीत्यादौ लोपोऽस्योमाङीरित्यकारलोपे जबाभावस्तु असिद्धं वहिरङ्गमन्तरङ्गे इति न्यायेन तकारस्य दकारे कर्त्तव्ये अकारलोपस्याऽसिद्धत्वात् ॥ ५८॥

ननु एतन्मुकुन्द इत्यादौ तेषां यो येन समः स तत्र परे इति व्यवस्थया मकारस्य साम्यात्तकारस्य मकारः कथं न स्यादितिचेन्न निमित्तसाम्यतःस्थानिसाम्यस्य बलवत्त्वात् ॥ ५९ ॥

ञमादिप्रत्ययानां मध्ये पदात्परो मकारादिरेव सम्भवतीत्यत आह त्येमे नित्यमिति द्वयोर्विभाषयोर्मध्यवर्त्तित्वान्नित्यत्वम्। एवं वाङ्मयम् ॥ ६० ॥

शहोरिति स्थानिनिर्देशादाकाङ्क्षाभावेन पूर्वचपोऽनुवृत्त्यभावे चपोग्रहणम्। अत्र वाशब्दस्य व्यवस्थावाचित्वाञ्ञकारे ञमे च परे न स्यादिति बोध्यम्। तेन तत्श्लाघ्यं तत्श्मशानं वाग्ह्लादयति वाग्ह्वनं दिग्ह्मलयति ॥ ६१ ॥

## ६२ । ङ्णोऽचि द्विः ।

ह्रस्वात् ५।, ङ्णः १।, अचि ७।, द्विः। १। ।

ह्रस्वात् परो दान्ते स्थितो ङ्णो द्विः स्यादचि परे। सुगण्णीशः, सन्नच्युतः, प्रत्यङ्ङात्मा। (सुगण्-ईशः, सन्-अच्युतः, प्रत्यङ्-आत्मा।)

## ६३ । छोऽचः ।

छः १।, अचः ५। ।

अचः परश्छकारो द्विः स्यात्।

## ६४ । झप्झसोः खस्झबोश्चप्जबावन्ते च ।

झप्झसोः ६॥, खस्झबोः ७॥, चप्जबौ १॥, अन्ते ७।, च ।१। ।

झप्झसयोः स्थाने खस्झबयोः परयोः क्रमात् चप्जबौ स्तः, विरामे च। शिवच्छाया, अच्छा। (शिव-छाया, अ-छा।)

इति ह्रस् सन्धिपादः।

---

द्विरितिलुप्तप्रथमैकवचनान्तं सुजन्तत्वेनाव्ययत्वात्। अत्र अनडुच्चतुरोऽणाणौधिष्यो-रिति ग्रहनन्दिपचादेर्णिननान्घे इति सन् यङन्तोद्विरित्यादिज्ञापकात् समासे ङ्णो द्वि र्न स्यादिति बोध्यम्। तेन सनन्तः तिङन्तः अनन्तः इत्यादयः सिद्धाः ॥ ६२ ॥

अत्र पदान्तदीर्घाद्वा छो द्विराङ्माभ्यान्तु परः स्यादिति वक्तव्यम्। तेन उमाच्छाया उमाछाया गौरीच्छाया गौरीछाया आच्छादयति माच्छिदत्। विश्वजनादेः परोऽपि वेति केचित्। विश्वजनच्छत्रं विश्वजनछत्रं। दधिच्छाया दधिछाया। मदनकतरुशाखालम्बिछोलङ्गयुग्ममित्यादि ॥ ६३ ॥

नचात्र झयझसोरिति कृतेऽपीष्टसिद्धिर्झपान्तर्भूतस्य चपस्य चपविधानवैयर्थ्या-दिति वाच्यम्। चपस्य चप्विधानसामर्थ्येन विरामे झपान्तर्गतस्यापि चपस्य पुनर्जबाभावे वाक् वाग् इत्यादि रूपद्वयासिद्धेः। अतएवात्र विरामपदेन परवर्णाभाव एवोच्यते। तेन दान्तवत् सभीत्यनेन दान्तत्वेऽपि लिट्सु इत्यादौ खसपरत्वाच्चप एव। लिड्भ्यामित्यादौ झब्परत्वाज्जब् एव। एवं विभक्तेर्लुकि लुप्तां विभक्तिमाश्रित्य पदत्वसिद्धावपि वाचा चारुः वाक्चारुः इत्यादौ। खस्परत्वाच्चप् एवेति ॥ ६४ ॥

# चतुर्थः पादः।

## विसन्धिः।

### ६५। वेःसोऽशसन्ते छते।

वेः ६।, सः १।, अशसन्ते ७।, छते ७।

वेः सकारः स्यात् अ-शसन्ते छते परे। कृष्णश्चिन्त्यः, हरिष्टीकते, विष्णुस्त्राता। (कृष्णः-चिन्त्यः, हरिः-टीकते, विष्णुः-त्राता।) शसन्ते तु कःत्सरुः। (कः-त्सरुः)।

### ६६। से तु कखपफे वा।

से ७।, तु ।१।, कखपफे ७।, वा ।१।।

वेः सकारो वा स्यात् कखपफेषु परेषु से सति। भास्करः भाःकरः, भास्खरः भाःखरः, भास्पतिः भाःपति, भास्फेरुः भाःफेरुः। (भाःकरः, भाःखरः, भाः-पति, भाः-फेरुः)।

---

शस् अन्ते यस्य स शसन्तः न शसन्तः अशसन्तः तस्मिन्। अत्र असान्त इत्यनेनैवेष्टसिद्धौ अशसन्तग्रहणं परत्रानुवृत्त्यर्थम् ॥ ६५॥

तुकारग्रहणं परत्र समासानुवृत्त्यर्थम्। अत्रापि अशसन्त इति विशेषणस्यानुवृत्तिः। तेन अयं त्सामः इत्यादौ न स्यात् अत्र वाशब्दस्य व्यवस्थावाचितया केवलस्यानव्ययस्याशसन्तस्य समासे कृञ काम कंस कुम्भी कर्णी कुम्भ पात्रेषु पाश काम्य कल्पेषु प्रत्ययेषु च नित्यः सः। यथा अयस्कारः अयस्करः तेजस्कामः अयस्कंसः अयस्कुम्भी अयस्कर्णी अयस्कुम्भः अयस्पात्रम् अय एव अयस्कं कुत्सितमयः अयस्पाशम् अय इच्छति अयस्काम्यति ईषदूनमयः अयस्कल्पः। एवं कौतस्कुतः आगतं तमस्काण्डः भ्रातुष्पुत्रः शुनस्कर्णः वाचस्पतिः दिवस्पतिः वास्तोस्पतिः सद्यस्कारः अयस्कीलः अधस्पदं शिरस्पदं सर्पिष्कुण्डं यजुष्पाठः नमस्करोति तिरस्करोति पुरस्करोति नमस्कारः नमस्कृत्य इत्यादिषु नित्यम्। दुष्खं दुःखमित्यादिषु विकल्पः। गीःकामः गीःकारः इत्यादिषु न स्यादिति ॥ ६६॥

## ६७। शसि शस्।

शसि ७।, शस् ।१। ।

वेः शस् वा स्यात् शसि परे। हरिश्शेते हरिः शेते, सन्तष्-षट् सन्तःषट्, शिवस्सेव्यः शिवःसेव्यः। (हरिः-शेते, सन्तः-षट्, शिवः-सेव्यः)।

## ६८। कखपफयोर्मूर्न्यौ।

कखपफयोः ७॥, मून्यौ १॥ ।

वेर्मून्यौ क्रमात् वा स्यातां कखपफयोः परयोः। हरि×काम्यः हरिः काम्यः, मणे×खनिः मणेः खनिः, कृष्ण‿पाता कृष्णः पाता, भक्ति‿फलति, भक्तिः फलति। (हरिः-काम्यः, मणेः-खनिः, कृष्णः-पाता, भक्तिः-फलति)।

## ६९। अतोऽह्वयुः।

अतः ५।, अत्-ह्वि ७।, उः १। ।

अकारात् परस्य वेरुकारः स्यात् अकारे ह्वि च परे। शिवोऽर्च्यः, शिवोवन्द्यः। (शिवः-अर्च्यः ६९, २३, ३८ सू०। शिवः-वन्द्यः ६९, २३ सू०)।

---

अस्य परस्य च विभाषाद्वयान्तःपाठेऽपि विकल्पवीजं द्वयोर्विभाषयोर्मध्ये विधिर्नित्य इत्यत्र लिखितम्। पूर्वसकारानुवृत्तौ ष्टुभिरित्यादिना दन्त्यस्य मूर्द्धन्यो न स्यात् इति शषसेषु परेषु क्रमात् शषसविधानं शसन्तस्यासम्भवादत्र अशसन्त इति न व्याख्यातम्। अत्र वाशब्दस्य व्यवस्थावाचित्वात् सुचिपरे विसर्गस्य सकारो नित्यः तेन चतुः ॥ ६७ ॥

कश्च खश्च कखं पश्च फश्च पफं कखञ्च पफञ्च कखपफे तयोः अत्रापि अशसन्त इत्यनुवर्त्तते। तेन कःक्षौणः कःप्साति इत्यादौ न स्यात्। अत्र वाशब्दस्य व्यवस्थावाचित्वात् ख्याधातौ परे न स्यात्। तेन हरिः ख्यातः ॥ ६८ ॥

अत्र अशसन्त इत्यस्यानुवृत्तिर्नास्ति अनिष्टत्वात् तेन रामोऽश्नाति स्यादेव।

## ७०। अ भो भगोऽघोभ्योऽवे लुप्।

अभोभगोऽघोभ्यः ५।३, अवे ७।, लुप् ।१। ।

अवर्णाद्भो भगोऽघोभ्यश्च परस्य वेर्लुप् स्यात् अवे परे। रुद्रा नमस्याः, भो हरे, भगो रक्ष, अघो यज। (रुद्राः-नमस्याः, भोः-हरे, भगोः-रक्ष, अघोः-यज)।

## ७१। यवाचि।

य ।१।, वा ।१।, अचि ७। ।

अवर्णात् भो भगो अघोभ्यश्च परस्य वे र्यौ वा स्यात् अचि परे। शिवयुग्रः शिवउग्रः, भोयच्युत भोअच्युत। (शिवः-उग्रः, भोः-अच्युत)।

## ७२। रिचोऽवे।

र ।१।, इचः ५।, अवे ७। ।

---

न च शिवोऽर्च्य इत्यादौ विसर्गजातस्योकारस्य वकारः कथं न स्यादिति वाच्यम्। प्रकृतेः पूर्वमन्तरङ्गमिति न्यायेन उकारतोऽन्तरङ्गस्य पूर्वाकारस्य सम्बन्धिनः सन्धे र्बलवत्त्वात् ॥ ६९ ॥

स्वरादेशादन्यत्र लोपस्य बलवत्त्वात् आदौ सिलोपे पश्चाद्भोभगो अघो आदेशे विसर्गस्याभावेऽपि लुप्विधानं ज्ञापयति भवदादीनामादौ भो इत्याद्यादेशः। आदावादेशः पश्चात् सिलोपाभावे विसर्ग इति। अत्र भोः पदेन भवच्छब्दसाधितस्य भोः रूपस्य सान्ताव्ययस्य च ग्रहणम्। तथाच, :—"अथ सम्बोधनार्थकाः। स्युः प्याट्पाडङ्ग हे है भोः" इत्यमरः। तेन "भो भो वृक्षाः पर्वतस्था बहुकुसुमयुता वायुना घूर्णमानाः" इति महानाटके। ( भोः हरे, हे हरे ; भगोः रक्ष, भगवन् रक्ष ; अघोःयज, अघवन् (पापिन्) यज—पूजादिकं कुरु) ॥ ७० ॥

भो अच्युत इत्यादौ लुपि न सन्ध्याद्यविधौ इति निषेधान्न सन्धिः। किञ्च नञा निर्दिष्टमनित्यमिति न्यायात् सैषयोः पादपूरणे सन्धिः स्यात् यथा "सैष दाशरथीरामः सैष राजा युधिष्ठिरः। एषैष रथमारुह्य मथुरां याति माधवः" इति ॥ ७१ ॥

यद्यपि रोवे इति कृतेऽपि अतोऽव्युरिति अभोभगोरित्याभ्यां विशेषविधिभ्या-

इचः परस्य वेः रेफः स्यादचे परे। हरिरयं, चतुर्भुजः। (हरिः-अयं, चतुः-भुजः)।

## ७३। रोऽचः।

रः ६।, अचः ५।।

अचः परस्य रेफस्य वेः रेफः स्यादचे परे। व्रातरव, धातर्गच्छ। (व्रातः-अव, धातः-गच्छ)।

## ७४। खपि वा।

खपि ७।, वा ।१।।

अचः परस्य रेफस्य वेः रेफः स्यात् वा खपि परे। गीर्पतिः गीष्पतिः गीःपतिः। (गीः-पतिः)।

## ७५। नाह्नोरकक्तौ।

न ।१।, अह्नः ६।, रकक्तौ ७।।

अह्नोरेफस्य वेः रेफो न स्यात् रेफे केक्तौ च परे। अहोरात्रः,

---

सवर्णे गृहीते अवशिष्टादिचः परस्यैव स्यादिति तथापीचो ग्रहणं ज्ञापयति क्वचि द्विशेषेण सामान्यो न वाध्यते इति। तेन सखिना वानरेन्द्रेण इति। "पतिना नीयमानायाः पुरः शुक्रो न दुष्यतीति।" "रघुनाथाय नाथाय सीतायाः पतये नमः" इत्यादि सिद्धम्॥ ७२॥

रइति षष्ठ्येकवचनं हसात् परस्य विसर्गस्यासम्भवादेव अचःप्राप्तौ पुनरचो ग्रहणं कथमिति चेन्न। अचोऽनुक्तौ पूर्वत इचोऽनुवृत्त्या अवर्णस्याप्राप्तेः। वस्तुतस्तु पृथग्योगादेव इचोऽनुवृत्त्यभावे ग्रहणं स्पष्टार्थम्। (व्रातर्-व्रातः, धातर्-धातः १०२ सू)॥७३॥

अत्र वाशब्दस्य व्यवस्थावाचित्वात् समास एव। तेन इयं गीः पतिरयं इत्यादौ न स्यात्। एवञ्च गिर् धुर् अहन् एषामेव विसर्गस्य पतिशब्दे परे एवेति बोध्यम्। तेन गीर्पतिः गीष्पतिः गीःपतिः धूर्पतिः धूष्पतिः धूःपःति अहर्पतिः अहस्पति अहःपतिः। अन्यत्र आशीः पतिः गीः पाठः॥ ७४॥

अहोरात्र इत्यादौ सषेसुसजुषह्नामिति रङि रेफसम्बन्धिविसर्गत्वाद्रेफप्राप्तौ निषेधः। अत्र नाह्न क्तौ इति क्तेऽपीष्टसिद्धौ रकक्ताविति गौरवज्ञापकाद्राति

अहस्करः, अहोभिः । ( अहः-रात्रः, अहः-करः, अहः-भिः ) ।

### ७६ । हस्येतत्तदोऽनञकः सेर्लोपः ।

हसि ७।, एतद्-तदः ५।, अनञकः ५।, सेः ६।, लोपः १। ।

नञक्वर्जादेतदस्तदश्च परस्य सेर्विलोपः स्यात् हसि परे। एषकृष्णः, सविष्णुः । ( एषः-कृष्णः, सः-विष्णुः ) । अनञकः किं ? असः शिवः, एषको रुद्रः । ( असः-शिवः, एषकः-रुद्रः ) ।

### ७७ । ढ्रोढ्रि र्घश्चानृः ।

ढ्रोः ६॥, ढ्रि ७।, र्घः १।, च।१।, अनृः ६।, ( न + ऋ = अनृ) ।

ढकारस्य ढकारे परे रेफस्य रेफे परे लोपः स्यात् । पूर्वस्य च ऋवर्ज्जस्य र्घः । रूढः हरीरम्यः । ( रुढ्-ढः, हरिः-रम्यः ) । अनृः किं ? तृढः । ( तृढ्-ढः ) । विसन्धिपादः ।

इति सन्ध्यध्यायः ।

---

रूपरथन्तरेभ्योऽन्यत्र रेफे परे रेफः स्यादिति बोध्यम् । यथा अहोरात्रः अहोरूपम्, अहोरथन्तरः, अन्यत्र अहारजन्यौ अहारवी अहाराज इति । एवं हे दीर्घाहो निदाघ हे कृशाहो हेमन्त इत्यादौ आवीव्भसादिति सेर्लोपे त्यलोपे त्यलक्षणमितिन्यायाद्विभक्तिपरत्वे रेफो न स्यात् । किञ्च गताहर्वनम् अहर्वदित्यादौ विभक्तेर्लुकि "लुकि न तत्र" इति निषेधाद्रेफः स्यादेवेति ॥ ७५ ॥

न विद्येते नञकौ यत्र सोऽनञकः तस्मात् । ननु सेषाभ्यामित्यनेनापीष्टसिद्धौ एतत्तदोऽनञकः सेरिति गौरवं कथमिति चेन्न स्वरूपसंज्ञयोर्वाचकात् स इति शब्दात् इषुश्रवाञ्छे इत्यस्माद् वञि एष इति शब्दाच्च विसर्गलोपापत्तेः ॥ ७६ ॥

नास्ति ऋ यत्र सोऽनृ तस्य अनृः । रूढ इति ञिजरुहौजन्यां क्तः होढोभाविति हस्य ढ़ः ढभात्तथोर्धिति तस्य धः ष्टुभिष्ट्येति धस्य ढः । रुढ्-ढ इति स्थिते अनेन पूर्वढकारलोपस्ततः पूर्वस्य दीर्घः । तृढ इति तृहधूशहिंसे क्तः तृढ्-ढ इति स्थिते पूर्वढस्य लोपः तत्पूर्वस्य ऋकारवर्जनान्न दीर्घः । न च यत्र पूर्वस्य दीर्घो न सम्भवति तत्र ढकाररेफयोर्लोपोऽपि मास्तु एकयोगनिर्दिष्टानां सह वा प्रवृत्तिः

## अजन्ताध्यायः।

### १म पादः—संज्ञा।

### ७८। लेः सि औ जस्, अम् औ शस्,

सह वा निवृत्तिरिति न्यायादिति वाच्यम्। ढकारस्य अन्वाचयशिष्टत्वात्, अतएव तृह धूर्ध्हिंसे इत्यादौ तृसि तृग्ढ इत्यादौ, नकारस्य दीर्घासम्भवेऽपि ढलोप. सङ्गच्छते। दीर्घस्य दीर्घविधानं व्यर्थमिति ऋशब्देनात्र ह्रस्व ऋकार एवोच्यते। ततश्च "यादृग् जातीयस्य विप्रतिषेधो विधिरपि तादृग् जातीयस्य" इति न्यायादत्र ऋवर्जनेन ह्रस्वस्यैव दीर्घ इति बोध्यम्। तेन मिढौ सिढे मेढा इत्यादौ अन्तरङ्गत्वादादौ गुणे अनेन ढलोपे पूर्वह्रस्वालाभात् न दीर्घः॥ ७७॥

इति विसन्धिपादः।

एकार्थावच्छिन्नपादसमूहोऽध्यायः। अर्द्धमात्रोच्चारणकालेनाव्यवहितयोर्वर्णद्वयोर्द्वतरोच्चारणं सन्धिः। अतएव औकारेयोरन्ताईयोर्वा न सन्धिः अर्द्धमात्रोच्चारणकालव्यवधानस्यौचितत्वादिति प्राञ्चः। स्वमते तु सन्ध्यध्यायसूत्रविहितकार्य्यं सन्धिरिति लक्षणम्। तेन पिपठिषादि-शब्दानां संयोगान्तलुपि "लुपि न सन्ध्याद्यविधौ" इति निषेधेऽपि सन्धिग्रहणात् सन्धिलुप्येव न सन्धिरितिनियमात्। झप्झसोरित्यनेन चप्जबौ पिपक् पिपगिति, भिन्नपदे तु सन्धिर्विभाषयेति बोध्यम्। तथाच "सन्धिरेकपदे नित्यो नित्यो धातूपसर्गयोः। सूत्रे चैव भवेन्नित्यः सैवान्यत्र विभाषितः" इति क्रमदीश्वरः। एकपदे स्वभावादेकपदे समासेऽपि यथा ज्ञानं भवेत् नद्यौ वध्वौ इत्यादि, समासे मुरारिः हृषीकेशः त्र्यम्बकः गवीशः इत्यादि। धातूपसर्गयोस्तु अधीते उपेत्य इत्यादि। अन्यत्र अत्र अम्भः अत्राम्भः इह इन्द्रः इहेन्द्रः इत्यादि। धातूपसर्गयोः समासस्य नित्यत्वादेकपदग्रहणेनेवेष्ट-सिद्धौ तयोः पुनरुपादानम् अनित्यसमासे कदाचिदेकपदेऽपि सन्धिर्विभाष्यत इति ज्ञापनार्थम्। तेन "उच्चारितरुचिरऋचां चाननानां चतुर्णाम्" इत्यादि सिद्धम्। सैवान्यत्रेति पादपूरणे सन्धिरिति गोयीचन्द्रः।

इति श्रीदुर्गादासविद्यावागीशविरचितायां मुग्धबोधटीकायां

सन्ध्यध्यायटीका समाप्ता।

**टा भ्याम् भिस्, ङे भ्याम् भ्यस्, ङसि भ्याम् भ्यस्, ङस् ओस् आम्, ङि ओस् सुप्।**

ले: ५।, सि—सुप् ।१।।।

स्यादीन्येकविंशति लं: पराणि प्रयुज्यन्ते। ज श ट ङ पाः सिङस्योरिकारश्चेतः।

**७९। त्रिशः प्रौद्वौत्रौचौपौषौस्नाः।**

त्रिशः ।१।।।, प्रौ-द्वौ-त्रौ-चौ-पौ-षौ-स्त्राः १।।।।

स्यादीनि त्रीणि त्रीणि वचनानि क्रमात् प्रौ-द्वौ-त्रौ-चौ-पौ-षौ-स्नौ-संज्ञानि स्युः।

---

धातुप्रकरणस्य प्रधानत्वादादौ वक्तुमुचितत्वेऽपि सुगमत्वाल्लिङ्गप्रकरणमादौ निरूपयति। अत्र स्यादिभिर्लिङ्गानां रूपाणि निरूपयिष्यन् लिङ्गात् परप्रयोगेण स्यादीनां प्रत्ययत्वं ख्यापयन्नाह। ले: सि औ जसित्यादि।

ननु त्र्यर्थसम्बुद्धीत्यादिसूत्रैरेवेष्टसिद्धिः किमनेन इति चेन्न यतो लं: सि औ जसित्यादिना लिङ्गात् परा ये स्यादयो विधीयन्ते तेषामर्था एव त्र्यर्थसम्बुद्धीत्यादिभिः सूत्रैः क्रियन्ते। तेनायमर्थः। त्र्यर्थसम्बुद्धीत्यादिसूत्रैकवाक्यतया लं: सि औ जसित्यादिना लिङ्गार्थादिषु प्रथमा स्यात् एवं कर्मक्रियेत्यादिसूत्रैकवाक्यतया लं: सि औ जसित्यादिना कर्मादिषु द्वितीया स्यादिति। एवमन्यत्र। लिङ्गात् परप्रयोगाभावे तु लिङ्गार्थे प्रथमा स्यादित्युक्तावपि मातुःक्रोड़तः पृष्ठतो वापि स्थितो वत्सः स्तनं पिवेदिति न्यायात् कदाचित् पूर्वतः कदाचित् परतो वा स्यादिति। न च स्यादीनां प्रत्ययत्वात् परश्च इत्यनेनैव परतोत्पत्तिः सिद्धेति वाच्यम्। यतः सूत्रान्तरेण परतो विहितस्य प्रत्ययस्यैव परश्च इत्यनेन प्रत्ययसंज्ञा क्रियते स्यादीनान्तु परविधानाभावात् प्रत्ययसंज्ञैव न सिद्ध्यतीति। न च स्यादीनामिह लिङ्गात् परविधानं कारकेऽर्थविधानम् इति गौरवं कथम् एकत्रैवोभयं कर्त्तव्यमिति वाच्यं तत्र उभयविधाने अत्र रामादिलिङ्गसाधनासम्भवात् अत्रोभयविधाने तु अतिवैषम्यापत्तेः सिश्च औश्च जस्चेत्यादि द्वन्द्वः॥ ७८॥

त्रीणि त्रीणि त्रिशः संख्यैकार्थाद्वीप्सायाम् इति चशस्॥ ७९॥

## ८० । सम्बुद्धौ सिर्धिः ।

सम्बुद्धौ ७।, सि: १।, धि: १।।

**सम्बोधने विहितः सिर्धि-संज्ञः स्यात्।**

## ८१ । स्यमौजस् घिः ।

सि-अम्-औ-जस् ।१॥, घि: १।।

**सि अम् औ जस् एते घिसंज्ञाः स्युः ।**

## ८२ । शिः क्लीवे ।

शि: १।, क्लीवे ७।।

**नपुंसके शिरेव घिसंज्ञः स्यात्।**

## ८३ । दान्तवत् सभि ।

दान्तवत् ।१।, सभि ७।।

**सभयोः परयोर्दान्तवत् कार्य्यं स्यात्।**

---

अन्यत्र व्यासक्तस्य कार्य्यान्तरे नियोजनार्थमाभिमुख्यविधानं सम्बुद्धिरिति। यथा हे पुत्र पठ। हे वृक्ष हे लते हे ज्ञान इत्यादौ सम्बुद्धिरुपचारात्॥८०॥

ननु स्यमौघिरित्यनेनैवेष्टसिद्धौ स्यमौ जसिति कथमिति चेन्न सम्बोधने सेर्धिसंज्ञा विधायकतया विशेषेण धिसंज्ञाविधानेन सर्वार्थे सेर्घिसंज्ञा विधायकतया सामान्य घिसंज्ञाविधानस्य वाधितत्वात् सम्बोधने विहितस्य सेर्घिसंज्ञानुपपत्तेः। इदानीं तु सः स्वरूपग्रहणगौरवात् सम्बोधनेऽपि सेर्घि संज्ञासिद्धिः। न च सम्बोधनविहितसेर्घि संज्ञायाः किं फलम् इति वाच्यं धेर्घित्वाभावे हे मन्या इत्यत्र नमोऽप्रसङ्गात्॥ ८१॥

जस्शसोः स्थाने जातस्य शेर्घिसंज्ञाविधानान्नियमोऽयम्। नपुंसके जस्शसोः स्थाने जातः शिरेव घिसंज्ञः स्यात् न तु स्यादिरित्यर्थः। किन्तु क्लीवादन्यत्र शेरसम्भवात् शिरित्यनेनैवेष्टसिद्धौ क्लीवे इति स्पष्टार्थम्॥ ८२॥

दान्त इव दान्तवत् कार्य्यातिदेशोऽयं यथासुहिन्भ्यां सुहिन्सु इत्यत्र स्यान्त स्यारादित्यादिना सलोपे म्नोर्नुरिति नस्यानुस्वारो न स्यात्। एवं पुम्भ्यां पुंभ्याम् इत्यत्र दान्तेम इत्यनेन मस्यानुस्वारे वात्वरयपे इत्यादिनाऽनुस्वारस्य मकारो वेति। स्यादीनामनुवर्त्तमानत्वात् सभीति स्यादेरेव तेन विद्वांस इत्यादौ नस्यानुस्वारः दम्भइत्यादौ नस्यानुस्वारे जपेजम इत्यनुस्वारस्य मकारः स्यादिति। दवत्सभीत्यनेनैवेष्टसिद्धौ दान्तवदिति गौरवं ज्ञापयति सभयोः परयोर्दान्तत्वेन विहितं यत् कार्य्यं

## ८४ । भौ लिङ्गोर्हसझसोरन्ते च ।

भौ ७, लिङ्गौ: ६॥, हस्झसो: ७॥, अन्ते ७, च ।१। ।

भौ परे यत् कार्य्यं वक्ष्यते तल्लिङ्गे हसि धोर्झसि स्यात् । अन्ते च तयो: ।

## ८५ । हसोऽन्तः फः ।

हस: १।, अन्त: १।, फ: १। ।

हसो विरामस्य फसंज्ञ: स्यात् ।

## ८६ । सर्व-विश्व-उभ-उभय-भवत्-त्वत्-त्वैक-सम-सिम-नेमा: अन्यान्यतरेतर-डतर-डतमा:

---

तदेव स्यात् न तु विरामविहितमिति । तेन लिट्सु इत्यादौ झप्झसोरित्यनेन विराममाश्रित्य न जब् । एवं सभयो: परयोरन्यत्र आतिदेशिकं न स्यादिति च ज्ञापयति । अशब्दस्तेन सह वर्त्तमानास्तै: साभिरित्यत्र अकारस्य स्थानिवत्त्वाभावान्न ऐस् सासुइत्यत्र व्वेस्भ्ये इति एकारो न स्यात् ॥ ८३ ॥

यत्कार्य्यं भौ परे स्यादिति वक्तव्यं तत्कार्य्यं लिङ्गस्य हसि विरामे च, धातोर्झसि विरामे च स्यादिति परिभाषितम् । हस् इह स्यादेरेव । तेन दिशि भवं दिश्यमित्यादौ शङ्कृजेत्यादिभि: षडादिर्न स्यात् । लिङ्गस्य यथा लिड्भ्यां लिट्सु लिट्, लिड्, लिहधातोर्यथा लेढि अलिचत् अलेट् अलेड् एषु ह्रोढोभाविति हस्य ढ: ॥८४॥

हस इह स्यादेरेव धोर्मोन:फम्वौत्यत्र फग्रहणेनैवेष्टसिद्धौ मवयो: पृथक् ग्रहणात् । तेन दृष्टं दृष्टिरित्यादौ षोड़:फे इति न स्यात् । हस: फसंज्ञाफलन्तु पयोभ्यां पय:सु इत्यादौ विसर्ग: । लिड्भ्याम् इत्यादौ ड: प्रशान्भ्यामित्यादौ न: सुहिन्भ्यामित्यादौ स्यान्तस्याराल्लुप् राजभ्यां पञ्चानामित्यादौ न लुप् इत्यादि । अन्तो विराम: परवर्णाभाव इति यावत् । स तु लिङ्गप्रकरणे धातुप्रकरणे च ग्राह्य: । यथा षट् अलिट् अत्र षोड़:फे । राम: भवाम: अत्र सोर्वि:फे ॥ ८५ ॥

अन्यादि त्यदादि पूर्वादीनां विशेषकार्य्यार्थं पृथक् पदम् । सर्वेषां बुद्धिस्थानां नाम सर्वनाम तदेकदेशग्रहणात् स्विर्दन्त्यादि: । भवत्शब्दो युष्मदर्थ: । त्वत् त्व इावन्यार्थौ त्वदिति शब्द: कैश्चिन्न मन्यते । एकशब्दो यदा संख्यावाची तदा एकवचनान्त एव । यदा तु "एके मुख्यान्यकेवला:" इत्यमरोक्त मुख्यादिवाची तदा द्विवचनो

**त्यद्-तद्-यद्-एतदिदमदः किंद्वास्मद्-युष्मदः**
**पूर्व-परावरदक्षिणोत्तरापराधरान्तरस्वाः स्निः ।**

सर्व-नेमाः १।॥, अन्य-डतमाः १।॥, त्यद्-युष्मदः १।॥, पूर्व-स्वाः १।॥, स्निः १। ।

**द्वभेदो गणभेदार्थः । एते पञ्चत्रिंशच्छब्दाः स्निसंज्ञाः स्युः ।**

**समोऽतुल्ये व्यवस्थायां पूर्वाद्योऽवान्तरोऽपुरि ।**
**वहिर्योगोपसंव्याने स्वस्त्वज्ञातिधनाभिधः ॥**

---

बहुवचनान्तोऽपि । "नेमः कालेऽवधौ खण्डे प्रकारे कैतवेऽपि च" इति मेदिनिः । नेमः सर्वार्थ इति सोपद्माः डतरडतमौ प्रत्ययौ तेन तदन्तानां कतर कतम यतर यतम ततर ततम एकतर एकतम अन्यतर अन्यतम इति दशानां ग्रहणम् । किञ्च अन्यतरस्य डतरान्तत्वेनैव प्राप्तौ पुनर्ग्रहणन्तु अन्यतमस्य अन्यादित्वनिरासार्थं तेन अन्यतमं कुलमित्यत्र तोऽन्यादेरिति तकारो न स्यात् । अन्यतमस्य स्निसंज्ञैव नास्तीति क्रमदीश्वरः । उभ भवत् त्वत् त्व इति चतुर्णां स्निसंज्ञाफलन्तु त्यादिष्व्यासेत्यादिना अकि उभकौ भवत्कौ त्वत्कौ त्वकौ । एवं उभावञ्चतीति क्विपि स्निविष्वग्देव-स्येति टेरद्रौ उभद्र्याङ् तथा भवद्र्याङ् त्वद्र्याङ् । एवञ्च पुंवत्सेरिति पुंवद्भावे उभय्योः स्त्रियोः पतिः उभपतिरित्यादि । अर्थविशेषे नियमयति समोऽतुल्ये इत्यादि "सर्वसाधुसमानेषु समं स्यादभिधेयवत्" इति कोषः । समोऽतुल्ये स्निसंज्ञः सकले साधौ च वाच्ये इत्यर्थः । पूर्वाद्यो व्यवस्थायां स्निसंज्ञः । व्यवस्था तु स्वाभिधेया-पेक्षोऽवधिनियमः । अस्यार्थः अवधिः सीमा अवधेर्नियमः अवधिनियमः स कीदृशः स्वाभिधेयापेक्षः । स्वस्य पूर्वादेर्योऽभिधेयो वाच्यस्तमपेक्षत इति स्वाभिधेयापेक्षः पूर्वा-द्यधरपर्य्यन्तानां सप्तानां स्वभाववाच्या दिग्देशकालाः । यथा पूर्वस्य देशस्य यत् पूर्वत्वं तदवश्यं परदेशमवधिमपेक्षते एवं परस्य देशस्य यत्परत्वं तदवश्यं पूर्वदेशमवधि-मपेक्षते इति । दिग्देशकालेषु वाच्येषु पूर्वादयः सप्त स्निसंज्ञाः स्युरिति निष्कर्षः । दक्षिणाय गाथकाय देहीत्यत्र दक्षिणाय प्रवीणाय इत्यर्थः । उत्तराय कुरवे देही-त्यत्र उत्तरशब्दस्य संज्ञारूपेण कुरुषु प्रवृत्तत्वात् न गौण्याख्येत्यादिना स्निसंज्ञानि-षेधः । अत्र पूर्वाद्यगणे अन्तरः अपुरि पूर्भिन्ने वहिर्योगे वहिःस्थितपदार्थे वाच्ये उपसंव्याने परिधानवस्त्रे च वाच्ये स्निसंज्ञः । तथाच "अन्तरीयोपसंव्यानपरि-धानान्यधोऽंशुके" इत्यमरः । स्वस्तु अज्ञातिधनाभिधः स्निसंज्ञः स्यात् । ज्ञातिश्च धनञ्च ज्ञातिधने ते अभिदधाति कथयतीति ज्ञातिधनाभिधः न ज्ञातिधनाभिधः

## ८७। न गौणाख्या चत्वीसासे।

न ।१।, गौणाख्याचत्वीसासे ७। ।

गौणत्वे, संज्ञायां, चे, त्वा: से असे च, ते स्विसंज्ञा न स्यु:।

## ८८। चे जसि वा।

चे ७।, जसि ७।, वा ।१। ।

चे ते स्विसंज्ञा वा स्युर्जसि परे।

## ८९। पूर्वाद्यल्प-प्रथम-चरम-तयायार्द्ध-कतिपय-नेमा:।

१।।। ।

एते सप्तदश शब्दा: स्विसंज्ञा वा स्युर्जसि परे।

## ९०। तीयो ङिति।

तीय: १।, ङिति ७। ।

तीयान्त: शब्द: स्विसंज्ञ: स्याद् वा ङिति परे।

---

अज्ञातिधनाभिध:। स्वशब्दो ज्ञातौ धने च वाच्ये स्विसंज्ञो न स्यात् आत्मनि आत्मीये च वाच्ये स्विसंज्ञ: स्यात् इत्यर्थ:। तथाच "स्वो ज्ञातावात्मनि स्वं त्रिष्वात्मीये स्वोऽस्त्रियां धने" इत्यमर:॥ ८६॥

गुणमप्रधानं तस्य भाव: गौणम्। स: समास:। सश्च असश्च सासौ त्वा: सासौ त्वीसासौ तृतीयातत्पुरुषस्तद्योगवाक्यञ्चेत्यर्थ:। गौणञ्च आख्या च चश्च त्वीसासौ च इति तस्मिन्। अत्र द्वन्द्वसमासे कृते एव स्विसंज्ञानिषेधो न तु क्रियमाणे। तेन पूर्वा च पश्चिमा चेति वाक्ये स्विसंज्ञायां पुंवत् स्वेरिति पुंवद्भावे पूर्वपश्चिमे इति॥ ८७॥

चे ते इति चे द्वन्द्वसमासे ते सर्वादय:॥ ८८॥

पूर्वादयो नव अन्ये अष्ट अल्पादय:। तयायौ प्रत्ययौ तेन द्वितय द्वय इत्यादि॥ ८९॥

तीय: प्रत्यय: तेन द्वितीयस्तृतीयश्चेति। तीयान्तस्य अल्पादीनाञ्च गौणत्वे न गौणाख्येति निषेधात् अतिद्वितीयाय अत्यल्पाय एवमेव जौमरा:॥ ९०॥

## ९१। पूर्वोऽन्त्यादुङ्।

पूर्वः १।, अन्त्यात् ५।, उङ् ।१।।

अन्त्याद्वर्णात् पूर्वो वर्ण उङ्-संज्ञः स्यात्।

## ९२। अन्त्याजादिष्टिः।

अन्त्याजादिः १।, टिः १।।

अन्त्यो योऽच् तदादिवर्णष्टिसंज्ञः स्यात्।

## ९३। लुकि न तत्र।

लुकि ७।, न ।१।, तत्र ७।।

लुगिति लोपे कृते यो लुक्तस्मिन् परे यत् कार्य्यं तत् न स्यात्।

---

भिन्नविषयत्वात् पूर्वेषामनुवृत्त्यभावे अस्य नित्यत्वम् ॥ ९१ ॥

अन्ते भवः अन्त्यः अन्त्यश्चासौ अच्चेति अन्त्याच् स आदिर्यस्य इति तद्गुणसंविज्ञान-बहुव्रीहिः। यथा भो वटो भिक्षामट यदि पश्यसि गाश्चानय इत्युक्तौ यथा भिक्षायां प्राधान्यं यदि गौर्द्दृश्यते तदा तस्याप्यानयनं अन्वाचयशिष्टं बुध्यते तथा-त्रापि अन्त्याचष्टिः स्यात्। तत्परवर्णे सति अन्त्याजादिष्टिः स्यादित्यर्थः। अथवा अन्त्याच्च आदिश्च अन्त्याजादिः सूत्रत्वात् पुंस्त्वम्। षृ‚ ण इत्यत्र अतद्गुणशब्देन यथा लक्षणया अतद्गुणस्थिताः षकाररेफऋवर्णा उच्यन्ते तथात्रापि आदिशब्देन अन्त्याचः सम्बन्धात् तद्गुणसंविज्ञान-बहुव्रीहौ अन्त्याजादिवर्णा उच्यन्ते। तेनाजन्तानामन्त्याचष्टिसंज्ञकः स्यात्। हसन्तानान्तु अन्त्याजादिवर्णष्टिसंज्ञकः स्यात् इत्यर्थः ॥९२॥

लुञ्चनं लुक् क्विपि नलोपे न्यङ्क्वादित्वाच्चकारस्य ककारे लुक्शब्दः। ननु कति घटा इत्यत्र डतिसंख्याभ्यो जस्शसोर्लुगिति तदादिविधेर्निषेधादेव णुर्घिनसित्यादिना गुणस्याप्राप्तौ सर्वत्र लुग्विधानेनैवेष्टसिद्धौ एतत् सूत्रं व्यर्थेति चेन्न दण्डी चासौ पुरुषश्चेति दण्डिपुरुष इत्यत्र ङ्योर्लुक्त्ये च इति सेर्लुपि तदादिविधित्वान्नलोपानुपपत्तेः। आदिविधिभिन्नत्वात् हनपूषार्य्यमेन इत्यादिना दीर्घापत्तेश्च। एवं पय इत्यत्र स्यमोर्लुगिति सेर्लुपि आदिविधित्वात् सस्य विसर्गानुपपत्तेः। आदिविधिभिन्नत्वात् अत्वसोर्धोरित्यादिना दीर्घापत्तेश्च ॥ ९३ ॥

## ९४। स्वरा दि-नि-चित्त्यं व्यम्।

स्वरादि-नि-चित्त्य' १।, व्यम् १।।

स्वरादिर्गणो निश्चकारितस्त्याश्च व्यसंज्ञाः स्युः।

## ९५। हसोऽनन्तरः स्यः।

हस: १।, अनन्तर: १।, स्य: १।।

अचानन्तरितो हसः स्य-संज्ञः स्यात्।

## ९६। यूत् स्त्र्येव दी।

यूत् ।१।, स्त्री ।१।, एव ।१।, दी ।१।।

ईदूदन्तो नित्यस्त्रीलिङ्गो दी-संज्ञः स्यात्।

---

स्वरादिर्यस्य स स्वरादिराकृतिगणः। निश्चादिर्गणो निश्च। निरिति नि-संज्ञा पठिताः शब्दाः निसंज्ञाभावेऽपि व्यसंज्ञा बोध्या। तेन राजानमतिक्रान्ता अतिराजी अत अतिरतिक्रमार्थे निसंज्ञाभावेऽपि व्यसंज्ञायां व्यंपूर्वमिति पूर्वनिपातः। चकारितः प्रत्ययाश्च विद्युत् चसात् चकृत्वस् सुचतरां चतमां चशस्। च्विक्ताचडाच धाचौच ताच थाचौ चतुम् च्णमौ। षोड़शैते चकारितः प्रत्यया गदिता इह। स्वरादिश्च निश्च चित्त्यश्चेति समाहारः एते व्यसंज्ञाः स्युरित्यर्थः॥ ९४॥

नास्ति अन्तरं व्यवधानं यस्य सोऽनन्तरः सजातीयभिन्नेन अचाव्यवहित इत्यर्थः॥९५॥

ईश्च ऊश्चेति समाहारे सूत्रत्वात् क्लीवत्वाभावे ह्रस्वो न स्यात्। ततः स्वार्थ-प्रत्ययस्य तकारस्य प्रत्येकेन सम्बन्धः। न च समासाभावात् पृथक् पदत्वाभावाच्च कथं सम्बन्ध इति वाच्यं पुंसः सन्निति नणट्टङ्श्चकन्नित्यादेरनुबन्धानां पूर्वसम्बन्ध-सिद्धत्वात्। अथवा त इति तकारानुबन्ध उपचारात्। ततो यूश्चासौ तश्चेति यूत्। एवं सर्वत्र। यस्मिन्नर्थे यद्रूपेण स्त्रीलिङ्गशब्दस्तस्मिन्नेवार्थे तद्रूपेणैव यदि लिङ्गान्तरं न भजति तदा नित्यस्त्रिलिङ्गः। तेन गौरशब्दस्य पुंस्त्वेऽपि गौरीशब्दस्य नित्यस्त्रीलिङ्गत्वम्। नदीसंज्ञाकार्य्यं यथा हे लक्ष्मि हे वधु लक्ष्म्यै वध्वै इत्यादि। पाक्षिकस्त्रीलिङ्गस्य तु लक्ष्मीमतिक्रान्ता अतिलक्ष्मी. हे अतिलक्ष्मीः दुर्गे अति-लक्ष्म्यै दुर्गायै नम इत्यादि। पुंसि तु हे बहुप्रेयसी कृष्ण बहुप्रेयस्ये कृष्णाय नमः हे अतिलक्ष्मीः लक्ष्मीर्भूप अतिलक्ष्म्यै विप्राय धनं देहि बहुप्रेयस्ये कृष्णाय नमः अतिलक्ष्म्यै राज्ञे स्वस्ति इत्यादि सम्मतम्। भाष्यकार-क्रमदीश्वरौ तु प्राक्प्राप्त।

## ९७। नास्त्रीयुवः ।

न ।१।, अस्त्री ।१।, इयुवः ६। ।

इयुवस्थानावीदूतौ दीसंज्ञौ न स्तः, न तु स्त्री ।

## ९८। वामि ।

वा ।१।, आमि ७। ।

इयुव ईदूच्च दीसंज्ञो वा स्यात् आमि परे, न तु स्त्री ।

## ९९। स्त्रीयुच्च ङिति ।

स्त्री ।१।, युत् ।१।, च ।१।, ङिति ७। ।

स्त्रीलिङ्ग इदुदन्तौ नित्यस्त्रीलिङ्ग इयुव ईदूच्च दीसंज्ञः स्यात् वा ङिति परे, न तु स्त्री ।

## १००। अघ्यच् ताच्येप् पिः ।

अघ्यच् ताच्येप् ।१। पिः १। ।

---

नदीसंज्ञा पश्चात् पुंस्त्वयोगेऽपि न निवर्त्तते इति मन्यमानौ हे अतिलक्ष्मि विप्र हे बहुप्रेयसि कृष्ण हे अतिलक्ष्मीभूप अतिलक्ष्म्यै विप्राय धनं देहि अतिलक्ष्म्यै राज्ञे स्वस्ति इत्युदाहरतः। तन्मतैकवाक्यत्वे तु एव-शब्दस्य काकाक्षिगोलकन्यायादुभयत्र सम्बन्धः तेन स्त्रीशब्देन सम्बन्धान्नित्यस्त्रीलिङ्गो लभ्यते दीशब्देन सम्बन्धात् नित्य-दीसंज्ञो लभ्यते। ततश्च दीसंज्ञानिवृत्तिर्नास्तीत्यर्थः ॥ ९६ ॥

इयुवस्थानाविति स्थानमस्ति ययोः तौ स्थानौ अर्श आदित्वादः। हे श्रीः हे भूः अत्र नदीसंज्ञाभावात् न ह्रस्वः। अस्त्रीति किं ? हे स्त्रि ॥ ९७ ॥

श्रीणां श्रियां भूणां भ्रुवाम्। अस्त्रीति किं ? स्त्रीणामिति नित्यम् ॥ ९८ ॥

इश्च उश्चेति यः पश्चात्तकारानुबन्धस्य प्रत्येकेन सम्बन्धः स्त्रियां स्त्रीलिङ्गे युत् स्त्रीयुत्। नित्यस्त्रीत्वानुवृत्तौ स्त्रीशब्दोपादानं नित्यस्त्रीलिङ्ग-पाक्षिकस्त्रीलिङ्गयोः प्राप्त्यर्थम्। यथा नित्यस्त्रीलिङ्गस्य मत्यै मतये धेन्वै धेनवे। पाक्षिकस्त्रीलिङ्गस्य सुमत्यै सुमतये स्त्रियै सुधेन्वै सुधेनवे स्त्रियै। चकारात् नित्यस्त्रीलिङ्गावियुवस्थानावीदूतौ च। यथा श्रियै श्रिये भ्रुवै भ्रुवे इत्यादि। अस्त्रीति किं ? स्त्रियै इत्यादि नित्यम् ॥९९॥

नास्ति घिर्यत्र सोऽघिः अघिरच् अघ्यच् अश्च यश्च अचौ तौ तद्धिते च तौ

घिवर्ज-स्यादेरच् तसंज्ञावच्यकारावीप् च एते पि-संज्ञाः स्युः ।

## १०१ । संख्यावड्डत्यतुबहुगणा नेपि ।

संख्यावत् ।१।, डति अतुबहुगणाः १।३।, न ।१।, ईपि ७। ।

डत्यतुबहुगणानां संख्यावत् कार्य्यं स्यात्, न त्वीपि ।

इति संज्ञापादः ।

---

# द्वितीयः पादः ।

## अजन्तपुंलिङ्गशब्दः ।

रामस् इति स्थिते ।

## १०२ । स्रोर्विः फे ।

स्रोः ६।२।, विः १।१।, फे ७। ।

सकार-रेफयोर्विः स्यात् फे परे । रामः । औ-जसोः सन्धिः ।
रामौ रामाः ।

---

अच्चौ चेति ताच्चौ । ततो अच्च ताच्चौ च ईप् चेति । "यादृग्जातीयस्य विप्रतिषेधो विधिरपि तादृग्जातीयस्येति न्यायादाह घिवर्जस्यादेरजिति" भिन्नविषयत्वात् पूर्वेषामनुवृत्त्यभावेऽस्य नित्यत्वम् ॥ १०० ॥

संख्या इव संख्यावत् । डत्यतुप्रत्ययौ तेन तदन्ताः कति यति तति यावत्तावदेतावत्कियदियन्तः । कार्य्यन्तु कतिकृत्वः कति कति कतिशः इत्यादि । ईपीति विषयसप्तमीयम् । तेन ईपि कर्त्तव्ये संख्यावन्न स्युरित्यर्थः । तथाच यावती बह्वीत्यादौ न मन् संख्याखसजादेरित्यनेन ईपो निषेधो न स्यादिति ॥ १०१ ॥

इति संज्ञापादः ।

स्वान्पय तेजस्वी रजस्वान् इत्यादौ सकारस्य विसर्गनिषेधाय नदं तसौ त्वर्थे

## १०३ । स्वदीभ्यां ध्यम्शसादेर्लोपः ।

स्वदीभ्यां ५॥, धि-अम्-शसादेः ६।, लोपः १। ।

**स्वात् दीसंज्ञकाच्च परस्य धेरम्शसादेश्च लोपः स्यात् । हे राम रामं रामौ ।**

---

चेत्यनेन सान्तस्य पदसंज्ञानिषेधो ज्ञापयति अदान्ते सोर्विसर्गो न स्यादिति । तेन दान्ते स्थितयोः सकाररेफयोः फे परे विः स्यादित्यर्थः । रामः पयः गौः भवाव: विदन्मतौ अवेः । स्पर्धश्चो अपास्याः दान्तवत् सभीति दान्तत्वे पयोभ्यां पयःसु इत्यादि । एवं सति दान्तेविधानेनैवेष्टसिद्धौ फग्रहणं ज्ञापकसिद्धमनित्यमिति न्यायाददान्तेऽपि स्यादीयहसपरत्वात् गीस्तः धूस्त इत्यादि सिद्ध्यर्थम् । क्वचित् दान्तेऽपि न स्यात् ॥ १०२ ॥

अम् च शस् च अम्शसौ तयोरादिः अमशसादिः धिश्च अमशसादिश्चेति तस्य । अत्र शीग्रहणं अम्शसोरादिलोपार्थमेव । हे लक्ष्मि हे वधु इत्यादि सुभ्रूदीत्यादिना ह्रस्वे कृते ह्रस्वादेव धिलोपसिद्धेः । प्राप्त इः कामो येन स प्राप्तेः दृष्टः उः शिवो येन सदृष्टोः इत्येतयोस्तु हे प्राप्ते हे दृष्टो इति स्थानिवत्त्वेन ह्रस्वपरत्वात् धिलोपः किञ्च दीस्वात्ध्यम्शसादेर्लोप इत्यनेनैवेष्टसिद्धौ स्वदीभ्यामिति गौरवं कथं क्वचिदन्यतोऽपि धेर्लोपार्थम् । तेन गन्धर्ववाचकस्य ते इति शब्दस्य हे ते इति एवं प्राप्ता ईर्लक्ष्मीर्येन अस्यापि हेप्राप्ते इति । ऐजवेस्यूतौ क्विपि जौर्घोऽन्त्य इति दीर्घे कृत उर्येन सकृतो अस्यापि हे कृतो इति ; अत्र रामानन्दकाशीश्वरौ तु एङोऽपि धेर्लोप इति सूत्रं कृत्वा हेप्राप्ते इत्यादेर्घिलोपमाहतुः । एवं तेवृङ देवृङ इत्यादीनां क्विपि य्वोर्लोप इति वलोपे हेते हेदे हेसे इत्यादावपि धेर्लोपा इति काशीश्वरः । वस्तुतस्तु तेवृङ्-प्रभृतीनां क्विपि कृते क्विपनिमित्ततया विशेषेण ऊ: शूटावणोजस्क्वावित्यादिना ऊटि सन्धौ हेतयूः हेदयूः हेसयूः इत्यादिकमेव स्यात् । एवञ्च स्वदीभ्यां धिद्वतो लोप इति कृते द्वितीयाया अत् अकारः द्वात् धिश्च द्वश्च द्वयोः समाहारे धिद्वत् तस्य इति व्याख्यानेनैवेष्टसिद्धौ ध्यम्शसादेरिति गौरवं अजरं कुलमित्यत्र अमादेशस्याप्यकारलोपार्थम् । धातारं पितरम् इत्यादौ "लोपस्वरादेशयोः स्वरादेशविधिर्बलवानिति" न्यायादादौ वृद्धौ गुणे च अमादिलोपो न स्यात् । अत्र धौ मातृकस्य मातः पुत्रस्तुतौ इति वक्तव्यम् । हे गौरीमातः कार्त्तिकेय । धौ किं ? गौरीमातृको गणेशः । स्तुतौ किं ? अरे दासीमातृक । पुत्रस्य किं ? हे गङ्गामातृके कन्ये ॥१०३॥

## १०४। शस्नामि घंः।

शस्नामि ७।, घंः १।।

शसि नामि च परे स्वस्य घंः स्यात्।

## १०५। पुंसि तु शस् न।

पुंसि ७।, तु ।१।, शस् ।१।, न ।१।।

स्वात् परः शस् न स्यात् पुंलिङ्गे। रामान्।

## १०६। टाभिस्ङेङसिङसोसामिनैसयात् स्ययोसोऽतः।

टा—ओसाम् ६।।।, इन्—योस: १।।।, अत: ५।।

---

स्वादिरनुवृत्तावपि दौसंज्ञस्य दीर्घान्तत्वेन दीर्घकरणं व्यर्थेति स्यानुवृत्तिः इत्यत आह स्वस्येति। स्वसम्बन्धेन नकारेण सहित आम् नाम्। तेन यज्वनां दण्डिनां इत्यादौ न प्रसङ्गः। किञ्च आमो ग्रहणेनैवेष्टसिद्धौ नामीतिकृतं आगमादेशयोरागमो विधिर्बलवानिति न्यायस्वीकारार्थम्। तेन क्रोष्टूनामित्यत्र आदौ नुमि तृणादेशो न स्यात्। एवं प्रकृतेऽदीर्घे दीर्घस्य स्थानिवत्त्वेन ङसपरत्वात् यथा शसो नकारविधानं तथा आमो नुमागमो न स्यादिति ज्ञापनार्थञ्च नामीति कृतम्। अतएव अ: विष्णुः सह एन वर्त्तते यः स सा: विगत इर्यस्मात् सवी: तेषां सां व्यां इति ॥ १०४ ॥

वृषणादिमत्त्वं पुंस्त्वं इ।त चेत् शब्दे तदभावादसम्भवः। वृषणादिमद्वाचकत्वं पुंस्त्वमिति चेत् वृक्षादौ तदभावादव्याप्तिः। एवं योन्यादिमद्वाचकत्वं स्त्रीत्वमिति-चेत्तटादौ तदभावादव्याप्तिः। एवञ्च वृषणादिमद्योन्यादिमद्भिन्नवाचकत्वं क्लीवत्व-मिति चेत् कलत्रादौ तदभावादव्याप्तिः। पुंस्त्वमिह शब्दानां शिष्टकृतपुंलिङ्ग-परिभाषाविषयत्वं न तु वृषणादिमत्त्वम्। तथाच "शब्दसंस्कारसिद्ध्यर्थमुपायाः परिकल्पिताः। सर्ववस्तुगता धर्माः शास्त्रे पुंस्त्वादयस्त्रयः। ये तु योन्यादिसम्बन्धाः प्राणिजातीयगोचराः। न तेऽभ्युपायाः सिद्ध्यन्ति कलत्रादितटादिषु।" इति प्राञ्चः। एतेन अर्थस्य प्रकृतिविशेषवाच्यशब्दसंस्कारानुगुणधर्मान्तरं पुंस्त्वादि। रामा-नित्यत्र आदौ दीर्घं कृत्वा स्थानिवत्त्वेन शसो नकारविधानादन्यत्राप्येवं बोध्यम्। तेन सान् वीन् इत्यादि सिद्धम् ॥ १०५ ॥

अकारात् परेषामेषां स्थाने इन ऐस् अय आत् स्य योस् एते क्रमात् स्युः।

**१०७। षृर्णोऽदान्ते नोऽवकुप्वन्तरेऽप्यतद्दा-त्त्वपक्वयुवाह्नः ससेप्स्यादेर्नैकाचकोस्तु वा।**

षृः ५।, णः १।, अदान्ते ७।, नः ६।, अवकुप्वन्तरे ७।, अपि।१।, अतद्दात् ५।, तु।१।, अपक्वयुवाह्नः ६।, ससेप्स्यादेः ६।, नैकाचकोः ६।, तु।१।, वा।१।।

षकारात् रेफात् ऋवर्णाच्च परस्य अदान्ते स्थितस्य नस्य णः स्यात्, अव कवर्ग-पवर्ग-व्यवधानेऽपि। यत्र दे नस्ततोऽन्यत्र

---

त्वन्तत्वादत्र पुंसीति नानुवर्त्तते। तेन क्लीवेऽपि ज्ञानेन इत्यादि। ऐस् आत् करणं निर्जरसैः निर्जरसादित्येतदर्थम्॥ १०६॥

षच रच ऋश्च षृ, तस्मात् षृः। सूत्रत्वात् पुंस्त्वं एवं सर्वत्र नदान्तोऽदान्तः तस्मिन्। अवश्च कुश्च पुश्च अवकुपवः तैरन्तरं व्यवधानं अवकुप्वन्तरं तस्मिन्। तच्च तत् दश्चेति तद्दं न तद्दं तस्मात्। गङ्गायां घोषः प्रतिवसतीत्यत्र गङ्गायां वसतेरसम्भवात् गङ्गाशब्देन यथा लक्षणया गङ्गातीरमुच्यते तथात्रापि अतद्द-शब्देन लक्षणया अतद्दस्थिताः षकाररेफऋवर्णा उच्यन्ते। इत्यत आह यत्र दे नस्ततोऽन्यत्र गतादिति। अन्यथा पदावयववर्णानां पदसंज्ञाभावात् नकारवत् पदस्यावयववर्णानां षकाररेफऋवर्णानामपि अतत्पदत्वेऽनर्थापत्तिः। पक्वश्च युवा च अहश्च पक्वयुवाहानि न विद्यन्ते पक्वयुवाहानि यत्र पक्वयुवाह्नां नकारो यन्नकार-मध्ये सोऽपक्वयुवाहः तस्य नकारस्य अपक्वयुवाह्नः। अत्र रामानन्दकाशीश्वरौ तु सादीप् सेप्सेप्च स्यादिश्च सेप्स्यादी ताभ्यां सह वर्त्तमानः ससेप्स्यादिः इत्या-हतुः। तद्धेयम्। स्यादिना सह समासस्य सम्बन्धाभावे शरो वेगेन गच्छतीत्यादा-वपि णत्वापत्तेः। वस्तुतस्तु ईप्च स्यादिश्च ईप्स्यादी सात् समासात् परौ ईप्-स्यादी सहसेप्स्यादिभ्यां वर्त्तते योऽसौ ससेप्स्यादिः। तस्य नकारस्य ससेप्-स्यादेः। एकोऽच् यस्य स एकाच् कुः कवर्गवान् उपचारात् एकाच्च कुश्चेति एकाचकुः न एकाचकुः एकाचकवर्गवच्छब्दसम्बन्धी नैकाचकुः तस्य नकारस्य नैकाचकोः। अयमर्थः। षकाररेफऋवर्णेभ्यः परस्यापदान्ते स्थितस्य नस्य णः स्यात्। अवकवर्गपवर्गव्यवधानेऽपि अपिशब्दादव्यवधाने अवकवर्गपवर्गभिन्नवर्ण-

गतात्तु निमित्तात् परस्य, साद्विहितेनैषा स्यादिना च सहितस्य, पक्कादिवर्जितस्य, स्यात्। तस्यैवैकाचः सकवर्गाद्वान्यस्य, वा स्यात्। रामेण।

---

व्यवधानाभावे सतीत्यर्थः। यथा पृष्णां चतुर्णां नृणां नृणां अत्र इह प्रथमवकारान्तः। अन्यथा गरलेन चारुत्रेन प्राणेन चारुनयनेन जर्भनं ट्टढेन वर्डनं वर्जनं क्रीडनम् अर्डनम् इत्यादावपि णत्वापत्तेः। अवकुप्वन्तरे यथा चरणं प्राणं हरिणा क्षीणः तरुणः पूर्णां भरेण गोपणं स्वैणः रौप्येण बर्हेण कार्य्येण श्रवणं अर्केण मूर्खेण गर्गेण अर्घेण मङ्गेण सूर्पेण रेफेण अर्वणं दर्भेण धर्मेण इत्यादि। यत्र देन इत्यादि। नकारवत् पदभिन्नपदस्थितात् षृ ृस्तु परस्य समासोत्तरविहितयोरीपस्याद्योरेकतरेण युक्तस्य पक्कयुवाद्यः सम्बन्धिनकारभिन्नस्य णः स्यात्। तस्यैव समासोत्तरविहितयोरीप् स्याद्योरेकतरेण युक्तस्य एकाच सकवर्गशब्दसम्बन्धिनकारभिन्नस्य नस्य णो वा स्यात्। उभयत्र अवकुप्वन्तरेऽपीति बोध्यम्। यथा हरिं भावयितुं शीलमस्या इति हरिभाविणी हरिभाविनी श्रीभाविणी श्रीभाविनी। पक्कवर्जनात् स्यादिसम्बन्धिनोऽपि। श्रीभावेन श्रीभावेण। समासोत्तरविहितेपोग्रहणात् हरेर्भाविनी हरिभाविनी इत्यादौ न स्यात्। एकाचसकवर्गयोस्तु हवहणौ रम्यविणा श्रीकामिणी श्रीकामेण। पक्कादेस्तु गुरुपक्केन चारयूना दीर्घाङ्गा। यत्र लिङ्गद्वयस्य समासस्तत्रैव ससेप्स्यादेरन्यस्य नस्य णत्वं न स्यात्। यत्र तु धातुना सह प्रादेः समासस्तत्र नेयं व्यवस्था। तेन प्रणदति-प्रहणिस्यति इत्यादौ णत्वं स्यादेव। एवं नुवौ पूर्वेण सम्बन्धौ मूर्ध्यौ तु परगामिनौ। चत्वारो योगवाहाख्या णत्वकर्म्मण्यचो मताः। इति पूर्वलिखितादनुस्वारविसर्गजिह्वामूलीयोपाध्मानीयैर्व्यवधानेऽपि णत्वं न स्यात्। यथा वृंहणं उरःकायेण उर×कायेण उर⁀पेण इत्यादि। क्षुचति रञ्जयति तम्पयति तम्फयति रम्बयति रभयति इत्यादौ भस्परत्वाद्वलवतान्नोर्नुर्भसीत्यनेन आदौ नस्यानुस्वारे अपेजन्नोरित्यनेन पुनरनुस्वारस्य ञकारादिः स्यात्। क्रन्तति क्रन्दन्ति रुन्धन्ति इत्यादौ तु तथदवेषु परेषु नस्यानुस्वारे पुनरनुस्वारस्य नकारे सकृद्गतौ विप्रतिषेधौ यद्बाधितः तद्बाधित एवेति न्यायात् णत्वं न स्यादिति। किन्तु ऌट चिदा क्तः चिन्नः ञधौ चुद तुन्नः अर्द समर्णः इत्यादौ नकारे परेऽनुस्वाराभावात् पूर्वनकारस्य णत्वे ष्टुभिरित्यादिना परनकारस्यापि णत्वमिति। किन्तु भिदिर निर्भिन्नः भिदा प्रभिन्न इत्यादौ पूर्वपदस्थनिमित्तात्तु व्यस्यग्युकारेति समासे ईप्स्याद्योरेकतरेण नकारस्य सम्बन्धाभावाण्णत्वं न स्यादेव। अत्रापि णत्वमि-

त्येके। प्रयाणी'' प्रमापणीयमित्यादौ तु नोचोऽन्तरदुर्गेरित्यादिविशेषविधानाणत्वं स्यादिति। अत्र वा शब्दस्य व्यवस्थावाचित्वात् केषाञ्चित्सविधिहेत्वभावेऽपि स्यात् केषाञ्चिद्वा स्यात् केषाञ्चिणविधिहेतावपि न स्यात्। तदेवाहं विवृणोमि। पूर्वपदष्र्नाम्नि णोनोऽवकुप्वन्तरेऽपि। पूर्वपदस्थितषकाररेफऋवर्णेभ्यः परस्य नस्य णः स्यात् संज्ञायामवकवर्गपवर्गभिन्नवर्णव्यवधानाभावे सति। इत्यधिक्रियते। शूर्पणखा द्रुणसः नासिकाया नसः समासे वक्तव्यः। खरणसः नारायणः पारायणम् उत्तरायणम् अग्रणीः ग्रामणीः अक्षमूहितुं शीलमस्याः अक्षौहिणी सेना पाशकस्त्री च। अन्यत्र अक्षमिन्द्रियमूहितुं शीलमस्याः अक्षौहिनी स्त्री। नाम्नि किम्? शुष्कनखः ताम्रनखः। अवकुप्वन्तरेऽपीति किम्? त्रिलोचनः। अग्रे कोटरा सिध्रका मिश्रका शारिका पुरगाश्चो वनस्य नाम्नि तु। वनस्याग्रे अग्रेवणं सप्तम्या अलुक् कोटरावणं सिध्रकावणं मिश्रकावणं शारिकावणं पुरागावणम् अस्य दीर्घो वक्तव्यः। शराम्रकार्षपीयूक्षाखदिरप्रनिरन्तरिक्षुप्लक्षेभ्यः। एभ्यः परस्य वनस्य नस्य णः स्यात् संज्ञायामसंज्ञायाञ्च। शरवणम् आम्रवणं कार्षवणं पीयूक्षावणं खदिरवणं प्रकृष्टं वनं प्रवणं वनान्निर्गतं निर्वणं वनस्यान्तः अन्तर्वणम् इक्षुवणं प्लक्षवणम्। एभ्यः किम्? इन्द्रवनं द्वित्र्यचो वृक्षादोषधेश्चाऽतिमिरादेर्वा। द्वौ वा त्रयो वा अचो यस्य स द्वित्र्यच्। ओषध्यः फलपाकान्ता इत्यमरः। द्वित्र्यज्वृक्षात् द्वित्र्यजोषधेश्च परस्य वनस्य नस्य णः स्याद्वा न तु तिमिरादेः परस्य। शिग्रुवणं शिग्रुवनं शिरीषवणं शिरीषवनं ब्रीहिवणं ब्रीहिवनं हरिद्रावणं हरिद्रावनम्। द्वित्र्यचः किम्? पारिभद्रवनं राजमाषवनं वृक्षौषधिभ्यां किं? दूर्वावनम्। अवकुप्वन्तरेऽपीति किम्? पर्कटीवणं पर्कटीवनम्। तिमिरादेस्तु तिमिरवनम् ईरिकावनं तारिकावनं विदारीवनं भद्रिकावनम्। प्रादेर्नसस्य। प्रणसं निर्णसं दुर्णसं परिणसम्। वाह्याद्वाहनस्य। उह्यते यत् तद्वाह्यम्। निमित्तवतो-वाह्यात् परस्य वाहनस्य णः स्यात्। इक्षुवाहणं, दर्भवाहणं, शकटम्। अवकुप्वन्तरेऽपीति किम्? राजवाहनं यदा उह्यते तदैव णत्वम्। तेन स्वः शरवाहनं भविष्यतीदं शकटम् इत्यादौ न स्यात्। देशे पानस्य। पूर्वपदस्थितषकाररेफऋवर्णेभ्यः परस्य पानस्य नस्य णः स्यात् देशे वाच्ये। पीयते यत् तत्पानं कर्मण्यनट्। क्षीरं पानं येषां ते क्षीरपाणा उशीनराः सौवीरपाणा बाह्लीकाः काषायपाणा गान्धाराः। भावकरणयोरनटि वा। क्षीरपाणं क्षीरपानं क्षीरं पीयतेऽनयेति क्षीरपाणी क्षीरपानी पात्री। भावकरणयोः किम्? उष्ट्रेण पीयतेऽस्यामिति उष्ट्रपानी पात्री। त्रिचतुर्भ्यां हायनस्य वयसि नित्यम्। आभ्यां परस्य हायनस्य नस्य णः स्यान्नित्यं वयसि। त्रीणि हायनानि वयोऽस्य त्रिहायणः चतुर्हायणो वत्सः। वयसि किम्? त्रिहा-

## १०८। आ त्ति-मभवि।

अ।१।, आ।१।, त्ति-मभवि ७।।

**अकार आकारः स्यात् त्तोर्मभवेषु परेषु। रामाभ्यां रामैः रामाय रामाभ्याम्।**

---

यना शाला। वयस्तु गतपरमायुः। परमायुः प्राणधारणकालः। अन्तरीऽयनहनी-रदेशे। अन्तरः परस्य अयनस्य हनस्य नस्य णः स्यान्नतु देशे वाच्ये। अन्तरयणम् अन्तर्हणनम्। देशे तु अन्तरयनीऽन्तर्हननो देशः। गिरिनद्यादयो वा।-निपात्यन्ते। गिरिणदी गिरिनदी खर्णदी खर्नदी गिरिणद्धं गिरिनद्धं वक्र'णतम्बा वक्रनितम्बा माषीणः माषोनः वक्रणदी वक्रनदी गिरिणितम्बः गिरिनितम्बः इत्यादिराकृति-गणः। एते यथोक्तलिङ्गा एव निपात्यन्ते। तेन गिरिनद्यः वक्रनितम्बः इत्यादौ न स्यात्। पूर्वापह्नायणादि। नित्यं निपात्यते। पूर्वापह्नायणाः अपरापह्ना-यणाः अपरापह्नायनाः निर्विण्णः अध्ययने जड़ः विरक्तश्च। लवणोरसे। अन्यत्र लूयतेऽनेनेति लवनः खड्गः लुनातीति लवनः। न लपदान्तराभ्यां व्यवधाने। लवर्णेन पदान्तरेणच व्यवधाने नस्य णो नस्यात्। प्रकॢप्यमानं परिक्लृप्यमानं हरिगेहगामिनी शरवेगभावेन। पदे षात्। पदे परे यः षकारस्तस्मात् परस्य नस्य णो न स्यात्। सर्पिष्पानं निष्पानं दुष्पानम्। पदे किम्? पीतसर्पिष्केण। चुभ्नादिः। चुभ्नात्यादीनां नस्य णो न स्यात्। चुभ्नाति चुभ्नीतः तृप्नोति विष्कभ्नाति नरीनृत्यते नरिनर्त्ति नरीनर्त्ति नर्नर्त्ति परिनदनं दुर्नद्धं दुर्न्नद्धिः। संज्ञायाञ्च। प्रथम-सूत्रेण प्राप्तं णत्वं न स्यात्। यथा आचार्य्यभोगीनः हरिनन्दी गिरिनगरं शरनिर्वेशः परिनर्त्तनं परिगहनं हरिनन्दनः खर्भानुः दर्भानूपः सूत्रनटः हर्य्यग्निः शरनिवासः ऋगयनं दुर्नामा नरवाहनः नृनयनं हरिनाथ इत्यादिराकृतिगणः॥ १०७॥

अत्र अ इति लुप्तप्रथमैकं आ इति लुप्त प्रथमैकमिति रामानन्दः तद्धेयम्। व्हेस्भ्ये इत्यत्र अस्यानुवृत्त्या अवर्णप्राप्तौ उमाभिरित्यादावपि एत्वापत्तेः। वस्तुतस्तु मण्डूकप्लुताधिकारात् टाभिस् इत्यस्मादत इति पञ्चम्यन्तमपि प्रथमान्तं भूत्वानुवर्त्तते अर्थवशाद्विभक्तिविपरिणाम इति न्यायात्। मकारवकारौ त्यादेरेव स्यादावसम्भवात्। यथा भवावः भवामः। ननु राममित्यादौ कथमाकारो न स्यअकारलोप स्यात् सार्थकत्वादिति चेन्न। हरिं विष्णुमित्यादौ तस्य सार्थकत्वात्। वस्तुतस्तु भवयोः साहचर्य्यात् विभक्तेराद्यवयवमकारे परे इत्यर्थः। अतएव त्वां मामित्यादि साधनाय ङेच्छोर्मकारे कृतेऽपि सभमोष्वाङ् इत्याकारं विधास्यति॥ १०८॥

**१०८। ब्वे स्भ्ये।**

ब्वे ७।, स्भि ७।, ए: १।।

अकार एकार: स्यात् क्तौ ब्वे स्भयो: परयो:। रामेभ्य: रामात् रामाभ्यां रामेभ्य: रामस्य रामयो:।

**११०। नुमाम: स्वद्याप्संख्यार्णा:।**

नुम् ।१।, आम: ६।, स्वद्याप् संख्यार्णा: ५।।

स्वात् द्या आपो रषणान्त संख्यायाश्च परस्याम आदौ नुम् स्यात्। र्घ-णत्वे। रामाणाम्, रामे, रामयो:।

**१११। क्विलात् क्तोऽसात् स: षोऽदान्ते नुव्यन्तरेऽपि शास-वस-घस-साढ़ाश्च।**

कु-इलात् ५।, क्तव: १।, असात् ।१।, स: १।, ष: १।, अदान्ते ७।, नु-विमन्तरे ७।, अपि ।१।, शास वस घससाढ़ां ६।।।, च ।१।।

कवर्गादिलाच्च पर: क्तत: साद्दर्जो दमध्यग: सकार:

---

आदित्यनुवर्त्तते। अकारात्परयोस्त्यादेर्बहुवचनीयसभयोरसम्भवात् स्यादेरेव तयोर्ग्रहणम् ॥ १०९ ॥

उकारोऽनुबन्धस्तु प्रकृतिप्रत्ययानुपघाती आगम उदित्त्वं तस्य चिह्नमिति प्राचीनमतानुवादार्थम्। स्वमते तु प्रकृते: प्रत्ययस्य वा सम्बन्धे जायमानोऽनुपघाती य: स उदनुबन्धस्तद्भिन्नोऽपि आगम उच्यते। तेन पथिमथ्यृभुक्षामिति नम् धीटीघीष्वमिति अम् वसोरस्येति इम् यनञ्नित् क्रदिति यन् रुदाद्यस्तीति ईम् इत्यादयोऽप्यागमा:। मित्वादाम षादौ। आमि परे नकारेणैवेष्टसिद्धौ आमो-नुम् विधानं नकारस्य आमसम्बन्धित्वार्थं तेन नकारस्य स्यादीयहस्त्वात् फसंज्ञायां पञ्चानामित्यादौ नोलुप्फेधाविति नस्य लुप्। रश्च षश्च नश्चेतिर्ण संख्याचासौर्णश्चेति संख्यार्ण तत: स्वश्च दीच आपच संख्यार्ण चेति तस्मात्। यथा रामाणां हरीणां विष्णूनां पितृणां शकलृनां गौरीणां वधूनाम् उमानां चतुर्णां षण्णां पञ्चानामिति। रान्तषान्तनान्तानां मुख्यानामेव ग्रहणम्। तेन प्रियचतुरां प्रियषषां प्रियपञ्चामित्यादौ न स्यात् ॥ ११० ॥

कुश्च इलश्च क्विलं तस्मात्। नुश्च विश्च नुवी नुविभ्यामन्तरं व्यवधानं नुव्यन्तरं

शासादेश्च षः स्यात् नु-वि-व्यवधानेऽपि । एत्वषत्वे । रामेषु एवं मुकुन्दानन्दगोविन्दादयः ।

---

तस्मिन् । यथा वाक्षु प्राङ्क्षु हरिषु गौरीषु विष्णुषु वधूषु पितृषु शक्तृषु रामेषु गोषु अनैषीत् नौषु गङ्गायुषु पापव्षु चतुर्षु हलषु । कृत इति प्रत्ययादेशागमानामेकतम सम्बन्धीत्यर्थः कृतः किम् ? सृ गतौ यङि सेसीयते । असात् किम् । हरिसात् करोति घृतम् । अदान्ते किम् ? हरिः । नुव्यवधाने यथा हवींषि धनूंषि । नुरिह नुश्चयमादावित्यादिना विहितो नुश्चेव नत्वनुस्वारः । अन्यथा पुंसु इत्यादावपि षत्वापत्तेः । विव्यवधाने यथा । पेस्ट गत्यां श्रीसम्रूषकि-बधे.एभ्यः क्विपि पेःषु श्रीःषु म्रूःषु इत्यादौ सस्य विसर्गे षत्वम् । सर्पिःषु धनुःषु सजूःषु दोःषु । एषु अन्तरङ्गत्वादादौ रङो विसर्गे षत्वम् । नच निरवकाशत्वा-दादौ षत्वं ततो विसर्ग इति वाच्यं तर्हि अहःसु इत्यत्रापि षत्वापत्तेः । अतएव निरवकाशादपि अन्तरङ्गस्यैव बलवत्त्वात् टाङस्योरिनातौ बाधित्वा जरसादेश निर्जरसा निर्जरसः इति स्वयमुदाहृतम् । शासवसघसां पृथक् ग्रहणादकृतोऽपि सकारः किलात् परः षः स्यात् । यथा शिष्टः उषितः जक्षतुः । नचैषां पृथग् ग्रहणात् किलापेक्षा नास्तीतिवाच्यं शास्ति वसति घसति इत्यादावपि षत्वा-पत्तेः । साढश्च सहजङ्शक्तौ इत्यस्य ढाङ्गजवह सह इति विधानस्य सकारो-स्वाद्यादिषु इत्यनेन कृत एव पृथग् ग्रहणात् किलापेक्षा नास्ति । यथा तुराषाट् ऋतीषाट् जलाषाट् पृतनाषाट् तुराषाड्भ्यामित्यादि । साढ इति ढान्त निर्देशात् यत्र ढोढीभावित्यनेन ढः सात्तत्रैव षत्वम् । तेन तुरासाहौ इत्यादिषु न स्यात् । किञ्च तुरा ऋती पृतनापूर्वस्य साढ एव षत्वं स्यात् अन्यत्र विश्वं सहते विश्वसाट् इत्यादौ षत्वं न स्यादिति केचित् । समाहारेणैवेष्टसिद्धौ शासवसघस-साढामिति बहुवचनं गणार्थम् । तेन शासवसघसामिव क्वचिदकृतसकारोऽपि षः स्यात् । यथा यङ्लुकि चोःकोसादेरकृतोऽपि सकारः षः स्यात् सकारे परे । कुस इर्श्लेषि यङोलुकि द्वित्वादि कौविभक्तेः सिप् इसोऽप्राप्तिपक्षे खेर्मूलधातोश्च गुणोऽनेन सस्य षत्वे इभिरित्यादिना परसकारस्यापि षत्वे चोकोषिष । अत्र अकृतसकारस्य षत्वविधानसामर्थ्यात् षढोःकःसे इति को न स्यात् । अन्यथा प्रक्रियालाघवार्थं दन्त्यसकारस्य ककारमेवाकरिष्यत् । एवमेव जौमराः । एवं तुस ध्वाने तोतोषिषपेस्रपि स्रगत्यां द्वयोः पेपेषिष इत्यादि एवं सूत्रेऽदान्ते इत्युक्ता वृत्तौ द्रमध्यग इति व्याख्यानात् समासे क्वचिद्द्रमध्यगत्वेऽपि षत्वं स्यादिति सूच-

नार्थम्। तदेवाहं विवृणोमि। अग्न्यङ्गुलिभीरुभ्यः स्तुत्सङ्गस्थानानां से। एभ्यः परेषां क्रमादेषां सकारः षः स्यात् समासे। अग्निष्टुत् अङ्गुलीषङ्गः भीरुष्ठानम्। से किं अङ्गुलीसङ्गं भजते भीरुस्थानं पश्य। घोन्तादग्नेः सोमस्य। "दीर्घोऽग्नेः सोमवरुणयोर्देवताद्वन्द्वे" इति दीर्घान्तादग्नेः परस्य सोमस्य सः षः स्यात् समासे। अग्नीषोमौ। देवताद्वन्द्वे किम्? अग्निश्च इयं सोमश्च अग्नीसोमाः। ज्योतिरायुरग्निभ्यः स्तोमस्य। ज्योतिष्टोमः आयुष्टोमः अग्निष्टोमः। से किम्। ज्योतिः स्तोमं तृणानाम्। गवियुधिभ्यां स्थिरस्य। गविष्ठिरः युधिष्ठिरः। सप्तम्या अलुक्। से किम्? गवि स्थिरो भारः युधि स्थिरः शूरः। मातृपितृभ्यां स्वसुर्वातु मातुः पितुर्भ्यां। मातृपितृभ्यां परः स्वसुः सः षः स्यात् समासे। मातुः पितुरित्येताभ्यान्तु परोऽलुक्समासे वा। मातृष्वसा पितृष्वसा। मातुःष्वसा मातुःस्वसा पितुःष्वसा पितुःस्वसा। अभिनिरस्तानस्य वर्णे। अभिनिरः परस्य स्तानस्य सः षः स्याद्वर्णे। अभिनिस्तन्यत इति कर्मणि घञि अभिनिष्टानो विसर्गः। वर्णे किम्? अभिनिस्तानः। निनदीभ्यां स्नातेः कौशले। आभ्यां परस्य स्नातेः सः षः स्यात् कौशले। निष्णः निष्णातः नदीष्णः। तथाच भट्टौ "आतिथ्यनिष्णा वनवासिमुख्या इति" चारकर्मणि निष्णात इति "ततो नदीष्णान् पथिकान् गिरिज्ञानिति" च। कौशले किम्? नद्यां स्नाति नदीस्नः निस्नातस्तीर्थवारिणि। प्राद्यग्रगेस्थस्य। प्रात्परस्य स्थस्य सः षः स्याद्यग्रगे। प्रतिष्ठते इति प्रष्ठः अग्रगे किं? यवानां प्रस्थः। वेः स्त्रीनाम्नि। वेः परस्य स्तृणातेः सः षः स्यात् संज्ञायाम्। विष्टरो बृहतीछन्दः कुशमुष्ट्यादिश्च। विष्टरः पङ्क्तिछन्दः। नाम्नीति किम्? विस्तरो गृहस्य विस्तरः। दिकुपरिशमिभ्यः स्थलस्य। विष्ठलं कुष्ठलं परिष्ठलं शम्याः स्थलमिति निपातनात् ह्रस्वे शमिष्ठलम्। गोभूमिद्विविकुशङ्कुमञ्जिपुञ्जिपिव्यग्निवर्हिषः स्थस्य। गोष्ठं भूमिष्ठं द्विष्ठं विष्ठं कुष्ठं शङ्कुष्ठं मञ्जिष्ठा पुञ्जिष्ठः पिविष्ठः अग्निष्ठः वर्हिष्ठः। एभ्यः किं भुस्थः। स्थस्य किम्? गोस्थितिः। इलादेति नाम्निभात्तु वा। इलात् परस्य सः षः स्यादेकारे परे नाम्नि नत्वभात्तु वा। हरिषेणः सुषेणः वायुषेणः। एते किं? विस्रोताः। इलात् किं? विष्वक्सेनः। नाम्नि किं पृथिवीसेनः। भात्तु भरणिषेणः भरणिसेनः अत्र केकः स्व इत्यत्र वाशब्दीयव्यवस्थया ह्रस्वः। सुविनिर्दुर्भ्यः समसूत्योः। सुषमं विषमं निःषमं दुःषमम। सुषूतिः विषूतिः निःषूतिः दुःषूतिः। निर्दुर्वहिराविः प्रादुश्चतुरां कखपफेषु। निष्पतति दुष्करः वहिष्कारः आविष्कारः प्रादुष्कृतं चतुष्पथम्। निसस्तपतावनभ्यावृत्तौ। निसः सः षः स्यात्तपतौ परे न तु पौनःपुन्ये।

## ११२। सर्वेर्जस्ङेङसिङीनामिस्मैस्मात्स्मिनोऽतः।

सर्वेः ५।१, जस्ङेङसिङीनां ६।३, ई स्मै स्मात् स्मिनः १।३, अतः ५।१।

अकारान्तात् सर्वेः परेषामेषां स्थाने एते क्रमात् स्युः। सर्वे सर्वस्मै सर्वस्मात् सर्वस्मिन्।

---

निष्टपति स्वर्णं परीक्षकः सकृद्धमतीत्यर्थः। अनभ्यावृत्तौ किम्? निस्तपति स्वर्णं निर्माता पुनःपुनर्धमतीत्यर्थः। निःसुदुर्भ्यः सामसेधसन्धेः क्रमाभावः, निःषामा सुषामा दुःषामा निःषेधः सुषेधः दुःषेधः निःषन्धिः सुषन्धिः दुःषन्धिः। स्तम्भो-ऽवाद्याश्रयनिकटयोः। अवात् परः स्तम्भः सः षः स्यात् आश्रये निकटे च वाच्ये। ग्राममवष्टभ्य आस्ते अवाष्टभत् सेना निकटीभूतेत्यर्थः। अम्बष्ठादि निपात्यते। अम्बष्ठः आपष्ठः परमेष्ठः परमेष्ठी सव्येष्ठा ऋदन्तः। द्युषद्दिगविषदौ द्वैवे नृषागोष्ठं नाम्नि। सेकुष्ठः कपिष्ठलो मुनिः कपिष्ठल गोत्रं प्रतिषणात्° सूत्रं पाणिनेः। निषयः विषयः परिषयः निषितः विषितः परिषितः सुष्ठु दुष्ठु इत्यादि। परिस्थितादेर्न। परिस्थितः प्रतिस्तब्धः निस्तब्धः क्षसरः धूसरः सुस्थितिः दुःस्थितिः अभिसुषूषति इति क्विपि अतिसूनूः ईषदूनः सेतुः बहुसेतुरित्यादि+ ॥ १११ ॥

---

स्वभावतो मूर्द्धन्यषकारवन्तो यथा—

\+ पुष्पभूषण विषाण-घोषणं दुष्खपुष्कर-करीष-दुष्करम्।
अम्बरीष पुरुषोषरौषधं, वर्ष्मवर्षकलुषाणि किल्बिषम्॥
गवेषितं गोष्पदभाष्यभेषजं, हृषीकमीषद्विषुवं विभीषणः।
अमर्ष-पाषाण-पुरीष-मूषिका, निषेध-दुःषेध-मृषाभिषङ्गिणः॥

झषो मुष्कं ग्रीष्म-पृष-निकष-गण्डूष-चषकाः,
तुराषाढाषाढौ विषविषद-पायूषभिषजः।
कषाय-कुष्माण्ड-महिष-वृषणव्योषट्षदः
प्रदोषद्वेषोष्म-प्लुषद्विषनिषङ्गेषु परुषाः॥
प्रत्यूष-यूष-कष-कोष-विषाद-दोषाः
पाषण्ड-षण्ड- भष-भीष्म तुरुष्क-निष्काः।
उन्मेष-मेष-तुष-तोष-रुषोऽभिलाषाः
कल्माष माष वृष वेष तुषार घोषाः॥
ईर्ष्या वार्द्धुषिको योषिदभिषेकोमिषद्विषः।
निषेक ऐषम प्रेष्य मञ्जुषा वपुषो तृषा॥

११३ । आत् सुमामः ।

आत् ५।, सुम् ।१।, आमः ६। ।

अवर्णान्तात् सः परस्याम आदौ सुम् स्यात् । एत्वषत्वे । सर्वेषाम् । शेषं रामवत् । एवं विश्वादयोऽकारान्ताः । उभशब्दो द्वान्तः । उभौ उभौ उभाभ्यां उभाभ्यां उभाभ्यां उभयोः उभयोः । जसि नेमे नेमाः शेषं सर्ववत् ।

११४ । पूर्वादेः स्मात्स्मिनौ वा ।

पूर्वादेः ५।, स्मात् स्मिनौ १॥, वा ।१। ।

तौ । पूर्वस्मात् पूर्वात् पूर्वस्मिन् पूर्वे । शेषं नेमवत् । एवं परादयः । समोऽतुल्ये इत्याद्युक्तः ।

---

ननु जसङितामित्येवास्तु स्मिन् इत्यनेनैवेष्टसिद्धौ, ङेङसिङीनामिति गौरवं कथमितिचेन्न अतिसर्वायेत्यत्र यथा स्मै न स्यात् तथा अतिसर्वस्येत्यत्र स्यादिस्याप्रसङ्गात् । नच टाभिस् इत्यादिनैव भविष्यतीति वाच्यम् । तेनैव सिद्धे इह पुनः स्यविधानात् स्मिसंज्ञाभावेऽस्याप्राप्तौ तेनापि स्यो न स्यादिति दृढ़प्रतीतेः एकस्यङसौ एकादिर्त्यपि केचित् । तेन सर्वतो जयमिच्छन्ति पुवादिकात् पराजयमिति ॥ ११२ ॥

आत् अवर्णात् तेन सर्वासामित्यादि । उभशब्दो द्वान्त इति । एकत्व-बहुत्व-विवक्षाभावात् इति शेषः । एवं उभयशब्दात् द्विवचनं न प्रयुज्यत इति सम्प्रदायः । उभयोघटः उभये घटाः ॥ ११३ ॥

ताविति वृत्तिः । तौ ङसिङौ स्मात्स्मिनौ वा स्यातामित्यर्थः । समोऽतुल्य इत्यादि । तीर्योङितीत्यन्तानामुदाहरणान्याह । नम इत्यादि । स्वयम्भुवे नमः इत्यन्वयः ।

---

विशेषः शेमुषी शिष्यः श्लेषः श्लेष विशेषणम् ।
शिरीषं शुषिरं शष्पं शीर्षं तालव्यशादयः ॥
तालव्यशान्ताश्च गोष्पाशौ धूष्पाशौ वषदंशकः ।
इत्यादयो वशिष्ठश्च सुषमा सर्षपः क्षुषा ॥
इति पुरुषोत्तमदेवोक्ताः ।

नमः समस्मात् पूर्वस्मा अन्तरस्मा अमेधसाम्।
सुमेधसामन्तरस्मै सतां स्वस्मै स्वयम्भुवे॥
समायैषु परायैषां मुक्तयेऽर्थान्तराय च।
यदुस्वाय नमः स्वाय मल्लैर्जुष्टाय शार्ङ्गिणे॥
अतिसर्वाय सर्वाय साध्वन्यानां सखिद्विषे।
कालावराय कालेन पूर्वाय जगतो नमः॥

जसि। साध्वन्ये साध्वन्याः। जसि। अल्पे अल्पाः। शेषं रामवत्। एवं प्रथमादयः। द्वितीयस्मै द्वितीयाय द्वितीयस्मात् द्वितीयात् द्वितीयस्मिन् द्वितीये। एवं तृतीयः। निर्जरः।

---

स्वयम्भुवे कीदृशाय समस्मात् सकलात् पूर्वस्मै पूर्वकालीनाय अत्र समस्य अतुल्यार्थत्वात् पूर्वस्य कालवाचित्वे स्मै। पुनः कीदृशाय अमेधसां निर्बुद्धीनाम् अन्तरस्मै बहिः स्थिताय अत्र बहिर्योगवाचित्वे स्मै। पुनःकीदृशाय सुमेधसां पण्डितानाम् अनन्तरस्मै। परिधानवस्त्राय सदा संसर्गात् परिधानवस्त्रत्वेनोपन्यासः। अत्रोपसंव्यानवाचित्वे स्मै। पुनःकीदृशाय सतां स्वस्मै आत्मीयाय। अत्र आत्मीयवाचित्वे स्मै। प्रत्युदाहरति। समायेत्यादि। शार्ङ्गिणे नम इत्यन्वयः। शार्ङ्गिणे कीदृशाय एषु जगत्सु समाय तुल्याय जगन्मयत्वादित्यर्थः। अत्र तुल्यार्थत्वान्न स्मै। पुनःकीदृशाय एषां जगतां मध्ये पराय श्रेष्ठाय नित्यत्वादित्यर्थः। अत्र दिग्देशकालानामवाचकत्वान्न स्मै। किमर्थं नम इत्याह मुक्तये मोक्षाय अर्थान्तराय प्रयोजनान्तराय च धर्मार्थकामेभ्यश्च इत्यर्थः। अत्र बहिर्योगोपसंव्यानयोरवृत्तेर्न स्मै पुनः कीदृशाय यदुस्वाय यदूनां ज्ञातये। अत्र ज्ञातिवाचकत्वान्न स्मै। पुनः कीदृशाय स्वाय धनाय। यदूनामिति समस्तपदेन सम्बन्धः। समस्तस्यासमस्तेन नित्याकाङ्क्षया सङ्गतिरिति न्यायात्। अत्र धनवाचित्वान्न स्मै। मल्लैर्जुष्टायेति पद्यपूरकम्। पुनः कीदृशाय सर्वमतिक्रान्तोऽतिसर्वस्तस्मै अतिसर्वाय अत्र गौणत्वान्न स्मै। पुनः कीदृशाय सर्वाय सर्वसंज्ञकाय सर्वः शर्वः शिवः स्थाणुरिति सहस्रनामपाठात्। अत्र नामत्वान्न स्मै। पुनः कीदृशाय साध्वन्यानां सखिद्विषे। साधवश्च अन्ये च साध्वन्याः तेषां क्रमात् साधूनां सख्ये अन्येषामसाधूनां द्विषे शत्रवे इत्यर्थः। साध्व-

## ११५ । जरस् जराचि तु ।

जरस् ।१।, जरा ।१।, अचि ७।, तु ।१। ।

जराशब्दो जरस् वा स्यादचि परे। निर्जरसौ निर्जरसः निर्जरसं निर्जरसौ निर्जरसः निर्जरसा। केचिदादाविनाताविच्छन्ति निर्जरसिन् निर्जरसैः निर्जरसे निर्जरसः निर्जरसात् इत्यादि पक्षे हसि च रामवत्।

## ११६ । पाद-दन्त-यूष-निशा-पृतना-मासासन-सानुनासिकोदक-हृदयासृक्-यकृन्-शकृत्-

---

न्यानामिति द्वन्द्वसमासस्थितत्वान्न नुमागमः। सखिद्विषे इत्यत्र समासान्तविधेरनित्यत्वान्नैकाचुदषहोऽरित्यनेन अ-प्रत्ययो न स्यात्। पुनः कीदृशाय जगतः कालावराय कालेन कनिष्ठाय अत्र तृतीयातत्पुरुषस्थितान्न स्मै। पुनः कीदृशाय जगतः कालेन पूर्वाय अत्र तृतीयातत्पुरुषयोग्यवाक्यस्थितत्वान्न स्मै। जसि तु साध्वन्ये साध्वन्याः अल्पे अल्पाः एवं प्रथमे प्रथमाः चरमे चरमाः द्वितये द्वितयाः त्रितये त्रितयाः द्वये द्वयाः त्रये त्रयाः अर्द्धे अर्द्धाः कतिपये कतिपयाः नेमे नेमाः। कौमरास्तु उभयमप्ययान्तं मत्वा उभये उभया इत्युदाहरन्ति। उभयस्य जसि नित्यं त्रिसंज्ञेति कालापाः॥ ११४ ॥

पुंलिङ्गे सूत्रकरणाद्विकृतस्यापि जराशब्दस्य ग्रहणं एकदेशविकृतमनन्यवद्भवतीति न्यायात्। अत्र अचीति स्यादेरेव तेन निर्जरस्याधा निर्जरार्चा इत्यादौ न प्रसङ्गः। अन्तरङ्गवहिरङ्गयोरित्यादि न्यायादादौ जरसादेशे अम आदिलोपः शसो नकारोऽपि न स्यात्। तेन निर्जरसं निर्जरसः। एवं टाङेङसीनामिनायातोऽपि न स्युः। निर्जरसा निर्जरसे निर्जरसः। किञ्च आमि तु सर्वावयवादेशेन नुमागमस्य बाधितत्वात् निर्जरसामिति। अन्यथा पदां दतामित्यादयोऽपि न स्युः। केचिदित्यादि। केचित् पण्डिताः सावकाशनिरवकाशयोर्निरवकाशोविधिर्बलवानिति न्यायात् जरसादेशकरणादादौ टाङसोः स्थाने इनाताविच्छन्तीत्यर्थः। तन्मते निर्जरसिन निर्जरसादिति। किञ्च तन्मते ङे इत्यस्मिन् निर्जरसय इति भवितुमर्हतीति चिन्त्यम्। त्वन्तत्वादचीत्यस्य परत्र नानुवृत्तिः। अन्यथा परत्र तद्धिताकारप्राप्तिर्न स्यात्॥ ११५ ॥

**शीर्ष-दोषः—पद्दद्यूषन्निश्पृन्मासासन्स्नु-नसुदन्**
**हृदसन्-यकन्-शकन्-शीर्षन्-दोषणः शसादि-पौ।**

पाद-दोषः १।॥, पद्-दोषणः १।॥, शसादिपौ ७।

एषां स्थाने एते क्रमात् स्युर्वा शसादौ पौ च परे। पदः पदा पद्भ्याम् इत्यादि। दतः दता दद्भ्याम् इत्यादि।

---

पादश्च दन्तश्च यूषश्च निशा च पृतना च मासश्च आसनश्च सानुश्च नासिका च उदकञ्च हृदयञ्च असृक् च यकृच्च शकृच्च शीर्षञ्च दोष् च ते। पद् च दत् च यूषन् च निश् च पृत् च मास् च आसन् च स्नुश्च नस् च उदन् च हृद् च असन् च यकन् च शकन् च शीर्षन् च दोषन् च ते। शसादिश्च पिश्चेति तस्मिन्। शसादिसुबन्तषोड़शविभक्तिषु तद्धिताद्यकारयोरीपि चेत्यर्थः। शसादिग्रहणेन तत्पूर्वविभक्तेर्निरासात् क्लीवे औकारस्य पित्वेऽपि तत्र न स्यात्। अत्र वाशब्दस्य व्यवस्थावाचित्वात् क्वचिद्विकल्पः क्वचिन्नित्यं क्वचिन्न स्यात् क्वचित् शसादिपिभ्या-मन्यत्रापि स्यादिति। शसादौ विकल्पः स्वयमुदाहृतः। एवं सुदती सुदन्ती-त्यादौच विकल्पः। शीर्षभवः शीर्षण्यः केश इत्यादौ नित्यम्। पाद्यं पादाय वारिणीत्यादौ न स्यात्। तस्क्षुद्रयोर्नित्यं नस्। नस्तः नःक्षुद्रः। तद्धितयेऽवर्ण नगरयोः। नस्यम्। वर्णनगरयोस्तु नासिक्यो वर्णः नासिक्यं नगरम्। हिम इति हिंसार्थकाषगेषु समासे पत् पद्धिमं पद्गतिः पत्काषी पद्गां गच्छतीति पद्गः। शब्दमिश्रघोषनिष्केषु वा। पच्छब्दः पादशब्दः पन्मिश्रः पादमिश्रः पद्घोषः पादघोषः पन्निष्कः पादनिष्कः। उदन् वासपेषधिवाहनेषु नित्यम्। उदवासः उदपेषं पिनष्टि उदधिः उदवाहनः। संज्ञायाञ्च। उदमेघः उदवाहः उद-पानम्। ओदनमन्थशक्तुविन्दुवज्रभारहारविविधगाहेषु वा। उदौदनः उदकौ-दनः इत्यादि। असंयोगादौ पूर्य्ये वा। उदकुम्भः। उदककुम्भः। असंयो-गादौ किम्? उदकस्थाली। पूर्य्ये किम्? उदकपुष्पम्। क्षीरोदादिः संज्ञा-याम् निपात्यः। क्षीरोदः लवणोदः लोहितोदः इत्यादि। हृल्लासादिः निपात्यः। हृदयस्य लासो हृल्लासः हृदयं लिखतीति हृल्लेखः हृदयस्य प्रियं हृद्यं हृदयस्येदं हार्दं सुहृत् मित्रम्। अन्यत्र सुहृदयः साधुः। दुर्हृत् शत्रुः। अन्यत्र दुर्हृदयो दस्युः॥ ११६॥

## ११७ । सदाऽनोऽल्लोपोऽम्वस्यात् पौ वा त्वीङ्योः ।

सदा ।१।, अनः ६।, अत् लोपः १।, च-म्-व-स्यात् ५।, पौ ७।, वा ।१।, तु ।१।, ईङ्योः ७॥ ।

अनोऽकारस्य नित्यं लोपः स्यात् पौ परे, ईङ्योस्तु वा, न तु मस्यात् वस्याच्च परस्य । यूष्णः यूष्णा ।

## ११८ । नो लुप् फेऽधौ ।

नः ६।, लुप् ।१।, फे ७।, अधौ ७। ।

नस्य लुप् स्यात् अधौ फे परे । यूषभ्याम् इत्यादि । ङौ । यूष्णि यूषणि यूषे । मासः मासा माभ्यां इत्यादि । पक्षे घौ च रामवत् पदादयः पृथक्शब्दा इत्येके ।

## ११९ । संख्या-वि-सायाद्वाह्नोऽहन् ङौ ।

संख्या-विसायात् ५।, वा ।१।, अह्नः ६।, अहन् ।१।, ङौ ७। ।

संख्या-वि-सायेभ्यः परस्याह्न इत्यस्याहन् वा स्यात् ङौ । द्व्यह्नि द्व्यहनि द्व्यह्ने । व्यह्नि व्यहनि व्यह्ने । सायाह्नि सायाहनि सायाह्ने । विश्वपाः विश्वपौ विश्वपाः विश्वपां विश्वपौ ।

---

पूर्ववाधिकारनिवृत्त्यर्थं सदेति लुप्तप्रथमैकम् । अन्यथा, जरसादेशः पदाद्यादेशाश्च नित्यं स्युरिति । अथवा सदेति सप्तम्येकं मुख्यत्वे गौणत्वे चेत्यर्थः । तेन पूजितपुष्णः पीतयूष्णा इत्यादि । मच वश्चेति म्वः मवान्तः म्वश्चासौ स्यश्चेति म्वस्यः । न म्वस्योऽम्वस्यः तस्मात् । मवसंयोगाद्यथा कर्मणः यज्वनः । ईङ्योरिति ङिसाहचर्य्यादी इति विभक्तिसम्बन्धी एव ग्राह्यः । तेन अह्नी अहनी इत्यादि । ईपि तु नित्यं राज्ञी द्विदाम्नी ॥ ११७ ॥

धेर्वर्जनात् स्याद्युत्पत्तौ लिङ्गान्तनकारस्य ग्रहणम् । यादृग्जातीयस्य विप्रतिषेधो विधिरपि तादृग्जातीयस्येति न्यायात् । तेन अहन्नित्यादौ न प्रसङ्गः ॥११८॥

द्वयोरह्नोर्भवः विगतमहः सायञ्च तत् अहश्चेति इति विग्रहे सङ्ख्याहोराज्ञ इति षप्रत्यये सर्वैकदेशेत्यादिना अह्नादेशे एषामदन्तत्वम् ॥११९॥

१२० । धो रालोपोऽच्यघौ ।

धोः ६।, आलोपः १।, अचि ७।, अघौ ७। ।

धोराकारस्य लोपः स्यात् अघावचि परे । विश्वपः विश्वपा विश्वपाभ्याम् इत्यादि । एवं शङ्खध्मादयः । धोः किम् ? हाहाः हाहा हाहाभ्याम् इत्यादि । शेषं विश्वपावत् । हरिः ।

१२१ । युङ्घ्या-मौ यू ।

युङ्घ्याम् ५॥, औ ।१।, यू २॥ ।

इकारोकाराभ्यां पर औः क्रमादिकारोकारौ प्राप्नोति । हरी ।

१२२ । गुर्धिजस्ङित्सु ।

गुः १।, धिजस्ङित्सु ७॥ ।

इदुतो गुः स्याद्धौ जसि ङिति च परे । हरयः त्यलोपे त्यलक्षणम् । हे हरे । हरिं हरी हरीन् ।

---

तद्धिताच् यकारयोः परयोर्ययोर्लोप इत्यनेन आकारलोपस्यावश्यकत्वे धोरा लोपः पावित्यनेनैवेष्टसिद्धौ अच्यघाविति कृतं गोमायुः मायुः पायुः इत्यादौ ऊर्णादित्वात् कृते यौ परे आकारस्थित्यर्थं विश्वं पातीति विचि विश्वपाः । एवं पुण्यं तायते इति विचि यूर्लोप इति यलोपे पुण्यता इत्यादिरप्याकार लोपः हाहाशब्दस्य आकारस्तु औणादिक ङाप्रत्ययसम्बन्धी । तेन आकारलोपो न स्यात् केचित्तु हा इति शब्दं जहातीति व्युत्पत्त्या हाहाशब्दस्याकारलोपमाहुः । आवन्तभिन्नानामपि आकारलोप इति वार्त्तिकम् । अतएव आचार्य्येण तम्मतमवलम्ब्य व्याद्दनञः क्रीयर्स इत्यादौ क्राशब्दस्याप्याकारो लुप्तः ॥ १२० ॥

इश्च उश्च यू । पश्चात्तकारानुबन्धस्य प्रत्येकेन सम्बन्धात् यूतौ ताभ्याम् क्रमश्च इकारात् औः इः, उकारात् औः उः ॥ १२१ ॥

अत्र ङिति साक्षात् परे एव गुण इति बोध्यम् । अन्यथा गुरुस्तुतौ नुनुधिव इत्यत्र क्तितौ वकारस्य सम्बन्धे जातस्य इमोऽपि कित्त्वात् तस्मिन् परे यथा ग्नु ध्वोरित्युव

## १२३। टादसश्चास्त्रियान्तु ना।

टा ।१।, अदसः ५।, च ।१।, अस्त्रियां ७।, तु ।१।, ना ।१।।

इदुद्भ्यामदसश्च परष्टा ना स्यात् न तु स्त्रियाम्। हरिणा हरिभ्यां हरिभिः हरये हरिभ्यां हरिभ्यः।

## १२४। ङस्यैङो लोपः।

ङस्य ६।, एङः ५।, लोपः १।।

एङः परस्य ङसिङसोर्ङस्य लोपः स्यात्। हरेः हरिभ्यां हरिभ्यः। हरेः हर्य्योः हरीणाम्।

## १२५। युड्भ्यां ङेर्डौः।

युड्भ्यां ५॥, ङेः ६।, डौः १।।

इदुद्भ्यां परस्य ङेर्डौः स्यात् डइत्।

---

स्यात् तथा मत्ये इत्यत्र दाङितामभिति ङे इत्यस्य अमि कृते णुर्धिर्जसित्यनेन गुणाप्राप्तिः स्यात्। आदौ गुणे कृते स्थानिवत्त्वेनैव धिलोपे सिद्धे त्यलोपे त्यलक्षणमिति न्यायस्वीकारः स्थानिवदादेश इति न्यायस्य व्यभिचारसूचनार्थः। तेन सांव्यां इत्यादौ स्थानिवत्त्वाभावादामो नुमागमो न स्यात्। त्यलोपे इत्यादि। येन केनापि शब्देन प्रत्ययलोपे तत्प्रत्ययसम्बन्धि कार्य्यं स्यादिति। यथा राजा इत्यादौ सेर्लोपे दीर्घः। एवं वाचामीशो वागीश इत्यादौ क्तेर्लुक्त्ये चेति लुक्शब्देन विभक्तेर्लोपे कृते विभक्त्यन्तविहिता पदसंज्ञा सिद्धा। एवं तत्कुलमित्यादौ स्यमोर्लुकि कृते क्तौ परे विहितत्वात् लुकि न तत्रेति निषेधेन टेरकाराभावेऽपि क्तिसम्बन्धेन पदत्वं स्यादेव॥ १२२॥

मात्स्वर्घाविति उत्वे उदन्तत्वादेव ना आदेशे सिद्धे अदसो ग्रहणं ज्ञापयति वैभक्तिकसकलकार्य्यान्तरमेव उत्वमिति। तेन अमुष्मै इत्यादौ आदौ स्मैकृते पश्चादुत्वे षत्वे च अमुष्मै इत्यादि सिद्धम्। आदावुत्वे स्मैप्रभृतयो न स्युः॥ १२३॥

एङ इति प्रकृतेर्विकृतेरपि। तेन गोः द्योः प्राप्तेः स्मृतोः॥ १२४॥

यद्यपि युड्भ्यां सह ङेरौविधानेनैवेष्टसिद्धौ परसूत्रे अङावित्यपि वक्तव्यं न स्यात्तथापि डौकरणं ज्ञापयति औपरे विंशतेस्तेर्लोपो न स्यादिति। तेन विंशतिमाचष्टे विंशतयति। अत्र जेर्डित्वेऽपि टेरेव लोपः न तु तेरिति॥ १२५॥

## १२६ । टेर्लोपो डिति, विंशतेस्तेस्त्वडौ ।

टेः ६।, लोपः १।, डिति ७।, विंशतेः ६।, तेः ६।, तु ।१।, अडौ ७। ।

डिति परे पूर्वस्य टेर्लोपः स्यात् विंशतेस्ते स्त्वडौ । हरौ हर्योः हरिषु । एवं श्रीपत्यग्निरव्यादयः ।

## १२७ । सख्यृद्भ्यां सेर्डाऽधेः ।

सख्यृद्भ्यां ५॥, सेः ६।, डा ।१।, अधेः ६। ।

सखिशब्दात् ऋकारान्ताच्च परस्य सेर्डा स्यात् न तु धेः । सखा । अधेः किं, हे सखे ।

## १२८ । घौ ञ्रिः ।

घौ ७।, ञ्रिः १। ।

सख्युर्ऋकारस्य च ञ्रिः स्यात् अधौ घौ परे । सखायौ सखायः, सखायं सखायौ सखीन् ।

## १२९ । सख्युष्टाङिता-मा ए उसुसौ ।

सख्युः ५।, टाङिताम् ६॥, आ ए उस् उस् औ ।१॥ ।

सख्युः परेषां टाङितां स्थाने आ ए उस् उस् औ एते क्रमात् स्युः । सख्या सख्ये सख्युः सख्युः सख्यौ । शेषं हरिवत् ।

---

डितिपरे तत्पूर्वशब्दस्य टेर्लोपः स्यात् । विंशतेस्तु ति इत्यस्य लोपः स्यादडौ ङिसम्बन्धिभिन्ने डितिपरे इत्यर्थः । हरौ शम्भौ एकादशानां पूरणः एकादशः विंशतेः पूरणः विंशः । अडाविति किम् ? विंशतौ ॥ १२६ ॥

अर्जुनस्य सखा कृष्णः कृष्णस्य सखिरर्जुनः इति महाभारते आर्षम् ॥ १२७ ॥

अर्थवशाद्विभक्तिविपरिणाम इति न्यायात् सख्यृद्भ्यामिति पदं षष्ठ्यन्तं भूत्वा अधेरिति पदञ्च सप्तम्यन्तं भूत्वा इहानुवर्त्तते । सख्युर्ऋकारस्य च ञ्रिः स्यादधौ घौपरे । अधौ किम् ? हे सखे ॥ १२८ ॥

टाश्च ङितश्च टाङितः तेषाम् । आश्च एश्च उस् च उस् च औश्च ते । सूत्रत्वा-त्तसो लुक् सन्ध्यभावश्च । क्वचिद्विशेषेण सामान्यो न बाध्यते इति ङिचोऽवे इत्यव

## १३०। पत्युरसे।

पत्युः ५।, असे ७।।

पतिशब्दात् परेषां टाङितां स्थाने आ ए उस् उस् औ एते क्रमात् स्युर्न तु से। पत्या पत्ये पत्युः पत्युः पत्यौ। असे किं श्रीपतिना इत्यादि। शेषं हरिवत्। कतिशब्दो ब्रान्तः।

## १३१। डतिसंख्याषणो जस्शसोर्लुक्।

डति संख्या-ष्-णः ५।, जस्-शसोः ६॥, लुक् १।।

डत्यन्तात् षान्तनान्तसंख्यायाश्च परयोर्जस्शसोर्लुक् स्यात्। कति कति कतिभिः कतिभ्यः कतिभ्यः कतीनां कतिषु। एवं यति तति। डति-त्र्य-ष्णान्त-संख्यास्मद्युष्मदः सदृशास्त्रिषु। त्र्यादयः संख्याशब्दा ब्रान्ताः।

---

व्याख्यातम्। तेन सखिना वानरेन्द्रेण इति सिद्धम्। चेत्यङिति इष्टेरत्वे इत्यादौ अनुकरणस्य यथार्थकार्य्याभावेऽपि सख्युरिति निर्देशः सखिशब्दस्य गौणत्वेऽपि ग्रहणमिति भाष्यमतज्ञापनार्थम्। जितसखा जितसखायौ जितसखायः जितसख्या जितसख्ये जितसख्युः जितसख्युः जितसख्यौ इति। मुख्यस्यैव ग्रहणमिति न्यासः। तन्मते जितसखिः जितसखी जितसखयः जितसखिना जितसखये जितसखे-रित्यादि। स्त्रियान्तु नित्येवन्तत्वात् सखी सख्यौ सख्यः इत्यादि गौरीवत्। क्लीवेऽस्य न प्रयोगः। तथाच "सखा मित्रसहाये ना वयस्यायां सखी मता" इति मेदिनिः यत्तु सर्वां प्रियत्वं तव खण्डितं न स्मरस्य सख्या वयसाऽप्यनेन इति नैषधे वयसा इत्यस्य विशेषणं सख्या इति तत् पुंस्येव यजहल्लिङ्गत्वात्। अतएव हेतुस्तद्ब्रह्मवर्चसमिति रघुः॥ १२९॥

क्वचिद्विशेषेण सामान्यो न बाध्यते इति न्यायात् पतिना नीयमानायाः पुरः शुक्रो न दुष्यतीति। गते मृते प्रव्रजिते क्लीवे च पतिते पताविति। सीतायाः पतये नमः इत्यादि सिद्धम्। छान्दसमिति केचित्॥ १३०॥

ष च न च ष्ण संख्या चासौ ष्ण चेति संख्याष्ण डतिश्च संख्याष्ण चेति डति-संख्याष्ण तस्मात्। डतिः प्रत्ययः तेन डत्यन्ताः कति यति तति इति त्रयः। लुक्कर-णात् कति घटा इत्यत्र यूर्भिं इत्यादिना न गुणः। षष्ठ इत्यादौ नान्तत्वान्न दीर्घः।

## १३२ । त्रेस्त्रयङ् नामि ।

त्रेः ६।, त्रयङ् ।१।, नामि ७।।

त्रिशब्दस्य त्रयङ् स्यात् नामि परे, ङित्त्वादन्त्यस्य स्थाने । त्रयाणां त्रिषु । द्विशब्दो द्वान्तः ।

---

एभ्यः क्लीबेऽपि कति फलानि षट् पत्राणि पञ्च मूलानि इत्यादौ जस्शसोः शिं बाधित्वा लुगेव । अष्टौ अष्ट फलानीत्यादौ लुक् डौश्च स्यात् । न च निमित्तगतविशेषतो लिङ्गगतविशेषस्य बलवत्त्वात् । सर्वाणीत्यादौ यथा सिसंज्ञाविहितमिकारादेशं बाधित्वा जस्शसोः इत्यनेन शिः स्यात् तथात्रापि शिरेवास्तु इति वाच्यम् । डतिच्चषणान्त इत्यादिना डत्यन्तादीनां लिङ्गत्रये साम्यनियमेन लिङ्गविहितकार्य्यनिषेधात् । एषां मुख्यानामेव ग्रहणम् । तेन प्रियकतयः अतिषषः अतिपञ्चानः अत्यष्टानो युवानः । डतिच्च । पदार्द्धमिदम् । एषां पुंस्त्रीनपुंसकलिङ्गविहितकार्य्यं नास्तीत्यर्थः । अतएव युष्मदस्मद्भ्यां शसो नकारं विधास्यति । एवं कति स्त्रिय इत्यत्र पाच्छोणादीत्यादिना ईप् न स्यात् । पञ्च स्त्रिय इत्यत्र नान्तत्वादीप् न स्यात् । एषामपि मुख्यानामेव ग्रहणम् । तेन प्रियकतीनि प्राप्तस्वस्तीनि प्रियषंषि प्रियपञ्चानि इति स्यादेव । किञ्च प्रियकतिः गणिका इत्यादावीपोऽप्राप्तिस्तु डतिप्रत्ययान्तस्य स्वस्रादित्वात् । एवं नान्तसंख्याया लिङ्गविहितकार्य्यनिषेधेऽपि नमन्संख्येत्यत्र संख्यावर्ज्जनं नान्तसंख्याभ्यो गौणेऽपि ईप्निषेधार्थम् । तेन प्रियपञ्चा गणिका इत्यादि । विस्तारस्तु नमन्संख्येत्यत्र द्रष्टव्यः युष्मदस्मदोस्तु गौणत्वे मुख्यत्वे च लिङ्गविहितकार्य्यं न स्यात् । तेन अतियुष्मत् इत्यादौ टेरत्वे स्त्रियामाप् न स्यात् । त्र्यादय इति । अत्र आदिशब्दस्य व्यवस्थावाचित्वादष्टादश पर्य्यन्ता एव । ऊनविंशत्यादीनान्तु एकवचनान्तत्वमेव विंशत्याद्याः सदैकत्वे सर्वाः संख्येयसंख्ययोरित्यमरात् । एषामपि मुख्यानामेव ग्रहणम् । तेन प्रियत्रिः प्रियत्रयाः प्रियत्रयाः इत्यादौ सर्वा विभक्तयः सुरेव ॥ १३१ ॥

मुख्यस्यैव ग्रहणम् । तेन अतित्रीणां प्राप्तत्रीणाम् । नामीत्यनेनापीष्टसिद्धौ नामीतिकृतन्तु आगमादेशयोः आगमविधिर्बलवानिति न्यायादादौ नुमागमः स्यादिति ज्ञापनार्थम् । तेन क्रोष्टूनामित्यत्र आदौ नुमागमेऽचः परत्वाभावान्न तृण् । किञ्च आगमेन अवयवादेश एव बाध्यते न तु सर्वावयवादेशः तेन पादशब्दस्यामि आदौ पदादेशे पश्चादसन्तत्वान्नुमागमाभावे पदामित्येव ॥ १३२ ॥

## १३२ । त्यदां टेरः क्तौ ।

त्यदां ६॥, टेः ६।, अः १।, क्तौ ७। ।

त्यदादीनां टेरकारः स्यात् क्तौ परे । द्वौ द्वौ द्वाभ्यां द्वाभ्यां द्वाभ्यां द्वयोः द्वयोः । वातप्रमीः वातप्रम्यौ वातप्रम्यः ।

## १३४ । यूतोऽम्‌शसोर्म्नावदीधोः ।

यूतः ५।, अम्-शसोः ६॥, म्नौ १॥, अदीधीः ५। ।

दीधुवर्जादीदूदन्तात् परयोरम्‌शसोः स्थाने क्रमात् मनौ स्तः । वातप्रमीं वातप्रम्यौ वातप्रमीन् वातप्रम्या वातप्रमीभ्याम् इत्यादि । एवमतिलक्ष्म्यादयः । सुधीः ।

---

अनुकरणस्य त्रिसंज्ञाभावेन टेरत्वाभावे त्यदामिति । त्रिसंज्ञायोग्यानामेव त्यदादीनां टेरः स्यात् । तेन गौणे अतितत् अतितदौ अतितदः अतितन्दि कुलानि । त्यदांडङ्क्तौ इतिकृतेऽपीष्टसिद्धौ गौरवं ज्ञापयति । युष्मदस्मत्त्व-न्मदां गौणत्वेऽपि अतसि टेर इति अतियुष्मान् अत्यस्मान् अतित्वान् अतिमान् । तसि तु युष्मत्तः अस्मत्तः त्वत्तः मत्तः अतियुष्मत्तः अत्यस्मत्तः अतित्वत्तः अतिमत्तः । एवं द्विशब्दस्य मुख्यस्यापि तसि न टेर इति द्वितः । अत्र त्रिङ्गाद्विभक्तेरावश्यक-त्वेऽपि क्तिग्रहणं क्तेर्निमित्तत्वज्ञापनार्थम् । तेन द्वाभ्यां कृतं द्विकृतं तस्य पुत्रः तत्पुत्र इत्यादौ क्तेर्लुकि त्यलोपे त्यलक्षणमितिन्यायेऽपि लुकि न तत्रेति निषेधात् । टेरकारो न स्यात् ॥ १३३ ॥

ईश्च ऊश्च यू ताभ्यां त् यूत् तस्मात् । वातप्रमीमिति वातं प्रमातीति औणा-दिकः कीप्रत्ययः । एवं औणादिक ऊप्रत्यये कर्कन्धूनित्यादि । केचित्तु वात-प्रमीशब्दस्य स्त्रियामीपि नित्यस्त्रीलिङ्गत्वाभावेऽपि दीसंज्ञां विधाय हे वातप्रमि वातप्रमीं वातप्रमीः वातप्रमीणामिति । एवं कर्कन्धुशब्दस्यापि ह्रस्वादन्तत्वेन स्त्रियामूपि हे कर्कन्धु कर्कन्धूं कर्कन्धूः कर्कन्धूनामित्याहुः । एवमतिलक्ष्म्यादय इति । यत्र धातुत्वं नास्ति तत्र पुंस्त्वाद्दीसंज्ञापि नास्तीत्यर्थः । यथा अति-लक्ष्मीं अतिलक्ष्मीन् अतितन्त्रीं अतितन्त्रीन् अतिवधूं अतिवधून् । बहुव्रीहौ च समासान्तविधेरनित्यत्वात् कप्रत्ययाभावे बहुप्रेयसीं बहुप्रेयसीन् अतिलक्ष्मीम् अति-लक्ष्मीन् इति । भाष्यकारक्रमदीश्वरौ तु पुंलिङ्गेऽप्येषां नदीसंज्ञानिवृत्तिर्नास्तीति मन्वानौ सर्वासु विभक्तिषु स्त्रीलिङ्गवदुदाहरतः । ऋदॢदृभ्यामप्यमशसोर्म्नाविति केचित् । ॡजधातोर्ॡकारस्य चानुकरणे ॡं पठ ॡन् पठ ॡं पठ ॡन् पठ ॥ १३४ ॥

## १३५। धोरियुवचि।

धोः ६।, इय्-उव् ।१।, अचि ७।।

धोरीदूतोः स्थाने क्रमादियुवौ स्तोऽचि परे। सुधियौ सुधियः इत्यादि। एवं सुश्रौ यवक्रयादयः। प्रधीः।

## १३६। कव्याद्यनेकाचोऽस्यादहन्पुनर्वर्षाकाराद्यन्यभू सुधियोर्य्वौ।

कव्याद्यनेकाचः ६।, अस्यात् ५।, अहन्-सुधियोः ६॥, य्वौ १॥।

कादेर्व्यादेरनेकाचश्च धोरीदूतोरस्यात् परयोः क्रमात् यवौ

---

धर्मिकल्पनातो हि धर्मकल्पना लघीयसीति न्यायात् पूर्वस्थितस्य यूत इति पञ्चम्यन्तस्य अत्र षष्ठ्यन्तत्वेनानुवृत्तिः। अर्थवशाद्विभक्तिविपरिणाम इति न्यायात्। सुध्यादयः ऐ दित्यादौ इयादेशाभावं दर्शयता आचार्य्येण अत्र अचीति स्यादेरेवेति ज्ञापितम्। सामान्यशब्दोऽपि क्वचित् विशेषपरो भवतीति न्यायात्। तेन रक्षोवधान्तो न च मे प्रयासः स्व्यर्थः स वैरिप्रतिमोचनाय इति रघुः। किञ्च ज्ञापकसिद्धमनित्यमिति न्यायात् क्वचिदन्यत्रापि भवति। तेन तुरासाहं पुरोधाय धाम स्वायम्भुवं ययुरिति कालिदासः। विशेषविधित्वाद्दीर्घस्यापि वाधकोऽयं तेन ङौ सुधियि इत्येव॥ १३५॥

कश्च व्यश्च कव्ये ते आदिनी यस्य स कव्यादिः। स च अनेकाच्च कव्याद्यनेकाच् तस्य। नस्योऽस्यः तस्मात्। हन् च पुनर् च वर्षा च कारा च हन्पुनर्वर्षाकाराः ता आदयो येषां ते हन्पुनर्वर्षाकारादयः तेभ्योऽन्यः हन्पुनर्वर्षाकाराद्यन्यः स चासौ भूश्चेति हन्पुनर्वर्षाकाराद्यन्यभूः स च सुधीश्च हन्पुनर्वर्षाकाराद्यन्यभूसुधियौ। न तौ अहन्पुनर्वर्षाकाराद्यन्यभूसुधियौ तयोः। य्वाविति द्विवचनान्तेन यथासंख्यार्थं यूत इत्येकवचनान्तमपि यूतोरिति द्विवचनान्तं भूत्वा अत्रानुवर्त्तते अर्थवशाद्विभक्तिविपरिणाम इति न्यायात्। यथ सेनां नयतीति क्विपि सेनान्यौ एवं खलप्वौ प्रण्यौ प्रध्यौ दीध्यौ जुह्वौ। अस्यादिति किम्? यवक्रियौ कटप्रुवौ इत्यादि। इयुवोर्निषेधेऽपि यलायत्यादिनैवेष्टसिद्धौ यवविधानं दीर्घस्यापि वाधनार्थम्। तेन ङौ प्रध्यि। अत्रापि पूर्वतः स्यादेरेवानुवर्त्तते तेन प्रधीश्वरः इत्यादौ न प्रसङ्गः। हन्निति हिंसार्थमव्ययं दकारादिनान्तं तदर्थं भवतीति क्विपि हन्भूः एषां

स्त्रोऽचि परे, न तु दृन्भू पुनर्भू वर्षाभू काराभूभ्योऽन्यस्य भूशब्दस्य सुधिवच्च। प्रध्यौ प्रध्यः इत्यादि। एवं दीध्यादयः। कव्याद्यनेकाचः किम्। शुद्धधियौ शुद्धधियः। धस्यात् किं यवक्रियौ यवक्रियः। नीः नियौ।

## १३७। न्याप् दीभ्यो ङेराम्।

नी-आप्-दीभ्यः ५।।।, ङेः ६।, आम् ।१।।

नीशब्दादापो दीभ्यश्च परस्य ङेराम् स्यात्। नियाम्। शेषं सुधीवत्। अग्रणीः अग्रण्यौ। ङौ अग्रण्याम्। शेषं प्रधीवत्।

---

लिङ्गार्थनिर्णयस्तु दृन्भूः स्त्री। कुलिशे चक्रे दृन्भूः स्त्रीपुंसयोरपीति विश्वप्रकाशात्। पुनर्भूः स्यात् द्विरूढ़ायां दृन्भूः पन्नगवज्रयोः। पुनर्नवायां वर्षाभूः स्त्रियां किम्बुलुके प्लवे। काराभूर्निगड़स्थाने क्रियायामपि चेष्यते इति कोषाच्च। केचित्तु काराख्याने कारं पठित्वा कारभ्वौ कारभ्व इत्युदाहरन्ति तथाच काराच्चेष्यते इति वामनः। वर्षादृन्पुनःकाराद्भुवः इति चान्द्रः। कारशब्दो घञन्तोऽपि भाष्ये च दृश्यते इति रचितश्च कारस्थाने करं पठित्वा करभ्वौ करभ्व इत्यपि केचित्। दृन्भ्वादीनां इयुवस्थानभिन्नानां नित्यस्त्रीत्वाद्दीसंज्ञायामादौ नुमागमे दृन्भूनामित्यादि। किन्तु दृन्भूशब्दस्य सर्पवाचित्वे पाक्षिकस्त्रीत्वाद्दीसंज्ञाभावे दृन्भ्वामिति। दृन्पुनर्वर्षाकारादिभूशब्दस्य वकारविधानेनैवेष्टसिद्धौ तद्भिन्न भूशब्दवर्जनं ज्ञापयति क्विपः प्राक्कारकाव्ययाभ्यां कृतसमासस्यैव धातोर्यवौ स्तो न तु क्विपः पश्चात् समास इति। तेन भयनं भीरिति क्विपि ईषद्भीर्येषां ते ईषद्भियः। एवं कुधियः नानाधियः अधियः पापधिया धर्मधिया दावलुवा इत्यादि। वृश्चिकभिया पलायमानस्याशीविषमुखे निपातः इति भाष्यम्। वृश्चिकभियेत्यादि सम्बन्धे षष्ठीविवक्षयेति चान्द्राः। अव्ययानां मध्ये उपसर्गादेव विधानादीषद्भिय इत्यादौ न स्यादिति केचित्। किञ्च ज्ञापकसिद्धमनित्यमिति न्यायात् प्रधीशब्दस्य क्विपः पश्चात्कृतसमासस्यापि यः स्यात्। अतएव सुष्ठुधीः प्रकृष्टा धीरिति नित्यस्त्रीत्वे सुधीप्रध्यौ श्रीलक्ष्मीवदिति स्वयं वक्ष्यति। एवं दीध्यादय इति दीधीङ्‌ ञु, देवने दीप्तौ क्विपि अनेकाच्त्वात् यः॥ १३६॥

नीशब्दस्य केवलस्य तदन्तस्य च ग्रहणात् नियाम् अग्रण्याम्। क्लीवे तु अन्तरङ्गत्वादादौ ह्रस्वे नुमि अतिनिनि कुले पुंवद्भावपक्षे अतिनियामिति स्यादेवेति॥१३७॥

## १३८। त-तज-खादीयोङोवोः।

त-तज-खात् ५।, ईयः ५।, ङः १।, वा ।१।, उः १।।

तात् तस्थानजाद्वर्णात् खाच्च परादीकारजात् यकारात् परो ङसिङसोर्ङ उः स्यात् वा। सुत्युः सुत्यः। लून्युः लून्यः। सुख्युः सुख्यः। शम्भुर्हरिवत् साध्यः। शम्भुः शम्भू शम्भवः, शम्भुं शम्भू शम्भून्, शम्भुना शम्भुभ्यां शम्भुभिः, शम्भवे शम्भुभ्यां शम्भुभ्यः, शम्भोः शम्भुभ्यां शम्भुभ्यः, शम्भोः शम्भ्वोः शम्भूनां, शम्भौ शम्भ्वोः शम्भुषु, हे शम्भो। एवं विष्णुवायुभान्वादयः।

## १३९। क्रोष्टोस्तुनस्तृन्नधौ घौ स्त्रियाञ्च।

क्रोष्टोः ६।, तुनः ६।, तृन् ।१।, अधौ ७।, घौ ७।, स्त्रियां ७।, च ।१।।

क्रोष्टुशब्दस्य तुनः स्थाने तृन् स्यात् अधौ घौ परे स्त्रियाञ्च न इत्। [१२७] सख्यङ्गामिति। क्रोष्टा हे क्रोष्टो। [१२८] घौ त्रिः। क्रोष्टारौ क्रोष्टारः क्रोष्टारं क्रोष्टारौ क्रोष्टून्।

---

तकारस्य स्थाने जातस्तजः तश्च तजश्च खश्च ततजखं तस्मात्। ईकारस्य यः ईयः तस्मात् मण्डूकप्लुताधिकारात् धोरित्यनुवर्त्तते तकारात् तकारस्थानोत्पन्नवर्णात् खकाराच्च परस्य धातुसम्बन्धिन ईकारस्य स्थाने कव्याद्यनेकाच इत्यनेन जातो यो यकारस्तस्मात् परो ङसिङसोरकार उः स्यादित्यर्थः। सुत्युरित्यादि सुतमिच्छति सुतमिवाचरतीत्यादि वाक्ये सुतीयतीति क्विपि हसाल्लोप इत्यकारलोपे य्वोर्लोप इति यलोपे सुती इति लिङ्गम् एवं लुञ्गि क्तिदि क्तः ल्वादित्वात्तस्य नः लूनः लूनीयतीति क्विपि लूनीतिलिङ्गं सुखीयतीति क्विपि सुखीतिलिङ्गम्। ईयः किम्? दर्त्तियः भिन्नियः मूर्खियः इत्यादौ संयोगपरत्वादियि कृते न स्यादिति॥ १३८॥

क्रोशतीति औणादिकतुनि क्रोष्टु इति लिङ्गम्। तस्य तुनःस्थाने तृन् इति आदेशः स्यात्। न च तर्हि नकारो विफल इति वाच्यम्। धावस्वसृतृण इत्यनेन गुणनिषेधकतया सार्थकत्वात्। गौणस्यापि ग्रहणम्। तेन बहवः क्रोष्टारो यस्मिन् देशे स बहुक्रोष्टा बहुक्रोष्टारौ। स्त्रियाञ्चेति स्त्रीलिङ्गवर्त्तित्वे सति निमित्तान्तरमनपेक्ष्यैव तृनादेशे ऋदन्तत्वादीपि क्रोष्ट्री इति। एवं बहव

### १४०। वाचघौ।

वा ।१।, अचि ७।, अघौ ७।।

क्रोष्टुशब्दस्य तुनः स्थाने त्वन् वा स्यात् अघावचि परे। क्रोष्टून् क्रोष्ट्रा क्रोष्ट्रे।

### १४१। ऋतो ङौ डुः।

ऋतः ५।, ङः १।, डुः १।।

ऋकारात् परो ङसिङसोर्ङो डुः स्यात् ड इत्। क्रोष्टुः क्रोष्टुः क्रोष्ट्रोः क्रोष्टूनाम्।

---

क्रोष्टारी यस्यां सा बहुक्रोष्ट्री पूः। अत्र क्रोष्टुशब्दस्य पुंस्त्वेऽपि समुदायस्य स्त्रीत्वात् त्वनादेशे ईप्। एवञ्च क्रोष्टॄनतिक्रान्ता अतिक्रोष्ट्री॥ १३९॥

पूर्वसूत्रेण वाधितत्त्वादवाघेरच एव प्राप्तौ अघाविति व्यर्थम्। न च तर्हि पूर्वस्य सिमात्रविषयतया सार्थकत्वे औकारादिष्वनेन विकल्पापत्तिरिति वाच्यम्। पूर्वस्य सिमात्रविषयत्वे सौ इत्यस्यैव वक्तुमुचितत्वात्। अत्र रामानन्दकाशीश्वरौ तु तथापि अघिग्रहणं ज्ञापयति येषां कदाचिदपि घित्वं सम्भवति तद्भिन्नेऽचि वा स्यादिति। तेन क्लीवे औकारस्य घित्वाभावेऽपि लिङ्गान्तरे घित्वसम्भवात् बहुक्रोष्टुनी वने इत्यत्र त्वन् न स्यात् बहुक्रोष्टूनि वनानीत्यत्र पूर्वेण त्वन् नित्यमित्याहतुस्तद्धेयम्। वस्तुतस्तु नुमिर्कोऽच्यनामीति नुड्यमादावित्यादौरागमत्वेन बलवत्त्वादादौ नुणागमे त्वनादेशाभावे क्रोष्टूनामितिवत् बहुक्रोष्टुनी वने बहुक्रोष्टूनि वनानि इत्यादिकमेव स्यात्। अतएव क्लीवे न कुत्रापि त्वनादेश इति क्रमदीश्वराद्याः। किञ्च टाद्यचि पुंवद्भावविकल्पनात् बहुक्रोष्ट्रा बहुक्रोष्टुना वनेन बहुक्रोष्ट्रे बहुक्रोष्टवे बहुक्रोष्टुने वनाय इत्यादि। अघाविति ग्रहणन्तु यादृग्जातीयस्य विप्रतिषेधो विधिरपि तादृग्जातीयस्येति न्यायात् घिवर्जनेन स्याद्यचः प्राप्त्यर्थम्। तेन क्रोष्टुनामीकः क्रोष्ट्रीक इत्यादौ न प्रसङ्गः। क्रोष्टॄनिति यद्यपि पाणिनिक्रमदीश्वरादिभिष्टादावच्येव त्वनादेशो विभाष्यते तथाऽप्याचार्य्यः शसादौ तुनन्तस्य त्वनन्तस्य च प्रयोग इति चान्द्रदुर्गसिंहयोर्मतमवलम्ब्य शसि त्वनादेशं कृतवान्॥ १४०॥

सुगमम्। आगमादेशयोरागमविधिर्बलवानिति न्यायादादौ नुमागमेऽचपरत्वाभावात् त्वनादेशाभावे क्रोष्टूनामिति नित्यम्॥ १४१॥

## १४२। णुङि धयोः।

णः १।, ङिध्योः ७॥।

ऋकारस्य णुः स्यात् ङौ धौ च परे क्रोष्टरि क्रोष्टोः। पचे हसि च शम्भुवत्। हुहूः हुह्वौ हुह्व इत्यादि, वातप्रमीवत्। एवमतिचम्वादयः। सुभूः सुभुवौ सुभुव इत्यादि, सुधीवत् एवं ऋटभूस्वयम्भ्वादयः। सुलूः सुल्वौ सुल्वः इत्यादि, प्रधीवत्। एवं दृन्भूखलप्वादयः। धाता तृनन्तक्रोष्टुवत्। धौ हे धातः एवं नप्तृहोतृपोत्रादयः। पिता हे पितः।

पिता माता ननान्दा ना सव्येष्ठृभ्रातृ यातरः।
जामाता दुहिता देवा न तृनन्ता इमे दश॥

---

सुगमम्। केचित्तु लृकारस्य धौ जसि च गुणं विधाय हेपठित गमलृ शिष्य हेपठितगमलः शिष्याः इत्युदाहरन्ति। एवं नप्तृहोतृपोत्रादय इति। तृन्साधितेन भ्रातृशब्देन साम्यातिदेशात् होतृशब्दसाहचर्याच्च नप्त्रादयः सर्वे तृनन्ततुल्या एव। नप्ता च होता गदितोऽथ पोता चत्ताथ नेष्टा तदनुप्रशास्ता। शास्ताथ शंस्ता च तृनन्ततुल्या अष्टेति शब्दाः खलु तद्विभाजः। एते अष्टशब्दाः पौवादिषु रूढ़ाः सर्वे औणादिकतृप्रत्ययान्ताः। नप्तौ शब्दनत्योः मनीषादित्वात् मस्य पः नप्ता। हुलि होमेऽदने नेमिकाजा इति नेम् होता। पूञ् शोधे इत्यादिषु इमीभावो निपात्यः पोता। चद संहतौ सौत्रः चत्ता। निश् शीले नेष्टा। शासचु शासने प्रशास्ता। शनसु हिंसास्तुत्योः शंस्ता। केचित्तु शास्तृ शंस्तृ इति द्वयोर्गुणं विधाय शास्तरौ शास्तरः शंस्तरौ शंस्तरः इत्युदाहरन्ति। पिता मातेति। पित्रा साहचर्यान्मातृशब्दोऽत्र जननीवाचकः परिमाणवाचकत्वे तु तृनन्त एव। तेन धान्यस्य मातारौ पुरुषौ। सव्येष्ठृशब्दो रथवामपार्श्वस्थितवीरे रूढ़ः टवर्गद्वितीयवान्। यातृशब्दः स्वामिभ्रातृस्त्रीवाचकः अन्यत्र तृनन्त एव। तेन तीर्थस्य यातारौ पुरुषौ। उणादौ निपातसाधिता एते तृनन्ततुल्यसंस्थाना अपि तृनन्ता न बोध्या इत्यर्थः। ननान्दृनृदेवॄणां तृनन्तसंस्थानरहितानामपि इहोपन्यासो गुणप्राप्त्यर्थः पद्यपूरणार्थश्च। न च ननान्द्रादीनां तृणन्तभिन्नत्वेन प्रतीयमानानामिहोपन्यासात् पित्रादिभिन्ना ऋदन्ता अतृनन्ता अपि तृणन्ता एवेति वाच्यम्। क्रोष्टोस्तृत् इत्यनेनैवेष्टसिद्धौ तृण्विधानवैयर्थ्यात् धावसमृतृण इत्य-

## १४३ । घावस्वसृतृणोः ।

घौ ७।, अस्वसृतृणोः ६॥ ।

घौ परे ऋकारस्य णः स्यात् न तु स्वसृतृणोः पितरौ पितरः पितरं पितरौ । शेषं धातृवत् । एवं जामातृभ्रात्रादयः ।

## १४४ । नुर्वा नामि र्घः ।

नुः ६।, वा ।१।, नामि ७।, र्घः १। ।

नृशब्दस्य नामि परतो र्घः स्यात् वा । नॄणां नृणाम् । शेषं पितृवत् ।

## १४५ । ओरौघौ ।

ओः ६।, औ ।१।, घौ ७। ।

ओकारस्य औकारः स्यात् घौ परे । गौः गावौ गावः ।

## १४६ । आ अमृशसोः ।

आ ।१।, अमृशसोः ७॥ ।

ओकारस्य आकारः स्यादमि शसि च परे । गां गावौ गाः गवा गोभ्याम् इत्यादि । [१२४] ङस्यैङोलोप इति । गोः गोः ।

---

चापि स्वसृवर्जनवैयर्थ्यात् । यत्तु तिसृचतस्रादेशयोर्नणत्र्विधो इत्युक्तं तद्विशेषविधेर्गुणस्य निषेधे सामान्यविधिप्राप्तव्या वृद्धिः कथं न स्यादिति शङ्कानिरासार्थम् ॥ १४२ ॥

स्वसा च तृन् च स्वसृतृनौ न स्वसृतृनौ अस्वतृनौ तयोः ॥ १४३ ॥

गौणत्वेऽपि अतिनॄणां अतिनृणाम् ॥ १४४ ॥

अत्र लाक्षणिकभिन्नस्य ओकारस्य ग्रहणम् । तेन गोद्यवोरेव । लाक्षणिकस्य तु दृष्ट उः शिवो येन स दृष्टोः इत्यादौ न स्यात् । एवं चित्रा गौर्यस्य स चित्रगुः गवादेरिति ह्रस्वः । अस्य सम्बोधने हे चित्रगो इत्यत्रापि न स्यात् ॥ १४५ ॥

आदेः इति कृते ओकार आः स्यात् द्वितीयाया अकारे परे इत्यनेनैवेष्टसिद्धौ आ अमृशसोरिति गौरवं ज्ञापयति ओकारशब्देनात्र एङ् उच्यते । तेन प्राप्त इः कामो येन स प्राप्तेः दृष्ट उः शिवं येन स दृष्टोः एतयोरमि शसि च प्राप्तां प्राप्ताः दृष्टां दृष्टाः इत्यादि सिद्धमिति ॥ १४६ ॥

१४७ । **रैरा स्भि ।**

रै ।१।, रा ।१।, स्भि ७। ।

**रैशब्दो रा स्यात् से भे च परे। राः रायौ रायः, राया राभ्याम् इत्यादि। ग्लौः ग्लावौ ग्लावः इत्यादि। इति अजन्तपुंलिङ्गपादः।**

---

## तृतीयः पादः ।

### अजन्तस्त्रीलिङ्गशब्दः ।

१४८ । **आवीव्हसात् सेर्लोपः ।**

आप्-ईप्-हसात् ५।, सेः ६।, लोपः १। ।

**आप ईपो हसाच्च परस्य सेर्लोपः स्यात्। उमा।**

१४९ । **यैराप: ।**

ई ।१।, औः १।, आपः ५। ।

---

गौणत्वेऽपि सुराभ्यां कुलाभ्यां सुरासु कुलेषु। क्लीबे स्व इति ह्रस्वेऽपि एकदेशविकृतमनन्यवद्भवतीति न्यायात् रादेशः ॥ १४७ ॥

इति अजन्त पुंलिङ्गपादः ।

ननु स्यान्तस्यारादित्यनेन स्यात् सलोपे सिद्धेऽत्र हसोग्रहणं कथमिति चेन्न रेफात् परस्य सेर्लोपार्थं पृथग्विधावापत्तेः। न च तर्हि आवीन्रादित्येव कार्य्यमिति वाच्यम्। तर्हि च से लुपि तदादिविधेर्निषेधात् लिहादीनां हकारादेर्ढकाराद्यनुपपत्तेः। नान्तानां नकारस्य लोपानुपपत्तेः। एवं ककङ्क्छागर्वचापले सुष्ठु ककते इति क्विपि सुकक् अत्र स्यादेः सोलोप इत्यादेर्बलवत्त्वादादौ कस्य लोपे सेर्विसर्गे सुकः इत्यपप्रयोगापत्तेश्च। उमेति संज्ञाशब्दानां यथा कथञ्चिद्व्युत्पत्तिः कार्य्येति प्राञ्चः। उः शिवः उं मिमीते जपतीति माङ्खि शब्दे हनजनाङ्गमार्टेरिति डप्रत्यये उम इति शब्दात् स्त्रियामापि उमेति रूपम्। उमेति माता तपसो निषिद्धा पश्चादुमाख्यां सुमुखी जगाम इति कालिदासस्य कवितैव ॥ १४८ ॥

आपः एर औरी स्यात् । उमे उमाः ।

### १५० । धिटौसेः ।

धि-टा-औसि ७।, एः १। ।

आप एः स्यात् धौ टौसोश्च परतः। हे उमे। उमां उमे उमाः उमया उमाभ्यां उमाभिः ।

### १५१ । ङितां यम् ।

ङितां ६।।, यम् ।१। ।

आपः परेषां ङितां यम् स्यात्, म इत् । उमायै उमाभ्यां उमाभ्यः उमायाः उमाभ्यां उमाभ्यः उमायाः उमयोः उमानां [१३७] न्यापदीभ्योङेरामिति। उमायां उमयोः उमासु। एवं दुर्गामायाम्बिकादयः ।

### १५२ । स्वेःस्यम् स्वश्च ।

स्वेः ५।, स्यम् ।१।, स्वः १।, च ।१। ।

स्वेराबन्तात् परेषां ङितां स्यम् स्यात्, पूर्वस्य च स्वः। सर्वस्यै सर्वस्याः सर्वस्याः सर्वस्याम्। आमि सर्वासाम्। शेष-मुमावत्। एवं विश्वादयः आबन्ताः। अपुरीत्युक्तेः। अन्तरायै

---

ई इति लुप्तप्रथमैकम्। दीर्घकरणं जरसी इति सिद्धार्थम्। आपोग्रहणा दीव्भसीर्निवृत्तिः ॥ १४९ ॥

अर्थवशाद्विभक्तिविपरिणाम इति न्यायात् आप इति षष्ठ्यन्तमनुवर्त्तते ॥१५०॥

ङिति य इत्यनेनैवेष्टसिद्धौ ङितां यम् विधानं यकारस्य विभक्तिभाजित्वात् टाभिसित्यादिना ङेप्रभृतीनामयाद्यादेशनिवृत्त्यर्थम्। किञ्च ङितिया इत्यने-नापीष्टसिद्धौ ङितां यम्विधानन्तु आबन्तभिन्नानामाकारलोपः शसादाचीति वार्त्तिकमतज्ञापनार्थम्। अतएव व्यादनञःक्लीयवित्यादौ क्लाशब्दस्याप्याकारो लुप्तः ॥ १५१ ॥

नगर्य्यै। द्वितीयस्यै द्वितीयायै द्वितीयस्याः द्वितीयायाः द्वितीयस्याः द्वितीयायाः द्वितीयस्यां द्वितीयायाम्। शेषमुमावत्। एवं तृतीया।

## १५३। सुभ्रूदीद्व्यजम्बार्थानां धौ स्वः।

सुभ्रू-दी-द्वि-अच्-अम्बार्थानां ६।।।, धौ ७।, स्वः १।।

सुभ्रुवो द्याद्व्यजम्बार्थानाञ्च स्वः स्यात् धौ परे। हे अम्ब। शेषमुमावत्। एवमक्काल्लादयः। द्व्यचः किः। हे अम्बाड़े हे अम्बाले हे अम्बिके। जरा। [११५] ज़रम् जराचितु। जरसौ केचिदादावौत्वमिच्छन्ति। जरसौ जरे। जरसः जराः इत्यादि [११६] पाददन्तेति नासिकापृतनानिशानां नस्पृन्निशः। नसः नसा नोभ्याम् इत्यादि। पृतः पृता पृद्भ्याम् इत्यादि। निशः निशा।

---

ननु ङस्यमापीष्टसिद्धौ स्वयेति कथमिति चेन्न अस्यै इत्यादिसाधने सकारपरत्वाभावे स्प्य इत्यस्याप्रवृत्तेः॥ १५२॥

अम्बार्था नाद्योक्तौ मातृवाचकाः। द्वौ अचौ येषां ते द्व्यचः द्व्यचश्च ते अम्बार्थाश्चेति द्व्यजम्बार्थाः सुभ्रूश्च दीच द्व्यजम्बार्थाश्च ते तेषाम्। द्यादिसाहचर्य्यात् सुभ्रू शब्दः स्त्रीलिङ्ग एव ग्राह्यः। "विमानना सुभ्रु कुतः पितुर्गृहे" इति कालिदासः। पुंसि तु हे सुभ्रूः पुरुष इत्यत्र न स्यात्। "दूरादरालभ्रु विभाति वेला कलङ्कलेखामलिनेव धारा" इति रघौ अरालभ्रु इति तन्वादेर्वेति ऽपि कृते उवस्थानत्वाभावात् दीसंज्ञायां ह्रस्वः। एवं "त्वं रक्षसा भीरु यतोऽपनीता तं मार्गमेताः कृपया लतामे" इति रघौ। "विहर मया सह भीरु काननानि" इत्यादौ च भीरु इत्यत्र तन्वादेर्वेति ऽपि कृते ह्रस्वः। ननु हे गौरि हे वधु इत्यादावनेन ह्रस्वे गुर्धिर्जसित्यादिना गुणः कथं न स्यादिति चेन्न तत्

१५४। शक्राज-भ्राज-यज-व्रज-सृज मृज-व्रश्च भ्रस्जां षङ् भौ।

शक्राज-भ्रस्जां ६।॥, षङ् ।१।, भौ ७।

शान्तानां छान्तानां राजादेश्च षङ् स्यात् भौ परे।

१५५। षोड़ः फे।

षः ६।, डः १।, फे ७।

षस्य डः स्यात् फे परे। निड्भ्यां इत्यादि। पचे धौ च उमावत्। गोपा विश्वपावत्। मतिर्हरिवत्। स्त्रीत्वान्न शस् न न टा ना। मतीः मत्या।

१५६। द्याङिताम्म्।

द्याः ५।, ङितां ६।॥, अम् ।१।।

द्याः परेषां ङितामम् स्यात्, म इत्। मत्यै मतये, मत्याः मतेः, मत्याः मतेः, मत्यां मतौ। एवं श्रुतिस्मृतिबुद्ध्यादयः।

---

सूत्रे क्रुखेदन्तोदन्ताभ्यां परत्रजातानामेव धिनसङिितां ग्रहणात् अत्र न प्रसक्तिः। एवमक्कात्ताद्य इति आदिशब्दात् हे अत्त हे अप्प ॥ १५२ ॥

शश्छश्च राजश्च भाजश्च यजश्च व्रजश्च सृजश्च मृजश्च व्रश्चश्च भ्रस्जश्च ते तेषाम्। एषां दशानां षङ् स्यात् लिङ्गप्रकरणे हसविरामयोः धातुप्रकरणे झसविरामयोः इत्यर्थः। यथा शौविशप्रवेशे क्विपि विट् विड्भ्यां क्तौ प्रविष्टिः यङ्लुकि अवेवेट् प्रच्छीश ज्ञीप्से प्राट् प्राड्भ्यां पृष्टिः अपरिपृट् राजृज राट् राड्भ्यां इववतेल्विति इम् निषेधे राष्टिः अराराट् इत्यादि ॥ १५४ ॥

ननु झपझसोरित्यनेनैव षस्य ङः स्यात् किमनेन इति चेन्न निट्सु इत्याद्यर्थ-मवश्यवाच्यत्वात्। पारायणतन्त्रप्रदीपे श्रीपतिदत्तास्तु तालव्यशकारस्य टकारं विधाय निड्भ्यां निट्सु इत्याद्युदाहरन्ति ॥ १५५ ॥

द्याङित्य इत्यनेनापीष्टसिद्धौ ङितामम्विधानन्तु अकारस्य विभक्तिसम्बन्धि-

## १५७ । स्त्रियां त्रिचतुरोस्तिसृचतसृऋवत् क्वौ ।

स्त्रियां ७।, त्रिचतुरोः ६॥, तिसृचतसृ ।१। ऋवत् ।१।, क्वौ ७। ।

त्रिचतुरोः स्त्रीलिङ्गे क्रमात्तिसृ-चतसृौ स्तः क्वौ परे । तौ च ऋवत् तेन न गुन्निर्घाः । तिस्रः तिस्रः तिसृभिः तिसृभ्यः तिसृभ्यः तिसृणां तिसृषु । टरत्वे सत्याप् । द्वे द्वे द्वाभ्यां द्वाभ्यां द्वाभ्यां द्वयोः द्वयोः । गौरी गौर्य्यौ गौर्य्यः, हे गौरि, गौरीं गौर्य्यौ गौरीः, गौर्य्या गौरीभ्यां गौरीभिः । [१५६] द्याङिताम् । गौर्य्यै गौरीभ्यां गौरीभ्यः, गौर्य्याः गौरीभ्यां गौरीभ्यः, गौर्य्याः गौर्य्योः गौरीणां, गौर्य्यां गौर्य्योः गौरीषु । एवं वाणी-काली-नद्यादयः । लक्ष्मीः अनीबन्तत्वात् न सिलोपः । शेषं गौरीवत् । एवमवीतन्त्र्यादयः । स्त्री । हे स्त्रि ।

---

त्वार्थम् । तेन स्त्रियै इत्यादिषु धीरियुवचीति इयादेशः । नच द्याङितौ त्रिरित्यनेनापीष्टसिद्धिरिति वाच्यम् । सर्वस्यामित्यादौ ङिस्थाने आमिकृते यथा आमो ङित्त्वात् स्यम् स्यात्तथा मत्यै इत्यत्र एकारस्य वृद्धावपि गुर्धिञसित्यनेन इकारस्य गुणापत्तेः ॥ १५६ ॥

अत्र सम्प्रभावः सूत्रत्वात् । तौच ऋवदिति तावादेशौ दीर्घ-ऋदन्ततुल्यौ तेन हेतुना ऋस्वस्य स्थाने जायमाना गुन्निर्घा न स्युः । यथा घावसस्टटप इति गुर्ङिध्योरित्येताभ्यां गुणः धौन्निरिति वृद्धिः असनामिर्घ इति दीर्घो न स्यादित्यर्थः । न च सस्टटपन्तभिन्नतया गुणेन बाधितायाः वृद्धेर्निषेधो व्यर्थेति वाच्यम् । बाधकस्य गुणस्य निषेधे पुनर्बाधिताया वृद्धेर्दुर्निवारत्वात् । किञ्च ऋस्वान्तत्वात् यो दीर्घस्तस्यैव निषेधः तेन प्रियतिसृणि कुलानि इत्यत्र नान्तत्वद्वारा नसब्महन्न इत्यनेन दीर्घः स्यादेव । एवं समाहारेणापीष्टसिद्धौ गुन्निर्घा इति बहुवचननिर्देशात् अमशसोरादिलोपौ न स्यात् ऋतो ङो ड् इत्यपि न स्यात् । मुख्ये गौणे चार्थे विधिः । किञ्च आतिदेशिकमनित्यमिति न्यायात् सौ न ऋवदिति बोध्यम् । तेन सख्युद्धामिति सेडा । धौतु गुर्ङिध्योरितिगुणश्च स्यात् । एवम् आमस्तु नुमागमः स्यादेव । यथा प्रियास्तिस्रः स्त्रियो यस्य स प्रियतिसा हे प्रियतिसः प्रियतिसौ प्रियतिसः प्रियतिसं प्रियतिसौ प्रियतिसः प्रियतिसा प्रियतिसे प्रियतिसः प्रियतसः प्रियतिसोः प्रियतिसृणां प्रियतिसि प्रियतिसोः प्रियतिसृषु ।

१५८। स्त्रीभ्रूर्धुः।

स्त्री ।१।, भ्रूः १।, धुः १।।

स्त्रीशब्दो भ्रूशब्दश्च धुसंज्ञः स्यात्। [१३५] धोरियुवचि। स्त्रियौ स्त्रियः।

१५९। स्त्री वाम् शसोः।

स्त्री ।१।, वा ।१।, अम्शसोः ७॥।

स्त्रीशब्दो धुसंज्ञो वा स्यात् अमि शसि च परे। स्त्रियं स्त्रीं स्त्रियौ स्त्रियः स्त्रीः, स्त्रिया स्त्रीभ्यां स्त्रीभिः, स्त्रियै स्त्रीभ्यां

---

एवं प्रियचतसा। प्रियास्तिस्रो यस्य तत् कुलं प्रियत्रि एवं प्रियचतुः अत्र स्यमो-र्लुक् करणान्न आदेशः प्रियतिसृणी प्रियतिसृणि इत्यादिषु आदौ सर्वावयवा-देशस्ततोनुणागमः। भाष्यटीकाकृतौ तु स्यमोर्लुकि कृतेऽपि आदेशौ विभाष्यते तन्मते प्रियतिसृ प्रियत्रि प्रियचतसृ प्रियचतुः कुलमिति। यत्र त्रिचतुरोर्न स्त्रियां वृत्तिस्तत्र समुदायस्य स्त्रियां वृत्तावपिनादेशौ। यथाप्रियास्त्रयः पुरुषा यस्या वेश्यायाः सा प्रियत्रिः प्रियत्री प्रियत्रयः इति। तिस्र इच्छति त्रिकाम्यति चतस्र इच्छति चतुर्य्यति तिसृणां पतिः त्रिपतिः चतसृभिः कृतं चतुःकृतमित्यादौ क्वेर्लुक्-त्येचेत्यनेन क्वेर्लुकि लुकि न तद्वेति निषेधान्नादेशौ। तिस्र इत्यादौ दन्त्यादेशकर-णान्न षत्वम्। ननु वासुसिष्मन्निति सुत्रेण इस् उस् इति दन्त्यान्त प्रत्ययकरणेऽपि हविषा धनुषा इत्यादौ कथं षत्वमिति चेत् सत्यं इसुसोर्मूर्द्धन्यान्तकरणे रङोऽसम्भवे हविः हविर्भ्यां धनुः धनुर्भ्यां इत्यादौ षोड़ःफे इत्यनेन डकारापत्तिः स्यादिति दन्त्यान्तकरणम्। ततश्च इसन्तोसन्तानां सषेसुस्सन्नुषक्रामिति फेरङ् अन्यत्र षत्वमिति एवमवीतन्द्र्यादयः इति। अवी तन्द्री तरी लक्ष्मी श्री स्त्री धीभ्यादि-शब्दतः। अनीबन्ततया सेर्न लोपो गौणे न ह्रस्वता इति। अवरक्षादौ अवीः तद्रिसादेमीङे तन्द्रीर्दकारमध्यः। तन्द्रीर्निद्राप्रमीलयोरित्यमरः। तृतरेऽभिभवे तरीःलक्षकाङ दर्शनेऽङ्के लक्ष्मीः। एषु औणादिक ईप्रत्ययः लक्षधातोर्मकाराग-मश्च। श्रिञ्सेवने श्रीः ह्रीलिलज्जे ह्रीः ध्यैतु चिन्तने धीः ञिभीलि भीभ्यां भीः एते क्विबन्ताः। जौमरास्तु प्रियपपीः बहुयपीः इत्युभयत्रात पठन्ति॥ १५२॥

इयुवार्थमिदं विधानम्॥ १५८॥

स्त्रीग्रहणं भ्रूनित्यर्थम्। स्त्रियं स्त्रियः इत्यभयत्र धातुसंज्ञासाफल्यार्थ-

स्त्रीभ्यः, स्त्रियाः स्त्रीभ्यां स्त्रीभ्यः, स्त्रियाः स्त्रियोः स्त्रीणां, स्त्रियां स्त्रियोः स्त्रीषु। श्रीः श्रियौ श्रियः। हे श्रीः ङित्यामि च भेदः। श्रियै श्रिये, श्रियाः श्रियः, श्रियाः श्रियः, श्रीणां श्रियां, श्रियां श्रियि श्रीषु। सुध्यादयः पुंवत्। सुष्ठुधीः प्रकृष्टाधीः इति नित्यस्त्रीत्वे सुधीप्रध्यौ श्रीर्लक्ष्मीवत्। धेनुर्मतिवत् साध्यः। धेनुः धेनू धेनवः इत्यादि। बधूर्गौरीवत्। बधूः बध्वौ बध्वः इत्यादि। एवं चमूतन्वादयः। भ्रूः श्रीवत्। भ्रूः भ्रुवौ भ्रुवः इत्यादि। सुभ्रूः हे सुभ्रु। पुनर्भूः सुलूवत्। सुभूः पुंवत्। स्वसा धातृवत्। माता पितृवत्। द्यौर्गोवत्। सुराः पुंवत्। नौ ग्लौवत्।

इति अजन्तस्त्रीलिङ्गपादः।

---

मादौ इयादेशः पश्चादीमन्तत्वाभावादम्शसोरादिलोपो न स्यात्। स्त्रियै स्त्रियाः स्त्रियाः स्त्रियां एषु चतुर्षु स्त्रीयुत्रङितीत्यत्र स्त्रीशब्दवर्जनान्नित्यदीसंज्ञायामादौ याङितामम् ङेराम्च स्यात् पश्चादियादेशः। एवं स्त्रीणामित्यत्र वामीति सूत्रे स्त्रीशब्द-वर्जनान्नित्यदीसंज्ञायामादौ नुमागमे पश्चादच् परत्वाभावान्न इयादेशः। ङित्यामि च भेदः इति। श्रीशब्दस्य स्त्रीयुत्रङितीति वामीत्येताभ्यां दीसंज्ञाविकल्पनात् रूपद्वयमित्यर्थः। सुध्यादयः पुंवदिति शोभना धीर्यस्याः स्त्रिया इति विग्रहे सुधी शब्दस्य स्त्रीलिङ्गवर्त्तित्वेऽपि पुंलिङ्गस्यापि सम्भवान्नित्यस्त्रीत्वाभावे दीसंज्ञाभावात् स्त्रीलिङ्ग-विहित-कार्य्याभावे पुंवदित्यर्थः। आदिशब्दात् सुश्री-यवक्री प्रध्यादयः। सुष्ठुधीः इत्यादि। शोभना चासौ धीश्चेति सुधीः प्रकृष्टा चासौ धीश्चेति प्रधीरिति कर्मधारये नित्यस्त्रीत्वाद्दीसंज्ञायां सुधीप्रध्यौ क्रमात् श्रीलक्ष्मीवत्। सुधीशब्द इयस्थानित्वेन ङित्यामिव पाक्षिकदीसंज्ञकतया श्रीशब्दवत्। प्रधीशब्दस्य नित्यस्त्रीलिङ्गत्वेन नित्यदीसंज्ञकत्वाल्लक्ष्मीशब्दवदित्यर्थः। अत्र प्रधीशब्दस्य क्विबुत्पत्तेरनन्तरं कृतसमासस्यापीयप्राप्तिबीजं कव्यादनेकाच इत्यत्र व्याख्यातम्। एवं चमूतन्वादय इति। तनु शब्दस्तु तन्वादेर्वेति ऊप्पक्षे बधूवत्। अनूबन्तपक्षे धेनुवदिति। पुनर्भूः सुलूवदिति पुनर्भूशब्दस्य कव्यादीतिवकार प्राप्त्या सुलूशब्देन साम्यं नतु सर्वरूपैः तेनास्यनित्यस्त्रीत्वाद्दीसंज्ञायां सर्वत्र बधूशब्दवदेव रूपम्। एवं दृन्भूवर्षाभूकाराभूणामपि रूपं बोध्यम्।

चतुर्थः पादः। [ अजन्तक्लीवलिङ्गशब्दः। ]

## १६० । क्लीवात् स्यमोऽधेर्मोऽतः ।

क्लीवात् ५।, सि-अम: ६। अधे: ६।, म: १।, अत: ५।।

अकारान्तात् नपुंसकात् परस्याधेः सेरमश्च मः स्यात्। ज्ञानं हे ज्ञान।

## १६१ । क्लीवात् यौ ।

क्लीवात् ५।, ई।१।, औ १।।

क्लीवात्पर औ ईः स्यात्। ज्ञाने।

## १६२ । जस्शसोः शिः ।

जस्शसोः ६॥, शिः १।।

क्लीवात् परस्य जसः शसश्च शिः स्यात्, श इत्।

---

सुभ्रूःपुंवदिति नित्यस्त्रीत्वाभावे नदीसंज्ञाभावादित्यर्थः। स्वसा धातृवदिति वृद्धिप्राप्त्या साम्यं नतु सर्वरूपैः तेन शसि स्वसृरिति माता पितृवदिति अत्रापि गुणप्राप्त्या साम्यं नतु सर्वरूपैः तेन शसि मातृरिति॥ १५९॥

इति स्त्रीलिङ्गपादः।

---

ननु स्वदीर्भ्यामित्यनेन आदिलोपादेवेष्टसिद्धौ अमो मकारविधानं कथमिति चेन्न सर्वलिङ्गविषयस्य स्वदीर्भ्यामित्यस्य क्लीवमात्रविषयेण स्यमोर्लुगित्यनेन वाधितत्वात् लुगापत्तेः ज्ञानमित्यादौ मकारस्य विभक्त्याद्यवयवभिन्नत्वादात्तिमभवीत्यनेन आकारो न स्यात्॥ १६०॥

ई औ इत्युभयं लुप्तप्रथमैकम्। पुनः क्लीवादित्युपादानं सामान्यार्थं तेन सर्वस्मात् क्लीवात् औकार ईः स्यादित्यर्थः। यथा ज्ञाने वारिणी मधुनी कर्तृणी पयसी॥ १६१॥

शित्करणं शिःक्लीव इत्यादौ विशेषज्ञापनार्थं सव इः क्लीव इति कृते सप्तम्येकवचनभ्रमः स्यात् इति। कति फलानि षट्पर्वाणि पञ्च मूलानि षष्टौ

**१६३। नुमयमादौ झसन्तरलादौ तु वा।**

नुम् ।१।, अयमादौ ७।, झसन्तरलादौ ७।, तु ।१।, वा ।१।।

क्लीबस्य शौ परे नुम् स्यात्, न तु यमादौ, झसन्तरलयो-रादौ तु वा स्यात्।

**१६४। नसब्महन्नोऽधोर्घोऽधौ घौ।**

नस्-अप्-महत्-न: ६।, अधो: ६।, घं: १।, अधौ ७।, घौ ७।।

नसन्तस्यापो महतो नान्तस्य च धुवर्जस्य घं: स्यात् अधौ घौ परे। ज्ञानानि। द्वौ प्रीवत्। शेषं रामवत्। एवं वन-धन-फलादयः।

---

फलानि एषु लिङ्गविहितकार्य्यनिषेधान्न शि:। गौणे तु अतिकतीनि अतिषंषि अतिपञ्चानि अत्यष्टानि इत्यादौ स्यादेव॥ १६२॥

नुम: प्रकृतिभाजित्वात् ज्ञानानीत्यादौ नान्तत्वाद्दीर्घ: यमस्यादि: यमादि: न यमादि: अयमादि: तस्मिन्। झस् अन्तौ ययोस्तौ झसन्तौ झसन्तौ च तौ रलौ चेति झसन्तरलौ तयोरादि: झसन्तरलादि: तस्मिन्। यमस्यादौ तु अभय-माचक्षाणानि कुलानि अभयि पापत्वमाचक्षाणानि पापवि चत्वारि कुशलमाच-क्षाणानि कुशलि सुगण माचक्षाणानि सुगणि बहुयज्वानि प्रशामि इत्यादि। ननु नुमयम इति कृते यमन्तलिङ्गस्य नुम्निषेधादेवेष्टसिद्धौ अयमादाविति व्यर्थमिति चेन्न। अभ्रगत्यां क्विपि अभ्रि जलानि इत्यादौ यमन्तत्वान्नुमोऽप्रसङ्गात्। झस-न्तरलादौ तु ऊनर्जि ऊर्जि सु ल्गि सुवनल्गि। अत वा शब्दस्य व्यवस्थावाचित्वात् वहूर्जशब्दस्य रेफात् परो नुम्वा स्यात् तेन बहूर्न्जि बहूर्जि इति। अत्यूर्जादिषु रेफात् पूर्वमेव। ननु झसन्तरलोस्तुवेति कृते झसन्तरलन्तलिङ्गयोर्नुम्विभाषयैवेष्टसिद्धौ झसन्तरलादौ तुवेति कथमिति चेन्न ऊर्जं बलं रातीति ऊर्ग्र: हनजनाद्गमादे-रिति ड:। तत ऊर्ग्रमाचक्षाणानि कुलानि ऊर्ग्रि इत्यादौ झसन्तरलन्तलिङ्ग-भिन्नतया नुम्विभाषानुपपत्तौ यमादौ नुम् निषेधापत्ते:॥ १६३॥

नस्च अप्च महच्च न चेति नसब्महन्न तस्य। यथा विद्वान् आप: महान्। न इति नान्तलिङ्गस्य ग्रहणम्। यथा राजा ज्ञानानीत्यादौ लिङ्गभाजिनो नुमो-लिङ्गान्तेन जातत्वान्नान्तत्वम्। पचन्नित्यादौ तु नकारस्य लिङ्गभाजित्वेऽपि लिङ्ग-

### १६५। तोऽन्यादेर्मोऽनेकतरात्।

त: १।, अन्यादे: ५।, म: ६।, अनेकतरात् ५।।

अन्यादे: परस्य स्यमोर्मस्य त: स्यात् नत्वेकतरात् परस्य। अन्यत् अन्ये अन्यानि। हे अन्य। पुनस्तद्वत्। शेषं पुंवत्। एवमन्यतरादय:। अनेकतरात् किम्? एकतरम्।

### १६६। जरातोऽम् वा।

जरात: ५।, अम् ।१।, वा ।१।।

जराशब्दात्परस्य स्यमोर्मस्य अम् स्यात् वा। अजरसम् अजरम्, अजरसी अजरे, अजरांसि अजराणि। पुनस्तद्वत्। शेषं पुंवत् [ ११६ ] पाददन्तेति शीर्षहृदयोदकासनानां शीर्षन् हृदुदनासन:। शीर्षाणि शीर्ष्णा शीर्षभ्याम् इत्यादि। हृन्दि हृदा हृद्भ्याम् इत्यादि। उदानि, उद्ना, उदभ्याम् इत्यादि। आसानि आस्ना आसभ्याम् इत्यादि। पक्षे शेषे च ज्ञानवत्।

### १६७। क्लीबे स्व:।

क्लीबे ७।, स्व: १।।

क्लीबे घस्य स्व: स्यात्। श्रीपम्। ज्ञानवत्।

---

मध्ये विहितत्वान्न नान्तत्वम्। अधीरिति किं सुहिन् सुहिंसौ। अधाविति किं हे विद्वन्। पूर्वत: शेरनुबन्धत्वावपि धाविविकरणं सर्वलिङ्गेषु दीर्घार्थम्। तेन पयांसि स्वाम्बि महान्ति कर्माणि स्त्रियान्तु सीमा सीमानावित्यादि ॥ १६४ ॥

स्यमोर्मस्येति किं हे अन्य। अन्यतमस्य अन्यादित्वाभावादन्यतममिति ॥ १६५ ॥

सेर्मस्य अमि जरसादेशेऽजरसम्। पक्षे ध्यमृशसादेरिति ज्ञापकादमादेश-स्याप्यादिलोपे अजरमिति। अमितु आदौ जरसादेशे अमो लुगापत्ति: स्यादिति। वाशब्दस्य व्यवस्थया अन्तरङ्गत्वाद्बलवतोऽपि जरसादेशादादौ अमो मकारे तस्य अमादेशे अजरसम् अजरमिति अन्यथा अमोनित्यत्वेऽपीष्टसिद्धौ वा ग्रहणस्य वैय-र्थ्यापत्ते: ॥ १६६ ॥

क्लीबे वृत्तौ सत्यामेव ह्रस्व: स्यात् नतु निमित्तान्तरापेक्षास्तीत्यर्थ:। एवं येन

## १६८। स्यमो लुंक्।

सि-अमोः ६॥, लुक् ।१। ।

क्लीवात्परयोः स्यमोर्लुक् स्यात्। वारि।

## १६९। नुम्निकोऽच्यनामि।

नुण् ।१।, इकः ६।, अचि ७।, अनामि ७। ।

इगन्तस्य क्लीवस्य नुण् स्यादचि परे नत्वामि। वारिणी वारीणि।

## १७०। णुर्धौ वा।

णुः १।, धौ ७।, वा ।१।, ।

इगन्तस्य क्लीवस्य णुर्वा स्यात् धौ परे। हे वारे हे वारि। वारिणी वारीणि, वारिणा वारिणे वारिणः वारिणः वारिणोः वारीणां, वारिणि वारिणोः। हसि च हरिवत्।

## १७१। पुंवद्वार्थोक्तपुंस्कं टाद्यचि।

पुंवत् ।१।, वा ।१।, अर्थोक्तपुंस्कं १।, टाद्यचि ७।।

---

विधिस्तदन्तस्येति न्यायात्तदन्तस्यैव ह्रस्वः। अन्यथा श्रीपमित्यादौ श्रीशब्दस्यापि-ह्रस्वापत्तिः। श्रियं पातीति श्रीपा प्रकृतिः। क्लीवे प्रयोगे ह्रस्वे श्रीपम्॥ १६७॥

लुक्करणेन लुकि न तवेति निषेधात् यत् तत् इत्यादौ विभक्ति निमित्तकाऽऽ-रकारादयो न स्युः। विराम्विहितकार्य्याणि स्युरेव॥ १६८॥

नुणो लिङ्गभाजित्वात् वारीणि मधूनि इत्यादौ नान्तत्वाद्दीर्घः। येन केनापि प्रकारेण इगन्तस्यापि ग्रहणम्। तेन प्रद्युनी सुरिणी सुनुनी इत्यादि सिद्धम्। अनामीति किं वारीणामित्यादौ अन्तरङ्गत्वादादौ नुणि कृते ह्रस्वपरत्वाभावान्नु-मागमाभावे दध्निनामित्यादिवद्दीर्घो न स्यादिति॥ १६९॥

धेर्लुकि कृते लुकिनतवेति निषेधात् णुर्धिर्जस् इत्यस्य णुर्ङिध्योरित्यस्य चाप्राप्तौ विभाषा। हे वारे हे वारि हे मधो हे मधु हे धातः हे धातृ। इहापि येन केनापि प्रकारेण इगन्त-ग्रहणात् हे प्रद्यो हे प्रद्यु इत्यादि॥ १७०॥

वाग्रहणं परत्र वाधिकारनिवृत्त्यर्थम्। पुमानिव पुंवत् अर्थेन एकार्थेन उक्तः

इगन्तं क्लीवम् अर्थेन प्रोक्तपुंस्कं पुंवद्वा स्यात् टाद्यचि । अनादये अनादिने इत्यादि । शेषं वारिवत् । अर्थेन किम् ? पीलुने फलाय ।

## १७२ । दध्यस्थिसक्थ्यक्ष्णोऽनङ् ।

दधि-अस्थि-सक्थि-अक्ष्णः ६।, अनङ् ।१। ।

एषामनङ् स्यात् टाद्यचि अङावितौ । [११७] अनोऽल्लोपः । दध्ना दध्ने दध्नः दध्नः दध्नोः दध्नां दध्नि दधनि दध्नोः : शेषं वारिवत् । एवमस्थि सक्थि अक्षि । सुधि सुधिनी सुधीनि । हे सुधे हे सुधि । सुधि सुधिनी सुधीनि । सुधिया सुधिना इत्यादि । एवं प्रध्यादयः । मधु मधुनी मधूनि हे मधो हे मधु । द्वौ प्रीवत् । मधुना मधुभ्याम् इत्यादि । एवमम्बुसान्वादयः । [११६] पाददन्तेति स्नु वा । स्नूनि सानूनि इत्यादि भेदः । धातृ धातृणी धातॄणि । धौ । हे धातः हे धातृ । द्वौ प्रीवत् । धात्रा धातृणा इत्यादि । एवं ज्ञातृकर्त्रादयः ।

---

पुमान् येन तत् अर्थोक्तपुंस्कम् । यथा नास्ति आदिर्यस्य तत् कुलं अनादि आदिरहितमित्यर्थः । अनादिः पुरुषः आदिरहित इत्यर्थः । अतएव अनादिशब्द एकार्थोक्तपुंस्कः । एकार्थेन किं पीलुने फलाय पीलुः वृक्षविशेषवाची पुंलिङ्गः । द्विहीनं प्रसवे सर्वं हरीतक्यादयः स्त्रियामित्यमरात् फलपुष्पादिवाचित्वे वृक्षवाचकानां क्लीवत्वाभिधानात् । पीलु फलम् । अत्र पीलुशब्दस्य अर्थोक्तपुंस्कत्वं नास्तीति पुंवद्भावो माभूत् । एवं रसे कटुः कट्वकार्य्ये त्रिषु मत्सरतीक्ष्णयोरित्यमरात् कटुने अकार्य्याय अत्र पुंवद्भावो न स्यात् कटवे कटुने कुलाय मत्सराय तीक्ष्णाय वा इत्यर्थः । अत्र स्यादेव । एवञ्च तुवरस्तु कषायोऽस्त्री मधुरो लवणः कटुः । तिक्तोऽम्लश्च रसाः पुंसि तद्वत्सु षड़मी त्रिषु इत्यमरेण रसवति लिङ्गत्रयाभिधानात् कटवे कटुने फलाय इत्यादि स्यादेव ॥ १७१ ॥

गौणेऽप्ययम् । पीतदध्ना पुरुषेण धृतास्थ्ना शिवेन एवं अतिसक्थ्ना अत्यक्ष्णा पीतदध्ने स्त्रियै । अत्र दध्यादीनां रुढ़मेव ग्रहण तेन दधातीति दधिः हिंस्रा-

## १७३। एचो युत् स्वम्।

एचः १॥, युत् ।१।, स्वम् २। ।

प्रद्यु प्रद्युनी प्रद्यूनि। हे प्रद्यो हे प्रद्यु। द्यो प्रीवत्। प्रद्यवा प्रद्युना इत्यादि। सुरि सुरिणी सुरीणि। धी। हे सुरे हे सुरि। सुराया सुरिणा सुराभ्याम् इत्यादि। सुनु सुनुनी सुनूनि। धी। हे सुनो हे सुनु इत्यादि। सुनावा सुनुना इत्यादि।

इति अजन्तनपुंसकलिङ्गपादः।

अजन्ताध्यायः।

---

टुङ् क्लीपिन इति किः द्वित्वञ्च। दधये पुरुषाय दध्ये दधये स्त्रियै दधये दधिने ज्ञानाय इत्यादौ अनङ् न स्यात्। सुधीति। शोभना धीर्यस्य तत् सुधि कुलं इत्यादीनामप्येकार्थेनोक्तपुंस्कत्वम्। एवं प्रध्यादयः धातृ इति दधातीति धातृ फलम्। अस्याप्येकार्थेनोक्तपुंस्कत्वम्। एवं ज्ञातृकर्त्रादय इत्यादौ अनङ् न स्यात्। जानातीति ज्ञातृ कुलं करोतीति कर्तृकुलं एतदादीनामप्येकार्थेनोक्त-पुंस्कत्वम्॥ १७२॥

इत्यजन्ताध्यायः।

---

एचः क्लीवे स्व इत्यादिभिर्ह्रस्वं प्राप्नुवन्तो युदेव प्राप्नुवन्तीत्यर्थः ननु समान-व्यवस्थयैवेष्टसिद्धौ किमनेनेति चेन्न कण्ठत्वे समानस्य अकारस्याप्यापत्तेः। प्रकृष्टा द्यौः स्वर्गो यस्मात् तत् प्रद्युपुण्यम्। शोभनो राः धनं यस्य तत् सुरि धनम्। शोभना नौर्यत्र तत्सुनु जलम्। एषामप्येकार्थेनोक्तपुंस्कत्वम्॥ १७३॥

इति श्रीदुर्गादास विद्यावागीशकृतायां मुग्धबोधटीकायामजन्ताध्यायटीका।

हसन्ताध्यायः । प्रथमः पादः । हसन्तपुंलिङ्गशब्दः ।

### १७४ । द्विरुक्तजक्षादी द्विः ।

द्विरुक्त जक्षादी १॥, द्विः १। ।

कृतद्वित्वशब्दो जक्षादिश्च द्विसंज्ञः स्यात् ।

### १७५ । होढोभौ ।

हः ६।, ढः १।, भौ ७। ।

हस्य ढः स्यात् भौ परे । [१४८] आबोम्भसात् सेर्लोपः । [६४] झप् झसोः इति चप्जबौ वा । लिट् लिड् लिहौ लिहः, लिहं लिहौ लिहः, लिहा लिड्भ्याम् इत्यादि ।

### १७६ । दादेर्घः ।

दादेः ६।, घः १। ।

दकारादेर्हस्य घः स्यात् भौ परे ।

---

पूर्वे प्रयोजनाभावादनुक्ता संज्ञा आह । अत्र द्वेरेकत्वेऽपि द्विरुक्तजक्षादी इति द्विवचनं प्रकृतिविकृतिभेदान्न विरुद्धं अतएव द्वौ द्वौ माघादिमासौ स्यादृतुरित्यमरः । एवं युवाल्पौकन्वेत्यत्रापि बोध्यं जक्षादिस्तु जक्षितिश्च दरिद्रातिश्चकास्तिः शास्तिरेव च । दीधीवेवी च जागर्त्तिर्जक्षादिः सप्तधातुभिः । फलन्तु शत्रन्तस्य त्रिदचोऽद्वेरिति द्विवर्जनात् । जक्षत् जक्षती क्लीवे जस्शसोः द्वेः शतुर्नुर्वेति जक्षति जक्षन्ति । आख्यातिकेऽन्तोऽद्द्वेरिति जक्षति अनुस्सिद्वेरिति अजक्षुः । दीधीवेवी इति द्वौ वैदिकौ आत्मनेपदिनौ विभक्तिव्यत्ययात् परस्मैपदे अनुस्सिद्वेरिति अनउसि गुणस्यठ्यामिति गुणे अदीधयुः अवेवयुरितिकामधेनौ वोपदेवः ॥ १७४ ॥

ल्विट् लिड् भ्याम् । लिढि अलेट् ॥ १७५ ॥

द आदिर्यस्य हस्य स दादिः । तस्य हकारस्य दकारादित्वमव्यवधाने न सम्भवतीति एकाच्व्यवधाने बोध्यम् । तेन धुक् धुग् । अनेकाच् व्यवधाने तु दधिलिट् इत्यादौ न स्यात् । हस्व्यवधानन्तु सजातीयत्वादव्यवधानवत् । तेन द्राह्रङ्जागरे क्विपि ध्राक् ध्राग् ध्राग्भ्यामित्यादि ॥ १७६ ॥

## १७७। झभान्तस्यादिजबां झभाः फे, धोस्तु सध्वेऽन्ते च।

झभान्तस्य ६।, आदिजबां ६।।।, झभाः १।।।, फे ७।, धोः ६।, तु ।१।, सध्वे ७।, अन्ते ७।, च ।१।।

झभान्तस्यादौ स्थितानां जबानां झभाः स्युः फेपरे, धोस्तु सध्वे अन्ते च। धुक् धुग् दुहौ दुहः, दुहं दुहौ दुहः, दुहा धुग्भ्याम् इत्यादि।

## १७८। मुहां घङ् वा भौ।

मुहां ६।।।, घङ् ।१।, वा ।१।, भौ ७।।

---

झभश्चासावन्तश्चेति झभान्तः। अन्ते स्थितस्य झभस्य आदौ स्थिता ये जबास्तेषां झभाः स्युरित्यर्थः तेषाञ्च अव्यवधानेऽसम्भवात् एकाज्व्यवधाने एव स्युः। यथा भुत् भुद्भ्यामित्यादि एवं दघ्नोतीति क्विपि धक् धग् भ्यामित्यादि फेपरे विधानादेव प्रकृत्यन्तझभप्राप्तौ अन्तग्रहणं आदिष्ट झभोऽपि प्राप्त्यर्थम्। तेन गूहतीति क्विपि घुट् घुड्भ्यां दोग्धीति क्विपि धुक् धुग् भ्यामित्यादि। हसव्यवधानन्तु अव्यवधानवत् सजातीयत्वात् तेन द्रुह्युजिघांसि ध्रुक् ध्रुग् भ्यामित्यादि। गां दोग्धीति गोधुक् गर्दभमाचष्टे इति ञौक्विपि गर्दप् इत्यादौ अनेकाच् व्यवधानत्वे न पूर्वस्य। धातोस्तु धोक्ष्यति अधुग्ध्वं अधोक्। सध्वे किं दुग्धम्। व्यध्यौताड़े इत्यस्य दन्त्यवकारादित्वात् मृगाविदित्यादौ न प्रसङ्गः। किन्तु चपोऽबे जब् इत्यादिवत् एकवचनेनैवेष्टसिद्धौ जबामिति बहुवचनं ज्ञापयति कदाचिद्दन्त्यवकारस्य जबभिन्नस्यापि भः स्यात् तेन व्यध्यौताड़े सनि बिभ्यत्सति इत्यत्र बकारस्य भकारः। एवं न्यासोऽपि सनि खिःपरस्य व्यधेर्वकारोवर्ग्यः अन्यत्र दन्त्य इत्याह। एवञ्च जकारस्य झकारो न स्यादिति वक्तव्यम्। तेन जभतीति क्विपि जप् जब्भ्यां ङजिहृषत्वे जेहते इति क्विपि जेट् जेड् भ्यामित्यादि अतएव झभान्तस्यादिजबां ढभा इत्येव केचित् पठन्ति। एवं धातोस्तु सध्वेऽन्तेचेति नियमादेव लिङ्गस्य पूर्वतोऽनु वर्त्तमानेन भौ इत्यनेनापि फ प्राप्तौ फग्रहणं स्पष्टार्थम्॥ १७७॥

बहुवचनं गणार्थम्। गणश्च। मुह्द्रुह्ष्णुह्ष्णिह्नश्यषिह्याः पञ्च मुहादयः।

मुहादीनां वङ् वा स्यात् भौ परे। मुक् मुग् मुट् मुड् मुहौ मुहः, मुहं मुहौ मुहः, मुहा मुगभ्यां मुड्भ्यामित्यादि। एवं द्रुह स्नुह नश ष्णिहः।

## १७९। वाहो वौ पौ श्वेतात् तु वा।

वाहः ६।, वा ।१।, औ ।१।, पौ ७।, श्वेतात् ५।, तु ।१।, वा ।१।।

वाहो वाशब्दस्य औः स्यात् पौ परे, श्वेतवाहस्तु वा। विश्वौहः विश्वौहा इत्यादि। शेषं लिड्वत्।

## १८०। अनादूः।

अनात् ५।, ऊः १।।

अनवर्णात् परो वाहो वा ऊः स्यात् पौ परे। भूहः भूहा इत्यादि।

## १८१। अनडुच्चतुरोऽणाणौ धिघ्योः।

अनडुह् चतुरः ६।, अण् आणौ १॥, धिघ्योः ७॥।

अनडुहश्चतुरश्च धौ परे ऽण् घौ परे आण् स्यात्, णइत्।

---

द्रुहस्तु घडोऽप्रातिपदे होढौभावित्यनेन ढ एव न तु दादेर्घ इत्यनेन घः। अन्यथा दादेर्घ इत्यनेनैवेष्टसिद्धौ मुहादावस्य पाठो व्यर्थः स्यात् तेन ध्रुक् ध्रुग् ध्रुट् ध्रुड् ॥ १७८ ॥

औकारेणापीष्टसिद्धौ औकरणं हसात् परस्यापि प्राप्त्यर्थम्। तेन वार्वहतीति वार्वाट् अस्य शसादौ वारौहः इत्यादि स्यात्। न च वाहो वौटपौ इति कृतेऽपीष्टसिद्धिरिति वाच्यं हसात् परत्र आदूटौत्रिः इत्यस्याप्राप्तौ वारौह इत्याद्यसिद्धेः। हसन्त पूर्वादाहौविन्नास्तीत्येके ॥ १७९ ॥

अः अवर्णः न अः अनः तस्मात्। यादृग्जातीयस्य विप्रतिषेधो विधिरपि तादृग्जातीयस्येति न्यायादनवर्णपदेन अवर्णसजातीयोऽजेव ग्राह्यो न तु हसः। ततश्च पूर्वसूत्रमवर्णविषयं हसविषयञ्च एतत् सूत्रमिवर्णाद्यच् विषयमिति बोध्यम् ॥ १८० ॥

अनडुच्चतुर इत्येकवचनं यथा संख्यनिरासार्थम्। अणाणौ धिघ्योरित्युभयस्य द्विवचनान्तत्वात् यथासंख्यमस्त्येव। णित्वादन्त्याचः परौ ॥ १८१ ॥

## १८२। हो नः सौ।

हः ६।, नः १।, सौ ७।

अनडुहो हस्य नः स्यात् सौ परे। अनड्वान्। हे अनड्वन्। अनड्वाहौ अनड्वाहः। अनड्वाहं अनड्वाहौ अनडुहः अनडुहा।

## १८३। स्रस्ध्वस्वस्वनडुहां दङ् फे।

स्रस् ध्वस् वस्-अनडुहां ६।।।, दङ् ।१।, फे ७।

एषां दङ् स्यात् फे परे अङावितौ। अनडुद्भ्याम् इत्यादि।

## १८४। श्वेतवाहवयाजुक्थशास्पुरोडाशां डस्ङ्।

श्वेतवाह पुरोडाशां ६।।।, डस् ङ् ।१।

एषामन्तस्य डस्ङ् स्यात् फे परे, ङङावितौ।

## १८५। अत्वसोऽधोः सौ घोंऽधौ।

अत्-अस: ६।, अधोः ६।, सौ ७।, घः १।, अधौ ७।

अत्वन्तस्यासन्तस्य च घः स्यात् अधौ सौ परे, न तु धोः। श्वेतवाः।

---

अनडुहश्चतुरोरनुवृत्तावपि चतुरो हकाराभावादनडुह एवेत्यर्थः॥ १८२॥

स्रस्ध्वस्वसनां सस्य झप्झसोरित्यनेनैव दत्वे सिद्धे किमनेनेति चेन्न दान्तादान्तविषयस्य झप्झसोरित्यस्य दान्तमात्रविषयेण स्रोर्विः फे इत्यनेन बाधितत्वाद्विसर्गापत्तेः स्रन्स ध्वन्स एतयोः क्विपि नलोपे स्रत् स्रद्भ्यां ध्वत् ध्वद्भ्याम्। वसुरिति क्वसुप्रत्ययः। विद्वत् कुलं विद्वद्भ्याम् अन्यत्र सुवस्तेः क्विपि सुवः सुवोभ्यामित्यादौ न स्यात्॥ १८३॥

पुरोडीभ्यो डस् इत्यनेनैवेष्टसिद्धौ डसङ्विधानं ङित्त्वादन्तस्य स्थाने जातत्वेन डसङो लिङ्गभाजित्वार्थम्। तेन श्वेतवाहादीनामसन्तत्वादत्वसोर्धोः मात्विति दीर्घः स्यात्। नच तत् सूत्रे असन्तलिङ्गत्वं कथं वक्ष्यामीति वाच्यम्। दन्त्य श्वासौ सश्चेति दन्त्यस इत्यादावपि दीर्घापत्तेः। अत भिन्नस्य दन्त्यसकारस्य अकारेण असन्तत्वं नास्तीत्यर्थः॥ १८४॥

अतश्च असश्च अत्वस् तस्य। अत्वन्तस्य यथा श्रीमान् धनवान् मघवान् यश-

### १८६। डसङो धौ वा।

डसङः ६।, धौ ७, वा ।१।।

डसङो धौ परे धौ वा स्यात्। हे श्वेतवाः हे श्वेतवः। श्वेतवाहौ श्वेतवाहः, श्वेतवाहं श्वेतवाहौ श्वेतौहः श्वेतवाहः, श्वेतौहा श्वेतवाहा श्वेतवोभ्याम् इत्यादि। [१११]किलादिति षः। तुराषाट् तुराषाड् तुरासाहौ तुरासाहः, तुरासाहं तुरासाहौ तुरासाहः, तुरासाहा तुराषाड्भ्याम् इत्यादि। चत्वारः चतुरः, चतुर्भिः चतुर्भ्यः चतुर्भ्यः [११०]नुमाम इति चतुर्णाम्।

### १८७। रङो विः सुपि।

रङः ६।, विः १।, सुपि ७।।

रङो विः स्यात् सुपि परे नत्वन्यरेफस्य। चतुर्षु। प्रियचत्वाः, हे प्रियचत्वः, प्रियचत्वारौ प्रियचत्वारः, प्रियचत्वारं प्रियचत्वारौ प्रियचतुरः, प्रियचतुरा प्रियचतुर्भ्याम् इत्यादि।

---

दर्थ भवत् शब्दस्य भवान्। सत्वन्तस्य किं भवन् कुर्वन् इति शत्वन्तस्य न स्यात्। अधोः किं सुवः ॥ १८५ ॥

षसन्तत्वाद्दीर्घस्य धौपरे निषेधादप्राप्तौ विभाषा। ह्रोढौभाविति ढत्वे शासवस घससाढ़ाश्चेति पृथक् ग्रहणान्निमित्ताभावेऽपि षत्वम्। ढत्वाभावे तु तुरासाहौ इत्यादौ षत्वं न स्यात् ॥ १८६ ॥

सिद्धे सत्यारम्भो नियमाय ज्ञापकाय विकल्पाय वा इति स्वरसात्। सुपि परे स्रोर्विःफे इत्यनेन रेफस्य विसर्गो भवन् रङ एव स्यान्नत्वन्यरेफस्य इत्यर्थः। तेन चतुर्षु गीर्षु धूर्षु इत्यादौ विसर्गो न स्यात्। रङस्तु पिपठीःषु सुपीःषु सुतूःषु सःजूषुः अहःसु इत्यादौ विसर्गः स्यादेव। राजा इत्यत्र आदौ नस्य लुपि तदाद्य-विधेर्निषेधाद्दीर्घो न स्यादित्याशङ्क्याह नसन्महन्न इत्यादिर्घत्वे नोलुविति पूर्वं प्रकृतेः पूर्वं पूर्वमन्तरङ्गतरमिति न्यायान्नकारलोपमपेक्ष्य अन्तरङ्गतरत्वाद्बलवतो दीर्घस्यै-वादौ प्राप्तिस्ततो नकारलुबित्यभिप्रायः। ननु अन्तरङ्गत्वाद्बलवतो नकारलोपस्य प्राथमिकत्वे ह्रस्वत्वाभावात् सेर्लोपाभावे विसर्गापत्तिरिति चेन्न सर्वविधिभ्यो लोप-विधिर्बलवान् इति न्यायेन प्रत्ययनिमित्तककार्य्यात प्रागेव प्रत्ययलोपात प्रत्यय-

[१६४]नसब्महन्न इतिर्दीर्घत्वे [११८]नो लुप्। राजा हे राजन्
राजानौ राजानः, राजानं राजानौ। [११७]अनोऽल्लोपः। राज्ञः,
राज्ञा राजभ्याम् इत्यादि। ङौ। राज्ञि राजनि। [११७]अम-
वस्यादित्युक्तेः। ब्रह्मणः यज्वनः इत्यादि। शेषं राजवत्।

**१८८। हन्पूषार्य्यम्णोऽधौ सौ शौ र्घः।**

हन् पूषार्य्यमेनः ६।, अधौ ७, सौ ७, शौ ७, र्घः १।।

एषां र्घः स्यात् अधौ सौ परे, शौ च। वृत्रहा, हे वृत्रहन्,
वृत्रहणौ वृत्रहणः, वृत्रहणं वृत्रहणौ।

**१८९। हनो ङ्गो घ्नो न णः।**

हनः ६।, ङ्गः ६।, घ्नः १।, न ।१।, णः १।।

हनः स्थाने जातस्य ङ्गस्य घ्नः स्यात्। तस्य च णो न
स्यात्। वृत्रघ्नः, वृत्रघ्ना वृत्रहभ्याम् इत्यादि। एवं पूषन् अर्य्य-
मन् शार्ङ्गिन् यशस्विन् प्रभृतयः।

---

निमित्तककार्य्यानन्तरं प्रत्यये लोप्तव्ये त्यलोपे त्यलक्षणमिति न्यायस्य वैयर्थ्यापत्तेः।
न च तर्हि यः सः पन्थाः इत्यादावपि निर्विसर्गापत्तिरिति वाच्यं लोपस्वरादे-
शयोः स्वरादेशो विधिर्बलवानिति न्यायादादौ टेरकारादेः प्राप्तौ सिलोपप्रसङ्गा-
भावात्। न च तथापि यत् तत् किमित्यादावप्यादौ टेरकारोऽस्त्विति वाच्यं
स्यमोर्लुग्विधानात्। यस्य लुक् क्रियते तन्निमित्तककार्य्यस्यादावुत्पत्तौ लुक्करण-
स्यैव वैयर्थ्यापत्तिरिति ॥ १८७ ॥

हन्निति हन्धातु सम्बन्धिन एव ग्रहणं तेन प्लीहानौ दीर्घाहानौ इत्यादीनां
धात्वन्तरसाधितानां नसब्महन्न इत्यनेन दीर्घः स्यादेव। वृत्रहा पूषा अर्य्यमा।
इन्निति प्रत्ययस्तेन तदन्तस्य ग्रहणम्। धनग्राही इनन्ता ये प्रत्ययास्तदन्तानाञ्च ग्रहणम्
अधिकन्तु प्रविष्टं न च तद्धानिरिति न्यायात् तेन मेधावी गोमी वातकी वाग्मी।
एषां नान्तत्वात् नसब्महन्न इत्यनेन स्यादिपञ्चके प्राप्तव्यस्य दीर्घस्य नियमोऽयम्।
तेन वृत्रहणौ पूषणौ अर्य्यमणौ इत्यादिषु न स्यात् ॥ १८८ ॥

हन इति हनधातुसम्बन्धिनो ङ्गस्यैवेत्यर्थः। तेन अङ्गि पूर्वाह्ण इत्यादौ न
स्यात्। ॥ १८९ ॥

१९० । **पूष्णो ङिर्ङिर्वा ।**

पूष्णः ५।, ङिः १।, ङिः १।, वा ।१। ।

पूष्णि पूषणि पूषि ।

१९१ । **मघोनस्तुङ् वा क्विप्योः ।**

मघोनः ६।, तुङ् ।१।, वा ।१। क्वि-प्योः ७। ।

मघवन् शब्दस्य तुङ् वा स्यात् क्वौ पौ च परे, ङकावितौ ।

१९२ । **व्रिदचोऽद्वेर्नुण् घौ ।**

उ-ऋ-इत्-अचः ६।, अद्वेः ६।, नुण् ।१।, घौ ७। ।

उकारेत ऋकारेतोऽचस्य नुण् स्यात् घौ परे न तु द्वेः ।

---

पूषीति कश्चिन्न मन्यते ॥ १९० ॥

ङित्वान्नकारस्य स्थाने "अर्थं नानार्थशब्दानां यथाकार्य्यं वदेद्बुधः" इति वचनादत्र तुङागम एव सूच्यते न तु सवर्णो गृह्यत इति । पौ माघवतं माघवत्यं माघवती । क्वौ परे विहितत्वात् समासेक्वेर्लुकि त्यलोपे त्यलक्षणमिति न्यायेन प्राप्तस्यकार्य्यस्य लुकि न तत्वेति निषेधेऽपि नञा निर्दिष्टमनित्यमिति न्यायात् मघवती भक्तिः मघवद्भक्तिरित्यादि स्यादिति केचित् । अतएव मघवद्वत्सलज्ज्ञानिदान-मिति दुर्गसिंहधृतम् । वा ग्रहणमुत्तरत्व वाधिकारनिवृत्त्यर्थम् ॥ १९१ ॥

उश्च ऋश्च वर्णौ ताविर्तौ ययोस्तौ व्रितौ च अच व्रिदच् तस्य । उकारेतो यथा विद्वान् मघवान् भवान् श्रीमान् ज्ञानवान् । ऋकारेतो यथा भवन् अदन् दीव्यन् भविष्यन् इत्यादि । अच इति । अन्चुगति पूजनयोरित्यस्य गतावर्थं क्विपि लुप्तनकारस्य ग्रहणम् । तेन प्राङ् प्राञ्चौ इत्यादि अन्यत्र वक्रुच् इत्यादि । अद्वेरिति । नद्विः अद्विः तस्मात् । अद्वेरिति पञ्चम्यन्तम् । नञ इह अल्पार्थ एव । तेनायमर्थः । द्वेः परस्य शतन्तस्यैव नुण् न स्यात् । अन्यस्य तु स्याद्वेति । यथा ददत् दधत् पापचत् बोभुवत् जक्षत् जाग्रदित्यादि । बुभूषन् चिकीर्षन्नित्यादौ तु लोपोऽतोऽद्वेचोरित्यनेन कृतस्य शपोर्लोपस्य स्थानिवत्त्वात् द्वेः परत्वाभावे नुण् स्यात् एव । न च ददद्त्यादावपि लुगद्भ्योऽप इत्यनेन कृतस्याकारलोपस्य स्थानिवत्त्वात् नुणापत्तिरिति वाच्यम् । लोपोऽस्योमाङ्गे रिति लोपोऽतोऽद्वेचोरिति हसाल्लोपोऽशतीत्येतभ्योऽन्यसूत्रेण कृतस्य अकार-

१९३ । **स्यान्तस्यारात् लुप् फे ।**

स्यान्तस्य ६।, अरात् ५।, लुप् ।१।, फे ७। ।

स्यस्यान्तस्य लुप् स्यात् फे परे, न तु रात्परस्य । मघवान् मघवा, हे मघवन्, मघवन्तौ मघवानौ, मघवन्तः मघवानः, मघवन्तं मघवानं, मघवन्तौ मघवानौ ।

१९४ । **श्वयुवमघोनामुर्वोऽते पौ ।**

श्वयुवमघोनां ६।॥, उः १।, वः ६।, अते ७।, पौ ७। ।

एषां वशब्दस्य उः स्यात् पौ परे, न तु ते । मघवतः मघोनः, मघवता मघोना, मघवद्भ्यां मघवभ्याम् इत्यादि । शुनः शुना । यूनः यूना । शेषं राजवत् । अर्वा हे अर्वन् ।

---

लोपस्य स्थानवत्त्वानङ्गीकारात् । अस्य बीजं सक्कोऽल्लोपोऽच्यच्च इत्यत्र द्रष्टव्यम् । हेः परस्य शवन्तादन्यस्य तु ददिवान् जजागृवान् जग्मिवान् जगन्वान् वावदिष्यन् इत्यादौ नुण् स्यादेव ॥ १९२ ॥

स्यस्यान्तः स्यान्तः तस्य । लुप्करणात् वज्रमाचष्टे इति ञौटिलोपे क्विपि ञेर्लोपे वज्र् इति लिङ्गात् सौ अनेन रेफस्य लुपि जकारस्य चूडिति कुङ् न स्यात् । तेन वज् वज्रौ वज्भ्यामित्यादि । मघवानिति नस्य तुङि अत्वसोर्धो रिति दीर्घे उदित्त्वान्नुणि स्यान्तस्य लुप् । पिपचादिशब्दानां संयोगान्तस्य लुपि सन्धिलुप्येव न सन्धिरिति वचनादेव झप्झसौरित्यनेन चपे जबे च पिपक् पिपग् इत्यादि सिद्धम् । सन्ध्यध्यायसूत्र कार्यं सन्धिरिति सन्धिलक्षणात् अरादिति किं ऊर्क् उर्ग्भ्याम् । ननु पुंसोऽर्थः पुमर्थः इत्यादौ । दान्तत्वाद्विरामप्राप्तौ यथा संयोगान्तलोपस्तथा नद्यम्भ इत्यादावपि यकारादिलोपोऽस्तु इति चेन्न अस्ययं बव्वर्थ इत्यादि ज्ञापकादव सन्धिजातेतरसंयोगान्तस्यैव ग्रहणात् । न च आदेशानां विधानसामर्थ्यादेव लोपो न स्यादिति वाच्यम् । मत्या बध्वा पित्रा पठितगम्ला इत्यादावदान्ते तेषां सार्थकत्वात् अत एव टनृपां नलुग्वा इत्यादिवत् स्यान्तलुप् इत्येवा पर्द्देनैवेष्टसिद्धौ स्यान्तस्येति भिन्नपदं ज्ञापयति । रात् ङीलोपः स्यादिति । तेन चिकीर्षु इत्यादि सिद्धम् ॥ १९२ ॥

श्वन्च युवन्च मघवन्च ते तेषाम् । मघोनामिति निर्देशात् नान्तपक्षे

## १९५ । अर्वणोऽनञ स्तुङ् त्येऽसौ तु ।

अर्वणः ६।, अनञः ६।, तुङ् ।१। त्ये ७।, असौ ७।, तु ।१। ।

नञ्वर्जस्यार्वणो नस्य तुङ् स्यादसौ त्ये परे। अर्वन्तौ अर्वन्तः, अर्वन्तम् अर्वन्तौ अर्वतः, अर्वता अर्वद्भ्याम् इत्यादि। अनञः किम्। अनर्वा, हे अनर्वन्, अनर्वाणौ अनर्वाणः इत्यादि। शेषं यज्ववत्।

## १९६ । पथिमथ्यृभुक्षां थितोर्नमौ घौ ।

पथि-मथि-ऋभुक्षां ६।।।, थ इतोः ६।।, नमौ १।।, घौ ७। ।

पथिन् मथिन् ऋभुक्षिन् एषां थस्य नम् स्यात् इकारस्य चाकारः घौ परे।

## १९७ । टेरा सौ ।

टेः ६।, आ ।१।, सौ ७। ।

पथ्यादीनां टेरा स्यात् सौ परे। पन्थाः पन्थानौ पन्थानः, पन्थानं पन्थानौ।

---

एवायं विधिः। तेन मघवत्त इत्यादौ न स्यात्। अते तद्धितभिन्ने पौ। यथा शुनः यूनः मघोनः शुनी यूनी मघोनी। तद्धिते तु शौवनं यौवनं माघवनम्। गौणेऽप्येवम्। प्रियशुनः बहुयूनः इष्टमघोनः ॥ १९४ ॥

नास्ति नञ् यत्र सोऽनञ् तस्य। प्रत्यये यथा अर्वन्तौ अर्वती आर्वतं आर्वत्यं अर्वन्तमिच्छति अर्वत्यति अर्वेवाचरति अर्वत्यते इत्यादि। सहस इष्टगर्वगर्व इत्यादौ प्रत्ययाभावान्न स्यात्। दुर्गसिंहस्तु समासेऽपि तुङंविधाय अर्वन्तं गतः अर्वद्गतः अर्वद्गनमित्युदाजहार। स्वमते तु तेर्लुक्त्ये चेति तेर्लुकि त्यलोपे त्यलक्षणमिति न्यायात् प्राप्तव्यकार्यस्य लुकि न तत्रेति निषेधेऽपि नञा निर्दिष्टमनित्यमिति न्यायात् तत्समाधानीयम्। गौणेऽपि अनर्वन्तम् इति केचित् ॥ १९५ ॥

पथिन्च मथिन्च ऋभुक्षिन्च तेषाम्। थश्च इश्च थितौ तयोः। नम्च अश्च नमौ ॥ १९६ ॥

सौपरे पूर्वेण थस्य नमि इकारस्य चाकारे पन्थन्निति स्थिते राजेतिवदादौ

**१९८ । लोपोऽचा घौ ।**

लोपः १।, अचि ७।, अघौ ७। ।

पथ्यादीनां टेर्लोपः स्यात् अघावचि परे। पथः पथा पथिभ्याम् इत्यादि। एवं मन्थाः ऋभुक्षाः। [१३१] डति-संख्याणां इति पञ्च पञ्च पञ्चभिः पञ्चभ्यः पञ्चभ्यः।

**१९९ । नो नामि घः ।**

नः ६।, नामि ७।, घः १। ।

नान्तस्य नामि परे घः स्यात्। पञ्चानां पञ्चसु।

**२०० । वाष्टनो जस्शसो डौः ।**

वा ।१।, अष्टनः ५।, जस्शसोः ६॥, डौः १। ।

अष्टनः परयोर्जस्शसोर्डौः स्यात् वा, ड इत्। अष्टौ अष्ट, अष्टौ अष्ट।

---

सिलोपे ततो नलोपे पन्थेति निर्विसर्गमेव रूपं स्यात्। एवं सम्बोधने दीर्घ नकारलोपयोरप्राप्तौ हे पन्थन्नित्यनिष्टमपि स्यादिति अतष्टेरासाविति विधानम्। इदानीन्तु लोपस्वरादेशयोः स्वरादेशो विधिर्बलवानिति न्यायादादौ टेराकारे हस्परत्वाभावात् सेर्लोपाभावे विसर्गे पन्थाः हे पन्थाः॥ १९७॥

न च लोपोऽचीतिक्रतेऽपि पथिमथ्यृभुक्षामिति विशेषविधिना बाधितत्वादर्भ-रच एव प्राप्तौ अघाविति न वाच्यं यादृग्जातीयस्य विप्रतिषेधो विधिरपि तादृज्-जातीयस्येति न्यायात् घिवर्जनेन स्यादेरच एव प्राप्तव्यत्वात्। तेन पथोऽन्तः पथ्यन्त इत्यादौ न प्रसङ्गः। नवा तर्हि लोपः पौ इत्यनेनापीष्टसिद्धिरिति वाच्यं स्त्रियां नान्तत्वादीपि अतिमथिनी अतिऋभुक्षिणी इत्यत्रापि टिलोपप्रसक्तेः क्लीवे तु अति-मथी अतिऋभुक्षी कुले इत्यत्र टिलोपः स्यादेव। जस्शसोस्तु अतिपन्थानि अतिऋभुक्षाणि कुलानि॥ १९८॥

स्वसम्बन्धिनकारेण सहित आम् नाम् तस्मिन्। तेन यज्वनां दण्डिना-मित्यादौ न प्रसङ्गः पञ्चानामिति आमो नुमागमे अन्तरङ्गत्वादादावनेन दीर्घ नुमागमस्यामसम्बन्धित्वेन फलाभावात् नलुप् घधाविति नस्य लुप्॥ १९९॥

डौ इत्यस्याप्रातिपदिके तु बलवत्त्वादादौ जस्शसोर्लुकि कृते लुकि न तन्निमित्त निषेधात् डाक्तौ वेति डा न स्यात्॥ २००॥

## २०१। डा कौ वा।

डा ।१।, कौ ७।, वा ।१। ।

अष्टनो डा स्यात् वा कौ परे, ड इत्। अष्टाभिः अष्टभिः अष्टाभ्यः अष्टभ्यः, अष्टाभ्यः अष्टभ्यः, अष्टानाम्, अष्टासु अष्टसु।

## २०२। धोर्मो नः फम्वि।

धोः ६।, मः ६।, नः १।, फम्वि ७। ।

धोर्मस्य नः स्यात् फे मे वे च परे। प्रशान् प्रशामौ प्रशामः, प्रशामं प्रशामौ प्रशान्भ्याम् इत्यादि।

## २०३। इदमोऽयमियं पुंस्त्रियोः सौ।

इदमः ६।, अयम्-इयम् ।१॥, पुंस्त्रियोः ७॥, सौ १। ।

इदमः पुंलिङ्ग-स्त्रीलिङ्गयोः क्रमेणायमियमौ स्तः सौ परे। अयम्।

## २०४। दोमोऽदसश्च कौ।

दः ६।, मः १।, अदसः ६।, च ।१।, कौ ७। ।

इदमो ऽदसश्च दस्य मः स्यात् कौ परे। इमौ, इमे इमम् इमौ इमान्।

---

वा ग्रहणं वाधिकारनिवृत्त्यर्थम्। अष्टानामिति आदौ नुमागमे डादेशः। तदभावपक्षे तु दीर्घो नकारलोपश्च ॥ २०१ ॥

स्यादीयहसस्यैव फलेन वमोरप्राप्तौ पृथग्वचनम्। फे प्रशान् प्रशान्भ्या दान्तवत् सभीति दान्तत्वान्नानुस्वारः। वमोस्तु जङ्गन्मि जङ्गन्वः जङ्गन्मः जगन्वान् ॥ २०२ ॥

अयम् च इयम् च अयमियम् इति लुप्तप्रथमाद्विवचनान्तं पुंस्त्रियोरित्यनेन यथासंख्यार्थम् ॥ २०३ ॥

अस्य पुत्रः इदंपुत्रः अमुष्य कन्या अदःकन्या इत्यादौ कौर्णीकि लुकेन तत्रैव निषेधान्नादेशः ॥ २०४ ॥

## २०५। टौसीदमोऽनकोऽनः।

टा ओसि ७।, इदमः ६।, अनकः ६।, अनः १।।

अनक इदमः टौसोः परयोरनः स्यात्। अनेन।

## २०६। सभ्यः।

सभि ७।, अः १।।

अनक इदमः अः स्यात् से भे च परे। [१०८] आत्तिम-भवि। आभ्याम्।

## २०७। भिस् भिसोऽदसश्च।

भिस् १।, भिसः ६।, अदसः ५।, च ।१।।

अनक इदमोऽदसश्च परस्य भिसो भिसेव स्यात् नत्वैस्। [१०९] व्वे सभ्ये। एभिः। [१३३] टेरत्वे। [२०४] दस्य मत्वे। [११२] ङे स्मै पश्चात् [२०६] अः। अस्मै आभ्याम् एभ्यः, अस्मात् आभ्याम् एभ्यः, अस्य अनयोः एषाम्, अस्मिन् अनयोः एषु। अनकः किम्।

---

नास्ति अक् यस्य सोऽनक् तस्य अदसो निवृत्त्यर्थमिदमो ग्रहणम्॥ २०५॥

सच भच सभ तस्मिन्। अत्र मण्डूकप्लुत्याकाविलनुवर्त्तते। तेन विभक्त्यव यवसभयोरित्यर्थः। ततश्च अस्य सिद्धिः इदंसिद्धिः अस्य भद्रं इदंभद्रं इत्यादौ न प्रसङ्गः। अत्र अनक इति नञोऽल्पार्थत्वात्। अनूक्तौ सभयोः परयोरिमक स्यापि अ आदेशः यथा इमकस्मै धनं देहि अथ अस्मै भूमिं देहि इमकाभ्यां वेदोऽधीतः अथ आभ्यां तर्कोऽधीतः अकोऽप्राप्तिपक्षः एवेष्टसिद्धौ इदं वचनम् अनूक्तौ संभयोः परयोरिमकप्रयोगनिषेधार्थम्॥ २०६॥

अत्र अनक इति विशेषणमदसोऽपि अनग्भ्यामिदमदोभ्यां परस्य भिसोभिसेव स्यात् तद्रूपेणावस्थितः स्यादित्यर्थः। तेन अमुकैरिति सिद्धम्। अत्र नैसदर्थेत्य-नेनापीष्टसिद्धौ गौरवं ज्ञापयति कदाचिदैस् स्याच्च। तेन इमैर्गुणैः सप्तर्षयः स्वर्गं गता इत्यादि सिद्धम्॥ २०७॥

**२०८ । त्यादिव्यासभोस्क्तिस्सिर्वाक् प्राक्-टेर्व्यकदश्च ।**

त्यादि-स्सेः ६।, वा ।१।, अक् ।१।, प्राक् ।१।, टेः ५।, व्यक ।१।, दः १।, च ।१।।

त्याद्यन्तस्य व्यस्य स-भ-ओस्-वर्ज-क्त्यन्त-स्सेः स्से च टेः पूर्वोऽक् स्यात् वा, व्यकस्य दश्च । इमकेन इमकाभ्याम् इमकैः इत्यादि ।

**२०९ । ङीटौ सीदैतयोरेनोऽनूक्तौ ।**

ङी-टा-ओसि ७, इदैतयोः ६॥, एनः १।, अनूक्तौ ७। ।

ङ्यां टौसोश्च परत इदमेतदोरिदैतयोरेनः स्यात् उक्तस्य पश्चादुक्तौ ।

---

स च भ च ओस् च ते सभोसः । न विद्यन्ते सभोसौ यत्र सोऽसभोस् असभोस् क्तिर्यस्मात् सोऽसभोस् क्तिः स चासौ स्सिर्श्चेति असभोसक्तिसिः । पश्चात् त्यादिश्च व्यश्च असभोस्क्तिसिश्च स्सिश्चेति तस्य । यथा भवतकि भवतकः जीवतकात् खक्कः । अत्र वाशब्दस्य व्यवस्थया सामिलर्द्धे जुगुप्सने इत्यमरोक्तस्य सामि इत्यव्ययस्य न स्यादिति । सामि भुङ्क्ते सामि पश्यति । उच्चकैः प्रक परका । असभोस्क्तिस्सेः सर्वणक इयक यतक ततक युष्माककं स्सेस्तु सर्वकेण सर्वकतः । पचे भवति भवत इत्यादि । सभ ओस् क्त्यन्तस्से र्वर्जनात् सर्वस्मकै सर्वाभ्यकां सर्वयकोः सर्वेषकु इत्याद्यप्रयोगा न स्युः । सभ ओस्विभक्त्युत्पत्तेः पूर्वन्तु सर्वकस्मै सर्वकाभ्यां सर्वकयोः सर्वकेषु इत्यादयः स्युरेव । विभक्त्युत्पत्तेः पूर्वमकिकृते पुनर्विभक्त्यन्तस्य अक् न स्यात् । तेन सर्वकेणक इत्याद्यप्रयोगा न स्युः । कृपायां निन्दने ज्ञाने नीतौ दानेन मानिते । प्रार्थोऽग्वान्त्यस्वरात् पूर्वः सर्वनाम तिङव्ययादिति प्राञ्चः । क्रमेणोदाहरणानि । हासकञ्चम् । पापोऽहकम् । जल्पसकि । गोपायकै कुलायुषी । चञ्चकैर्ददाति । ह्रस्वत्वाल्पत्वयोश्च । ह्रस्वेनाल्पेन वा त्वया त्वयका । अवर्चप्रेणे च । त्वयका पुत्रेण सा गर्विता । व्यकस्येति । अव्ययस्य टेः पूर्वे अकि जाते अव्ययान्तककारस्य दकारः स्यादित्यर्थः । यथा धिक् धकित् ॥ २०८ ॥

इदश्च एतश्च इदैतौ तयोः । अनुपश्चादुक्तिः अनूक्तिः तस्याम् । टेरकारस्यावश्यकत्वेऽपि इदमेतदोरिदैतयोरिति विशेषाभिधानं कथमिति चेन्न । नपुंसके असोलुकि लुक्कि न तदेति निषेधात् टेरत्वाभावे एनत् पुष्पम् एनत् फलं पश्य

इमं विद्धि हरेर्भक्तं विद्ध्यथैनं शिवार्चकम् ।
इमाविमान् वित्त शैवानेनावेनांस्तु वैष्णवान् ॥
अनेन पूजितः कृष्णो ऽथैनेन गिरिशोऽर्चितः ।
अनयोः केशवः स्वामी शिवः स्वामी अथैनयोः ॥

[१३३] त्यदां टेरः क्तौ । कः कौ के इत्यादि । [१७७] झभान्तस्येति बस्य भः । भुत् भुद् बुधौ बुधः, बुधा भुद्भ्याम् इत्यादि ।

## २१० । युजिरोऽसे नुण् धौ ।

युजिरः ६।, असे ७।, नुण् ।१।, धौ ७। ।

**युजिरो युज् शब्दस्य नुण् स्यात् धौ परे, न तु से ।**

---

इत्यादौ मकारदकारयोः स्थितयोऽवग्रयवक्तव्यत्वात् । किञ्च इदेतयोरेनादेशविधानसामर्थ्यात् लुकि न तवेति निषेधेऽपि एनादेशः स्यात् इति । यथा विभक्त्या उक्तिस्तयैव यदि पुनरुक्तिः स्यात्तदैवादेशः स्यादिति । तेन अयं गुरुः इमं प्रणम इत्यादौ न स्यात् । एवं एकाधिकरण एव स्यात् तेन इमं गुरुं प्रणम इमं शिवं पूजय इत्यादौ न स्यात् । एन इति प्रकृत्यन्तरमप्यस्ति । तेन कण्डूयमानेन कटं कदाचिद्वन्यद्विपेनोन्मथिता त्वगस्य । अथैनमद्रेस्तनया शुशोच इति रघुः । विद्यामथैनं विजयां जयाञ्च रक्षोगणं क्षिप्नुमविघ्नतात्मा इति भट्टिः । जहातु नैनं कथमर्थसिद्धिः संशय्य कर्णादिषु तिष्ठते यः इति भारविः । इमं विद्धीत्यादि । हे साधो इमं जनं हरेर्भक्तं विद्धि इत्युक्तिः अथ एनं शिवार्चकं विद्धीति पश्चादुक्तिः । हे साधवः इमौ इमान् शैवान् वित्त इत्युक्तिः एनौ एनांस्तु वैष्णवान् वित्तेति पश्चादुक्तिः । अत्र एनौ एनानित्युभयोर्विशेष्ययोरेकं विशेषणं वैष्णवानिति बहुवचनान्तमुक्तवता आचार्य्येण नानालिङ्गानां नानावचनान्तानां विशेष्याणामेकं विशेषणं परस्यैव लिङ्गं संख्याञ्च भजतीति सूचितम् । अतएव क्रमदीश्वरोऽपि क्वचिद्भिन्नलिङ्गविभक्त्योरिति सूत्रं कृत्वा स्त्रियौ धनं सुतौ जातौ इत्युदाहृतवान् । अनेन कृष्णः पूजित इत्युक्तिः अथ एनेन गिरिशोऽर्चित इति पश्चादुक्तिः । केशवः अनयोः स्वामी इत्युक्तिः । अथ शिवः एनयोः स्वामीति पश्चादुक्तिः । अत्र अनयोरिति एनयोरिति च षष्ठीसप्तम्यन्तं बोध्यम् । स्वामिशब्देन योगे स्वामीश्वराधिपतीत्यादिना षष्ठी सप्तम्यौ विधानात् । क इत्यादि । लोपस्वरादेशयोः स्वरादेशो विधिर्बलवानिति न्यायाद्दादौ टेरत्वे मेर्विसर्गः ॥२०९॥

धौ परे धातोरसम्भवात् क्विबन्तस्येत्यर्थः ॥ २१० ॥

२११। चुङ्-क्रुङ्-युङ्-स्रग्-दिगसृगृत्विक्-दधृक्-दृक्-स्पृक्-मृगुष्णिहां कुङ् भौ।

चुङ्-उष्णिहां ६॥, कुङ् ।१।, भौ ७।।

चवर्गान्तानामञ्चादीनाञ्च कुङ् स्यात् भौ परे। [५०] म्नोर्नु-र्भस्यदान्ते [५१]। जपे जम्नोः। [१८३]। स्यान्तस्यारात् लुप् फे। युङ् युञ्जौ युञ्जः, युञ्जं युञ्जौ युजः, युजा युग्भ्याम् इत्यादि। असे किम्?—सुयुक् सुयुजौ सुयुजः इत्यादि। युजिरः किम्। युक् समाधिमान्। अञ्च क्रुञ्च युजामेव प्राक् कुङ् पृथक् ग्रहणात्। तेन खन् खञ्जौ खञ्जः इत्यादि। [१५४] शच्छ्राजिति षङ्। [१५५]। षोड़ःफे। राट् राड् राजौ राजः। एवं विभ्राट् देवेट् परिव्राट् विश्वसृट्। परिमृट्।

---

चश्च अञ्चश्च क्रुञ्चश्च युञ्जश्च स्रज्च दिश्च असृज्च ऋत्विज्च दधृष्च दृश स्पृश मृश उष्णिह्च ते तेषाम्। चश्चवर्गः सचेह धात्ववयव एव। तेन वहच् वहग्भ्यां वहनञ् वहुनञ्भ्याम् इत्यादौ न स्यात्। युज्शब्दस्य युजिरो-ऽमिनन्निति नुषिक्कते युनज् इति रूपं अन्च क्रुन्च युञ्ज एषां चवर्गान्तत्वेनैव प्राप्तौ पृथक् ग्रहणं नियमार्थम्। नियमश्च एषामेव संयोगान्तलोपादादौ कृते न-स्यानुस्वारे तस्य च ङकारे जाते स्यान्तस्य लुप् स्यात्। अन्येषां संयुक्त चवर्गा-न्तानान्तु फे परे आदौ संयोगान्तलुप् इति। तेन खजि पाङ्गुल्ये क्विपि। खन् खञ्जौ खञ्जः गुजि कूजने गुन् गुञ्जौ गुञ्जः इत्यादि स्रज् असृज् ऋत्विज् एषां चवर्गान्तत्वेऽपि शच्छ्राजिति षङ् बाधनार्थम्। उष्णिह् इति ऊर्द्ध स्निह्यतीति क्विपि मुहादिविहितघङोऽप्राप्तिपक्षे होढोभावित्यस्य बाधनार्थम्। कुङिति। कुः कवर्गः "अर्थं नानार्थशब्दानां यथा कार्य्यं वदेद्बुधः" इति वचनात् मघोनस्तु ङ्वेत्यत्र अर्वणोऽनञ इत्यत्र च यथा तुङा नुणागम एव सूच्यते न तु सवर्णो गृह्यते तथात्र कुङा चुस्थानजातत्वात् सवर्ण एव गृह्यते न तु नुणागमः सूच्यते इति। धात्ववयवजकारस्यासम्भवेन छकारस्यापि शच्छ्राजिति बाधितत्वेन च ज झ इत्येषां स्थाने कगघ इत्येते स्युरित्यर्थः यथा वचौ वाक् उक्तिः भजौ सुखभाक् भक्तिः जर्झश्च जर्क जर्क्तिः चवर्गसाहचर्य्यादन्येषामपि कगघ एषामन्यतम एव [illegible] स्थाने झपझसौ इत्यनेन यथायोग्यं कगौ स्यातामित्यर्थः। अत

२१२। विश्वराजोऽदा।

विश्वराजः ६।, अत् ।१।, आ ।१।।

विश्वराजोऽकारस्य आ स्यात् भौ परे। विश्वाराट् विश्वाराड् विश्वराजौ विश्वराजः।

२१३। स्यादेः सो लोपः कोऽषढ़न्यरचः।

स्यादेः ६।, सः ६।, लोपः १।, कः ६।, अषढ़न्यरचः ६।।

स्यादौ स्थितस्य सस्य लोपः स्यात् भौ परे। कस्य च न तु षढ़ाभ्यामन्यस्य स्थाने जातस्य रचश्च। भृट् भृड्। [६४]। झपझमोरिति सस्य दः। [४६]। स्तुस्थु भिस्थ्यादिति। भृज्जौ भृज्जः इत्यादि। ऊर्क् ऊर्ग् ऊर्जौ ऊर्जः इत्यादि। ऋत्विक् ऋत्विग् ऋत्विजौ ऋत्विजः इत्यादि। अवयाः हे अवयाः हे अवयः अवयाजौ अवयाजः, अवयोभ्याम् इत्यादि।

---

रामानन्दकाशीश्वरौ तु कुङ् इत्युकारशून्यं मत्वा रुग्नभुग्नादिसाधनाय क्तक्तवतो-रस्य नत्वे जस्य ग इति सूत्रं कल्पयतः। वस्तुतस्तु रुग्नभुग्न इत्यादौ निरवकाश-त्वादन्तरङ्गत्वाच्च आदौ चुङित्यादिना जकारस्य गकारे पश्चात्तकारस्य नकारः। भौ इति चवर्गार्थमेव अन्येषां लिङ्गानामेव ग्रहणात् फे परे इत्यर्थः। तथाहि अञ्च क्रुञ्च युज एषां धातुत्वे चवर्गान्तत्वेन कुङि अक्तिः क्रुक्तिः युक्तिरित्यादि स्यादेव। सज् असृज् ऋत्विज् दधृष् उष्णिह पञ्चानां धातुत्वासम्भवः। दिश् दृश् स्पृश् मृश् इति तालव्यान्तानां चतुर्णां धातुत्वे सम्भवत्यपि लिङ्गमध्यपाठात् लिङ्गानामेव ग्रहणम्। तेन दिष्टः दृष्टः स्पृष्टः मृष्ट इत्यादौ कुङ् न स्यात्। विश्वसृजः कुङ् वा फे इति वक्तव्यम्। विश्वसृक् विश्वसृट् विश्वसृग्भ्यां विश्व-सृड्भ्याम्॥ २११॥

भौ इत्यस्यानुवृत्तावपि अस्य धातुत्वासम्भवात् हसविरामयोरेवेत्यर्थः॥ २१२॥

स्थः संयोगः। स्थ आदिर्यस्य स स्यादिः तस्य। षश्च ढश्च षढौ ताभ्यामन्यः। ततः षढन्यस्यायमितिष्णे अधिलाहृङ्डेरभावे षढन्यसम्बन्धी इत्यर्थः। रच इति रच धातु सम्बन्धी उपचारात्। षढन्यश्च रच चेति समाहारेण न षढन्यरचः अषढन्यरचः तस्य संयोगादेः सस्य लोपो भौ परे। यथा भृट् भृड्भ्यां सस्यति

## २१५। त्यदां तदोः सः सौ।

त्यदां ६॥, तदोः ६॥, सः १।, सौ ७।।

**त्यदादीनां तदयोः सः स्यात् सौ परे। स्यः त्यौ त्ये इत्यादि सर्ववत्। एवं तद्। एषः एतौ एते इत्यादि। [२०८] ईटौसोदैतयोरेनोऽनूक्ताविति प्रयोगस्तु इदम्वत्।**

---

अवभट्। स्यादेः कस्य लोपो भौ परे। यथा तोष्टुमिच्छति तुतुचतीति क्विपि। तुतट् तुतड्भ्याम्। लेढुमिच्छतीति क्विपि लिलिट् लिलिड्भ्याम्। षढन्यसम्बन्धि-ककारवर्जनात् मोक्तुमिच्छतीति क्विपि मुमुक् मुमुग्भ्यां दोग्धुमिच्छतीति क्विपि दुधुक् दुधुग्भ्यामित्यादौ न स्यात्। रच वर्जनात् गां रचतीति क्विपि गोरक् गोरग्भ्याम्। जौमरास्तु रचधातोरपि ककारं लुप्त्वा गोरट् गोरड्भ्यामित्याहुः। एवं रचवर्जनेन प्रकृतिककारस्यापि लोपप्राप्तौ काष्ठं तचतीति काष्ठतट् काष्ठ-तड्भ्याम्। उच सेचने ससुट् सुसुड्भ्याम् इत्यादौ स्यादेव, ततश्च जातककाराणां मध्ये षढसम्बन्धी ककारो लुप्यते। रचधातोः ककारं वर्जयित्वा प्रकृतेः कका-रश्च लुप्यते इति निष्कर्षः। ननु षढभिन्नवर्णसम्बन्धककारवर्जनेनालं लाघ-वात् षढसम्बन्धिककारस्यैव लोपः क्रियतामिति चेत् सत्यं षढसम्बन्धिककारस्य लोपविधाने रचवर्जनमुन्मत्तप्रलापवद्भवतीति। एवं षढसम्बन्धिनो रचवर्जप्रकृतेश्च ककारस्य इत्यनेनाप्यतिगौरवं स्यादिति। अतएव ककारमात्रस्य लोपप्रसक्तौ षढभिन्नवर्णसम्बन्धिनो रचश्च ककारस्य वर्जनं सङ्गच्छते। भट् इति भस्जजौ श्यपाके क्विपि ग्रहस्वपाद्योरिति जिः ऋत्विगिति ऋतौ यजतीति क्विप्। ऊर्क इति ऊर्जक जीवने क्विपि जेर्लोपे रेफपरत्वान्न संयोगान्तलुप्। अवया इति अव यजतीत्यवया निपातितः॥ २१३॥

बहुवचनं गणार्थं त्यदादीनामित्यर्थः। सौ परे त्यदादीनां टेरकारे कृते अव-शिष्टौ यौ तकारदकारौ तयोः स्थाने सः स्यादित्यर्थः। तेन त्यद् तदेतदां तका-रस्य अदसो दकारस्येत्यर्थः। प्रयोगस्त्विदम्वदिति। एतं विद्धि हरेर्भक्तं विद्यार्थेनं शिवार्चकम्। एतावेतान् वित्त शैवानेनावेनांस्तु वैष्णवान्॥ एतेन पूजितः कृष्णोऽथैनेन गिरिशोऽर्चितः। एतयोः केशवः स्वामी शिवः स्वामी अथै-नयोरिति॥ २१४॥

२१५। युष्मदस्मदो स्त्वाहौ युवावौ यूयवयौ त्वन्मदौ तुभ्यमह्यौ तवममौ-सि-द्व-जस्-क्ता-ङे-ङस्सु।

युष्मद् अस्मदोः ६॥, त्व-अहौ १॥, युव-आवौ १॥, यूय-वयौ १॥, त्वद्-मदौ १॥, तुभ्य-मह्यौ १॥, तव-ममौ १॥, सि-द्व-जस्-क्ता ङे-ङस्सु ७॥।

अनयोः क्रमादेते आदेशाः एषु परेषु क्रमात् स्युः।

२१६। ङे घ्योर्मः।

ङेघ्योः ६॥, मः १।

युष्मदस्मद्भ्यां परस्य ङे इत्यस्य घेश्च मः स्यात्। त्वम् अहम्।

२१७। सभमौष्वाङ्।

स-भ-अम् औषु ७॥, आङ् ।१।।

युष्मदस्मदोराङ् स्यात् से भे अमि औकारे च परे। युवाम् आवाम्, यूयं वयं, त्वां मां, युवाम् आवाम्।

२१८। शस्-भ्यस्-ङसि-भ्यस्-ङस्-सामां न डभ्यम्-त-त-डाकमः।

शस्-सामां ६॥, न-आकमः १॥।

युष्मदस्मद्भ्यां परेषामेषां स्थाने न-डभ्यम्-त-त ड-आकम् एते क्रमात् स्युर्ड डः। युष्मान् अस्मान्।

---

त्वश्च अहश्च तौ युवश्च आवश्च तौ। यूयश्च वयश्च तौ त्वद्च मद्च तौ तुभ्यश्च मह्यश्च तौ तवश्च ममश्च तौ। सिश्च द्वश्च जस्च क्ताश्च ङे च ङस्च तेषु। मुख्यत्वे गौणत्वे चायं विधिः। यथा त्वं अहम् अतित्वम् अत्यहम्॥ २१५॥

एतदादिषु चतुर्षु सूत्रेषु मुख्यत्वे गौणत्वे च युष्मदस्मदोस्तदादेशानाञ्च ग्रहणम्। यथा युवाम् आवाम् अतियुवाम् अत्यावाम्॥ २१६॥

भकारे आङ्करणं भिस् ऐस् निवृत्त्यर्थं युष्माभिः अस्माभिः अतित्वाभिः अतिमाभिः॥ २१७॥

स्वसम्बन्धि सकारेण सहित आम् साम्। शस्च भ्यस्च ङसिश्च भ्यस्च

## २१९ । एङ् टाङ्यामि ।

एङ् ।१।, टा-ङि-आमि ७। ।

**युष्मदस्मदोरेङ् स्यात् टाङ्योः परयोः आमि च, ङ इत् । त्वया मया युवाभ्याम् आवाभ्याम् युष्माभिः अस्माभिः, तुभ्यं मह्यं युवाभ्यां आवाभ्यां युष्मभ्यम् अस्मभ्यं, त्वत् मत् युवाभ्यां आवाभ्यां युष्मत् अस्मत्, तव मम युवयोः आवयोः युष्माकम् अस्माकम् । अतित्वयाम् अतिमयाम् अतियुवयाम् अत्यावयाम् अतियुष्मयाम् अत्यस्मयाम् । [२१५] कद्वयोरर्थस्यापि ग्रहणात् । एवं सर्वत्र । त्वयि मयि युवयोः आवयोः युष्मासु अस्मासु ।**

---

ङस्च साम्च तेषाम् । नश्च ङभ्यम्च तश्च तय ङश्च आकम्च ते । अत्र नकारे तकारद्वये च अकार उच्चारणार्थः । ङतिव्यश्चेत्यादिना लिङ्गविहितकार्य्यनिषेधात् पुंसि तु शस् न इत्यस्याप्राप्तौ त्रिषु लिङ्गेषु शसो न विधानम् । युष्मान् अस्मान् अतित्वान् अतिमान् । युष्माकमित्यादौ सामि परे अन्तरङ्गत्वान्निरवकाशत्वाच्च आदौ सभमाम्वित्यनेन आङि कृते कमेनापीष्टसिद्धौ आकम्विधानं ज्ञापयति वैभक्तिककार्य्यात् पूर्वं सभमौष्वाङित्यस्य न प्रवृत्तिरिति । तेन युष्मत् अस्मत् इत्यादौ भ्यस् स्थाने तकारादेशकरणात् पूर्वं सभमाम्वित्यनेन आङ् न स्यादिति । साम आकम् विधानात् गौणत्वे सिसंज्ञाभावे सुमागमाभावात् अतित्वयामित्यादौ न प्रसङ्गः ॥ २१८ ॥

आमीति गौणार्थमेव मुख्यत्वे साम आकम्विधानात् । अतित्वयामित्यादि । त्वामतिक्रान्तानामिति वाक्ये युष्मद एकत्वे त्वदादेशे एङ्टाङ्यामि । एवं युवामतिक्रान्तानामिति वाक्ये युष्मदो द्वित्वे युवादेशः । युष्मानतिक्रान्तानामिति वाक्ये युष्मदो बहुत्वे आदेशाभावात् स्वरूपेणावस्थानम् । एवमतिमयामित्यादि । नतु बहुवचने परे त्वदाद्यादेशः कथमित्याशङ्क्याह कद्वयोरर्थस्यापि ग्रहणादिति । ततश्च अयमर्थः ;—युष्मदस्मदोर्मुख्यत्वे गौणत्वे च सि जस् ङे ङसां स्वरूपग्रहणात्तेषु परेषु त्वाह-यूयवय-तुभ्यमह्य-तवममाः स्युरेव । सिजसादिरन्यत्र युष्मदस्मदोर्मुख्यत्वे एकवचने परे त्वन्मदौ द्विवचने परे युवावौ बहुवचने परे स्वरूपेणावस्थानम् । गौणत्वे तु परविभक्तिमनादृत्य युष्मदस्मदोरेकत्वे त्वन्मदौ, द्वित्वे युवावौ, बहुत्वे स्वरूपे-

**२२०। द्वीचीषीणां क्वैद्वैर्व्वै स्ते मे वां-नौ वस्-नसौ वाऽपादवाक्यादा-वचवाहाहैवाद्दग्-दृश्यर्थैस्त्वा-मा त्वमा।**

द्वी-ची-षीणां ६॥, क्वैः ३॥, द्वैः ३॥, र्व्वैः ३॥, ते-मे ।१॥, वां-नौ ।१॥, वस्-

---

णावस्थानमिति ; यथा त्वामतिक्रान्तः अतित्वम् अतित्वाम् अतियूयम् अतित्वाम् अतित्वाम् अतित्वान् अतित्वया अतित्वाभ्याम् अतित्वाभिः अतितुभ्यम् अतित्वाभ्याम् अतित्वभ्यम् अतित्वत् अतित्वाभ्याम् अतित्वत् अतितव अतित्वयोः अतित्वयाम् अतित्वयि अतित्वयोः अतित्वासु। युवामतिक्रान्तः अतित्वम् अतियुवाम् अतियूयम् अतियुवाम् अतियुवाम् अतियुवान् अतियुवया अतियुवाभ्याम् अतियुवाभिः अतितुभ्यम् अतियुवाभ्याम् अतियुवभ्यम् अतियुवत् अतियुवाभ्याम् अतियुवत् अतितव अतियुवयोः अतियुवयाम् अतियुवयि अतियुवयोः अतियुवासु। युष्मानतिक्रान्तः अतित्वम् अतियुष्माम् अतियूयम् अतियुष्माम् अतियुष्माम् अतियुष्मान् अतियुष्मया अतियुष्माभ्याम् अतियुष्माभिः अतितुभ्यम् अतियुष्माभ्याम् अतियुष्मभ्यम् अतियुष्मत् अतियुष्माभ्याम् अतितव अतियुष्मयोः अतियुष्मयां अतियुष्मयि अतियुष्मयोः अतियुष्मासु। मामतिक्रान्तः अत्यहम् अतिमाम् अतिवयम् अतिमाम् अतिमाम् अतिमान् अतिमया अतिमाभ्याम् अतिमाभिः अतिमह्यम् अतिमाभ्याम् अतिमभ्यम् अतिमत् अतिमाभ्याम् अतिमत् अतिमम अतिमयोः अतिमयाम् अतिमयि अतिमयोः अतिमासु। आवामतिक्रान्तः अत्यहम् अत्यावाम् अतिवयम् अत्यावाम् अत्यावाम् अत्यावान् अत्यावया अत्यावाभ्याम् अत्यावाभिः अतिमह्यम् अत्यावाभ्याम् अत्यावभ्यम् अत्यावत् अत्यावाभ्याम् अत्यावत् अतिमम अत्यावयोः अत्यावयाम् अत्यावयि अत्यावयोः अत्यावासु। अस्मानतिक्रान्तः अत्यहम् अत्यस्माम् अतिवयम् अत्यस्माम् अत्यस्माम् अत्यस्मान् अत्यस्मया अत्यस्माभ्याम् अत्यस्माभिः अतिमह्यम् अत्यस्माभ्याम् अत्यस्मभ्यम् अत्यस्मत् अत्यस्माभ्याम् अत्यस्मत् अतिमम अत्यस्मयोः अत्यस्मयाम् अत्यस्मयि अत्यस्मयोः अत्यस्मासु। इति। ननु सम्भवत्येकवाक्यत्वे वाक्यभेदो न चेष्यते इति जैमिनिवचनादेकत्वद्वित्वयोरर्थयोरेव आदेशाः स्युरित्येकवाक्येन मुख्यत्वे गौणत्वेऽपि निर्वाहे सम्भवत्यपि मुख्यत्वे कद्वयोः परयोरादेशाः स्युः गौणत्वे एकत्वद्वित्वयोरादेशाः स्युरिति विधिद्वयकल्पनगौरवं ज्ञापयति क्वचित् द्वित्वेऽप्यादेशा न स्युरिति। तेन युवयोरयं युष्मदीयः युवयोर्धनं युष्मद्धनम् आवयोरिदं:

नसौ १॥, वा ।१।, अपादवाक्यादौ ७।, अ च-वा हा-ह एव अदृग् दृश्यर्थैः ३॥, त्वा-मा ।१॥, तु ।१।, अमा ३।।

**युष्मदस्मदोर्द्वीचीषीणां कैः संहितयोस्ते-मे, द्वैवां-नौ, ब्वै-वंस्-नसौ क्रमाद्वा स्याताम्। अमा युक्तयोस्तु त्वा-मा। न तु पादस्य वाक्यस्य चादौ स्थितयोः, न च वाद्यैरदर्शनार्थ-दृश्यर्थ-धुभिश्च योगे।**

---

अस्मद्गुरुः आवाभ्यां कृतम् अस्मत्कृतं युवामिच्छति युवामिवाचरति युवयोरिवाचरति वा युष्मयति युवामाचष्टे युष्मयति इत्यादौ द्वित्वेऽपि विभक्तेर्लुकि आदेशो न स्यात्। त्वया कृतं त्वत्कृतं मम धनं मद्धनं त्वामिच्छति त्वद्यति त्वामाचष्टे त्वदयति इत्यादौ स्यादेव ॥ २१९ ॥

तेश्च मेश्च तेमे वाम्च नौश्च वांनौ इत्युभयं लुप्तप्रथमाद्विवचनान्तम्। वस्‌च नस्‌च वस्‌नसौ। पादश्च वाक्यञ्च पादवाक्ये, तयोरादिः पादवाक्यादिः न पाद-वाक्यादिः अपादवाक्यादिः तस्मिन्। पादः पद्यचतुर्भागैकभागः। वाक्यं पर-स्पराकाङ्क्षायुक्तपदसमूहः। दृक्‌दर्शन न दृक् अदृक्। दृशिधातोरर्थ इव अर्थो येषां ते दृश्यर्थाः। अदृशि अदर्शने ये दृश्यर्थाः त अदृग्दृश्यर्थाः चश्च वाश्च हाश्च हश्च एवश्च अदृग्दृश्यर्थाश्च ते। न च वाहाहैवादृग्दृश्यर्थाः अचवाहाहैवा दृग्दृश्यर्थाः तैः। च वा हा ह एव इति पञ्चभिरव्ययैर्योगे आदेशा न स्युरिति गोयीचन्द्रोऽपि अत्र केचित्तु हा स्थाने ह हति ह स्थाने अह इति मन्यन्ते। एवं स्वभावाद्दर्शनार्था ये धातवस्ते यदि धातूनामनेकार्थत्वाद्दर्शनभिन्नेऽर्थे वर्त्तन्ते तदा तैर्योगेऽपि न स्युरित्यर्थः त्वाश्च माश्च त्वामा इति लुप्तप्रथमद्विवचनान्तम्। अमायुक्तयोस्तु त्वामा इति विशेषाभिधानात् चतुर्थीषष्ठ्योरिव तेमे इति। दामो-दर इत्यादि। हे मित्र दामोदरस्त्वा त्वां मा मामपि अवतु मुकुन्दस्ते तुभ्यं मे मह्य-मपि मुदं हर्षं ददातु। विष्णुस्ते तव मे ममापि अघानि पापानि निहन्तु। असौ मुरारिर्वां युवां नौ आवामपि रक्षतु। कृष्णोवां युवाभ्यां नौ आवाभ्यामपि शर्म सुखं ददातु। श्रीदयिता [illegible] युवयोः नौ आवयोर्दयां करोतु। हरिर्वो युष्मान् नो अस्मान् पुष्णात्। [illegible]र्वो युष्मभ्यं नोऽस्मभ्यं धनं ददातु। हरिर्वो युष्मा[illegible] नोऽस्माकम् अशुभानि [illegible]। [illegible]हरति युष्मानवत्वविरतं कृष्ण इति पादादिस्थितत्वात् नादेशः। [illegible] इति वाक्यादिस्थितत्वान्ना

दामोदरस्त्वावतु मापि मित्र, ददातु ते मेऽपि मुदं मुकुन्दः।
निहन्तु ते विष्णुरघानि मेऽपि, रक्षत्वसौ वामपि नौ मुरारिः॥
ददातु वां नावपि शर्म कृष्णः, करोतु वां श्रीदयितो दयां नौ।
पुष्णातु वो नोऽपि हरिर्धनं वो, ददातु नो हन्त्वशुभानि वो नः॥

अपादवाक्यादौ किं? युष्मानवत्वविरतं कृष्णोऽस्मान् पातु शङ्करः। अचादियोगे किम्?

तुभ्यं मह्यञ्च दद्यात् स्वं गोविन्दो मह्यमेव शम्।
श्रीकण्ठो मामपेक्ष्य त्वामालोकयति पूजकम्॥

---

देशः। चादियोगे उदाहरति। तुभ्यं मह्यञ्च इत्यादि सुगमम्। किञ्चात्र चकारो यदि युष्मदस्मदोः समुच्चायको भवति तदैवादेशा न स्युः। तेन रामो मुक्तिञ्च मे दद्यात् इत्यत्र चकारस्य मुक्तिभिन्नाना धनादीनां समुच्चायकत्वात् आदेशः स्यादेव। एवञ्च एव शब्दो यदा युष्मदस्मदोरवधारणे वर्त्तते तदैवादेशा न स्युः। तेन रामो मे धनमेव दद्यादित्यत्र एव शब्दस्य धनभिन्नानां पुत्रादीनां व्यवच्छेदकत्वादादेशः स्यादेव। अदृग्दृश्यर्थैर्योगे उदाहरति श्रीकण्ठ इत्यादि। श्रीकण्ठो मामपेक्ष्य ममापेक्षां कृत्वा त्वां पूजकमालोकयति विचारयतीत्यर्थः। अत्र ईक्षङ् दर्शने इति धातुरपेक्षायां लोकृङ्लोचे इति धातुश्च विचारणे वर्त्तते न तु दर्शने इति। अत्र युष्मदस्मदोर्मुख्ययोरेव ग्रहणम्। तेनाहम् अतियुष्मान् पश्यामि प्रियायूयं येषां तान् जानामि इत्यादौ न स्यात्। अत्र वाशब्दस्य अनेकार्थत्वादिदं विवृणोमि। अकृदन्तादेकाधिकरणात् परयोस्तयोर्नादेशाः स्युः। दयालोस्तव स्वं दण्डिनोर्युवयोः स्वं धीमतां युष्माकं स्वम्। कृदन्तात्तु दरिद्रस्य ते स्वं ग्राहिणोर्वां स्वं पाठकानां वः स्वम्। एवमस्मदोऽपि जसन्तैकाधिकरणाद्वा। छात्राः कौमाराः वः स्वं छात्राः कौमारा युष्माकं स्वम्। पृथग्योगादकृदन्तादिति नानुवर्त्तते। कदाचित् प्रथमातृतीययोरप्यादेशा इति वामनः। तेन गेये केन विनीतौ वां कस्य चेयं कृतिः कवेः। इति राज्ञा स्वयं पृष्टौ तौ वाल्मीकिमशंसतामिति रघुः। गेये गानविषये केन गुरुणा वां युवां विनीतौ शिक्षां कारितावित्यर्थः। एवं विष्णुः शरीरग्रहणमहमीशान एव च। कारिता स्ते यतोऽतस्त्वां कः स्तोतुं शक्तिमान् भवेदिति चण्डी। यतो हेतोः ते त्वया विष्णुरहमीशानश्च शरीरग्रहणं कारिता अतः कस्त्वां स्तोतुं शक्तिमान् भवेदित्यर्थः एवं जान्तक्विबन्त-

## २२१। सदानूक्तेऽसादिप्राः।

सदा ।१।, अनूक्ते ७।, असादिप्राः ५। ।

अनयोरेते अन्वादेशे नित्यं स्युः न तु सपूर्वात् प्रथमान्तात् परयोः।

यूयं वयं विनीतास्तत् पातु वो नो महेश्वरः।
यूयं वयं हितास्तेन सोऽस्मान् पातु स वः शिवः॥

---

र्यायुष्मदस्मदोरेकत्वे सर्वत्र त्वन्मदौ। त्वामाचचाणः त्वं त्वां त्वं त्वां त्वां त्वान् त्वया त्वाभ्यां त्वाभिः त्वं त्वाभ्यां त्वभ्यं त्वत् त्वाभ्यां त्वत् त्व त्वयोः त्वयां त्वाकमिति जौमराः त्वयि त्वयोः त्वासु। मामाचचाणः मं मां मं मां मां मान् मया माभ्यां माभिः मं माभ्या मभ्यं मत् माभ्या मत् म मयोः मयां माकमिति जौमराः मयि मयोः मासु। द्वित्वे सिजस् ङेङस्भिन्नविभक्तिषु सर्वत्र युवावौ; यथा युवामाचचाणः त्वं युवां यूयं युवां युवा युवान् युवया युवाभ्यां युवाभिः तुभ्य युवाभ्यां युवभ्यं युवत् युवाभ्यां युवत् तव युवयोः युवयां युवाकमिति जौमराः युवयि युवयोः युवासु। आवामाचचाणः अहं आवां वयं आवां आवां आवान् आवया आवाभ्यां आवाभिः मह्यम् आवाभ्यां आवभ्यं आवत् आवाभ्यां आवत् मम आवयोः आवयां आवाकमिति जौमराः आवयि आवयोः आवासु। बहुत्वे तु सौ त्वाहौ जसि यूय वयौ अमिङसौ च त्वन्मदौ द्विवचनेषु युवावौ शस्भिस्सुप्सु यूषासौ टासहितयोः त्वयास्या ङिसहितयोः त्वि स्यि अन्यत् सर्वं पूर्ववत्। यथा युष्मानाचचाणः त्वं युवां यूयं त्वां युवां यूयान् त्वया युवाभ्यां युवाभिः तुभ्य युवाभ्यां युष्मभ्यं युषभ्यमिति जौमराः युष्मामिति कातन्त्राः त्वत् युवाभ्यां युष्मत् तव युवयोः युष्मयां युष्माकं युषाकमिति जौमराः त्वि युवयोः युषासु। अस्मानाचचाणः अहं आवां वयं मां आवां असान् स्या आवाभ्याम् असाभिः मह्यम् आवाभ्याम् अस्मभ्यं असभ्यमिति जौमराः। मत् आवाभ्याम् अस्मत् मम आवयोः अस्मयाम् अस्माकम् असाकमिति जौमराः स्यि आवयोः असासु इति॥ २२०॥

अनुपश्चादुक्तम् अनूक्तं तस्मिन् सह आदिना वर्त्तते या सा सादिः सादिश्चासौ प्री चेति सादिप्री न सादिप्री असादिप्री तस्याः। न तु स पूर्वादित्यादि। पूर्वस्थितपदान्तरेण सहितात् प्रथमान्तात् परयोर्युष्मदस्मदोरुक्तस्य पश्चादुक्तौ आदेशा नित्यं न स्युः। पूर्वेणैव विभाषया इत्यर्थः। यूयं वयं विनीता

## २२२। नाविशेष्यान्याद्यामन्त्र्यात्।

न ।१।, अविशेष्यान्याद्यामन्त्र्यात् ५।।

विशेष्यपूर्वमनामन्त्र्यपूर्वञ्च हित्वा अन्यस्मादामन्त्र्यादेते आदेशा न स्युः। शम्भोऽस्मान् रक्ष, लक्ष्मीश सेव्य नोऽवाव सर्व नः। सुपात् सुपादौ सुपादः, सुपादं सुपादौ।

## २२३। पादः पत् पौ।

पादः ६।, पत् ।१।, पः ७।।

पादः पत् स्यात् पौ परे। सुपदः सुपदा सुपद्भ्याम् इत्यादि। [२११] चुङिति कुङ् [५०] नस्य नुः। [५१] नोर्ङः। [१८३] स्यान्तस्य लुप्। प्राङ् प्राञ्चौ प्राञ्चः, प्राञ्चं प्राञ्चौ। एवं क्रुञ्च तिर्य्यञ्चोदञ्चादयः।

---

इत्युक्तिः। तत्पातु वो नो महेश्वरः इति पश्चादुक्तिः। तत् तस्मादित्यर्थः। अस्मादिप्रश्नः किं यूयं वयं हिता इत्युक्तिः। तेन सोऽस्मान् पातु इत्यादि पश्चादुक्तिः अत्र तेनेति पूर्वपदेन सहितात् स इति प्रथमान्तात् परतया अस्मानिति पाक्षिक आदेशाभावः पातु स वः शिव इत्यत्र पात्विति पूर्वपदेन सहितात् स इति प्रथमान्तात् परतया व इति पाक्षिक आदेशः॥ २२१॥

विशेष्यञ्च अन्यच्च विशेष्यान्ये, अन्यदिति आमन्त्र्य भिन्नपदमित्यर्थः विशेष्यान्ये आदी यस्य तत् विशेष्यान्यादि, न विशेष्यान्यादि अविशेष्यान्यादि। अविशेष्यान्यादि च तत् आमन्त्र्यञ्चेति अविशेष्यान्याद्यामन्त्र्य तस्मात्। आमन्त्र्य सम्बोधनविहितप्रथमान्तपदम्। विशेष्यामन्त्र्यपूर्वं यदामन्त्र्यं आमन्त्र्यभिन्नपदपूर्वञ्च यदामन्त्र्यम् एतदुभयभिन्नादामन्त्र्यात् परयोर्युष्मदस्मदो स्ते मे प्रभृतय आदेशा न स्युः। ततश्च पूर्वपदरहितात् विशेषणपूर्वाच्च आमन्त्र्यात् परयोर्नस्युरिति निष्कर्षः। शम्भोऽस्मान् रक्ष इत्युदाहृत्य प्रत्युदाहरति लक्ष्मीशेति लक्ष्मीशेति विशेष्यपूर्वात् सेव्य इत्यामन्त्र्यात् परतया निषेधो मा भूत्। एवम् अव इत्यनामन्त्र्यपूर्वात् सर्व इत्यामन्त्र्यात परतया निषेधो न स्यात्। ननु हीचीषीणामित्यत्र विशेष्यपूर्वादनामन्त्र्यपूर्वञ्चामन्त्र्यात् परयोर्युष्मदस्मदोरादेशविधानेनैवेष्टसिद्धौ तदुभयभिन्नादामन्त्र्यात् परयोरादेशनिषेधः कथमति चेन्न तर्हि आमन्त्र्यभिन्नपदात् परयोः कुत्रापि नादेश इत्यनर्थापत्तेः॥ २२२॥

## २२४ । अचो ऽल्लोपो घंश्च ।

अचः ६।, अल्लोपः १।, घं: १।, च ।१।।

अचोऽकारस्य लोपः स्यात् पौ परे, पूर्वस्य च घं: । प्रतीचः प्रतीचा, प्रत्यग्भ्याम् इत्यादि ।

## २२५ । तिर्य्यगमुमुयगदमुयगुदचां तिरश्चा-मुमुईचादमुईचोदीचः ।

तिर्य्यक्—उदचां ६।।।, तिरश्च—उदीचः १।।। ।

---

शोभनौ पादौ यस्येत्यादि विग्रहे संख्यासूपमानादित्यादिना कृतस्य पादित्य नकारान्तादेशस्य पत् स्यात् पौ परे इत्यर्थः । एवं स्त्रियामीपि त्रिपदी इति । क्लीबे त्रिपदी वस्तुनी इति बोध्यम् । प्राङिति । अञ्चु गतिपूजनयोरित्यस्य क्विपि पूजार्थत्वान्नलोपाभावे प्रान्च इति लिङ्गस्य चस्य कुङि नस्यानुस्वारे तस्य च ङकारे स्यान्तस्य लुपि प्राङ् प्राञ्चौ प्राञ्चः प्राञ्चं प्राञ्चौ । गत्यर्थस्य तु क्विपि न लोपे प्राच् इति लिङ्गस्य त्रिदचोऽहेरिति नुमि कृते प्राङ् प्राञ्चौ प्राञ्चः प्राञ्चं प्राञ्चौ इत्युभयोरेव स्यादिपञ्चके समानरूपम् । शसादौ तु पूजार्थस्य प्राञ्चः प्राञ्चा प्राङ्भ्यां प्राङ्षु इति । गत्यर्थस्य तु प्राचः प्राचा प्राग्भ्यां प्राक्षु इति भेदः ॥ २२३ ॥

अञ्चु गति पूजनयोरित्यस्य क्विपि गतावर्थे लुप्तनकारस्य ग्रहणम् । एवं नदीमञ्चतीवि नद्यङ् गुरुमञ्चतीति गुर्वङ् कर्त्तारमञ्चतीति कर्त्रङ् गामञ्चतीति गवाङ् रायमञ्चतीति राय्यङ् नावमञ्चतीति नावङ् । एषां शसादौ नदीचः नदीचा नद्यग्भ्यां गुरूचः गुरूचा गुर्वग्भ्यां कर्तृचः कर्तृचा कर्त्रग्भ्यां गोचः गोचा गवाग्भ्यां रैचः रैचा राय्यग्भ्यां नौचः नौचा नावग्भ्याम् इत्यादि । गोच इत्यादौ तु पूर्वे कृस्थानामभावान्न दीर्घः । दिवमञ्चतीति क्विपि द्विनक् अस्य अकारलोपे उहस्युङ् इति वस्य उत्वे अनेन दीर्घे द्यूचः द्यूचा दिवग्भ्यामित्यादि । स्त्रियामीपि नदीची गुरूची इत्यादि, क्लीबे तु नदीची गुरूची कुले इत्यादि । घंश्चेति चकारस्य अन्वाचयशिष्टत्वात् पूर्वस्य दीर्घासम्भवेऽपि अल्लोपः स्यादेव । यथा तमञ्चतीति तदङ् शसादौ तद्यः तद्या इत्यादि । चोर्चोर्घश्चेति कृतेऽपीष्टसिद्धौ अचोऽल्लोपोर्घश्चेति गौरवं ज्ञापयति पूर्वं पदान्तरस्थितेरावश्यकत्वमिति तेन केवलस्य अचः अचा इत्यादौ न प्रसङ्गः । अच इति लुप्तनकारस्य किं पूजायां गुरुमञ्चतीति गुर्वङ् शसादौ गुर्वञ्चः गुर्वञ्चा इत्यादि ॥ २२४ ॥

एषामिति क्रमात् स्युः धौ परे। तिरश्चः तिरश्चा तिर्य्यग्भ्याम् इत्यादि। अमुमुईचः अमुमुईचा अमुमुयग्भ्याम् इत्यादि। एवमदमुयङ्। उदीचः उदीचा उदग्भ्याम् इत्यादि। शेषं पूर्ववत् [१५४] शच्छ्राजेति चस्य षत्वे तन्निमित्तस्य शस्य सत्वे [२१३] स्यादेः सौ लोपः। सुवृट् सुवृड् सुवृश्चौ सुवृश्चः इत्यादि। [१६४] नसब्महन्न इति घः। [१९३] स्यान्तस्य लुप्। महान् महान्तौ महान्तः महान्तं महान्तौ महतः महता महद्भ्याम् इत्यादि। भवन् भवन्तौ भवन्तः, भवन्तं भवन्तौ भवतः भवता भवद्भ्याम् इत्यादि। शेषं महद्वत्। [१८५] अत्वसोर्धोरिति। श्रीमान्, शेषं भवद्वत्। एवं यशस्वदादयः।

## २२६। भगवदघवद्भवतां भगोऽघो भो वा धौ।

भगवत् अघवत् भवतां ६।३, भगो अघो भो ।१।३, वा ।१।, धौ ७।१।

एषामिति क्रमात् स्युर्वा धौ परे। हे भगोः हे भगवन्, हे अघोः हे अघवन्, हे भोः हे भवन्। शेषं श्रीमद्वत्। [१९२] अहेरित्युक्ते न नुण्। ददत् ददतौ ददतः इत्यादि। एवं जक्षत् जाग्रदादयः।

---

उदचामिति निर्देशात् गत्यर्थस्य अञ्चतेरेव ग्रहणं तेन पूजार्थस्य अमुमुयञ्चः अमुमुयञ्चा इत्यादि। अमुमुईचः अदमुईच इति सन्ध्यभावनिर्देशात् एव न सन्धिः अन्यथा एतयोर्यकारस्य ईविधानेनापीष्टसिद्धिः स्यात्। शेषं पूर्ववदिति धौ प्राङ् प्राञ्चौ प्राञ्चः प्राञ्चं प्राञ्चौ इतिवदित्यर्थः। सुवृडिति व्रश्चू श् छेदे दन्त्यमध्यः। तथा च नकारजावनुस्वारपञ्चमौ झलिधातुषु। सकारजः शकारश्च षाट्टवर्गेस्तवर्गेज इति वोपदेवः। पश्चाच्चकारयोगात्तालव्यमध्यः। सुवृश्चतीति क्विपि ग्रहस्वपाद्योरिति जिः। ततः शच्छ्राजेति षङ् निमित्ताभावे नैमित्तिकस्याप्यभाव इति न्यायात्तालव्यशस्य दन्त्यसत्वे स्यादेः सोलोपः षोड़ःफे झप्झसोरिति। महानिति महपूजे औणादिकोऽतृप्रत्ययः। अस्य अत्वन्तस्यापि नसब्महन्न इत्यत्र महतो ग्रहणात् स्यादिपञ्चके दीर्घः। भवन्नित्यादि भूधातोः शत्रन्तस्य रूपम्॥ २१५॥

[१५४] शङ्क्राजेति षड् । विट् विड् विशौ विशः, विशं विशौ विशः, विशा विड्भ्याम् इत्यादि । [१७८] मुहां घड् इति । नक् नग् नट् नड् नशौ नशः नशं नशौ नशः. नशा नग्भ्यां नड्भ्याम् इत्यादि [१८४] श्वेतवाहेति डसड् पुरोडाः, हे पुरोडाः हे पुरोडः, पुरोडाशौ पुरोडाशः, पुरोडोभ्याम् इत्यादि । [२११] चूर्डिति कुड् । स्पृक् स्पृग् स्पृशौ स्पृशः, स्पृशा स्पृग्भ्याम् इत्यादि । दधृक् दधृग् दधृषौ दधृषः. दधृग्भ्याम् इत्यादि । षट् षड् षड्भिः षड्भ्यः षड्भ्यः षण्णां षट्सु ।

२२७ । **सषेसुस् सजुषह्नां रङ् फेऽचः ।**

सष-इस् उस्-सजुष्-अह्नां ६।।।, रङ् ।१।, फे ७।, अचः ६। ।

**सस्य स्थाने जातस्य षस्य इसुसः सजुषोऽह्नश्च रङ् स्यात् फे परे न तु चान्तस्य ।**

---

हे भोः इत्यादि राजेत्यादिषु निर्विसर्गार्थं हसात् सिलापस्य प्राथमिकत्वेऽपि सर्वावयवादेशानां बलवत्तरत्वात् वैभक्तिककार्य्यात् प्रागेव आदेशे हस्परत्वाभावात् सेर्लोपाभावे विसर्गः । भवच्छब्दोऽयं भाति रौणादिक डवतु प्रत्यये निष्पादितो युष्मदर्थः । अत भगवदघवद्भवतां वत ऊर्वाधौ इत्यनेनैवेष्टसिद्धौ भगो अघो भो इति गौरवं ज्ञापयति भोश्चित्त इत्यादौ क्लीवे न ह्रस्वः सेर्लुक् च न स्यात् इति । वस्तुतस्तु वतो डौस्विधानेनापीष्टसिद्धौ गौरवं स्पष्टार्थम् ॥ २२६ ॥

दन्त्यसस्य स्थाने जातो मूर्द्धन्य षः सषः । पिपठिषं चिकीर्षु बुभूर्षादीनां क्विपः प्राक् षत्वे सस्थाने जातषः । श्रीपतिदत्तोऽपि पिपठिष्प्रभृतीनां क्विपः प्राग्जातस्य षत्वस्य क्विपि लिङ्गसंज्ञायामपि निवृत्तिर्नास्तीत्याह । इसुसौ दन्त्यान्तौ । यथा पिस्ट गत्यां सुपीः । तुस ध्वाने सुतुः एवं हविः धनुः सजुषो मूर्द्धन्यान्तत्वाद- प्राप्तौ पृथगुक्तिः । जुषीप्रीतिसेवनयोः जोषणं जुट् सह जुषा वर्त्तते या सा सजूः । सषश्च इस् च उस् च सजुष् च अहन् च तेषाम् । नच अच तस्य । चान्तस्य तु बिहत्वौ अस्वादे लिलिचतीति क्विपि लिलिट् अव हस्यढत्वे षढोः कःसे इति ढस्य कत्वे क्विलादित्यनेन सनः सस्य षत्वेऽपि न रङ् । पिपठीस्तव: आशीर्वादः अहर्निशम् इत्यादौ विभक्तेर्लुकि विरामे रङ् स्यादेव ॥ २२७ ॥

२२८। व्यंनच्तयीको धोर्घोऽकुर्कुरोऽखेः।

विं ७।, अनच्तयि ७।, इकः ६।, धोः ६।, र्घः १।, अकुरकुरः ६।, अखेः ६।।

धो रिको र्घः स्यात् वि रेफे च, न तु कुरकुरो न च खेः, नाचि तये च। पिपठीः पिपठिषौ पिपठिषः, पिपठीर्भ्यां पिपठीःषु। एवं चिकीर्षादयः। दोः दोषौ दोषः दोषं दोषौ। [११६] पाददन्तेति दोषन् वा। दोष्णः दोषः दोष्णा दोषा दोषभ्यां दोर्भ्याम् इत्यादि। [२१३] स्यादेः सो लोपः। विविट् विविड् विविच्छौ विविच्छः विविड्भ्याम् इत्यादि। पिपक् पिपग् पिपच्छौ पिपच्छः पिपग्भ्याम् इत्यादि। एवं गोरग् दिधच्छादयः। सुपीः सुपिषौ सुपिषः सुपीर्भ्यां सुपीःषु। एवं सुतूः। विद्वान् हे विद्वन् विद्वांसौ विद्वांसः, विद्वांसं विद्वांसौ।

---

रच वच वं तस्मिन् विं। रेफसाहचर्य्यात् वकारोऽव दन्त्यः। तेन उज्जती-त्यत्र न दीर्घः। तसद्धितः। तश्चासौ य चेति तय अच्च तयच अचतयौ न विद्येते अचतयौ परौ यस्मात् सोऽनच्तय तस्मिन् अनचतयि इति, विं इत्यस्य विशेषणं कुरच् कुरच् कुर्कुर न कुर्कुर अकुर्कुर तस्य, नखिरखिः तस्य। यथा रेफे गीः धूः पिपठीः सुपीः सुतूः सजूः। वकारे यथा दीव्यति सीव्यति। अनच्तयीति किं? गिरौ गिरति दिवौ दिदिवतुः। धुरं वहतीति धुर्य्यः चातुर्य्यं दिव्यं किञ्च तय-कारसाहचर्य्यादत्र अच्प्रत्ययस्यैव। तेन तुरर्थः धुरन्तः पिपठीरोकः आशीरा-रम्भः इत्यादौ दीर्घः स्यादेव। धोः किं? हविः धनुः। अकुरकुर किं? कुर्शब्दे कुर्य्यात् चोकुर्य्यते। कुर इति स्वरूपग्रहणात् डुकृञ कुर्य्यात् कुर्वः। कुर्शि लोपे कुर्य्यात् चोक्कुर्य्यते। अखेः किं? ओरीङ य चरणे रिर्य्ये। क्रीडाञ क्विपि विक्रीड़। न च अनेन दीर्घे कृतेऽपि झभखयहर्घेत्यादिना पुनर्कृत्स्नेनैवेष्टसिद्धौ खिवर्जनं व्यर्थमिति वाच्यम्। झभखर्घेत्यादि सामान्यं बाधित्वा व्यंनच्तयीति विशेषेण आदौ दीर्घस्यापि दीर्घे कृते एकृत्तेन विप्रतिषेधेन यद्द बाधितं तद्द बाधितमेव इति न्यायेन झभखर्घेत्यादिनापि पुनर्कृत्स्नासम्भवात्। इकस्थानिकतया रेफवकारनिमित्तकतया च व्यंनच्तयीत्यादिर्विशेषः। दीर्घस्थानिकतया नि-र्निमित्तकतया च झभखर्घेत्यादिः सामान्यः। पिपठीरिति। पठितुमिच्छ-

## २२९। वसो र्वः सेमप्युर्मतुप्योः।

वसोः ६।, वः १।, सेम्।१।, अपि।१।, उः १।, मतुप्योः ७॥।

**वसो र्वं शब्दस्य इम्सहितोऽपि उः स्यात् मतौ पौ च परे। विदुषः विदुषा। [१८३] स्रसुध्वस् वस्त्विति दङ्। विद्वद्भ्याम् इत्यादि। पेचिवान् पेचिवांसौ पेचिवांसः, पेचिवांसं पेचिवांसौ पेचुषः, पेचुषा पेचिवद्भ्याम् इत्यादि। जगन्वान् जगन्वांसौ जगन्वांसः, जगन्वांसं जगन्वांसौ। वस्योत्वे तन्निमित्तस्य नस्य मत्वे।**

---

तीति सनि वसोरस्येति इमि क्विलादिति षत्वे द्विर्भावे पिपठीष इति भागस्य धातुसंज्ञायां क्विपि हसाल्लोप इति सनोऽकारलोपे आतिदेशिकमनित्यमिति न्यायात् तस्य स्थानिवत्वाभावे सषेति रङि इसोऽपि धात्ववयवतया र्व्यनचतयोरिति दीर्घे रेफस्य विसर्गः। एवं चिकीर्षादय इति। एवमिति रङप्राप्त्यर्थं न तु सर्वरूपसाम्यार्थं तेन चिकीर्ष शब्दस्य सुपि परे यस्य रङि स्यान्तस्यारादित्यत्र स्यान्तस्येति भिन्नपदज्ञापकात् वाद्रङो लोपे रङो विः सुपीति नियमात् रेफस्य विसर्गाभावे क्विलादिति षत्वे चिकीर्षु इति रेफयुक्तं पदम्। एवं वुवूर्षतीति क्विपि वुवूः वुवुर्षौ वुवुर्भ्यां वुवूर्षु इत्यादि। दारिति दस्य उत्क्षेपणे इत्यस्मात् क्विपि भुजे वाच्ये मनीषादित्वादकारस्य ओकारे अम्बष्ठादित्वात् षत्वे सषेति रङ्। विविड़िति शौविश प्रवेशे। वेष्टुमिच्छतीति सनि शक्लार्जेति षङि षढोः कः से इति ककारे कयोगात् षत्वे क्विपि विविक्ष इति लिङ्गं अत्र षकारस्थाने जातककारस्य लोपः। पिपगिति। डुपचौष पच पाके पक्तुमिच्छतीति क्विपि पिपक्ष इति लिङ्गं अत्र चकारजातककारस्य लोपाभावे स्यान्तस्य लुपि झपभसोरित्यनेन कस्य कगौ सन्धिग्रहणात् सन्धिलुप्येव न सन्धिरिति नियमात्। एवं गोरक् दिधक्षादयः इति गां रक्षतीति गोरक् अत्र रक्षवर्जनात् ककारलोपाभावे संयोगान्त लुप्। एवं दहो दाहे दिधक्षतीति क्विपि दिधक् अत्र दादेः इत्यनेन हस्य घत्वे झपभसोरित्यनेन घस्य कत्वे घस्य स्थाने जातककारस्य लोपाभावे संयोगान्त लुप्। सुपीरिति पिस्गत्यां सुपे सतीति क्विपि इसन्तत्वाद्रङ्। एवं तुस ध्वाने उसन्तत्वाद्रङि सुतूः। विद्वानिति वेत्तेः परस्य शतुः क्वस्वादेशे विदचोऽद्वरिति नणि नसन्महन्न इति दीर्घे संयोगान्त लुप् ॥ २२८॥

वस्वन्तान्मतोः प्रसङ्गाभावेऽपि मतौ परे वसोर्वकारस्योकारविधानं ज्ञापयति

२३०। **हन गम जन खन घसामुङ्-लोपो-ऽङेऽच्यणौ।**

हनगमजनखनघसां ६।।।, उङ्लोपः १।, अङे ७।, अचि ७।, अणौ ७।

एषामुङ् लोपः स्यात् अणावचि, नतु ङे। जग्मुषः जग्मुषा जगन्वद्भ्याम् इत्यादि। एवं जग्मिवान्। [१८५] अधोरित्युक्तेः। सुहिन् सुहिंसौ सुहिंसः, सुहिन्भ्याम्। ध्वत् ध्वसौ ध्वसः, ध्वद्भ्याम्। एवं स्रत्। उक्थशाः हे उक्थशाः हे उक्थशः उक्थशासौ उक्थशासः, उक्थशोभ्याम् इत्यादि।

२३१। **पुंसो ऽसुङ् घौ।**

पुंसः ६।, असुङ् ।१।, घौ ७।।

पुंसोऽसुङ् स्यात् घौ परे, उङावितौ। पुमान् पुमांसौ पुमांसः, पुम्भ्यां पुंभ्यामित्यादि।

---

वस्वन्तान्मतु नैव भाव्यमिति मतौ विदुष्मान्। पौ वैदुष्यं वैदुषं पैचुष्यं पैचुषं विदुषी पेचुषी इत्यादि। जगन्वानिति। औगम्यलृगत्यां क्वसः द्वित्वम्। हन-गम दृश विशेति इमोऽभाव पक्षे धोर्मोनः फम्वीति मस्य नः। वस्वोत्वे इत्यादि। शसि परे जगन्वस् शब्दस्य वस्य उत्वे स एव वकारो निमित्तं यस्य नकारस्य तस्य स्थाने निमित्ताभावे नैमित्तिकस्याप्यभाव इति न्यायात्। पुनर्मकारत्वे जगमुस इति स्थिते क्वसोर्वकारसम्बन्धित्वादुकारस्याप्यगुणत्वे हनगमजनेत्युङ् लोपे क्विला-दिति षत्वे जग्मुष इति ॥ २२९ ॥

नङेोऽङः तस्मिन्। नास्ति णुर्यस्मिन् सोऽणुः तस्मिन्। यस्मिन् परे गुणो निषिद्धस्तस्मिन्नचीत्यर्थः। तस्यापि चाख्यातकृतोरेव सम्भवः। यथा जघ्नतुः जग्मतुः जज्ञे चख्नतुः। द्विस्वाद्रुङ लोपिन इति क्विप्प्रत्यये जघ्निः जग्मिः चख्निः जज्ञिः। अङि इति अगमत् अघसत्। भीषिचिन्तीतिङे जना। सुहिनिति। हिंसिधकि 'हंसे क्विपि नसब्महन्न इत्यनेन प्राप्तव्यौ दीर्घौ अधोरित्युक्तेर्न स्यात् ॥ २३० ॥

असुङ उदित्वात् त्रिदच इति नुणि नसब्महन्न इति नसन्तत्वात् दीर्घे-

## २३२। सि डौशनस्पुरुदंशोऽनेहसो ऽधेः।

सेः ६।, डा ।१।, उशनस्-पुरुदंशस्-अनेहसः ५।, अधेः ६।।

एभ्यः परस्य सेर्डा स्यात्, नतु धेः। उशना।

## २३३। धे ङङनौ वोशनसः।

धेः ६।, ङ-ङनौ १॥, वा ।१।, उशनसः ५।।

उशनसः परस्य धेर्ङङनौ वा स्तः। ङ इत्। हे उशन हे उशनन् हे उशनः, उशनसौ उशनोभ्याम्। अनेहा हे अनेहः अनेहसौ अनेहसः। एवं पुरुदंशा। वेधाः हे वेधः वेधसौ वेधसः इत्यादि। [ १८५ ] अधोरित्युक्तेः। सुवः सुवसौ।

## २३४। अदसः सि रौः।

अदसः ५।, सेः ६।, औः १।।

अदसः परस्य से रौः स्यात्। असौ।

---

स्यान्तस्य लुपि पुमान्। पुम्भ्यामिति सर्वविधिभ्यो लोपविधिर्बलवानिति न्याया दादौ संयोगान्तलुपि सन्धिग्रहणात् सन्धिलुप्येव न सन्धिरिति नियमाद्दान्तेम इत्यादिना मस्यानुस्वारे वात्वरयपे इत्यनेन अनुस्वारस्य मकारे पुम्भ्यां पक्षे पुंभ्यामित्यपि ॥ २३१ ॥

उशनस्च पुरुदंशस्च अनेहस्चेति तस्मात् न धि धिः तस्य ॥ २३२ ॥

सम्बोधने तूशनसस्त्रिरूपं सान्तं तथा नान्तमथाप्यदन्तमिति व्याघ्रभूतिः। वेधाः इति विधश्चविधौ वासुसिति अस्। सुव इति वस्लङ क्विपि अत्वसोऽधोरिति प्राप्तव्यो दीर्घो अधोरित्युक्तेर्न स्यात् ॥ २३३ ॥

असौ। अत्र सर्वविभक्ति-विषयकस्य दोमोऽदसस्त्यस्य वाधकेन त्यदां तदोरित्यनेन दस्य स एव। हं असौ पुरुषः इत्यत्र स्वदीभ्यामित्यनेन प्राप्तव्यः सेर्लोप औकारेण वाध्यते लोपस्वरादेशयोः स्वरादेशो विधिर्बलवानिति न्यायात्। एवं हे असौ स्त्रि अत्रापि टेरत्वे आपि आदौ सेः स्थाने जातस्य औकारस्य स्थानिवत्त्वाभावात् धिटौस्से इत्यनेन एकारो न स्यात्। अत्र सूत्रे परसूत्रे च पूर्वतो वा शब्दोऽनुवर्तते। स च उभयत्रैव व्यवस्थामात्रवाची। व्यवस्था चेयम्। स्त्रकी-

२३५। मात् स्वर्घावुऊ।

मात् ५।, स्वर्घौ १॥, उऊ ।१॥ ।

अदसो मात् परौ स्वर्घौ वुदूतावाप्नुतः। अमू।

२३६। एरी ब्वे।

एः १।, ईः ।१।, ब्वे ७। ।

अदसो मात् परो ब्वेनिष्पन्न एकार ईः स्यात्। अमी। अमुम् अमू अमून्॥ [१२३] टादसश्चास्त्रियान्तु ना। अमुना अमूभ्याम् अमीभिः, अमुष्मै अमूभ्याम्, अमीभ्यः, अमुष्मात् अमूभ्याम् अमीभ्यः, अमुष्य अमुयोः अमीषाम् अमुष्मिन् अमुयोः अमीषु।

इति हसन्तपुंलिङ्गशब्दः।

---

ऽदसः सेरौर्वा अनकस्तु नित्यमिति एवं मात्स्वर्घावुऊ इत्यत्रापि वाशब्दस्य व्यव-स्थया साकोऽदसः सेरौकाराभावपक्षेऽदसः सात्परस्य अकारस्य उत्वमिति तेन असकौ असुकः पुमान् असकौ असुका स्त्री। केचित्तु औकाराभावपक्षे दोर्मो-ऽदस इत्यनेन दकारस्य मकारं कृत्वा अमुकः पुमान् अमुका स्त्री इति विभाषया वदन्ति ज्ञातः स्वरेणामुकः इति प्रयोगोऽपि क्लीबे तु सेर्लुकि कृते लुकि न तत्रेति निषेधात् त्यद्यां तदोरित्यस्य दोर्मोऽदसश्चेत्यस्य च अप्राप्तौ अदः अदकः कुल-मिति॥ २३४॥

अत्र मादिति ग्रहणेन अमुष्य शिष्यः अदःशिष्यः अमुष्य स्त्री अदःस्त्री इत्यादौ समासे विभक्तेर्लुकि लुकि न तत्रेति निषेधात् दोर्मोऽदसश्चेत्यस्याप्राप्तावुकारो न स्यादिति एवं उग्रहणेनैव उवर्णप्राप्तौ उऊ इत्युभयग्रहणन्तु प्रत्ययादेशयोः ग्रह-णितेनाका सवर्णो न गृह्यते इति ज्ञापनार्थम्॥ २३५॥

ब्वेकिं अमुस्त्रियौ असू फले। अमुष्मै इत्यत्र टेरत्वे दस्य मत्वे ङेस्मे पश्चाद-कारस्य उत्वे षत्वम्॥ २३६॥

इति पुंलिङ्गपादः।

## द्वितीयः पादः।

### हसन्त स्त्रीलिङ्गशब्दः।

#### २३७। नहो धङ् भौ।

नहः ६।, धङ् ।१।, भौ ७।

नहो हस्य धङ् स्यात् भौ परे। उपानत् उपानद् उपानहौ उपानहः, उपानद्भ्याम् [ २११ ] चुङिति कुङ्। उष्णिक् उष्णिहौ उष्णिग्भ्याम् इत्यादि।

#### २३८। दिव औङ् सौ।

दिवः ६।, औङ् ।१।, सौ ७।

दिव औङ् स्यात् सौ परे। द्यौः दिवौ दिवः।

#### २३९। वाम्याङ्।

वा ।१।, अमि ७।, आङ् ।१।

दिव आङ् स्यात् वा अमि परे। द्यां दिवं दिवौ दिवः दिवा।

#### २४०। उहस्युङ्।

उहसि ७।, उङ् ।१।

दिव उङ् स्यात् उवर्णे हसि च परे। द्युभ्याम्। गौः

---

धीस्तु अनात्मीत् अनद्ध अनानत्॥ २३७॥

मुख्यत्वे गौणत्वे चायं विधिः। तेन द्यौः अतिद्यौः। स्वरादेशत्वेन बल-वत्त्वादादावौकारे सेविंसर्गः॥ २३८॥

अयमपि मुख्यत्वे गौणत्वे च द्यां दिवं अतिद्यां अतिदिवं ननु द्योशब्दस्य द्यामिति दिवस्तु दिवमिति इत्युभयसिद्धौ वाम्याङिति व्यर्थमिति चेन्न अमशसो-रित्यत्र मुख्यस्यैव ग्रहणेन अतिद्यामित्यस्यानुपपत्तेः॥ २३९॥

उः उवर्णः। दिव उद्यानं द्युद्यानं दिव ऊर्द्धं द्यूर्द्धम्। हस इत्यनेन

गिरौ गिरः । एवं पूः । [१५७] स्त्रियां त्रिचतुर इति चतस्र । चतस्रः चतस्रः चतसृभिः चतसृभ्यः चतसृभ्यः चतसृणां चतसृषु । [१३३।२४८] टेरत्वे सत्याप् । का के काः इत्यादि, शेषं सर्वावत् । एवं यद् । [२०३] इदमोऽयमितीयम् । इयं इमे इमाः, इमां इमे इमाः, अनया आभ्यां आभिः, अस्यै आभ्यां आभ्यः, अस्याः आभ्यां आभ्यः, अस्याः अनयोः आसाम्, अस्याम् अनयोः आसु । स्रक् स्रजौ स्रजः, स्रग्भ्याम् । [ १३३ । २४८ ] टेरत्वे आप् । स्या त्ये त्याः इत्यादि सर्वावत् । एवं तद् एतद् । वाक् वाचौ वाचः, वाचं वाचौ वाचः वाचा वाग्भ्याम् । अप् शब्दो बवान्तः । [१६४] नसब्महन्न इति घैः आपः अपः ।

२४१ । **भ्यपोदङ् ।**

भि ७।, अपः ६।, दङ् ।१। ।

अपो दङ् स्यात् भि परे । अद्भिः, अद्भ्यः अद्भ्यः, अपाम् अप्सु । दिक् दिशौ दिशः, दिग्भ्याम् इत्यादि । एवं दृक् । त्विट् त्विषौ त्विषः, त्विषा तिड्भ्याम् इत्यादि । सजूः सजुषौ सजुषः, सजुषा सजूर्भ्यां सजूःषु । एवं आशीः । [ २३४ ] अदसः सेरौ ।

---

स्यादीयप्रकरणेऽपि सामान्यहसोग्राह्यः । अन्यथा सह इति स्फुटनिर्देशेनैवेष्टसिद्धौ । हस इति सङ्केतशब्दोपादानमनर्थकं स्यात् । न च तर्हि हसोऽन्तः फ इत्यत्रापि सह इत्येव वक्तुमुचितमिति वाच्यं तत्र सभ इत्युक्तौ स्यादौयनकारस्य फलाभावात् पञ्चानामित्यादौ नोलुप् फेधाविति न लोपानुपपत्तेः । ह्सि यथा द्युभ्यां द्युगतः द्युपतितः द्युकामः इति पूर्वतो वाशब्दोऽनुवर्त्तते । स चेह व्यवस्थावाची । व्यवस्था चेयम् । क्लीवे सुद्यु कुलमिति स्यमोर्लुकि विरामेऽपि उङ् स्यात् । एवं दिवि भवं दिव्यं दिव्यमिच्छति दिव्यति इत्यादौ न स्यात् ॥ २४० ॥

अत्र वाशब्दस्य नानुवृत्तिः । व्यवस्थावाचिवाशब्दस्य इच्छयानुवृत्तिरनिच्छयानिवृत्तिरिति । अत्र प्रकरणबलात् भ इति स्यादेरेव तेन अब् भयमित्यादौ न प्रसङ्गः । गौणेऽप्ययं तेन स्वद्भाम् इत्यादि । सुजूरिति सर्वेसुसीतिरङ्खिर्व्यंन-

असौ अमू अमूः, अमूं अमू अमूः, अमुया अमूभ्याम् अमूभिः, अमुष्यै अमूभ्याम् अमूभ्यः, अमुष्याः अमूभ्याम् अमूभ्यः, अमुष्याः अमुयोः अमूषाम्, अमुष्याम् अमुयोः अमूषु।

इति हसन्तस्त्रीलिङ्गः पादः।

---

## तृतीयः पादः।

### हसन्त क्लीवलिङ्ग शब्दः।

[१६८] स्यमोर्लुगिति। [१८३] स्रम्ध्वस् वस्विति दङ्। स्वनडुत् स्वनडुही। [१८१] अनडुच्चतुरोऽणाणाविति। स्वनडांहि। पुनस्तद्वत्। शेषं पुंवत्। चत्वारि। ब्रह्म।

### २४२। क्लीवे नो लुब्वा धौ।

क्लीवे ७।, नः ६।, लुप् ।१।, वा ।१।, धौ ७।

नपुंसके नस्य लुप् स्यात् वा धौ परे। हे ब्रह्म हे ब्रह्मन्,

---

चतयीति दीर्घः। एवमाशीरिति। आङ् पूर्वात् शासुचलुशासने इत्यस्मात् क्विपि शासुङ्भिहसङे इत्यनेन आकारस्य इकारे पदसंज्ञाभावादेव पदान्तत्वाभावे शासवसघसेति षत्वम्। ततो लिङ्गसंज्ञायां स्यादिरुत्पत्तौ सस्य जातस्य षस्य रङ् स्यादित्यर्थः। अतएव सजूः शब्दं साधयित्वा एवमाशीरित्याह। अन्यथा हसन्तत्वेनैव रङि सिद्धे पाणिनिकातन्त्रयोः पृथगाशीर्ग्रहणमनर्थकं स्यात्। दुर्गसिंहोऽप्येवम्। श्रीपतिदत्तोऽपि सजुषाशिषोस्तु मूर्द्धन्यषस्यैव डकारापवादे रेफ इत्याह। ननु विभक्त्युत्पत्तेरादौ षत्ववत् णत्वमप्यास्तामिति चेत् सत्यम्। आदौ णत्वे मुष्णातीति सुश्रर्मा गृह्णातीति याह्नीत्यादौ दीर्घार्थं णकारलोपार्थञ्च तत्तत् सूत्रेषु मूर्द्धन्यणकारस्य पृथग्ग्रहणं गौरवं स्यादिति विभक्त्युत्पत्तेरादौ णत्वं न क्रियते। केचित्तु विष्णौ च वेधाः स्त्रीत्वाशीर्हिता शंसाहिदंष्ट्रयोरित्यमरसिंहेन दन्त्यान्तमध्ये पठितमाशीः शब्दं मत्वा आशीरित्यादौ हसन्तत्वादेव रङ् इत्याहुः॥ २४१॥

शोभनोऽनड्वान् यत्र गोष्ठे तत् स्वनडुत्।

नोलुप्फेधावित्यस्याप्राप्तौ विभाषेयम्। लुप् करणात् तदादिविधिर्निषेधे हे

ब्रह्मणी ब्रह्माणि। अहः अह्नी अहनी अहानि, अहोभ्याम्। किं के कानि। इदं इमे इमानि। असृक् असृजी असृञ्जि, असानि असृञ्जि, असृजा अस्ना असृग्भ्याम् असभ्याम् इत्यादि। ऊर्क् ऊर्जी ऊन्र्जि ऊर्जि। सुवल्ग् सुवल्गी सुवल्गि सुवन्ल्गि। [१६३] नुस्वयमित्यत्र झसन्तरलयोरादौ तु वा नुण्। उकारेत् नुर्विन्दुमात्रस्य नाख्या। त्यत् त्ये त्यानि। एवं यत् तत् एतत्। [२०९] अनूक्तौ तु ; एनत्। गवाक् गोची गवाञ्चि। तिर्य्यक् तिरश्ची तिर्य्यञ्चि। एवं परे। यकृत् यकृती यकृन्ति, यकानि यकृन्ति, यक्ना यकृता यकृद्भ्यां यकभ्याम् इत्यादि। एवं शकृत्। ददत् ददती।

२४२। द्वेः शतुर्नुण् शौ।

द्वेः ५।, शतु ६।, नुण् ।१।, शौ ७।।

द्वेः परस्य शतुर्नुण् स्यात् वा शौ परे। ददन्ति ददति। एवं जक्षत् जाग्रदादयः। तुदत्।

---

धनिकुल इत्यादौ गर्धौ वेति गुणो न स्यात्। नच गर्धौ वेत्यत्र इगन्तप्रकृतित्वं विवक्षितमिति वाच्यम्। तर्हि प्रधीप्रभृतीनामपि हे प्रधी इत्यादौ गुणानुपपत्तेः। अह्नी अहनी इति ईड्योस्तु वेति विकल्पः। किमित्यादि। स्यमोर्लुकि कृते लुकि न तवेति निषेधात् टेरकारो न स्यात्। ननु लोपस्वरादेशयोः स्वरादेशविधिर्बलवानिति न्यायादादौ टेरत्वे क्लीवात् स्यमोऽभेरिति सेर्मकारापत्तिरिति चेन्न यस्य लुक्क्रियते तन्निमित्तककार्य्यस्यादावनुत्पत्तौ लुग्विधानस्य वैयर्थ्यात्। असानीति। पाददन्तेति असनादेशे यमादौ निषेधात् न नुण्। उकारेत् नुरिति। यँस्यते इत्यादौ जभजपजभेत्यादिना यथा नुरित्यनुस्वारागमः क्रियते नुस्वयमेत्यत्र तथा न किन्तु उकारेत् नुर्नकारः नतु विन्दुमात्रस्य आख्या संज्ञेत्यर्थः। अनूक्तौ तु एनदिति। अमो लुकि कृते लुकि न तवेति निषेधेऽपि इदमेतदयोरेनादेशविधानसाफल्यार्थमेतभागस्य एनादेशः स्यादेव टेरत्वाभावे दकारस्थितिः। गोची इति। अचोऽल्लोप इत्यकारलोपः। एवं परे इति अमुमुयगादय इत्यर्थः। शकृदिति ताळव्यादिविष्ठावाचक शकृत् शब्दस्य पाददन्तेत्यादिना शकनादेशः॥२४२॥

२४४ । आदीपोः ।

आत् ५।, ई-ईपोः ७॥ ।

अवर्णात् परस्य शतुर्नुण् स्यात् वा ईकारे ईपि च परे । तुदन्तौ तुदती तुदन्ति । भात् भान्तौ भाती भान्ति । पचत् ।

२४५ । अप्यनो नित्यम् ।

अप्-यनः ५।, नित्यं १। ।

अपो यनश्च परस्य शतुर्नित्यं नुण् स्यात् ई ईपोः परयोः । पचन्तौ पचन्ति । दीव्यत् दीव्यन्तौ दिव्यन्ति । स्वप् स्वपौ । [१६४] नसब्महन्नोऽधोर्घः । स्वाम्पि, स्वपा । [२४१] भ्यपोदङ्

---

त्रिदचोऽर्द्देरित्यत्र वेः परस्य निषेधात् अप्राप्तौ विभाषा ॥ २४३ ॥

ईश्च ईप् च ईपौ तयोः । ईपः पृथग् ग्रहणात् ई इति क्लीवाद्यौ इत्यनेन आदिष्टस्य ईकारस्य ग्रहणम् । अन्यथा तुदत इदं तुदतीयं इत्यादावपि प्रसक्तिः स्यात् । तुदन्ती इति । तुदञौ श व्यथे शत दिवसुतुदेति शः लोपोऽतोऽर्द्दचो-रित्यकार लोपेऽपि स्थानिवत्त्वा दकारात् परस्य शतुर्वा नुण् । भान्ती इति । भालषदीप्तौ शत घेशप्रे इति शप् लुगद्नोऽप इति शपो लुकि आकारात् परस्य शतुर्वा नुण् । नच अत्र शपलोपस्य स्थानिवत्त्वेन शपः परत्वात् अप्यनोनित्य-मित्यनेन नुणो नित्यत्वापत्तिरिति वाच्यम् । लोपोऽस्यो मार्ङ्गेरिति । लोपेऽतो-ऽर्द्दचोरिति हसाल्लोपोऽसत्यर्योरित्येताभ्यामन्यसूत्रेण कृतस्य अकारलोपस्य स्थानि-वत्त्वं नास्तीति नियमात् । अस्य वीजं सकोऽल्लोपोऽच्यब्वे इत्यत्र द्रष्टव्यम् । एवं या ल गतौ । वा ल गमनहिंसयोः । ष्णा ल शौधने । श्रा ल पाके । श्रा ल खेदे । द्रा ल स्वप्ने पलायने च । पाल रक्षणे । रा ल दाने । ला ल च ग्रहे । दाललूनौ । ख्यालख्यातौ कथने । प्रालपूर्त्तौ । मालचमाने । प्सालभक्षणे । एषामपि चतुर्दशानां यान्ती याती इत्यादि । अत्र वा शब्दस्य व्यवस्थावाचित्वात् पूर्वनिमित्तमनपेक्ष्यस्य तु नुण् वा स्यादीपोः परयोः इति बोध्यम् । यथा भविष्यन्ती भविष्यती ज्ञान-सुखे । भविष्यन्ती भविष्यती मुक्तिः । एवं सोष्यन्ती सोष्यती पक्ष्यन्ती पक्ष्यती । अव्याक्षेपो भविष्यन्त्याः कार्य्यसिद्धेर्हि लक्षणमिति कालिदासः स चिन्तयत्येव-मियस्वदिष्यती ॥ २४४ ॥

पचन्ती इति । डुपचष पचपाके शत घेशप्रे इति शपि लोपोऽतोऽर्द्दचोरिति शबलोपस्य स्थानिवत्त्वेऽपः परत्वान्नित्यं नुण् । दीव्यन्ती इति । दिव्युजिगीषादौ

खङ्गिः। [२२७] सषेति रङ्। धनुः धनुषी धनूंषि। एवं हविः। पयः पयसी पयांसि, पयसा पयोभ्याम्। अदः अम अमूनि। हौ प्रीवत्। इति हसन्तनपुंसकलिङ्गपादः।

---

## चतुर्थः पादः।

### अव्ययः शब्दः।

२४६। व्याल्लुक् क्तोः।

व्यात् ५।, लुक् ।१।, क्तोः ६।।

व्यात् परस्याः क्तोर्लुक् स्यात्। स्वः प्रातः च वा हा है उच्चैः उच्चकैः धिक् धकित् प्र परा हरिवत् क्त्वा।

---

शत दिवसुतुर्दति श्यनि नित्यं नुण् एवं गोपायन्ती चोरयन्ती कारयन्ती चिकीर्षन्ती पुत्रकाम्यन्ती ज्ञानीयन्ती कृष्णन्ती नमस्यन्ती इत्यादि। मालेवाचरन्ती मालान्ती वीणेवाचरन्ती वीणान्ती इत्यपि दुर्गसिंहः। विकश्यगती इत्यस्य विकास्तुति पणीवाय इति आयपच्चे श्रपि विच्छायन्तीति नित्यम्। तुदादिपच्चे तुदादित्वात् शेविच्छती विच्छन्ती इति। ततश्च भ्वादीन् वर्जयित्वा अदादेः स्वादिरुधादितनादि क्र्यादीनाञ्च नुण् न स्यात् ई ईपोः परयोः। तेन अदती सुन्वती रुन्धती कुर्वती क्रीणती इति। स्वप् इति। शोभना आपो यत्र सरसि तत् स्वप्। अत्र पथ्यप्पुरः से इत्यनेन विहितस्य अप्रत्ययस्य नार्चायां स्वतेरित्यादिना निषेधः। धनुरिति वनरवे वासुसिस्मन्निति उसि उसन्तत्वाद्रङ उकारस्य धातुसम्बन्धित्वाभावात् व्यंनच्तयोति दीर्घो न स्यात् धनूंषीति। नसन्तत्वाद्दीर्घे नुव्यन्तरेऽपीति षत्वम्। एवं हविरिति ङ्लिहीमेऽदने इसि इसन्तत्वाद्रङि इकारस्य धातुसम्बन्धित्वाभावान्न दीर्घः। पय इति। सेर्लुकि लुकि न तत्रेति निषेधादत्वसोर्धोरिति न दीर्घः। विराममाश्रित्य विसर्गः। अद इति। सेर्लुकि लुकि न तत्रेति निषेधात् त्यदां तदोरिति सो न स्यात्। अमोलुकि च दामोऽदसश्चेति मकारो न स्यात्॥ २४५॥

इति हसन्त क्लीवलिङ्ग पादः।

अव्ययानां प्राथमिकस्य स्वः शब्दस्य रेफान्तत्वाद्दसन्ताध्याये एव निरूपणमुचित लिङ्गकार्य्याभावाच्च पुंलिङ्गादिपादेष्वनुचितमितीह पृथगुपान्यासः।

२४७। उदः सः स्थास्तम्भोः।

उदः ५।, सः ६।, स्थास्तम्भोः ६॥।

उदः परयोरनयोः सस्य लुक् स्यात्। उत्थानम् उत्तम्भः।

२४८। वातोऽवाप्योः।

वा ।१।, अतः ६।, अवाप्योः ६॥।

अवाप्योरकारस्य लुक् स्यात् वा। वगाहः अवगाहः पिधानम् अपिधानम्। इति व्य-पादः।

इति हसन्ताध्यायः।

---

तथाच सदृशं त्रिषु लिङ्गेषु सर्वासु च विभक्तिषु। वचनेषु च सर्वेषु यन्न व्येति तदव्ययमिति प्राञ्चः। अलिङ्गानामव्ययानां विशेषणस्यापि अनिर्णीतलिङ्गत्वा-न्नपुंसकत्वमेवेति बोध्यं सामान्यत्वान्नपुंसकत्वमिति वचनात्। तेन स्वः सुन्दरं स्वः काम्यमित्यादि।

लुक्करणात् त्यलोपे त्यलक्षणमिति न्यायेन विभक्तिनिमित्तककार्य्यं न स्यात्। यथा ह्यः स्वः नम इत्यादीनां सेर्लुकि अत्वसोर्धोरिति दीर्घो न स्यात् विसर्गस्तु विराममाश्रित्य स्यादेव। एवं खलु ननु इत्यादीनां गुर्धिजसित्यादिना गुणो न स्यात्। ननु अव्ययाद्विभक्त्यस्याथित्वे विभक्तिमुत्पाद्य लुका तन्निमित्तककार्य्यं निषिध्यते इति वाथं क्षया क्रियते। प्रक्षालनाद्धि पङ्कस्य दूरादस्पर्शनं वरमिति न्यायात् तदनुत्पादनमेवोचितमिति चेन्न। विभक्तेरनुत्पत्तौ पदसंज्ञाभावात् समासा-भावे प्रणम्य इत्यादौ यपोऽनुपपत्तेः पदान्तत्वाभावात् उञ्छतीति उन्मज्जतीत्यादौ नकाराद्यनुपपत्तेः नमः प्रभृतीनां विसर्गानुपपत्तेश्च। अतएव राज्ञः पुरुषो राजपुरुष इत्यादौ समासे विभक्तेर्लुकि कृतेऽपि विभक्त्यर्थस्य विद्यमानत्वात् यथा राजसम्बन्धीपुरुषः प्रतीयते। तथा स्वः प्रकाशते स्वर्गच्छति स्वः स्पृहयति स्वः पतति स्वर्निवसतीत्यादौ विभक्तेर्लुकि तदर्थस्य विद्यमानत्वात् स्वर्गतस्य कर्त्तृत्वादिप्रतीतिः स्यात्। उच्चकैरिति त्यादिव्येति टेः पूर्वोऽक्। धकिदिति धिक्शब्दस्य अकि कृते व्यकस्य दः॥ २४६॥

एतत् सूत्रं परसूत्रञ्च यद्यपि सन्ध्यध्याये एव वक्तुमुचितं तथापि अव्ययपाद-पूरणार्थमिह कृतं सूत्रसमूहः पाद इति पादलक्षणात्॥ २४७॥

अवाप्योरकारस्य सर्वत्र लोपः स्याद्वा इति सामान्यविधानम्। केचित्तु

अवस्य तरतौतंस गाहधोय अपेर्नह्यति दधात्योरकारस्य वा लोपः । इति सूत्रं कृत्वा वतरति वतीर्णः अवतीर्णः वतंसः अवतंसः वगाढः अवगाढः पिनह्यति अपिनह्यति पिधानं अपिधानम् इत्युदाहरन्ति । स्वमतेऽपि वाशब्दस्य व्यवस्थावाचित्वादग्राह्येयम् । अपेरुपसर्गसंज्ञस्यैव ग्रहणात् विदधदिवासति अपिनह्यति हर्षेण इत्युभयत्र क्रमात् सम्भावना गर्ह्ययोरुपसर्गत्वाभावादकारलोपो न स्यादिति + ॥ २४८ ॥

---

+ अकारादिक्रमेण अव्ययशब्दसंग्रहो यथा—

अ अकस्मात् अग्रतस् अग्रेस् अङ्ग अचिरात् अञ्जसा अद्ध अतस् अतीव अत्र अथ अथकिम् अथो अद्धा अद्य अधरात् अधरेण अधस् अधस्तात् अधुना अनुपदम् अन्ततस् अन्तर् अन्तरा अन्तरेण अन्यत् अन्ये-द्युस् अन्यतस् अन्यत्र अन्यथा अन्यदा अन्येद्युस् अपरेद्युस् अभितस् अभी-क्ष्णम् अयि अये अरे अररे अर्वाक् अवाच् अलम् अवश्यम् अस्तम् अस-कृत् अस्मि अहह अहहा अहं अहो अहोवत अह्नाय । आ आङ् आ-रात् आविस् आहो आहोस्वित् । इ इतरेद्युस् इति इतिह इत्थम् इदानीम् इव इह । ईषत् । उ उच्चकैस् उच्चैस् उत उताहो उता-होस्वित् उत्तरतस् उत्तरात् उत्तरेण उत्तरेद्युस् उदक् उपजोषम् उपयोषम् उपांशु उभयतस् उभयेद्युस् उम् उररी उरी उररी ऊ ऊम् ऊररी ऊरी ऊररी । ऋते । ए एकदा एतर्हि एव एवम् । ऐ । ओ ओम् । औ । कच्चित् कति कथम् कदा कदाचन कदाचित् कर्हि कर्हिचित् कामम् किञ्च किञ्चन किञ्चित् किन्तु किन् किम् किमु किमुत किंस्वित् किंवा किल कु कुतस् कुत्र कुत्रचित् केशाकेशि क्व क्वचन क्वचित् । खलु । चतुर्धा चिरम् चिरेण चिराय चिररात्राय चिरात् चिरस्य चिरे चेत् । जातु जोषम् । झटिति । तत् ततस् तत्र तथा तदा तदानीम् तावत् तिरस् तिर्यक् तु तूष्णीम् त्रेधा त्रैधम् । दक्षिणतस् दक्षिणात् दक्षिणेन दण्डादण्डि दिवा दिष्ट्या दुष्टु द्राक् द्विधा द्वेधा धिक् । न नञ् नक्तम् नमस् नवतिधा नवतिशस् नवधा नवशः नहि ना नाना नाम नास्ति निकषा नितराम् नित्यदा नीचकैस् नीचैस् नूनम् नो न्यक् । पञ्चधा परम् पर-श्वस् परास्वस् पराक् परितस् परुत् परेद्यवि परेद्युस् पश्चात् पुनःपुनर् पुनर् पुरतस् पुरस् पुरस्तात् पुरा पूर्वेण पूर्वेद्युस् पृथक् पृष्ठतस् प्रका-शम् प्रगे प्रत्यक् प्रत्यहम् प्रत्युत प्रसह्य प्राक् प्रातर् प्रादुस् प्राध्वम् प्राय-

# स्याद्यन्ताध्यायः ।

## प्रथमः पादः ।

## स्त्रीत्यः ।

### २४९ । स्त्रियामत आप् ।

स्त्रियां ७, अतः ५।, आप् ।१। ।

**स्त्रीलिङ्गे स्थितादकारान्तादाप् । स्यात् । मेधा, सर्वा ।**

---

लिङ्गानां स्त्रीत्वविवक्षायां स्याद्युत्पत्तेः प्रागेव यथासम्भवमाबादयः स्युः । स्याद्युत्पत्तेः पश्चादाबादीनां करणे प्रकृतेर्निरवकाशकार्य्याणामादावुत्पत्तौ महानिष्टं स्यात् । यथा वाचप्रभृतेर्ङसि परे आप् आदौ कुत्वापत्तिः राजादिशब्दानां स्यादि-पञ्चके ईप् आदौ नान्तत्वाद्दीर्घापत्तिश्च । त्यदादेस्तु स्याद्युत्पत्तेः पूर्वम् आबादे-र्विषयाभावादप्राप्तौ स्याद्युत्पत्तेः पश्चात् टेरत्वे अदन्तत्वादाप् स्यादिति । अतएव त्यदादेष्टेरत्वे सति आप् इति स्वयमुक्तम् । किञ्च लिङ्गसाधनयोग्यानप्याबा-दीन् काठिन्यभयात् स्त्रीलिङ्गपादे नोक्ता पृथग्वदति स्त्रियामित्यादि । मेधेति ञमेधृ सङ्गे सेमक्तात्सरीरिति घप्रत्यये मेध इत्यकारान्तान्नित्यस्त्रीलिङ्गादाप् । पाक्षिकस्त्रीलिङ्गात्तु सर्वा इति । आबीपोः पकारस्तु आबीब्भसादित्यादिषु गोपा श्रीपा प्रभृतीनामप्राप्तये विशेषणार्थः । ऊपस्तु पकारः रूपकल्प चेलूप् इत्यादौ च स्वादेरप्राप्तये विशेषणार्थः ॥ २४९ ॥

---

शस् प्रायस् प्राह्णे प्रेत्य । फट् । बहुशस् । भगोस् भृयस् भूरि भूरि-शस् भृशम् भो भोस् । मंक्षु मत् मनाक् मञ्ज मा मिथस् मिथ्या मुधा मुष्टामुष्टि मुष्टीमुष्टि मुहुस् मृषा । यत् यतस् यत्र यथा यथातथम् यथायथम् यथार्हम् यथावत् यथास्वम् यथाशक्ति यथेप्सितम् यदा यदि यावत् युगपद् । रहस् । वत् वत वरम् वषट् वौषट् वहिस् वा विधिवत् विना विश्वक् विष्वक् । शनैः शश्वत् शान्तम् श्रत् श्वस् । संवत् सकृत् सत्रा सदा सद्यस् समन्ततस् समन्तात् समम् समया समुपयोषम् सर्वतस् सर्वत्र सर्वथा सर्वदा सहसा साकम् साक्षात् साचि सामि साम्प्रतम् सायं सार्द्धम् सुचिरम् सुतराम् स्थाने स्म स्वतस् स्वधा स्वयम् स्वर् स्वस्ति स्वाहा स्वित् । ह हंहो हञ्जे हण्डे हन्त हला हा हिरुक् हिहि ही हीही हुम् हम् हे हेहे है हो ह्यस् ।

प्रादयोविंशतिरुपसर्गाश्चाव्ययशब्दाः—१० सूत्रं द्रष्टव्यम् ।

एतद्भिन्ना अपि अव्ययशब्दाः सन्ति ।

## २५० । हसात् वा ।

हसात् ५।, वा ।१। ।

स्त्रियां हसन्तादाप् स्यात् वा । वाचा वाक्, दिशा दिक् ।

## २५१ । मनो डाप् ।

मनः ५।, डाप् ।१। ।

स्त्रियां मनन्तात् डाप् स्यात् वा । सीमे सीमानौ, पामे पामानौ ।

---

अथ श्रीरामतर्कवागीशकृतटीका ।

स्त्रियामित्यापादमधिकारः । अत इत्यनेन त्वाचणिकादपीति तेन स्वाश्वा इत्यादौ सर्वदाप् स्यात् । तटादीनान्तु यदा स्त्रीत्वं विवक्ष्यते तदैवाबादयः स्युः न तु पुंस्त्वक्लीवत्वविवक्षायामिति । आबादयस्तु साधुत्वार्थमेव विधीयन्ते । मेधेति । मेधृञ्‌ मेधायां अस्मात् सेमन्तात्सरोरित्यः । पश्चादाप् ॥ २४९ ॥

वाचा वाक्, दिशा दिक्, गिरा गीः उष्णिहा उष्णिक्, विपाशा विपाट्, दृशा दृक्, रुजा रुक्, इत्यादि । अत्र वाशब्दस्य व्यवस्थया शिष्टप्रयोगानुसारेणैव स्यात् न तु सर्वस्मात् हसात् । तेन स्वप् नदी इत्यादौ न स्यात् ॥ २५० ॥

श्रीरा टी—यद्यपि सामान्येनोक्तं तथाप्यभिधानाद्विशेषतो ज्ञेयम् । तेन 'क्षुधा वाचा दिशा क्रुञ्चा विपाशा च [illegible]जा रुजा । गिरोष्णिहा देवविशा पक्षे क्षुद्वाग्दिगादयः ।' वाशब्दस्य व्यवस्थावाचित्वात् क्वचिन्न स्यात् क्वचिन्नित्यं तेन द्विपात् त्रिपात् चतुष्पादित्यादौ न स्यात् । द्विपदा त्रिपदा चतुष्पदा ऋगित्यादौ ऋग्विषये नित्यं स्यात् ॥ २५० ॥

सौ नान्तत्वाद्दीर्घे डापि कृते वा रूपभेदो नास्तीति औकारे उदाहृतम् । सीमे सीमानाविति एवं वासुस्थिति मनि कृते ददातीति दामा अस्यापि दामे दामानौ पटिमानमतिक्रान्ते अतिपटिमे अतिपटिमानौ स्त्रियौ इत्यादि ॥ २५१ ॥

श्रीरा टी—मन्नित्यनर्थकस्यापि ग्रहणम् । तेन सुधर्मे सुधर्माणौ सभे बहुपटिमे बहुपटिमानौ स्त्रियौ । तथाच [illegible]मायणे, "स्वभावस्त्वेष नारीणामेषु लोकेषु दृश्यते । विरुद्धधर्माश्चपला भावभेद[illegible]राः स्त्रियः" ॥ २५१ ॥

## १५८ । हे ऽनः ।

हे ७।, अनः ५।।

स्त्रियां हे स्थितादनन्तात् डाप् स्यात् वा बहुयज्वे । बहु-यज्वानौ ।

## २५३ । ईप् चाम्वस्यात् ।

ईप् ।१। च ।१। अम्वस्यात् ५।।

मस्य वस्यान्यपरादनन्तात् हे स्थितात् स्त्रियामीप् डाप् च स्यात् वा । बहुराज्ञी बहुराजे बहुराजानौ ।

---

मसंयोग-वसंयोगपरस्थितात् अनन्तादेवायं विधिः । अन्यत्र परसूत्रेण बाधितत्वात् इत्यत आह बहुयज्वे इति बह्वौ यज्वानौ ययोः सभयोरिति विग्रहः । एवं बहुब्रह्मे बहुब्रह्माणौ सभे एवञ्च शोभनौ धर्मौ ययोः सभयोरिति बहुव्रीहौ धर्मादनि कृते सुधर्मे सुधर्माणौ इत्यादि ॥ २५२ ॥

श्रीरा टी—वाशब्दस्य व्यवस्थावाचित्वात् डावभावपक्षेऽपि आबीपोर्निषेधः । तेन बहुयुवानौ सुमघवानौ पुर्य्यावित्यादौ न स्यात् । हे किं? अतियज्वानौ ॥ २५२ ॥

मच वश्च म्वमित्यनेन मवात्त उच्यते म्वश्च तत् स्यश्चेति म्वस्यः न म्वस्योऽम्वस्यः तस्मात् । मसंयोगवसंयोगभिन्नवर्णात् परो योऽन् तदन्तादित्यर्थः । चकारात् डाप् च वानुवर्त्तते पक्षे नान्तस्यापि स्थित्यर्थः । बहुराज्ञी इत्यादि बह्वौ राजानौ ययोः सभयोरिति विग्रहे अनेन ईपि अनोऽल्लोपः स्तुश्चुभिरिति नस्य ञः । पक्षे डापि टिलोपः उभयोरप्राप्तिपक्षे नान्तस्थितिः । एवं दृष्टः पूषा याभ्यां ते दृष्ट-पूष्णौ दृष्टपूषे दृष्टपूषाणौ स्त्रियौ । एवञ्च सुदाम्नौ सुदामे सुदामानौ, सुधाम्नौ सुधामे सुधामानौ स्त्रियौ इत्यपि स्यात् । न चात्र नमनसंख्येत्यनेन ईप्निषेधो-ऽस्तु इति वाच्यम् । तत्सूत्रस्य बहुव्रीहेरन्यत्र मनन्तात् प्राप्तस्य ईप एव निषे-धकत्वात् । अत्र वाशब्दस्य व्यवस्थावाचित्वात् बहुयुवा पूः दृष्टमघवा स्त्री इत्यु-भयत्र ईप् न स्यात् डाप् तु स्यादेव ॥ २५३ ॥

श्रीरा टी—मच वश्च म्वं म्वञ्च तत् स्यश्चेति म्वस्यः न म्वस्यः अम्वस्यस्तस्मात् । तुल्यविषयत्वात् यत्रानः सदानोऽल्लोपस्तत्रैवायं विधिस्तेन बहुयुवा पूः सुमघवा द्यौरित्यादौ न स्यात् श्वयुवमघोनेत्यादिना पावुत्वेऽल्लोपाभावात् । बहुसीम्नौ पुर्य्यावित्यादौ नमनसंख्येति बहुव्रीहौ न ईप्निषेधः तस्याऽविषये चरितार्थत्वात्

२५४। काप्यनाशीरकेऽदिदयत्तत्क्षिपादेः।

कापि ७।, अनाशीरके ७।, अत् ।१।, इत् ।१।, अयत्तत्क्षिपादेः ६।।

आशीरर्थकवर्जे कापि परे अकारस्य इकारः स्यात्, न तु यत् तत् क्षिपादेः। सर्विका कारिका। आशीरके तु जीवका। यदादेस्तु यका सका, क्षिपका ध्रुवका चटका।

---

तथाच अनुभवजितलोकपालधामीमिति। पत्रे बहुसौमानौ बहुसौमेत्यादि अत्र राजानाविति बह्वो राजानो ययोर्नगर्योरिति इति वाक्यम् एवं बहुतक्षाणौ नगर्यौ बहुतक्षाणावित्यादि ॥ २५३ ॥

कयुक्त आप् काप् तस्मिन्। आशिषि अकः आशीरकः नास्ति आशीरको यत्र कापि सोऽनाशीरकः तस्मिन्। यादृग्जातीयस्य प्रतिषेधो विधिरपि तादृग्-जातीयस्येति न्यायादाशीरकवर्ज्जनात् कृतककारस्य ग्रहणं न तु प्रकृतेः तेन तक् सहने हासे पचादित्वादनि तकतीति तका एवं शक्नोतीति शका इत्यादौ न स्यात्। ममेयमित्यर्थे णे ममकारादेशे अजादित्वादीपो निषेधे आपि कृते मामिका इत्यत्र आदेशत्वात् कृतककारे स्यादेव। किञ्च परसूत्रीयवाशब्दस्य व्यवस्थया नवं कायतीत्यर्थे कैशब्दे इत्यस्मात् हनजनाङ्गमादेरिति डप्रत्यये टेर्लोपे आपि कृते नविका स्त्री इत्यत्र प्रकृतिककारेऽपि स्यात्। एवं बहवः परिव्राजकाः यस्यां सा बहुपरिव्राजका: पुरी इत्यादौ समासे विभक्तेर्लुकि विभक्त्यन्तरागमो न स्यात् एवञ्च बहूनि चर्माणि यस्यां सा बहुचर्मिका शाला इत्यादौ कप्रत्यये नां लुप्षेधाविति नस्य लुपि तदाश्रयविधेर्निषेधेऽपि इकारः स्यादेव इति। सर्विकेति। त्यादिष्वासभोमिति सर्वशब्दस्य टेः पूर्वोऽक स्त्रियामत आप् ततः कापि परे ऽकारस्यानेन इकारः। कारिकेति। डुकृञ् करणे णके इति णकः कृतिः आप् कापि परेऽनेनाकारस्य इकारः जीवकेति जीवतादिति वाक्ये आशिषीति अक तस्मात् स्त्रीत्वविवक्षया आप् आशीरकवर्ज्जनादकारस्य इकारो न स्यात् यकेति यदशब्दस्य। सकेति तदशब्दस्य। क्षिपादिश्च "क्षिपका ध्रुवका चैव चरका धारकेष्टका। एड़का चटकाद्याश्च पितृणामष्टका भवेत्। उपत्यकाधित्यका च तारकाभट्टगंमयो:। वर्णका वस्त्रभेदे स्यात् शकुनौ यातु वर्त्तका इति।" इष्टकेति इच्छते रौणादिकस्तकः अष्टकेति अश्नातेरौणादिकस्तकः पितृणां सम्बन्धिनी श्राद्धकालत्वादित्यर्थः। तेन अश्नातेरौणादिकस्तके अष्टका अष्टिका खारी अष्टा-वाढ़का: परिमाणमस्या इति कप्रत्ययेऽपि अष्टिकेत्येव। उपत्यका पर्वतस्य निकट

२५५। द्वैषसूतपुत्रवृन्दार-स्वज्ञाजभस्त्राधु-त्यक्यो र्वा।

द्वैष—धुत्यक्योः ६॥, वा ।१।।

द्वादेः र्धुत्यवर्जयोः कययोः स्थाकारः इकारः स्यात् वा क्वापि। द्विके द्वके, चटकिका चटकका, आर्य्यिका आर्य्यका। धुत्य-योस्तु—नायिका कृत्यिका।

---

भूमिः। अधित्यका ऊर्द्धभूमिः। तारका नक्षत्रं नेत्रांशः अन्यत्र तारिका। वर्णका वस्त्रविशेषः। अन्यत्र वर्णिका नटादीनाम्। शकुनौ पक्षिविशेषे वर्त्तका वाशब्दात् वर्त्तिका च। अन्यत्र वर्त्तिका दीपस्य॥ २५४॥

श्रीराटी—कादाप् काप् तस्मिन् आशिषि अकः आशीरकः आशीरकस्य कः आशीरककः नास्ति आशीरककौ यस्मिन् स अनाशीरककस्तस्मिन् कापीत्यस्य विशेषणम्। क्षिप आदिर्यस्य स क्षिपादिः यच्च तच्च क्षिपादिश्च तत् न तत् अयत्तत् क्षिपादिस्तस्य पुंस्त्वं सौत्रत्वात्। जीवकेति आशिषीत्यनेनाकः क्षिपकेति क्षिपधातोरिजुङ्त्वात् कः क्षिपस्ततः स्वार्थे अकः पश्चादाप्। क्षिपकादिर्यथा। "क्षिपका ध्रुवका चैव चटका धारकेष्टका। करकाधित्यका प्रोक्ता चर्कोप-त्यकेड़का। अलका यक्षपुर्य्यान्तु पिटका वासकेत्यपि। अष्टका तु पितर्य्यर्थे तारका भट्टगंशयोः। वर्त्तका शकुनौ प्रोक्ता वर्णभेदे च वर्णिका। अस्य प्रकृतिकाः सर्वे नरिकामामिके विना।" एषु किं अष्टिका तारिका वर्त्तिका वर्णिका शकुनौ वर्त्तिकेत्यपि कश्चित्। आकृतिगणोऽयम्॥ २५४॥

द्व इति द्विशब्दस्य टेरत्वे रूपम्। एष इति एतदः सौ। द्वश्च एषश्च सूतश्च पुत्रश्च वृन्दारश्च स्वश्च ज्ञश्च अजश्च भस्त्रा चेति द्वैषसूतपुत्रवृन्दारस्वज्ञाजभस्त्रम्। धुर्धातुः त्यः स्वरूपं धुश्च त्यश्च धुत्यौ न धुत्यौ अधुत्यौ। कश्च यश्च क्यं। अधुत्ययोः क्य अधुत्यक्यः पश्चात् द्वैषसूतपुत्रवृन्दारस्वज्ञाजभस्त्राधुत्यकौ तयोः। अयमर्थः। द्वादीनां नवानामकारस्य इकारः स्याद्वा क्वापि। धातोः ककारयकारौ हित्वा त्यस्वरूपस्य च यकारं हित्वा अन्यौ यौ ककारयकारौ तयोरकारस्य इकारः स्याद्वा कापीत्यर्थः। द्विके द्वके इति द्विशब्दस्य टेः पूर्वेऽकि कृते टेरत्वे आपि कृते द्वका इति स्थिते-ऽनेन अकारस्य इकारो वा। एवं एषिका एषका सूतिका सूतका पुत्रिका पुत्रका वृन्दारिका वृन्दारका स्विका स्वका ज्ञिका ज्ञका अजिका अजका भस्त्रिका

भस्त्रका। भस्त्रा चर्मप्रसेविका इत्यमर:। भस्त्राशब्दस्य स्वार्थे ककारे केऽक: स्व इति ह्रस्वे अनेन अकारस्य इकारो वा। भस्त्र इति अकारान्त इति केचित् एषां गौणत्वेऽपि बहुस्त्रिका बहुस्त्रका इत्यादि चटकिके इत्यादि। चटचभेदे औणादिकोऽक: चटक:। तत: स्वार्थे ककारे आपि अनेनाकारस्य इकारो वा। आर्य्यिकेत्यादि ऋगतौ ऋहलोर्ण्यदिति घ्यणि वृद्धौ आर्य्य: तत: स्वार्थे क: तत: स्त्रियामापि अनेनाकारस्य इकारो वा। नायिकेति नीञ्प्रापणे णकि वृद्धौ सन्धि:। अत्र धातुसम्बन्धियकारत्वादस्याप्राप्तौ पूर्वेण नित्यम्। धातो: ककारस्य तु चक तृप्तौ णक: चाकिका एवं तक ताकिका शक शाकिका इत्यादिषु पूर्वेण नित्यम्। त्यस्वरूपग्रहणात् त्यत्राद्यचिरदक्षिणाद्यादेरित्यनेन इकार आकारस्य त्यवादे: परविहितस्य दक्षिणादे: परविहितस्य त्यलोपि वर्जनम्। यथा क्वभव इत्यर्थ त्य: क्वत्य: तत: स्वार्थे क: तत आपि अकारस्य पूर्वान्नित्यमिकारे क्वत्यिका। एवं त्यत्रत्यिका तत्रत्यिका इहत्यिका अमात्यिका इत्यादि। दक्षिणाभव इत्यर्थे त्यणि कृते दाक्षिणात्यिका एवं पौरस्त्यिका पाश्चात्यिका अत्र वाशब्दव्यवस्थावाचि फलन्तु पूर्वसूत्रे लिखितम् ॥ २५५ ॥

श्रीराटौ—धुश्च त्यश्च तौ न तौ अधुत्यौ कच यच तत् अधुत्ययो: क्य पश्चात् द्वश्च एषश्च सूतश्च पुत्रश्च वृन्दारश्च स्वश्च ज्ञश्च अजश्च भस्त्राच धुत्यक्यचतत्तच्च। द्विकेति द्विश्चौ टेरत्वे पश्चादाप् ततश्चोरो अकपश्चादि:। एवम् एषका एषिका एषेति निर्देशात् एषिकेति पूर्वेण नित्यं चटकिकेति चटकाशब्दात् स्वार्थे क: धुभिन्नत्वादिर्वा आर्य्यिकेति धुभिन्नत्वादिर्वा एवं भ्रातृव्यका भ्रातृव्यिका इत्यादि। नायिकेति नीञधोर्णक: आप् धुवर्जनात् पूर्वेण नित्यम्। आङ्पूर्वध्यैधातो-र्मनीषादित्वात् धस्य ढ: तत: स्वार्थे क: आढ्यिका धुत्यवर्जनात् पूर्वेण नित्यं यथा संख्याभावज्ञापनार्थं धोर्यकारेणोदाहृतम्। क्यस्य यथा शिक्षां कामयति शिक्षाका, शिक्षाका एव शिक्षाकिका शाकिका इत्यादि क्वत्यिकेति क्वभवा इत्यर्थे त्यत्राद्यचिरेति त्यप्रत्यय: तत: स्वार्थे क:। एवम् इहत्यिका अत्रत्यिका दाक्षिणात्यिका इत्यादि। त्य इति स्वरूपस्य निषेधात् दूरेत्यिका दूरेत्यका इत्यादौ स्यादेव। अत्र स्वज्ञाजानां गौणेऽपि तेन बहुस्विका बहुस्वका बहुज्ञिका बहुज्ञका बह्वजिका बह्वजकेत्यादि। द्वादीनां केवलानामेव तेन परमद्विकेति पूर्वेण नित्यम्। अन्ये तु नसैस्त्रे रिति सूत्रयित्वा नेच्छन्ति परमद्वका परमैषका इत्यादि। भस्त्रका भस्त्रिका इति परसूत्रेणैव सिद्धे भस्त्राग्रहणात् निर्भस्त्रिका निर्भस्त्रका इति गौणेऽपि स्यात् इति परे ॥ २५५ ॥

## २५६। वाच्चापोऽनुक्तपुंस्कस्य।

वा।१।, आत्।१।, च।१।, आपः ६।, अनुक्तपुंस्कस्य।

आपः स्थाने जातोऽकार इदाच्च स्यात् वा कापि नतु उक्तपुंस्कस्य। गङ्गिका गङ्गाका गङ्गका। उक्तपुंस्कस्य तु शुभ्रिका।

## २५७। ष्टिन्नृच्वाहनदादेरीप्।

ष-ट्-उ-ऋ-इत् न्-ऋ-अच् वाह-नदादेः ५।, ईप्।१।।

षकारेतष्टकारेत उकारेत ऋकारेतो नान्ता-ऋदन्ता-दञ्चो वाहो नदादेश्च ईप् स्यात् स्त्रियाम्।

---

वाग्रहणमकारस्यापि स्थित्यर्थम्। उक्तः पुमान् येन तत् उक्तपुंस्कं न उक्तपुंस्कं अनुक्तपुंस्कं लिङ्गं तस्य। गङ्गिकेत्यादि गङ्गा एव इति स्वार्थे कः ककारादाप् केऽकः ख इति पूर्वापो ह्रस्वे अनेन इकार आकारश्च। तयोरप्राप्तौ अकारस्थितिः। एवं दुर्गिका दुर्गका दुर्गाका॥ २५६॥

श्रीराठी—चकारादित्यनुवर्त्तते। न उक्तपुंस्कं अनुक्तपुंस्कं तस्य गङ्गिकेत्यादि गङ्गाशब्दात् स्वार्थे कः केऽकः ख इति खः पूर्वसूत्रभस्त्राग्रहणात् भस्त्राका निर्भस्त्राका इत्यप्यन्यः। शुभ्रिकेति एवमतिगङ्गिकेत्यादि॥ २५६॥

षच टच उश्च ऋश्च इरः ते इतो येषां ते ष्टित्श्च नच ऋश्च अञ्चच वाहच नदादिश्चेति तस्मात् नकार ऋकारयोः केवलयोरसम्भवात्तदन्तयोर्ग्रहणम्। षकारेत् टकारेत् नदादीनां मुख्यानामेव ग्रहणात् बहुवैणवा बहुवराका पुरी। प्राप्ता त्वया बहुभूषणा स्त्री। बहुनदा बहुदेवादिक इत्यादौ न स्यात्। अन्येषां मुख्यानां गौणानाञ्च ग्रहणात् अतिविदुषी अतिपचन्ती अतिदण्डिनी अतिकर्त्री अतिप्रतीची अतिशाल्यूही इत्यादि स्यादेव॥ २५७॥

श्रीराठी—षश्च टश्च उश्च ऋश्च तत् ष्टृ इत् यस्य सः नद आदिर्यस्य सः नदादिः पश्चात् ष्टिृच्च नच ऋश्च अञ्चच वाहच नदादिश्च तस्मात् पुंस्त्वं सोचत्वात्। अत ष्टिृन्नदादिभ्यः मुख्य एव अन्यस्मात् गौणागौणयोरिति। तेन बहुगार्ग्या अतिकुरुचरा बहुनदा सुमत्स्या इत्यादौ न स्यात्। विदुषी सुविदुषी पचन्ती बहुपचन्ती इत्यादौ स्यात् स्तनन्धयीति घेटष्टित्वात् ईप्॥ २५७॥

## २५८। ययो र्लोपो ऽयुक्तौ पौ।

ययोः ६॥, लोपः १।, अ-यु-क्तौ ७।, पौ ७।।

इवर्णावर्णयोः लोपः स्यात् अयावक्तौ पौ परे। ष—वैष्णवी वराकी।

## २५९। क्यड्यच्वौ चानात्यपत्यणास्य।

क्य-ड्य-च्वौ ७।, च।१।, अनाति ७।, अपत्यणास्य ६।।

अपत्यार्थणास्य लोपः स्यात् अयावक्तौ पौ परे, क्य ड्य च्वौ च, नत्वाकारे। गार्गी।

---

इश्च अश्च यौ तयोः। युश्च क्तिश्च युक्ती न विद्येते युक्ती यत्र पौ सोऽयुक्तिः तस्मिन्। अत्र अश्च इश्च एः इति विग्रहे एर्लोप इत्यनेनैवेष्टसिद्धौ ययोर्लोप इति गौरवं ज्ञापयति क्वचिदिवर्णावर्णयोर्लोपो न स्यादिति। तेन प्रियादिशब्दानां इष्टादौ परे प्राद्यादेशे प्रेष्ठः स्थेष्ठः स्फेष्ठः श्रेष्ठः ज्येष्ठः इत्यादि सिद्धम्। एवं पारस्त्रैणेयः चाटकेयः इत्यत्रापि लोपो न स्यात्। यौ ऊर्णायुः क्तौ वासि। ष इति षकारानुबन्धस्य उदाहरणमित्यर्थः। वैष्णवीति विष्णुर्देवता अस्या इति विकारसंवेति णे णित्ते त्रिरिति वृद्धौ न्वोर्लोपो तावित्युकारस्य ओकारे सन्धिः। वराकीति। वृञ वृतौ भिच्चजल्पेति षाके गुणः॥ २५८॥

श्रीरा-टी—इश्च अश्च तौ तयोः युश्च क्तिश्च तत् न तत् यस्मिन् अयुक्तिः तस्मिन् अयुक्तौ पावित्यस्य विशेषणं पृथक्पदकरणात् प्रेष्ठः प्रेयानित्यादौ न स्यात्। वैष्णवी विष्णुर्देवता यस्या इत्यर्थे णः। वराकीति वृञधीः षाकः। अयुक्तौ किं ऊर्णायुः रामेणेत्यादि॥ २५८॥

क्यश्च ड्यश्च च्विश्चेति क्यड्यच्वि तस्मिन्। न आत् अनात् तस्मिन्। अपत्ये णाः अपत्यणाः तस्य। गर्गस्य स्त्र्यपत्यमिति गर्गादित्वात् णा। णित्ते त्रिरिति वृद्धौ ययोर्लोप इति अकारलोपे गार्ग्य इति स्थिते षित्वादीपि अनेन णास्य लोपे गार्गी इति। क्ये गार्ग्यमिच्छति गार्गीयति ड्ये गार्ग्य इवाचरति गार्गायते च्वौ अगार्ग्यो गार्ग्यो भवति च्वौ गार्गीभवति। क्तौ तु गार्ग्ये आकारे तु गार्ग्यायणः अपत्यणास्य इति किं? सौभाग्यीयति इत्यादौ न स्यात्॥ २५९॥

श्रीरा-टी—क्यश्च ड्यश्च च्विश्च तत्तस्मिन् पुंस्त्वं सौत्रत्वात् न आत् अनात् तस्मिन् अयुक्ति पावित्यनुवर्त्तते अस्यैव विशेषणं गार्गीति गर्गस्यापत्यमित्यर्थे णाः।

२६० । सूर्य्यागस्त्यस्य तिष्यपुष्यस्य ष्णा-मत्यस्येयेपो भष्णे ईपि यः ।

सूर्य्यागस्त्यस्य ६।, तिष्यपुष्यस्य ६।, ष्णामत्यस्य ६।, ईयेपोः ७॥, भष्णे ७।, ईपि ७।, यः ६। ।

एषां यस्य लोपः स्यात् ईयेपोः परयोः, नक्षत्रष्णे ईपि च । सौरी आगस्ती चातुरी । ट—वयी भूषणी । उ—विदुषी

क्ये गार्गीयति क्ये गार्गायते च्वौ गार्गीकरोति इत्यादि अपत्ये किं ? मैत्रायते अनादिति किं ? गार्ग्यायणः वात्स्यायनः ॥ २५९ ॥

ईयश्च ईप्च ईयेपौ तयोः । भे नक्षत्रे ष्णः भष्णः तस्मिन् । सूर्य्यागस्त्ययो-रीये ईपि च परे तिष्यपुष्ययोर्नक्षत्रविहिते ष्णे परे ष्णा मत्ययोरीपि परे यस्य लोपः स्यादित्यर्थः । ईये तु सूर्य्यस्येदमित्यर्थे ष्णः सौर्य्यं तेजः । पुनः सौर्य्याय हितं इत्यर्थे ईय प्रत्यये अनेन यलोपे सौरीयम् । सौरिति सूर्य्यस्येयमित्यर्थे ष्णे सौर्य्य इति स्थिते षित्वादीपि अनेन यलोपः एवं आगस्तीयं आगस्ती । तिष्येण युक्ता रात्रिरित्यर्थे ष्णे कृते अनेन यलोपे षित्वादीपि तैषी एवं पौषी । चातु-रीति ष्णास्य सामान्यस्य ग्रहणात् चतुरस्य भावश्चातुर्य्यं एवं उचितस्य औचित्यं मित्रस्य मैत्र्यं समग्रस्य सामग्र्यं इत्यादीनां पचे वक्तव्यत्वात् स्त्रीत्वे षित्वादीपि अनेन यकारलोपे चातुरी औचिती मैत्री सामग्री इत्यादि । ट इति टकारानु-बन्धस्येत्यर्थः वयी इति विवेर्वाऽयट् । भूषणीति भूषकि भूषणे भूष्यतेऽनयेत्य-नट् । उ इति उकारानुबन्धस्येत्यर्थः । विदुषीति वेत्तेः शतुः क्वसुर्वेति शतस्थाने क्वसुः उदित्वादीपि वसोर्वः सेमप्युरिति वस्योत्वे क्विादिति षत्वम् । श्रीमतीति श्रीरस्ति यस्या असौ इत्यर्थे मतुः । भवतीति भातेरौणादिको डवतुः । ऋ इति । ऋकारानुबन्धस्येत्यर्थः । पचन्तीत्यादि डुपचौ͡ष पाके शतः । न इति । नान्तस्येत्यर्थः । दण्डिनीति दण्डोऽस्ति यस्या असौ इत्यर्थे नेकाजादि-न्वेति इन् । अर्वतीति नान्तत्वादीप् अर्वणोऽनञ इति तुङ् । राज्ञीति सुग-मम् । शुनीति श्वयुवमघोनामिति वकारस्य उकारः । मघोनी मघवतीति मघोनस्तुङ् वेति तुङो विकल्पः ऋ इति । ऋदन्तस्येत्यर्थः । कर्त्रीति करोतौ-त्यर्थे तृन् । क्रोष्ट्रीति क्रोष्टुशब्दस्य स्त्रियां वृत्तौ क्रोष्टोस्तुन इति तृणादेशे ऋदन्त-त्वादीप् । अञ्च इति अञ्चधातोः क्विबन्तस्येत्यर्थः । प्रतीचीति प्रत्यञ्चतीति क्विप् गतावर्थे हसुङ नो लोप इति न लोपे प्रत्यच् इति स्थिते ईपि अचोऽल्लोपोर्घ

अमती भवती। [२४५] अप् यनो नित्यं, क्र—पचन्ती। [२४४] आदीपोः, तुदन्ती तुदती, भान्ती भाती। न—दण्डिनी अर्वती राज्ञी शुनी, मघवती मघोनी। क्त—कर्त्रीं

---

श्चेति अलोपे दीर्घः। प्रत्यञ्चीति पूजार्थे नलोपनिषेधः। तिरश्चीत्यादि तिरो-ऽञ्चतीत्यादि वाक्ये क्विपि गत्यर्थत्वान्नलोपे तिर्य्यगसुसुयगित्यादिना तिरश्चाद्या-देशः। वाह इति। विसन्त वहतेरित्यर्थः। भारौहीति भारं वहतीति ढाङ्ग वह इति विण् तत ईपि वाहौवौ पाविति वाशब्दस्यौकारः। श्वेतौही श्वेतवाहीति श्वेतात्तु वेति औकारी वा। शाल्यूहीति अनादुरित्यूकारः। अत्र वाह इत्यनेन विसन्त वहतेरेव ग्रहणं न तु वाहस्वरूपस्य तेन अनडुहीत्यपि स्यात्। नदादेरुदाहरणमाह नदीति नदशब्दे नदतीति पचादित्वादनि नदी। मत्सीति जातेरत इत्यत यकारोङ् वर्जनादप्राप्तौ नदादित्वादीप् सूर्य्यागस्त्यस्ये-त्यादिना यलोपः। नदादिस्तु "नदीदेवशरश्चौरगाहचेलभषप्लवाः। गौरकन्दर-तर्कारास्तरुणः कणकाकिणौ। कदलामलकौ सूदहरीतक विभीतकाः। गवी-वदीरसुर्दीर्घौ गूर्द द्रौणौ च धातकः। आयुस्थूणाढ़कौ पावकोषातक पुटास्ततः। कपाटमावटी नाटौ नटौ भीटश्च शल्लकः। वराट कुटभौ लिङ्गं सुपाटपटश-ष्कुलाः। मूलाटः कूवलः सूचः शचीमण्डल कुण्डलौ। लौहिताण्डोऽथ शुष्का-ण्डमटपुष्कल पिप्पलाः। कदलः कन्दलः पिण्डः काकलौ विकलोऽषः। आनन्दः पूप आसन्नी भौरिकिभौलिकिर्हत्। औद्गाही मालिरालम्बि निष्कलौ सुष-पाण्डवौ। सुमः सौधामदेहश्च पिषङ्गातसवेतसाः। मालतः समसूपौ च विल्ल-मण्डप केकयाः। गडुनी गेहमण्डौ च सुषवः पृथिवः पृथुः। अनुस्तीथ तरः शङ्गः शमे आवट इत्यपि। क्रष्टौ मनुष्यौ मत्स्यश्च सुकयौ गवयौ हयः। शठः पुलस्तथा कोल एतदाद्या नदादयः"। पुत्रशब्दोऽपि नदादाविति केचित्। तथाच सुतातु दुहिता पुत्त्रीति त्रिकाण्डशेषः। लज्जा तिरश्चां यदि चेतसि स्यादसंशयं पर्वतराजपुत्र्या इति कालिदासोऽपि। नदादिराकृतिगणः इति केचित्॥ २६०॥

श्रीरा·टी—सूर्य्यश्च अगस्त्यश्च तत्तस्य तिष्यश्च पुष्यश्च तत्तस्य णाश्च मत्स्यश्च तत्तस्य ईयश्च ईप् च तौ तयोः भं नक्षत्रं तत्र णः तस्मिन्। सूर्य्यागस्त्य ईयेपाः तिष्यपुष्यस्य भणि णामत्स्यस्य ईपि यलोप इत्यर्थः। सौरीति सूर्य्यो देवता अस्या इत्यर्थे णाः यथोर्लोपः षित्वादिपी अनेन यलोपः। एवमागस्ती। चातुरी चतुरस्य भाव इत्यर्थे ब्राह्मणादित्वात् णाः सामान्यणाग्रहणात् अनेन

क्रोष्ट्री । अन् च—प्रतीची प्रत्यञ्ची, तिरश्ची तिर्य्यञ्ची, अमुमुईची अदमुईची उदीची । वाह—भारौही श्वेतौही श्वेतवाही शाल्यूही । नदी मत्सी गौरी ।

---

यलोपः । एवं मैत्री औचितीत्यादि त्रयीति त्रयाणां पूरणीत्यर्थेऽयट् भूषणीति भूष्यतेऽनया घेऽनट् । विदुषीति विदेः शतुः क्वसुः श्रीरस्ति यस्या इत्यर्थे मतुः । भवतीति भाधोर्डवतुः पचदिवतुदभा एतेभ्यः शतः । दण्डी ऽस्या अस्तीत्यर्थे इन् । अर्वणस्तुङ् ईपि । राजन् शब्दस्य ईप्यलोपः श्वन्शब्दस्य ईपि वस्य उः मघोनस्तुङ्वा ईपि पचे वस्य उः । क्रुधोस्तृण् कर्त्तृ क्रोष्टोः स्त्रियां तृणीप् क्रोष्ट्री । प्रत्यच् शब्दात् ईपि अचोऽल्लोपोधस्य स्वस्य घंश्च प्रत्यञ्ची पूजार्थेन नलोपः । ईपि तिर्य्यच् अमुमुयच् अदमुयच् उदच् तिरश्चाद्यादेशाः । भारवाहशब्दादीपि वाह वा औ । श्वेतवाहीति श्वेतात्तु वा इत्युक्तेः । शाल्यूहीति अनादूः नदीत्यादि मत्स्यस्य णत्र मत्स्यस्येति यलोपः नदादिर्यथा । नद मद देहं तर दर चौरं देवगरौ पुर तट नट चेलम् । अनडुत् कोल महद्वृहट्ट्यं गवयः मुकय मत्स्य मनुष्यम् । देहल गडुजं मण्डप मण्ड निष्काल विकलं पुष्कल पिण्डम् । गाह पृथु प्लव शठ भष सूच केकय पृथिव भोट पिशङ्गम् । पाण्डर गौरं पुवानन्दं शस्कुल कुवल द्रुण तर्कारं कन्दर कदरामलकः वृषः वदरी धातक वल्लक पूपम् । नाट मठाढ़क मालत सूपं पिप्पल वेतस कल्लल विल्वम् । आरट मारट पट सुष्कन्दं द्रोण पुर्णा कण काकिण पातम् । वृष शष काकल, कदल कवाट कोषातकपुटमतसवराटम् । शल्लक मण्डल कूट सृन्नाटम् । मूर्ड्हरीतक गूर्ड्स्फ-पाटम् । सुषवोर्ड विभीतक माकन्दं वयसि किशोरस्तरुण चिरिण्टम् । वर्कर तलन कुमार वषूटं नामनि केवल भेषज्ञ पापम् । सारङ्गावर भोग समानम् : रेचक्र देवक भिन्नुकवर्गम् । कौखीगीघीटोठीडीव्यस्तीथीप्रीहीचीचीपीष्यः । प्रीडीच दीर्घजिह्वश्च भागनेय रजस्वलौ मामकार्य्य क्रतौ शृङ्गः मातङ्गश्च सुमङ्गलः । अथ भौलिङ्गिरालम्बिभौरिक्यौन्दाहमालयः । आयस्तु मौद्गाद्दमालिभौलिकिः श्रोणिरोगयः । कटाश्मरी विषाद्यादि पुच्छः प्रोक्तोऽग्रहायणः । सुर्म सौधार्म सौधाम मातामह पितामहाः । यूथाधिकार लवणं कुण्ड नाटव माठनम् । उपमानात् पलपुच्छात्वचे रोहिण रेवतौ । ऋष्यादि पञ्चानां जातिवाचित्वेऽपि युङ्त्वात् पिशङ्गादि त्रयाणां वर्णवाचित्वेऽपि अदन्तत्वात् शष्कुलाद्यकपञ्चाशतो जाति वाचित्वेऽपि नित्यस्त्रीत्वादप्राप्तेः पाठः । द्रोण शब्दोऽम्बुवाहिन्यां कुटशब्दः शालायां नित्यस्त्रीलिङ्गः अवयस्यपि तरुणी तनुनीत्यन्यः पुत्रशब्दो दुहितर्थः

## २६१ । णचखसाद्वनो रङीप् वा तु हे ।

णचखसात् ५।, वनः ५।, रङ् ।१।, ईप् ।१।, तु ।१।, हे ७। ।

**णादचः खसाच्च विहितात् वन ईप् स्यात्, वनोरङ् च, स्त्रियां हे तु वा। अवावरी धीवरी हरिदृश्वरी बहुधीवरी बहुधीवा।**

---

तथाच सुता च दुहिता पुत्त्रीति त्रिकाण्डशेषः। स्वमते कौरव्यादीनां पाठः। औन्दाहमालिभौलिङ्गि आलम्बि औदगाहमालि इत्येषां णेर्यङ्दाविधानार्थः पाठः। भौरिकि भौलिक्योः क्रोड्यादि पाठात् भौरिक्या भौलिक्या इत्यपि। कटिः श्रोणिः। अश्मरी रोगभेदः। विषाद्यादिपुच्छी यथा। विषपुच्छी शरपुच्छी कलमपुच्छी श्वपुच्छी मणिपुच्छी। अग्रे हायनमस्याः अग्रहायणी अधिकारोऽस्त्यस्याः अर्शादित्वादः अत पाठादीप् अधिकारी। उपमानात् पक्षपुच्छी यथा शुकपक्षी शुकपुच्छी सिंहपुच्छी। रोहिणी रेवती च नक्षत्रम्। आकृतिगणोऽयम्। नृजातेरितः। इदन्तान्मनुष्यजातेरीप् स्यात् कुन्ती अवन्ती दाक्षी औदमेयी विशेषविधेर्यङो निषेधः। इतः किं दरत् नृजातेः किं तित्तिरिः वैड़ालिः। ईपि णारस्य वा नायनो लोहितादेस्तु नित्यम्। एषां णारस्य नायनो वा स्यात् ईपि लोहितादेः परस्य णारस्य नायनो नित्यं गार्ग्यायणी वात्स्यायनी पक्षे गार्गी वात्सीत्यादि। लोहितायनी कात्यायनी लोहितादिर्नड़ादौ ज्ञातव्यः। आसुर-माण्डूक-कौरव्याणां ङायनो वा। एषां ङायनो वा स्यात् ईपि ङ्इत् आसुरायणी माण्डूकायनी कौरव्यायणी अतएव कौरव्यादीप्। वापक्षे आसुरी माण्डूकी कौरव्या इदं नेच्छन्त्यन्ये कथं कौरवी सेनेति इदमर्थे णादीप्॥ २६०॥

मूर्द्धन्य णच अच्च खसश्चेति णचखसं तस्मात्। णान्तादजन्तात् खसाच्च धातोः परः तासुसित्यनेन विहितो यो वन्प्रत्ययस्तस्मात्। स्त्रियां ईपि सति वनो रङ् च स्यात्। बहुव्रीहौ तु रङीपौ वा इत्यर्थः। अवावरीति ओणृ अपसारणे तासुसिति वनिपि विड्वनोर्ङा इति णकारस्य आकारे ओकारस्य अवि अवावन इति स्थिते अनेन ईप् रङ् च। धीवरीति धाञः क्वनिपि दामागे इत्यनेन ङी। हरिदृश्वरीति हरिं दृष्टवतीति क्वनिप् प्रत्ययः वकारस्य दन्त्यत्वेन झसपरत्वाभावात् शक्राजेति षङ् न स्यात्, बहुधीवरीति बहवो धीवानो यस्यामिति बहुव्रीहौ ईप् रङ् च ईपोऽप्राप्तिपक्षे रङोऽप्यभावः एकयोगनिर्दिष्टानां सहवा प्रवृत्तिः सहवा निवृत्तिरिति न्यायात्। ईप् रङोरप्राप्तिपक्षे डेऽन इति

२६२। ऊधसः संख्यादि दाम वयोऽर्थ-हायनात् हे।

स ।१।, न: १।, च ।१।, ऊधस्-संख्यादि-दाम-वयोऽर्थहायनात् ५।, हे ७। ।

**ऊधसः सङ्ख्यापूर्वात् दाम्नो वयोऽर्थ-हायनाच्च स्त्रियाम् ईप् स्यात् हे, सस्य च नः स्यात् । पीनोध्नी द्विदाम्नी द्विहायनी ।**

---

डापि बहुधीवा डापोऽप्यप्राप्तिपक्षे नान्तत्वेन स्थितिः। किञ्च नान्तत्वादीपि कृते केवलरङी विधानेनैवेष्टसिद्धौ रङ् सहितेपी विधानात् ईपचाम्वस्यादित्यनेन प्राप्तस्य केवलस्य ईपी बाधनार्थम्। ण च खसात् किं ? यज्वा ॥ २६१ ॥

श्रीरा-टी—णच अच्च खसश्च तत्तस्मात् वनीनान्तत्वादीपि सिद्धे विधानं ईप्येव रङ्विधानार्थं तेन बहुधीवे बहुधीवानौ इत्यादौ न रङ्। णचखसा-द्वनोरङीपीति कृते अर्वरी धीवरी बहुगत्वरी बहुसत्वरीत्यादि सिद्धावपि बहु-धीवरी बहुधीवेत्यादि सिद्धार्थं वातुहे इति कृतं ईपचाम्वस्यादित्युक्तेः। अवाव-रीति ओणृ अपसारणे अस्मादन् विड्वनोङा ओ अव्। धीवरीति धाधातोः क्वनिप् दामागेहाकापिबेति ङी। हरिदृश्वरीति हरिं पश्यति इति क्वनिप् ॥२६१॥

वयोऽर्थो यस्य स वयोऽर्थः सचासौ हायनश्चेति वयोऽर्थहायनः दामच वयो-ऽर्थहायनश्च दामवयोऽर्थहायनौ संख्या आदिर्ययोस्तौ संख्यादी संख्यादी च तौ दामवयोऽर्थहायनौ चेति संख्यादिदामवयोऽर्थहायनौ ऊधस च संख्यादिदामव-योऽर्थहायनौ चेति तस्मात्। ऊधसः सख्यापूर्वदाम्नः संख्यापूर्ववयोऽर्थहायनाच्च स्त्रियामीप् स्याद्बहुव्रीहौ सस्य च न स्यात् ऊधस एव अन्येषामसम्भवात्। हे इत्यस्य पुनरुपादानं परसूत्रे निवृत्त्यर्थम्। पीनोध्नीति पीनमूधो यस्याः इति वाक्यम्। द्वे दामनी यस्याः सा द्विदाम्नी। असंख्यादेस्तु सुदाम्नौ सुदाम्नि सुदा-मानौ धेनू इति। द्वौ हायनौ वयो यस्याः सा द्विहायनी कन्या। असंख्यादेस्तु गतहायना। वयोऽर्थः किं ? द्विहायना शाला। वयस्तु प्राणिनी गत-परमायुः ॥२६२॥

श्रीरा-टी—स इति लुप्त षीक्कं न इति प्रीक्कं सः। वयोऽर्थे हायनः अथवा वयोऽर्थो यस्य सचासौ हायनश्चेति सः दामच वयोऽर्थहायनश्च तौ संख्या आदि-र्ययोस्तौ तौ च तौ तौचेति संख्यादि दामवयोऽर्थहायनौ ऊधश्च संख्यादि दामवयो-ऽर्थहायनौ च तत्तस्मात् ऊधसः संख्यादिदाम्नः संख्यादिवयोऽर्थहायनाच्च स्त्रियामीप् स्यात् ऊधसः सस्य नश्च। पीनोध्नीत्यादि पीनमूधो यस्याः सा द्वे दामनी यस्याः सा

२६३। जातेरतो ऽस्त्री युङ् सत्काण्ड-प्राक्प्रान्तशतैकादि पुष्पसम्भस्त्राजिनैकशण पिण्डादिफल नादिमूलात्।

जाते: ५।, अत: ५।, अस्त्री—मूलात् ५।।

जातिवाचिनोऽकारान्तात् स्त्रियामीप् स्यात् नतु स्त्री-

---

द्वौ हायनौ वर्षौ यस्या: सा इति वाक्यं हे किम् अतिदाम संख्यादे: किं सुदामा वर्षोऽर्थे किं विहायना शाला ॥ २६२ ॥

स्त्री नित्यस्त्रीलिङ्ग:। य उङ् यस्य स युङ्। सत् च काण्डञ्च प्राक् च प्रान्तञ्च शतञ्च एकञ्च ते ते आदर्यो यस्य तत् सत्काण्ड प्राक् प्रान्तशतैकादि सत् काण्ड प्राक् प्रान्त शतैकादि च तत् पुष्पञ्चेति सत्काण्ड प्राक् प्रान्त शतैकादि पुष्पं सम्च भस्त्राच अजिनञ्च एकञ्च शणञ्च पिण्डञ्च ते ते आदयो यस्य तत् संभस्त्राजिनैकशणपिण्डादि संभस्त्राजिनैकशणपिण्डादि च तत् फलञ्चेति संभस्त्राजिनैकशणपिण्डादिफलं नञ् आदिर्यस्य तत् नादि नादि च तत् मूलञ्चेति नादिमूलम्। तत: स्त्रीच युङ्च सत्काण्ड प्राक् प्रान्त शतैकादिपुष्पञ्च संभस्त्राजिनैकशणपिण्डादिफलञ्च नादिमूल-ञ्चेति। पश्चात् नञ् समासे अस्त्रीयुङ् सत्काण्ड प्राक् प्रान्त शतैकादिपुष्प संभस्त्रा-जिनैकशणपिण्डादिफलनादि मूलं तस्मात्। शीतपाकीति शीते पाको यस्या: सा शीतपाकी ओषधिविशेष:। जातिवाचिनो मुख्यादेव ईप् तेन अब्राह्मणा पुरी बहुमृगा भूमिरित्यादौ न स्यात्। नित्यस्त्रीलिङ्गस्य तु मक्षिका बलाका। किञ्च नञा निर्दिष्टमनित्यमिति न्यायात् पाक कर्ण पर्ण वनान्ताज्जातेर्नित्यस्त्रीलिङ्गा दीप् स्यात्। यथा ओदनपाकी शङ्कुकर्णी शालपर्णी गोवनी। अतएव शीतपाकी इति स्वयम् उदाहृतम्। अजातेस्तु सुपाका स्त्री अपर्णा दुर्गा। युङस्तु वैश्या क्षत्रिया। ऋष्य-हयगवयसूकयमत्स्यमनुष्याणां युङत्वादप्राप्तौ नदादौ पाठादीपि ऋष्यी हयी गवयी सूकयी इत्यादि सूकयी मृगविशेष: सत्काण्डाद्यादि पुष्पात्तु सत्पुष्पा काण्डपुष्पा प्राक्पुष्पा प्रान्तपुष्पा शतपुष्पा एकपुष्पा। एभ्य: किम्? शङ्खपुष्पी चोरपुष्पी अजा-तेस्तु बहुपुष्पा लता। संफला भस्त्राफला। भस्त्रा चर्मप्रसेविका इत्यमर:। भस्त्र इत्यकारान्त इति कश्चित् भस्त्रफला अजिनफला एकफला शणफला पिण्ड-फला एभ्य: किम्? पूतिफली रक्तफली। अजातेस्तु बहुफला शाखा। नादिमूलात्तु

युङादेः। मृगी हंसी शीतपाकी। स्त्रीयुङादेस्तु मक्षिका वेश्या सत्पुष्पा संफला अमूला। जातेः किम्? मन्दा।

---

अमूला नञ्पूर्वस्यैव वर्जनात् शतमूली बहुमूली। अजातेस्तु दृढ़मूला लता। ननु मुख्यजातेरेव ग्रहणात् शङ्खपुष्प्योत्यादिषु कथमीप् स्यादिति चेत् सत्यं यत्र गौणदशायामेव जातित्वं तत्र जातेर्मुख्यत्वमेव। जातिमाह आकृतिग्रहणेत्यादि। आक्रियते व्यज्यते अनेन आकृतिः संस्थानं आकृत्या ग्रहणं ज्ञानं यस्याः सा आकृतिग्रहणा जातिराकृतिग्रहणा भवति संस्थानव्यङ्ग्या इत्यर्थः। तेन मनुष्य गौमृगहंसादीनां पृथक् पृथक् संस्थानैर्व्यज्यमाना मनुष्यत्व गौत्व हंसत्वादिर्जातिः। एवं ब्राह्मणक्षत्रियवैश्यशूद्राणां पृथक् पृथक् संस्थानाभावात् ब्राह्मणादेर्जातित्वं नायातमिति लक्षणान्तरमाह लिङ्गानाञ्च न सर्वभागिति। या सर्वाणि लिङ्गानि न भजति साच जातिरित्यर्थः। स्त्रीपुंसयोरपत्यान्ता द्विचतुःषट्पदोरगाः जातिभेदाः पुमाख्याश्चेत्यमरसिंहेन जातिभेदानां स्त्रीपुंसयोरेवेति नियमे ब्राह्मणादीनां सर्वलिङ्गभाजित्वाभावाज्जातित्वं, किञ्च अज्ञातहंसस्य जनस्य हंसदृष्टवतोऽपि तस्य संस्थानेन हंसत्वं व्यञ्जितुं न शक्यते इति हंसस्यापि जातित्वं नायातमिति पूर्वलक्षणस्य दोषः। एवं देवदत्तादिसंज्ञाशब्दस्यापि सर्वलिङ्गभाजित्वाभावात् जातित्वापत्तिरिति द्वितीयलक्षणस्य दोषः इति दोषद्वयमपाकर्त्तुं द्वयोर्लक्षणयोर्विशेषणमाह सकृदाख्यात निर्ग्राह्येति। सकृदेकवारं आख्यातेन उपदेशेन निर्निश्चयेन ग्राह्या गृहीतुं शक्या इत्यर्थः। तेन ईदृशो हंस इत्युपदेशे हंसं दृष्टवतस्तस्य संस्थानेन हंसत्वं व्यञ्जितुं शक्यत एवेति पूर्वलक्षणस्य न दोषः। एवं देवदत्तादि संज्ञाशब्दस्य एकस्मिन्नुपदेशेऽपि अन्यस्मिन् ज्ञानाभावाज्जातित्वं न स्यादिति परलक्षणस्यापि न दोषः। गार्ग्यः पुरुषः गार्गी स्त्री गार्ग्यं कु मिति सर्वलिङ्गभाजित्वात् संस्थानव्यज्यत्वाभावाच्च गार्ग्यादीनां जातित्वानुपपत्तौ तृतीयं लक्षणमाह गोत्रञ्चेति। पुत्रपौत्रप्रभृतिकमपत्यं गोत्रमिति पूर्वाचार्य्यपरिभाषितं गोत्रमिह गृह्यते। गार्गी वात्सीत्यादि। चतुर्थं लक्षणमाह चरणैः सहेति चरणञ्च जातिरित्यर्थः। चरणशब्दो वेदैकदेशवाची कठादिरूपः। स च अध्ययनक्रियासम्बन्धेन प्रवृत्तत्वात् क्रियावाचक एव न तु जातिवाचकः। तेनास्य जातिसंज्ञार्थं चरणैः सहेत्युक्तं गार्ग्यादीनां षित्वादीपि सिद्धेऽपि जातिसंज्ञा फलन्तु गार्गी भार्य्या यस्यासौ गार्गीभार्य्यः इत्यादौ नीप्ता ककौङित्यादिना पुंवद्भावनिषेधः। गार्गी चासौ भार्य्या चेति गार्ग्यभार्य्या इत्यादौ कौङादिः पुंवदित्यादिना पुनः पुंवद्भावः। तत्रैव तत्वेत्वजात्याख्य इत्युक्तेः गार्ग्याभावः गार्गीत्वं गार्गीता इत्यादौ पुनः पुंवद्भावनिषेधश्च इति॥ २६२॥

आकृतिग्रहणा जाति र्लिङ्गानाञ्च न सर्वभाक् ।
सकृदाख्यातनिर्ग्राह्या गोत्रञ्च चरणैः सह ॥
गार्गी कठी कौथुमी ।

---

श्रीरा-टी--य उङ् यस्य सः सञ्च काण्डञ्च प्राक्च प्रान्तञ्च शतञ्च एकञ्च तत् तत् आदिर्यस्य तत् तच्च तत् पुष्पञ्चेति तत् सं च भस्त्रञ्च अजिनञ्च एकञ्च शणञ्च पिण्डञ्च तत् तत् आदिर्यस्य तत् तच्च तत् फलञ्चेति तत् न आदिर्यस्य तन्नादि नादि च तत् मूलञ्चेति तत् । पश्चात् स्त्रीच युङ् च सदाद्यादि पुष्पञ्च सदाद्यादि फलञ्च नादि-मूलञ्च तत् न तत् अस्त्रीयुङ् सत्काण्ड प्राक् प्रान्तशतैकादिपुष्पसंभस्त्राजिनैकशण-पिण्डादिफल नादिमूलं तस्मात् । मृगीति मुख्य एवायं विधिः तेन बहुमृगा भूः बहुहंसा पूरित्यादौ न स्यात् । शीतपाकीति शीतेन पाको यस्याः सा इत्यत्र हि नजातिरुच्यतेऽतोजातेरगौणत्वम् । एवमोदनपाकी गोवनी शङ्कुकर्णीत्यादि । मच्चि-केति एवं पिपीलिका बलाका इत्यादि । वैश्येति चत्त्रिया इत्यादि । सत्पुष्पेति एवं काण्डपुष्पा प्राक्पुष्पा प्रान्तपुष्पा शतपुष्पा एकपुष्पा । एभ्यः किं शङ्खपुष्पी चोरपुष्पी-त्यादि । सम्फलेति एवं भस्त्रफला अजिनफला एकफला शणफला एभ्यः किं पूतिफली तालफलीत्यादि । अमूलेति न सन्ति मूलानि यस्याः इति वाक्यम् । नञः किं बहु-मूली शतमूली जातेः किं घनपुष्पा स्थूलफला निर्मूला श्रुतिः समूला स्मृतिः । अथ जातिवाचकशब्दज्ञापनार्थं जातिलक्षणमाह । आकृतीति । आक्रियते व्यज्यतेऽनया इत्याकृतिः अवयवसंस्थानादिः । गृह्यतेऽनेनेति ग्रहणं धसामान्यसिद्धत्वेन स्त्रीत्वा-भावान्नेप् । आकृतिः ग्रहणं यस्याः सा । यद्वा गृह्यते इति ग्रहणं आकृत्या ग्रहणं यस्याः सा आकृतिग्रहणा संस्थानव्यङ्ग्या इत्यर्थः तथाच मृगसिंहव्याघ्रादिषु शृङ्ग शठादिसंस्थानव्यङ्ग्या मृगत्वादिजातिरेतेन गुणक्रियालचणा जातिर्निराकृतेति । ब्राह्मणत्वादिजातेर्न संस्थानव्यङ्ग्यत्वं तत् संस्थानस्य जात्यन्तरसंस्थानसाम्यादतो लक्षणान्तरमाह लिङ्गानाञ्च न सर्वभागिति यानि लिङ्गानां पुं स्त्री क्लीवानां सर्वाणि रूपाणि न भजते सा जातिः तथा चाविलिङ्गशब्दवाच्यापि जातिरित्यर्थः तेन ब्राह्मण-चत्त्रिय-वैश्य-शूद्रादीनां स्त्रीपुंसयोर्वर्त्तमानत्वादसर्वलिङ्गभाक्पदवाच्यत्वात् ब्राह्मण-त्वादिः जातिः तटत्वादिजातेः स्त्रीलिङ्गभाग्वाच्यत्वेऽपि संस्थानव्यङ्ग्यत्वात् पूर्वलक्षणेन जातित्वं व्यवस्थापितमथवा नदादिपाठादीप् । ननु देवदत्तादेरसर्वलिङ्गभाग्वाच्यत्वेन कथं न जातित्वमित्यत आह सकृदाख्यातनिर्ग्राह्येति सकृदेकवारमाख्याता उपदिष्टा

## २६३ । गुणाद्वोतोऽखरुस्योङः ।

गुणात् ५।, वा ।१।, उत: ५।, अ-खरु-स्योङ: ५। ।

गुणवाचकादुकारान्तात् स्त्रियामीप् स्यात् वा, नतु खरोः

---

सती निर्ग्राह्या निश्चयत्वेन ग्राह्या इत्यर्थः तथाचासर्वलिङ्गभाक्तु ब्राह्मणादिषु उपदेश-व्यङ्ग्या जातिरित्यर्थः। उपदेशो हि एकस्यां व्यक्तावेकदा ज्ञातोऽनेकव्यक्तिषु तत्तत् प्रत्ययनिमित्तं भुवनसकलव्यक्तिव्यापक इहाभ्युपगम्यते यथा एकस्मिन् ब्राह्मणे सकृदुपदिष्टेनैकेन धर्मेणायं ब्राह्मणोऽयं ब्राह्मण इत्यनेकव्यक्तिप्रतीतिः, न तथा देवदत्तादौ संज्ञाशब्दत्वेनैकमात्रवृत्तित्वात्। एतत्तु सर्वस्य जातिरूपयुक्तं तथाहि शुक्ले कृष्णे वा गोपिण्डे सकृदुपदिष्टा गोत्वादिः जातिः। पिण्डान्तरेऽपि गौरयमित्यादि ज्ञाननिर्ग्राह्या भवति उपदेशस्य तथाभूतसाधनत्वात्। एतेन जातिरेका निरवयवा नित्यानेकव्यक्तिसमवायिनी। तथा पारिभाषिकीं जातिमाह गोत्रञ्च चरणैः सह इति पुत्रपौत्राद्यपत्यमिह पारिभाषिकं गोत्रम्। यथा गार्ग्यः वात्स्य इत्यादिः गार्ग्यत्वादेर्न संस्थानव्यङ्ग्यत्वं तत् संस्थानस्य जात्यन्तरसामान्यात् न वा सर्वलिङ्गभाग्वाच्यत्वं गार्ग्यः गार्ग्यी गार्ग्यं कुलम् इत्यादि प्रयोगात् अतः पृथगुक्तम्। अस्य पारिभाषिकजातित्वात् गार्ग्यमानिनी वात्स्यायनमानिनीत्यादौ पुंवद्भावः न तु वैयाघ्रपदीभार्य्यो इत्यादौ जातिस्वाङ्गेपुत्वमानिनी इत्युक्तेः। चरणं शाखा वेदैकदेशं कठादिशब्दः स तु क्रिया-वचनः कठादिरूपचरणस्याध्ययनक्रियासम्बन्धेन वर्त्तमानत्वात्। तथाच कठादिशब्दोऽध्ययनविशेषणमाचष्टे यथा तदध्ययनसम्बन्धात् अध्येतृपुरुषेषु वर्त्तते तदा क्रियैवास्य प्रवृत्तिनिमित्तं सैव पारिभाषिकी जातिः अस्यापि पारिभाषिकजातित्वात् कठी रैकी कठमानिनी कठीभार्य्येत्यादिः स्यात्। लक्षणचतुष्टयाव्याप्यत्वात् सन्देति न जातिः। गार्गीति गर्गस्यापत्यं स्त्री गार्गी। गोत्रविहितयोः ष्णय ष्णप्रत्यययोः युङन्त्वादीप् निषेधे सिद्धे पुनरजादौ युङन्तानां पाठात् नेह युङन्त्वादीप् निषेधः। कठीति कठो ब्राह्मणस्तेन प्रोक्तः अधीयते यः सोऽपि कठस्तस्मात् स्त्रियामनेनेप् एवं कौथुमी ॥ २६२ ॥

स्यः संयोगः स्य उङ् यस्य स स्योङ् खरुश्च स्योङ्चेति न खरुस्योङ् अखरुस्योङ् तस्मात्। मृद्वी मृदुरिति मार्दवगुणयोगात्। एवं पट्वी पटुः लघ्वी लघुः गुर्वी गुरुरित्यादि। खरुशब्दस्य शुक्लवर्णवाचकत्वात् प्राप्तौ निषेधः। गुणमाह सत्व इत्यादि। यः सत्वे द्रव्ये निविशते तदेवाश्रयतीत्यर्थः। अपैति ततःसत्वादपगच्छतीत्यर्थः। यथा

स्त्रीऽङ्ख। मृद्वी मृदुः। खरुस्त्रीऽङ्स्तु खरुः पाण्डुः। गुणात् किं ?—

सत्त्वे निविशतेऽपैति पृथग्जातिषु दृश्यते।
आधेयश्चाक्रियाजश्च सोऽसत्त्वप्रकृतिर्गुणः॥ धेनुः।

---

श्यामता पूर्वमाम्रादिफलमुपगच्छति पश्चात् पक्वदशायां ततोऽपैति। पृथग्जातिषु दृश्यते भिन्नेषु बहुषु पदार्थेषु दृश्यते। यथा आम्रादिफले या श्यामता दृष्टा सा कदलीफलादिषु च दृश्यते स गुणः स्यादित्यर्थः। ननु तर्हि उत्क्षेपणावक्षेपणा-कुञ्चनप्रसारणगमनानि पञ्चैव कर्माणीति उक्तकर्मस्वपि गुणत्वापत्तिः। यदा द्रव्यं सक्रियं भवति तदा कर्म सत्वे निविशते यदा द्रव्यं निष्क्रियं भवति तदा कर्म सत्त्वादपैति पृथग्जातिषु च दृश्यते यथा मनुष्येषु गमनादिक्रिया दृश्यते तथा पश्वा-दिषु च दृश्यते अतः कर्मणोगुणत्वमपाकर्त्तुमाह आधेयश्चाक्रियाजश्चेति। आधेय उत्पाद्यः यथा पक्वमृण्मयपात्रेषु रक्ततागुणः सहि वह्निसंयोगादिना निष्पाद्यते अक्रियाज इति क्रियाया जायते क्रियाजः न क्रियाजोऽक्रियाजः नित्य इत्यर्थः। आकाशादिषु महत्त्वादिर्गुणः। ततश्च गुणस्य उत्पाद्यत्वमनुत्पाद्यत्वञ्च इति प्रकारद्वयदर्शनया कर्मणोगुणत्वं न स्यादिति ज्ञापितम्। कर्मत्वं सर्वमेव उत्पाद्य-मिति एवञ्चेत्तर्हि द्रव्यमपि गुणोऽस्तु तत्रापि ह्येते धर्मा वर्त्तन्ते। यथा तदपि द्रव्यमारम्भके अवयवद्रव्ये निविशते ततोऽपैति च यथा शरीरमवयवि तद्धि मस्तका-दिष्ववयवेषु समवेतं भवतीति तद्विनाशात् ततोऽपैति। पृथग्जातिषु पश्वादिषु च दृश्यते। एवं द्रव्यस्य उत्पाद्यत्वमनुत्पाद्यत्वञ्चास्ति अवयवि द्रव्यस्य उत्पाद्यत्वात् आकाशादेस्तु अनुत्पाद्यत्वादिति। अत आह असत्त्वप्रकृतिरिति। सत्त्वं द्रव्यं प्रकृतिः स्वभावः सत्त्वं प्रकृतिर्यस्य स सत्त्वप्रकृतिः न सत्त्वप्रकृतिरसत्त्वप्रकृतिः॥ २६४॥

श्रीरा-टी—स्त्र उङ् यस्य सः खरुः श्वेतार्थः। खरुश्च स्त्रीङ्च तत् न तत् अखरुस्त्रीङ् तस्मात्। गुणवाचकादिति गुणं व्यक्तिगुण—वाचकः घोतकः। मतु-लोपादभेदोपचाराद्वा तद्वति द्रव्ये वर्त्तमानादुकारान्तादित्यर्थः। मृद्वीति मार्दवगुण-विशिष्टा इत्यर्थः। अथ गुणवाचिशब्द ज्ञापनार्थं गुणलक्षणमाह सत्त्व इत्यादि। सत्त्वं द्रव्यं तत्र निविशते तदाश्रयति अपैति ततः सत्त्वादपगच्छति यथा श्यामो गुणः पूर्व-माम्रादिफलमाश्रयति पश्चात् पक्वदशायां ततोऽपगच्छति पृथक् जातिषु दृश्यते इति। पृथक् नानाजातयो येषां तेषु दृश्यते यथा हंसादिषु यः शुक्लादिगुणो दृष्टः स शङ्खादिषु दृश्यते एतेन सर्वेण जातिर्न गुणः न हि द्रव्यसमवायिनी जातिः सत्त्वा-

## २६५ । पाच्छोणादि स्वाङ्गेतोऽक्तेर्वा ।

पाद—स्वाङ्गेत: ५।, अक्तेः ५।, वा ।१। ।

पादः शोणादेः स्वाङ्गात् इकारान्ताच्च स्त्रियामीप् स्यात् वा न तु क्तेः । त्रिपदी त्रिपात्, शोणी शोणा चण्डी चण्डा, विम्बोष्ठी विम्बोष्ठा । स्वाङ्गात् किं?—

---

दपगच्छति जन्मनः प्रभृत्या विनाशादाधारस्यापरित्यागात् नापि जातिः पृथक्जातिषु दृश्यते ब्राह्मणत्वादेर्गवादिष्वसमवेतत्वादिदन्तु स्वरूपकथनम् । नापि सत्ता गुणः द्रव्यगुणकर्म्मसु वर्त्तमानत्वात् न च सा द्रव्यादपैति । नन्वेवं कर्मापि गुणः यदा सक्रियम्भवति तदा सत्त्वे निविशते यदा निष्क्रियं भवति तदा सत्त्वादपैति पृथग्जातिष्वपि दृश्यते यथा गमनादिक्रिया मनुष्येषु दृश्यते तथा गवादिष्वपि दृश्यते अतो निराकर्त्तुमाह । आधेय इत्यादि । आधेय उत्पाद्यः क्रियाव्यापारस्तस्मात् जातः क्रियाजः न क्रियाजोऽक्रियाजः नित्य इत्यर्थः । तथाचोत्पाद्यं घटादिरूपम् अनुत्पाद्यं परमाण्वादिरूपं कर्मणस्तूत्पाद्यमेव नानुत्पाद्यत्वं तस्य जन्यत्वात् एवं घटादेर्महत्वादिकमुत्पाद्यम् । आकाशादेर्महत्वादिकमनुत्पाद्यमिति । एवं सति द्रव्यमपि गुणः द्रव्यं हि द्व्यारम्भकेऽवयवभूते निविशते तदवयवसंयोगविभागविनाशादपैति पृथग्जातिषु दृश्यते अवयविद्रव्यस्योत्पाद्यत्वम् निरवयवद्रव्यस्य अनुत्पाद्यत्वम् अत आह असत्त्वप्रकृतिरिति । सत्त्वं द्रव्यं प्रकृतिः स्वभावो यस्य सः सत्त्वप्रकृतिर्न सत्त्वप्रकृतिरसत्त्वप्रकृतिर्द्रव्यभिन्न इत्यर्थः । एवं सत्यपि व्यवच्छेदकफलकत्वात् सत्त्वे स एवेत्यवधारणं द्रष्टव्यमन्यथा अभावेऽतिव्याप्तिः स्यात् घटाभावस्य निवेशात् घटसन्निधाने कृते तदपगमात् पृथग्जातिषु दर्शनात् ध्वंसस्य उत्पाद्यत्वादत्यन्ताभावस्यानुत्पाद्यत्वात् तथाच द्रव्यभिन्नस्य क्वचिदधिकरणे द्रव्ये द्रव्यमात्रेऽभिनिवेशः । ततोऽपगम इति द्वयं निवेशमात्रं क्वचिदधिकरणे । पृथग्जातिषु दर्शनं क्वचिदुत्पादनीयत्वं क्वचित् नित्यत्वं स गुण इत्यर्थः यथोक्तधर्मानाक्रान्तत्वात् धेनुरित्यत्र नेप् ॥ २६४ ॥

पादित्यस्य स्वाङ्गत्वेनैव प्राप्तौ पृथक् ग्रहणं नियमार्थम् । तेनायं नियमः बहुव्रीहौ संख्यासूपमानादित्यनेन पादस्य स्थाने कृतात् पादित्यनकारान्तादेशादेव ईप् स्यान्न तु अकारान्तात् पादात् । ततश्च भग्नपादा दीर्घपादा स्त्री इत्यादौ न स्यात् । त्रिपदीति त्रयः पादा यस्याः इति बहुव्रीहौ पादस्य पाद्भावेऽनेन ईपि पात् पत् पाविति पदादेशः । शोणादिश्च । शोणः कृपण कल्याणौ पुराणः कमलस्तथा । विकटी दारचण्डाश्च साधारण विशङ्कटौ । सहायारालभरुजा विषालाद्यास्तथापरे इति । शोणी

स्वाङ्गं स्यादद्रवं मूर्त्तं प्राणिस्थमविकारजम् ।
दृष्टं तत्रातत्स्थमपि तद्वत्ताद्दृशि च स्थितम् ॥

बहुस्वेदा द्रवत्वात् । सुज्ञाना अमूर्त्तत्वात् । सुमुखा शाला अप्राणिस्थितत्वात् । सुशोफा विकारजत्वात् । सुकेशी सुकेशा

---

कृपणी कल्याणी पुराणी कमली विकटी उदारी चण्डी साधारणी विशङ्कटी सहायी अराली भरुजी विशाली पक्षे श्रोणा इत्यादि । स्त्रीलिङ्गानां कटिश्रेणि प्रभृति स्वाङ्गानामिदन्तत्वेनैव सिद्धे मुखनखादीनाञ्च स्त्रीत्वाभावात् स्वाङ्गमिहोपसर्जन-मेवेति । चारुमुखी चारुमुखा सुनखी सुनखा दीर्घकेशी दीर्घकेशा इत्यादि । अत वाशब्दस्य व्यवस्थावाचित्वादिदं विवृणोमि । नासिकोदराद्बह्वच: । बह्वचां स्वाङ्गानां मध्ये नासिकोदराभ्यामेव ईप् स्यात् वा । तुङ्गनासिकी तुङ्गनासिका क्षीणोदरी क्षीणोदरा आभ्यां किं पृथुजघना चारुवदना दीर्घलोचना चारुश्रवणा । जङ्घोष्ठ-कण्ठकर्णशृङ्गाङ्गदन्तगात्रान्तपुच्छात् स्योङ: । संयोगोङां स्वाङ्गानां मध्ये एभ्य एव ईप् स्यात् वा । दीर्घजङ्घी दीर्घजङ्घा रक्तोष्ठी रक्तोष्ठा सुकण्ठी सुकण्ठा चारुकर्णी चारुकर्णा दृढ़शृङ्गी दृढ़शृङ्गा चार्वङ्गी चार्वङ्गा सुदन्ती सुदन्ता सुगात्री सुगात्रा स्थूलान्त्री स्थूलान्त्रा सुपुच्छी सुपुच्छा । एभ्य: किं सुनेत्रा सुगुल्फा । प्रोष्ठी छगला-न्त्रीति नित्यं सञ्ज्ञायाम् । शर कवर विषमणिभ्य: पुच्छात् पृथग्योगात् संज्ञायामिति नानुवर्त्तते । एभ्य: परात् पुच्छादीप् स्यान्नित्यम् । शरपुच्छी कवरपुच्छी विषपुच्छी मणिपुच्छी । पक्षाच्चोपमानादे: । उपमानपूर्वात् पुच्छपक्षाभ्यां नित्यमीप् स्यात् । श्वपुच्छी सिंहपुच्छी शुकपक्षी काकपक्षी । उपमानपूर्वात् किं सितपक्षा हंसी । गिरिपक्षी शाला इत्यत्र स्वाङ्गत्वाभावेऽपि ईप् । क्रोड़ खुर बाल शफ गुद प्रोथ गल भग ग्रीवादेर्न । एभ्य ईप् न स्यात् । सुक्रोड़ा सुखुरा सुबाला सुशफा सुगुदा सुप्रोथा दीर्घगला सुगला सुग्रीवा । सहविद्यमान नञ: । एभ्य: परात् स्वाङ्गादीप् न स्यात् । सहकेशा सकेशा विद्यमाननखा अकेशा । नखमुखान्नाम्नि । आभ्यामीप् न स्यात् संज्ञायाम् । शूर्पणखा कालमुखा शूर्पणखीत्यपि केचित् । ऋचि पाद: । ऋचि वाच्यायां पादित्यस्मादीप् न स्यात् । चतुष्पदा ऋक् त्रिपदा गायत्री चतुष्पदा ऋत्विगित्यादिकन्तु पादशब्देनैव साध्यम् । स्वाङ्गमाह । स्वाङ्गं स्यादित्यादि । विकारो धातुवैषम्यं विकाराज्जातं विकारजं न विकारजम् अविकारजम् अद्रवं मूर्त्तम् अविकारजं प्राणिस्थं यद्वस्तु तत् स्वाङ्गं स्यात् । यथा बिम्बोष्ठी बिम्बोष्ठा । द्वितीय-

रथ्या अप्राणिस्थस्यापि प्राणिनि दृष्टत्वात्। सुस्तनी सुस्तना प्रतिमा। प्राणिवत् प्राणिसदृशे स्थितत्वात्। राजी राजिः, क्तेस्तु बुद्धिः मतिः।

---

लक्षणमाह दृष्टं तत्रातत्स्थमपीति। अद्रवमूर्त्तो विकारजं प्राणिनि दृष्टम् अनन्तरमतत्स्थम् अप्राणिस्थमपि स्वाङ्गं स्यादित्यर्थः। यथा सुकेशी सुकेशा रथ्येत्यादि। तृतीयं लक्षणमाह तद्वत्तादृशि च स्थितमिति। तद्वत् अद्रवमूर्त्तो विकारजप्राणिस्थवस्तुतुल्यं यद्वस्तु तादृशि प्राणितुल्ये स्थितमपि स्वाङ्गं स्यादित्यर्थः। यथा सुस्तनी सुस्तना प्रतिमा इत्यादि। राजी राजिरिति एवं धूली धूलिः श्रेणी श्रेणिः वाली वालिः रजनी रजनिः पाणी पाणिः रात्री रात्रिः पुरन्ध्री पुरन्ध्रिः भ्रमी भ्रमिरित्यादि। किञ्च वाशब्दस्य व्यवस्थावाचित्वात् सुगन्धिः स्रक् युवजानिः पृरित्यादौ न स्यात्। क्तेस्तु बुद्धिः मतिः हृतिः ग्लानिरित्यादौ कृगृज्याग्लाह्लात्वादेरिति क्तेर्नि आदेशे स्थानिवत्त्वान्नेप्। एवं क्तिवर्जनेन क्तिसमानार्थस्य स्त्रीलिङ्गविहितस्य इदन्तप्रत्ययस्यापि वर्जनात् अजीवनिः काकारिरित्यादावपि न स्यात्॥ २६५॥

श्रीरा-टी—पादित्यनेन संख्यासुपमानादित्यादिनादिष्टस्य पादित्यस्य ग्रहणं शीर्ष आदिर्यस्य सः। पाच्च शीर्षादिश्च स्वाङ्गञ्च इच्च तत्तस्मात् नक्ति रक्तिस्तस्याः अर्थवशादितो विशेषणम्। त्रिपदी त्रयः पादा यस्याः सा इति वाक्यम् एवं द्विपदी द्विपात् चतुष्पदी चतुष्पादित्यादि। शीर्षीति अनुदात्तान्तवर्णादित्यनेन नित्यप्राप्तेऽनेन विकल्पः। शीर्षादिर्यथा "शीर्ष साधारणऽरानविषाण हयशङ्कटाः। कृपाण: कृपणोदारः कमलोविकटोऽञ्चतिः। अञ्चत्यहंति कल्याण यष्टिर्वास्ति विशङ्कटाः। सह्राय भरुजौ चण्डः पुराणोऽङ्गादि पश्चिमाः। नदीभेदे चन्द्र ागा वर्षाभूस्तु प्लवः स्त्रियाम्। अङ्गान्त दन्तकण्ठञ्च शृङ्गकर्णाञ्चमित्यपि। पुच्छ नेत्रं तथा गात्रं जङ्घमङ्गादिरीरितः। "हयशब्दस्य जातिवाचित्वेऽपि युङत्वात् अञ्चति अङ्कति अंहति एषां त्याद्यन्तप्रकृतिरूपकत्वात् यष्टिवस्त्योः त्यन्तत्वात्। अङ्गाद्यन्तानां स्वाङ्गवाचित्वेऽपि स्योङः स्वाङ्गस्याजादौ पाठात् शेषाणां सर्वार्थैरेव वा प्राप्ते पाठः। केचिन्नादौ हयमाहुस्तन्न हयया शतयोजनगामिन्येति हरिवंशे दर्शनात्। अङ्गादि पश्चिमा यथा मृदङ्गी मृदङ्गा स्थूनाल्पी स्थूनाल्पा कुगलास्त्री श्रोषधिरिति नदादेराकृतिगणत्वात्। चारुदन्ती किन्नरकण्ठी तीक्ष्णशृङ्गी चारुकर्णी कल्याणपुच्छी सुगात्री दीर्घजङ्घीत्यादि। पक्षे चारुदन्तेत्यादि। चन्द्रभागी चन्द्रभागा नदी एकदेशविकृतमनन्यवद्भवतीति न्यायात् चन्द्रभागी चन्द्रभागा च। तथाच चन्द्रभागी चन्द्रिभागा चन्द्रिभागी च चन्द्रिका।

## २६६। धात् क्रीतात्।

धात् ५।, क्रीतात् ५। ।

**धनेन क्रीयते स्म धनक्रीती।**

## २६७। क्तादल्पे।

क्तात् ५।, अल्पे ७। ।

**धादित्येव। अभ्रलिप्ती, अभ्रेण लिप्यते स्म।**

---

चन्द्रभागी च सैवोक्ता नदीश्रेष्ठा प्रकीर्त्तिता। इति हड्डचन्द्र:। वर्षाभ्वी वर्षाभू: भेकी। स्वाङ्गादुदाहरति सुमुखीति शोभनं मुखं यस्या: सा इति वाच्यम्। स्वाङ्गाङ्गोण एवास्य विषय:। दीर्घनखी दीर्घनखा तुङ्गनासिकी तुङ्गनासिका इत्यादि। अथ स्वाङ्गलक्षणमाह स्वाङ्गमित्यादि। द्रवो घर्मादिस्तद्भिन्नं मूर्त्तं काठिन्यादिस्पर्शविशेषवत्। प्राणिनि तिष्ठतीति प्राणिस्थं विकारो दोषस्तस्माज्जातं विकारजं न विकारजमविकारजम्। दृष्टमित्यादि अतत्स्थम् अप्राणिस्थमपि तच्च प्राणिनि दृष्टं चेत्तदा स्वाङ्गं तादृशि प्राणिसदृशे प्रतिमादौ स्थितं स्तनादिकं तद्वत् प्राणिस्थवत् स्वाङ्गमित्यर्थ:। द्र्यादि पदानां व्यावृत्तिमाह वह्स्वेटेत्यादि राजी राजिरिति राजधीरिस्य: एवं घोणी समी शुची, सानी वाढी वेणी मणी कपी। श्रेणी च रजनीपक्षे श्रोणिरित्यादय: क्रमात्। अक्तेरित्यनेन क्त्यर्थस्योपलक्षणत्वात् अकरणि: अजीवनि: काङ्कारिमकार्षी: सर्वं कारिमकार्षमित्यादौ न स्यात्। क्तान्तादपि कश्चित् मा गा म्लानीं मृणालीति तु म्लानशब्दात् भावे ष्णे कृते षित्वादीप्। परे तूर्णग्रहणादीकारान्तादपि तेन श्रीलक्ष्मीत्यादि। तथाच तां श्रीमिव समायान्तीमित्यादि प्रयोग: इत्याहु:। निषेधो यज्जातीयस्य विधिरपि तज्जातीयस्येति न्यायात् क्तिदिकारादेव तेन सुगन्धि: युवजानिरित्यादौ न स्यात्॥ २६५॥

करणपूर्वात् क्रीतादीप् स्यात् स्त्रियां क्तप्रत्ययोत्पत्ते: प्रागेव समासाऽभिधानात् इति श्रीपतिदत्त:। अतएव आह धनेन क्रीयते स्म इति वाक्यम्। धनेन क्रीता धनक्रीता इत्यत्र संस्कारकाले भिन्नपदत्वेन करणपूर्वत्वाभावात्। धात् किं ?· राज्ञा क्रीयते स्म राजक्रीता॥ २६६॥

श्रीरा-टी—धनक्रीति क्रीधो: क्त: स्याद्युत्पत्ते: प्राक् क्तदन्तेन सह समासेऽनेनेप्। सा हि तस्य धनक्रीता प्राणेभ्योऽपि गरीयसीति तु आबन्तेन सह समासादिति परे अन्ये तु धनक्रीतीत्याहु:। धादिति पीनिर्देशादव्यवहित क्रीतशब्दादेवेत्यर्थ: तेन

## २६८ । स्वाङ्गाद्धे ।

स्वाङ्गात् ५।, हे ७।।

स्वाङ्गात् परो हे स्थितो यः क्तः तस्मादीप् स्यात् । शङ्खभिन्नी ।

## २६९ । वाच्छन्नाज्जातेः ।

धा ।१।, अच्छन्नात् ५।, जातेः ५।।

आच्छादनजातिवर्जात् जातिवाचिनः परात् हे स्थितात्

---

धनसुक्रीतेत्यादौ न स्यात् । क्रीतान्तादपि कश्चित् तन्मते धनसुक्रीतीत्यादि । धात् किं राजक्रीता ॥ २६६ ॥

करणपूर्वात् क्तान्तादल्पत्वे ईप् स्यात् स्त्रियाम् इहापि क्तप्रत्ययोत्पत्तेः प्राक् समासः । अत एवाह अभ्रेण लिप्यते स्मेति वाक्यम् अभ्रलिप्ती अल्पाभ्रा इत्यर्थः । अल्पे किं जलपूर्णा घटी ॥ २६७ ॥

श्रीरा·टी—धात् क्तान्तादीप् स्यात् धस्याल्पत्वे सति । अभ्रलिप्तीति अल्पेनाभ्रेण छन्नेत्यर्थः । एवं सूपलिप्ती पात्री—अक्षरलिप्ती जिह्वेत्यादि । अल्पे किं ? सुखपूर्णा भक्तिः ॥ २६७ ॥

पृथक् योगात् धादिति अल्पे इति च नानुवर्त्तते । शङ्खभिन्नीति । शङ्खौनिधौ ललाटास्थ्नि इत्यमरः । शङ्खौभिन्नो यस्याः सा शङ्खभिन्नी । उपसर्गव्यवधानेऽपि ओष्ठविच्छती । अत्र क्षत मित जात प्रतिपन्नानामजातित्वान्न स्यात् केशक्षता हस्त-मिता दन्तजाता स्तनप्रतिपन्ना । स्वाङ्गात् किं ? घृतपीता । हे किं ? हस्तेन धृता हस्तधृता । विवाहे पाणिगृहीती यस्याः सैव पाणिगृहीती पत्नी अन्यत्र पाणिगृहीता चौरी इति वक्तव्यम् ॥ २६८ ॥

श्रीरा-टी—क्त इति क्तान्त इत्यर्थः । शङ्खभिन्नीति शङ्खौललाटास्थि शङ्खौ भिन्नौ यया इति वाक्यम् एवमुरभिन्नी गलोत्कृत्ती केशरोत्तुनीत्यादि । स्वाङ्गात् किं वक्त-क्षता मुक्तता । हे किं ? पादपतिता । परे तु नञ्दुः सुबहुसुखमास वत्सर दुःख-भिन्नात् क्रतहसादन्तोदात्तात् क्तादीपमाहुः । तद्ग्रन्यक्षता स्वाङ्गादिविशेषणात् सुखक्षता अक्षता इत्यादि वारितम् ॥ २६८ ॥

छन्नं वस्त्रजातिः नास्ति छन्नं यत्र सोऽच्छन्नः तस्मात् । इक्षुभिर्भक्षितो यया सा इक्षुभक्षिती इक्षुभक्षिता । एवं वृकदृष्टी वृकदृष्टा शुकजग्धी शुकजग्धा इत्यादि । जातेः किं ? कटभक्षिता । क्तात् किं ? ब्राह्मणप्रिया । छन्नात्तु वस्त्रछन्ना वस्त्रं

त्वादीप् स्यात् वा । इक्षुभक्षिती इक्षुभक्षिता । छन्नात्तु वस्त्रच्छन्ना ।

## २७० । पत्न्यामपालकान्तात् ।

पत्न्यां ७, अपालकान्तात् ५। ।

पुंवाचकादपालकान्तादीप् स्यात् भार्य्यायाम् । गोपी । पालकान्तात्तु गोपालिका ।

---

छन्नं परिहितं ययेत्यर्थः । एवं वसनप्राप्ता । अत्रापि क्तमिति जात प्रतिपन्नानामजादित्वान्न स्यात् । उत्कृता इक्षुभिता मृगजाता हंसप्रतिपन्ना ॥ २६९ ॥

श्रीरा टी—न छन्नोऽच्छन्नस्तस्मात् । इक्षुभक्षितीति इक्षुर्भक्षितो यया सा इति वाक्यम् । एवं वृकदष्टी शुकजग्धी सुरापीती पक्षे उष्ट्रदष्टेत्यादि । जातेः किं ? मासकृता घृतपीता शूद्रीत्यादि ॥ २६९ ॥

पत्या ऊढ़ा पत्नीति व्युत्पत्त्या विवाहकर्त्तोपलक्ष्यते इत्यत आह पुंवाचकादिति । यादृग्जातीयस्य प्रतिषेधो विधिरपि तादृग्जातीयस्येति न्यायात् पालकान्तवर्जनादकारान्तादेवायं विधिरिति । अन्यथा पुंसः पत्नी इत्यादावपि प्रसजेत् । पालकोऽन्ते यस्य स पालकान्तः । किञ्च पालकग्रहणेनैव गोपालिकादि प्राप्तावन्तग्रहणं पालकपर्य्यन्तस्य ज्येष्ठादिगणस्य प्राप्त्यर्थं तेन ज्येष्ठ कनिष्ठ मध्यमोत्तम गोपालक पशुपालकवर्जात् पुंवाचकादकारान्तादीप्स्याद्भार्य्यायां इत्यर्थः । गोपस्य पत्नी गोपी एवं महामात्रस्य महामात्री पितामहस्य पितामही मातामहस्य मातामही प्र ःस्य प्रष्ठी इत्यादि । पुंवाचकात् किं ? प्रजाता जातापत्या प्रजाताचेत्यमरः । पत्न्यां किं ? देवदत्ता । प्रत्युदाहरति गोपालिकेति । गोपालकस्य पत्नी गोपालिका स्त्रीत्वादाप्कात्यनाशीरक इत्यकारस्येकारः । एवं ज्येष्ठा कनिष्ठा मध्यमा उत्तमा पशुपालिका । गोपीत्यादिषु जातित्वादीपि सिद्धे इहोदाहरणं निषिद्धानामपि प्राप्त्यर्थम् । तेन चत्रियस्य पत्नी चत्रियी वैश्यस्य पत्नी वैश्यी इत्यत्र जातित्वादीपो विधाने युङ् वर्जनेऽपि पत्नीविहितेप्स्यादेव ॥ २७० ॥

श्रीरा टी—पालकोऽन्तो यस्य स पालकान्तः न पालकान्तोऽपालकान्तस्तस्मात् नञ् सादृश्यद्योतकत्वात् । पुंवाचकादपालकान्तादकारान्तादित्यर्थः । गोपीति गोपस्य पत्नीति वाक्यं पुंवाचकगोपशब्दस्य स्वस्वामित्वे सम्बन्धवाच्ये स्त्रियां वृत्तिः ।

२७१। ब्रह्मरुद्रभवसर्वमृड़ेन्द्रवरुणादानङ् च।

ब्रह्म—वरुणात् ५।, आनङ् ।१।, च ।१।।

एभ्यः पत्न्यामीप् स्यात्, तेषामानङ् च। ब्रह्माणी रुद्राणी।

२७२। मातुलोपाध्यायक्षत्रियाचार्य्यसूर्य्यार्य्यात् वा।

मातुल—अर्य्यात् ५।, वा ।१।।

मातुलानी मातुली। अन्येत्वीपमपि विकल्पयन्ति,

---

एवं वैद्यी वैश्यी शूद्रीत्यादि। गोपालिकेति गोपालकस्य पत्नीति वाक्यम्। एवमश्वपालिकेत्यादि पुंवाचकात् किं ? प्रजाता॥ २७०॥

आनङादेशस्यानुरोधात् षष्ठ्यन्तत्वेन वक्तुमुचितत्वेऽपि प्रधानस्य ईप् प्रत्ययस्यानुरोधात् वरुणादिति पञ्चम्यन्तम्। एभ्यः पत्न्यामीप् स्यात्तेषामानङ् चेत्यर्थः। ङित्वादन्त्यस्य स्थाने। ब्रह्मणः पत्नी ब्रह्माणी एवं रुद्राणी भवानी सर्वाणी मृड़ानी इन्द्राणी वरुणानी॥ २७१॥

श्रीरा टी—ब्रह्मा च रुद्रश्च भवश्च सर्वश्च मृड़श्च इन्द्रश्च वरुणश्च तत्तस्मात् ङित्वादन्त्यस्यानङ् ब्रह्माणीति ब्रह्मणो भार्य्या इति वाक्यम्। एवं रुद्राणी भवानी सर्वाणी मृड़ानी इन्द्राणी वरुणानी। मण्डूकगत्यानुवर्त्तमानस्य वाशब्दस्य व्यवस्थया महेन्द्राणी शक्राणी। तथाच चारुधामा महेन्द्राणी शक्राणी गजवाहिनीति तु परे। केचित्तु ब्रह्मशब्दं न गृह्णन्ति तन्मते ब्रह्माणमानितेति अनधोः क्विपि नान्तत्वादीपि ब्रह्माणी शक्राणी एवं शिवानी ईश्वराणीत्याहुः। महेन्द्राणीति महती चासौ इन्द्राणी चेति व्युत्पत्तेः॥ २७१॥

वाशब्दोऽत्र व्यवस्थावाची इत्यत आह तद्वाशब्दोव्यवस्थाप्य इति। व्यवस्था चेयं मातुलात् पत्न्यामानङ् युक्त ईप् केवल ईप् आप् च। मातुलानी मातुली मातुला। उपाध्यायात् पत्न्यामानङ् युक्त ईप् केवल ईप्च उपाध्यायानी उपाध्यायी। स्वयं व्याख्यातृत्वे तु केवल ईप् आप्च उपाध्यायी उपाध्याया। क्षत्रियार्य्याभ्यां पत्न्यां केवल ईप् क्षत्रियी अर्य्यी। जातौ आनङ् युक्त ईप् आप् च क्षत्रियाणी क्षत्रिया अर्य्याणी अर्य्या। आचार्य्यात् पत्न्यामानङ् युक्त ईप् आचार्य्यानी स्वयं व्याख्यातृत्वेतु आप् आचार्य्या। सूर्य्याद-

तदा मातुलेत्यादि। तद्वाशब्दो व्यवस्थाप्यः। आचार्य्यानी, अत्र न णत्वम्।

## २७३। वृषाकप्यग्निमनु पूतक्रतु कुसित कुसीदादैङ् च।

वृषाकपि—कुसीदात् ५।, ऐङ् ।१।, च ।१।।

एभ्यः पत्न्यामीप् स्यात् तेषामैङ् च। वृषाकपायी आग्नायी मनायी।

## २७४। नारी सखी यवानी यवनानी

---

देवतायां केवल ङीप् सूर्य्यनामा कश्चित्तस्य पत्नी सूरी सूर्य्यागस्त्ययोरिति यलोपः। देवतायान्तु आप् सूर्य्या। अत्र सूर्य्याणीत्युदाहरणं पाणिनि सर्ववर्मक्रमदीश्वराणामसम्मतत्वाद्धेयम्। मातुलादिभिन्नानामपि व्यवस्थापकोऽयं वा शब्दः। यथा वैश्यशूद्राभ्यां पत्न्यामीप् वैश्यी शूद्री। जातौ तु आवेव वैश्या शूद्रा कन्या। महाशूद्रात् पत्न्यां जातौ च ङीप् महाशूद्री ऊढ़ा अनूढ़ा च॥ २७२॥

श्रीरा टी—मातुलश्च उपाध्यायश्च चत्रियश्च आचार्य्यश्च सूर्य्यश्च श्चर्य्यश्च तत्तस्मात्। मातुलानीति मातुलस्य पत्नीति वाक्यम्। अन्ये तु इत्यादि। ये तु ईपं विकल्पयन्ति तन्मते मातुला इत्यपि तदस्मन्मते वाशब्दस्य व्यवस्थया ज्ञेयम्। एवं उपाध्यायानी उपाध्यायी स्वयं व्याख्यात्रीचेदुपाध्यायी उपाध्याया च। आचार्य्यस्य पत्नी आचार्य्यानी स्वयं व्याख्यात्रीचेदाचार्य्यी आचार्य्या च। सूर्य्यस्य पत्नी सूरी देवतायां सूर्य्याणी सूर्य्या च। चत्रियार्य्ययोः पत्नी चत्रियी अर्य्यी जातौ चत्रियाणी चत्रिया अर्य्याणी अर्य्या च इति॥ २७२॥

ऐङादेशस्यानुरोधात् षष्ठान्ततया वक्तुमुचितत्वेऽपि प्रधानस्य ईपोऽनुरोधात् पञ्चम्यन्तम्। विभाषाद्वयमध्यवर्त्तित्वादस्य परस्य च नित्यत्वम्। हरिविष्णू वृषाकपी इत्यमरः। वृषाकपेः पत्नी वृषाकपायी एवमाग्नायी मनायी पूतक्रतोः पूतक्रतायी पूतक्रतुरिन्द्रः। कुसितस्य कुसितायी। कुसीदस्य कुसीदायी॥ २७३॥

श्रीरा टी—वृषाकपिश्च अग्निश्च मनुश्च पूतक्रतुश्च कुसितश्च कुसीदश्च तत्तस्मात्। पद्धतीत्यादौ वा ग्रहणात् नित्यमिदम्। पत्न्यामेव नियमात् पूतक्रतुर्ब्राह्मणीत्यत्र न स्यात्॥ २७३॥

**हिमानी अरण्यानी मनावी पतिवत्न्यन्तर्वत्नी पत्नी भाजी गोणी नागी स्थली कुण्डी काली कुशी कामुकी घटी कवरी नील्यशिश्वः।**

नारी—अशिश्वः १॥।

**एते निपात्यन्ते।**

---

एते ईबन्ता निपात्यन्ते। निपातोह्यर्थविशेषे भवतीति तानहं विवृणोमि नारीति। नरस्य जातौ एवं नृब्रह्मक्षत्रविट्शूद्रैरित्यमरोक्त्या नृशब्दस्यापि मनुष्यवाचित्वे ऽस्यापि जातौ नारीति निपात्यम्। अतएव नृजातेरिति स्वयं वक्ष्यति। अन्यत्र ऋदन्तत्वादीपि न्रीत्यनिष्टं स्यात्। सखीति वयस्या इदन्तत्वाद्विकल्पे नित्यार्थो निपातः। यवानी दुष्टोयवः। यवनानी यवनस्य लिपिः जातौ तु। यवानीति। हिमानी हिमसंहतिः। अरण्यानी महारण्यम्। मनावी मनोःपत्नी। पतिवत्नी सभर्तृका स्त्री पतिरिह विवाहकर्त्ता तेनान्यत्र पतिमती सेना। अन्तर्वत्नी गर्भिणी अन्यत्र अन्तर्वती भूमिः। पत्नी पत्युरूढायां अन्यत्र पतिरियं ग्रामस्य। भाजी पक्वव्यञ्जनविशेषः। अपक्वा चेद्भाजा। गोणी धान्यादिवहनार्थपात्रविशेषः। नागीस्थूला जातौ तु नागी हस्तिनी सर्पी च। स्थली अकर्तृकाभूमिः अन्यत्र स्थलं उत्थानादि। कुण्डी पात्रविशेषः अन्यत्र कुण्डा अमृते जारजः कुण्ड इत्यमरात्। काली कृष्णवर्णा अन्यत्र काला। कुशी लौहविकारः अन्यत्र कुशा। कामुकी रिरंसुः अन्यत्र धनस्य कामुका। घटी अल्पोघटः एवं मृणाली छत्रीत्यादि। अतएव स्त्री ग्यात् काचिन्मृणाल्यादिर्विवचापचये यदीत्यमरः अन्यत्र करिणां घटना घटा। कवरी केशवेशः अन्यत्र कवरा। नीली प्राण्योषध्योः। नीली गौः नीलीनाम ओषधिः अन्यत्र नीला लता। अशिश्वी शिशुरहिता स्त्री अन्यत्र अशिशुः शाला। बहुवचनादन्येऽपि निपात्यन्ते यथा बहुव्रीहौ पत्युः पत्नी वा स्त्रियाम्। स्थूलः पतिरस्याः स्थूलपत्नी स्थूलपतिः स्त्री। एकसमानवीरभ्रातृसपिण्ड पुत्त्रेभ्यो नित्यम्। एकः पतिरस्या एकपत्नी एवं समानः पतिरस्या इत्यर्थे पत्युः पत्नादेशे ज्योतिर्जनपदेत्यादिना समानस्य स आदेशे सपत्नीति एवं वीरपत्नी भ्रातृपत्नी सपिण्डपत्नी पुत्त्रपत्नी। किञ्च एकस्य पत्नीत्यादि वाक्येऽपि एकपत्नीत्यादि सिद्धौ आदेशविधानन्तु एकः पतिरस्या इत्यादि वाक्ये एकपतिरित्याद्यनिष्टपदनिवारणार्थम्। समासान्तस्य

## २७५ । पद्धती शक्ती युवत्यनड्वाही स्त्रेन्येनी

पत्युः पत्नी स्याद्वा । ग्रामस्य पतिरित्यर्थे ग्रामपत्नी ग्रामपतिस्त्री । मुख्यस्य किं पतिमतिक्रान्ता अतिपतिः ॥ २७४ ॥

श्रीराटी—निपातोऽत्रार्थविशेष इत्युक्तेः । नृवयवयोर्जातो नारी सखी सुहृदी भ्रष्टी यवी यवानी यमानीति सुभूतिः । यवनानां लिपिर्यवनानी अन्यत्र यावनी—भाषा । हिमानी हिमसंहतिः । महारण्यमरण्यानी मनोःपत्नी मनावी मनावीच पूर्वेण । पतिरस्त्यस्याः सा पतिवत्नी सभर्तृका, मतोर्मस्य वत्वं नं च अन्यत्र पतिमती सेना अन्तरस्त्यस्याः अन्तर्वत्नी गर्भिणी अन्यत्र अन्तर्वती पत्नी पाणिगृहीती अन्यत्र पतिरियं स्त्री ग्रामस्य । समानैकपुत्त्रसपिण्डवीरभ्रातृभ्यश्च हे । एभ्यः पत्युः पत्नी निपात्यते हे । समानः पतिरस्याः सपत्नी एवमेकपत्नी वीरपत्नीत्यादि । हे किं एकपतिः स्त्री ग्रामस्य । अन्यस्माद्वा । वृद्धः पतिरस्याः वृद्धपत्नी वृद्धपतिः स्थूलपत्नी स्थूलपतिः हे किम् ? अतिपतिः । ग्रामस्य पतिरित्यर्थे ग्रामपत्नीति केचित् । भाजी पक्कायाम् अन्यत्र भाजा । गोणी धान्यादि वहनपात्रभेदः अन्यत्र गोणा । नागशब्दोऽत्र गुणवचनः नागी स्थूला । जातिवचनात्तु पूर्वेणैवेप् यथा नागी करेणुः नागी काद्रवेयी अन्यत्र नागा । स्थली अकृत्रिमा भूः अन्यत्र स्थला । कुण्डी पात्री अन्यत्र कुण्डा जारजा । काली कृष्णवर्णा अन्यत्र काला श्रोतुमशक्ता कुशी लौहविकारः फाल इति अन्यत्र कुशा रज्जुः कामुकी मैथुनेच्छावती अन्यत्र कामुका धनस्य । घटादल्पत्वे घटी पात्रभेदः घटीत्युपलक्षणं प्रायशोऽल्पत्वविवक्षायां लिङ्गसामान्यादीप् तेन मठी पटी कुवी वंशी मृणालीत्यादि । प्रायशः इत्युक्तेः अल्पोवृक्षः वृक्षक इत्यादौ न स्यात् । कवरी केशवेशः अन्यत्र कवरा कर्बरा । नीलात् प्राण्योषध्योः । नीली गौः नीली ओषधिश्च । कुवलयदलनीलाः कोकिला बालचूते इति तु नील्यारक्ततास्तीत्यर्थे अः तस्मादाप् नीला । यद्वा कुवलयदलवन्नीला कुवलयदलनीला । एवं सर्वलामक्षिका नीला इत्यमरः । नीला कङ्गुरिति तु जात्यभिधाने संज्ञायां वेति केचित् नञ् पूर्वशिश्वोर्जायायाम् अशिश्वी शिशुना विना जाया इत्यर्थः । पाणिगृहीतीत्यूढायाम् । पाणिर्गृहीतोऽस्याः सा पाणिगृहीती जाया अङ्गसंयोगेनोढा इत्यर्थः अन्यच्च तु उपचारात् वस्त्रादि प्रयोगः । अनुदात्तान्ताद्वर्णादीप् । अनुदात्तान्ताद्वर्णवाचिनः स्त्रियामीप् स्यात् कल्माषी शरणी सारङ्गीत्यादि । अनुदात्तान्तादिति किम् ? कृष्णा कपिला धवला इत्यादि । इदं नदादित्वात् सिद्धमिति केचित् । अन्तोदात्तस्य छन्दोविषयत्वात् ॥ २७४ ॥

**हरिणी भरिणी रोहिणी लोहिन्यसिक्नी पलिक्नी वा।**

पद्धती—पलिक्नी: १॥, वा ।१।।

**पचे—पद्धति: शक्ति: यूनी अनडुही श्वेता एता हरिता**

एते निपात्यन्ते वा। पद्धती शक्त्यो: क्त्यन्तत्वेनाप्राप्तौ ईपो विभाषा। यूनस्ति-प्रत्ययं कृत्वा युवति: वा निपात्यते। तथाच नरयुवतिविहङ्गा राशि षट्के मृगादाविति दीपिका। ततो कृस्वोदन्तत्वात् पार्ष्णीणादित्यनेन पचे ईप् युवतीत्यपि तथाच विषयविषमा मधुराहि युवत्य इति श्रीपतिदत्त: एवं युवती यौवननगरे शिवशिव कुचमण्डल: साची इत्युद्भट:। तयोरप्राप्तिपचे तु नान्तत्वादीपि यूनीति स्यादेव। किञ्च युवानमतिक्रान्ता अतियुवा स्त्री बहुयुवा पुरीत्यादौ गौणत्वात् ईप् प्रत्ययो न स्यात्। ह्विन्श्वाह इत्यत्र वाशब्देन विणन्त वहतेर्ग्रहणादनडुहशब्दादीपि जाते अनेन आकारागमो वा निपात्यते। तेन पचे अनडुहीति। श्वेतादि षड्भ्य ईप् तेषां तकारस्य नकारश्च वा निपात्यते। किञ्च नचत्रे रोहिणीति नित्यम्। असितादवृद्धायामीप् तस्य क्नश्चवा। पलितादृद्धायामीप् तस्य क्नश्चवा। अत्र वाशब्दस्य अनुक्तानामपि व्यवस्थापकत्वादिदं विवृणोमि। ईश्वरशब्दादीप् वा। ईश्वरी भुवनेश्वरी ईश्वरा। तथाच काली हैमवतीश्वरी इत्यमर:। विन्यस्तमङ्गलमहौषधिरीश्वराया इति भारवि:। एवं केवल सुमङ्गल मामक भागधेय भेषज समान पाप आर्य्यकृत दीर्घजिह्व अवर रेचक देवक केकय भिचुकादेरीप् नाम्नि। केवली सुमङ्गली मामकी भागधेयी भेषजी समानी पापी आर्य्यकृती दीर्घजिह्वी अवरी रेचकी देवकी केकयी भिचुकी। नाम्नि किम्? केवला सुमङ्गला ममेयं मामिका इत्यादि। एवं शेषभिन्ने वयसि वर्त्तमान शब्दादीप् स्यान्न तु हौड़ादे:। कुमारी किशोरी करभी कर्करी तरुणी तनुनी वधूटी चिरण्टी आभ्यां युवतिरुच्यते। एषां गौणत्वे न स्यात् बहुकुमारा पुरी। शेषे वयसि तु वृद्धा स्थविरा। हौड़ादेस्तु हौड़ा वाला वत्सा कन्या पाका मन्दा विनता पूर्वहायना अपरहायना। शरल शारङ्ग पिषङ्ग कल्मषेभ्य ईप्। शरली शारङ्गी पिषङ्गी कल्मषी। चन्द्रभागादनद्याम्। चन्द्रभागे भवा चान्द्रभागी नद्यान्तु चान्द्रभागा। एवञ्च मनुष्यजातेरिदन्ताच्च। कुन्ती अवन्ती गोत्रत्वाज्जाति:। अमनुष्यजातेस्तु तित्तिरि: एवञ्च वर्षाभ्वी गुर्विणी सरसी रोदस्यादयो निपात्या:। एवं त्रयाणां फलानां समाहारस्त्रिफला अत्र स्त्रीत्व

भरिता रोहिता लोहिता असिता पलिता । असिक्नी अवृद्धा, पलिक्नी वृद्धा ।

## २७६ । न मन्संख्यास्वस्रजादेः ।

न ।१।, मन् सङ्ख्या-स्वसृ-अजादेः ५। ।

---

आप् च निपात्यते । केचित्तु कृदीकारादपि पचे ईपं विधाय तन्त्री तन्त्रीः लक्ष्मी लक्ष्मीः इत्यादिमाहुः । लक्ष्मीरियम् इति प्रयोगश्च । इयं लक्ष्मीनाम्नी कन्या लक्ष्मीव अम्बे व इत्यर्थः ॥ २७५ ॥

श्रीरा-टी—पादस्य हतिरिति वाक्यं हनधीः क्तिः अक्तेरिति निषेधे प्राप्ते विधिः शकधीः शक्ती शस्त्रभेदः बले तु शक्तिः । युवन् शब्दस्य नान्तत्वादीपि सिद्धे तङ् निपात्यते अनान्तत्वान्न वस्य उः । अनडुह शब्दस्य ईपि वा आप् निपात्यते । श्वेत एत हरित भरित रोहित लोहितानां वर्णवाचित्वात् अनुदात्तान्ताद्वर्णात् इत्यनेन नित्यमीपि प्राप्ते वा ईप् तस्य नश्च निपात्यते । हरिता भरिता इति विश्वः भरित शब्दं परे नाङ्ः । असित पलिताभ्यामीप् तयोः क्नश्च निपात्यते । वाशब्दस्य व्यवस्थावाचित्वात् प्रियती प्रियत्विः विंशती विंशतिः इति ॥ २७५ ॥

स्वसाच अजश्च स्वसजौ तौ आदी ययोस्तौ स्वसजादी । मन्च संख्याच स्वसजादी चेति तस्मात् । सीमेति डापोऽप्राप्तिपचे नान्तत्वात् प्राप्तव्यस्य ईपोऽनेन निषेधे दीर्घनकारलोपौ च एवम् अतिपटिमा । अत मनीवर्जनं नान्तत्वात् प्राप्तव्यस्येपो निषेधार्थमेव तेन लम्बसीम्नी लम्बसीमे लम्बसीमानी इत्यादिषु ईप् चाम्बस्वादित्यनेन ईप् स्यादेव । संख्यागाचकानां मध्ये एकद्विषड् बहूनामीपोऽसम्भवः । तिस्र चतस्रोः स्वस्रादिपाठादेव तिस्रचतसृभ्यामीपो निषेधः । ततश्च पञ्चाद्यष्टादश पर्य्यन्तानां सुख्यत्वे डतिव्यर्णान्तेत्यादिना त्रिषु लिङ्गेषु समत्वविधानेनैव लिङ्गकार्य्यनिषेधे सिद्धे संख्यावर्जनं नान्तसंख्याभ्यो गौणत्वे ईपो निषेधार्थम् । तेन प्रियपञ्चा वेश्या इत्यादौ ईपचाम्बस्वादित्यनेन ईप् न स्यात् । अतिपञ्चा स्त्रीत्यादौ द्विःन्चाहेत्यादिना ईप् न स्यात् । किञ्चात्र नञोऽल्पार्थत्वात् विंशति षष्ठ्यादेरिदन्तत्वान्निषेधाभावे पाच्छ्रीस्वादित्यनेन ईप् वा स्यादेव यथा विंशती विंशतिः षष्ठी षष्ठिरित्यादि । अपञ्चा इति न विद्यन्ते पञ्च यस्या इति बहुव्रीहौ समासान्तविधेरनित्यत्वात् डप्रत्ययाभावे ईप् चाम्बस्वादित्यनेन प्राप्तव्यस्य ईपो निषेधः । अत्र पञ्च इत्युदाहरणं लिपिकरप्रमादः । स्वस्रादिश्च । स्वसृ मातृ यातृ दुहितृ ननान्दृ तिसृ चतसृ कति यति तति इति दश । स्वसा माता याता अत्र

एभ्य ईप् न स्यात्। सीमा, पञ्च, स्वसा माता, अजा बाला। [१०१] नेपोत्युक्तेः—यावती बह्वी।

---

माता जननी याता स्त्रीणां स्वामिभ्रातृस्त्री तेन धान्यस्य मात्री तीर्थस्य यात्री इत्यादौ ईप् स्यादेव। दुहिता ननान्दा प्रियतिसा प्रियचतसा कति यति तती नां मुख्यत्वे लिङ्गकार्य्यनिषेधात् गौणत्वे प्रियकतिः; प्रिययतिः प्रियततिः। अत्र नप्तृ शब्दोऽप्यस्तीति केचित् तद्वेयं नप्त्री पौत्री सुतात्मजा इत्यमरात्। अजादिश्च। अज बलक अश्ववट एड़क चटक कोकिल परभृत परपुष्ट अन्यपुष्ट करट वर्त्तक मुषिक पिपीलिकादिः। एवं स्वाङ्गजातिभ्यां पराः क्तमित जात प्रतिपन्नाश्च इति। केशक्तता हस्तमिता दन्तजाता स्तनप्रतिपन्ना। एषां स्वाङ्गाद्वे इत्यनेन विहितस्य ईपो निषेधः। वृचक्तता इत्तुमिता मृगयाता हंसप्रतिपन्ना एषु पाच्छी- णादित्यादिना विहितस्येपो निषेधः। नेपोत्युक्तेरिति ईपि कर्त्तव्ये उत्यतुबहु- गणानां संख्यावद्भावो नास्तीति प्रागुक्तेः यावतीवह्वीश्च संख्यावाचकत्वाभावे ईप् स्यादित्यर्थः। यावतीत्यत्र उदित्वादीप् बह्वीत्यत्र गुणाद्वोत इति ईप्॥ २७६॥

श्रीरा टी—स्वसाच अजश्च तौ तावादी ययोः तौ मन्च संख्याच स्वस्रजा- दीच तत्तस्मात् पुंस्त्वं सौत्वात्। सीमेति नान्तत्वादीपि प्राप्ते निषेधः. पञ्चेति नान्त संख्याया एव ईप् निषेध इत्यन्ये। सामान्यतो निषेधात् एकस्य पत्नी एकेत्यादौ न स्यादित्येके। स्वसेति ऋदन्तात् प्राप्ते निषेधः। स्वसादिर्यथा। स्वसा माता चतस्रश्च तिस्रो यातृननान्दरौ। दुहितात्र समाख्याता नप्ता केन- चिदिष्यते। नप्त्रीत्यन्ये। अजेति जातिवाचित्वादीपि प्राप्ते निषेधः। अजादि- र्यथा। अजाश्वा मूषिका विप्रा कोकिला वाड़वैड़का। परपुष्टा परभृता चटका वर्त्तका तथा। शूद्राजातौ टकारे तु बहु यत्तत् किमः करः। तथा हायन हानौ च स्यातां पूर्वापरात्परौ। पत्न्यां बालोत्तमा ज्येष्ठा कनिष्ठा मध्यमापि च। स्वाङ्गे तु स्योङ् गुद क्रोड़ शफबालभगोत्तरा। करघोणा शिखा नासा शिरो भुजगलान्तकाः। खुरग्रीवोत्तराश्चैव नख मुखान्ताश्च नामनि। स्वाङ्गात्क्तमितो- जात प्रतिपन्नौ च द्वे मतौ। अजादि द्वादशेभ्यो जातिवाचकत्वात्। बहुकराद्- भ्यष्टित्वात्। बालादि पञ्चभ्यः पत्न्यां पुंवाचकत्वात्। स्योङ्गुदाद्यन्तेभ्यः स्वाङ्गत्वात् स्वाङ्गात् क्तताद्यन्तेभ्यो द्वे क्तान्तत्वादीपि प्राप्ते निषेधः। उदाहरणानि यथा बहुकरा यत्करा तत्करा किंकरा पूर्वहायणा अपरहायणा पूर्वहायणा अपरहायणा इह पाठाबलम्। स्वाङ्गस्योङ् यथा सुगुल्फा सुपार्श्वा। गुदादेस्तु सुग्रीवा

इत्यादि। संज्ञायां तु सूर्पनखा कालमुखा। अनाम्नि तु सूर्पणखी। स्वाङ्गात् क्तान्तादिर्यथा केशजाता स्तनजाता इत्यादि। अनासिकोदराबह्वचः। नासिकोदरभिन्ना बह्वचः स्वाङ्गवाचिनोऽजादौ पठिताः। पृथुजघना महाललाटा इत्यादि। नासिको-दरात्तु। तुङ्गनासिकी तुङ्गनासिका महोदरी महोदरा इत्यादि। सह नञ् विद्यमान पूर्वाणि स्वाङ्गानि। सकेशा अकेशा विद्यमाननासिकेत्यादि। स्वाङ्ग समुदायान्ताश्च। कल्याणं पाणिपादं यस्याः सा कल्याणपाणिपादा। अस्वाङ्ग समुदायान्तास्तु; कल्याणं विद्यमानं मुखं यस्याः सा कल्याणविद्यमानमुखी। पूर्वसूत्रे पूर्वदग्रहणात् सहनञ विद्यमान पूर्वावयवानि स्वाङ्गानीत्यर्थोऽतस्तेनापि न निषेधः इति परे। यकौशला-जादावटात् ष्णीयङश्च। यकारान्तात् कौशलात् अजादात् अवटाच्च ष्णयङौ सर्वे आदिष्टाश्वानादौ पठिताः गौरचस्य स्त्र्यपत्यं गौरच्या एवं पौतिमाष्या साकर्कच्या इत्यादि कौशल्या अजाद्या आवठ्या। यङोयथा। ष्णीरनार्षयोर्गोत्रे यङ्रूपोत्तमयोः स्त्रियाम्। गोत्रस्यावयवेभ्यश्च क्रौड्यादिभ्यश्च वा क्वचित्। क्रौड़िरापिशलिर्नाडिर्व्याडि-रापि चितिस्तथा। भौरिकिभौलिकिः शालास्थलिकापिष्ठलीत्यपि। शौध.तकिश्चौप-यतस्तथा वैङ्कयतीमतः। चैकयतः सैकयती भोजस्तु चत्रिये तथा। सुती युवत्यां क्रौड्यादौ शेषं शिष्टप्रयोगतः। तिप्रभृतीनामन्त्यमुत्तमं तस्य समीपं उपोत्तमं, रूप-मुपोत्तमं ययोस्तौ तयोः न आर्ष्यौ अनार्ष्यौ तयोः। ष्णश्च णिश्च तौ तयोः। तथाच गोत्रविहिततोः ष्णणीरनार्षयोः रूपोत्तमयोः स्त्रियां यङ् स्यात् ङ इत्। करीषगन्ध इव गन्धः यस्य स करीषगन्धिः करीषगन्धस्य तस्य स्त्र्यपत्यं कारीषगन्ध्या। एवं बालाक्या वाराह्या इत्यादि। अनार्षयोः किं वाशिष्ठी वैश्वामित्री। रूपोत्तमयोः किं औपगवी कापटवी इह गोत्र शब्देनापत्य मात्रमुपलक्ष्यते। गोत्रे किम्? अहिच्छत्रे जाता आहिच्छत्री ष्णणी: किम्? ऋतभागस्यापत्यं स्त्री आर्त्तभागी ऋतभागस्यान्त-रापत्यमित्यर्थे णिविधानादार्त्त भाग्येति। गोत्रस्य इत्यादि गोत्रस्यावयवा गोत्रस्याभि-मताः। कुलाख्याः पुलिक लनिक मुखरास्तेभ्यः ष्णीयङ्। पुलिकस्य स्त्र्यपत्यं पौलिक्या मौखर्य्या इति। क्रौड्यादिदशानां ष्णश्चौपयतादि चतुर्णां ष्णस्य यङ्। क्रौड़स्यापत्यं स्त्री क्रौड्या आपिशल्या नाड्या आपिचित्या भौरिक्या भौलिक्या शाल्या स्थाल्या कापिष्ठल्या सौधातक्या चौपयत्या वैङ्कयत्या सैकयत्या इत्यादि। भोजस्यापत्यं स्त्रीभोज्या चत्रिया अन्यत्र भोज सुतस्यापत्यं स्त्रीसुत्या युवती अन्यच सूती वा क्वचिदिति दैवयज्ञि शौचवृक्षिः सात्यमुग्धिः काण्ठे विद्धिः इत्येषां वा यङ् दैवयज्ञ्या दैवयज्ञी शौचवृक्ष्या शौचवृक्षी सात्यमुग्ध्या सात्यमुग्धी काण्ठेविद्ध्या काण्ठेविद्धी। अन्ये तु पारिभाषिक-गोत्रविहितयोः ष्णणोरेव यङ्विधानम् अनन्तपत्या दैवदत्त्या इति क्वचिदन्यतोऽपि

## २७७ । उतो ऽयुङ् रज्ज्वादेर्नृप्राणिजातेरूप् ।

उत: ५।, अयुङ्रज्ज्वादे: ५।, नृप्राणिजाते: ५।, ऊप् ।१। ।

स्त्रियामुकारान्तात् नृजातेरप्राणिजातेश्च ऊप् स्यात् नतु युङो रज्ज्वादेश्च । कुरू: कर्कन्धू: । प्राणिजातेस्तु धेनु: । युङ् रज्ज्वादेस्तु अध्वर्य्यु: रज्जु: हनु: ।

## २७८ । वाम लक्षण शफ सह सहित संहितो-पमानादूरो: ।

वाम—उपमानात् ५।, ऊरो: ५।।

वामोरू: रम्भोरू: ।

---

इति सूत्रं विधायाहु: । एवं वयस्यचरमे इति सूत्रं विधाय । किशोरी तरुणी चिरण्टीत्यादि उदाहरन्ति । कन्या बालावात्साह्वीडापाकामल्लाविततना इत्येषाम् अचरमवयोऽर्थत्वादीपि प्राप्ते अजादौ पाठ इत्याहु: ॥ २७६ ॥

न प्राणी अप्राणी ना च अप्राणी चेति नृप्राणि नृप्राणि च तत् जातिश्चेति नृप्राणिजाति: तस्या: । मनुष्यजातेरप्राणिजातेश्च उकारान्तात् स्त्रियामूप् स्यान्न तु यकारोङ्ग्री रज्ज्वादेश्चेत्यर्थ: । नृजाते: कुरू: एवं ब्रह्मबन्धू: ।

जातिवाचकात् परो बन्धुशब्द: कुत्सायां वर्त्तते । अप्राणिजाते: कर्कन्धू: अलावू: । अध्वर्य्युरित्यत्र चरणत्वेन जातित्वात् प्राप्तौ युङ्त्वान्निषेध: । अध्वर्य्यु-र्ब्राह्मणी । रज्ज्वादिश्च । रज्जु: हनु: कङ्गु: प्रियङ्गुरित्यादि । प्राणिजातेस्तु धेनु: कृकवाकु: आखुरित्यादि ॥ २७७ ॥

श्रीरा-टी—य उङ् यस्य स रज्जु: आदिर्यस्य स: युङ् च रज्ज्वादिश्च तत् न तत् अयुङ् रज्ज्वादिस्तस्मात् पुंस्त्वं सौत्रत्वात् । न प्राणी अप्राणी ना च अप्राणीच तत् तच्च तत् जातिश्चेति तस्या: । कुरुरिति कुरुशब्द: कुरुदेशस्थ मनुष्य जातिवाची । एवं ब्रह्मबन्धू: धीबन्धू: एतौ कस्याश्चित् ब्राह्मणजातौ वर्त्तते तथा कारूरित्यादि । कर्कन्धूरिति कर्कन्धुशब्दो वदरी जातिवाची एवम् अलावू: एर्वारूरित्यादि । धेनुरिति नृभिन्न प्राणिजातिवाचकत्वात् न स्यात् । एवं कृकवाकु: आखुरित्यादि । तथा अध्वर्य्युरिति चरणवाचित्वात् पारिभाषिकजातिवाची । रज्जुरिति अप्राणि जाति-वाची एवं हनु: तर्कु: तरु: स्नायु: इत्यादि आकृतिगणोऽयम् ॥ २७७ ॥

## २७९ । तन्वादे र्वा ।

तन्वादि: ५।, वा ।१। ।

**तनू: तनु: चञ्चू: चञ्चु: ।**

---

वामस्य लक्षणस्य शफस्य सहस्य सहितस्य संहितस्य इति वाम लक्षण शफ सह सहितं संहितं पश्चात् वामादि संहितश्च तत् उपमानञ्चेति समाहार: तस्मात्। वामादिभ्य: षड्भ्य: उपमानाच्च परो य ऊरुशब्दस्तस्मात् ऊप् स्यात् स्त्रियाम्। वामौ वल्गुप्रतीपौ द्वावित्यमर:। वामौ सुन्दरौ ऊरू यस्या: सा वामोरू: एवं लक्षणोरू: शफोरू: सहोरू: सहितोरू: संहितोरू:। उपमानात्तु रम्भे इव ऊरू यस्या: सा रम्भोरू: एवं करभोरू: स्तम्भोरूरित्यादि। एभ्य: किं? वृत्तोरु: पीनोरु: ॥ २७८ ॥

श्रीरा टी—वामस्य लक्षणस्य शफस्य सहस्य सहितस्य संहितस्य उपमानञ्च तत्तस्मात्। वामोरूरिति वामौ मनोहरावूरू यस्या: सेति वाक्यं वामादीनामनौपम्यार्थं वचनम्। सफल सम्फलाभ्यामित्यन्ये। रम्भोरूरिति रम्भे इव ऊरू यस्या: सा एवं करिकरोरूरित्यादि ॥ २७८ ॥

वाशब्दोऽत्र व्यवस्थावाची तेनेदं विवृणोमि। पङ्गु शब्दादूपि पङ्गू: एवं भद्रबाहोरूपि भद्रबाहूर्नाम काचित्। एवं कद्रु कमण्डलुभ्यां संज्ञायामूपि कद्रू: कमण्डलू: एवं स्त्रीविशेषवाचिनो भीरुशब्दादूपि भीरू:। सम्बोधने हे भीरु। विहर मया सह भीरु काननानीति वाल्मीकि:। एवञ्च श्वशुरस्य पत्न्यर्थे ऊप् तस्मिंश्च उकारस्य अन्त्याकारस्य च लोपे श्वश्रूरित्यादि॥ २७९ ॥

तनु: आदिर्यस्य स: तस्मात्। तनूरिति गौणेऽपि वरतनु सम्प्रवदन्ति कुक्कुटा:। सुतनु सत्यमलङ्करणाय ते ' यादौ स्यात्। तन्वादिर्यथा तनुश्चञ्चुररुर्भीरु: कङ्गु पङ्गु प्रियङ्गव:। गण्डु: कुहुरिति प्रोक्ता तन्वादौ सरयूस्तथा। वाशब्दस्य व्यवस्थावाचित्वात् नाम्नि बाह्वन्तकमण्डलुकद्रुभ्यो नित्यमूप् स्यात् संज्ञायाम्। भद्रबाहु: मद्रबाहु: कमण्डलू: नाम काचित् कद्रूर्नागमाता। नाम्नि किं? वृत्तबाहु:। श्वश्रू: इदं निपात्यम्। श्वशुरस्य पत्नी श्वश्रू:। आबादेर्लुक् तलुकि। आप ईप ऊपश्च लुक् स्यात् तलुकि। बहुला: कृत्तिकास्तासु जात: षास्य लुक् तलुकि अपीलुक् बहुला लुकि न तवेति निषेधान्न त्रि: आपीलुकि प्रकृत्यवस्थिति:। एवं अश्विन्यां जात: षालुकि ईपो लुक् अश्विनी। तलुकि किं? बहुलानां अश्विन्याश्च पति: बहुलापति: अश्विनीपतिरिति ॥ २७९ ॥

इति स्त्रीत्यपाद:।

## द्वितीयः पादः ।

## कारकम् ।

### २८० । ल्यर्थसम्बुद्ध्युक्तार्थे प्री ।

ल्यर्थ-सम्बुद्धि-उक्तार्थे ७।, प्री ।१। ।

**लेरर्थे सम्बोधने त्यैरुक्तार्थे के सति च प्री स्यात् । कृष्णः श्रीः ज्ञानम् । हे विष्णो ।**

**सर्वोऽर्च्यो जीवनः पाता दानीयः प्रभवो लयः ॥**

---

स्यादिभिर्लिङ्गानां रूपाणि निरूप्य स्यादीनामर्थान् निरूपयति ल्यर्थेत्यादि । लिर्लिङ्गं लेरर्थो ल्यर्थः अर्थोऽभिधेयः । यथा "शब्देनोच्चार्य्यमाणेन यद्वस्तु प्रतिपाद्यते । तस्य शब्दस्य तद्वस्तु ज्ञायतामर्थ संज्ञयेति" प्राञ्चः । एवमस्मात् शब्दादयमर्थो बोद्धव्य इतीश्वरेच्छाशक्तिरिति तार्किकाश्च । तज्ज्ञानन्तु व्याकरणादिभ्यः अतएव शक्तिग्रहं व्याकरणोपमानकोषाप्तवाक्याद्व्यवहारतश्चेति प्राञ्चः । ततश्च कृष्णशब्दस्यार्थो विष्णुरिति । किञ्च यदा लिङ्गार्थादतिरिक्त कर्माद्यर्थो न विवक्ष्यते तदा लिङ्गात् प्रथमा स्यादित्यर्थः । अन्यथा कृष्ण शब्दस्य कर्मत्वादावपि विष्णुवाचकत्वात् कृष्णं स्मरामीत्यादावपि प्रथमापत्तेः । तस्य एकत्वाद्यभिधाने शक्तिस्तु क ड व्यानीति सूत्रेण प्रकृत्यर्थस्य एकत्व द्वित्व बहुत्वेषु क्रमादेकवचन द्विवचन बहुवचनानां प्रयुज्यमानत्वात् । यथा घटः घटौ घटाः इति । एवं द्वौ बहव इत्यादिषु संख्यापि लिङ्गार्थ एव । न च --कादिभिरेवाभिहितेषु एकत्वादिषु तेभ्यो विभक्तिप्रयोगो व्यर्थेति वाच्यं नापदं शास्त्रे प्रयुञ्जीत इति नियमेनैव केवलानां प्रयोगाभावात् । ततश्च पदत्वार्थं कर्मत्वादि प्रतीत्यर्थञ्च प्रयुक्तया विभक्त्या प्रकृत्यर्थ एवानूद्यते अतएव प्रकृत्यर्थान्वित स्वार्थबोधकत्वं प्रत्ययानामिति प्राञ्चः । पुंस्त्वादिकमपि लिङ्गार्थ एव इति ज्ञापयन्नाह कृष्णः श्रीः ज्ञानमिति । ननु कृष्ण इत्यत्र क्रियारहितं वाक्यं नास्तीति न्यायात् भवत्यादि क्रियाध्याहारेणैव उक्तार्थत्वात् प्रथमाप्राप्तौ ल्यर्थ ग्रहणं कथमिति चेत् ? सत्यं यत्र असमापकक्रियापदं कर्त्रादिपदयुक्तं तत्रैव तन्न्यायात् भवत्यादि क्रियाध्याहारः । यत्र तु केवलो रूढ़शब्दः प्रयुज्यते तत्र वाक्यत्वाभावात् तन्न्यायस्यावसरो नास्तीति विस्तारस्तु कारकशेषे द्रष्टव्यः । एवम् एकादिशब्दो यदा संख्येयवाची तदा घटादिना समाना

धिकरणः स्यात् तत्र लिङ्गार्थे प्रथमा यथा एको घट इत्यादि। यदा तु संख्या मात्रवाची तदा घटस्यैक इत्यादौ सम्बन्धे षष्ठी। एवञ्च प्रस्थादिशब्दो यदा परिमेयवाची तदा व्रीह्यादिना समानाधिकरणः स्यात् तत्र लिङ्गार्थे प्रथमा यथा प्रस्थो व्रीहिरित्यादि। यदा तु परिमाणमात्रवाची तदा व्रीहेः प्रस्थ इत्यादौ सम्बन्धे षष्ठीति सम्प्रदायः। अन्यत्र व्यासक्तस्य कार्य्यान्तरे नियोजनाय-माभिमुख्यविधानं सम्बुद्धिः। हे वृक्ष हे व्रते हे फल इत्यादावचेतने तु उपचारः. उक्तोऽर्थो यस्य तदुक्तार्थं कारकम्। तदुदाहरति सर्व इत्यादि। सर्वः शिवः अर्च्य-तेऽर्यामिति अर्च्यः कर्मणि घ्यण् अत्र सर्व इति कर्मोक्तम्। जीव्यतेऽनेनेति जीवनः करणेऽनट् अत्र सर्व इति करणमुक्तम्। पातीति पाता कर्त्तरि तन् अत्र सर्व इति कर्त्ता उक्तः। दीयतेऽस्मै इति दानीयः क्रोडीः कभाव इत्यनेन सम्प्रदानेऽनीयः अत्र सर्व इति सम्प्रदानमुक्तम्। प्रभवत्यस्मादिति प्रभवः अपा-दानेऽल् अत्र सर्व इत्यपादानमुक्तम्। लीयतेऽस्मिन्निति लयः अधिकरणेऽल् अत्र सर्व इत्यधिकरणमुक्तम्। त्यैरुक्तार्थे के इति बहुवचननिर्द्देशादन्यैरप्युक्तार्थे प्रथमा। तथाच वार्त्तिके तिङ्कृत्तद्धितसमासैरभिहिते द्वितीयाद्यो न भव-न्तीति। तिबाद्यैर्यथा। रामो वनं ययौ अत्र कर्त्तोक्तः। रामेण रावणो जघ्न अत्र कर्मोक्तम्। कृद्भिः स्वयमुदाहृतम्। तद्धितैर्यथा वाचाकृतं वाचिकं अत्र कर्मोक्तम्। तर्कं वेत्त्यधीते वा तार्किकः अत्र कर्त्तोक्तः समासैर्यथा। आरूढो वानरो यं स आरूढवानरो वृक्षः। छिन्नस्कन्धो येन स छिन्नस्कन्धः खड्गः। कृता पूजा येन स कृतपूजस्तावः। दत्ता भूमिर्यस्मै स दत्तभूमिर्विप्रः। निर्गता पक्षिणो यस्मात् स निर्गतपक्षो वृक्षः। सुष्ठु तारा यत्र तत् सुतारमाकाशम्। एवञ्च असाम्प्रतमित्यव्ययेनाप्युक्तार्थता यथा मनस्विगर्हितः पन्थाः समारोढुमसा-म्प्रतमिति। विषवृक्षोऽपि संवर्द्ध्य स्वयं छेत्तुमसाम्प्रतमित्यादौ असाम्प्रतमिति अयुक्त इत्यर्थः। तथाच युक्ते द्वे साम्प्रतं स्थाने इत्यमरः। एवञ्च इति शब्देना-प्युक्तार्थता यथा कृष्ण इत्ययं नाम। कृष्णेति मङ्गलं नाम इत्यादाविति शब्दस्य वर्णमात्राभिधायकत्वेन उक्तार्थत्वेऽपि विभक्त्युत्पत्ति र्न स्यात् इति शब्दस्यैव विभक्तिकार्य्यकारित्वात् पदार्थविभावकत्वे तु स्यादेव यथा दशरथ इत्युदाहृतः इत्यादि। ननु उक्तार्थे कथं गृह्यते कर्मादीनामुक्तार्थत्वे उक्तार्थानामप्रयोग इति न्यायात् द्वितीयादीनामप्राप्तौ लिङ्गार्थमाश्रित्य प्रथमैव भविष्यतीति चेत् सत्यं बहुव्रीहि यन्यः समधिकफलमाचष्टे इति न्यायात् सम्बन्धस्याप्युक्तार्थत्वे पीतमम्बरं यस्यासौ पीताम्बरो हरिरित्यादौ प्रथमा स्यात्। अन्यथा त्यैरुक्तार्थे के इति वचनेन कारकादन्यस्य उक्तार्थत्वासम्भवात्॥ २८०॥

श्रीरा टी—लिरर्थो त्यर्थः उक्तश्चासावर्थश्चेति सः त्यर्थश्च सम्बुद्धिश्च उक्तार्थश्च

तत्तस्मिन् त्यर्थे हि स्वार्थादि पञ्चात्मकः केषाञ्चिन्मते स्वार्थादित्रात्मकः। यदुक्तम्। "स्वार्थो द्रव्यञ्च लिङ्गञ्च संख्याकर्मादिरेव च। अमी पञ्चैव लिङ्गार्था स्त्रयः केषाञ्चिदग्रिमा" इति। तत्र स्वार्थो विशेषणं द्रव्यं विशेष्यं लिङ्गं पुंस्त्वादि सङ्ख्या एकत्वादिः कर्मादिः ढादिः। तथाहि गौर्नित्या इत्यत्र स्वरूपविशेषण त्वात् स्वार्थः। शब्दोह्यर्थं प्रतिपादयन् दीपवत् स्वरूपमपि प्रतिपादयति जातिः शक्यत्वात् द्रव्यम्। एवं पटीयः शुक्लः नीलोघटः पाचकोमैत्रः दण्डी चैत्र इत्यादौ जातिगुणक्रियासम्बन्धाः स्वार्था विशेषणत्वात् गुण घट मैत्र चैत्रादयो द्रव्याणि विशेष्यत्वात् गौः सुन्दर इत्यादौ तु शक्याश्रयतया व्यक्तिरेव द्रव्यं जातिस्तु स्वार्थ इति यद्यपि प्रयोजननिर्वाहकारितया व्यक्तयो जातेर्भिन्ना एव तथापि ता एव व्यक्तयस्तिरोहितभेदा जातिरुच्यते। यदुक्तम्। "अर्थं क्रियाकारितया भिन्ना व्यक्तय एव च। ता एव व्यक्तयस्त्यक्तभेदा जातिरुदाहृता" इति। धर्मधर्मि-णोरभेदवादिमतेनेदम्। न च लिङ्गं त्यार्थः कृष्णः श्रीः ज्ञानमित्यादौ एकयैव सिविभक्त्या विशेषविधानानुपपत्तेः। नापि संख्या त्यार्थः एको द्वौ त्रय इत्यादौ त्यर्थताकल्पनात् स्यादिविधानन्तु साधुत्वार्थम्। परे तु प्रकृतिप्रत्ययौ प्रकृत्यर्थ-विशिष्टं प्रत्ययार्थं सहब्रूत इत्युक्ते स्यार्थमप्याहुः। एवं ढादिरपि। अस्य तु स्वार्थादिचतुर्ष्वर्थेषु विषयः। ढादिषु विशेषविधानात् यदुक्तं एक एकक इत्यन्ये द्वावित्यन्ये त्रयोऽपरे। चतुष्कः पञ्चकः केचित् चतुष्के सूत्रमुच्यते। एकमते दधि पश्यतीत्यादौ चम्पककुसुमसुवासितवसनादिवत् त्तिजनितसंस्कारविशे-षादेव संख्याकर्माद्यवगमः। आढ़को व्रीहिः प्रस्थो व्रीहिरित्यादौ लक्षणया परिमेयो व्रीहिः द्रव्यम्। परिमाणन्तु स्वार्थ इति तस्मात्त्कक्ति लक्षणान्यतर सम्ब-न्धेन ज्ञेयमात्रं वस्तु त्यर्थ इति यावत्। सम्बोधन इति स्थितस्याभिमुख्येऽभिधानं अत्र त्यर्थातिरिक्तत्वात् ष्यां प्राप्तायां वचनं यथा हे विष्णो हे विष्णू हे विष्णवः भो वृक्ष भो वृक्षौ भो वृक्षा इत्यादि। त्योरिति अर्थोपलक्षणत्वात् पीताम्बरः ज्ञातरामः विषवृक्षोऽपि संवर्द्ध स्वयं छेत्तुमसाम्प्रतम्। मनोस्विगर्हितः पन्थाः समारोढुमसाम्प्रतमित्यादौ सव्याभ्यासुक्तेऽपि प्री। के सतीति कमिह क्रिया-निमित्तभूतं ग्राह्यं तेन मृदुभ्यते इत्यत्र मृदुनो नोक्तार्थता इदमप्युपलक्षणं तेन शिवो देवता अस्य शैव इत्यादौ ष्यर्थस्योक्तत्वात् को रामः का सीता इदं ज्ञान-मित्यादौ उक्तत्वाभावेऽपि त्यर्थे प्री। ये तु सर्वं हि वाक्यं क्रियया परिसमा-प्यते इति न्यायादस्तीत्यादि अध्याहरन्ति तन्मते त्यर्थग्रहणं कृष्णः श्रीः ज्ञानमि-त्यादौ त्यर्थमात्रप्रतीत्यां प्रीविधानार्थं क्रियाध्याहारस्य वक्तृतात्पर्य्यानुरोधात। षवो क्तार्थे पृथक् प्रीविधानात ढादीनामनुक्त एव विषयः। त्यैरुक्तानां क्रमेण उदा-हरणं सर्व इत्यादि सर्व इत्यस्य षट्सु अन्वयः। सर्वोऽर्च्यते भक्तैर्धार्द्ध ष्यण् सर्वेण

**२८१। कर्म क्रियाविशेषणाभिनिविशाधिशीङ्स्थासन्वध्युपावस-डं ढं ही।**

कर्म—ड १, ढं १, ही।१।

काय्यं क्रियाविशेषणं अभिनिविशादेर्डञ्च ढसंज्ञं स्यात् तत्र च ही। रामं नमति सानन्दं धर्मानभिनिविश्य सन्।

---

जीव्यते जीवधोर्धेऽनट् सर्वः पाति पाधोघं त्वन् सर्वाय दीयते दाधोर्भेऽनीयः। अन्यत्रापि प्रयोगत इत्युक्तः। सर्वात् प्रभवति प्रपूर्व भूधोर्जेऽल् सर्वे लीयते लीधल्डोऽल्॥ २८०॥

यत् क्रियते तत् कर्मेति प्रसिद्धम्। करोतेर्निखिलक्रियावाचकत्वात् कर्त्तुर्व्यापारैर्यत् साध्यते तत् कर्मेत्यर्थः। अतएव क्रियाव्याप्यं कर्मेति क्रमदीश्वरः (कर्त्तुरीप्सिततमं कर्म इति पाणिनिः। तद्भिन्नत्वे सति क्रियाजन्यफलशालित्वं कर्मत्वमित्यपरे।) तच्च कर्म त्रिविधम्। निर्वर्त्त्यं विकार्य्यं प्राप्यञ्चेति निर्वर्त्त्यते उत्पाद्यते यत्तन्निर्वर्त्त्यं अजातस्योत्पादना यथा घटं करोति इत्यादि। विक्रियते विद्यमानं वस्तु अवस्थान्तरं नीयत इति विकार्य्यम्। तच्च द्विविधं प्रकृतेरुच्छेदकं प्रकृतेर्गुणान्तराधायकञ्चेति। आद्यं यथा काष्ठं भस्म करोतीत्यादि अन्त्यं यथा सुवर्णं कुण्डलं करोतीत्यादि। यथाचोक्तम्। "यदसज्जायते पूर्वं जन्मना यत् प्रकाशते। तन्निर्वर्त्त्यं विकार्य्यञ्च कर्म द्वेधा व्यवस्थितम्। प्रकृत्युच्छेदसम्भूतं विकार्य्यं काष्ठभस्मवत्। अन्यद्गुणान्तरोत्पत्त्या सुवर्णादि विकारवदिति"। निर्वर्त्यविकार्य्याभ्यामन्यत् प्राप्यम्। यथा ग्रामं गच्छति चन्द्रं पश्यति इत्यादि। अनीप्सितमिति चतुर्थं कर्मेति क्रमदीश्वरः। यथा पापं त्यजति धार्मिकः। क्रियाया विशेषणं क्रियाविशेषणम्। क्रिया धात्वर्थः तस्य च शब्दत्वाभावात् लिङ्गसंख्याभावः पुंलिङ्गादि कार्य्यं संख्या च न सम्भवत्येव। ततश्च तद्विशेषणस्य लिङ्गस्यापि लिङ्गसंख्ययोर्नियमाभावे सामान्यत्वान्नपुंसकत्वं प्रथमोपस्थितपरित्यागे प्रमाणाभावाच्चैकवचनान्तत्वम्। तेन कवयः श्लोकं साधु पठन्ति कविना श्लोकाः साधु पठ्यन्ते इत्यादौ कर्त्तुः कर्मणोर्वा बहुत्वेऽपि क्रियाविशेषणस्य एकत्वमेव। किञ्च पृथग्रूपक्रियाया विशेषणस्य कर्मत्वादिकं न स्यादिति क्रमदीश्वरः तेन साधुः पाकः साधू पाकौ साधवः पाकाः। कृदभिहितो भावो द्रव्यवत् प्रकाशते इति न्यायेन द्रव्यत्वातिदेशात् पाकस्य पृथग्रूपत्वमिति गोयीचन्द्रः। क्रियाविशेषणस्य कर्मत्वेऽपि अकर्मक धातूनामकर्मकत्वमेव। तेन शिशुना साधु सुप्यते इति भावप्रत्ययः।

श्रीशोऽधिशेते ऽहि मधिष्ठितोऽब्धि-
मध्यास्य घोषं मथुरामनूष्य।

शिश्यः साधु सुप्तः इति कर्त्तरि क्तः। माता शिशुं साधु स्वापयतीत्यादौ अत्यान्त-कर्तुः कर्मत्वं संज्ञा फलन्तु स्तोकं बिभेतीति स्तोकभीः स्तोकभ्यौ स्तोकभ्यः। मन्दं लुनातीति मन्दलूः मन्दल्वौ मन्दल्वः इत्यादौ कर्मकारकादित्वात् कव्याद्यनेकाच इति यवौ। अभेर्निः अभिनिः अभिनेर्विशः अभिनिविशः शीङश्च स्थाश्च आस् च शीङ् स्थासः अधेः शीङ्स्थासः अधिशीङ्स्थासः अनुश्च अधिश्च उपश्च आङ् च अन्वध्युपाः तेभ्यो वसः अन्वध्युपावसः। अभिनिविशश्च अधिशीङ्स्थास् च अन्वध्युपावस इति तेषां ङं अभिनिविशाधिशीङ्स्थासन्वध्युपावस ङम्। पश्चात् कर्म च क्रिया-विशेषणञ्चेति समाहारः। रामं नमतीत्यादि। सन् साधुर्धर्मानभिनिविश्य सानन्दं यथा स्यात्तथा रामं नमतीत्यन्वयः। राम इति नमनक्रियाव्याप्यं कर्म सानन्दमिति क्रियाविशेषणं क्रियाया भेदाभावे सत्येव विशेषणं स्यादिति ज्ञापय-न्नाह सानन्दमिति। सह आनन्देन वर्त्तते यत्तत् सानन्दं आनन्दसहिताभिन्नो नमस्कार इत्यर्थः। एवं मन्दं पचतीत्यत्र मन्दाभिन्नः पाकः शीघ्रं गच्छतीत्यत्र शीघ्राभिन्नं गमनमित्यर्थः। अभेद इति किं आनन्दस्य विशेषणत्वं न स्यात् आनन्दः सुखं नमस्कारः करशिरःसंयोगादिः एतयोरभेदात्। धर्मानिति अभिनिविशतेरधिकरणस्य कर्मत्वम्। श्रीशः इत्यादि। यः श्रीशः अब्धिमधि-ष्ठितः सन् अहिमधिशेते घोषं अध्यास्य मथुरां अनूष्य द्वारकामध्युषितः। विकु-ण्ठञ्च उपावसत् स नोऽस्माकं हृत् हृदयं आवसतादित्यन्वयः। अहिमिति अधि-शीङोऽधिकरणम्। अब्धिमिति अधितिष्ठतेरधिकरणम्। घोषमिति अध्यास्तेर-धिकरणम्। मथुरामिति अनुवसतेरधिकरणं द्वारकामिति अधिवसतेरधिकरणं विकुण्ठमित्युपवसतेरधिकरणं हृत् इति आवसतेरधिकरणं सर्वत्र कर्मत्वे द्वितीया। आवसतादिति तुपः स्थाने तातङ्। एषामधिकरणस्य कर्मत्वात् सकर्मकत्वे कर्मणि प्रत्ययोऽपि। यथा मण्डलं मण्डलाकारो रेखा वाजिमयी जवे। सव्या-पसव्य द्विमुखो नकुलाधिष्ठितो हय इति। बलैरध्युषितास्तस्य विजिगीषोर्गता-ध्वनः। हारीतोत्कृष्टमारीचा मलयाद्रेरुपत्यका इति रघुः। अत्र गृहे अधिष्ठानं कल्याणेऽभिनिविशः। यस्मिन् यस्मिन्नभिनिविशते इत्यादावपि दृश्यते इति जौमराः। स्वहस्तदत्ते मुनिमासने मुनिश्चिरन्तनस्तावदभिन्यवीविशदिति माघः। इत्यादिकन्तु आतिदेशिकमनित्यमिति न्यायात् समाधानीयम्। एवञ्च उपपूर्ववसतेरभोजनार्थस्य न स्यात्। तेन तीर्थे उपवसते उपवासं करोतीत्यर्थः।

यो द्वारकामध्युषितो विकुण्ठ-
मुपावसच्चावसतात् स कृष्णः॥

अभाजनार्थस्य किम्? तीर्थमुपवसति तीर्थे निवसतीत्यर्थः एकादशीमुपवसन्ति निरम्बुभक्षा इति। एकरात्रमुपोष्यैव इत्यादि तु सदाध्वादि व्याप्ताविव्यनेन कालस्य कर्मत्वम्। अधिशीङ्स्थासामकर्मकाणामेव ग्रहणम्। तेन वने राजान-मधितिष्ठति अपेक्षते इत्यर्थः। गत्यर्थाद् शीति सूत्रे जनजॄ इति इयोर्ग्रहणं ज्ञापकात् अनुपूर्वयोरेतयोः प्रयोगे यस्य पश्चात् जननं जरणञ्च तस्य कर्मत्वं स्यादिति बोध्यम्। तेन राममनुजातोऽच्युतः। विश्वमनुजीर्णोऽनन्त इति स्वय वक्ष्यति। असौ कुमारस्तमजोऽनुजात इति रघुः॥ २८१॥

श्रीरा-टी—क्रियायाः विशेषणं क्रियाविशेषणं नेर्विशः निविशः अभेर्निविशः अभिनिविशः शीङ्च स्थाश्च आस्च तत् अधेः शीङ्स्थास् अधिशीङ्स्थास अनुश्च अधिश्च उपश्च आङ्च तेभ्योवसः अभिनिविशश्च अधिशीङ् स्थास्च अन्वध्युपावसञ्च तत् तस्य ङं तत् कर्म च क्रियाविशेषणञ्च अभिनिविशाधि शीङ् स्थासन्वध्युपावसङञ्च तत्। यत् क्रियते कर्त्तुः क्रियया यद्वाप्यत तत्कर्म तत्त्रिविधं निर्वर्त्त्यं विकार्य्यं प्राप्यञ्चेति तत्र कर्त्तुः क्रियया यस्योत्पादः प्रकाशो वा तन्निर्वर्त्त्यं यथा कटं करोति पुत्रं प्रसूयते इत्यादि। कर्त्तुः क्रियया यस्याः प्रकृतेरनुच्छेदेनोच्छेदेन वा अवस्थान्तरो-त्पत्तिस्तद्विकार्य्यं यथा वस्त्रं रजति काष्ठं दहतीत्यादि। कर्त्तुः क्रियया कृतविशेष-सिद्धिर्दर्शनेनानुमानेन वा यत्तु न ज्ञायते तत्प्राप्यं यथा वेदमधीते सूर्य्यं पश्यति इत्यादि काष्ठं भस्म करोति सुवर्णं कुण्डलं करोति इत्यादौ काष्ठसुवर्णे विकार्य्ये भस्म कुण्डले निर्वर्त्त्ये। यदुक्तं। यदसज्जायते पूर्वं जन्मना यत् प्रकाशते। तन्निर्वर्त्त्यं विकार्य्यञ्च कर्म द्वेधा व्यवस्थितम्। प्रकृत्युच्छेदसम्भूतं किञ्चित् काष्ठादिभस्मवत्। किञ्चित् गुणान्तरोत्पत्त्या सुवर्णादि विकारवत्। क्रियाकृतविशेषाणां सिद्धिर्यत्र न विद्यते। दर्शनादनुमानाद्वा तत् प्राप्यमिह कथ्यते। परे त्वनीप्सितमपि कर्मा-न्तरम्। तद् द्विविधं प्रतिकूलमप्रतिकूलञ्च। यथा ओदनं बुभुक्षुर्विषं भक्षयति ग्रामं गच्छन् वृक्षमूलमुपसर्पति इत्याहुः। तदस्मन्मते निर्वर्त्त्यविकार्य्यभिन्नं प्राप्यमिति लक्षणेन प्राप्यान्तर्भूतमिति। चैत्रो ग्रामं गच्छतीत्यादौ उत्तरदेशसंयोगावच्छिन्न-गतिक्रियाव्याप्यत्वात् ग्रामस्य ढत्वम्। विवृक्षं त्यजतीत्यादौ तु पूर्वदेशविभागावच्छिन्न-त्यागक्रियाव्याप्यत्वात् वृक्षस्य ढत्वम्। अतएव गमित्यजोर्नैकपर्य्यायता इति। सुखं गच्छति पापं त्यजतीत्यादौ गौणगतित्यागक्रियाव्याप्यत्वात् सुखपापयोर्ढत्वम्। एवं

## २८२ । देशाध्वकालभावं वाढैः ।

देश—अध्वन्-काल-भावं १।, वा ।१।, अढैः ३॥।

**अढै धॄभि योगे एते ढसंज्ञा वा स्युः ।**

---

पुष्पमाकर्षति भ्रमरान् इत्यादौ लक्षणया कर्त्तुः क्रियाव्याप्यत्वात् भ्रमराणां ढत्वम् । बलिबन्धमाचष्टे बलिं बन्धयति कंसवधमाचष्टे कंसं घातयति इत्यादौ बन्धवधाख्यानकर्त्तुः क्रियाव्याप्यौ बलिकंसौ कथानुबन्धस्य तन्निबन्धत्वात् । क्रियाध्वर्यैः तद्विशेषणस्य एकत्वं नपुंसकत्वं च क्रियाया लिङ्गसंख्याविनिर्मुक्तत्वात् । साधुः पाकः साधू पाकौ साधवः पाकाः इत्यादौ कृदभिहितो भावो द्रव्यवत् प्रकाशते इत्युक्तेः पुंस्त्वैकत्वद्वित्वादयः स्युरेव । ढत्वातिदेशात्तु मृदु नयतीति मृदनीक्षी मृदुन्यौ इत्यादौ कव्याद्यनेकाच इति यः । राममित्यादि । धर्मानभिनिविश्य सानन्दं यथा स्यात्तथा रामं नमतीत्यन्वयः । सन् धीरः धर्मविषयातीताभिनिवेशीत्तररामविषयक सानन्दाभिनन्त्याश्रयः इत्यर्थः । श्रीशो घोषमध्यास्य पश्चान्मथुरामनूष्य अब्धिमधिष्ठितः सन् अहिमधिशेते । यश्च द्वारकामध्युषितः सन् विकुण्ठं वैकुण्ठमुपावसत् स नोऽस्माकं हृदयमावसतादित्यन्वयः । कल्याणेऽभिनिवेशः पापेऽभिनिवेशः या या संज्ञा यस्मिन्नभिनिविशते त्वय्यभिनिविष्टमनाः अत्राधिष्ठानं कुरु गृहेऽधिष्ठानमित्यादौ तु क्वचिदपवादविषयेऽप्युत्सर्गोऽभिनिविशते इति न्यायात् डमेव । तीर्थे उपवसति ग्रामे उपवसति इत्यादौ तु अप्रयुक्त वसतित्वात् डम् । तथाच तीर्थे ग्रामे वा वसन् सन् त्रिरात्रमेकरात्रं वा उपवसतीत्यर्थः । मदुक्तं वसतावप्रयुक्तेऽपि देशोऽधिकरणं मतम् । अप्रयुक्तं त्रिरात्रादिकर्मचोपवासः स्मृतमिति भाष्यम् । एके तु अनशनार्थस्योपवसतेरिह न ग्रहणमित्याहुः । लक्षते एकादशीषूपवसन्ति निरम्बुभक्ताः । उपोष्य रजनीमेकामित्यादौ सदाध्वादिना ढम् । एतेषां ढत्वविधानात् धर्मा अभिनिविश्यन्ते श्रीशेनाहिरधिशय्यते इत्यादौ ढे त्वः । रणे राजानमधितिष्ठतीत्यादौ न स्यात् । एषामढानामेव ग्रहणात् रणे राजानमपेक्षते इत्यर्थः ॥ २८१ ॥

देशश्च अध्वा च कालश्च भावश्चेति समाहारः । देशः पृथगेकैकदेशः नदीवनपर्वतादिः । अध्वा अध्वपरिमाणं यथा किष्कुर्हस्ते वितस्तौ च नल्वः किष्कुचतुःशतम् । चतुर्हस्तो धनुस्तस्य सहस्रं क्रोश उच्यते । क्रोशद्वयन्तु गव्यूतिस्तद्द्वयं योजनं विदुरिति कालः क्षण दण्ड मुहूर्त्त प्रहर दिनरात्रि पक्ष मासवत्सरादिः भावो धात्वर्थः । नास्ति ढं कर्म येषां ते अढाः तैः । अकर्मकसंग्रहस्त्वित्यादि

नदी र्वनेषु चोषित्वा क्रोशान्नक्तेष्वहर्निशि ।
चंक्रमित्वा प्रियानीतिं रामो रक्षोवधे स्थितः ॥

---

त्रान्ताढगत्यर्था इत्यत्र द्रष्टव्यः। नदीरित्यादि। रामो नदीर्वनेषु च उषित्वा अहर्निशि नक्तेषु क्रोशान् चंक्रमित्वा प्रियानीतिं प्रियाया आनयनक्रियायां रक्षोवधे च स्थित इत्यन्वयः। नदीरिति नद्यां वसतेरसम्भवान्नदीशब्देन लक्षणया नदीतीरमुच्यते उषित्वेति वसे र्णौ निवासे क्त्वाच् तद्योगान् नदीरिति कर्मत्वं पक्षे वनेषु इति कालभावाधारमिति सप्तमी। चंक्रमित्वेति वक्रं क्रामतीति यङ् ततः क्त्वाच् वक्रगमनार्थत्वादकर्मकत्वे तद्योगात् क्रोशानिति अहरिति च कर्मत्वं पक्षे नक्ते ष्विति निशीति च सप्तमी। स्थित इति स्थाधातोः कर्त्तरि क्तः तद्योगात् प्रियानीतिमिति कर्मत्वं पक्षे रक्षोवधे इति सप्तमी। अत्र वाशब्दस्य व्यवस्थावाचित्वादकर्मकैर्योगे व्याप्तौ गम्यमानायाम् अभिव्याप्य इत्यादि क्रियान्तरस्य अध्याहाराभावे सति देशादिभ्यो द्वितीया स्यान्नतु तेषां कर्मत्वमिति। काशीं वसति क्रोशं स्वपिति मासमास्ते ओदनपाकं स्वपिति। भावे प्रत्यये तु काशीमुष्यते क्रोशं सुप्यते मास मास्यते ओदनपाकं सुप्यते। अभिव्याप्य इत्यादेरध्याहारेतु कर्मणि प्रत्यये कृते काशी उष्यते क्रोशः सुप्यते मास आस्यते ओदनपाकः सुप्यते क्रोशं कुटिला नदीत्यादिकन्तु भवतेर्गम्यमानत्वात्। अढैः किं ? दिने ग्रन्थं पठति रात्रावोदनं पचति ॥ २८२ ॥

श्रीरा-टी—देशश्च अध्वा च कालश्च भावश्च तत्। नास्ति ढं येषां ते तैः। देशो नदभूधरकन्दरादिरध्वाध्वमानं करयोजनादिः। कालो मुहूर्त्तायनवत्सरादिर्भावस्तदर्थत्वपरो वधादिः। करो हस्तमानम्। नदीरित्यादि। नदीर्वनेषु च उषित्वा वासं कृत्वा क्रोशान्नक्तेषु च अहर्निशि चंक्रमित्वा इतस्ततः भ्रमणं कृत्वा रामः प्रियानीतिं सीताया आनयनविषये रक्षोवधे रक्षसां वधविषये स्थितोऽतिष्ठदित्यर्थः। एव कुरून् स्वपिति कियन्तमध्वानं तिष्ठति मासं स्वपिति प्रीतिं वसति पक्षे कुरुषु स्वपितीत्यादि। ढत्वविधानात् नद्यः उष्यन्ते क्रोशाश्चंक्रम्यन्ते मासः सुप्तः इत्यादि स्यात्। विकल्पपक्षे तु नदीषु उष्यते जनैरित्यादि। अढा धवः सत्ताद्यर्थेषु वर्त्तमानाः। तथाच सत्तानिवासासन सिद्धि वृद्धि क्रीडा रुचि स्यन्दन जीवनेषु। नृत्यस्थिति वास विशेष लज्जास्पर्द्धा स्मृति क्रन्दन भाषणेषु। शुद्धौ जये जागरणे प्रकम्पे स्वप्नक्षयोद्वेगमदेषु दुर्गतौ। यत्ने रुदे नाद कृतौ धवोऽढा ढस्याविवक्षावशतः सढाश्च। तथाच भागुरिः "धातोरर्थान्तरे वृत्ते धात्वर्थेनोपसंग्रहात्। प्रसिद्धेरविवक्षातः कर्मणोऽकर्मिका: क्रिया" इति। केचित् सढैरपि रात्रिमोदनं पचति

## २८३ । सदाध्वादि व्याप्तौ सर्वैः सिद्धे तु धम् ।

सदा ।१।, अध्वादि ।१।, व्याप्तौ ७, सर्वैः ३।।।, सिद्धे ७, तु ।१।, धं १। ।

**सर्वैर्धुभिर्योगे अत्यन्तसंयोगे अध्वादयो नित्यं ढसंज्ञाः स्युः, अर्थसिद्धौ तु धसंज्ञाः ।**

---

रात्रिरोदनं पच्यते । पचे रात्रावोदनं पचतीत्यादिकमिष्यत इत्याहुः । इदं नित्यमित्यन्ये ॥ २८२ ॥

अध्वादि ग्रहणं देशनिवृत्त्यर्थम् । सर्वैः सकर्मकैरकर्मकैश्च योगेऽत्यन्तसंयोगे क्रियाणामध्वादौ विच्छेदाभावे गम्यमानेऽध्वकालभावान्नित्यं कर्मसंज्ञाः स्युः अर्थसिद्धौ तु पाठादीनां प्रयोजनस्य ज्ञानादेः सिद्धौ सत्यान्तु करणसंज्ञा स्युरित्यर्थः । भृत्यैरित्यादि । कृष्णः क्रोशं व्याप्य भृत्यैरन्वितः सन् मासौ व्याप्य गुरुगृहे स्थितः सन् गुरुपदेशं निभृतः सन् माभ्यां वाङ्मयं सकलं शास्त्रमध्यैष्ट इत्यन्वयः । अन्वित इति अनुपूर्व इन् गतौ कर्मणि क्तः अन्वितः पश्चात् गत इत्यर्थः । पश्चाद्गमनस्य क्रोशे विच्छेदाभावात् क्रोशस्य कर्मत्वम् । अन्वित इति कर्मणि क्ते मुख्यकर्मणः कृष्णस्यैव उक्तत्वं नत्वातिदेशिकत्वेन गौणस्य क्रोशस्य । एवं मासावधीते रात्रिमधीते । कर्मणि प्रत्यये तु मासावधीतौ रात्रिरधीता । अत मुख्यकर्माप्रयोगे गौणस्याप्युक्तत्वं मुख्यकर्मप्रयोगे तु मासौ तर्कोऽधीतः रात्रिः स्मृतिरधीता । एवं स्थितिक्रियाया मासयोर्विच्छेदाभावात् कर्मत्वम् । निभृत इति निपूर्व भृञ धारणपोषणयोः अनेकार्थाहि धातवः इति न्यायादयमत्र यत्नार्थः । अकर्मकत्वात् कर्त्तरि क्तः निभृतः कृतयत्न इत्यर्थः । यतनक्रियाया गुरुपदेशे वि ये विच्छेदाभावात्तस्य कर्म्मत्वम् अध्यैष्ट इति इञ अध्ययने तन् विभक्तिः अध्ययनक्रियाया मासयोर्विच्छेदाभावेऽपि अध्ययनप्रयोजनस्य ज्ञानस्य सिद्धत्वात् मासयोः करणत्वे साधनहेतुविशेषणेत्यादिना तृतीया । प्रयोजनसिद्धेरन्यत्र मासौ ग्रन्थोऽधीतो जड़ेन किमपि न ज्ञातमित्यर्थः । कालाध्वनोरेवायं विधिरिति जौमराः । एकादश्यां न भुञ्जीत पक्षयोरुभयोरपीत्यादिकन्तु पूर्वसूत्रीय वाशब्दस्य व्यवस्थया समाधेयम् ॥ २८३ ॥

श्रीरा-टी—अध्वादिर्यस्य तत् । देश निवृत्त्यर्थमध्वादि इति उक्तम् । व्याप्तिः साकल्येनाभिसम्बन्धोऽविच्छेद इति यावत् । तत्र अर्थस्य सिद्धिरर्थसिद्धिः फलप्राप्ती क्रिया परित्यागश्च सर्वैरिति अढसढैरित्यर्थः । भृत्यैरित्यादि—कृष्णः वाङ्मयं शास्त्रं माभ्यां मासाभ्यां अध्यैष्ट ज्ञातवान् इत्यन्वयः । कृष्णः कीदृशः भृत्यैः

भृत्यैः कृष्णोऽन्वितः क्रोशं मासौ गुरुगृहे स्थितः।
गुरूपदेशं निभृतो माभ्यामध्यैष्ट वाङ्मयम्॥

२८४। घोऽजौ जेः शब्दाशनगतिज्ञार्थाढग्रहदृशश्रो-खादनीक्रन्दाय शब्दाय ह्वादासूतघवहाहिंसाभचो हृक्रमाभिवादिदृशस्तु वा।

घः १।, अजौ ७।, जेः ६।, शब्द—श्रोः ६।, अखाद—भचः ६।, हृक्रमाभिवादिदृशः ६।, तु ।१।, वा ।१।।

अजन्तानां शब्दार्थादीनां यो घः स जन्तानां ढं स्यात्, न तु खादादेः, हृादेस्तु वा।

---

क्रोशमन्वितः क्रोशपरिमिताध्वानं व्याप्याविच्छेदेनानुगत इत्यर्थः। पुनः कीदृशः मासौ गुरुगृहे स्थितः मासद्वयं व्याप्याविच्छेदेन स्थित इत्यर्थः। पुनः कीदृशः गुरूपदेशं निभृतः गुरुवचने अत्यन्तासक्त इत्यर्थः। क्रोशमिति गौणढत्वेन नोक्तं न्यादिजन्ताढगत्यर्था मुख्ये ढे ढत्वमाप्नुयुरित्युक्तेः। माभ्यामिति घसञ्ज्ञाफलसिद्धत्वात्। अन्तर्भूतक्रियान्तरेणैव ढत्वमिति भाष्ये अन्तर्भूतक्रियान्तरेणैवेत्यनेन व्याप्त्यर्थमनुकर्षति। यदुक्तम्। कालभावाध्वदेशानामन्तर्भूतक्रियान्तरैः। सर्वैरकर्म्मकैर्योगे कर्मत्वमुपजायते इति। ढत्वविधानात् मासः सुप्यते मासौ सुप्येते मासाः सुप्यन्ते इत्यादौ मुख्यढाभावात् गौणे ढे त्यः। केचिद्भौ विदधति तन्मते मासः सुप्त इत्यदावव्याप्तिः। मुख्यढाभावेऽढत्वाद्भावे त्य इति कश्चित् तन्मते मासं सुप्यते क्रोशं सुप्यतेऽनेनेति एकादश्यां न भुञ्जीत इति तु वाशब्दस्य व्यवस्थया पूर्वेणैव विकल्पः। जन्म जन्म यदभ्यस्तमित्यत्र कालावच्छेदिकायां क्रियायां आद्यक्षणावच्छिन्नक्रियाया उत्पत्तिपदार्थत्वेन क्रियाया कालावच्छेदकत्वं कालोपचारात्। क्रोशं कुटिला नदीति क्रियाध्याहारात्। व्याप्तौ किं मासयोरध्यैष्ट विच्छेदेनाधीतवानित्यर्थः अपवादोऽयमिति परे। कालध्वनोरेवायं विधिरित्यन्ये॥ २८३॥

अशनमिति अशगभोजने इत्यस्यानटि रूपं भोजनमित्यर्थः। ज्ञेति जानातेः क्विपि रूपं ज्ञानमित्यर्थः। शब्दश्च अशनञ्च गतिश्च ज्ञाश्च शब्दाशनगतिज्ञाः ते अर्था येषां ते शब्दाशनगतिज्ञार्थाः। नास्ति ढं कर्म येषां ते अढाः। शब्दाशन

गेयमध्यापयद् गोपान् याज्ञिकानन्नमभोजयत् ।
स्वधामागमयच्छत्रून् भक्तांस्तत्त्वमबोधयत् ।
धर्ममस्थापयद् विष्णुर्वेदानग्राहयद् विधिम् ।
दैत्यानदर्शयच्छक्तिं वेणुमश्रावयच्च गाः ॥

---

गतिज्ञार्थाच्च अदाश्च ग्रहश्च दृशश्च श्रुश्चेति समाहारस्तस्य। सूतः सारथिर्घः कर्त्ता यस्य स सूतघः न सूतघोऽसूतघः स चासौ वहश्चेति असूतघवहः। न हिंसा अहिंसा अहिंसायां भक्षः अहिंसाभक्षः। खादश्च नीश्च क्रन्दश्च भयश्च शब्दायश्च ह्वाश्च अदश्च असूतघवहश्च अहिंसाभक्षश्चेति समाहारः। न खादनी क्रन्दायशब्दाय-ह्वादासूतघवहाहिंसार्थभक्षः अखादनी क्रन्दायशब्दायह्वादासूतघवहाहिंसाभक्षः तस्य। अभिवादिः अभिवादिः अभिवादिश्च दृशश्च अभिवादिदृशौ मे आत्मनेपदे अभिवादिदृशौ माभिवादिदृशौ च हृश्च कृश्च माभिवादिदृशौ चेति समाहारस्तस्य। खाद अद अहिंसाभक्ष एषामशनार्थत्वात् नी भय असूतघवह एषां गत्यर्थत्वात् क्रन्दाह्वा एतयोः शब्दार्थत्वात् प्राप्तौ निषेधः। शब्दायेति नामधातुः शब्दं करोतीत्यर्थे शब्द सुख कष्टादेरिति ञ्यप्रत्ययान्तः। अस्य अव्यक्तशब्दार्थत्वेनाकर्मकत्वाच्छब्दार्थत्वाद्वा प्राप्तौ निषेधः। गेयमित्यादि—विष्णुर्गोपान् गेयमध्यापयत् इङ् अध्ययने अधीङ् ल अध्ययने ञिः अस्य अञन्तकालीनकर्त्तॄणां गोपानां कर्मत्वं एवं सर्वत्र। विष्णुर्गोपान् याज्ञिकानन्नमभोजयत् भुज धौ त्राणे भक्षे ञिः। विष्णुः शत्रून् स्वधाम वैकुण्ठमगमयत् हत्वेति शेषः औ गमॢ गत्यां ञिः। विष्णुर्भक्तान् तत्त्वं याथार्थ्यमबोधयत्। बुध्यौ ङ बोधने ञिः। विष्णुः धर्ममस्थापयत् ञि ष्ठा स्थाने ञिः। विष्णुर्विधिं वेदानग्राहयत् ग ग्रह आदाने ञिः। विष्णुर्दैत्यान् शक्तिमदर्शयत्। दृशँ शौ प्रेक्षे ञिः। विष्णुर्गा वेणुमश्रावयच्च श्रुर्गुगतौ श्रुतौ ञिः। खादादेस्तु—रामः कपिभीरक्षांसि अखादयत् खादृ भक्षणे ञिः। अस्य ञ्यन्तकालीन कर्त्तॄणां कपीनां कर्मत्वाभावे गौणकर्त्तृत्वात् तृतीयैव, एवं सर्वत्र। रामः कपिभीरक्षांसि ऊर्द्ध्वलोकमनाययत् नीञ् प्रापणे अस्य द्विकर्मकत्वात् कपयोरक्षांसि ऊर्द्ध्वलोकमनयन्निति स्थितं ततोञि नीवर्जनाद्गत्यर्थं ग्रहणेनैव प्राप्त्यर्थ ग्रहणमिति सूचितम्। पिता पुत्रं धनं प्रापयति। ननु मां प्रापय भर्त्तुरन्तिकमिति कालिदासः। रामः कपिभीरक्षांसि आक्रन्दयत् आह्वयदित्यर्थः। आङ्पूर्वक्रन्दतेः रोदने आह्वाने ञिः। रामः कपिभीरक्षांसि आशु शीघ्रं आययत्

खादादेस्तु—रक्षांस्यखादयदनाययदूर्द्ध लोक-
माक्रन्दयत् कपिभिरायययदाशु रामः।
शब्दाययन् रिपुमजूहवदादयञ्च
शैलानवाहयदभक्षयदिष्टभक्ष्यम्॥

प्रापयदित्यर्थः। अयङ गतौ ञिः। रामः कपिभीरक्षांसि शब्दाययन् रिपुम् अजूहवत् इत्यन्वयः। शब्दाययन्निति शब्दं करोतीति व्यसतो णौ शतन्तम्। अजूहवदिति ह्वेञोस्पर्द्धायां ञिः द्विर्विभक्तिः अङि द्वित्वे ह्वीहेर्जिरित्यादि आह्वय-यदित्यर्थः। रामः कपिभीरिपुं आदयञ्च अद्लौभक्षे ञिः। रामः कपिभिः शैलान् अवाहयत् वहीञ प्रापणे ञिः। रामः कपिभिरिष्टभक्ष्यं फलमूलादि अभक्षयत् भक्ष भक्षणे ञिः। सारथि कर्त्तृकवहहिंसार्थभक्षयोस्तु वाहानित्यादि—हरिः वाहान् घोटकान् पार्थमर्जुनमवाहयत् सारथिर्भूत्वेत्यर्थः असारथिकर्त्तृकत्वाद-न्त कालीन कर्त्तृणां वाहानां कर्म्मत्वम्। सारथिशब्देनेह गवादीनां नियन्ता-प्युच्यते, तेन वाहयति धान्य बलीवर्दान् यज्ञदत्तः। हरिर्वाहान् अरीन् अभक्षयञ्च अत्र हिंसार्थत्वादन्तकालीनकर्त्तृणां कर्मत्वं हिंसा तु प्राणवियोगफलक-व्यापारः। ह्रादेस्तु—राघवः कौशान् शैलान् अहारयत् पक्षे ऋक्षैर्भल्लूकैर्वृक्षान् अजीहरत्। राघवः कपीन् सेतुमकारयत् पक्षे वानरैरपि सेतुमकारयदिति। राघवो जानकीं वृद्धान् अभिवादयते स्म। पक्षे लक्ष्मणेन च वृद्धान् अभिवादयते स्म अभिवादयते इति अभिपूर्वो वदधातुः ञान्तो नमस्कारे वर्त्तते। पुनर्ञौ कृते पूर्वञेर्लोपि फलवत् कर्त्तर्य्यात्मनेपदम्। मे किं पिता पुत्रेण गुरुणाभिवाद-यति। वादीति ग्रहणादैकञ्। शिष्यो गुरुमभिवादयतीत्यादौ नमस्कारार्थत्वात् गुर्वादेः कर्म्मत्वं नित्यमिति। लक्ष्मणः सीतां आत्मानमदर्शयत अदर्शयतेति ञान्तकालीनकर्म्मकर्त्तृत्वात् ञेर्द्वेऽञौघे इत्यात्मनेपदम्। मे किं? पिता पुत्रं चन्द्रं दर्शयति इत्यत्र नित्यमेव। एवं पानस्यापि भक्षणविशेषत्वात् माता पुत्रं दुग्धं पाययतीत्यादि। एवञ्च स्मरणमपि ज्ञानविशेषः तथाच सम्बिद्भगवतीदेवी स्मृत्यनु-भवभेदिकेति तार्किकाः। तेन गुरुः शिष्यं श्लोकं स्मारयतीत्यादि। प्रेरण-क्रियाव्याप्यत्वेनैव कर्मत्वे सिद्धे शब्दार्थादीनां ग्रहणं नियमार्थम्। तेनायं नियमः। ञान्तानां मध्ये शब्दार्थादीनामेव कर्त्तुःकर्मत्वं नान्येषामिति। अत एव पिता पुत्रेणान्नं पाचयति राजा भृत्येन शत्रुं घातयति। गृही गोपेन गां रक्षयतीत्यादौ न स्यात्। शब्दादयः प्रेरणार्था एव न तु शब्दाद्यर्थाः तेन

सारथिघवहहिंसार्थभक्षयोस्तु—

वाहानवाहयत् पार्थमरींश्चाभक्षयद्धरिः॥

ह्रादेस्तु,—शैलानहारयत् कीशान् ऋक्षैर्वृक्षानजीहरत्।

कपीनकारयत् सेतुं वानरैरपि राघवः।

---

पुनर्ञौ क्वते तेषां न स्यात्। यथा पिता पुत्रेण शिष्यं वेदं पाठयति राजा भृत्येन पुत्रं ताम्बूलं भोजयति राजा पुत्रेण भृत्यं ग्रामं गमयति पिता पुत्रेण शिष्यं श्लोकं बोधयति गृही पत्न्या पुत्रं धनं स्थापयति राजा पुत्रेण विप्रं भूमिं ग्राहयति गृही पत्न्या पुत्रं चन्द्रं दर्शयति गुरुः शिष्येण पुत्रं गीतं श्रावयति। अत्र वाशब्दस्य व्यवस्थावाचित्वात् अकर्मकधातोः देशादेः कर्मत्वेऽपि अञान्तकालीन कर्त्तुः कर्मत्वं स्यादिति बोध्यम्। यथा गुरुः शिष्यं रात्रिं जागरयति अतएव द्विकर्मकोदाहरणे अनन्तेन गोपी रजनीमजागरीदिति स्वयं वक्ष्यति। एवं अधिशीङादेरधिकरणस्य कर्मत्वेऽपि स्यात्। तेन राजानो यौगिकं देशमधिष्ठापयतीति क्रमदीश्वरः। त्रिवर्गपारीणमसौ भवन्तमध्यासयन्नासनमेकमिन्द्र इति भट्टिः। एवं सकर्मकाणामकर्मत्वेऽञान्तकर्त्तुः सुतरां कर्मत्वम्। यथा शत्रुराहते पीड़ितो भवति शूरः शत्रुमाघातयतीत्यादि। अन्यत्रापि देवदत्तं शतं ज्ञापयति। मुक्ताजालं चिरपरिचितं त्याजितो दैवगत्या। त्याजितैः फलमुत्खातैर्भग्नैश्च बहुधा नृपैरिति रघुः। क्षावमाप्रापयदासीदम। लोकमीचयते रूपमित्यादि॥ २८४॥

श्रीरा टी—नञि: अञिस्तस्मिन्। शब्दश्च अशनञ्च गतिश्च ज्ञाश्च ते अर्था येषां ते। नास्ति टं कर्म येषां ते। शब्दाशनगतिज्ञार्थाश्च अटाश्च ग्रहश्च दृशश्च श्रुश्च तत्तस्य पुस्त्वं क्लीवत्वात्। नास्ति सतघो यस्य सः सचासौ वहश्चेति सः। न हिंसा अहिंसा तस्यां भक्षः सः खादश्च नीश्च क्रन्दश्च अयश्च शब्दायश्च ह्रश्च अदश्च असूतघ वहश्च अहिंसा भक्षश्च तत् न तत् अखादनी क्रन्दाय शब्दाय ह्रादासूतघवहाहिंसा भक्षः तस्य। अभेर्वादिः सः अभिवादिश्च दृक् च तौ मे आत्मनेपदे तौ दृश्च क्रश्च माभिवादि दृशौच तत्तस्य। शब्दार्था उच्चारणार्थाः शब्दढा धवः इति यावत्। तथा पुत्रं सूत्रं पाठयति शिष्यं शास्त्रं वाचयतीत्यादि। अशनार्था भक्षणार्था यथा आशयति विप्रमन्नं पाययति पान्थं जलमित्यादि। प्रीतोऽहं भोजयिष्यामि भवतीं भुवनत्रयं इत्यादौ गौणे भोजनार्थत्वात् ढत्वम्। गत्यर्था गमनार्थाः यथा गां व्रजं गमयत्यजः इत्यादि। प्रवेशारोहणतरण प्रापणाद्या अपि गत्यर्थास्तेन प्रावेशयन्मन्दिरमध्यमेनम्। तामङ्गमा-

स्वाभिवादयते वृद्धान् जानकीं लक्ष्मणेन च।
सीतां रामेण चात्मानमदर्शयत लक्ष्मणः॥

---

वीक्ष्य सुतां प्रतस्थे प्रियामुदन्वन्तमतीतरद्धरिः। ननु मां प्रापय भर्तुरन्तिकं रावणं गमय प्रीतिमित्यादीत्येके। तन्मते सितं सितिम्ना सुतरां मुनेर्वपुर्विसारिभिः सौधमिवाथ लम्भयन्। द्विजावलीव्याजनिशाकरांशुभिः शुचिस्मितां वाचमवोचदच्युतः इति तु अपवादविषयेऽप्युत्सर्गस्य निवेशात्। अन्ये तु प्रावेशयदित्यादिषु उपसर्जनीभूतध्वर्थो गतिः प्रतीयते इत्याहुः। ज्ञानार्था यथा बोधयति शिष्यं धर्मम्। ज्ञापयति नृपं हिताहितम्। घ्रापयति जायां पुष्पम्। स्पर्शयति गात्रं कामिनीमित्यादि। अद्धाः सत्ताद्यर्थाः यथा आसयति सुतं शाययति पतिमित्यादि मृदु शाययति सुतं मासमधिशाययति पतिमित्यादौ औपाधिकसद्धत्वेऽपि स्वभावासिद्धाद्धत्वमादाय अजान्तघस्य द्धत्वमिति। धूनां सद्धत्वव्यवहारो हि कर्त्तुः क्रियाव्याप्यद्धेनैव। अन्यथा शीघ्रं भूयते इत्यादावपि द्धे त्यः स्यात्। तथाच त्रिवर्गपारीणमसौ भवन्तमध्यासयन्नासनमेकमिन्द्रः। विवेकाद्दृश्यत्वमगात् सुराणां तं मैथिलो वाक्यमिदं बभाषे॥ एवं विप्रो मैत्रं चैत्रं संक्रोधयति इत्यादि। अर्चेर्दर्शयते हरिर्हरिणेत्यत्र न स्यात् वाशब्दस्य व्यवस्थया धपचेऽपि सद्धत्वातिदेशात्। परे तु ग्रहधुं न गृह्णन्ति। अयन्तु अजिग्रहत् तं जनकी धनुस्तत् येनार्दिदत् दैत्यपुरं पिनाकी। जिज्ञासमानो बलमस्य बाह्वोर्हसन्नभाङ्चीद्रघुनन्दनस्तत्। अयाचितारं न हि देवदेवमद्रिः सुतां ग्राहयितुं शशाक समर्थो न बभूव इत्यादि प्रयोगात् गृहीतवान्। अत्र ज्ञानार्थत्वेनैव दृशः सिद्धे ग्रहणाद्दर्शनार्थत्वेऽपि स्यात् तेन प्रियं प्रीतिं दर्शयति प्रकाशयतीत्यर्थः। एवं ज्ञानार्थत्वेऽपि शीर्ग्रहणं क्वचिदन्यत्रापीति ज्ञापनार्थम्। तेन पुरुहूतद्विषो धुर्षु युक्तान् यानस्य वाजिनः। आयूंषि लत्तु निर्भिद्य प्राभञ्जनिरमोचयदिति भट्टिः। शूरसेनं पौरुषं त्याजयति। मुक्ताजालं चिरपरिचितं त्याजितो दैवगत्या। देवदत्तं शतं दापयतीत्यादि स्यात्। अत्र खादवद्घाहिंसार्थभक्षामशनार्थतयान्यया सूतघवद्घां गत्यर्थतया क्रन्दशब्दायह्वामद्धतया प्राप्ते निषेधः। ह्वञोऽव्यवहारार्थतया क्रञोद्धाविवक्षया दृशश्च नित्ये प्राप्ते अभिवादयतेरप्राप्ते विकल्पः। क्रञः सेयादौ क्रञः सद्धत्वादप्राप्ते ह्वञःसेयां श्रौ क्रञः सद्धत्वादप्राप्ते विभाषेति भाष्यम्। गेयमध्यापयदित्यादि। गोपा गेयं अध्यैयरन् तान् गोपान् गेयं अध्यापयत्। गोपा याज्ञिकान्नं अभुञ्जत गोपान् याज्ञिकान्नं

अर्भोजयत्। ग्रुचव: स्वधामागच्छन् ग्रचून् स्वधामागमयत् ग्रस्त्रपूतान् कृत्वा स्वस्य धाम स्थानं गन्तुं प्रेरितवान् इत्यर्थ:। भक्तास्तत्त्वं अबुध्यन्त भक्तान् तत्त्वं अबोधयत् परमात्मानं बोधितवान् इत्यर्थ:। धर्मोऽतिष्ठत् धर्मं अस्थापयत्। अनेन कर्मणा धर्मस्तिष्ठतीति लोकग्निचादिना धर्मं स्थापितवान् इत्यर्थ:। विधिर्वेदानग्टह्णात् विधिं वेदानग्राहयत् ब्रह्माणं वेदबोधितं कर्म कर्त्तुं प्रेरितवान् इत्यर्थ:। दैत्या: ग्रक्तिमपश्यन् दैत्यान् ग्रक्तिं अदर्शयत् स्वां ग्रक्तिं प्रकाशयितुं प्रेरितवान् इत्यर्थ:। गावो वेणुमश्टखन् गा: वेणुमश्रावयत् वेणुग्रब्दश्रवणमकारयदित्यर्थ:। विष्णुरिति सर्वत्र प्रयोजकघ:। खादादयस्त्विति कपयो रचांसि खादन् कपिभीरचांस्यखादयत् भोक्तुं प्रेरितवान् इत्यर्थ:। कपय: ऊर्द्ध लोकमनयन् कपिभिरूर्द्ध लोकं अनाययत् लोकान्तरमगमयदित्यर्थ:। कपय: आक्रन्दन् कपिभिराक्रन्दयत् रोदनं कारितवान् इत्यर्थ:। कपयो रचांसि आयन्त कपिभीरचांस्याययत् प्रापितवानित्यर्थ:। कपय: ग्रब्दायन्ते कपिभि: ग्रब्दाययन् राम इत्यस्य विशेषणं सिंहनादं कारितवान् इत्यर्थ:। कपयोऽह्वन् कपिभिरजूहवत् अर्थाद्रिपुभि: सार्द्धं स्पर्द्धां कारितवान् इत्यर्थ:। कपयो रिपुमादन् कपिभीरिपुमादयत् भोक्तुं प्रेरितवान् इत्यर्थ:। कपय: शैलानवहन् कपिभि: शैलानवाहयत् आनायितवान् इत्यर्थ:। कपय: इष्टभच्यं अभचन् कपिभिरिष्टभच्यमभचयत् अभिलषितं वस्तु खादयामास इत्यर्थ:। सर्वत्र राम: प्रयोजक घ:। वाहा: पार्थमवहन् वाहान् पार्थमवाहयत् अर्जुनं वोढुं अश्वान् प्रेरितवान् इत्यर्थ:। हरे: सारथ्यकर्मकर्तृत्वात् ढत्वम्। वाहा अरीन् अभचन् वाहान् अरीन् अभचयत् खादयामास इत्यर्थ:। अत्र भचधोर्हिंसार्थत्वात् घस्य ढत्वं उभयत्र हरि: प्रयोजकघ:। कीशा: शैलान् अवहन् कीशान् शैलान् अवाहयत् आनेतुं प्रेरितवान् इत्यर्थ:। ऋचा वृचान् अहार्षु: ऋचैर्वृचान् अजीहरत् उदाहरणद्वयेन विकल्पो दर्शित:। कपय: सेतुं अकुर्वन् कपीन् सेतुमकारयत् वानरा: सेतुमकुर्वन् वानरै: सेतुमकारयत् उदाहरणद्वयेन विकल्पो दर्शित:। जानकी वृद्धानभिवादयतिस्म जानकीं वृद्धानभिवादयतेस्म लक्ष्मणो वृद्धानभिवादयतिस्म लक्ष्मणेन वृद्धानभिवादयतेस्म नमस्कर्त्तुं प्रेरितवान् इत्यर्थ:। अभिपूर्व-इक वाक्सन्देशयोरित्यर्थ: तस्मात् प्रेरणे जि: पदद्वयेन विकल्पो दर्शित:। सर्वत्र राघव: प्रयोजक घ:। सीता रामस्य लक्ष्मणं अपश्यत् स लक्ष्मणं सीतां रामेण आत्मानं अदर्शयत जेर्द्दृऽजौ घे इति मम्। एषामिति किं पाचयत्योदनं सूदेन गटहीत्यादि। परे तु गौणे क्रियापेचया घत्वे मुख्यक्रियाव्याप्यत्वेन ढत्वे सिद्धे नियमार्थमिदर्मिति ब्रुवन्त: पाचयत्योदनं सूदं सूदेन गटही वदियहणं प्रपञ्चार्थमित्याहु:। अन्ये तु उभयप्राप्तौ परत्वात् घत्वे प्राप्ते विपर्य्यमित्याहु:॥ २८४॥

२८५।—

**याच्ञार्थ दुह चि प्रच्छ रुध् ब्रू शास जी नी वहः।**
**हृ दण्डि ग्रह कृष् मन्थ मुष् पचाद्या धवो द्विढ़ाः॥**

याच्ञार्थ—वहः १।।।, हृ—पचाद्याः धवः १।।।, द्विढाः १।।।।

तमर्थयेऽहं मोचं यो गोपैर्दुग्धमदुग्ध गाः।
फलान्यवाचिनोद्वृक्षान्, वार्त्ताः पप्रच्छ वल्लवान्॥
रुरोध गोकुलं गोपीरब्रवीच्च मनोहरम्।
गोपालानन्वशात् केलीं-स्तत्राजय्यं जिगाय तान्॥

---

एषां क्रिया स्वभावादुभयात्मिका अत एते द्विकर्मका इति श्रीपतिदत्तः। तेषां संग्रहार्थोऽयं श्लोकः। याच्ञा अर्थो येषां ते याच्ञार्थाः। ते च अर्थत् कङ चिच्छिङ नाथृङ प्रभृतयः। याच्ञार्थाश्च दुहश्च चिश्च प्रच्छश्च रुधश्च ब्रूश्च शास च जिश्च नीश्च वहश्च ते याच्ञार्थदुहचिप्रच्छरुध ब्रूशासजिनीवहः। पृथक्-पदकरणं श्लोकार्द्धत्वाद्विरामार्थम्। हृश्च दण्डिश्च ग्रहश्च कृषच मन्थच मुषच पचाद्याश्च ते हृ दण्डि ग्रह कृष मन्थ मुष पचाद्याः। द्वे द्वे कर्मणी येषां ते द्विढ़ाः। एते धातवः स्वभावाद्विकर्मका भवन्तीत्यर्थः। तमर्थये इत्यादि—अहं तं श्रीकृष्णं अर्थये अर्थत्कङ याचने यो गोपैः सह गा दुग्धं अदुग्ध। दुहलञौ दुहि। यो वृक्षान् फलानि अवाचिनोत् चिन चिञ चित्याम्। यो वल्लवान् गोपान् वार्त्ताः पप्रच्छ प्रच्छीश ज्ञीप्से। यो गोपीः गोकुलं रुरोध गोपीहेतुकं गोकुल-मावृणोदित्यर्थः। रुधिरीञ ञ्रावृतौ। यो गोपीः मनोहरं मधुरवाक्यञ्च अब्रवीत्। ब्रूलञुक्तौ। यो गोपालान् केलीन् अन्वशात् शासत्ञ्, शासने। यस्तत्र केलौ अजय्यं युद्धं गृहीत्वा तान् गोपान् जिगाय जि जये च। यो वृन्दावनं गा अनेषीत् नीञ प्रापणे। यस्तस्मिन् गोशिशून् व्रजं अवहत्। वहीञौ प्रापणे। य आभीरीरम्बरं जहार निनायेत्यर्थः हृञ हृत्याम्। यो दैत्यान् प्राणानदण्डयत् दण्डत् क तत्कृतौ। दैत्यानां प्राणग्रहणरूपं दण्डमकरोदित्यर्थः। यो यज्वनो भाज्यमन्नं जग्राह ग ग्रह ञ भादाने। यः पूतनां बलमकर्षत् कृषौ आकर्षणे पूतनां विकृष्य बलमनयदित्यर्थः। योऽम्भोधिम् अमृतं ममन्थ ग मन्थ गाहे अम्भोधि-मुन्मथ्य अमृतमुत्थापयामासेत्यर्थः। यस्तदमृतं दितिजान् मुमोष मुष ग वञ्चने अमृतमपहृत्य दितिजान् खण्डितवानित्यर्थः। योऽसौ लोकानां पुण्यपापं सुखासुखं

वृन्दावनमनैषीद्गाः-स्तच्छिशूनवहद्व्रजम्।
जहारारण्यमाभीरो-र्दैत्यान् प्राणानदण्डयत्॥
जग्राह यज्वनो भोज्य-मकर्षत् पूतनां बलम्।
ममन्थामृतमम्भोधिं मुमोष दितिजांश्च तत्।
यऽसौ पचति लोकानां पुण्यपापं सुखासुखम्॥

---

पचति डुञौ ञ पच पाके पुण्यं सुखं करोति पापं असुखं करोतीत्यर्थः। आद्यशब्दात् हिनु वर्द्धने गतौ गुरुः शिष्यं ग्रामं प्रहिणोतीत्यादि। शिवं वरं वृणोतीत्यादौ वरणस्यापि याच्ञाविशेषत्वात्। पुत्रमध्ययनं याचते इत्यादाव-ध्ययनमपि याच्ञाविशेषः। जौमरास्तु ब्रू इत्यत्र ब्रवीत्यर्थं गृहीत्वा गदभाषे वदै वाचीत्यादीनामपि ग्रहणमाहुः। तण्डुलानोदनं पचति वृक्षं नौकां करोतीत्यादि एकमेव कर्म प्रकृतिविकृतिभेदेन भिन्नं सुवर्णं कुण्डलं करोतीत्यादिवत्॥ २८५॥

श्रीराटी—याच्ञा अर्थो येषां ते पच आद्यो येषां ते पचाद्याः पश्चात् द्वन्द्वः द्वे ढे येषां ते। कर्त्तुः क्रियाव्याप्यत्वात् मोचादीनां ढत्वं सिद्धं अनेन तु मोचादिहेतूनां कृष्णादीनां ढत्वं विधीयते। तमर्थयेऽहमित्यादि। यः श्रीकृष्णः गोपैः सह दोहनादिकं कृतवान् तमहं मोचमर्थये इत्यन्वयः। शम्भुं वरं मृगयते देवान् वरं वृणीते इत्यादौ तु मृगिवृञोर्याच्ञार्थत्वात्। यो गोपैर्गा दुग्धमदुग्ध। यो वृक्षान् फलानि अवाचिनोत् वृक्षान् संघट्टयन्नाददे इत्यर्थः। यो बल्लवान् वार्त्ताः पप्रच्छ जिज्ञास्यमभिधातुं प्रेरितवान् इत्यर्थः। गोपीर्गोकुलं रुरोध गोपी-रन्तःस्थापयन् गोकुलमावृणोदित्यर्थः। यो गोपीर्नोहरं अब्रवीत् प्रबोधवाक्यं कथितवान् इत्यर्थः। यो गोपालान् केलीनन्वशात् केलीं देशयन् विनीतवान् इत्यर्थः। यस्तान् गोपालान् अजय्यं जेतुं अशक्यं युद्धं तत्र केलिविषये जिगाय अजय्यं युद्धं स्वीकृत्य जितवान् इत्यर्थः। यो गाः वृन्दावनं अनैषीत् प्रापयामास। यो व्रजं तच्छिशून् गोवत्सानवहत् नीतवान् इत्यर्थः। य आभीरीररण्यं जहार गोपीररण्यं प्रापयामास इत्यर्थः। यो दैत्यान् प्राणान् अदण्डयत् प्राणान् गृहीत्वा शशास इत्यर्थः। यो यज्वनो भोज्यं जग्राह स्वीकृतवानित्यर्थः। यः पूतनां बलं अकर्षत् विकृष्य बलं निनाय। योऽम्भोधिममृतं ममन्थ समुद्रमुन्मथ्यामृत-मुत्थापितवान् इत्यर्थः। यो दितिजान् दैत्यान् तदमृतं मुमोष खण्डितवानित्यर्थः। यो लोकानां पुण्यं पापं सुखासुखं पचति लोकानां पुण्यं सुखं पचति लोकानां

२८६। धिक् समया निकषा हान्तरान्तरेणैनाति येन तेनाभ्युभय परि सर्वतो विनर्त्तेऽभि परिप्रत्यनूपह्युपर्य्यधोऽधिभिः।

धिक्—ऽधिभिः ३॥।

एभिर्योगे द्वी स्यात्।

वीप्सेत्थम्भावविह्नेऽभिस्तेषु भागे परिप्रती।

अनुस्तेषु सहार्थे च हीनेऽनूपौ मताविह॥

---

पापं असुखं पचति परिणमयतीत्यर्थः। तण्डुलानोदनं पचति इत्यादौ तु प्रकृतिविकारभावेनैकमेव ढं तेन तण्डुला ओदनं पच्यन्ते इत्यत्र यथेष्टं द्विढधुक्षित्यनेन न गौणमुख्यव्यवहारः एवं ढादिविहितत्वेन प्रकृतेरेव संख्या गृह्यते। यदुक्तं, विकारभावे प्रकृतेरेकं कर्म यतस्ततः। द्विकर्मक व्यवस्थातो न प्रत्यययथेष्टता। प्रकृतेर्विकृतेवापि यत्र चोक्तं द्वयोरपि। वाचकः प्रकृतेः संख्या गृह्णाति विकृतेर्नतु इति। एवं एको वृक्षः पञ्च नौका भवतीत्यादि। वाद्यशब्देन शिष्यं धर्मं वदति जायां प्रियमाचष्टे सुतं वाचो जगाद राजानं हितमुपदिशति। कुङ्कुमवस्थानं याचते अवस्थातुमनुनयतीत्यर्थः। केचित् वदत्यर्थं गृह्णन्ति। इह यद्यपि न्यादौ मन्थधुः पठितस्तथापि गौणढत्वविधाय याचादौ द्रष्टव्यः। तथाच देवासुरैरमृतमम्बुनिधिर्मम्न्थे इति भारविः। तत्र न्यादौ निवहकृञामेव पाठ इति परे॥ २८५॥

धिङ्निर्भत्सननिन्दयोरित्यमरः। समयान्तिकमध्ययोरित्यमरः। निकषा शब्दोऽप्यन्तिक वाची। अन्तराशब्दो मध्यवाची। अन्तरेण विना ऋते इति त्रयो व्यतिरेकवाचिनः। पृथग्विनान्तरेणर्त्ते हिरुङ्नाना च वर्जने इत्यमरात्। एन इति वैनोऽपौत्यनेन दिक्शब्दाद्दृगद्दृश्यार्थे प्रथमासप्तम्योः स्थाने एनादेशः तेन तदन्तानां दक्षिणेन इत्यादीनां ग्रहणम्। येन तेनादिसाहचर्य्यात् अतिशब्द इहाप्यनुपसर्ग एव। तेन अत्यतिक्रमार्थस्यैव ग्रहणम्। येनेति अव्ययप्रतिरूपकं यादृगर्थम्। तेन इति अव्ययप्रतिरूपकं तादृगर्थम्। अभिश्च उभयश्च परिश्च सर्वश्च अभ्युभयपरिसर्वे तेभ्यस्तस् अभ्युभयपरिसर्वतः। अभितः उभयतः परितः सर्वतः। अभित इति सामीप्यादौ समीपोभयतः शीघ्रसाकल्याभिमुख्येऽभित इत्यमरात्। उभयत

धिग् लोकमीश्वराभक्तं, समया माधवं रमा ।
निकषा गिरिशं गौरी, हा लोकं केशवद्विषम् ॥
कृष्णोऽन्तरा ब्रह्मशम्भू, नान्तरेणाच्युतं सुखम् ।
दक्षिणेन हरिं रुद्रो, गोविन्दमति नेश्वरः ॥
येनेशं हरिरीशस्तं तेनेशमभितोऽर्चकाः ।
रामकृष्णावुभयतो गोपेशं परितः परे ॥

---

इति स्वभावार्थम् । परितः सर्वत इति द्वयं समन्तादर्थे समन्ततस्तु परितः सर्वतो विश्वगित्यमरात् उपरिश्च अधस्च अधिश्च उपर्य्यधोऽधयः । द्वयोर्द्विरुक्ताश्च ते उपर्य्यधोऽधयश्चेति द्व्युपर्य्यधोऽधयः उपर्य्युपरि अधोऽधः अध्यधि इत्यर्थः । ततो धिक्च समयाश्च निकषाश्च हाश्च अन्तराश्च अन्तरेणश्च एनश्च अतिश्च येनश्च तेनश्च अभ्युभयपरिसर्वतश्च विनाश्च ऋतेश्च अभिश्च परिश्च प्रतिश्च अनुश्च उपश्च द्व्युपर्य्यधोऽधयश्च ते । धिक् समयानिकषाहान्तरान्तरेणेनाति येन तेनाभ्युभयपरिसर्वतोविनर्त्तेऽभिपरि प्रत्यनूपद्व्युपर्य्यधोऽधयः तैः । एभिर्योगे द्वितीया स्यात् । योगस्त्विह अर्थेनैव न तु शब्देन तेन धिङ्लोके तव वन्धुतामिति । धिक् तव धियं यस्त्वां पुनः पश्यसीत्यादि च सिद्धम् । अत अभिपरि प्रत्यनूपानामर्थविशेष एव ग्रहणमित्याह वीप्सेत्थमित्यादि । इह द्वितीयाविधानो अभि वीप्सेत्थम्भावचिह्ने मतः । परिप्रती तेषु वीप्सेत्थम्भावचिह्नेषु भागे च मतौ । अनुस्तेषु वीप्सेत्थम्भावचिह्नभागेषु सहार्थे च मतः । अनूपौ हीने मतावित्यन्वयः । वीप्सा क्रियागुणद्रव्यैर्युगपद्व्याप्तुमिच्छा । इत्थम्भावः कस्यचित् प्रकारस्यापत्तिः । चिह्नं लक्षणम् । अभ्यादीनामिह विना ऋते इत्यादि साहचर्य्यात् वीप्सादिवाचकत्वाच्च अनुपसर्गत्वमेव । धिक् लोकमित्यादि । ईश्वराभक्तं लोकं धिक् स निन्द्य इत्यर्थः । रमा लक्ष्मीः माधवं समया माधवस्य समीपे इत्यर्थः । गौरी गिरिशं निकषा गिरिशस्य समीपे इत्यर्थः केशवं द्वेष्टीति केशवद्विट् तं हा स विषादार्हः शोकार्हो वेत्यर्थः । हा विषादशुगर्त्तिषु इत्यमरः । शुक् शोकः अर्त्तिः पीड़ा । हाशब्देन योगे विषादयोग्यात् शोकयोग्याद्वा लिङ्गात् द्वितीया । यत्र तु आत्मनः पीड़ायां हाशब्दः प्रयुज्यते अत्रान्यस्य पीड़ायोग्यत्वासम्भवात्तेन योगे द्वितीया न स्यात् । तेन हा तातेति क्रन्दितमाकर्ण्य विषस्र इत्यादि रघुः । हा राम हा रमण हा जगदेकवीर हा नाथ हा रघुपते किमुपेक्ष्यसे मामिति महानाटकम् । इत्यादौ

प्रमथाः सर्व्वतः शर्व्वं, शर्म्म नेशार्च्चनं विना ।
मुक्ति र्नर्त्ते ऽच्युतोपास्तिं, भूतं भूतमभि प्रभुः ॥
भक्तोविभुमभि, प्राज्ञो गोविन्दमभि तिष्ठति ।
हरिं पर्य्यभवल्लक्ष्मी, हरं प्रति हलाहलम् ॥

---

सम्बोधने प्रथमैव । कृष्णो ब्रह्मशम्भू अन्तरा ब्रह्मशम्भोर्मध्ये इत्यर्थः अच्युतमन्तरेण सुखं न स्यात् इत्यर्थः । रुद्रो हरिं दक्षिणेन हरेरदूरदक्षिणे इत्यर्थः । गोविन्दमिति ईश्वरो न गोविन्दस्यातिक्रमिता ईश्वरो नास्तीत्यर्थः । हरिरीशं येन ईशस्तं हरिं तेन हरिरीशस्य यादृश ईशोऽपि तस्य तादृश इत्यर्थः । अर्च्चका ईशम् अभितः ईशस्य समीपे उभयतो वा इत्यर्थः । रामकृष्णौ गोपेशं नन्दम् उभयतः गोपेशस्य उभयोः पार्श्वयोरित्यर्थः । परेऽन्ये गोपबालका गोपेशं परितः गोपेशस्य सर्व्वासु दिक्षु इत्यर्थः । प्रमथा शिवगणाः शर्व्वं शिवं सर्व्वतः शिवस्य सर्व्वासु दिक्षु इत्यर्थः । ईशार्च्चनं विना शर्म्म सुखं न स्यादित्यर्थः । अच्युतोपास्तिं विष्णूपासनां ऋते मुक्तिर्न स्यादित्यर्थः । प्रभुरीश्वरः भूतं भूतमभि सर्व्वप्राणिषु अस्तीत्यर्थः । वीप्सायां प्रयुज्यमानस्य पदस्य द्विर्भावो लिधुपादे वक्तव्यः । जनो भक्तो विभुमभि विभौ विषये भक्तिभावापन्नः । एवं साधुर्व्विप्रो मातरमभीति क्रमदीश्वरः । विप्रो मातरि विषये साधुभावापन्न इत्यर्थः इति गोयीचन्द्रः । प्राज्ञो गोविन्दं अभिलक्षीकृत्य तिष्ठति । समुद्रे मथिते लक्ष्मीः हरिं परि हरेर्भागेऽभवदित्यर्थः । एवं हलाहलं विषं हरं प्रति हरस्य भागेऽभवदित्यर्थः । एवं वीप्सादौ भूतं भूतं परि प्रभुः । भक्तो विभुं परि प्राज्ञो गोविन्दं परि तिष्ठति भूतं भूतं प्रति प्रभुः भक्तोविभुं प्रति प्राज्ञो गोविन्दं प्रति तिष्ठति । भर्गः शिवः विष्णुमनु विष्णुना सह अर्च्च्यते । एवं वीप्सादौ भूतं भूतमनु प्रभुः भक्तो विभुमनु प्राज्ञो गोविन्दमनुतिष्ठति । हरिं पर्य्यभवल्लक्ष्मीरिति । शक्रादयो देवा अच्युतमुप अच्युतात् हीना इत्यर्थः । एवं शक्रादयः अन्वच्युतमिति बोध्यम् । उपर्य्यधोऽधीनां सामीप्ये द्वित्वं लिधुपादे वक्तव्यम । माधवः लोकानुपर्य्युपरि लोकानामुपरि समीपे आस्ते एवं लोकानधोऽधः । लोक[…]ामधः समीपे आस्ते एवञ्च लोकानां समीपे च आस्ते एवञ्च लोकानामध्यधि […]कानां समीपे च आस्ते इत्यर्थः । उपर्य्युपरि बुद्धीनां चरन्तीश्वरबुद्धयः अत्र उप[…] बुद्धीनां श्रेष्ठबुद्धीनामुपरि चरन्तीत्यर्थः । समाहारद्वन्द्वे उपर्य्यधोऽधि इत्यनेनैवेष्टसिद्धौ उपर्य्यधोऽधिभिरिति बहुवचननिर्द्देशोऽन्यैरपि योगे द्वितीया स्यादित्यर्थः । तेन व्याप्तिसीमार्थेन यावता योगे द्वितीया स्यात् ।

विष्णुमन्वर्च्यते भर्गः, शक्रादय उपाच्युतम् ।
लोकानुपर्य्युपर्य्यास्ते ऽधोऽधो ऽध्यधिच माधवः ॥

---

यथा रथ्यां यावत् दृष्टो देवः । नदीं यावदरण्यानी । व्याप्तिसीमार्थेनेति किं यावद्दत्ते हृदि प्राणास्तावदाशा विवर्द्धते । सीमार्थेन यावता पञ्चमी चेति केचित् । ग्रामाद् यावदहं वोढ़ाः । सोपसर्गयोः क्रुधिद्रुहोः सम्प्रदानं कर्म स्यादिति वक्तव्यं पुत्त्रमभिक्रुध्यति । शत्रुमभिद्रुह्यति पुत्त्राऽभिक्रुध्यते शत्रुरभिद्रुह्यते पुत्त्रस्याति-क्रोद्धा शत्रोरभिद्रोढ़ा । क्रुधिद्रुहोः किं ? पुत्त्राय प्रकुप्यति सोपसर्गयोः किं ? पुत्त्राय क्रुध्यति शत्रवे द्रुह्यति ॥ २८६ ॥

श्रीरा-टी—अभिश्च उभयश्च परिश्च सर्वश्च ते तेभ्यस्तस् उपरिश्च अधश्च अधिश्च ते द्वयश्च ते उपर्य्यधोऽधयश्चेति ते । पश्चात् द्वन्द्वः । धिक्निर्भर्त्सन निन्दयोः । समयानिकषौ समीपार्थौ । हा विषादशुगर्त्तिषु । अन्तरामध्यार्थः । अन्तरेणर्त्ते विना व्यतिरेकार्थः । एनेति वैनोपीत्यनेन विहितैनन्त्यान्तः । अति-रतिक्रमार्थः । येन तेनौ याद्दृगताद्दृगर्थौ । अभित इत्यादयस्तसन्ताः । उपर्य्यु-परीत्यादयो द्विरुक्ताः अन्येषामर्थविशेषमाह । वीप्सा इत्यादि । द्रव्यगुणक्रिया-भिर्युगपत् प्रयोक्तुर्व्याप्तुमिच्छा वीप्सा कस्यचित् प्रकारस्यापत्तिरित्थम्भावः । चिह्नं लक्षणं तेषु वीप्सादिषु भागे च परिप्रती । अनुस्तेषु वीप्सादिषु तुर्य्यर्थेषु सहार्थे च चकारोऽनुक्त समुच्चयार्थस्तेन हेतावपि यथा कावेरीमनुवर्षति कन्यामनु शोक इत्यादि । धिक् लोक इत्यादि । ईश्वराभक्तं लोकं धिक् ईश्वराभक्तस्य सर्वत्र निन्दादिकं भवतीत्यर्थः । माधवस्य समीपे रमा लक्ष्मीः । गिरिशस्य समीपे गौरी दुर्गा । केशव द्विषं लोकं हा केशवस्य द्विषो लोकस्य शोकपीड़ा सर्व्वदैव इत्यर्थः । ब्रह्मशिवयोर्मध्ये कृष्णः अच्युतमन्तरेण कृष्णपूजा व्यतिरेकेण सुखं न भवतीत्यर्थः । हरेरदूरदक्षिणेन रुद्रः । गोविन्दस्यातिक्रमिता न ईश्वरः ईशं येन हरिः ईशस्य याद्दृशो हरिः उपास्यः तं हरिं तेन हरेस्ताद्दृग् उपास्यः ईशः । एतेनाभिन्नावित्यर्थः । ईशमभितोऽर्चकाः शिवस्य सर्वत्र पूजका इत्यर्थः । रामकृष्णावुभयतो रामकृष्णयोरुभये पार्श्वेऽर्चकाः । गोपेशं परितः गोपेशस्य इतस्ततः परेऽर्चकाः । सर्वं सर्वतः सर्वस्य इतस्ततः प्रमथाः प्रमथगणाः । ईशा-र्चनव्यतिरेकेण कल्याणं न भवतीत्यर्थः । अच्युतस्योपासनां विना मुक्तिर्न भवती-त्यर्थः । सोऽच्युतो भूतं भूतं सर्वभूतानां प्रभुरित्यर्थः । भक्तो विभुं अभि विभो-र्भक्तः जनः कश्चित् प्रकारमापन्नः गोविन्दं लक्षीकृत्य प्राज्ञस्तिष्ठति अभेरुदाह-रणवत्रेण परिप्रत्योरपि ज्ञेयम् । भागे उदाहरति । हरेर्भागे लक्ष्मीरभवत् ।

## २८७। दिवो धं वा।

दिव: ६।, धं १।, वा ।१।।

**दिवो धं ढं स्यात् वा। अक्षै रत्नान् वा दीव्यतीशः।**

---

हरस्य भागे हलाहलं विषं अभवत्। एवं वीप्सादिषु अनोर्ज्ञेयम्। सहार्थे तु विष्णुमनु विष्णुना सह भर्गोऽर्च्यते अर्थात् सङ्गि:। अच्युतमुप अच्युताद्धीना: शक्रादय:। एवमच्युतमनु शक्रादय इति। लोकानुपर्य्युपरि निकटे माधव आस्ते अधोऽध: समीपे माधव आस्ते अध्यधि इतस्तत: आस्ते। इह समीपार्थे द्विर्वचनात् नेह उपर्य्युपरि बुद्धीनां चरन्तीश्वरबुद्धय: अतिदूरे उपचरन्तीत्यर्थ:। यद्वा उपरिबुद्धीनामुपरि ईश्वरबुद्धयश्चरन्तीत्यर्थ:। पूर्वविप्रतिषेधेन प्रबोधितत्वात् सम्बोधनार्थद्योतकत्वाद्वा ह। तातेति क्रन्दितमाकर्ण्य विषण्ण:। हा पित: क्वासि हे सुभ्रु वह्वेवं विललाप स इत्यादौ सम्बोधने मा भूत्। शाखिभिर्हा हता भूवो हृदयानामुदेजयै: इति तु उपपदविभक्ते: कारकविभक्तिर्बलीयसीति न्यायात्। यावता मर्य्यादाभिविध्यो: नदीं यावदरण्यानी। रथ्यां यावत् दृष्टो देव इत्यादि। अनयो: किं यावदेते हृदि प्राणास्तावदाशा विवर्द्धते॥ २८६॥

वा शब्दोऽत्र व्यवस्थावाची व्यवस्था चेयं दीव्यते: करणं नित्यं कर्मसंज्ञं स्यात् पक्षे प्राग्भूतकरणत्वात् तृतीयैवेत्यर्थ:। तेनास्य सकर्मकत्वात् ईशेन अक्षा दीव्यन्ते इति कर्मणि प्रत्यय:। ईशेन अक्षा द्यूता इति कर्मणि क्त:। पार्वती ईशेन अक्षै रत्नान् वा देवयति अत्र अजान्तकर्त्तु: कर्मत्वं न स्यात्। ईशोऽक्षाणां देविता इति कृद्योगे षष्ठी नित्यैव। न च तेनादुद्यूषयद्रामं मृगेण मृगलोचना इति भट्टौ अजान्तकर्त्तु: रामस्य कर्मत्वं कथमिति वाच्यम्। यतस्तेनेति दुद्यूषेरेव करणं नतु दीव्यतेरिति। स्वेच्छया दुद्यूषन्तं रामं मैथिली तेन मृगेण प्रेरितवतीत्येवार्थ:। ततश्च दीव्यते: करणाभावादकर्मकत्वे जान्तकर्त्तु: रामस्य कर्मत्वमिति॥ २८७॥

श्रीरा-टी—दिव: क्रीड़ार्थस्यैव ग्रहणम्। दिवो धं ढं स्याद्वा। वाशब्दस्य व्यवस्थया धपक्षेऽपि सढत्वादिदेशात् अढलक्षणं कार्य्यं न स्यात् तेन अक्षा दिव्यन्ते अक्षै: देवयते छात्रेण गुरु:। अक्षाणां देवक: अक्षाणां देवता इत्यादय एव स्यु:। ननु अक्षैर्देवयते छात्रं गुरु: अक्षैर्देवक: अक्षैर्देविता इत्यादय: स्यु: सदैव सढत्वात्। एवं मनसा देवीति ढात्षष्ठ इत्याहु: परे। वस्तुतस्तु पद्यादनि नद्यादित्वात् ईपिसंज्ञायां वश्च न लुक् इति तेनादुद्यूषयद्रामं मृगेण मृग-

## २८८। साधन-हेतु-विशेषण-भेदकं धं कर्त्ता घ स्त्री।

साधन—भेदकं १।, धं १।, कर्त्ता १।, घः १।, स्त्री।१।।

**नेत्रैः पुण्येन भूषाभि र्नाम्ना दृष्टः शिवो जनैः।**

---

लोचना इत्यत्र तेनेति दिवी धं न किन्तु दव्यूषेरिति। अन्ये तु अचेर्देवक इत्यत्र वा पीत्याहुः। इदं सूत्रं धिक्समयेत्यन्तरम् इत्येके तन्मते मरुत्करत्वा ढमन्वर्त्त इत्येवं व्याख्या। गेः क्रुधद्रुहोर्भम्। गेः परयोरनयोर्भं ढसंज्ञं स्यात्। नृपोऽरीन् परिक्रुध्यति खलः पतिं संद्रुह्यति नृपेणारयः परिक्रुध्यन्ते खलेन पतिः संद्रुह्यते इति। अनुजनोर्जम्। अनुपूर्वस्य जनो जं ढसंज्ञं स्यात्। लक्ष्मणो राममनुजायते पश्चात् प्रभवति इत्यादि। एवं पुत्रमनुजाता कन्या ढत्वविधानात् लक्ष्मणेन रामोऽनुजन्यते। अनुपूर्वस्य जनेस्तत्पूर्वीकरणपूर्वके जन्मनि वर्त्तमानत्वात् सढत्वमित्येके। अनोः किं? रामात् सञ्जायते हरिः। यजो ढभे धढे। यजधोर्ढभेधढसंज्ञे क्रमात् स्याताम्। पशुना रुद्रं यजते पशुं रुद्राय ददातीत्यर्थः॥ २८७॥

साध्यते कर्म निष्पाद्यतेऽनेनेति साधनम्। किञ्च क्रियायां साध्यायां बहूनां कारणानां मध्ये कारणान्तरव्यवधानाभावे यद्वस्तु क्रियानिष्पत्तिकारणं विवक्षितं तदेव साधनं भवति अतएव करणं साधकतममित्यमरः। तेन दात्रेण धान्यं लुनातीत्यत्र हस्तादेः करणत्वेऽपि दात्रस्यैव करणत्वं विवक्षितम्। तथाचोक्तम्। कारणाव्यवधाने तु क्रियानिष्पत्ति कारणम्। यद्वै विवक्षितं तेषु करणं तत् प्रकीर्त्तितमिति। फलं साधयतु असाधयतु वा फलसाधनयोग्यो यः सः हेतुः। धनेन कुलम् अन्नेन वसतिः विद्यया यशः इत्यादौ धनादेः कुलादिसाधनत्वाभावेऽपि कुलादिसाधनयोग्यत्वादेव हेतुत्वम्। न च दात्रेण धान्यं लुनातीत्यत्रापि दात्रस्य हेतुत्वादेवेष्टसिद्धौ साधनग्रहणं वृथेति वाच्यं हेतुसाधनयोर्भेदात्। तथाहि यदधीना कर्त्तुः प्रवृत्तिः स हेतुः साधनन्तु कर्त्त्रधीनप्रवृत्ति। विशिष्यते सम्बध्यते अनेनेति विशेषणम्। छत्रेण छात्रमद्राक्षीदिति। भेदयति अन्यपदात् पृथक् करोतीति भेदकम्। नाम्ना शिवः गोत्रेण गार्ग्यः। विशेषणं दृष्टमेव भेदकन्तु अदृष्टमेव इति विशेषणभेदकयोर्भेदः। एवं प्रकृत्या पटुः जात्या ब्राह्मणः जन्मना अन्धः स्वभावेनोदारः समेन तिष्ठति विषमेण धावति सुखेन याति दुःखेन याति कार्त्स्न्येन पचति साकल्येनादत्ते प्रायेण वैष्णवः इत्यादावपि प्रकृत्यादेः करणत्वमिति दुर्गसिंहः। तथा प्रकृत्या पटुर्भवतीत्यत्र पटुत्वभवने प्रकृतेः करणत्वमेव स्यात् इति

विवक्षा। शुद्ध्येद्विप्रो दशाहेन द्वादशाहेन भूमिपः। वैश्यः पञ्चदशाहेन शूद्रो मासेन शुद्ध्यतीत्यादौ शुद्धिं प्रति दशाहादेः करणत्वे तृतीया। अतएव अनन्यथासिद्धि-नियतपूर्ववर्त्तित्वं कारणत्वमिति तार्किकाः। साधनञ्च हेतुश्च विशेषणञ्च भेदकञ्चेति यः करोति स कर्त्ता इति सर्ववर्मा। कृत्याश्रयः कर्त्तेति तार्किकाः। साधनादीनि घसञ्ज्ञानि स्युः कर्त्ता घसंज्ञः स्यात् उभयत्र तृतीया स्यात् इत्यर्थः। नेत्रैरित्यादि। नेत्रैः साधनैः पुण्येन हेतुना भूषाभिर्विशिष्टो नाम्ना भेदकेन शिवो जनैः कर्त्तृभिर्दृष्ट इति अन्वयः॥ २८८॥

श्रीरा-टी—साध्यते अनेनेति साधनं घेऽनट् यद्व्यापारानन्तरं कर्त्रा क्रिया निष्पाद्यते तत् साधनमित्यर्थः तज्जन्यत्वे सति तज्जन्यजनको हि व्यापारः यथा परशुना काष्ठं छिनत्ति मनसा जानाति पाणिना भ्रामयतीत्यादौ छेद्यपरशु संयोग-व्यापारेण आत्ममनःसंयोगव्यापारेण छेदनादेर्निष्पाद्यत्वात् साधनत्वम्। अश्वेन यथा याति कायेन मनसा वाचा हरिराराधितो मया इत्यादौ द्वयोस्त्रयाणामपि व्यापारवत्त्वात् साधनत्वं स्थाल्या पच्यते इत्यादौ तु स्थाल्यादेर्व्यापारान्तरं क्रिया-सिद्धेर्विवक्षितत्वात्। यदुक्तम्। क्रियायाः परिनिष्पत्तिर्यद्व्यापारादनन्तरम्। विवक्ष्यते यदा तत्र करणत्वं तदा स्मृतम्। वस्तुतस्तदनिर्देश्यं नहि वस्तुव्यवस्थितम्। स्थाल्या पच्यत इत्येषा विवक्षा दृश्यते यतः॥ हेतुः फलसाधनयोग्यः। यथा विद्यया यशः धनेन कुलमित्यादौ कीर्त्त्यादिकमकुर्वन्नपि विद्यादिस्तत्करणयोग्य एव। अन्ये तु अन्वयव्यतिरेकनियमेन ज्ञापको हि हेतुः यथा धूमवत्त्वेनाग्निमान् अयं पर्वत इत्यत्राप्यन्वयव्यतिरेक नियमेनाग्निमत्त्वस्य ज्ञापकं धूमवत्त्वमित्याहुः। तथाच यदधी-नाप्रवृत्तिः कर्त्तुः स हेतुः कर्त्रधीनं साधनमिति साधनहेत्वोर्भेदः। विशिष्यते सम्बध्यते येन तद्विशेषणं विद्य .नसम्बन्धप्रतियोगीति यावत्। यथा जटाभिस्तापसः छात्रेणोपाध्यायमद्राक्षीत् उपलब्धवान् इत्यर्थः। शिखया परिव्राजकः इत्यादौ जटादे-र्विद्यमानसम्बन्धप्रतियोगित्वाद्विशेषणत्वम्। भेदयति सामान्यावगमे इतरेभ्यो व्यवच्छि-नत्तीति भेदकमितरव्यावर्त्तकमिति यावत्। यथा काकैर्गृहं छत्रेण छात्रमुपाध्याय-मद्राक्षीत् इत्यादौ काकादेर्विद्यमानसम्बन्धाप्रतियोगित्वेऽपि भेदकत्वम्। तथाच विशेषणं विद्यमानं भेदकन्त्वविद्यमानमिति विशेषणभेदकयोर्भेद इत्येके वस्तुतस्तु भेदकत्वं नैव जटाभिस्तापस इत्यादौ सिद्धे विशेषणग्रहणं क्वचिदन्यतोऽपि वीविधानार्थं तेन येनाङ्गिविकारस्तदङ्गात् येनावयवेनाङ्गिनो हानिराधिक्यं वा लक्ष्यते तदङ्गवाचिनस्त्री स्यात्। यथा मुखेन त्रिलोचनः अक्ष्णा काणः पदेन खञ्जः पृष्ठेन कुब्जः इत्यादौ नित्यनैमित्तिकसम्बन्धे षी प्राप्ते वी स्यात। यथा

प्रकृत्या सुभगः धान्येन धनं गोत्रेण गार्ग्यः जात्या विप्रः जन्मना वङ्गः स्वभावेनोदारः स्वरूपेण प्रियंवदः प्रायेण वैष्णवः समेन धावति सुखेन जाति कार्त्स्न्येन पचति तवागारं धनपतिगृहादुत्तरेणास्मदीयमित्यादौ प्रकृत्यादीनां सुभगादिना अभेदेऽपि इतरव्यावर्त्तकत्वात् भेदकत्वमिति। तथाहि प्रकृतिशब्देन साहजिक उच्यते साहजिकाभिन्नः सुभगः धान्याभिन्नं धनं गोत्राभिन्ना गार्ग्याः गार्ग्यकुलोत्पन्ना इत्यादि क्रमेणान्वयबोधः। परे तु हेत्वादेर्न घत्वमाहुः। अनेन वीं विधाय धसंज्ञा कृतेति। करोतीति कर्त्ता स्वतन्त्रः क्रियासिद्धावगुणत्वेन विवक्षितः साक्षात् क्रियाश्रय इति यावत्। यथा रामो रथेन व्रजं याति कृष्णो भवतीत्यादौ गत्यादिक्रियासिद्धौ रामादेर्गुणत्वाभावात् कर्त्तृत्वम्। मैत्रस्तण्डुलं पचतीत्यत्र पचिर्विक्लेदनार्थः। अतएव विक्लेदनक्रियासिद्धौ मैत्रस्य गुणत्वाभावात् कर्त्तृत्वं यदा तु विक्लित्त्यर्थस्तण्डुलः पच्यते स्वयमेवेति ढघविषयः। ततः प्रेरणे जौविक्लेदनार्थः पचिसमानार्थः यथा पाचयति तण्डुलं चैत्र इति एवं यदा निष्पादनार्थः कृधुस्तदा चैत्रः कटं करोति यदा निष्पत्त्यर्थस्तदा क्रियते कटः स्वयमेवेति। केचित्तु विक्लित्त्यर्थः पचौ रूढ़ः क्रियाश्रयत्वात् तण्डुलः पचति। विक्लेदनार्थस्तु प्रेरणार्थक्रियाया व्याप्यत्वात् तण्डुलादेर्ढत्वमिति यदा तत् क्रियाव्याप्य ढस्य घत्वं विवक्ष्यते तदैव कर्मकर्त्तेत्याहुः। काष्ठं पचति परशुश्छिनत्ति स्थाली पचतीत्यादौ काष्ठादीनां गुणत्वाभावविवक्षया कर्त्तृत्वं तथाच यदा काष्ठादीनां क्रियानिष्पत्तौ घत्वादिर्न विवक्ष्यते किन्तु गुणत्वाभावो विवक्ष्यते तदा घत्वमिति पर्य्यवसितोऽर्थः। यदुक्तम्। निष्पत्तिमात्रे कर्त्तृत्वं सर्व्वत्रैवास्ति कारके। व्यापारभेदापेक्षायां करणत्वादिसम्भव इति। पाचयत्योदनं सूदेन गृहीत्यादौ तु पाकक्रियासिद्धौ सूदस्य तत् प्रेरक्रियासिद्धौ गृहिणः प्राधान्यभावाद्घत्वं तवाख्यातेनोक्तत्वात् गृहीत्यत्र प्रौ सूदेनेत्यनुक्तत्वात् वीति। सूर्य्यं पश्यति शिवं जानीहि रामं जानामीत्यादावप्रयुक्तानामपि चैत्रादीनां गुणत्वाभावविवक्षायां घत्वमिति। यदुक्तम्। प्रवृत्तावप्रवृत्तौ वा कारकाणां य ईश्वरः। अप्रयुक्तः प्रयुक्तो वा स कर्त्ता नाम कारकमिति। नेत्रैरित्यादि। नेत्रसाधनकपुण्यहेतुक भूषाविशेषणक नामव्यवच्छिन्न बहुत्वाश्रयजनकर्त्तृकातीतदर्शनविषयः शिव इत्यर्थः। नेत्राणां विषयसंयोगव्यापारेण साधनत्वं पुण्य शुभादृष्टं तस्य शिवदर्शनफलसाधनयोग्यत्वात् हेतुत्वम्। भूषाणामङ्गिवलयादीनां विद्यमानसम्बन्धप्रतियोगितया विशेषणत्वं नामसंज्ञा तस्य इतरव्यावर्त्तकत्वात् भेदकत्वं जनानां दर्शनक्रियासिद्धावगुणत्वाद्घत्वमिति॥ २८८॥

२८९। सहवारणसमोनार्थार्थे विनापृथङ्-नानाद्यैः।

सह—नानाद्यैः ३॥।

एभि र्योगे त्री स्यात्।

सहेशार्च्चो ऽच्युतो, भेदेनालं, तेन समो ऽस्ति कः।

विकारै रहितः शम्भुः, सतामथः शिवार्चया॥

---

अर्थः प्रयोजनं सहश्च वारणञ्च समश्च ऊनश्च अर्थश्च सहवारणसमोनार्थाः ते अर्था अभिधेया येषां ते सहवारणसमोनार्थार्थाः नाना आद्यौ येषां ते नानाद्याः ततः सह वारणसमोनार्थार्थाश्च विना च पृथक् च नानाद्याश्च ते तैः। एभिर्योगे तृतीया स्यादित्यर्थः। अत्र अर्थेनैव योगे न तु शब्देन। अत-एवायं सहागतः पित्रा इत्यादौ व्यवधानेऽपि स्यात्। सहेशार्च्च इत्यादि। अच्युत ईशा शिवेन सह अर्च्चः। ईशीति ईशलङ् ऐश्वर्य्ये ईष्टे इति कर्त्तरि क्विप् ईट् तेन एवं साकं सार्द्धं सममित्यादि। देशाध्वकालभावं वाढ़ेरित्यादि ज्ञापकात् सहार्थे गम्यमानेऽपि स्यात्। तेन गुरुः शिष्येणागत इत्यादि। एवं दिक्-शब्दानां ऊहेऽपि पञ्चमीति बोध्यं यथा आदिगेचोरित्यत्र परशब्दस्यापि आदिति पञ्चमी। अच्युतेशयोर्भेदेनालं भेदो व्यर्थः इत्यर्थः। तेन समः कोऽस्ति एवं समान-स्तुल्य इत्यादि। अत्र वै पुनः समार्थाः शब्दास्ते यदि पदान्तरापेक्षाः सन्तो वर्त्तन्ते तदा तैर्योगे तृतीयाषष्ठ्यौ न स्यातामिति गोयीचन्द्रः। तेन चन्द्रवन्मुखं गौरिव गवयः। समानं दर्शनमस्येत्यादिषु समानार्थत्वेऽपि पदान्तरापेक्षत्वात् तृतीयाषष्ठ्यौ मा भूतामिति। शम्भुर्विकारैरहित ऊन इत्यर्थः। एवमल्प इत्यादि। सतां साधूनां शिवार्चयार्थः। एवं प्रयोजनं कार्य्यमित्यादि। ईशेन विना श्रीर्न स्यादित्यर्थः। शम्भुर्विश्वेन पृथक् विश्वस्य नश्वरत्वात् शम्भोर्नित्यत्वादित्यर्थः। तत् विश्वं पुनः शम्भुना न नाना भिन्नं विश्वस्य शम्भुमयत्वात्। आद्यशब्दात् अधो-क्षजः श्रीकृष्णो रामाद्वर्षेण अवरः कनिष्ठः अत्र अवरशब्देन योगे वर्षेणेति तृतीया एवं मासेन पूर्वः। एवञ्च येनाङ्गेन अङ्गिविकृतं तन्यते तस्मादङ्गाच्च तृतीया। यथा अक्ष्णा काणः पादेन खञ्जः पृष्ठेन कुब्जः इत्यादि। अत्र जौमराः उपमातुलाभ्यां योगे तृतीया न स्यादिति मन्यमाना अस्त्युपमा शिवस्य नास्ति तुला विष्णोरित्युदाहरन्ति तच्चिन्त्यम्। प्रहीणपूर्वध्वनिनाधिरूढ़स्तुलामधारेण शरद्घनेनेति रघोः। चिरोज्झितालक्तकपाटलेन तुलां यदारोहति इति कुमारात्।

**श्री नेशेन विना शम्भुः पृथक् विश्वेन, तत् पुनः ।**
**न नाना शम्भुना, रामात् वर्षेणाधोऽग्रजोऽवरः ॥**

गिरिर्णोपमास्मुपदधे जगती इत्यादि दर्शनाच्च। उत्सुकप्रसिताभ्यां योगे तृतीया-सप्तम्यौ स्यातामिति वक्तव्यम्। भोगैर्भोगेषु वा उत्सुकः धर्मैर्धर्मेषु वा प्रसितः ॥२८९॥

श्रीरा-टी—सहश्च वारणञ्च समश्च ऊनश्च ते तेऽर्थाः येषां ते नाना आद्यो येषां ते सह वारण समोनार्थार्थाश्च विना च पृथक् च नानाद्याश्च ते तैः। एभिरिति सहार्थादिभिः विनादिभिश्च योगे इत्यर्थः। यद्यपि सामान्येनोक्तं तथाप्यविधानाद्विशेषतो ज्ञेयम् तथाहि सहार्थैर्योगे गौणे वौ गौणत्वञ्च परम्परया क्रियागुणद्रव्यान्वयित्वम्। पुत्रेण सहागतः पिता पित्रा सह स्थूलः पुत्रः चैत्रेण सह मैत्री गोमानित्यादौ पित्रादीनां साक्षात् क्रियाद्यन्वयः न तु पुत्रादीनामिति। गम्यमानैः सहार्थैरपि वृद्धो यूनागत इत्यादौ स्यात्। वोढ्ना जमे च इत्यादि ज्ञापकात्। एवं साकं सार्द्धं समं सजूरमादिभि-र्योगेऽपि। वारणार्था अलं मास्म मा इत्यादयः यथा अलं विलम्बेनेत्यादि। परे तु वारणार्थयोगे वौं नेच्छन्ति। समार्थाः सदृशार्थाः यथा गोपेन तुल्यो हरिः। सामर्थ्येनेत्यादिना गोपस्य तुल्यो हरिः इत्यादिषु षौ च सादृश्यं गत-मपनिद्रचूतगन्धैरित्यादौ तु धर्मवाचिनापि वौति। गिरिशस्योपमा नास्ति नास्ति लक्ष्मीपतेस्तुला इत्यादौ तु नोपमाभ्यां योगे वौ स्यादनभिधानात्। गौरिव गवय इत्यादौ तु न स्यादिवशब्दस्य सादृश्यद्योतकत्वात्। ऊनार्था ऊनहीन-रहितादयः। यथा एकेनोनः पुण्येन हीन इत्यादि। अर्थयोगे यथा धान्येनार्थः। सतामर्थो हरिर्भक्त्या इत्यादि। यथा विना रामेण कोऽन्यो वा दश-कण्ठविनाशकृत्। एवं धिक्समयेत्यादिना द्वौ अन्यारभ्यार्थारादित्यादिना पौच यथा हरिं विना रामाद्गोकुलं शोकसङ्कुलम्। विनाशब्दवत् पृथक्नानादैश्च योगे द्वौप्यौ चेति परे। सहेशार्च्य इत्यादि। ईशा सह अच्युतोऽर्च्य ईशधीः क्विप् ईट् ततस्तौ भेदेन अलं अर्थात् शिवविष्णोर्भेदोऽवधारणीय इत्यर्थः। तेन शिवेन विष्णुना वा कः समोऽस्ति न कोऽपीत्यर्थः। शम्भुर्विकारैः कामक्रोधा-दिभिः रहितः हीन इत्यर्थः। सतां सुधियां शिवार्चयार्थः शिवपूजैव प्रयो-जनमित्यर्थः ईशेन विना श्रीर्न शिवार्चना व्यतिरेकेण त्रिवर्गसम्पन्नो न भवतीत्यर्थः। शम्भुर्विश्वेन पृथक् सर्वस्मात् चराचरजगतोभिन्नः संसारस्य नश्वरत्वात्। तद्विश्वं पुनः शम्भुना न नाना शिवान्नान्यत्। तेन विना पदार्थाभावात्। अधोऽग्रजो विष्णुः रामाद्बलरामाद्वर्षेण एकवत्सरेणावरः कनिष्ठः एवं आद्यशब्देन मासेन पूर्वः शास्त्रेण कलहः गुड़ेन मिश्र इत्यादि। ॥ २८९ ॥

## २९०। कालभाद्ङे वा।

कालभात् ५।, ङे ७।, वा ।१। ।

कालवाचिनो नक्षत्रात् ङे त्री स्यात् वा।
रोहिण्यामभवत् कृष्णो रोहिण्यासीच्च चण्डिका।

## २९१। मानाद्वीप्सायां ढे।

मानात् ५।, वीप्सायां ७।, ढे ७।।

शतं शतं पयोऽपीप्यत् वत्सान् विष्णुः शतेन गाः।
द्विद्रोणेन क्रीणाति, पञ्चकेन क्रीणाति, द्विद्रोणं पञ्चकम्।

---

अश्विन्यादयो रेवत्यन्ताः शब्दाश्चन्द्रस्य पत्नीषु वर्त्तन्ते काले वाच्ये। तेभ्यः षो कृते वक्तव्यात्तस्य लुकि तदुपलक्षितकालेषु वर्त्तन्ते। ततश्च काले वर्त्तमानान्नक्षत्रवाचकादश्विन्यादिशब्दादधिकरणे तृतीया स्यादित्यर्थः। कृष्णो रोहिण्याम् अभवदित्यत्र सप्तमी। चण्डिका रोहिण्या आसीदित्यत्र तृतीया। एवं पुष्ये पुष्येण वा प्रस्थानं प्रशस्तमित्यादि। काले किं रोहिण्यां प्रीतिश्चन्द्रस्य ॥ २९० ॥

श्रीराटी—कालवाचिनो नक्षत्रादिति तेन युक्तः काल इत्यर्थे विहितस्य षास्य लुकि काले वर्त्तमानान्नक्षत्रादित्यर्थः। रोहिण्यामिति रोहिण्या युक्तः काल इत्यर्थे विहितस्य षास्य लुकि कालवाचित्वात्। उदाहरणद्वयेन विकल्पो काल इत्यर्थे विहितस्य षास्य लुकि कालवाचित्वात्। उदाहरणद्वयेण विकल्पो दर्शितः। एवं पुष्ये पुष्येण वा नवान्नमश्नीयात् इत्यादि। काले किं रोहिण्यां चन्द्रः रोहिण्याधिष्ठातृदेवतायां चन्द्र इत्यर्थः। ङे इति किं अद्य पुष्यः पुष्ययुक्तः काल इत्यर्थः ॥ २९० ॥

कर्मणि प्रयुज्यमाने मानात् परिमाणवाचकाद्वीप्सायां वाच्यायां तृतीया स्यादित्यर्थः। मानशब्देनेह इयत्तापरिच्छेदकस्य ग्रहणात् परिमाणस्य संख्यायाश्च ग्रहणमिति आह शतं शतमित्यादि। विष्णुः शतं शतं वत्सान् पयोऽपीप्यदित्यत्र तृतीयाया अप्राप्तिपक्षे द्वितीया। वीप्सायां द्विर्भावः। पक्षे विष्णुः शतेन गाः पयोऽपीप्यदित्यत्र शतेनेति तृतीयाया वीप्साया उक्तत्वान्न द्वित्वम्। अपीप्यदि त पा पाने ञिः द्विर्विभक्तिः अङि पीप्यादेशः। पानस्यापि भक्षणविशेषत्वादुभयत्र अन्यान्तकर्त्तृणां वत्सानां गवाञ्च कर्मत्वम्। द्विद्रोणेनेत्यादि। द्वौ द्वौ द्रोणौ परिमाणमस्येति तद्धितार्थद्विगुस्ततस्तृतीया द्वितीया च समासेन वीप्साया

## २९२। संज्ञो ऽस्मृतौ।

संज्ञ: ६।, अस्मृतौ ७।।

**स्मरणादन्यस्मिन्नर्थे वर्त्तमानस्य संपूर्वस्य जानाते ढे त्वी स्यात् वा। संजानीष्व स्व-मीशा च संजानीहि ततः शिवम्।**

## २९३। सन्दानो भे ऽधर्मे नित्यम्।

संदान: ६।, भे ७।, अधर्मे ७, नित्यं १।।

---

उक्तत्वान्न द्वित्वं उभयत्रैव द्वौ द्वौ द्रोणौ धान्यं क्रीणातीत्यर्थः। एवं पञ्च पञ्च परिमाणमस्येत्यर्थे विकारसंघभावेदमिति कः। अभिधानादेकवाक्यत्वे द्वितीया-तृतीययोरेकवचने पञ्चकेन पञ्चकमिति। तद्धितेन वीप्सायाः उक्तत्वान्न द्वित्वं उभयत्रैव पञ्च पञ्च पशून् क्रीणातीत्यर्थः॥ २९१॥

श्रीरा-टी—मानवाचिनो वीप्सायां ढे त्वी वा स्यात्। शतं शतमित्यादि। विष्णु शतं शतं वत्सान् पयोऽपीप्यत् शतेन गाः गोरूपान् वत्सान् पयोऽपीप्यत्। त्वा वीप्सार्थस्योक्तत्वान्न द्विः। संख्यापि परिमाणमिति कस्यचिन्मतं अतएवोक्तं द्विद्रोणेन क्रीणाति द्विद्रोणं क्रीणाति द्विद्रोणपरिमितं द्रव्यं क्रीणातीत्यर्थः। द्वौ द्वौ द्रोणौ परिमाणमस्य इत्यर्थे कृते णोनोक्तत्वान्न द्विः। एवं पञ्च पञ्च परिमाणमस्य इत्यर्थे विहितकत्येनोक्तत्वान्न द्विः। इदं नेच्छन्ति परे॥ २९१॥

संजानीष्वेत्यादि हे साधो! त्वं स्वं आत्मानं संजानीष्व सम्यक् प्रकारेण जानीहि। ईशा शिवेन च संजानीष्व ईशेति ईष्टे इति क्विप् ईट् तेन संजानीष्वेति सम्प्रतेरस्मृतावित्यात्मनेपदम्। अस्मृतौ किं? ततस्तदवधि शिवं संजानीहि स्मर इत्यर्थः। अस्मृताविति पाणिनि-क्रमदीश्वर-श्रीपतिदत्तानामसम्मतम्॥ २९२॥

श्रीरा टी—समीज्ञः संज्ञास्तस्य। न स्मृतिरस्मृतिस्तस्याम्। ईशा सञ्जानीष्व पद्ये स्वं आत्मानं संजानीष्व संप्रतेरस्मृताविति मं द्वयेन विकल्पो दर्शितः। कृति तु ईशः संज्ञातौ इत्यत्र परत्वात् ढवे कृतीत्यादिना ष्या बाध्यते। ततस्तस्मात् कारणात् शिवं संजानीहि स्मर इत्यत्र स्मरणार्थत्वान्न त्वौ स्मृत्यर्थदयेशाम् इत्यनेन षी च तेन शिवस्य संजानीहि इत्यपि॥ २९२॥

संपूर्वस्य दानदाने इत्यस्य प्रयोगे अधर्मे शास्त्रविरुद्धव्यवहारे गम्यमाने भे सम्प्रदाने तृतीया स्यान्नित्यमित्यर्थः। संयच्छत इत्यादि। श्रीशः गोप्या

संपूर्वदानसम्बन्धिनि अधर्मे भे चौ स्यान्नित्यम्।
संयच्छते स्म गोप्यैष्टं श्रीशः संयच्छति श्रिये।

**२९४। यस्मै दित्सासूयाक्रोधेर्ष्यारुचिद्रोह स्थाङ्ग्‌श्लाघस्पृहि शप्राधीचाप्रतिश्रुप्रत्यनुगॄधार्य्यर्था भं चौ तादर्थ्ये च।**

यस्मै ४।, दित्सा—धार्य्यर्थाः १।॥, भं १।, चौ ।१।, तादर्थ्ये ७।, च ।१।।

**यस्मै दातुमिच्छा, असूयादयः स्यादेरर्थश्च यस्मै, तत् भसंज्ञं स्यात् तत्र चौ, तादर्थ्ये च।**

---

इष्टं अभीष्टद्रव्यं संयच्छते स्म। अत्र श्रिया ईशः स्वामी सन् गोप्यै परस्त्रियै इष्टं दत्तवानित्यधर्मः संयच्छते इति दानः सा चेच्चार्थे इत्यात्मनेपदं अधर्मे किं? श्रीशः श्रियै इष्ट संयच्छति अत्राधर्माभावात् सम्प्रदाने श्रियै इति चतुर्थ्येव। ॥२९३॥

श्रा-टी—समोदानं सन्दानं तस्य। न धर्मोऽधर्मस्तस्मिन्। धर्मशास्त्रविरुद्धाचारोऽधर्मः। श्रीशः लक्ष्मीशः गोप्या इष्टं संयच्छतेस्म अभिलषितं दत्तवानित्यर्थः। गोप्यैरतिदानेनाधर्मः श्रियै श्रीशः इष्टं संयच्छति इत्यत्र धर्मशास्त्र विरुद्धाभावान्न स तौ ॥ २९३ ॥

आ प्रतिभ्यां श्रुः आप्रतिश्रुः प्रत्यनुभ्यां गॄ प्रत्यनुगॄ स्थाश्च ङ्गुश्च श्लाघश्च स्पृहिश्च शप् च राध् च ईच् च आप्रतिश्रुश्च प्रत्यनुगॄश्च धारिश्च ते स्थाङ्ग्, श्लाघ स्पृहिशप्राधीचा प्रतिश्रु प्रत्यनु गॄ धारयः। तेषामर्थाः स्थाङ्ग्, श्लाघ स्पृहि श्र प्राधीचा प्रतिश्रु प्रत्यनु गॄ धार्य्यर्थाः। ततो दित्सा च असूया च क्रोधश्च ईर्ष्या च रुचिश्च द्रोहश्च स्थाङ्ग्, श्लाघ स्पृहि श्र प्राधीचा प्रतिश्रु प्रत्यनु गॄ ध्यार्य्यर्थाश्च ते। दातुमिच्छा दित्सा दानेनैवेष्टसिद्धौ दित्साग्रहणं ज्ञापयति अस्मिन् द्रव्ये मत्स्वत्वत्यागपूर्वकमस्य स्वत्वं जायतामीदृशीच्छा यस्मै तदेव सम्प्रदानं स्यादिति। यथा विप्राय गां ददातीत्यादि। यत्तु शिष्याय चपेटं ददाति शत्रवे भयं ददातीत्यादि तदुपचारात्। तथाचोक्तं सम्प्रदानं तदेव स्यात् पूजानुग्रहकाम्यया। दीयमानेन संयोगात् स्वामित्वं लभते यदीति। अतएव रजकस्य वस्त्रं ददातीत्यादौ रजकादेः सम्प्रदानत्वं न स्यात्। असूया गुणेषु दोषारोपः। यथा असूयति खलः साधवे। क्रोधो नेत्रलौहित्यादि हेतुश्चित्तविकारः। यथा

ददातु सङ्घः स सुखं हरिः, स्मरात्
गोपीगणो ऽसूयति कुप्यतीर्ष्यति।
स्म रोचते द्रुह्यति तिष्ठते ह्नुते
ऽश्लाघिष्ट यस्मै स्पृहयत्यशप्त च॥

---

पुत्राय क्रुध्यति कुप्यति रुष्यति। ईर्ष्या अक्षमा यथा ईर्ष्यति गुणिने गुणी। रुचिरनुरागः। यथा मोदकः शिशवे रोचते स्वदते स्वादते। द्रोहोऽनिष्टकरणम्। यथा शत्रवे द्रुह्यति द्वेष्टि। स्थार्थ इह स्थित्या तोषणेच्छा स्थित्या स्वाभिप्रायं विज्ञापनेच्छा वा। यथा रामाय तिष्ठते सीता स्थित्या रामं तोषयितुमिच्छति स्वाभिप्रायं विज्ञापयितुमिच्छति वेत्यर्थः। अतएव श्लाघह्नुस्थाशपां ज्ञीप्सेति क्रमदीश्वरः। एषां प्रयोगे यं ज्ञापयितुमिच्छा स सम्प्रदानसंज्ञः स्यादित्यर्थः। विप्राय श्लाघते निह्नुते तिष्ठते शपते। श्लाघनेन विप्रं तोषयितुमिच्छति अभिप्रायं निवेदयितुमिच्छति वेत्यर्थः। ज्ञीप्साशब्दस्य तोषणनिशामाद्यर्थवाचकेन ज्ञाधातुना निष्पादितत्वात्। एवं ह्नवनेन स्थित्या शपनेन बोद्धव्यमित्यन्तं गोयीचन्द्रः। सौपद्मा अप्येवम्। युक्तञ्चैतत्। अन्यथा श्लोकं श्लाघते द्रव्यं निह्नुते गृहे तिष्ठति शत्रुं शपति इत्यादौ श्लोकादेरपि सम्प्रदानत्वापत्तेः। एवं ह्नुङ्त्व चौर्य्ये श्लाघृङ कत्थने शपीञ क्रोधे एषामपि प्रयोगे ह्नवनाद्यर्थेन यं तोषयितुमिच्छति स्वाभिप्रायं विज्ञापयितुमिच्छति वा स सम्प्रदानसंज्ञः स्यादित्यर्थः इति बोध्यम्। स्पृहत्केप्से इत्यस्य कर्मैव सम्प्रदानसंज्ञं स्यादिति। पुष्पेभ्यः स्पृहयति राजा। पुष्पेभ्यः स्पृह्यते राज्ञा इत्यकर्मकत्वात् भावे प्रत्ययः। राध इति विशेषाभावात् राध्नो सिद्धो इति दैवादिकस्य सौवादिकस्य च ग्रहणं ईक्षङ दर्शने इति तयोरणार्थः शुभाशुभपर्य्यालोचनमेवेति अत्र यस्य शुभाशुभे पर्य्यालोचते तस्यैव सम्प्रदानत्वम्। यथा दैवज्ञः शिशवे राध्यति राध्नोति ईक्षते। आप्रति पूर्वश्रृणोतेरर्थोऽङ्गीकारः स च यस्य सम्बन्धे क्रियते तस्य सम्प्रदानत्वं यथा राजा विप्राय ग्रामाश्रृणोति प्रतिश्रृणाति इत्यादि। गृगिशब्दे इत्यस्यैव ग्रहणं नतु गॄ श निगरणे इत्यस्य जौमराद्येकवाक्यत्वात्। प्रत्यनुपूर्वगृणातेरर्थः। पूर्ववक्तुः प्रोत्साहना तत्र पूर्ववक्तुः सम्प्रदानत्वम्। यथा विप्राय भूमिं दास्यामीत्युक्तवते राज्ञेऽमात्यः प्रतिगृणाति अनुगृणाति। धारीति धृञङ स्थितौ प्रेरणे जन्तः। अस्यार्थो गृहीतापरिशोधनम्। तत्र यस्य धनं गृहीतं तस्य सम्प्रदानत्वम्।

गर्गो राध्यति रामाय कृष्णाय स्मेक्षते व्रजे।
शुभाशुभं पर्य्यालोचयदित्यर्थः।
विभीषणायाशुश्राव राज्यं प्रत्यशृणोद् यशः।

---

यथा दरिद्रः साधवे शतं धारयति। दित्सादिधार्य्यर्थपर्य्यन्तानां यो विषयः स सम्प्रदानसंज्ञः स्यात् तत्र चतुर्थी स्यादित्यर्थः। तादर्थ्ये इति अर्थाच्चतुर्थीविधाने-नैवेष्टसिद्धौ तादर्थ्ये इति शब्दार्थयोगौरवं ज्ञापयति अर्थशब्दस्यात्र प्रयोजनं निवृत्तिश्चेति द्वावर्थौ ग्राह्यौ तथाच अर्थोऽभिधेयरैवस्तु प्रयोजननिवृत्तिषु इत्यमरः। ततश्च स चासौ अर्थः प्रयोजनञ्चेति तदर्थः तस्य भावः तादर्थ्यम् एवं तस्यार्थो निवृत्तिस्तदर्थः तदर्थ एव तादर्थ्यं स्वार्थे ष्यः। ततः तादर्थ्यञ्च तादर्थ्यञ्चेति एकशेषे सूत्रत्वादेकत्वे तादर्थ्ये तस्मिन् यत्प्रयोजनं तस्माच्चतुर्थी यस्य निवृत्तिस्तस्मादपि चतुर्थी-त्यर्थः। यथा ज्ञानाय पठति पाठस्य ज्ञानं प्रयोजनमित्यर्थः। मशकाय धूमः मशकस्य निवृत्तये इत्यर्थः। अतएव नरकाय प्रदातव्यो दीपः सम्पूज्य देवता इत्यत्र नरकाय नरकनिवृत्तये इत्यर्थः। इति स्मार्त्तभट्टाचार्य्यव्याख्या। ददात्वित्यादि। स हरिः सज्ञः सुखं ददातु अत्र हरेः सुखदानेच्छा सद्विषया तेन सतां सम्प्रदानत्वं स क इत्याह। स्मरात् कामाद्धेतोर्गोपीगणो यस्मै असूयतिस्म तस्य गुणेषु दोषारोपणं करोतीत्यर्थः। असूङ्करोतीति कण्ड्वादित्वात् क्यः असूयति स्मेन योगेऽतीते क्तौ। गोपीगणो यस्मै कुप्यति स्म गोपीगणो यस्मै ईर्ष्यति स्म गोपीगणो यस्मै रोचते स्म यस्यानुरागपात्रमासीदित्यर्थः। गोपीगणो यस्मै द्रुह्यति स्म। गोपीगणो यस्मै तिष्ठते स्म स्थित्वा यं तोषयितु मैच्छत स्वाभिप्रायं विज्ञापयितुमैच्छद्वा इत्यर्थः। तिष्ठते इति प्रतिज्ञानिर्णये त्यादिनात्मनेपदं गोपीगणो यस्मै ह्नुते स्म अपह्नवेन यं तोषयितुमैच्छत् स्वाभिप्रायं विज्ञापयितुमैच्छदित्यर्थः। गोपीगणो यस्मै अश्लाघिष्ट श्लाघनेन यं तोष-यितुमैच्छत् स्वाभिप्रायं विज्ञापयितुमैच्छदित्यर्थः। गोपीगणो यस्मै स्पृहयतिस्म गोपीगणो यस्मै अशप्त च शपथेन यं तोषयितुमैच्छत् स्वाभिप्रायं विज्ञापयितुमैच्छ-दित्यर्थः। अशप्तेति शपथाशीर्गेत्यनुकारे शप नाथ इत्यादिनात्मनेपदम्। गर्ग इत्यादि। गर्गो मुनिः व्रजे गोष्ठे रामाय राध्यतिस्म कृष्णाय ईक्षतेस्म रामस्य कृष्णस्य च शुभाशुभं पर्य्यालोचयदित्यर्थः। पर्य्यालोचयदिति कविकल्पद्रुमे अकितो वा चुरादय इत्यत्र वाशब्दस्यानुक्तसमुच्चयार्थत्वात् लोचृङ्दृशे इति भौवादिकस्यैव चुरादित्वरूपम्। अथवा पर्य्यालोचनं पर्य्यालोचः घञलनट् इत्यादिना भावेऽल् ततः पर्य्यालोचं करोतीति ञौ रूपम्। रामो विभीषणाय राज्यं आशुश्राव यशश्च प्रत्यश्रृणोत्

प्रतिज्ञातवानित्यर्थः ।

रामः, प्रत्यग्टणात्तस्मै लक्ष्मणोऽन्वग्टणात् कपिः ।

---

दातुं प्रतिज्ञातवानित्यर्थः । लक्ष्मणस्तस्मै रामाय प्रत्यग्टणात् कपिः सुग्रीवः तस्मै रामाय अन्वग्टणात् । विभीषणाय राज्यं यश्च दास्यामीति वदन्तं रामं साधुवादैः प्रोत्साहयामासेत्यर्थः । धारयते इति फलवत् कर्त्तर्य्यात्मनेपदम् । सर्वः शिवः सञ्जी भक्तेभ्यः सर्वं धारयते दयालुतया अवश्यं दायिनः सर्वस्य अधमर्णतुल्यत्वेन निर्देशः । तादर्थ्योदाहरणमाह तं भजेत्यादि । हे साधो ! मुक्तये मुक्त्यर्थं त सर्वं भज मुक्तेः सर्वेण सह योगाभावात् चतुर्थी । यन्निमित्तस्य कर्मणा योगस्तत्र ढेनायादिति सप्तम्येव तन वस्त्रेषु रजकमवधीत् कृष्ण इत्यादि । एवं यूपाय दारु अश्वाय घासः रन्धनाय स्थालीत्यादि । तुमन्तोधातुर्गर्भस्थितो यत्र प्रतीयते तस्मात् कर्मणोऽपि यथा काष्ठाय व्रजति काष्ठमानेतुं व्रजतीत्यर्थः । पाकाय व्रजति पाकं कर्त्तुं व्रजतीत्यर्थः । मूत्राय सम्पद्यते यवागूः यवागूरेव भक्षिता मूत्रं भवतीत्यर्थः । भेदविवक्षायान्तु यवागूर्हर्तोर्मूत्रं सम्पद्यत इत्येव । एवञ्च उत्पातेन ज्ञाप्यमानादपि । वाताय कपिला विद्युत् आतपाय लोहिता विद्युदित्यादि ॥ २९४ ॥

श्रौरा-टी—दातुमिच्छा दित्सा । आङ् प्रतिश् तौ ताभ्यां शुः सः । प्रतिश् अनुश् तौ ताभ्यां गॄः सः । स्थाश् ह्नुश् श्लाघश् स्पृहिश् शपच् राधच् ईक्षच् आप्रतिश्रुश् प्रत्यनुगॄश् धारिश् ते तेषामर्थास्ते दित्सा च असूया च क्रोधश्च ईर्ष्याच रुचिश्च द्रोहश्च ते च ते तस्मै अर्थः प्रयोजनं तदर्थस्तदर्थस्य भावस्तादर्थ्यं तस्मिन् तादर्थ्यं । यस्मै दातुमिच्छा इति ढेन कर्मणा स्वेन स्वेच्छया क्रियमाणं दानं यो लभते स भसंज्ञः यस्य पुनरादानं नास्ति तद्दानमित्यर्थः । अतएव भगवान् पाणिनिः कर्मणा यमभिप्रैति स सम्प्रदानमित्याह । तेन विप्राय गां ददाति माषानस्मै तिलेभ्यः प्रयच्छति इत्यादौ स्यात् न तु घ्नतः पृष्ठं ददाति राज्ञो दण्डं ददाति रजकस्य वस्त्रं ददातीत्यादौ शत्रवे भयं ददाति भयानि दत्तसीतायै भयं ददातु इत्यादौ तु स्वप्रयोजनमभिलष्यतो घस्यात्मन्यसतोऽपि भयस्य देयत्वेन विवक्षणात् अतएवोक्तं ददातु सञ्जः स सुखमिति । एवं विवक्षावशात् यत्र वस्तुतो दानं तत्रापि न । यथा सममब्राह्मणे दानं द्विगुणं ब्राह्मणब्रुवे । अधीते शतसाहस्रमनन्तं वेदपारगे इति मनुः । परे तु पूजानुग्रहकाम्याभिः स्वद्रव्यस्य परार्पणम् । दानं तस्यार्पणं स्थानं सम्प्रदानं प्रकीर्त्तितम् । गुरुदेवद्विजातीनां भावशुद्ध्या कृतं हि यत् । ध्यानावनतिदानैश्च पूजा मानन-

रामं वदन्तं प्रोत्साहयामास इत्यर्थः।
सर्वो धारयते सर्वं सङ्गा स्तं भज मुक्तये॥

---

मुच्यते। विरूपान्मत्तनिःस्वानामकुत्सापूर्वकं हि यत्। पूरणं दानमानाभ्यामनुग्रह उदाहृतः। यत्किञ्चित फलमुद्दिश्य दानयज्ञजपादिकं क्रियते कायिकं यच्च तत् काम्येति प्रकीर्त्तितम्। दानपात्रं सम्प्रदानं त्रिधा तच्च निरूपितम। देहीति प्रेरणात् किञ्चित् प्रेरकं याचको यथा। महत्त्वात् याचते नैव भक्त्या दत्तन्तु मन्यते। अनुमन्त्रिकमेतत् स्याद्गुणवानतिथिर्यथा। न स्वीकरोति माहात्म्यान्न निराकुरुते तथा। अनिराकर्त्तृकं तत् स्याद्यथा चैत्यः कृपानिधिः। इति मुख्यसंप्रदानमन्यत्तूपचारादित्यप्याहुः। असूया गुणेषु दोषारोपः। क्रोधो नेत्रलौहित्यादि चित्तविकारः। ईर्ष्या अक्षमा। रुचिः प्रीतिविशेषः। द्रोहः जिघांसा। असूयाद्यर्थानां धूनां यस्य यं प्रति कोपः। रुच्यर्थानां प्रयोगे तु यो यस्य प्रीतिं करोति। स्थाङ्, श्लाघशपां प्रयोगे यो बोधयितुमिष्टः स्पृहिधोः प्रयोगे योऽभीष्टः राधीक्ष्योः प्रयोगे यद्विषये विविधप्रश्नः आप्रतिश्रु प्रत्यनुगृोः एतयोः प्रयोगे गम्यमान प्राक् क्रियाया यो यः। धारेः प्रयोगे यो धनस्वामी स भसञ्ज्ञः स्यादित्यर्थः। ददात्विति। यस्मै हरये गोपीगणोऽसूयतिस्म हरेर्गुणेषु दोषमारोपितवान्। यस्मै गोपीगणः कुप्यतिस्म यं प्रति नेत्रलौहित्यादिकं कृतवान्। यस्मै ईर्ष्यतिस्म यं प्रति न क्षान्तवान्। यस्मै रोचतेस्म यस्य प्रीतिविषयीभूतो गोपीगणः। यस्मै द्रुह्यतिस्म गोपीगणो य प्रति हिंसितुमिष्टवान्। यस्मै गोपीगणस्तिष्ठतेस्म यं प्रति स्वाभिलाषं बोधितवान् प्रकाशे मम्। यस्मै ह्नुतेस्म अपह्नुवानो गोपीगणः हरिं चातुर्य्यं बोधितवान् यस्मै अश्लाघिष्ट श्लाघमानमात्मानं यं बोधितवान्। यस्मै स्पृहयतिस्म यमीप्सितवान् पुष्पेभ्यः स्पृह्यते राज्ञा इत्यादावढत्वाज्ञात्वेमम्। स्पृहणीयाविभूतय इत्यादि विकल्पदर्शनाद्विकल्पयत्यन्यः। अत्र तु पुष्पेभ्यः स्पृहयति पुष्पाणि स्पृहयति इत्यादौ क्रियाव्याप्यतया ढत्वम्। क्रियासम्बन्धविवक्षया ढत्वमिति। यस्मै गोपीगणोऽशप्त यं प्रति गोपीगणः शपथादिना स्वस्य तद्वशत्वं बोधितवान्। स हरिः सङ्गाः सुखं ददात्वित्यन्वयः। गर्गो रामाय राध्यतिस्म कृष्णाय ईक्षतेस्म व्रजस्थाने विविधप्रश्नेन रामकृष्णयोश्चित्तं कीदृगिति पर्यालोचितवान् इत्यर्थः। स्वादिराध्नोतेरपिग्रहणात् विप्राय राध्नोतीत्यन्ये। रामो विभीषणाय राज्यमाशुश्राव यश्चस्य प्रत्यशृणोत् याचमाने विभीषणे राज्यं यश्चोऽप्यङ्गीकृतवान् तस्मै रामाय लक्ष्मणः प्रत्यगृणात् कपिर्हनूमांश्च अन्वगृणात् विभीषणाय राज्यादिकं दातुं शंसतो रामस्य प्रोत्साहनं कृतवानित्यर्थः। आप्रतिश्रु प्रत्यनुगृोः

## २९५ । शक्तार्थं वषड्हित सुख स्वाहा स्वधा स्वस्ति नमोभिः ।

शक्तार्थ—नमोभिः ३॥ ।

**एभिर्योगे चो स्यात् ।**

---

गम्यमान प्राक्क्रियाया ग्रहणात् याचन शमनभिन्नेऽपि प्रयुक्ताः प्रतिप्रयुञ्जन्ति मध्यमाभीरुणोत्तमाः । गृणाद्गीऽनुगृणन्त्यन्ये कृतार्थानेव मद्विधा इत्यादौ श्रवण-कथन प्राक्क्रियाया घे मं स्यात् । सङ्घाः सर्वं सर्वौ धारयते सतां सम्बन्धे सर्वस्य स्वर्गमोक्षादिरूपधनस्याधमर्णः शिव इत्यर्थः । अन्ये तु धृगङ्स्थिनाविति गृह्णन्ति । धृङ्ऽवध्वंसे इति परे । वस्तुतस्तु धृगङ्स्थितौ धृङ्च धारणे धृक् च धृत्यां धृङ्ध्वंसे चतुर्णां ग्रहणम् । तथाच धनं ध्रियते तिष्ठति साधुस्तद्धनं धारयति स्थापयति साधुर्धनस्थिति प्रयोजक पूर्वक स्वामी उत्तमर्णः धृत्यर्थे साधुर्धनं धारयते धारयति वा रक्षति अत्र साधुरक्षणकर्त्ता धनस्वामी उत्तमर्णः । एवं साधु फलं धारयते अवध्वंसयति साधुर्धननाशप्रयोजकः स्वामी उत्तमर्णः । सर्वत्र सत्प्रयोजके चैते पूर्वे स्वामिनि साधौ घे वौ प्राप्तेऽनेन अमिति सारार्थः । एवं विप्राय शतं धारयति चैत्रः विप्रस्य शतं ध्रियते स्वरूपेणावतिष्ठते तच्छतं चैत्र आत्मनि स्थाप-यति इत्यर्थः । तं ईदृशं शिवं मुक्तये भज भजन प्रयोजनम् एवं यूपाय दारु रन्धनाय स्थालीत्यादि । अनुक्तचतुमन्तढात् । अप्रयुक्तस्य चतुमन्तस्य ढाच्चो स्यात् । काष्ठाय व्रजति काष्ठमानेतुं यच्छतीत्यर्थः । युद्धाय संनह्यते युद्धं कर्त्तुं सन्नहनं करोति । पत्ये शेते पतिं प्रीणयितुं शेते इत्यर्थः । अनुक्तेति किं एधानाहर्त्तुं व्रजति चतुमर्थ-भावात् चतुमर्थे यो भावक्त्यस्तदन्ताच्चो स्यात् । पाकाय व्रजति पक्तुं व्रजतीत्यर्थः । एवं भक्तये व्रजतीत्यादि । यद्यपि तादर्थ्यं गम्यते तथापि नियमार्थं तेन ओदनं पाचको व्रजतीत्यादौ घे चतुमर्थत्वान्न स्यात् । उत्पातेन बोध्यात् वाताय कपिलिका विद्युत् कपिलिकाविद्युदुत्पातेन ज्ञाप्यमानो वायुरित्यर्थः । एवमातपाय लोहिता विद्युदित्यादि ॥ २९४ ॥

शक्तश्च अर्थश्च वषट् च हितश्च सुखश्च स्वाहा च स्वधा च स्वस्ति च नमश्च तैः । शक्तिं सामर्थ्यम् अर्थः प्रयोजनम् । शक्तार्थ हित सुख इति चतुर्णामर्थग्रहणात् शक्तार्थ अर्थार्थ हितार्थ सुखार्थानां ग्रहणं बोध्यम् । यथा शक्तो मल्लो मल्लाय एवं पर्य्याप्तः बलं प्रभुः प्रोथः समर्थः इत्यादि । नृपाय अर्थः नृपाय प्रयोजनं

**दैत्येभ्यो ऽलं हरिः, पूष्णे वषट्, सद्भ्यो हितं सुखम्।**
**स्वाहाग्नये, स्वधा पित्रे, स्वस्ति धात्रे, नमः सते॥**

---

नृपाय हितं नृपाय पथ्यं नृपाय सुखं नृपाय शर्म इत्यादि। दैत्येभ्यः इत्यादि हरिर्दैत्येभ्योऽलं समर्थः पूष्णे वषट् सद्भ्यो हितं सद्भ्यः सुखम्। अग्नये स्वाहा पित्रे स्वधा धात्रे स्वस्ति एतानि स्पष्टानि। नमः सते इति सते नित्याय विष्णवे नम इत्यर्थः। सर्वत्र भवतेर्गम्यमानत्वात् वाक्यसमाप्तिः। वषट् स्वधा स्वाहा नमः त्यागार्थतया सम्प्रदानत्वेनैवेष्टसिद्धौ पृथक् ग्रहणं मन्त्रान्तर्गतानामपि प्राप्त्यर्थम्। तेन शिखायै वषट् शिरसे स्वाहा पितृभ्यः स्वधोच्यतां हृदयाय नमः इत्यादि सिद्धम्। नारायणं नमस्कृत्य इत्यादौ उपपदविभक्तेः कारकविभक्तिर्गरीयसीति न्यायात् कर्मत्वम्। शक्तार्थैर्योगे षष्ठ्यपीति वक्तव्यम्। नाम्रोधीदस्य कश्चन इति भट्टिः॥२९५॥

श्रीरा-टी—शक्तोऽर्थो येषां ते शक्तार्थाः शक्तपर्य्याप्त प्रभुप्रोथनादयः। दैत्येभ्य इत्यादि। दैत्यानां सम्बन्धे समर्थो हरिः एवं अलं प्रदोषः प्रियसङ्गमाय शक्तो मल्लो मल्लाय इन्द्रो वृत्राय प्रभुरित्यादि। यदा प्रभुशब्द ईश्वरवाची तदा षष्ठ्येव तेन ममायं प्रभुः स्वामीत्यर्थः। भट्टौ नाम्रोधीदस्य कश्चन इति दर्शनात् शक्तार्थयोगे षष्ठ्यपीत्यन्ये। शक्तो मल्लो राज्ञ इत्यत्र राज्ञो न शक्तार्थयोगः। वषट् स्वाहा स्वधा दानार्थद्योतकाः। पूष्णे वषड़िति सूर्य्याय दीयते इत्यर्थः। सद्भ्यो हितं सद्भ्यः सुखं परत्र ग्रहणात् सतामित्यपि प्रामाद्यङ्गिनां हितभिति भट्टिः। अग्नये स्वाहा अग्नये दीयते इत्यर्थः। एवं पित्रे स्वधा धात्रे स्वस्ति पोष्टुः कुशलमस्तु इत्यर्थः। सते नमः सतां सम्बन्धे प्रणाम इत्यर्थः। सामान्यतः ग्रहणात् कृष्णाय कुसुमं नमः इत्यादौ त्यागार्थेनापि स्यात् नमस्कृत्य मुनित्रयमित्यादौ नमः शब्दद्योतित-प्रणत्यर्थकृञो व्याप्यत्वात् ढत्वम्। रावणाय नमस्कुर्य्याः स्यात् सीते स्वस्ति ते ध्रुवम्। नमो योगे क्रियाशून्ये चतुर्थी सम्मता बुधैः। करोत्यर्थविवक्षायां द्वितीया तत्र निश्चला। रावणाय नमः कुर्य्याः नमश्चकार देवेभ्यः इत्यादौ तु प्रणतिवाचकनमः-शब्दस्य क्रियाव्याप्यत्वात् ढत्वं स्यादेव। बलि रचित प्रयोजनार्थार्थैन। बलि-रचिताभ्यां प्रयोजनवाच्यार्थेन च योगे ची स्यात्। कुवेराय बलिः विप्राय रचितं ब्राह्मणार्थाय यवागूरित्यादि नित्यं प्रयोजनार्थार्थैन वाच्यलिङ्गतार्चेति सः। क्लृप्त्यर्थैर्विकारे सम्पद्यमानादभेदे। क्लृप्त्यर्थधुभिर्योगे सम्पद्यमानाञ्ची स्यात्। विकारे न तु भेदविवक्षायाम्। मूत्राय यवागूः सम्पाद्यते। मूत्ररूपेण यवागूः

## २९६। ढेनाशिषि वा।

ढेन ३।, अथवा ढे ७।, न ।१।, आशिषि ७।, वा ।१।।

**सङ्ग्रः सतां वा शं भूयात्।**

---

परिणमतीत्यर्थः। एवं उच्चाराय कल्पते मास इत्यादि विकारे किं मूत्रं यवागूः सम्पद्यते अत्र विकारो न विवक्षितः किन्तु कारणतामात्रम्। भेदे तु मूत्रं यवाग्वाः सम्पद्यते यत इत्यादिना जलम्॥ २९५॥

कर्मशब्देन क्रियाव्याप्यं क्रिया चोच्यते कर्मक्रियेत्यमरात्। तेन कर्मशब्देनास्य ढसंज्ञाविधानात् ढशब्देनापि तदुभयमुच्यते। अतएव घेचादिढे क्त इत्यादौ आदिक्रियां वक्तुं आदि ढमिति स्वयं वक्ष्यति। ततश्च ढशब्देनात्र क्रियोच्यते क्रियायाश्च केवलायाः प्रयोगासम्भवात् क्रियावाचकं पदमित्यर्थः। इष्टार्थाविष्करणमाशीः आशिषि गम्यमानायां ढेन क्रियावाचकपदेन अस्तु भवतु भूयादित्यादिना योगे चतुर्थी स्याद्वेत्यर्थः। न हि क्रियारहितं वाक्यमस्तीति न्यायादेव क्रियापदप्राप्तौ तद्योगविधानं साक्षात्-क्रियापद-सम्बन्धार्थं अन्यथा दैत्येभ्योऽलं हरिरित्यादौ यथा भवतेर्गम्यमानत्वादलमाद्यैर्योगे चतुर्थी तथात्रापि सतां कल्याणमित्यादौ चतुर्थ्यापत्तेः। अथवा आशिषि गम्यमानायामिष्टार्थाविष्करणस्य यत् कर्म कल्याणादि तेन योगे चतुर्थी स्याद्वेत्यर्थः। अथवा ढे इति सप्तम्येकं न इति लुप्तप्रथमैकम्। आशिषि गम्यमानायां चतुर्थी स्याद्वा न तु ढे कर्मणि प्रयुज्यमाने इत्यर्थः। कर्मणि तु श्रीकृष्णः सतां शं करोतु इत्यादौ न स्यात्। आशिषि किं तेषां कुशलं भूत पक्षे षष्ठीविधानात् षष्ठ्यर्थ एवायं विधिरिति बोध्यम्। तेन ग्रामे कुशलं भूयादित्यादौ न स्यात्॥ २९६॥

श्रीरा·टी—आशिषि गम्यमानायां यस्य सम्बन्धोऽवगम्यते तस्माच्ची स्याद्वा न तु ढे सति। यद्यपि सामान्येनोक्तं तथाप्यभिधानाद्विशेषतो ज्ञेयम्। तथाहि कुशलायुष्यं प्रयोजनहितसुखशोभनार्थैरेव योगे ज्ञेयम्। सङ्ग्रः साधूनां कुशलं भवतीत्यर्थः। एवं सङ्ग्रः सतां वा आयुष्यं जीवितं प्रयोजनमर्थः पथ्यमुपकारकं शर्म सातं शोभनं भद्रं वा भवतु भूयाद्वा इत्यादि। स्वस्ति गोभ्यो ब्राह्मणेभ्यो भूयादिति पूर्वेण नित्यम्। हित-सुखयोरुभयत्र पाठादिनाशिष्यपि विकल्पार्थः। ढे तु शिवस्तव करोतु शम्। ढे निषेधस्तु न पाणिन्यादिसम्मतः। आशिषि किं आयुष्यं प्राणिनां घृतम्॥ २९६॥

## २९७। परिक्रियो धे वा ।

परिक्रियः ६।, धे ७।, वा ।१। ।

**भक्त्यै मुक्तिः परिक्रीता सद्भिर्विष्णो रुषारिभिः ।**

## २९८। गत्यर्थमन्यढे चेष्टावज्ञेऽनध्वाकाक-शूकशृगालनावन्ने वा ।

गत्यर्थमन्यढे ७।, चेष्टावज्ञे ७', अनध्वा—अन्ने ७', वा ।१। ।

**गत्यर्थमन्यत्यो र्ढे क्रमान्मार्गकाकादिवर्ज्जे चेष्टावज्ञयो र्थी स्यात् वा ।**

---

परिपूर्वस्य क्रीणातेः प्रयोगे धे करणे चतुर्थी स्यादित्यर्थः। भक्त्यै इत्यादि। विष्णोः सकाशात् सद्भिः साधुभिः भक्त्यै मुक्तिः परिक्रीता अरिभिः दैत्यैः रुषा क्रोधेन मुक्तिः परिक्रीतेत्यर्थः। भक्त्यै इति चतुर्थी रुषा इति तृतीया। वेतन एवायं विधिरिति क्रमदीश्वरश्रीपतिदत्तौ द्रोणाय द्रोणेन वा अहः परिक्रतो वैतनिकः। द्रोणवेतनेन कृत्स्नमहः स्वीकृतो वैतनिक इत्यर्थः। व्यवस्थार्थं परसूत्रे वाशब्देऽवश्यवक्तव्ये विभाषाद्वयमध्यवर्त्तित्वेऽप्यस्य विकल्पार्थं वा ग्रहणम् ॥ २९७ ॥

गोर-टी—परिपूर्वक्रीञो वेतनादौ धे ची वा स्यात्। नियतकालं कृत्वा स्वीकरणं परिक्रियः। सद्भिः विष्णोर्भक्त्यै मुक्तिः परिक्रीता विष्णुसेवनवेतनेन सालोक्यादिरूपा मुक्ति र्निबद्धा इत्यर्थः। अरिभिः शत्रुभिः रुषा द्वेषेण। उदाहरणद्वयेन विकल्पो दर्शित.। एवं द्रोणाय द्रोणेन वा परिक्रीतो वृषलः। किञ्चित् कालपर्य्यन्तं स्वीकृतवानित्यर्थः। परेः किं शतेन क्रीतोऽश्वः। परे धस्य भत्वमाहुः ॥ २९७ ॥

गत्यर्थश्च मन्यश्च गत्यथ मन्यौ तयोर्ढे तस्मिन्। चेष्टा च अवज्ञा च द्वयोः समाहारः चेष्टावज्ञं तस्मिन्। न अध्वा अनध्वा काकश्च शूकश्च शृगालश्च नौश्च अन्नञ्च तत् न तत् अतत् अकाक शूक-शृगालनावन्नं पश्चात् अनध्वा च अकाक शूक शृगालनावन्नञ्च द्वयोः समाहारः तस्मिन्। चेष्टा कायकृतव्यापारः परिस्पन्दनादिलक्षणेति केचित्। अपकृष्टत्वेनावज्ञा। ततश्च गत्यर्थधातोरध्वनि वर्जिते कर्मणि चेष्टायां गम्यमानायां चतुर्थी वा स्यात् मन्यतेः काकादिवर्जिते कर्मणि अवज्ञायां गम्यमानायां चतुर्थी वा स्यादित्यर्थः। व्रजाय व्रजतीत्यादि। पक्षे

व्रजाय व्रजति श्रीशो व्रजं व्रजति केशवः।
न त्वा तृणाय मन्येऽहं न त्वा मन्ये तृणं खल॥

चेष्टा किं—

म... द्वारकामिति त्वां मन्येऽहं जनार्दनम्।

अध्वादौ तु—

गच्छत्यनन्तः पन्थानं न त्वा काकं स मन्यते॥

---

व्रजं व्रजति। न त्वा तृणायेति। हे खल त्वा त्वां तृणाय न मन्ये तृणादप्यपकृष्टं मन्ये इत्यर्थः। मन्यतेर्येन कर्मणा अनादरो गम्यते तत्रैव चतुर्थी तेन न त्वा इत्यत्र न स्यात्। रामानन्दस्तु नत्वा तृणाय इत्युदाहरणज्ञापकात् नञ्सम्बन्धे विधिरयमित्याह तद्धेयम्। तृणाय मत्वा रघुनन्दनोऽय बाणेन रक्षःप्रधानन्निरास्थदिति भट्टिः। त्वां मन्येऽहं जनार्दनमिति प्रत्युदाहरणप्रयोगाभावात्। मन्यतेरप्राणिकर्मणि चतुर्थीति केचित् स्वमते प्राणिकर्मण्यकर्मणि च काकमध्ये शुकपाठात्। भवन्तं दृषदं मन्ये त्वां मन्येऽहं पिशाचकमित्यादौ तु व्यप्राप्तिपक्षे एव ज्ञेयम्। केचित्तु कुत्रापि विधिरपि न स्यात् तेन धाम कुमारसम्भवः स्वयम्भुवे नमस्कृत्य इत्यादि॥ २९८॥

श्रीरा-टी—गतिरर्थो यस्य सः स च मन्यश्च तत्तस्य ढं तस्मिन्। चेष्टा च अवज्ञा च तत् तस्मिन्। न अध्वा अनध्वा काकश्च शुकश्च शृगालश्च नौश्च अन्नञ्च तत्, न तत् अकाकशुकशृगालनावन्नम्। पुनः अनध्वा च तच्च तत् तस्मिन्। नञ्द्वयमुक्तं यथाक्रमदर्शनार्थम्। चेष्टायामित्युक्तेर्गतिरिह पादविहरणात्मिका तेन स्त्रियं गच्छतीत्यादावपि न स्यात् ग्राम्यार्थत्वात् चेष्टाकायकृतव्यापारः परिस्पन्दनादिलक्षणमित्येके तन्मते स्त्रियं गच्छतीत्यादौ गृहं प्रविशति इत्यादिवन्न स्यात्। वाशब्दस्य व्यवस्थावाचित्वात् अजां नयति गृहं प्रविशति गिरिशिखरमारोहति सागरं तरति इत्यादौ न स्यादेव ग्रामाय ग्रामं गन्ता वनाय वनं गमनमित्यादौ ढे ष्यपि न स्यात्। ग्रामस्य गन्ता वनस्य गमनमित्याद्यपि भागवृत्तिः। एके तु तादर्थ्ये च्यां सिद्धायां ग्रामाय समृच्छतीत्यादिषु समोगमृच्छेत्यादिना अढत्वान्मप्राप्तिनिरासार्थमिदमित्याहुः। न त्वा तृणायेति मन्यतेः येन ढेनानादरो गम्यते तत्रैव चौ तेन त्वाम् इत्यत्र न स्यात्। गच्छत्यनन्तम् इत्यादि अत्र मुख्यस्याध्वनो निषेधः। मुख्यत्वन्तु साक्षादभिमतदेशप्राप्तिहेतुत्वं तेन उत्पथेन पथि

२९९। यतोऽपायभीजुगुप्सापराजयप्रमादादानभूत्राणविरामान्तर्द्धिवारणं जं पी।

यतः ५।, अपाय—वारणं १।, जं १।, पी।१।।

यत एते तत् जसंज्ञं स्यात् तत्र पी।

---

गच्छतीत्यादौ स्यात्। पथः साक्षादभिमतदेशप्राप्तौ व्यवहितव्यापारवत्त्वेन गौणत्वात्। न त्वा काकमिति त्वां काकं न मन्यते काकादप्यपकृष्टं मन्यते इत्यर्थः। एवं न त्वा शूकं मन्ये न त्वा शृगालं मन्य इत्यादि। परे तु प्राणिमात्रे निषेधात्। काकशूकशृगालानामेव निषेध इत्याहुः। तन्मते शूकस्थाने शुनः पाठः अन्ये तु प्राणिषु काकशृगालावेव वर्जयन्ति॥ २९८॥

अपायश्च भीश्च जुगुप्सा च पराजयश्च प्रमादश्च आदानञ्च भूश्च त्राणञ्च विरामश्च अन्तर्द्धिश्च वारणञ्चेति समाहारः। एकदेशे ते यस्माद्भवन्ति तदपादानसंज्ञं स्यात् तत्र पञ्चमी स्यादित्यर्थः। अपायो विश्लेषः पूर्वसंयोगनाशस्तस्य चोभयनिष्ठत्वेन वृक्षात् पत्रं पततीतिवत् पत्राद्वृक्षस्तिष्ठतीत्यप्रयोगापत्तेः वस्तुतस्तु अपपूर्वं अयङ्गतौ भावे घञि अपायश्चलनम्। यस्माद्वस्तुनो वस्त्वन्तरस्य च चलनं भवति तदपादानमित्यर्थः। तेन पत्राद्वृक्षस्य चलनाभावात् पत्रस्य न अपादानत्वम्। भीर्भयम्। यथा व्याघ्रात् बिभेति। निन्दया मनोनिवृत्तिर्जुगुप्सा। यथा पापात् जुगुप्सते धीरः। एवं बिभत्सते परस्त्रीभ्य इति हलायुधः। पराजयः सोढुमशक्त्या निवृत्तिः। यथा सिंहात् पराजयते हस्ती। अन्यत्र हस्तिनं पराजयते सिंहः। प्रमादः शास्त्रविहितकर्माकरणम्। यथा धर्मात् प्रमाद्यति नीचः। आदानं ग्रहणम्। यथा कूपाज्जलं गृह्णाति विप्रः। एवम् उपाध्यायात् ग्रन्थमधीते छात्रः पठति शृणोति जानातीत्यादि। भूरुत्पत्तिः प्रादुर्भावश्च। यथा पितुः पुत्रो जायते हिमवतो गङ्गा प्रभवति। त्राणं रक्षणं यथा व्याघ्रात् गां रक्षति गोपः। विरामो विरतिः। यथा जपाद्विरमति विप्रः। अन्तर्द्धिरन्तर्धानं लुक्कायनमिति यावत्। यथा गुरोरन्तर्धत्ते शिशुः। एवं निलीयते पलायते लुक्कायते लुक्कायतीति लुञ्चापनयने कर्मणि क्विपि लुक्। लुक्कायः शरीरं यस्य स लुक्कायः। एतेन इवाचरतीति क्यौ साध्यं वारणं निवारणम्। यथा यवेभ्यो गां निवारयति। विभीषणेत्यादि। विभीषणः पदाद्भ्रष्टः पदात् स्थानात् भ्रष्टश्चलित इत्यर्थः भ्रातुर्भीतः भयं प्राप्त इत्यर्थः। जुगुप्सितः

विभीषणः पदाद्भ्रष्टो, भ्रातुर्भीतो, जुगुप्सितः ।
पापात्, पराजितो दुःखात्, अप्रमत्तो विधेः सतः ॥

पापात् निन्दया पापान्निवृत्त इत्यर्थः । पराजितो दुःखात् दुःखं सोढुमशक्त्या निवृत्त इत्यर्थः । अप्रमत्तो विधेः शास्त्रविहितकर्मणोऽनिवृत्तो इत्यर्थः । सत आत्तविद्यः आङ्पूर्वदाञ् ग्रहणे वर्त्तते । ततः कर्मणि क्तः यचस्त्वेति तकारादेशः आत्ता गृहीता विद्या येन स आत्तविद्यः सतः पण्डितात् गृहीतविद्य इत्यर्थः । स मुनेर्जातः मुनेर्विश्रवसो जातो भूत इत्यर्थः । भ्रातुस्त्रातो निजैः आत्मीयैः भ्रातुः रावणात् वधोद्यतात् त्रातो रक्षित इत्यर्थः । भवात् विरतः भवात् संसारव्यापारात् विरतो निवृत्त इत्यर्थः । अन्तर्हितो दुष्टात् रावणात् अन्तर्हितो लुक्कायित इत्यर्थः । अन्तर्हित अन्तरशब्दे पूर्वे डुधाञलि अकर्मकत्वात् कर्त्तरि क्तः । शोकात् रामेण वारितः त्वामहं लङ्काराजं करिष्यामीत्यादि प्रियवचनमुक्त्वा शोकान्निवारित इत्यर्थः । कुतो भवान् अयोध्याया इत्यादि प्रश्नाख्यानयोरागत इत्यस्याध्याहारेणैव अपायसिद्धौ पञ्चमी ॥ २९९ ॥

श्रीरा-टी—अपायो विश्लेषः भीर्भयम् । जुगुप्सा गर्हया चित्तनिवृत्तिः । पराजयः सोढुमशक्तिः प्रमादोऽनवधानता । आदानं नियमतो वाक्यग्रहणं भूरुत्पत्तिः प्रादुर्भावश्च । त्राणं रक्षा । विरामोऽश्रद्धया चित्तनिवृत्तिः । अन्तर्द्धिरन्तर्द्धानम् । वारणं प्रवृत्तिविघातः । यत एते इति । अपायाद्यवधित्वेन यद्विवक्ष्यते तज्ज संज्ञं स्यात् । तच्चत्रिविधम् । निर्दिष्टविषयं किञ्चिदुपात्तविषयं तथा अपेक्षितक्रियञ्चेति त्रिधापादानमुच्यते । युतसाध्यक्रियं यत् स्यान्निर्दिष्टविषयन्तु तत् । उह्यसाध्यक्रियं यत् स्यादुपात्तविषयन्तु तत् । अपेक्षितक्रियं तत् स्याद्यत् क्रियाशून्यमत्र हि । क्रमेणोदाहरणानि । वृक्षात् पर्णं पतति घनाद्विद्योतते विद्युन्मेघान्निःसृत्य विद्योतत इत्यर्थः । श्रोत्रिभ्यो माथुरा आढ्यतरा इत्यत्र नियमेन उत्कर्षक्रिया गम्यते । नियमश्चावश्यकता । ये तावदाढ्यतरा भवन्ति ते दुर्गतेभ्यः उत्कृष्टसुखभाजो भवन्ति इत्यर्थः । एवं माथुरेभ्यः श्रोत्रा दीनतरा इत्यत्र नियमेनापकर्षक्रिया गम्यते इति । अपसरतो मेषादपसरति मेष इत्यादौ एकस्यावधित्वं विवक्ष्यते । यदा तु विवक्ष्यते तदा मेषावपसरत इति एवं वृक्षस्य पर्णं पततीति सम्बन्धमात्रस्य विवक्षितत्वात् । तत्र भीत्रार्थयोर्भयहेतुः । भयादीनामवधित्वेन यद्विवक्ष्यते तज्जसंज्ञम् । तत्र भीत्रार्थयोः भयहेतु पराजेर्यत् सोढुमशक्यम् । आदाने नियमतो वाक्यग्रहणस्य य आख्याता । उत्पत्तिकर्त्तुर्यत् कारणं प्रादुर्भावकर्त्तुर्यदाद्योपलम्भनस्थानम् । अन्तर्द्धानकर्त्ता यस्यादर्शन-

आत्तविद्यो, मुनेर्जातो, भ्रातुस्त्रातो निजे, र्भवात्।
विरतो, ऽन्तर्हितो दुष्टात्, शोकात् रामेण वारितः॥

मिच्छति। जुगुप्सा विरामप्रमादवारणार्थानां यन्निमित्तं तस्यैवावधित्वविवक्षायां जसंज्ञेत्यर्थः। विभीषण इत्यादि। विभीषणः पदाद्भ्रष्टः लङ्काया रामस्य निकटं गत इति यावत्। स कीदृशः भ्रातुः रावणाद्भीतः तस्य भ्रातैव भयहेतुः कुञ्चिकयैनं भाययति इत्यादौ तु अवधित्वाभावान्न जत्वम्। पापात् जुगुप्सितः पापं निन्दन् ततो निवृत्तः। जुगुप्सायाः पापमेव निमित्तम्। दुःखात् पराजितः दुःखं सोढुं न क्षमः पराजयः सोढुमशक्यमेव दुःखम्। अन्यत्र रिपून् पराजयते अभिभवतीत्यर्थः। अविधेः प्रमत्तः अशास्त्रविहितात् कर्मणः प्रमत्तः प्रमादस्याशास्त्रविहितकर्मैव निमित्तम्। यद्वा विधेः अप्रमत्त इति अशब्दो निषेधकः। आदौ जत्वं पश्चान्निषेधाकारेण सह सम्बन्धः। ग्रामान्निर्गच्छतीतिवत्। एवं धनात् प्रमाद्यति इत्यादि। सत आत्तविद्यः पण्डितान्नियमतो गृहीतवाक्यः गुरोरध्ययनस्य नियमपूर्वकत्वात् नियमतो वाक्यस्य सत आख्यातृत्वं एवमुपाध्यायात् शृणोति पठतीत्यादि अनियमे तु नटस्य शृणोति। मुनेर्विश्रवसो जातः उत्पन्नः विभीषणस्य मुनिर्निमित्तकारणम्। जायमानस्य प्रकृतेः कारणं तद्द्विविधं समवायिनिमित्तञ्च तत्र यत् समवेतं कार्य्यमुत्पाद्यते तत् समवायि यथा मृत्पिण्डाद्घटो जायते वीजादङ्कुरो जायते इत्यादि एतद्भिन्नं निमित्तं यथा चक्राद्घटो जायते पुत्रात् प्रमादो जायते इत्यादि समवायिकारणप्रत्यासन्नमवधृतसमवायि च कारणान्तरमित्यन्यः यथा तन्तुद्वयसंयगात् पटो जायते इति शृङ्गात् शरो जायते गोमयाद्वृश्चिको जायते इत्यत्र शृङ्गादि समवायिकारणं शृङ्गादि समवायिशरादेरपृथक्सिद्धत्वात्। भ्रातूरावणान्निजैरात्मीयैस्त्रातः। रावणो विभीषणस्य भयहेतुरेव एवं काकात्तिलां स्त्रायते इत्यत्र त्वप्राणिनि भयमुपचरणीयं भयस्य प्राणिधर्मत्वात्। भवाद्विरतः संसारमशुद्धधन्निवृत्तः विरामस्य भवो निमित्तं दुष्टादन्तर्हितः आत्मनो रावणाददर्शनमिष्टवान्। रामेण शोकाद्वारितः शोके प्रवर्त्तमानो निरुद्धः रावणस्य निमित्तं शोकः। एवं यवेभ्यो गां रक्षति कूपादन्धं वारयति सत्यात् स्खलति आचाराच्चलति विप्राद्वस्त्रं गृह्णाति इत्यादौ गौणागौणापायावधित्वेन विवक्षितत्वात् जत्वं एवं सति व्याघ्रो मां पश्येत्। तदा ध्रुवं मृत्युरिति मनसा तं प्राप्य ततो निवर्त्तत इत्यादौ क्रमेणैव गौणापायत्वात् सिद्धेस्त्यादि ग्रहणं प्रपञ्चार्थमित्यन्ये। व्याघ्रादिभिरिति दस्युभ्यो रक्षितः स्वार्थ इत्यादौ निवृत्त्यर्थस्याविवक्षितत्वे पूर्वेणाप्राप्ते ग्रहणमिति परे॥ २९९॥

**३०१। अन्यारभ्यार्थारात् वहिर्विनर्त्ते प्रति-पर्य्यपाङ् दिक्शब्दै र्हेतु यवर्थे च।**

अन्य—शब्दैः ३॥, हेतुयवर्थे ७, च।१।।

**एभिर्योगे हेतौ यवन्तस्यार्थे च पी स्यात्।**

**आङ् व्याप्तिसीम्नोस्त्यागेऽन्यौ प्रतिदाननिधौ प्रति॥**

---

अन्यश्च आरभ्यश्च अन्यारभ्यौ तौ अर्थौ ययोस्तौ अन्यारभ्यार्थौ। अन्यार्थ आरभ्यार्थश्चेत्यर्थः। दिशि वर्त्तमानाः शब्दाः दिक्शब्दाः। दिशः प्राधान्यात् वर्णसंक्षेपार्थञ्च दिग्देशकालवाचकानां दिक्शब्देन निर्देशः। अतएव तद्धितेऽपि दिक् शब्दो दिग्देशकालेस्तादिति स्वयं वक्ष्यति। दिक्शब्दाश्च पूर्वापरादयः प्रागुदक् प्रत्यगादयश्च। किञ्चात्र दिग्देशकालानां त्रयाणामेव ये वाचकास्तेषामेव ग्रहणम्। तेन कालमात्रवाचकस्य मासादेर्न प्रसङ्गः। अन्यारभ्यार्थौ च आराञ्च वहिश्च विनाच ऋतेच प्रतिश्च परिश्च अपश्च आङ्च दिक्शब्दाश्च ते अन्यारभ्यार्थारादृहिर्विनर्त्ते प्रतिपर्य्यपाङ्दिक् शब्दास्तैः। इर्विंतिक्वाच् स्थाने यवादेशः तस्य केवलस्यासम्भवात्तदन्तस्य ग्रहणं तस्यार्थो यवर्थः हेतुश्च यवर्थश्चेति हेतुयवर्थं तस्मिन्। अन्यार्थैरारभ्यार्थैरारादिभिरष्टभिर्दिग्वाचकशब्दैश्च योगे हेतौ प्रयुज्यमानाल्लिङ्गादयवन्तस्यार्थे गम्यमाने च पञ्चमी स्यादित्यर्थः। प्रतिपर्य्यपां चतुर्णामर्थविशेषेष्वेव-ग्रहण मित्याह आङ्व्याप्तिरित्यादि। अत्र आङ्व्याप्तिसीम्नोरर्थयोर्वर्त्तते। व्याप्तिरभिविधिः। सीमा अवधिः। प्रतिः प्रतिदाननिधौ वर्त्तते दानञ्च निधिश्चेति समाहारे दाननिधिः सूत्रत्वात् पुंस्त्वं प्रतेर्दाननिधिः प्रतिदाननिधिः तस्मिन् प्रतिदाने प्रतिनिधौ चेत्यर्थः। प्रतिदानं विनिमयः प्रतिनिधिस्तुल्यः। अन्यौ आङ् प्रत्योर्मध्यवर्त्तिनौ पर्य्यपौ त्यागे वर्जने वर्त्तेते। नेतरो विष्णोरीशानात् शिवात् इतरो भिन्नो न। एवं भिन्न अन्य इत्यादि। भवात् प्रभृति सोऽर्च्यते। भवात् जन्मनः प्रभृति स विष्णुरर्च्यते। प्रातःकालं समारभ्य जपेन्मध्यदिनावधि इत्यादिकन्तु उपपदविभक्तेः कारकविभक्तिर्गरीयसीति न्यायात् कर्मणि द्वितीया। सोऽस्मदारात् अस्माकं निकट इत्यर्थः वहिस्त्वत् तव वहिरित्यर्थः। वृषात् विना शं न, वृषात् पुण्यादित्यर्थः। वृषादृतेऽर्थोऽनार्थोधनं प्रयोजनं वा विना ऋते इति द्वाभ्यां योगे धिक् समयेत्यादिना द्वितीया च विनाशब्देन योगे सह्ञ वारणेत्यादिना तृतीया च सामान्यविशेषाभावाद्भवतीति बोध्यम्। भक्तः प्रत्यसृतं शम्भोः शिवस्य भक्तः

नेतरो विष्णुरीशानात्, भवात् प्रभृति सोऽर्च्यते।
सोऽस्मदारात् वहिस्त्वत्, शं विना नार्थो वृषादृते॥
भक्तः प्रत्यमृतं शम्भोः, प्रद्युम्नः केशवात् प्रति।
पर्य्यनन्तात् त्रयस्तापाः, आमृत्योः सेव्यतां हरिः॥

---

प्रतिदानं मुक्तिः यः शम्भौ भक्तिं करोति शम्भुस्तस्मै मुक्तिं ददातीत्यर्थः। प्रद्युम्नः केशवात् प्रति प्रद्युम्नः कामदेवः केशवस्य तुल्य इत्यर्थः। पर्य्यनन्तात् त्रयस्तापाः। आध्यात्मिकाधिदैविकाधिभौतिकसंज्ञकास्त्रयस्तापा अनन्तेन वर्जिता इत्यर्थः। अनन्तस्य त्यागे जीवानां त्रयस्तापा भवन्तीत्यर्थः एवं अपानन्तात् त्रयस्तापा इत्यपि बोध्यम्। आमृत्योः सेव्यतां हरिः मृत्युपर्य्यन्तं सेव्यतामित्यर्थः। ब्रह्मा-स्त्यासकलात्। ब्रह्म ईश्वरः सकलं व्याप्यास्तीत्यर्थः। पूर्वः कृष्णाद्रामः पूर्वः पूर्वकालीन इत्यर्थः। कृष्णादवरो गदः अवरः पश्चिमकालीन इत्यर्थः। एवं दिशिग्रामात् पूर्वस्यां प्राच्यां गङ्गादिशि गृहात् पूर्वः प्रागश्वत्थः काले माघात् पूर्वः प्राक् पौषः। एवमन्यदूह्यम्। आनन्दादित्यादि। ईश्वरः शिव, आनन्दाद्धेतोः शैलात् शैलमारुह्य आसनात् आसने उपविश्य अलकां कुवेरपुरीमीक्षते पश्य-तीत्यर्थः। आरुह्येति यवन्तस्यार्थे शैलादिति कर्मणि पञ्चमी। उपविश्येति यवन्तस्यार्थे आसनादित्यधिकरणे पञ्चमी। कर्माधिकरणाभ्यामन्यत्र यवर्थे पञ्चमी न स्यादिति प्राञ्चः। अतएव तन्मतस्वीकारार्थं तयोरेवोदाहृतम्। अन्यत्र बलेनानयति बलमाकृष्य नयतीत्यर्थः इत्यादौ न स्यात्॥ ३००॥

श्रीरा-टी—अन्यश्च आरभ्यश्च तावर्थौ येषां ते दिशि दिष्टाः दिक् शब्दाः। अन्यारभ्यार्थाश्च आराच्च वहिश्च विना च ऋते च प्रतिश्च परिश्च अपश्च आङ्च दिक्शब्दाश्च ते तैः। यपोऽर्थो यवर्थः हेतुश्च यवर्थश्च तत्तस्मिन्। येन विधि-स्तदन्तस्येति न्यायादाह यवन्तस्येति। आङादीनां नानार्थत्वादर्थविशेष एवात्र ग्रहणं इत्याह। आङ् व्याप्तिः इत्यादि। प्रतिदाननिधावित्यागमशासनस्यानित्य-त्वात् न गुण्। प्रतिदाने परिवर्त्ते प्रतिनिधौ मुख्यसदृशे प्रतिरत्र गृहीत इत्यर्थः। नेतर इत्यादि ईशानाद्विष्णुर्नेतरः शिवाभिन्नः एवं सुरादन्येऽसुरवर्गा इत्यादि परे तु नीचार्थेतरशब्दं पृथक् गृह्णन्तीति भवात् प्रभृति जन्मन आरभ्य स शिवो-ऽर्च्यते अर्थादस्माभिः स्नानात् प्रभृत्येव स पल्लवानीति कुमारसम्भवे। परेतु आर-भ्यार्थ शब्दं पृथक् गृह्णन्तीति आङ् पूर्वकत्वात्। स शिवोऽस्मदारात् अस्माकं समीपवर्त्ती स त्वद्वहिस्त्व दूरवर्त्ती क्वचिदपवादविषयेऽप्युत्सर्गस्य निवेशात् करस्य

ब्रह्मास्त्यासकलात्, पूर्वः कृष्णाद्रामोऽवरो गदः।
आनन्दादीश्वरः शैलादासनादीक्षते ऽलकाम्॥
शैलमारुह्य आसने उपविश्येत्यर्थः।

---

करम्भोवहिः। वहिरम्भोजवनस्य वानरा इत्यादौ पी। वृषाद्धर्मोहिना शं न वृषाद्दतेनार्थो भवतीत्यर्थः। शम्भोर्भक्तेः सेवायाः प्रत्यस्तं परिवर्त्तो मोक्षः। केशवात् प्रति प्रद्युम्नः कृष्णस्य प्रधानः सदृशः अनन्तात् परि विष्णोस्त्यागात् वयः कायिकवाचिकमानसास्तापा भवन्तीत्यर्थः। एवमप्यनन्तादिति बोध्यम्। आमृत्योर्मृत्युपर्य्यन्तं हरिः सेव्यतां विष्णुराराध्यतां अस्मादस्माभिः। आसकलात् सर्वं चराचरं जगदभिव्याप्य ब्रह्माऽस्ति। अत दिक् शब्देति करणाद्दिग्देश-कालार्थ पूर्वादीनां आ आदित्यान्तानाञ्च ग्रहणम्। अत आह पूर्वः कृष्णाद्राम इति कृष्णात् पूर्वकाले जातो बलराम इत्यर्थः कृष्णादवर उत्तरकाले जातोगद इत्यर्थः। एवं इयं अस्याः पूर्वादिक् अयमस्मात् पूर्वोदेशः माघात् पूर्वः पौषः दक्षिणाहि वनान्नदी उत्तराहि वसन् रामः समुद्रादृक्षसां पुरं इति भट्टिः। उत्तरा जाह्नवी काश्या इत्यादि। प्राक् ग्रामात् प्रत्यङ् नगरादित्यादि गम्यमान दिक् शब्दैरपि। लः सि औजसित्यादि ज्ञापकात् आनन्दादित्यादि यस्यापि तु यबर्थ इति यद्यपि सामान्येनोक्तं तथापि विशेषतो ज्ञेयम्। भवतीति व्याख्यानतो विशेषणार्थप्रतिपत्तिर्नहि सन्देहादलक्षणम्। तथा हि अधे ऋणे हेतौ पी नित्यं गुणे हेतौ अस्त्रियां पी वा स्यात्। शतान् बन्धः शतस्य ऋणस्य बन्धनहेतुत्वम्। त्वां प्राप्तायां वचनं यत्ते शतेन वन्दितः। ज्ञान्तवन्धेः शतस्य प्रयोजकघत्वं जाड्याद्बद्धः जाड्येन बन्धः परिख्यात्येन मुक्तम्। परिख्यात्यान्मुक्तः परिख्यात्यं तत्त्वज्ञानं इह गुणशब्देन द्रव्याश्रितगुणस्यैव न ग्रहणं किन्तु सम्बन्धिरूपस्य परार्थरूपापन्नस्येति तेन वह्निरत्र धूमादित्यादि। स्त्रियान्तु विभ्यया मुक्तः स्त्रीशब्दे-नावीवूपां ग्रहणात् घटोनास्ति इहानुपलब्धेरित्यत्र न निषेधः। एवं अप्रयुक्तस्य यबन्तढेडे च पी स्यात्। यथा ईश्वरः शिवः आनन्दाद्धेतोः शैलादासनादल-काख्यां पुरीं ईक्ष्यते पश्यतीत्यर्थः। शैलादिति ढे आसनादिति डे इत्याह शैलमारुह्य इत्यादि। ढडादन्यत्र बलेनानयति बलेनाकृष्य इत्यर्थः। अत्राहुः। प्रश्नोत्तरयोः। अनयोः पी स्यात्। कुतस्त्वं वनात्। यत्र तु आगच्छामीत्यादि क्रिया अध्याक्रियते दाननिधिः तत्र पूर्वेणैव पी स्यात्। यत्र तु नाध्याक्रियते तत्रैवास्य विषय इत्यन्ये। वस्तुतस्तु उपात्तविषयत्वात् पूर्वेणैव निःसृत्येत्यध्याहारात्॥ २००॥

## ३०१। आराद्र्थैः।

वा।१।, आराद्र्थैः ३॥।

दूरान्तिकार्थैः पो स्यात् वा।

रामाद्दूरस्य यो दूरं पापाद्दुःखस्य सोऽन्तिकम्।

---

आरादित्यव्ययस्य अर्थ इव अर्थो येषां ते आराद्र्थाः तैः। आराद्दूरसमीपयो-रित्यमरः। इत्यत आह। दूरान्तिकार्थैरिति। रामादित्यादि। यो रामाद्दूरं स पापादन्तिकम्। यो जनः रामस्य दूरे तिष्ठति स पापस्य अन्तिके तिष्ठतीत्यर्थः। अत्र दूरम् अन्तिकञ्च इत्युभयधर्मवाचितया सप्तम्यर्थे द्वितीयैक-वचनान्तम्। पक्षे यो रुद्रस्य दूरं स दुःखस्य अन्तिकमिति सम्बन्धे षष्ठी। वा शब्दोऽत्र व्यवस्थावाची तेनेदं विवृणोमि। धर्म्मवाचि दूरान्तिकार्थात् सप्तम्यर्थे द्वितीया तृतीया पञ्चमी सप्तमीनामैकवचनानि स्युः। ग्रामाद्दूरं वसति दूरेण वसति दूराद्वसति दूरे वसति। धर्म्मवाचिनः किं ग्रामाद्दूरो वृक्षः दूरौ वृक्षौ दूरा वृक्षाः। एवमन्तिकादप्युदाहरणीयम्। एवं धर्म्मवाचिस्तोकाल्पकतिपय कृच्छ्रात् करणात् तृतीया पञ्चम्यौ। स्तोकेन मुक्तिः अल्पेन नष्टः अल्पान्नष्टः कतिपयेन गतः कतिपयाद्गतः कृच्छ्रेण लब्धः कृच्छ्राल्लब्धः। धर्म्मवाचिनः किं स्तोकेन मधुना मत्तः। एवं पृथङ् नानाभ्यां तृतीया पञ्चम्यौ। घटेन घटात् पृथक् पटः गवा गो नाना महिषः। न चैतयोरन्यार्थत्वेनैव अन्यारभ्य इत्यादिना पञ्चमी स्यादिति वाच्यं सह वारणेत्यादिना विशेषविधानात् बाधितत्वे न पञ्चमी प्रसङ्गाभावात्। एवञ्च आ आहि बहिरधोहि पञ्चमी षष्ठ्यौ। ग्रामाद्दक्षिणा ग्रामस्य दक्षिणाद्वृक्षः ग्रामात् दक्षिणाहि ग्रामस्य दक्षिणाहि वनम्। एवम् उत्तरा उत्तराहि। उत्तराहि वसन् रामः समुद्राद्रक्षसां पुरमिति भट्टिः। गृहाद्वहिः गृहस्य वहिः करस्य करभो वहिरित्यमरः। वहिरङ्गो यवनस्य वायसा इत्यादि। एवं पादादधः पादस्याधः कफोणिः कूर्परादधः॥३०१॥

श्रीरा·टी—वाराद्र्थाः येषां ते तैः। आराद्दूरसमीपयोरित्यत आह दूरान्ति-कार्थैरिति। स्तोकाल्पकतिपय कृच्छ्रात् वाधसत्वे। येभ्य एभ्यः पो वा स्यान्न तु सत्वे। स्तोकान्मुक्तः स्तोकेन मुक्तः। एवम् अल्पादल्प इत्यादि सत्त्ववाचिनस्तु स्तोकेन मधुना मत्तः धात् किं स्तोकम्॥ २०१॥

**३०९। समार्थैनाद्यस्तस्ताद्धितसुखैर्निर्द्धारे सम्बन्धे ढे च षी।**

समार्थ—सुखैः ३।।।, निर्द्धारे ७।, सम्बन्धे ७।, ढे ७।, च ।१।, षी ।१।।

**एभिर्योगे एषु च षी स्यात्।**

---

समोऽर्थो येषां ते समार्थाः। समानसमतुल्यसदृशादयः समार्थाश्च एनश्च आश्च रिश्च अस्च तस्च तात्च हितञ्च सुखञ्च तानि समार्थैनाद्यस्तस्ताद्धित सुखानि तैः। एन आ-रि अस् तस् तात् षड़ेते तद्धिताः। तेषाञ्च केवलाना-मसम्भवात् तदन्तानां ग्रहणम्। ततश्च वैनोऽपीत्यत्र पूर्वेणेत्यादि। दक्षिणो-त्तरादाहीति आदक्षिणं उत्तराहीति। कुतः रि इति कुतः इत्यादिना निपा तितोऽरि उपरि। अतएव अस् इत्यस्पुर अधः अवः। तस्त्तोरिति तस्पूर्वतः इत्यादि दिक्शब्दादिति। तात्पुरस्तादिति निपातनात् पश्चादुपरिष्टादिति च। वाधराञ्चात्ता इत्यादेशान्तेन योगेऽपि षष्ठीं विधाय। ग्रामस्य उत्तराद्वसति। एवं दक्षिणात् अधरात्। जातिगुणक्रियाणामुत्कर्षेणापकर्षेण वा सजातीयात् पृथक् करणं निर्द्धारः। यथा मनुष्याणां ब्राह्मणः श्रेष्ठः मनुष्याणां चण्डालो हीनः गवां कृष्णा बहुक्षीरा अध्वगानां धावन्तः शीघ्रतमाः। सम्बन्धस्तु अवयवावयविजन्यजनक-सम्बन्धादिरनेकविधः। यथा विष्णोः पदं राज्ञो धनमित्यादि। समार्थैरेनादि षट् तद्धितान्तैर्हितसुखाभ्याञ्च योगे निर्द्धारणे सम्बन्धे कर्मणि च षष्ठी स्यात् इत्यर्थः। यः सर्वस्येत्यादि। तस्य पदयोर्भजे इत्यन्वयः स क इत्याह। यः सर्वस्य समः तुल्यः। यः सर्वस्य दक्षिणेन स्थितः। स्थित इति वर्त्तमाने क्तः। अदूरदक्षिणं तिष्ठतीत्यर्थः। यः सर्वस्य उत्तरा उत्तरस्यां दिशि अदूरे स्थितः। यः सर्वस्य उपरि स्थितः यः सर्वस्य अधः स्थितः। यः सर्वस्य पूर्वतः स्थितः। यः सर्वस्य पश्चाच्च स्थितः। अखिलं यस्य हितं अखिलं यस्य सुखं एतानि स्पष्टानि स देवानां वर्य्यः श्रेष्ठ इति निर्द्धारणम्। निर्द्धारणे बहुवचनमेवेति सम्प्रदायः। यत्तु श्रेष्ठं कृपालुष्वकारेरित्येकवचनं तदकारेः समूहवाचित्वात्। तस्य पदं इति अवयवावयवि सम्बन्धः। पदयोर्भजे इति कर्मणि षष्ठी। केचित्तु समः समोऽर्थः। अर्थः प्रयोजनार्थः इति मत्वा उदाहरणेऽपि यः सर्वस्य समोऽर्थश्च इति वदन्ति। सामान्यतः कर्मणि विहितापि षष्ठी धातुविशेषाणामिति बोध्यम्। अन्यथा सर्वधातूनां कर्मणि षष्ठ्याः कर्त्तव्यत्वे एकदैव कर्मणि द्वितीया-

य: सर्वस्य समो यश्च दक्षिणेनोत्तरा स्थित:।
उपर्य्यध: पूर्वतश्च पश्चात्, यस्याखिलं हितम्।
सुखञ्च, तस्य देवानां वर्य्यस्य, पदयोर्भजे ॥

---

षष्ठ्योर्विधानस्योचितत्वात्। तथापि तं मुक्तये भज इत्यत्र द्वितीयादर्शनाच्च पदयोर्भजे इत्यत्र षष्ठी दर्शनया च धातुविशेषाणां कर्म्मण्यपि विभाषयैव षष्ठी स्यादिति सूचितं तदेवाहं विवृणोमि स्मृत्यर्थदयेषां कर्म्मणि षष्ठी वा। मातु: स्मरति मातरं स्मरति वा पुत्र:। एवं ध्येतुचिन्तने ध्यायति अधीनत्वस्मृत्याम् अध्येतीत्यादि। भक्तस्य दयते भक्तं दयते भक्तं दयते महेश:। मधुनो मधु इष्टे साधु: यथेष्टं विनियुङ्क्ते इत्यर्थ:। ईशलङ ऐश्वर्य्ये इत्यस्य ईश्वरी भाववाचित्वेनाकर्मकत्वेऽपि धातूनामनेकार्थत्वेन यथेष्ट-विनियोगार्थत्वात् सकर्म्मकत्वम्। कर्म्मणि प्रत्यये तु पुत्रेण माता स्मर्य्यते महेशेन भक्तो दयते साधुना मधु ईश्यते इत्यादावुक्तार्थत्वे प्रथमैव। जौमरास्तु एषां कर्मणि विद्यमानेऽपि भावे प्रत्यये कर्म्मणि नित्यं षष्ठीं विधाय मातु: स्मर्य्यते पुत्रेण मातु: स्मृतं भक्तस्य दयते शिवेन भक्तयोर्दयितं भक्तानामीष्यते इत्युदाहरन्ति। रोगार्थ स्याज्वरं स्वार्थे कर्त्तरि ज्वरिविवर्जितस्य रोगार्थधातो: कर्मणि षष्ठी स्याद्वा तद्वात्वर्थे कर्त्तरि सति चौरस्य चौरं रुजति रोगम् एवं असकरोगे आमयति। स्वार्थे कर्त्तरि किं नदीकूलं रुजति। अज्वरे किं चौरं ज्वरयति ज्वर:। चौरं सन्तापयति सन्ताप इत्यपि जौमरा:। तच्चान्द्राद्यसम्मतम्। करोते: प्रतियत्ने। सतो गुणान्तराधानं प्रतियत्न:। तस्मिन्नर्थे करोते: कर्मणि षष्ठी स्याद्वा। पटस्योपस्कुरते पटमुपस्कुरुते। उपस्कुरुते सूचनावक्षेपण इत्यादिनात्मनेपदे सम्परे: सुम् उपात्विति सुम्। आशिषि नाथ:। इष्टार्थप्रापणेच्छा आशी:। अपुत्रक: पुत्रस्य पुत्रं वा नाथते पुत्रो मे भूयादित्या-शंसते इत्यर्थ:। आशिषि किं नृपं भूमिं नाथते विप्र: याचते इत्यर्थ:। हनजस-नटक्राथपिषां हिंसायाम्। हनत्तौ गतौ वधे जसक बधेऽनादरे नटकभ्रंशे क्राथसकि-बधे धोपिश् लृचूर्णने इति पञ्चानां कर्मणि षष्ठी स्याद्वा हिंसायां चौरस्य चौरं निप्रहन्ति निहन्ति प्रणिहन्ति प्रहन्ति चौरस्य चौरम् उज्जासयति चौरस्य चौरम् उन्नाटयति। चौरस्य चौरं क्राथयति चौरस्य चौरं पिनष्टि। द्विष: शन्तस्य। चौरस्य चौरं द्विषन्। शतन्तस्य इति किं चौरं द्वेष्टि। व्यवहृञपणि दिव्यतीनां व्यवहारे। व्यवहारोऽत्र द्यूतं क्रयविक्रयौ च। एषां कर्मणि षष्ठी स्याद्वा द्यूते क्रये विक्रये च। शतस्य शतं वा व्यवहरति शतस्य शतं वा पणायति शतस्य शतं वा प्रतिदीव्यति व्यवहारे किं हिरण्यानि व्यवहरति गणयतीत्यर्थ:। गुरुं पणायते स्तौतीत्यर्थ:।

शत्रुं प्रति दीव्यति जिगीषतीत्यर्थः अनुपसर्गस्य दीव्यतेर्व्यवहारार्थे कश्चित् षष्ठी नित्यमिति जौमराः। शतस्य दीव्यति एवं शिष्टप्रयोगानुसारात् अन्यत्रापि यथा मासानामश्नीयादिति भाष्यम्। न चोपलेभे वणिजां पणाया इति भट्टिः। सा लक्ष्मी रुपकुरुते यया परेषामिति किराते। नारायणस्यानुकरोति। गुरु विप्र तपस्वि दुर्गतानां प्रतिकुर्व्वीत भिषक् स्वभेषजैः सुतस्योपकरोति यः। किं कुर्म्मः कस्य वा ब्रूमो नास्तीह भूतले इत्यादि दर्शनात् ग्रन्थकृता सामान्येनोक्तम्। ॥ ३०२ ॥

श्रीराटी—समोऽर्थो येषां ते सप्त आय तौ सौ ताभ्यां तौ सातौ पश्चात् समार्थाश्च एनश्च आय रिश्च अस्च तस्च सातौ च हितञ्च सुखञ्च तानि तैः। जातिगुणक्रियाभिः सजातीयव्यवच्छेदो हि निर्द्धारः विशिष्टधीहेतुः सम्बन्धः स चानेकप्रकारः स्वस्वामित्वजन्यजनकत्वावयवावयवित्वप्रतियोग्यनुयोगित्वाधाराधेयत्वादि। एभिर्योगे इति समार्थैः एनादित्यन्तैर्हितसुखाभ्याञ्च योगे जात्यादिभि र्यस्मात् सजातीयाद्यवच्छेदस्तस्मात् सम्बन्धस्योभयनिष्ठत्वेऽपि सम्बन्धस्य निरूपकत्वात् स्वाम्यादेः। यदुक्तं भेद्यभेदकयोः श्लिष्टः सम्बन्धोऽन्योऽन्यमिष्यते। द्विष्ठो यद्यपि सम्बन्धः षष्ठ्युत्पत्तिस्तु भेदकात्। महाकविप्रयोगदर्शनेन धुविशेषाणां यत् ढत्वेन विवचितं तस्मात् षी स्यात् इत्यर्थः। यं सर्वस्येति यः सर्वस्य शिवस्य समस्तुल्यः पूर्वेण वीच यः सर्वस्य दक्षिणेन दक्षिणस्यां दिशि स्थितः ढौ च पूर्वेण। यः सर्वस्य उत्तरा उत्तरस्यां दिशि स्थितः पूर्वेण पी च परे तु षीं नाहुः। यः सर्वस्य जगत उपरि यः सर्वस्य जगतोऽधः यः सर्वस्य जगतः पूर्वतः पूर्वकालवर्त्ती यः सर्वस्य जगतः पश्चात् उत्तरकालवर्त्ती पश्चादित्यात्येन निपातितम् एवं पुरस्तात् ग्रामस्य उपरिष्टात् वृक्षस्य उत्तराद्ग्रामस्य इत्यादि एतेषां ग्रहणं दिक्शब्दयोगे प्राप्तपीबाधनार्थम्। कफोणिः कूर्परादध इति उत्सर्गत्वात् पी। यस्य देवस्याखिलं चराचरं हितं मितं यस्याखिलं जगत्सुखं प्रीतिजनकं तस्य देवस्य पदयोरहं भजे चरणौ सेवयामि। तस्येत्यवयवावयवित्वसम्बन्धे षी। एवं चैत्रस्य धनं मैत्रस्य पुत्रः कायस्य पूर्वः जलस्य घटः घटस्याभावः इत्यादि। आदिना राहोः शिर इत्यत्र तु अभेदसम्बन्धे षीति। तस्य कीदृशस्य देवानां वर्य्यस्य केनापि गुणेन देवेभ्यः प्रकृष्टस्य। देवानामिति निर्द्धारणे पदयोरिति ढे। एवं मासानामश्नीयादिति भाष्यम्। न च स्निह्यति कस्यचिदिति भट्टिः। सा लक्ष्मीरुपकुरुते यया परेषामिति भारविः। नारायणस्यानुकरोति इत्यादि शिष्टप्रयोगः। एषु सम्बन्धमात्रविवक्षायां षीति परे। ननु ढविवक्षया यद्यपि ढ इति सामान्येनोक्तं तथाप्यविधानाद्विशेषतो ज्ञेयम्। स्मृत्यर्थदयेशां वा।

## ३०३। ज्ञोऽज्ञाने धे।

ज्ञ: ६।, अज्ञाने ७।, धे ७।

**शम्भोर्मुकुन्दे जानीते भक्त्या जानाति शङ्करम्।**

---

विष्णोरध्येति शम्भो: स्मरति भक्तस्य दयते। दुर्गाभक्तस्य ईष्टे हरि: यथेष्टं विनियुङ्क्ते इत्यर्थ:। पक्षे विष्णुमध्येतीत्यादि। कृञो गुणोत्कर्षे। येन धर्मेण यद्वस्तु लोके प्रकाश्यते स तस्य गुणस्तस्मात् गुणान्तरोत्पादन मुत्कर्षस्तत्र कृञो ढे षी वा स्यात् पटस्योपस्कुरुते पटं वा। सूचनावक्षेपण सेवेत्यादिना सम्। असन्तापि ज्वरि-रोगार्थानां स्वार्थघत्वे। सन्तापिज्वरिभिन्नानां रोगार्थानां ढे षी वा स्यात् रोगा-र्थस्य घत्वे सति। रोगश्चौरस्य रुजति चौरं वा आमयश्चौरस्य आमयति वा चौरमित्यादि। असन्तापिज्वरीति किं? रोगश्चौरं सन्तापयति रोगश्चौरं ज्वर-यति स्वार्थ घत्वे किं? नदीकूलं रुजति। नाथ्यादिनाथयोर्हिंसाशिषो:। नाथ्या-देर्हिंसायां नाथस्याशिषि गम्यमानायां ढे षी वा स्यात्। चौरस्य नाटयति चौरं वा। नाथ्यादिर्यथा। नाटिश्चक्राथिरुज्जासिर्हिषिनाञ्च शतन्त एव हि। प्रणिनिप्रप्रणिभ्यस्तुहनोऽथपिष्लृरित्यपि। नटक भ्रंशे क्रथक्रिबधे उत्पूर्वंज-सकबधे ताड़ने च। चुरादीनां एषां ञ्यन्तनिर्देशात् यत्र नाटिक्राथि उज्जासि इति स्वरूपं तत्रैवायं विधिस्तेन दस्युमनो नटदित्यादौ न स्यात् द्विषोऽत्रु वैरे शत चौरस्य द्विषन् चौरं वा। अशतन्तस्य तु चौरं द्वेष्टि एवं चौरस्य प्रणिहन्ति निप्रहन्ति प्रहन्ति निहन्ति चौरं वा पीपिष्लृ संचूर्णने। चौरस्य पिनष्टि चौरं वा। आशीरभिलषितप्रापणेच्छा। नाथते पुत्त्रस्य पुत्तं वा। अनयो: किं? पिनष्टि धाना: वटुरन्नं नाथते याचते इत्यर्थ:। पणिव्यवहृञोर्व्यवहारे। व्यवहारोऽत्र द्यूतक्रयविक्रयौ। शतस्य पणते व्यवहरति च शतं वा। व्यवहारे किं? शलाकां व्यवहरति गणयतीत्यर्थ:। दिवश्चागेस्तु नित्यम्। व्यवहारे सगेर्दिवधोर्ढे षी वा स्यात्। अगेस्तु नित्यम्। शतस्य प्रतिदीव्यति शतं वा अगेस्तु शतस्य दीव्यति व्यवहारे किं? विष्णुं दीव्यति स्तौति इत्यर्थ:। स्मृत्यर्थादीनां भावे। भावत्यान्तानां स्मृत्यर्थादीनां ढे षी नित्यं स्यात्। मातु: स्मर्य्यते विष्णो: स्मृतं भक्तस्य दय्यते हरिणा भक्तानामीश्यते शम्भुना शतस्य प्रतिदीव्यते चैत्रेण॥ ३०२॥

ज्ञानादन्यस्मिन्नर्थे वर्त्तमानस्य जानातेर्धे करणे षष्ठी स्यात्। शम्भोरिति। शम्भौ तुष्टे सति मुकुन्दे प्रवृत्तिर्भवति शम्भो: साधनत्वम्। जानीत इति अढा-दित्यनेनात्मनेपदम्। अज्ञाने किं भक्त्या जानाति शङ्करमिति। शम्भुनेत्यादि।

शम्भुना साधनेन मुकुन्दे प्रवर्त्तते इत्यर्थः. प्रवृत्त्यर्थस्य जानातिः।

## ३०४। तृप्त्यर्थानां वा।

तृप्त्यर्थानां ६।॥, वा ।१।।

तृप्त्यर्थधातोः प्रयोगे धे षी स्यात् वा।

शृङ्गारस्य हरिस्तृप्तः पूर्णः शान्तेन शङ्करः॥

## ३०५। ढघे कृत्यव्यक्युकक्तवतुखलर्थक्तोच्छ-त्रानवसुशीलार्थटन् भव्यणार्थणिनि।

ढघे ७।, कृति ७।, अ-व्य कि उक क्तवत् खलर्थ क्त उत् शतृ आन वसु शीलार्थ टन् भव्य ऋणार्थ णिनि ७।।

---

शम्भुना साधनेन मुकुन्दे प्रवर्त्तते इत्यर्थः। अतएव जानाते ज्ञाधातुः प्रवृत्त्यर्थश्च भवति धातूनामनेकार्थत्वादिति शेषः॥ ३०३॥

श्रीरा-टी—न ज्ञानमज्ञानं तस्मिन्। शम्भोरित्यादि। मुकुन्दे विष्णौ शम्भुरयं इति बुद्ध्या प्रवर्त्तते तत्प्रवृत्तौ शम्भोः साधनत्वाज्ज्ञत्वं प्रमात्मकज्ञानस्य वर्जनात् सर्पिषो जानीते सः भ्रान्त्यर्थेऽपि स्यात्। इत्यादौ तु भ्रमस्य ज्ञानत्वेऽपि भिन्नत्वात्। इदं विकल्पमिति परे। तन्मते शम्भुना मुकुन्दे जानीते इत्यपि अज्ञाने किं? भक्त्या जानाति शङ्करं इत्यत्र प्रमात्मत्वान्न स्यात्॥ ३०३॥

तृप्त्यर्थधातूनां करणे षष्ठी स्याद्वा। शृङ्गारस्य हरिस्तृप्तः तृप इति अकर्मकत्वात् कर्त्तरि क्तः पक्षे पूर्णः शान्तेन शङ्करः पूर्ण इति पूरीष ङ पूर्त्तौ पूर्त्तिरिह आप्यायनम् अतएव तृप्तिविशेषः। अकर्मकत्वात् कर्त्तरि क्तः शान्तेनेति भावे क्तः शान्त्या इत्यर्थः। एवं आङ्पूर्वस्य अश्नातेस्तृप्त्यर्थेनाकर्मकतया कर्त्तरि क्ते आशितोऽन्नस्य अन्नैर्वा लोकः। सदोद्गारसुगन्धीनां फलानामलमाशिता इति भट्टिः। नाग्निस्तृप्यति काष्ठानां नापगानां महोदधिः। नान्तकः सर्वभूतानां न पुंसां वामलोचना इति॥ ३०४॥

श्रीरा-टी—तृप्तिरर्थो येषां ते तेषां तृप्त्यर्थधोः प्रयोगे धे षी वा स्यात्। शृङ्गारस्येत्यादि। उदाहरणद्वयेन विकल्पो दर्शितः। एवं फलानामलमाशिताः। फलैर्वाशितम्भवमिति भट्टिः॥ ३०४॥

ढश्च घश्च ढघं तस्मिन्। त्र्यं चकारेत् प्रत्ययश्च तुम् त्वाच् चणम् इति।

ख्यादिवर्ज कृति प्रयुज्यमाने ढे घे च षी स्यात्।
जगतां कारकः कृष्णः कृतिर्मुररिपोरियम्॥

---

खलोऽर्थ इव अर्थो यस्य स खलर्थः। ईषद्दुःसोः पराद्वातोर्भावे कर्मणि च वाच्ये विहितो यः प्रत्ययः स खलर्थः। तेन खल अल इति द्वयम्। खल अलयोर्ग्रहणे नन्द्यादित्वादनस्य अनटादेश्च प्राप्तिः स्यादिति खलर्थग्रहणम्। उदिति उकारान्तप्रत्ययः। णुक इष्णु युक् आलु आरु इतु इत्यादि। शतृ इत्यनेन ऋदनुबन्धत्वात् अकारोच्चत्वाद्दन्तत्वाच्च तुल्यस्य स्यतुरपि ग्रहणम्। अधिकन्तु प्रविष्टं न तु तद्धानिरिति न्यायात्। एवं आन इत्यनेन शान कानस्यशानानां ग्रहणम्। शीलमर्थो यस्य स शीलार्थः स चासौ तृन्चेति शीलार्थ तृन्। भव्यं भविष्यत्-कालः। ऋणं प्रतिदेयतया गृहीतं भव्यञ्च ऋणञ्च भव्यर्णे तेऽर्थे यस्य स भव्य-र्णार्थः स चासौ णिन् चेति भव्यर्णार्थणिन् ततो व्यञ्च किञ्च उकश्च क्तावतुश्च खलर्थश्च क्तश्च उश्च शतृच आनश्च वसुश्च शीलार्थ तृन्च भव्यर्णार्थणिन् च ते व्यक्युक क्तावतु खलर्थक्तौ छवा न वसुशीलार्थ तृन् भव्यर्णार्थणिनः न विद्यन्ते ते यत्र कृति सोऽव्यक्युकः क्तावतु खलर्थक्तौ छवान वसुशीलार्थ तृन्भव्यर्णार्थणिन-स्तस्मिन्। जगतामित्यादि। कृष्णो जगतां कारकः कृञदडुच तृणकौघे इति णकः अस्य कर्मणि जगतामिति षष्ठी। मुररिपोरियं कृतिः। क्तिस्त्यघे इति भावे क्तिः अस्य कर्त्तरि मुररिपोरिति षष्ठी। अत्र अनुक्तयोः कर्त्तृकर्मणोस्तृतीया-द्वितीययोः प्राप्तावेव षष्ठी न तु उक्तयोरनुक्तार्थत्वेन सर्वापवादिकयोः प्राप्तावपीति बोध्यम्। अन्यथा जगतां कारक इत्यादौ कृष्णादेरपि षष्ठ्यापत्तिः। अव्ययादी-नामुदाहरणानि सृष्ट्वेत्यादि अघानि जिष्णुर्मुदं दधानः को जनो हरिं संस्तुवन् अर्थितं न ईयिवान् अपितु सर्व एव इत्यन्वयः। हरिं कीदृशं एतत् जगत् सृष्टा दधिं शारुकम्। पुनः कीदृशं अर्चकानुन्नीतवन्तम्। पुनः कीदृशं यतिभिः सुदर्शनं ज्ञातञ्चेत्यर्थः। उदाहरणानि यथा। हरिः एतज्जगत् सृष्टा वर्त्तते सृजोऽङविसर्गे पूर्वकाल इति क्त्वाच् अस्य कर्मणि जगदिति षष्ठ्यप्राप्तौ द्वितीयैव एवं तादर्थ्ये च तुम्। कृष्णं द्रष्टुं याति चणं वाभीक्ष्ण्ये कृष्णं स्मारं स्मारं नमति। हरिः एतत् जगत् दधिः। डुधाञ् धारणादौ द्विश्चाद्रुङ लोपिन इति कर्त्तरि किः अस्य कर्मणि जगदिति षष्ठी। हरिः एतत् जगत् शारुकः शॄगॄहिंसने शन्याभकमित्यादिना कर्त्तरि उकः अस्य कर्मणि जगदिति न षष्ठी। हरिरर्चकानुन्नीतवान् वैकुण्ठं प्रापितवान् इत्यर्थः। हृत्पूर्वनीञ

व्याद्यौ तु—सृष्टा दधिं शारुकमेतदर्चकान्
उन्नीतवन्तं, यतिभिः सुदर्शनम् ।

---

प्रापणे क्तक्तवतुभूते इति कर्त्तरि क्तवतुः अस्य कर्मणि अर्चकानिति न षष्ठी। यतिभिः सुदर्शनः दृशिरौ प्रेक्षे दुःशासयुधेत्यादिना कर्मणि अल् अस्य कर्त्तरि यतिभिरिति न षष्ठी। एवमन्यत्रापि एवं ईषद्दुःसोरित्यादिना खलिक्रते यतिभिः हरिः सुदर्शन इति यतिभिः हरिर्ज्ञातः। ज्ञागवोधने क्तक्तवतुभूते द भावे इति अतीते काले कर्मणि क्तः अस्य कर्त्तरि यतिभिरिति न षष्ठी। न च ज्ञार्चेच्छार्थे इत्यादि विशेषविधिना ज्ञानार्थादीनां वर्त्तमाने क्तविधानात् कथमतीते क्त इति वाच्यं ध्रौव्यगत्यदनर्थाड्डे च इत्यतश्चकारस्यानुवृत्तौ ज्ञानार्थादेव वर्त्तमानेऽतीते क्तः स्यात् इति व्याख्यानात् विस्तारस्तु तत्र दृश्यः कोऽघानि जिष्णुर्जिजये च। शुक् भुजेरिति कर्त्तरि शुक् अस्य कर्मणीति न षष्ठी। एवं जिभ्राजेति इष्णुः दुःखसहिष्णुः ग्लास्नास्थेति स्नुः। अन्नं पक्ष्णुः चिपवसेति क्रुः शरं चिप्नुः प्रतिगृहीत आलुः धनं गृहयालुः। शदसदसीतिरुः सनुस्भिक्षाशंस उः। चन्द्रं दिदृक्षुः शवन्द आरुः विष्णुं वन्दारुः स्तणिगदीति लुः वाक्यं दूषयित्नुः। को हरिं संस्तुवन् शुभलस्तुतौ कौपंवदिति शतृ अस्य कर्मणि हरिरिति न षष्ठी। एवं तौपंवदिति स्यतृ हरिं स्तोष्यन् याति। को मुदं दधानः दधान इति शानकानयोः रूपं डुधाञ्जलि धारणे तौपंवत् इति शाने स्वादेरं द्विरिति टौपंवदिति कानेधुद्वि श्राङि इति द्विः अनयोः कर्मणि मुदामिति न षष्ठी। एवं तौपंवदिति स्यमाने हरिं स्तोष्यमाणो याति। कः श्रियं न ईयिवान् इणगतौ ठौपंवत् इति क्वसुः अस्य कर्मणि श्रियमिति न षष्ठी। शंदातेति। शं दाता कल्याणदानशीलः मोक्षमृणं दायी मोक्षस्य ऋणस्य दाता शिवः कदा कस्मिन् काले मम हन्मनः आगामी आगमिष्यतीत्यन्वयः। शिवः शं दाता डुदाञ्जलि दाने तृन्नकौघे इत्यनेन शीलार्थेऽपि कर्त्तरि तृन् अस्य कर्मणि शं इति न षष्ठी। शिवः कदा हृत् आगामी ग्रहनन्दिपचादेरित्यत्र कालनियमाभावात् भविष्यत्कालेऽपि कर्त्तरि णिन् अस्य कर्मणि हृत् इति न षष्ठी। शिवो मोक्षमृणं दायी डुदाञ्जलि दाने ऋणवदवश्यदेयत्वे ग्रहनन्दीति कर्त्तरि णिन् अस्य कर्मणि मोक्षमृणमिति न षष्ठी। एवं कर्मणामभिनिविष्टा शय्याया अधिशयिता ग्रामस्य अधिष्ठाता पीठस्य अध्यासिता इत्यादि। कालादेः कर्मत्वे वर्षशतस्य जीवक इत्यादि। ण्यौ शिष्याणां वेदस्य पाठयिता शिशोरन्नस्य भोजयिता

ज्ञातं हरिं जिष्णुरघानि संस्तुवन्
मुदं दधानोऽर्थितमीयितान् न कः॥

इत्यादौ यस्यापि कर्मत्वे कृद्योगे षष्ठी स्यादिति बोध्यम्। द्विकर्मणान्तु द्वयोरेव कर्मणोः षष्ठी विष्णोर्मोक्षस्य याचको भक्तः भक्तस्य वैकुण्ठस्य नेता विष्णुः। श्रीमरास्तु कर्त्तरि कृति द्विकर्मणां मुख्ये कर्मणि षष्ठी न तु गौणे। यथा गां दुग्धस्य दोग्धा गोपः वनं गवां नेता गोप इत्याहुः। केचित्तु याज्ञादित्याद्योर्गौण कर्मणोरेव षष्ठी इति मत्वा विष्णोर्मोक्षं याचको भक्तः। भक्तं वैकुण्ठस्य नेता विष्णुरित्युदाहरन्ति। दीव्यतेः करणस्य कर्मत्वे इशोऽक्षाणां देविता। एवञ्च द्रोणस्य क्रेता पञ्चकस्य क्रेता शिवस्य संज्ञा इत्यादि बोध्यम्। नन्वत्र व्यादौ क्तप्रत्ययस्य ग्रहणं कथं रामेण लङ्का गता रामो लङ्कां गत इत्यादौ कर्त्तृकर्म्मणोः षष्ठी निषेधार्थमिति चेन्न वर्त्तमानाधिकरणाभ्यामन्यत्र विहितस्य प्रयोगे कानुक सङ्डार्थके इत्यनेन षष्ठ्या नियमेन तन्निषेधस्य वैयर्थ्यात्। वस्तुतस्तु अधिकक्तस्य ग्रहणं ज्ञापयति व्यादिभिन्नस्यापि कस्यचित् क्तः प्रयोगे षष्ठी न स्यात् क्वचित् व्यादेरपि प्रयोगे षष्ठी स्यात्। तेन धार्यैरामोदमुत्तममिति भट्टौ। श्वसश्यध-त्यादिना विहितस्य णप्रत्ययस्य प्रयोगे षष्ठी मा भूदिति। धीमत्वोऽयोगे। मुक्तानां किं दुरापं महात्मनां इत्यत्र दुरापमिति खलन्तस्य प्रयोगे षष्ठी। तव सर्वगतस्य सम्प्रति चितिपः चिप्णुरभीप्सुमानिवेति। सत्यार्थवक्ता नरकस्य जिष्णुरिति। एवं यादृग्जातीयस्य प्रतिषेधो विधिरपि तादृग्जातीयस्येति न्यायात् व्यादिवर्जनेनैव क्तः प्राप्तौ क्तौ ग्रहणं ज्ञापयति क्रियाविशेषणस्य कर्म्मत्वेऽपि कृद्योगे षष्ठी न स्यात्। साधु पाचकः शीघ्रं गन्ता इत्यादौ एवं कृत्प्रत्ययान्तात् प्रत्ययान्तरोत्पत्तौ षष्ठी न स्यात्। यथा व्यतीहारेण न स्तौ इति व्यवहरतेः निस्वार्थे णः वृद्धौ स्त्रियामीपि व्यवहारी धनानि ओदनं पाचकः भव इत्यादि॥ ३०५॥

श्रीरा·टी—ढञ्च घञ्च तत्तस्मिन्। खल अर्थ इव अर्थो यस्य सः शीलमर्थो यस्य स चासौ तृं चेति सः। भव्यञ्च ऋणञ्च ते, ते अर्थौ यस्य स चासौ णिश्चेति सः। पश्चात् व्यञ्च किञ्च उकाञ्च क्तवतुश्च खलर्थश्च क्तश्च उञ्च शतृश्च आनश्च वसुश्च शीलार्थ तृंश्च भव्यर्णार्थ णिंश्च तत् न तत् अतत् तस्मिन्। जगतामिति कर्षां जगतां चराचराणां कारकः कर्त्ता जगतामिति द्वे षी। इयं पृथिव्यादि चराचरमयी सृष्टिर्मुररिपोः कृतिरुत्पाद्या कर्षीर्दे क्तिः। मुररिपोरिति घे षी पूर्वसूत्राद्नुवर्त्त्यं तस्य व्यवस्थावाचित्वात् धाग्रे रामोत्तममुत्तमं [illegible] पूर्वं नत्वा।

**शं दाता हृत् कदागामी दायी मोक्षमृणं शिवः।**

---

राजकृत्वा पितास्खल मित्यादौ न स्यात्। स्तुवन्नित्यादि। कः पुरुषः हरिं संस्तुवन् सन् अर्थितं वाञ्छितं न ईयिवान् अपितु प्राप्तवानेव। हरिं कीदृशं एतज्जगत् सृष्ट्वा दधिं धारयन्तम्। सृष्ट्वेति क्त्वाचत्यशिल्वाद्वात्वम्। एवं घटं कर्त्तुं पयः पायं विप्रं प्रस्थाप्य गत इत्यादि। दधिमिति धाधोः किः द्विरालोपश्च हरि-विशेषणत्वात् ढम्। पुनः कीदृशं एतत् जगत् शारुकं संहरन्तम्। शृधोः स्थाभू इत्यादिना उकः। पुनः कीदृशं अर्चकान् उन्नीतवन्तं स्वर्गं प्रापित-वन्तं उत्पूर्व नीधोः क्तवतुः। पुनः कीदृशं यतिभिः जितेन्द्रियैः सुदर्शनम्। अनायासेनालोकनीयं दृशधोः खलार्थे अनः। एवं पापिना दुष्करो धर्मः सुकरो धार्मिकेण स इत्यादि। कोषदण्डसमग्राणां किमेषामस्ति दुष्कर मित्यत्र तु सम्बन्धमात्रविवक्षायां षी नञा निर्दिष्टस्यानित्यत्वाद्वा। पुनः कीदृशं यतिभिर्ज्ञातं ज्ञाधोर्डेऽतीते क्तः। एवं त्वया ज्ञातो मया ज्ञात इत्यादि। पुनः कीदृशः अघानि पापानि जिष्णुः पापस्याभिभवनशीलः। जिधोः ष्णुकः। एवं धनं गृह्णुः सुखमिच्छुः शास्त्रं विन्दुः कन्यामलं करिष्णुरित्यादि। तव सर्वगतस्य सम्प्रति क्षितिपः क्षिप्णुरभीषुमानिव। सत्यस्य वक्ता नरकस्य जिष्णु-रिति तु सम्बन्धविवक्षायां षी नञा निर्दिष्टस्यानित्यत्वाद्वा। हरिं संस्तुवन् स्तुधोः शतृ। पुनः कीदृशः मुदं दधानः हर्षं धारयमाणः धाधोः शानः। आन इत्यनेन कानस्यापि ग्रहणात् चक्राणो जगतीं हरिरित्यादि। अर्थितं न ईयि-वानिति इनधोः क्वसुः। शिवः कदा हृत् हृदयमागामी आगमिष्यति अर्थान्मम। गमधोर्भविष्यत्काले णिन्। शिवः कीदृशः शंदाता शशब्दो मोक्षार्थः तथाच वदन्ति शं बुधाः। श्रेयः शातनेशा निगद्यते इत्येकाक्षरकोषः। तथाच श्रेयोदानशील इत्यर्थः। दाधोः शीलार्थे तृन्। अतएव शिवो मोक्षमृणं दायी मुक्ति रूपं धनं ददातु अर्थान्मह्यम्। मोक्षस्य ऋणत्वेनोपचारात्। आवश्यके णिन्यपि निषेध इति कश्चित्। यथा अंशंहारी दायाद इति। अंशस्य हारीत्यन्यः न च तुमर्थणके प्रायः। चतुमर्थं विहित यो णकस्तस्मिन् प्रयुज्यमाने ढे षी न स्यात् प्रायः। मुनीनां विपिने भक्तं भोजको याति माधवः। मुन्यन्नं भोक्तुं गच्छतीत्यर्थः। कारका मित्रकार्य्याणि सीतालाभाय सोऽब्रवीदिति भट्टौ। प्राय इति किं—वर्ष-शतस्य पूरको जीवति पुत्रपौत्राणां दर्शकोऽस्तीत्यत्र न निषेधः। यस्य ढस्योक्ताऽनुक्तस्य शमद्धारक्तत्वेन षी। मन साधु पाचक इत्यादौ षी न स्यात्॥ ३०५॥

## ३०६। कामुक सड्डार्थक्तेन।

कामुक सत्‌डार्य क्तेन ३।।

कामुकशब्देन वर्त्तमानडयोर्विहितक्तेन च योगे ढे घे च षी स्यात्।

यो लक्ष्म्याः कामुको ज्ञातः सतां तस्येदमासितम्।

## ३०७। ल्यभावक्तास्त्र्यणकसढ़े घे वा।

व्य—सढ़े ७, घे ७, वा ।१।।

---

सन् वर्त्तमानकालः डः अधिकरणं संज्ञ डश्च सडडे ते अर्थो यस्य स सड्डार्थः स चासौ क्तश्चेति सड्डार्थक्तः कामुकश्च सड्डार्थक्तश्च तत् तेन। उक्तार्थाविर्जनात् अप्राप्तौ पुनर्विधानम्। यो लक्ष्म्याः कामुकः कमुङ स्पृहि ग्रस्थाभू इत्यादिना कर्त्तरि उकः अस्य कर्मणि लक्ष्म्या इति षष्ठी। सतां यो ज्ञातः ज्ञार्चेच्छार्थे-त्यादिना वर्त्तमाने क्तः। अस्य कर्त्तरि सतामिति षष्ठी तस्य श्रीकृष्णस्य इदं स्थलं आसितं जिलास ङ उपवेशने ध्रौव्यगत्यदनेत्यादिनाऽधिकरणे क्तः अस्य कर्त्तरि तस्येति षष्ठी। सडडयोः क्तः सडडक्तः इत्यनेनैवेष्टसिद्धौ अधिकार्थस्य शब्दस्य ग्रहणं ज्ञापयति शीलितादेर्वर्त्तमाने क्तान्तस्यापि कर्त्तरि षष्ठी न स्यादिति। तेन शीलि-तोऽयमनेन रचितोऽयमनेन कान्तोऽयमनेन इत्यादि। कान्त इत्यस्य विभाषयेति केचित्। प्रजानां प्रजाभिः वा कान्तो हरिश्चन्द्रः। क्वचित् सकर्मकादप्यधिकरणे क्तः इदमेषां भुक्तमोदनस्य पीतमगारं (पीयते यस्मिन् अगारे वत् पीतमगारम्) पयसः कृष्णस्य इत्यादौ कर्मकर्त्रो रुभयोः षष्ठी स्यादेव ॥ ३०६ ॥

श्रीरा-टी—सञ्च डश्च ते तेऽर्थो यस्य सः स चासौ क्तश्चेति सः कामुकश्च सड्डार्थक्तश्च तत्तेन। यो लक्ष्म्याः इत्यादि। यः श्रीकृष्णो लक्ष्म्याः कामुकः लक्ष्मीं कामयते यः सतां ज्ञातः धीरैर्ज्ञायते। ज्ञाधोः ज्ञार्चेच्छार्थेत्यादिना वर्त्तमाने क्तः तस्य इदमासितं तेनात्र उपविष्टम्। आसधांध्रौव्यगतीत्यादिना वर्त्तमाने डे क्तः। एवमिदमेषामुपगतं इदमेषां भुक्तं अन्नस्य इत्यादि। पूर्वेणाप्राप्ते विधिः म शीलितादिना वातु कान्तेन। शम्भुना शीलितः हरिणा रचित इत्यादि। प्रजाभिः कान्तः प्रजानां वा तथाच कान्तो हरिश्चन्द्र इव प्रजानां इति ॥ ३०६ ॥

ल्यस्त्व्यादिः भावेक्तः भावक्तः। अश्च णकश्च अणकौ स्त्रियामणकौ स्त्र्यणकौ न विद्येते स्त्र्यणकौ यत्र सोऽस्त्र्यणकः ढेन सह वर्त्तते योऽसौ सढः अस्त्र्यणकश्चासौ

**त्वे भावार्थ-क्ते स्त्रीविहितं अं णकञ्च हित्वा अन्यत्र सढे घे षी स्यात् वा।**

---

सढघेति अम्त्यणकसढः। ततोऽत्यय भावक्तश्च अम्त्यणकसढश्चेति समाहारस्त-स्मिन्। त्वे प्रयुज्यमाने भावार्थक्ते प्रयुज्यमाने स्त्रीविहितौ अणकौ हित्वा अन्यस्मिन् स्त्रीविहिते सकर्मके क्वति प्रयुज्यमाने च कर्त्तरि षष्ठी स्यात् वा इत्यर्थः। त्वये-त्यादि। हे साधो! त्वया मम च कृष्णोऽर्च्यः अर्चक पूजे हस्तयुवासीरिति कर्मणि घ्यण् अस्य कर्त्तरि त्वयेति तृतीया ममेति षष्ठी हि यस्माद्च तीर्थे त्वया मम च स्नातं ष्णाल शोधने भावे क्तः। अस्य कर्त्तरि त्वया मम च तृतीया षष्ठौ। स क इत्याह। यस्य सृष्टेः कृतिः करणं कृञदङ् कृतौ क्तिस्त्यघे इति भावे क्तिः अस्य कर्त्तरि यस्येति षष्ठी पक्षे येन सृष्टेर्हृतिः। हृञहृत्यां भावे क्तिः अस्य कर्त्तरि येन इति तृतीया उभयत्र सृष्टेरिति कर्मणि ढघे कृत्येति षष्ठी। एवं कृष्णज्येति हानिः सुखानां दरिद्रस्य दरिद्रेण। शीव्रजेति परिचर्य्या गुरोः शिष्यस्य शिष्येण। सृजागुर्य्यः। जागर्य्या रात्रेर्म्लानस्य म्लानेन। ञिःश्ययन्यिश्रन्यीति वर्णना विष्णोर्भक्तस्य भक्तेन। नञोऽन्याक्रोशे। अप्रयाणिः स्वर्गस्य व्याधस्य व्याधेनेति। सढ इति किं? साधोर्वृद्धिः इत्यादौ कर्त्तरि पूर्वेण नित्यं षी। अम्त्यणक इति किं? यस्य सृष्टेश्चिकीर्षा कर्त्तुमिच्छा चिकीर्षा संस्यादू इति स्त्रीविहितः अः। यस्य सृष्टेर्भेदिका इति भेदेन भेदिका इति स्त्रीविहित णक उभयत्र यस्येति कर्त्तरि पूर्वेण नित्यं षष्ठी। ष इति अननुबन्धं हित्वा अकारमात्रावशिष्टस्त्रीप्रत्यय ग्रहणेन कुः ग्रयेति ग्रः क्रिया जगतः कृष्णस्य। समक्तात्मनोरिति अकारे जागरा रात्रेर्म्लानस्य। तुल्यच्छा निपातने इच्छा मुक्ते-स्तपस्विनः। भीषीचिन्त्रीति कथा कृष्णस्य भक्तानां आतोऽन्तः श्रद्धे इति ङे श्रद्धा धर्मस्य धार्मिकाणां एषु कर्त्तरि पूर्वेण नित्यं षष्ठी। वाशब्दोऽत्र व्यवस्था-वाची तेनेदं विवृणोमि। अस्त्रीविहित कृद्भिस्तु योगे षष्ठी नियम्यते। एकदातू-भयप्राप्तौ कर्मण्येव न कर्त्तरि। तव्यादीनां प्रयोगे तु द्वयोरेव हि नेष्यते। यथा वेदस्य पाठश्छात्रेण मन्त्रस्य जपः साधकेन ग्रामस्य गमनं पान्थेन दोहनं दुग्धस्य गवामाभीरेण नयनं गवां वनस्य गोपेन इत्यादि। कर्मणोऽध्याहारेऽपि कर्त्तरि न स्यात्। भोजन मनेन। तव्यादौ तु याचितव्यः कृष्णोमोचं भक्तेन दोहनीया गौर्दुग्धं गोपेन। नेयो भक्तो वैकुण्ठं कृष्णेन वाह्योभारोग्रामं भृत्येन। अनुशिष्यः शिष्यो धर्मं गुरुणा। यापनीयो भृत्यो ग्रामं नृपेण। एषु प्रत्ययेन

त्वया मम च कृष्णोऽर्च्यः स्नातं ह्यत्र स यस्य तु।
सृष्टेः कृतिर्हृतिर्येन चिकीर्षा यस्य भेदिका॥

---

एकस्यैव कर्म्मण उक्तत्वादन्यकर्म्मणि द्विकृत्येत्यनेन षष्ठी नित्यं प्राप्ता: कर्त्तरि चानेनैव विकल्पेन प्राप्तिरिति एकदा द्वयोः प्राप्तौ निषेधः। एवं सकर्म्मकधातोः कर्म्मविद्यमानेऽपि भावे कृत्प्रत्ययः स्यादिति भाष्यादीनां मतम्। तेन "न लग्नमिन्दुश्च गुरुन्निरीक्षते न वा शशाङ्कं रविणा समागत"मिति दीपिका भान्तं देशमनेकदुर्गविषमं प्राप्तं न किञ्चित् फलमिति। मया कां दिशं वा न गन्तव्यमिति। सभां वा न प्रवेष्टव्यं वक्तव्यं वा समञ्जसमित्यादि सिद्धम्। एषु च भावप्रत्ययानामनुक्ते कर्मणि पूर्वेण नित्यप्राप्तौ कर्त्तरि चानेन विकल्पेन प्राप्तौ निषेधः॥ ३०७॥

श्रीरा·टी—भावे क्तः भावक्तः अश्च णकश्च तत् स्त्रियामणकं स्त्र्यणकं नस्त्र्यणकं अस्त्र्यणकं ढेन सह वर्त्तमानं सढम् अस्त्र्यणकञ्च तत् सढञ्चेति तत् त्यश्च भावक्तश्च अस्त्र्यणकसढश्च तत्तस्मिन्। त्यस्त्र्यव्यादिः। त्वयेत्यादि। त्वया स कृष्णोऽर्च्यः मम स कृष्णः अर्च्यः पूज्य इत्यर्थः। अर्चधोर्ढे घ्यण्। द्वयेन विकल्पोदर्शितः। एवं कर्त्तव्यं करणीयं तव त्वया वा इत्यादि। वाशब्दस्य व्यवस्थावाचित्वात् त्ये यत्र घढयोः षीसम्भावना तत्र द्वयोर्न स्यात्। तेन कृष्टव्या ग्रामं शाखा कपिना नेतव्या ग्राममजा नरेण अनुशिष्यः शिष्यो धर्म्ममुपाध्यायेन। कां दिशं गन्तव्यं मया इत्यादौ न स्यात्। यत्र तु ढमात्रे षीसम्भावना तत्र पर्द्धेणैव तेन गेयो माणवकः साम्नामिति गायतीति गेयः घेयो वक्तव्यः। यस्य कृष्णस्य येन कृष्णेन वा अत्र स्नातं स्नानं कृतमित्यर्थः। एवं छात्रस्य छात्रेण वा हसितं गतं वेत्यादि। यस्य कृष्णस्य येन कृष्णेन वा सृष्टेर्जगतः कृतिः करणम्। यस्य कृष्णस्य येन कृष्णेन वा सृष्टेर्हृतिर्हरणं कृञो हृञो भावे क्तिः। सडाढोरपि भावेत्य इति भागवृत्तिः। एवं शब्दानामनुशासनमाचार्य्यस्य आचार्य्येण वा गवां दोहो गोपस्य गोपेन वा इत्यादौ स्यात् स्त्रीविहिताऽणकभिन्नसढकृत्त्वात्। परं तु निषेधो यज्जातीयस्य विधिरपि तज्जातीयस्य इत्युक्तेः। परिचर्य्या गुरूणां शिष्यस्य शिष्येण वा उपासना पितुः पुत्रस्य पुत्रेण वा जागर्य्या रात्रेश्छात्रस्य छात्रेण वा अकरणिः पुरुषस्य जाल्मस्य जाल्मेन वा इत्यादौ स्यात्। स्त्रीविहितकृत्त्वात्। ननु शब्दानामनुशासनमाचार्य्येण गवां दोहो गोपेन इत्यादौ अस्त्रीविहितत्वादित्याहुः। अणकयोरुदाहरति चिकीर्षेत्यादि। यस्य कृष्णस्य सृष्टेः चिकीर्षा कर्त्तुमिच्छासनन्तकृधोः संप्रादः। यस्य कृष्णस्य सृष्टेर्भेदिकाभेदीनाश इति यावत्। एतेन कृष्णस्य

## ३०८। स्वामीश्वराधिपति दायाद साक्षि प्रतिभू प्रसूत कुशलायुक्त निपुण साधु सुजर्थैर्नादरे स्त्री च।

स्वामि—सुजर्थैः ३।।।, नादरे ७।, स्त्री ।१।, च ।१।।

---

सृष्टिस्थितिविनाशकर्मकर्तृत्वमिति भावः। उभयोरुभयत्र पूर्वेण षी नित्यम्। एवं चिकीर्षारवैरालीकानां भेदिका चन्द्रस्य तमसामिति। सद्वे किम्? कृतिर्मुररिपोरियम्। यत्र द्विढभूनां कृता ढद्वयमनुक्तं तत्र द्वयोर्ढयोः पूर्वेण षी। तेन कृष्णस्य मोक्षस्य याचको भक्तः। दोग्धा दुग्धस्य गोः कृष्णः चौरस्य गवां दोहः कृष्णस्य कृष्णेन वा इत्यादीत्येके। मुख्य ढ एवेत्यन्यः। यदुक्तम्। कर्म्मद्वयं दुहादीनामनुक्तं स्यात् कृता यदि। कश्चित्तत्र समाचष्टे षष्ठीं प्रधानकर्मणीति। तन्मते दोग्धा गां पयसो हरिः। गौण ढे एवेत्यन्यः। तन्मते दोग्धा दुग्धं गवां हरिरिति। परन्तु उभयप्राप्तौ कर्मणीति सूत्रान्तरं विधायैकस्मिन् कृति प्रयुज्यमाने ढयोः प्राप्तौ षी च एवेत्याहुः। तेन अद्भुतं समुद्रस्य बन्धो वानरैः। आश्चर्यं सुभग गोपस्य दूतीभिः परिमार्जनं गवां दोहः कृष्णेन हारयिता दुग्धस्य गोपेन हरिरित्यादि। ढद्व प्राप्तौ किं? वनस्य यापयिता हरिः। दुग्धस्य गोपस्य हारयिता हरिरित्यादावुभयोर्ढयोः पूर्वेण षी। एककृतीति किं? ओदनस्य पाको ब्राह्मणानां प्रादुर्भावः॥ ३०७॥

सुचोऽर्थोवारः। सुचोऽर्थ इव अर्थो यस्य स सुजर्थः। वारार्थेनैवेष्ट सिद्धौ सुजर्थग्रहणं सुजर्थप्रत्ययान्तानां प्राप्त्यर्थम्। अन्यथा वारादिशब्दैर्योगेऽपि षष्ठी सप्तम्यापत्तेः। सुजर्थप्रत्ययश्च च कृत्वस् सुच (४८४, ४८५) इति द्वयम्। धाच् प्रत्ययोऽपि सुजर्थ इति जौमराः। स्वामी च ईश्वरश्च अधिपतिश्च दायादश्च साक्षी च प्रतिभूश्च प्रसूतश्च कुशलश्च आयुक्तश्च निपुणश्च साधुश्च सुजर्थश्च तैः। न आदरोऽनादरस्तस्मिन् स्वाम्यादेकादशभिः शब्दैः च कृत्वस् सुजन्ताभ्याञ्च योगे षष्ठी सप्तम्यौ स्यातामित्यर्थः। अनादरे गम्यमाने च षष्ठीसप्तम्यौ स्यातामित्यर्थः। मुकुन्दः सर्वेषां स्वामी सर्वेष्विति च। अधोक्षजः सर्वेषु साक्षी सर्वेषामिति च एवं कृष्णः सर्वेषां सर्वेषु च ईश्वरः कृष्णः सर्वेषु सर्वेषामधिपतिः। स्वामीश्वराधिपतीनामेकार्थत्वेऽपि पृथक् ग्रहणात् स्वाम्यर्थ शब्दान्तरेण योगे न स्यात्। तेन कृष्णः सर्वेषां पतिरित्यादौ सम्बन्धे षष्ठ्येव। कृष्णो यावदेष यावदानां यादवः दायादः ज्ञातिरित्यर्थः। भैव: चैतस्य प्रतिभूर्लग्नक इत्यर्थः। कृष्णो यादवदायादस्य

स्वामी मुकुन्दः सर्वेषां साक्षी सर्वेष्वधोक्षजः।
निश्यङ्क त्रिरगुर्गोप्यो ऽपत्ये मातूरुदत्यजम्।

---

प्रसूतः। कुशलायुक्ताभ्यां योगे तत्परत्व एव। छात्रः पाठे पाठस्य कुशलस्तत्पर इत्यर्थः। भोक्ता भोगेषु भोगानामायुक्तस्तत्पर इत्यर्थः। तत्परत्वे किं कलासु कुशलः सुशिक्षित इत्यर्थः। रथे आयुक्तः अश्वः बद्धः इत्यर्थः। निपुणसाधुभ्यां प्रशंसायामेव दाने दानस्य निपुणो वदान्यः मातरि साधुः मातुः पुत्रः सुजर्थैः कालाधिकरणाद्देव। गोप्यो निशि निशि निशि तिः अङ्कस्त्रिः अजं कृष्णं अगुः त्रिरिति त्रीणि वाराणि इत्यर्थे सुजर्थे द्वित्रिचतुर्भ्यः सुच् इति सुच् अगुरिति इण गतौ गाठ्यामिति गादेशे अन् उस् जग्मुरित्यर्थः। एवं दिने दिनस्य पञ्चकृत्वः पठति। कालाधिकरणात् किं? गृहे द्विर्भुङ्क्ते। अनादरमुदाहरति। गोप्योऽपत्ये रुदति मातुः रुदत्या अजं श्रीकृष्णमगुः। रुददपत्यमनादृत्य रुदतीं मातरञ्च अनादृत्य इत्यर्थः। एवं आह्वयति आह्वयतो गतः आह्वयन्तमनादृत्येत्यर्थः। एवञ्च पश्यति पश्यतो हरः। पश्यतो हरः स्वर्णकारः पश्यन्तं जनमनादृत्य हरतीत्यर्थः। संज्ञायां षष्ठ्या अलुक्॥३०८॥

श्रीरा-टी—सुजर्थ इवार्थो येषां ते तैः। स्वाम्यादिभिः सुजर्थत्यन्तैश्च योगे क्रियाया अनादरे गम्यमाने षीतौ स्यातां स्वामी मुकुन्दः इति प्रयोगद्वयेन षीप्सौ दर्शिते। एवं सर्वेषां सर्वेषु वा ईश्वरः। अधिपतिर्दायादः प्रतिभूः प्रसूतः कुशलायुक्ताभ्यां तात्पर्येऽभिधानं शिवाचार्याः शिवाचार्यां वा कुशलः आयुक्तो वा भक्तस्तत्पर इत्यर्थः। अन्यत्र कलासु कुशलः रथेष्वायुक्तोऽश्वः निबद्ध इत्यर्थः। निपुणसाधुभ्यां पूजायां प्सी अपूजायां षी एषाभिधानात्। मातरि साधुर्निपुणो वेति पूजायाम्। अपूजायां तु पितुर्द्रोहस्य निपुणः साधुर्वा पुत्रः निश्यङ्क इति गोप्योऽजं विष्णुं निशि रात्रौ त्रिस्त्रीन् वारान् अगुर्गतवत्यः। अह्नो दिवसस्य त्रिरगुः द्वयेन षीप्सौ दर्शिते। एवं रात्रौ रात्रेर्वा पञ्च कृत्वोभुङ्क्ते धाचत्वेपि सुजर्थत्वेन कतिधा रात्रौ रात्रेर्वा भुङ्क्ते इत्यादि कालाऽडादेरभिधानात् कांसपात्र्यां द्विर्भुङ्क्त पञ्च कृत्व रात्रिं भुङ्क्ते इत्यादौ न स्यात्। अपत्ये रुदति मातुः कौशल्याः। रुददपत्यं क्रोशन्तीं मातरमनादृत्य वारं वारं गता इत्यर्थः। कौशल्या इत्यध्याहार्य्यं रुदती इत्यस्यैव लिङ्गविपर्यययेनान्वय इत्येके। पश्यतो हर इत्यत्र संज्ञात्वान्नित्यं षी न तु प्सीत्येके। त्वां मामन्तरा स्वामी। साधुर्विप्रो मातरं प्रति। निपुणो मातरं परि। त्वया सह तस्य स्वामी तुल्यो गोभिः स्वामी। तुल्यो गवां स्वामीत्यादौ तु पूर्वे विप्रतिषेधेन ङ्याद्य एव स्युः। अन्ये तु प्रत्यादौ

## ३०९। कालभावाधारं ङं प्ती।

काल-भाव-आधारं १।, ङं १।, प्ती।१।।

**एते ङसंज्ञाः स्युः, तत्र दौ।**

**सामीप्याश्लेषविषयैर्व्याप्त्याधारश्चतुर्विधः।**

---

देवनान्याक्रिरित्यर्थे मवयित्वा वृचं वृचं प्रति कुसुमानि सन्ति देवदत्तं प्रति कुप्यति। त्वां प्रतिस्वामी मद्वचनं प्रति साची। केशान् प्रत्युत्सुकः। इत्युदाहरन्ति। साधवः साधुभ्यां प्तौ। आभ्यां योगे प्ती स्यात्। साधुः कृष्णो मातरि असाधुर्मातुः न नियमार्थमिदम्॥ ३०८॥

कालः चणः दण्ड मुहूर्त्त प्रहरादिः। भावो धात्वर्थः। आध्रियते पदार्थोऽस्मिन्निति आधारः स तु चतुर्विधो भवतीत्याह विषयेण सामीप्येत्यादि। आधारः सामीप्येन आश्लेषेण विषयेण व्याप्त्या च भवन् चतुर्विधः स्यादित्यर्थः। समीपे भवः सामीप्यः आश्लेष एकदेशसम्बन्धः। विषयः प्रतिपाद्यादिः। व्याप्तिः साकल्येन सम्बन्धः। क्रमेणोदाहरति। गोविन्दः गोपीभिः सह शरदि रेमे अत्र रमणक्रियायाः शरदृतुरधिकरणम्। विधौ उदिते सति गोविन्दो रेमे विधोरुदयक्रियानन्तरं गोविन्दस्य रमणक्रियेत्यर्थः। उदित इति उत्पूर्वं इण गतौ कर्त्तरि क्तः। अत्रोदित शब्दस्य उदयक्रियावाचकतयाऽधिकरणत्वात् सप्तम्यन्तत्वे तद्विशेष्य विधोरपि सप्तम्यन्तत्वम्। एवं मयि भुञ्जानेऽयमागतः मया पच्यमाने ओदने स गत इत्यादि। गोविन्दःकालिन्द्यां कालीन्दीसमीपे रेमे। गङ्गायां घोषः प्रतिवसति इत्यत्र गङ्गाशब्देन लचणया यथा गङ्गातीर मुच्यते तथात्रापि कालिन्दीशब्देन तत् समीपतीरमुच्यते। गोविन्दः कानने रेमे काननैकदेशे इत्यर्थः। एवं वने सिंह कुण्डे वदरमित्यादि। गोविन्दः केलौ कुशलः केलिविषये पटुरित्यर्थः। गोविन्दः सकले स्थितः सकलं व्याप्य स्थितः॥ ३०९॥

श्रीरा-टी—कालः चणलवमुहूर्त्तादिः। प्रसिद्धकालक्रियाद्वारेण क्रियान्तरस्याऽप्रसिद्धं कालं येन साधनभूतेन वक्ता लचयति स इह भावः। परे तु यस्य क्रियया क्रियान्तरं लच्यते स इह भावः। अत्र क्रियाशब्देन सह सामानाधिकरण्ये क्रियाश्रय एव साधनभूतः। यथा। दुह्यमानासु गोषु गतः दुग्धास्वागत इत्यादि। अतीतगमनक्रियाद्वारेण दोहनादिक्रियाश्रयेण साधनभूतेन दोहनादिक्रियान्तरस्याप्रसिद्ध वर्त्तमानादिकाल वक्ता लचयति स दोहनादिक्रियाश्रयो भाव इत्यर्थः। असामानाधिकरण्ये क्रियाशब्द एव साधनभूतः।

**रेमे शरदि गोविन्दो गोपीभिरुदिते विधौ।**
**कालिन्द्यां कानने केलौ कुशलः सकले स्थितः॥**

---

यथा गोदोंहे गत इत्यादि। भुञ्जाने चैत्रे मैत्रो भुंक्ते इत्यत्र एकस्याः क्रियायाः सम्बन्धिभेदाङ्गेदः कथायमानेष्वार्म्मेषु चैत्रो गतः पक्षेष्वागतः इत्यत्र कथाय इव मानं येषां ते तेषु क्रियान्तराभावात् सत्स्वित्यध्याहार्य्यं एवं धने सुखं धने सति सुखं भवतीत्यर्थः। आश्रियन्ते परम्परया क्रियया यत्र स आधारः घटाव्रय इति यावत्। यदुक्तम्। "कर्त्तृकर्म्मव्यवहितामसाक्षात् धारयेत् क्रियाम्। उपकुर्वत् क्रियासिद्धौ शास्त्रेऽधिकरणं मतम्॥" स चतुर्विधः इत्याह सामीप्येत्यादि सामीप्यं समीपत्वं तेन एकः सामीपिक आधारः यथा नद्यां घोषः प्रतिवसति इत्यत्र जले घोषस्य वासानुपपत्त्या नदीशब्देन तत् समीपं तीरमुपलक्ष्यते। एवं गङ्गायां घोष मत्स्यौस्त इत्यत्र गङ्गाशब्दो वाचको लक्षकश्च वक्तृतात्पर्य्यात्। युगपद्वृत्तिद्वयविरोधान्नैवंविधः प्रयोग इति भट्टिः। सामीपिकस्य औपश्लेषिकत्वे-नैव सिद्धे पृथगुपादनं लक्षणया त्रिपदार्थस्याप्याधारत्वज्ञापनार्थम्। तेन अङ्गु-ल्यग्रे करिशतमित्यत्राङ्गुल्यग्रनिर्दिष्टस्याप्याधारत्वमिति आश्लेषः संयोगः पृथक् सिद्धयोः सम्बन्ध इत्यर्थः तेन एक औपश्लेषिक आधारः। यथा कटे आस्ते स्थाल्याः मोदनं पचति वने सिंह प्रतिवसतीत्यादि। विषयोऽन्यनन्यत्र भावबोध्या-श्रयणीयोपस्थानीयादिस्तत्र भवः एको वैषयिक आधारः यथा आकाशे शब्दो जायते धर्मे वेदाः प्रमाणम्। तीर्थे वसति गुरौ वसति इत्यादि आकाशशब्द-योरविनाभावसम्बन्धः। एवं धर्मवेदयोर्बोध्यबोधकभावसम्बन्धः। तीर्थवासयो-राश्रयाश्रयिभावसम्बन्धः। गुरुशिष्ययोरुपास्योपासकभावसम्बन्धः इति सर्वत्रास्य विषयता। व्याप्तिः साकल्येनाभिसम्बन्धः तेन एकः अभिव्यापक आधारः यथा तिलेषु तैलमित्यादि। यद्यपि तिलतैलयोः संयोगादौपश्लेषिकत्वेनैव सिद्धस्त-थापि देशविभागाभावात् संयोगव्यवहारो नास्तीति पृथगुपादानमिति। रेमे इत्यादि। गोविन्दः शरदि शरत्काले गोपीभिः सह रेमे क्रीड़ितवान्। उदिते विधौ विधोरुदयक्रियानन्तरं अनेन विधाविति सप्तमी उदित इति तद्विशेषण-त्वात् सप्तमी। यदुक्तम्। विशेष्यस्य हि यल्लिङ्गं विभक्तिवचनेचये। तानि सर्वाणि योज्यानि विशेषणपदेष्वपीति। कालिन्द्यां यमुनासमीपे, कानने केलौ क्रीड़ाश्रयणे कुशलो निपुणः। सकले सर्वमभिव्याप्य स्थितः। परे तु वैषयिकत्वेन सिद्धत्वात् कालस्य पृथगुपादानम्। भावस्य ड संज्ञां च न कुर्वन्ति॥ ३०९॥

## ३१०। अधिकेशार्थोपाधिभ्याम्।

अधिक-ईश-अर्थ-उप-अधिभ्यां ३॥।

**अधिकार्थेनोपेन स्वाम्यर्थेनाधिना च योगे ष्मी स्यात्।**

**गुणा उप परार्द्धे स्यु विष्णोरधि हरौ सुराः।**

## ३११। ढेनार्थात्।

ढेन ३।, अर्थात् ५।।

**ढेन योगे निमित्तात् ष्मी स्यात्।**

**वस्त्रेषु रजकमवधीत् कृष्णः।**

---

अधिकस्य ईशस्य अधिकेशौ तावर्थौ ययस्तौ अधिकेशार्थौ च तौ उपाधी चेति अधिकेशार्थोपाधी ताभ्यां स्वाम्यर्थेनेत्यस्य उभयार्थम्। अधिना योगे यस्य परिवारस्तस्मात् सप्तमी यस्य स्वामी तस्मात् सप्तमी स्यादित्यर्थः। गुणा उपपरार्द्धे स्युः विष्णोरिति विष्णोर्गुणाः परार्द्धादधिका असंख्या इत्यर्थः। परार्द्धं चरमसंख्या। तथाचोक्तम्। एवं दश शतञ्चैव सहस्रमयुतन्तथा। लक्षञ्च नियुतञ्चैव कोटिरर्बुदमेव च। वृन्दः खर्वो निखर्वश्च शङ्खपद्मौ च सागरः। अन्त्यं मध्यं परार्द्धञ्च दशवृद्ध्या यथोत्तरमिति। एवं उपखार्य्यां द्रोणः खार्य्या अधिक द्रोण इत्यर्थः। अधिहरौ सुरा इति। सुराः हरेः परिवारा इत्यर्थः। एवं अधिसुरेषु हरिरित्यपि हरिः सुराणां स्वामी इत्यर्थः॥ ३१०॥

गोरा-टी—अधिकश्च ईशश्च तावर्थौ ययोस्तौ उपश्च अधिश्च तौ अधिकेशार्थौ च तौ उपाधी चेति तौ ताभ्याम्। गुणा इत्यादि। उपशब्देनाधिकार्थो द्योत्यते। विष्णोर्गुणा उपपरार्द्धे स्युः परार्द्धादप्यधिकाः स्युरित्यर्थः। एवमुपख्यार्य्यां द्रोण इत्यादिः। ईशः स्वामी स च स्वसापेक्षस्तथा च यस्य स्वामी यस्य स्वं ताभ्यामेव पर्य्यायेण ष्मी। स्वस्वामिलसम्बन्धस्योभयनिष्ठत्वात्। सुरा अधिहरौ हरिस्वामिका इत्यर्थः। एवं अधिसुरेषु हरिः सुराणां हरिः स्वामीत्यर्थः। एवं अधिब्रह्मदत्ते पञ्चालाः अधिपञ्चालेषु ब्रह्मदत्त इत्यादि॥ ३१०॥

अर्थो निमित्तं क्रियाया निमित्तं यदि कर्मणा संयुक्तं स्यात् तदा तस्मात् सप्तमी स्यादित्यर्थः। हननक्रियाया निमित्तस्य वस्त्रस्य हननकर्मणा रजकेन संयोगात् सप्तम्यन्तत्वं एवं चर्मणि द्वीपिनं हन्ति दन्तयोर्हन्ति कुञ्जरम्। केशेषु चमरीं हन्ति सीम्नि पुष्पलको हत इत्यादि। कर्मयुक्तात् किं? कीर्त्तये द्वीपिनं

## ३१२। क्तेना ढे।

क्तेना ३।, ढे ७।।

**क्ताद्यव्यवहितेन इना योगे ढे मी स्यात्।**

वेदे ऽधीती।

## ३१३। निर्द्धारे ऽधिकेन क्रियान्तः कालाध्वनोश्च पी च।

निर्द्धारे ७।, अधिकेन ३।, क्रियान्तः कालाध्वनोः ७॥, च ।१।, पी ।१।, च ।१।।

---

हन्ति। मुक्ताफलाय करिणं हरिणं पलाय इत्यादयोऽपप्रयोगाः। अथ मुक्ताफलेषु करिणं हरिणं फलेषु इत्येव पाठः॥ ३११॥

श्रीरा-टी—अर्थशब्दोऽत्र निमित्तार्थ इत्याह निमित्तादिति यन्निमित्तिका क्रिया तस्मादित्यर्थः। वस्त्रेष्विति रजकवधोहि वस्त्रनिमित्तक एव। एवं चर्मणि द्वीपिनं हन्ति दन्तयोर्हन्ति कुञ्जरम्। बालेषु चमरीं हन्ति सीम्नि पुष्पलको हत इति। सीमा अण्डकोषः पुष्पलको गन्धमृगः। अर्थात् किं खड्गेन रजकं हन्ति। ढेन किं वस्त्रेण रजको मृतः। हेतौ बां प्राप्तायां विधिः। तादर्थ्ये ब्याः बाधकमिति कश्चित्॥ ३११॥

क्तादिन् क्तेन् तेन क्तेना इति तृतीयैकम्। वेदे अधीती इति अधीङल अध्ययने भावे क्तः। अधीतमध्ययनं तदस्यास्तीति अधीती तेन योगे वेदे इति कर्मणि सप्तमी। एवं तर्के अधीती। कृती श्रुती ह्वह्मतेषु धीमान् इति भट्टिः। क्ताद्यव्यवहितेन इना योगे एवायं विधिः। तेन कृतञ्च तत् पूर्वञ्चेति कृतपूर्वं तदस्यास्तीति कृतपूर्वी। एवं वेदमधीतपूर्वी इत्यादौ न स्यात्॥ २१२॥

श्रीरा-टी—क्तादिन् क्तेन् तेन। वेदे अधीती इति अधीतमनेनेत्यर्थः। इष्टादित्वात् भावक्तान्तादिन्। किं कर्मकमध्ययनमित्याकाङ्क्षायां पश्चात् कर्मसम्बन्धः तस्मादनुक्तादनेन मी। मुख्य ढ ग्रहणात् मासमधीती इत्यादौ न स्यात्। क्तेना किं? कृतं पूर्वमनेन कृतपूर्वीकटम्॥ ३१२॥

क्रियंयोरन्तः क्रियान्तः कालश्च अध्वा च कालाध्वानौ क्रियान्तश्च तौ कालाध्वानौ चेति क्रियान्तःकालाध्वानौ तयोः। निर्द्धारो जातिगुणक्रियाणामुत्कर्षेण अपकर्षेण वा सजातीयात् पृथक् करणम्। कालःचण मुहूर्त्त प्रहर दिन-

श्रेष्ठं कृपालुष्वर्कादेः रुद्रैकादशके ऽधिकम्।
मूर्त्त्यष्टकात्, शिवं ध्यायन्, भुञ्जीथा द्व्यह्नि वा त्र्यहात्।
भूस्थो योजनलक्षे ऽर्कं पश्ये लक्षद्वयात् विधुम्।

---

त्र्यहादिः। अध्वा अध्वपरिमाणं नल्वक्रोश योजनादिः निर्द्धारे गम्यमाने पञ्चमी चकारात् सप्तमी च स्यात्। एवं अधिकशब्देन योगे तथा क्रियाद्वयमध्यवर्त्तिनि काले क्रियाद्वयमध्यवर्त्तिनि अध्वनि च पञ्चमीसप्तम्यौ स्तातामित्यर्थः। हे साधो! त्वं शिवं ध्यायन् द्व्यह्नि त्र्यहाद्वा भुञ्जीथाः। शिवं कीदृशं कृपालुषु अर्कादेश्च श्रेष्ठं रुद्रैकादशके मूर्त्त्यष्टकाच्च अधिकमित्यन्वयः। उदाहरणानि यथा। शिवः कृपालुषु श्रेष्ठः अर्कादेश्च श्रेष्ठ इति निर्द्धारणम्। एवं अत्र समार्थ इत्यादिना षष्ठी च। मयुरा पाटलिपुत्रेभ्यः आढ्यतरा। काकात् कोकिलः कृष्णः इत्यादि निर्द्धारणे पञ्चम्येव न तु षष्ठीसप्तम्याविति वक्तव्यम्। शिवो रुद्रैकादशकेऽधिकः मूर्त्त्यष्टकाच्चाधिकः इत्यधिकशब्देन योगे। एकादशानां समूहः एकादशकं रुद्राणामेकादशकं तस्मिन्। अष्टानां समूहोऽष्टकं मूर्त्तीनामष्टकं मूर्त्त्यष्टकं तस्मात्। शिवं ध्यायन् द्व्यह्नि भुञ्जीथाः त्र्यहाद्वा भुञ्जीथाः। अत्र शिवध्यानक्रिया-भोजनक्रिययोर्मध्यवर्त्तिनः कालात् द्व्यह्नात् सप्तमी त्र्यहात् पञ्चमी द्व्यह्नीति द्व्यह्ने द्वयोरह्नोर्भवः काल इति तद्धितार्थद्विगौ द्व्यह्नोऽदन्तः। ततोऽह्नी संख्याविषयादित्यादिना अहनादेशेऽनोऽल्लोपः। त्र्यहादिति त्रयाणामह्नां समाहारः त्र्यहः ततः पञ्चमी। भूस्थो जनो योजनलक्षेऽर्कं पश्येत् लक्षद्वयात् विधुं पश्येत्। भुवि तिष्ठतीति भूस्थः लक्षद्वयादिति संख्यायाः साकाङ्क्षत्वात् पूर्वस्थितयोजनशब्देन सम्बन्धः। अथवा समस्तस्यासमस्तेन नित्याकाङ्क्षेण सङ्गतिरिति न्यायात्। योजनलक्षद्वयादित्यर्थः। अत्र भूस्थितिक्रिया-दर्शनक्रिययोर्मध्यवर्त्तिनि अध्वनि योजनलक्षे इति सप्तमी योजनलक्षद्वयादिति पञ्चमी॥ २१२॥

श्रीर-टी—क्रिययोरन्तः क्रियान्तः कालश्च अध्वा च तौ क्रियान्तश्च तौ कालाध्वानौ चेति तौ तयोः क्रियान्तःकालाध्वनोः। निर्द्धारे गम्यमाने अधिकशब्देन च योगे क्रियाद्वयमध्यवर्त्तिकालाध्वनोश्च पौत्रौ स्याताम्। श्रेष्ठमित्यादि। त्वं शिवं ध्यायन् द्व्यह्नि त्र्यहाद्वा भुञ्जीथाः इत्यन्वयः। अत्र ध्यानभोजनक्रिययोरन्तर्वर्त्तिकालवाचकात् पौत्रौ दर्शिते। शिवं कीदृशं कृपालुषु श्रेष्ठं अर्कादिरवेभ्यः श्रेष्ठं पूर्वेण षौ च पुनः कीदृशं रुद्रैकादशके एकादशरुद्रेषु मूर्त्त्यष्टकात् अष्टमूर्त्तिभ्योऽधिकम्। एकादशानां सङ्घ इत्यर्थे कः एकादशकम् एवमष्टकमिति।

## ३१४। सीमान्तर्मार्गात् प्री चान्ते।

सीमान्तर्-मार्गात् ५।, प्री ।१।, च ।१।, अन्ते ७।

**सोमनाथाच्छतं क्रोशाः कृष्णः क्रोशेषु चायुते।**
**गङ्गायमुनयोर्मध्ये कति क्रोशाश्च जाह्नवी॥**

---

भूस्थो जनः योजनलक्षेऽर्कं पश्येत् लक्षद्वयात् विधुं पश्येत्। अत्र भूस्थिति-दर्शनक्रिययोरन्तर्वर्त्त्यध्ववाचकात् पीप्रौ। सर्वत्रोदाहरणद्वयेन पीप्रौ दर्शितौ। एवं नराणां नरेषु नरेभ्यो वा क्षत्रियः शूरतमः गवां गोषु गोभ्यो वा कृष्णा गौः चौरिणी अध्वगानामध्वगेषु अध्वगेभ्यो वा धावन्तः शीघ्रतमाः। अद्य भुक्त्वा द्वाहे द्वाहाद्वा भोक्ता अत्र स्थित्वा क्रोशे क्रोशाद्वा लक्ष्यं विध्यतीत्यादि। निर्द्धारणेऽभिधानात् पी न तु सर्वत्रेत्यन्ये। परे तु विभक्तिवति निर्द्धारणाश्रय एव पी। न तु पीप्राविति। यथा श्रौघ्नेभ्यो माथुराः आढ्यतराः माथुरेभ्यः श्रौघ्ना दीनतरा इत्यादौ श्रौघ्नत्वं न माथुरेषु माथुरत्वं न श्रौघ्नेषु इति विभागात्। निर्द्धारणत्वात् पी सिद्धावपेक्षितक्रियत्वेन जत्वकल्पनात् तस्माच्च प्रसादिकं भवतीत्याहुः। एवम् अधिकशब्दयोगे प्रीं नेच्छन्ति। प्रसितोत्सुकाभ्यां वीप्रौ। आभ्यां योगे वीप्रौ स्याताम्। केशैः केशेषु वा प्रसितस्तत्पर इत्यर्थः। केशैः केशेषु वा उत्सुकः। आरादर्थेभ्योऽसत्त्वे द्वीप्यौ च। अद्रव्ये वर्त्तमानेभ्यो दूरान्तिकार्थेभ्यो द्वी वी पीप्राः स्युः। शम्भोर्दूरं दूरेण दूरात् दूरे वा यः पापान्निकटं निकटेन निकटात् निकटे वासः। परे तु प्रीं नेच्छन्ति। असत्त्वे किं दूरः पथः॥ ३१३॥

मार्गोऽध्वपरिमाणं नल्वः क्रोशयोजनादिः। सीम्नोरन्तः सीमान्तः स चासौ मार्गश्चेति सीमान्तमार्गः तस्मात्। सीमाद्वयमध्यवर्त्तिमार्गात् प्रथमा स्यादित्येकोऽर्थः। अन्ते गम्यमाने तस्मात् प्रथमा चकारात् सप्तमी च स्यादित्यपरोऽर्थः। अन्यथा गङ्गायमुनयोर्मध्ये कतिक्रोशाश्च जाह्नवीत्यत्र प्रथमानुपपत्तेः। न च तत्र लिङ्गार्थे प्रथमेति वाच्यम्। व्याप्तावर्थेऽध्वनः कर्मसंज्ञायां द्वितीयया बाधितत्वात् सोमनाथात् शतं क्रोशाः कृष्णः, शतक्रोशान्ते इत्यर्थः। अत्र सोमनाथकृष्णयोः सीम्नोर्मध्यवर्त्तिनो मार्गात् शतक्रोशादन्ते गम्यमाने प्रथमा सोमनाथादयुतक्रोशेषु च कृष्णः अयुतक्रोशान्त इत्यर्थः अत्र सोमनाथकृष्णयोः सीम्नोर्मध्यवर्त्तिनो मार्गादयुतक्रोशादन्ते गम्यमाने सप्तमी। अन्ते किम्? गङ्गायमुनयोर्मध्ये कति क्रोशाश्च जाह्नवी कतिक्रोशान् व्याप्य तिष्ठतीत्यर्थः। हिमालयमारभ्य आसमुद्रात् गङ्गा अत्र मध्ये पथि यत्र देशे जह्नुमुनिना पीता पुनर्मुक्ता तं देशमारभ्य आसमुद्रात्

## ३१५ । त्र्यादयो ऽर्थार्थैकक्तेः स्नेस्तु सर्वाः ।

त्री आदयः १॥, अर्थार्थैकक्तेः ५।, स्नेः ५।, तु ।१।, सर्वाः १॥ ।

**अर्थार्थैनैकक्ते र्ले स्त्र्यादयः स्युः, स्नेस्तु सर्वाः ।**
**भुक्त्यार्थेनार्थस्य मुक्तेः किं कार्य्यं नार्च्यते ऽच्युतः ॥**

---

या गङ्गा तस्या जाह्नवीति नामान्तरं जाह्नव्या मध्यदेशादयमुना निःसृता । ततश्च जह्नुमुनिदेशाद्दक्षिणस्यां यमुनाया उत्तरस्यां यो देश स्तत्र कतिक्रोशान् व्याप्य जाह्नवी तिष्ठतीत्यर्थः ॥ ३१४ ॥

श्रीर-टी—सीम्नोरन्तर्मार्गः सीमान्तर्मार्गः तस्मात् । चकारात् त्री इत्यस्यानुवृत्तिः । क्वचिदेकदेशोऽप्यनुवर्त्तत इति न्यायात् अवधिभूतयोरन्तर्वर्त्त्यध्ववाचिनः त्रीष्मौ स्याताम् अन्ते गम्यमाने । सीमनाथादित्यादि । सीमनाथाच्छतं क्रोशाः क्षणः सीमनाथान्निःसृत्य शतक्रोशान्ते क्षणः सीमनाथादयुतेषु क्रोशेषु जाह्नवी सीमनाथान्निःसृत्यायुतक्रोशान्ते जाह्नवी गङ्गा इत्यर्थः । उदाहरणद्वयेन त्रीष्मौ दर्शितौ । सीमनाथादित्युपात्तविषयत्वात् पौ । अन्ते किम् ? गङ्गायमुनयोर्मध्ये कतिक्रोशाः कियन्तः क्रोशा इत्यर्थः । तत्कालात् त्री । अवधिभूतयोर्मध्यवर्त्तिकालात् त्री स्यादन्ते गम्यमाने सति । कार्त्तिक्या आग्रहायणी मासे कार्त्तिकीमधिकृत्य मासान्ते आग्रहायणीत्यर्थः । एवं पौष्या माघी मासे इत्यादि अन्ते किम् ? पौषीमाघ्योर्मध्ये कति दिनानि ॥३१४॥

अर्थो निमित्तं स एव अर्थोऽभिधेयो यस्य सोऽर्थार्थः । अर्थार्थेन सह सम्भविष्यतीति एका क्तिर्यस्मात् सोऽर्थार्थैकक्तिः तस्मात् निमित्तार्थलिङ्गस्यैव विशेषणाल्लिङ्गात् तृतीयादयः पञ्च विभक्तयः स्युः । निमित्तार्थलिङ्गस्य ।विशेषणात् सर्वनाम्नस्तु सर्वाः प्रथमादयः स्युरित्यर्थः । भुक्त्या अर्थेन अच्युतोऽर्च्यते जनैरिति शेषः । भुक्तिर्भोगः । अत्रार्थशब्दस्य विशेषणाद्भुक्तिशब्दात्तद्विशेष्यादर्थादपि तृतीया एतयोः अजहल्लिङ्गत्वाद्भिन्नलिङ्गत्वम् । एवं मुक्तयेऽर्थाय मुक्तेरर्थस्य । मुक्तावर्थे इति किं कार्य्यम् अच्युतो न अर्च्यते जनैरिति शेषः । अपितु सर्वस्मै कार्य्यायेत्यर्थः । अत्र कार्य्यशब्दस्य विशेषणात् किमः सर्वनाम्न स्तद्विशेषणात् कार्य्यादपि प्रथमा । एवं किं केन कार्य्येण कस्मै कार्य्याय कस्मात् कार्य्यात् कस्य कार्य्यस्य कस्मिन् कार्य्ये इति ॥ ३१५ ॥

श्रीरा-टी—त्रि आदिर्यासां ताः अर्थोहेतुः अर्थोऽर्थो यस्य सः एका क्तिर्यस्मात् सः अर्थार्थेन सह एकक्तिः अर्थार्थकक्तिः तस्मान्निमित्तार्थार्थशब्द समानाधिकरणाल्लेरित्यर्थः स्नेस्तु सर्वा इति अर्थार्थसमानाधिकरणात् स्निसंज्ञकात् प्रादय इत्यर्थः ।

## ३१६। संज्ञाः कम्।

संज्ञाः १।।।, कं १।

**ढ ध घ भ ज ड़ाः कसंज्ञाः स्युः।**

इति कपादः।

---

भुक्त्यार्थेनेति भुक्तिर्भोगः एवं भुक्त्यै अर्थाय भुक्तेरर्थात् भुक्तेरर्थस्य भुक्तावर्थे। मुक्त्याऽर्थेन मुक्त्यै अर्थाय मुक्तेरर्थात् मुक्तेरर्थस्य मुक्तौ अर्थे। एवं हेतुकारणनिमित्तादियोगेऽपि तथाच अल्पस्य हेतोर्बहु हातुमिच्छन्निति रघुः। हेतुशब्दयोगेष्वेवेति परे। किं कार्य्यं केन कार्य्येण कस्मै कार्य्याय कस्मात् कार्य्यात् कस्य कार्य्यस्य कस्मिन् कार्य्ये वा अच्युतो नार्च्यते केन हेतुना न पूज्यत इत्यर्थः। एवं को हेतुः कं हेतुं केन हेतुना कस्मै हेतवे कस्माद्धेतोः कस्य हेतोः कस्मिन् हेतौ। द्वे निमित्ते द्वाभ्यां निमित्ताभ्यां द्वयोर्निमित्तयोः द्वयोः प्रयोजनयोः भवत्सु कारणेषु इत्यादि। परे तु सामान्यक्लीबत्व्यादिकोः सेस्तु प्रीं नेच्छन्ति अन्ये तु सर्वैरेव सर्वाः कीराहुः। न सामान्यक्लीबत्व्यादिरिति कश्चित् तु दीप्तौ नाह हेतुकारणनिमित्तशब्दसमानाधिकरणादित्यन्यः सूत्रे प्रान्तं यद्विधेयं द्वान्तं तत् प्राप्यते तु यत्। त्रान्तं तद्यस्य योगे स्यात् प्यन्तं यस्मात् परन्तु तत्। यस्य स्थाने भवेत् कार्य्यं तत् ष्यन्तं समुदाहृतम्। म्रान्तं गस्ये परे वाच्ये यस्मिन्नुपपदे तु तत्। क्वचिद्व्यत्ययतो ज्ञेयमिदं पाणिनिसम्मतम्॥ ३१५॥

अस्मिन् पादे या या संज्ञा उक्ता सा कं कारकसंज्ञा स्यात्। ढ ध घ भ ज ड़ाः कसंज्ञाः कारकसंज्ञाः स्युरित्यर्थः। कर्मकरणकर्तृसम्प्रदानापादानाधिकरणानामेकतमत्वं कारकत्वमिति यावत्। क्रियानिमित्तं कारकं लोकतः सिद्धमिति दुर्गसिंहः। चैत्रस्य इत्यादौ धनादिकमेवाकाङ्क्षितं स्यात् न तु गच्छेत्यादिकम्। तेन सम्बन्धस्य क्रियानिमित्तत्वाभावान्न कारकत्वं एवं लिङ्गार्थसम्बोधनयोरपीति। गृहे प्रविशतीत्यत्र गृहस्य कर्मतया द्वीतीयाप्राप्तौ अधिकरणविवक्षया सप्तमी। विवक्षावशाद्धि कारकाणि भवन्तीति न्यायात्। एवं पुष्पाणि स्पृहयतीत्यत्र सम्प्रदाने कर्मविवक्षा। स्पृहणीयविभूतय इत्यत्र कर्मण्यनीयं स्थाल्या पच्यते इत्यत्र,अधिकरणे करणविवक्षा। दोग्धि दुग्धं गोभ्यो गवां वा याचते कम्बलं राजभ्यो राज्ञां वा इत्युभयत्र कर्मणि अपादानविवक्षा। तपोवनेषु स्पृहयालुरेषा इति रघुः। इत्यादौ सम्प्रदाने अधिकरणविवक्षा इत्यादयो महाकविप्रयोगात् विवक्षया समाधानीयाः। स्थितेर्गतिश्चिन्तनीयेति न्यायात् तेभ

स्वेच्छया ग्रामं गच्छतीत्यादौ प्रयोगं न कर्त्तव्य इति साम्प्रदायिकाः। द्वयोर्युगपत्प्राप्तौ तु। कर्त्ताकर्माधिकरणं करणं सम्प्रदानकम्। आपादानञ्च सन्देहे परं पूर्वेण बाध्यते इति वचनाद्व्यवस्था। यथा पश्य मृगो धावति अस्त्येव घटः पश्य इत्यादौ कर्म बाधित्वा कर्त्ता प्रवृत्तिः। गङ्गां गत्वा स्नाति इत्यादौ अधिकरणं बाधित्वा कर्म प्रवृत्तम्। गृहं प्रविश्य निःसरति निःसृत्य प्रविशति गृहं वा इत्युभयत्र अपादानं बाधित्वा कर्म प्रवृत्तम्। वरमाहूय कन्यां ददाति कन्यां दातुं वरमाह्वयति वा इत्युभयत्र सम्प्रदानं बाधित्वा कर्म प्रवृत्तम्। अश्वे स्थितो गच्छतीत्यादौ करणं बाधित्वा अधिकरणं प्रवृत्तम्। एवमन्यदप्यूह्यं अतएव जौमरा अपि। अपादानसम्प्रदानकरणाधारकर्मणाम्। कर्त्तुश्चान्योन्यसन्देहे परमेकं प्रवर्त्तते इति वदन्ति। अर्थैकवाक्यम्। गुरुणा शिष्येण इक्षुः खाद्यते अत्र खादयतेर्मुख्यकर्मणोऽभावात् गौणकर्मण इक्षोरेव उक्तत्वम्। गुरुणा शिष्येण इक्षुः खाद्यते गुरुणा शिष्यः श्लोकं पाठ्यते। एतयोरेकवाक्यत्वे तु गुरुणा शिष्यः इक्षुं खादयता श्लोकं पाठ्यते। अत्र शिष्यस्य खादयतेः प्रयोज्यत्वेन गौणकर्त्तृत्वेऽपि पाठ्यते इत्याख्यातस्य प्रधानस्यापि कर्मत्वादुक्तत्वं एवं गुरुणा शिष्येण ओदनं पाच्यते गुरुणा शिष्यः श्लोकं श्राव्यते एतयोरेकवाक्येऽपि गुरुणा शिष्यः ओदनं पाचयता श्लोकं श्राव्यते एवञ्च विप्रं पश्य विप्र आनीयते एतयोरेकवाक्येऽपि पश्यानीयते विप्र इति। अत्र पश्येति आख्यातस्यापि कर्त्तृविहितत्वेन कर्मणा सम्बन्धिभावात्। आनीयते इति कर्मविहितेन सुतरां कर्मण उक्तत्वम्। एवं मयाक्षतं अहं पश्यामीत्यादीनामेकवाक्येऽपि अहं क्षतं पश्यामि इत्यादिकमेव। प्रधानेन आख्यातेन उक्तत्वात्। अतएव रहस्त्वदुत्सङ्गनिषन्नमूर्द्धा स्मरामि वानीरगृहेषु सुप्तमिति रघौ। मया सुप्तमहं स्मरामीत्यर्थः। आख्यातास्तिवादयः। तेषाञ्च प्रधानत्वं वाक्यसमापकत्वात् अतएव आख्याते वाक्यसमाप्तिः। एवञ्च विधिनिषेधयोर्विधिरेव बलवान्। तेन राजत्वात् पठयन् इक्षुः खादयतीत्यत्र खादयते निषेधेऽपि पाचयतेः कर्मत्वं इति। क्तक्तवतु कृत्येष्वप्येके प्राहुः। कृत्यास्तव्यादयः। तथाहि रामेण वनं गतं रामो रावणं हतवान् साधुभिः रामः स्मर्त्तव्यः। एषु भवत्यादि क्रियाध्याहारो नास्ति। रामो जगतां कर्त्ता रामो जगतां संहारकः रामेण स्वर्गः सुगमः इत्यादौ भवतीत्यादि क्रियाणामध्याहारं विना वाक्यसमाप्तिर्नास्तीत्यर्थः॥ ३१६ ॥

इति श्रीदुर्गादासविद्यावागीशविरचितायां सुबोधायां

मुग्धबोधटीकायां कारकपादः समाप्तः।

श्रीरा-टी—प्रकरणादस्मिन् पादे या या संज्ञा तस्याः कसंज्ञा इत्यर्थः। ढादिषष्णां संज्ञान्तरं आह ढ ध घ भ ज डाः कमिति कं कारकं तच्च शक्तिस्तस्यानेकरूपत्वात् द्रव्यन्तु शक्तिमन्नशक्तिस्तस्यैकस्वभावस्यानेकरूपतयाऽयुक्तत्वात्। द्रव्ये कारकव्यवहारस्तु शक्तिशक्तिमतोर्भेदस्याऽविवक्षितत्वात्। पुष्पाणि स्पृहयति परशुश्छिनत्ति स्थाली पचति दोग्धि पयो गोभ्यो गवां वा धनं याचते राजभ्यो राज्ञां वा। रिपौ कोपः पुष्पे स्पृहा तपोवनेषु स्पृहयालुरेषा इत्यादौ ढादयो नतु भादयः। विवक्षावशात् कारकाणि भवन्तीत्युक्तेः। इह कारकाणामुभयप्राप्तिसन्देहे भादिक्रमेणैव प्रवृत्तिः नतु जादयः। यथा विप्राय दत्त्वा वस्त्रं गृह्णाति धनुषा शरान् क्षिपति उपविश्योत्तिष्ठति पीठे, गृहं प्रविश्य निःसरति। अस्त्येव घटः पश्येत्यादिः। यदुक्तम्। अपादानसम्प्रदानकरणाधारकर्म्मणाम्। कर्त्तुश्चान्योन्यसन्देहे परमेकं प्रवर्त्तते इति। विप्राय दुह्यति विप्राय श्लाघते वरायाहूय कन्यां ददाति विप्रायाऽर्चयित्वा धेनुर्दीयते इत्यादौ उत्सर्गस्यापवादेन प्रधानेन गुणस्य च। बाधा विधीयते यस्मात् ततोऽनेन न वाधिता इति। चैत्रोऽश्वेन ग्रामं न गच्छति इत्यादौ तु ढ ध घात्व्यवस्थितां क्रियां चैत्रादौ केनापि प्रकारेण व्यापारितां निषेद्धुं पश्चान्नञा योगः। करणं कारकः क्रिया स एव साध्यत्वेन मुख्य एषामित्यर्थे कः जात्यपेक्षया एकत्वं कारकं क्रियानिमित्तमित्यर्थः। नन्वेवं विप्राय गां ददाति इत्यत्र यथा विप्राऽनुमतिद्वारा तस्य क्रियानिमित्तत्वं तथा चैत्रस्य तण्डुलं पचतीत्यादावपि तण्डुलसम्प्रदानद्वारा चैत्रस्य क्रियानिमित्तत्वात् ष्याः कत्वापत्तिरिति चेत् सत्यम्। चैत्रस्य इत्युक्तेः पचत्यादिफं नापेक्षते किन्तु धनादिमतो न क्रियानिमित्तत्वम्। शिवं पर्शुना इत्याद्युक्तेः पश्यति छिनत्ति इत्यादिकमपेक्षत एव। अतः क्रियानिमित्तत्वं कत्वमित्येके। त्वयर्थद्वारा क्रियान्वयित्वं कत्वमिति कश्चित्। तन्न विषवृक्षोऽपि संवर्द्ध्य स्वयं छेत्तुमसाम्प्रतं इत्यादाव्याप्तेः। वस्तुतस्तु अव्यत्ययथार्थद्वारकत्वे सति त्वयर्थद्वारा क्रियान्वयित्वं कत्वं चैत्रस्य तण्डुलं पचतीत्यादौ त्व्यर्थद्वारमेव विषवृक्षोऽपि संवर्द्ध्य इत्यादौ त्व्यर्थद्वारकत्वात् अव्याप्तिवारणाय त्वौ अव्येति विशेषणीयमिति तथापि कर्त्तृकर्मव्यवहितत्वादाधारस्य कारकत्वाऽप्रसङ्गः स्यादत आह ढादिकमिति गुरुक्षिप्तपक्षिदुर्गतानां प्रतिकुर्वीत भिषक् स्वभेषजैः। माषाणामश्नीयादित्यादौ तु त्वयर्थद्वारेण एव क्रियान्वयात् ष्याः कत्वमिष्टमेव ढे षीविधानादिति दिक्॥ ३१६॥

इति श्रीरामतर्कवागीशभट्टाचार्य्येण विरचिता

कारकटीका समाप्ता।

———

## ३य पादः।—समासः (सः)।

### ३१७। दैक्यं सो ऽन्वये।

दैक्यं १।, सः १।, अन्वये ७।

**द्वयो र्बहूनां वा दानामैक्यं स-संज्ञं स्यात्। तच्चान्वये सति कार्य्यम्॥**

---

स्यादीनामर्थान्निरूप्य स्याद्यन्तानामेकपदीकरणार्थमाह दैक्यमित्यादि।

दं पदं तच्च स्याद्यन्तमेव अन्यथा त्यादिप्रकरणं हित्वा अत्र एतद्विधानमनर्थं स्यात् एवं लिखति च पठति च इत्यादावपि समासापत्तिः स्यात्। अतएव नाम्नां समासो युक्तार्थस्तत्स्था लोप्या विभक्तय इति सर्ववर्म्मा। नाम्नां स्याद्यन्त-लिङ्गानामित्यर्थः। प्रणमति निषिधतीत्यादौ समासस्तु व्यस्यग्यनुकारेत्यादि-विध्यन्तरात्! ननु प्रणमति निषिधतीत्यादौ समासेऽवश्यकर्त्तव्ये इहैव स्याद्यन्त-त्याद्यन्तयोः समासो विधीयताम्। लिखति च पठति च इत्यादौ समासा-भावस्तु व्यस्यग्येत्यादिना नियमेन ग्यनुकारडाजादिभिन्नानां त्याद्यन्तेन समास-निषेधात् इति चेन्न कोर्लुक् त्ये चेत्यत्र स्याद्यन्तत्याद्यन्तयोः समासस्यानुवृत्तौ हरि-हरावित्यादिवत् समासे प्रणमतीत्यादौ विद्युत्कल्प इत्यादिवत् प्रत्यये पचति कल्पमित्यादावपि तिबादेश्च लोपापत्तेः। दं च दानि च इत्येकशेषे दानि दानामैक्यं दैक्यम्। द्वयोः स्याद्यन्तयोः बहूनां स्याद्यन्तानां वा ऐक्यं स संज्ञं स्यादित्यर्थः। सः समासः अन्वयस्तु पदानां परस्पराकाङ्क्षा योग्यता च। यथा वन्द्यौ चरणौ कृष्णस्य इत्यर्थे चरणाविति अवयवपदं षष्ठ्यन्तमवयविपदमाकाङ्क्षति। कृष्णस्येति षष्ठ्यन्तमवयविपदञ्च करचरणादिकमवयवपदमाकाङ्क्षति। तेन कृष्ण-चरणाविति समासः। वन्द्याविति कर्मणि घ्यणन्तं पदं कर्त्तृपदमेवाकाङ्क्षति। तव्यादीनां कर्त्तरि षष्ठ्यामपि योग्यताया अभावात् कृष्णस्येति पदं नाकाङ्क्षति। तेन कृष्णवन्द्याविति समासो न स्यादित्यर्थः। एवं काष्ठैः स्थाल्यामोदनं पचती-त्यत्र पचनक्रियायाः करणं काष्ठम् एवं पचनक्रियाया अधिकरणं स्थाली पचन-क्रियायाः कर्म ओदनः। तेन काष्ठैः स्थाल्यामोदनमिति वचसां परस्परा-काङ्क्षाभावान्न समासः। अभिप्रेतार्थबोधकत्वमन्वयमिति केचित्। हरिहरा-वित्यादिद्वन्द्वे तु परस्परसाहित्यमेवान्वयः। किञ्च यत्र प्रतियोगिकारकभिन्न-

यथा—वन्द्यौ चरणौ कृष्णस्य इत्यर्थे, कृष्णचरणौ
वन्द्यौ इति स्यात् न तु कृष्णवन्द्यौ चरणाविति।

---

पदापेक्षा वर्त्तते तत्र समासो न स्यात्। यथा ऋद्धस्य राज्ञो मातङ्गा इत्यत्र ऋद्धस्येति विशेषणस्य राज्ञ इति विशेष्येण समासाभावे राज्ञ इति पदस्य मातङ्गा इति पदेन समासो न स्यात्। तेन ऋद्धस्य राजमातङ्गा इति न स्यादिति। यत्र प्रतियोगिपदकारकपदयोरपेक्षा वर्त्तते तत्र स्यादेव। यथा रामस्य नाम-महिमा कृष्णमाश्रितमनाः। वाणेन भिन्नहृदयः रामेण हतभर्तृका। विप्राय दत्तभूमिः व्याघ्राल्लब्धभयः। सिन्धौ निमग्नसर्वस्व इत्यादि। तथाच प्रतियोगि-पदादन्यत् यदन्यत् कारकादपि। वृत्तिशब्दैकदेशस्य सम्बन्धस्तेन नेष्यते इति प्राञ्चः। एवं वृद्धस्य वाहोरपत्यमित्यत्र वृद्धस्य वाहविरिति न स्यात्। वीरं पुत्रमिच्छतीत्यत्र वीरं पुत्रकाम्यतीत्यपि न स्यात्। सर्वः समासो विकल्पितः। तेन हरिश्च हरश्च जयति हरिहरौ जयतः। चत्वारो भुजा यस्य तस्मै नमः चतुर्भुजाय नमः। नीलमुत्पलमिदं नीलोत्पलमिदम्। विष्णोर्भक्तोऽयं विष्णु-भक्तोऽयम्। पञ्चभिर्गोभिः क्रीतोऽयमश्वः पञ्चगुः। कृष्णमधिकृत्य कथा अधिकृष्णं कथा इत्यादि। क्वचिन्नित्यः। यथा कृष्णसर्पः लोहितशालिः इत्यादौ समास-योग्यवाक्यं न तिष्ठतीति क्वचित् समासो न स्यात्। तेन रामो जामदग्न्यः। व्यासः पाराशर्य्यः। अर्जुनः कार्त्तवीर्य्यः। शङ्कः पाण्डव इत्यादि। तथाच नित्योऽनित्यो विकल्पितश्च समासः कर्त्तरिच्छयेति प्राञ्चः। अनित्य इति नित्य-समासाभाव इत्यर्थः। एवं विशिष्टज्ञानं महाकविप्रयोगानुसारात्। अतएव कृत्तद्धितसमासानामभिधानं नियामकमित्यादि स्वयं वक्ष्यति ॥ ३१७ ॥

श्रीराटी—दैक्यमिति दश्च दश्च ते दे दश्च दश्च दश्च तानि दानि दे च दानि च तानि दानि तेषामैक्यम् एकस्य भावः ऐक्यं ब्राह्मणादित्वात् ष्णः एकशेषं मत्वानोऽप्याह द्वयोर्बहूनामिति। दानामिति बहुलमविवक्षितमित्येके। तथाच अने-कदानामेकदत्वं दैक्यं स-संज्ञं स्यादित्यर्थः। तच्च ऐक्यम् अन्वये सति कार्य्यम्। अन्वयो परस्परसम्बन्धरूपः स च क्वचिद्विशेषणरूपेण क्वचित् विशेष्यरूपेण द्वन्द्वे तु सर्वेषां दानां साहित्यरूपेणान्वय इति। कार्य्यमित्यनेन ऐक्यं विधायकं लक्षणमप्येतदित्युक्तम् अतएव कृष्णस्येत्यस्य चरणावित्यनेनैव सम्बन्धान्न तु वन्द्यावित्यनेनैक्यमित्याह न तु कृष्णवन्द्यौ चरणाविति एवं राज्ञः पुत्रो राजपुत्र इत्यादौ स्यात् न तु भार्य्या राज्ञः। पुत्रो देवदत्तस्य इत्यादौ यथा ऋद्धस्य राज्ञो मातङ्गाः तरुण्यो वृषल्यो भार्य्या यस्येत्यादौ

**३१८। भिन्नान्यैकार्थद्यादिसंख्याव्यादीनां च ह य ष ग वाः।**

भिन्नः-व्यादीनां ६।॥. च-वाः १॥।

**भिन्नार्थानां दानां स चसंज्ञः, अन्यार्थानां दानां हसंज्ञः, एकार्थानां दानां यसंज्ञः, द्यादित्र्यन्तपूर्वदानां षसंज्ञः, संख्यापूर्वदानां गसंज्ञः, व्यपूर्वदानां वसंज्ञः स्यात् ।**

---

तु सापेक्षमसमर्थं भवतीति न्यायात् न सः। केचित्तु प्रतियोगिकारकाभ्यां सापेक्षत्वेऽपि सः। यथा चैत्रस्य दासभार्य्या कृष्णेन हतपुत्रः रामदत्तः कुसुमः इति। यदुक्तं प्रतियोगिपदादन्यत् यदन्यत् कारकादपि वृत्तिशब्दैकदेशस्य सम्बन्धत्वेन नेष्यते। यथा तरुणी वृषलीभार्य्यः प्रवीरं पुत्रकाम्यति। ऋद्धस्य राजमातङ्गा इति न स्युः प्रयुक्तयः। चैत्रस्य दासभार्य्येयं लूनचक्षुरथो मया। शरैः शातितपत्रोऽयं वृक्षादिति सतां मतमित्याहुः। असमानाधिकरणसापेक्षस्य गमकत्वेन साभ्युपगमात् समानाधिकरणसापेक्षमसमर्थं भवतीति कश्चित्। अन्ये तु समस्यासमस्तेन नित्यापेक्षेण सङ्गतिः। सः समासः स च चतुर्द्धा सर्वदार्थप्रधानः सर्वदार्थाप्रधानः उत्तरदार्थप्रधानः पूर्वदार्थप्रधानः। यथा हरिहरौ पीताम्बरः नीलोत्पलं कृष्णाश्रितः हरित्रातः विरामो श्रधिस्त्रि इत्यादि॥ ३१७॥

भिन्नश्च अन्यश्च एकश्च ते अर्था अभिधेया येषां तानि भिन्नान्यैकार्थानि। द्वी द्वितीया विभक्तिरादिर्यासां ता द्यादयः तासाञ्च केवलानामसम्भवात्तदन्ता एव गृह्यन्ते। द्यादयश्च संख्या च व्यश्च द्यादिसंख्याव्यानि तानि आदयो येषां तानि भिन्नान्यैकार्थानि च द्यादिसंख्याव्यादीनि च तेषाम्। भिन्नार्थानां पृथक् पृथगभिधेयानां दानां समासश्चसंज्ञः स्यात्। चो द्वन्द्वः ननु नीलस्यार्थः कालः उत्पलस्यार्थः पुष्पविशेषः तेन भिन्नार्थत्वात् नीलोत्पलमित्यादौ सर्वसमासे द्वन्द्वापत्तिरिति चेन्न बहुव्रीह्यादयो विशेषसंज्ञा यत्र न प्रवर्त्तन्ते तत्रैव सामान्यद्वन्द्वसंज्ञाप्रवृत्तेः। ननु अभेदः शिवरामयोरित्यादिवचनात्। नेतरो विष्णुरीशानादिति वोपदेवोयाश्च पदार्थयोर्भेदाभावे हरिहराविति द्वन्द्वः कथम्। पदभेदे द्वन्द्व इति चेत्तर्हि नीलोत्पलमित्यादावपि द्वन्द्वापत्तिः। अत्र पदार्थयोरभेदेऽपि भेदविवक्षया द्वन्द्वः। अतएव विनायके विघ्नराजद्वैमातुरगणाधिपा इत्यमरः। किञ्च द्वन्द्व उभयपदार्थप्रधानेऽपि परपदस्यैव लिङ्गं भजतीति। यथा घटश्च फलञ्च घटफले

फलस्य घटस्य फलघटौ। स्त्री च पुत्री च स्त्रीपुत्राः। अन्यार्थानां समस्यमान-पदादन्यार्थानां पदानां समासो हसंज्ञः स्यात्। हो बहुव्रीहिः। स तूभयपदार्था-प्रधानः। तेन पीताम्बर इत्यत्र पीतशब्देन गौरवर्ण उच्यते अम्बरशब्देन वस्त्र-मुच्यते समुदायेन पीताम्बरपरिधायी कृष्ण उच्यते। स च द्विविधः। तद्गुण-संविज्ञानोऽतद्गुणसंविज्ञानश्च। यत्र समस्यमानपदार्थः समासवाच्ये वर्त्तते स तद्गुणसंविज्ञानः। यथा चित्रलोचनः शिवः। तदन्योऽतद्गुणसंविज्ञानः। यथा हतकंसः कृष्ण इति। एकार्थानां विशेष्यविशेषणभावापन्नानां पदानां समासो यसंज्ञः स्यात्। यः कर्मधारयः स तूत्तरपदप्रधानः। यथा नीलोत्पलम्। द्वितीयादिविभक्त्यन्तपदपूर्वकाणां पदानां समासः षः संज्ञः स्यात्। षस्तत्पुरुषः स चोत्तरपदप्रधानः। यथा कृष्णाश्रित इत्यादि। संख्यापूर्वदानामित्यादि। तस्यार्थे इत्यादि वक्ष्यमाणनियमात् तद्धितार्थे समाहारे उत्तरपदे परे च संख्यावाचकपद-पूर्वकाणां पदानां समासो ग संज्ञः स्यात् इत्यर्थः। अन्यथा द्विमूर्द्धः द्विपात् इत्यादि बहुव्रीहौ एकाहः सप्तर्षयः इत्यादि कर्मधारयेऽपि द्विगुत्वापत्तिः। न च उत्तरपदे परे यो द्विगुः स बहुव्रीहिरेवास्तु अन्यपदार्थवाचित्वादिति चेन्न। पञ्चगवधन इत्यादौ गोरतार्थे इत्यादीनामप्राप्तेः। गो द्विगुः। यथा द्वैमातुरः पञ्चगुः त्रिसखं पञ्चगवधनः। तद्धितार्थे उत्तरपदे परे च द्विगुरुभयपदार्थप्रधानः। समाहार द्विगुरुत्तपदप्रधानः। व्यपूर्वदानामित्यादि। वः कसामीप्येत्यादिनियमात् कारकादावर्थे अव्ययपदपूर्वकाणां पदानां समासो वसंज्ञ स्यात् इत्यर्थः। अन्यथा असक्थः सुप्रजाः सुपात् निर्धनः इत्यादावपि अव्ययीभावापत्तिः। वोऽव्ययीभावः। स च पूर्वपदप्रधानः। यथा अधिकृष्णमित्यादि ॥ ३१८ ॥

श्रीरा-टी भिन्नश्च अन्यश्च एकश्च ते, ते अर्था येषां ते द्वौ आदिर्यासां ताः, ताश्च संख्या च व्यश्च तानि तान्यादयो येषां ते पश्चाद्भिन्नान्यैकार्थाश्च द्व्यादि-संख्याव्यादयश्च ते तेषां चश्च हश्च यश्च षश्च गश्च वश्च ते द्वन्द्वात् परः श्रूयमाणः शब्दः प्रत्येकमभिसंबध्यते इति न्यायात्। संज्ञिसंज्ञानां समसंख्यत्वाच्च यथासंख्यं दर्शयन्नाह भिन्नार्थानां दानां इति। परस्परभिन्नार्थानां दानां सश्च संज्ञः पदार्थो हि जात्याकृतिव्यक्तयः जातिः धर्मः आकृतिरवयवसंस्थानादि, व्यक्तिः स्वरूपं अतएव नीलघट इत्यत्रापि पदार्थतावच्छेदकयोः परस्परभिन्नत्वात् अभेदविवक्षायां तु यः स्यादेव एवं हरिहरावित्यत्र वस्तुतोऽभेदेऽपि पदार्थतावच्छेदकयोः स्थिति-संहारकार्योर्भेदाद्भेद इत्येके। तथाच पदजन्यप्रतिपत्तिविषयभेदे च इति पर्य्य-वसितोऽर्थः। अन्यार्थानामिति असमस्यमानदार्थपराणां समस्यमानानां दानां

## ३१९। क्तो र्लुक् त्ये च।

क्तोः ६।, लुक्।१।, त्ये ७।, च।१।।

**से स्थितायाः क्तो र्लुक् स्यात्, त्ये च परे।**

---

सो ह संज्ञः यथा आरूढ़ो वानरो यं आरूढ़वानरो वृक्षः। दृष्टः कृष्णो येन दृष्टकृष्णः पुरुष इत्यादि। समस्यमानपदार्थोऽपि अन्यदार्थः स्यात् व्यपदेश्य-व्यपदेशिवद्भावात् यथा शोभनशरीरः शिनापुत्त्रः जनार्दनश्चात्मचतुर्थ एवेत्यादि। एकार्थानामिति परस्परसमानाधिकरणानां सो य संज्ञः यथा नीलोत्पलं परमात्मा इत्यादि। द्यादिक्त्यन्तपूर्वदानामिति यदि समस्यमानानां दानां पूर्वदानि द्यादिक्तीनामेकतमान्तानि भवन्ति तदा तेषां दानां सः य संज्ञो भवति। यथा कृष्णमाश्रितः कृष्णाश्रितः मासेन पूर्वः मासपूर्वः यूपाय दारुः यूपदारुः पापाद्भयं पापभयं कृष्णस्य सखा कृष्णसखः पूर्वाह्णे कृतं पूर्वाह्णकृतमित्यादि। संख्यापूर्वदानामिति। समस्यमानानां दानां पूर्वदानि यदि संख्यावाचकानि भवन्ति तदा तेषां तार्थादौ सो ग संज्ञः। यथा पञ्चगुः त्रिलोकी पञ्चगवधन इत्यादि। व्यपूर्वदानामिति समस्यमानानां दानां यदि पूर्वदानि व्यसंज्ञकानि भवन्ति तदा तेषां कादौ सः वसंज्ञः यथा अधिकृष्णमित्यादि। इह एकत्र संज्ञाद्वयसमावेशाभावात् विशेषणबोधितानामेवैताः संज्ञा ज्ञेयाः तेन पञ्च भार्य्याः सप्तर्षयः अपतितः पञ्चगुः अधिहरि इत्यादौ हादिसंज्ञा न तु गादय इत्यादि अन्यथा सर्वेषां दानां भिन्नार्थत्वात् च संज्ञा प्राप्तेः। चो द्वन्द्वो हो बहुव्रीहिः यः कर्मधारयः षस्तत्पुरुषः गो द्विगुः वोऽव्ययीभावः यगौ य विशेषाविति परे। एषां सामान्यतो लक्षणान्युक्तानि विशेषन्तु तत्तत्प्रकरणे विशिष्य वक्ष्यामः ॥ ३१८ ॥

सर्वसमासेषु स्थितायाः स्यादेः क्तोर्लुक् स्यात्। सर्वप्रत्ययेषु परेषु च स्यादेर्लुक् स्यादित्यर्थः। समासे यथा हरिहरौ पीताम्बरः परमात्मा कृष्णाश्रितः पञ्चगुः उपकृष्णम्। प्रत्यये यथा श्रीमान् पुत्त्रकाम्यति वाचिकं क्षत्रियः माथुरः हैमः ग्राम्यं इत्यादौ प्रथमादेर्लुक्। किञ्च तत्रत्यः सार्वत्रिकः इत्यादौ त्रादेशस्य लोपाभावस्तु स्यादिप्रकरणं हित्वा तद्धितप्रकरणे आदेशविधानसामर्थ्यात्। स्यादिविभक्तेरिति किं प्रणमति निषेधति इत्यादौ व्यस्यग्येत्यादिना समासेऽपि तिबादेर्नलोपः। पचतितरां पचति कल्पमित्यादौ प्रत्ययेऽपि तिबादेर्न लोपः। लुक्करणेन त्यलोपे त्यलक्षणमिति न्यायात् प्राप्तव्यं विभक्तिनिमित्तकं कार्य्यं लुकि न तवेति निषेधान्न स्यादिति। तेन कस्य पुत्त्रः किं पुत्रः इत्यादौ टेरकारो न

## द्वन्द्वसमासः। (चः)।

### इतरेतरयोगे च समाहारे च चो द्विधा।

स्यात्। धातारं गतः धातृगतः इत्यादौ न वृद्धिः। यज्वा चासौ विप्रश्चेति यज्वविप्र इत्यादौ न दीर्घः विरामविहितन्तु स्यादेव। तेन ब्रह्माच्युतेशा इत्यत्र नीलुप् फेधाविति नस्य लुप्। पयसो विकारः पयोविकार इत्यादौ सस्य विसर्गः। अनडुहश्चर्म अनडुच्चर्म इत्यादौ दडादिः। किञ्च त्वया कृतं त्वत्कृतं मया कृतं मत्कृतमित्यादौ विभक्तेर्लुकि कृतेऽपि युष्मदस्मदोरेकत्वेऽर्थे त्वन्मदौ भवतः कद्वयोरर्थस्यापि ग्रहणादित्युक्तेः। युवावादेशौ तु द्विवचने परे एव स्यातां न तु द्वित्वेऽर्थे। तेन युवाभ्यां कृतं युष्मत्कृतं आवाभ्यां कृतं अस्मत्कृतमिति। अत्र द्विवचनस्य लुकि युवावादेशयोरसम्भवे स्वरूपेणावस्थानम्। अस्य वीजं पुरा लिखितम्॥३१८॥

गोरा-टी—अधिकारात् स इत्यनुवर्त्तते इत्याह से स्थितायां इति। से कर्त्तव्ये समस्यमानदेभ्यः क्तेरित्यर्थः प्रकरणात् स्यादिक्तेरेव तेन पचतिरूपं पचतितरामिति न त्ये क्तेर्लुक्। यतस्त्यः अत्रत्य इत्यादौ तु स्यादिस्थानजत्वेऽपि स्वबादिपाठात्तदन्तानां तद्धितान्तर्गतत्वात् न स्यादिर्लुक्। लुक्करणात् स्यादिनिमित्तं कार्य्यं न स्यात् यथा सखिप्राप्तः गवाश्रित इत्यादौ न घौ त्रिः आ आम्ङसोरिति वाक्त्वचं राजपुरुषेत्यादौ तु विराममाश्रित्य कुङ्नोलुप् स्यादेव॥३१८॥

इतरेतरेति। चो द्वन्द्व इतरेतरयोगे च समाहारे च भवन् द्विधा भवति। इतरेतरयोगोऽवयवप्रधानः। तेनावयवकृते द्वित्वे बहुत्वे भवतः। समाहारः संहतिप्रधानः तेन संहतेरेकत्वद्वित्वादेकवचनमेव इति भेदः। हरिश्च हरश्च इति वाक्ये सिद्वयस्य लुकि द्वयोः पदत्वेऽपि हरिहर इति समुदायस्य लिङ्गसंज्ञायां औकारोत्पत्तिः। राजदण्डिनावित्यादौ तु पूर्वपदस्य विभक्तेर्लुकि विरामविहितनकारस्य लोपः स्यात् परविभक्तेर्लोपेऽपि पुनर्लिङ्गसंज्ञायां विभक्त्युत्पत्तौ विरामविहितं नकारलोपादिकं न स्यादेव। कातन्त्रास्तु, अल्पस्वरो भवेत् पूर्वं द्वन्द्वे यच्चार्च्चितं द्वयोः इति मत्वा दैत्यदानवौ कृष्णार्जुनौ इत्याद्यप्युदाहरन्ति। इदन्तु मनुष्यदेवौ चक्रवाकगरुडौ उदूखलमुषले काकमयूरौ इत्यादि विस्तरव्यभिचारदर्शनादनेनोपेक्षितम्॥३१९॥

गोरा-टी—इतरेतरयोगे चेति। चो द्विधा द्विप्रकारः, तत्र एक इतरेतर योगः इतरस्य इतरेण सह योग इति परस्परापेक्षावयवभेदानुगतस्तत्र द्वयोः प्राधान्यात् द्वं बहूनां प्राधान्यात् ब्वं स्यादेव यथा हरिहरौ ब्रह्माच्युतेशाः इत्यादि

हरिश्च हरश्च हरिहरौ। ब्रह्मा च अच्युतश्च ईशश्च ब्रह्माच्युतेशाः।

---

ऽन्यः समाहारः स च तिरोहितावयवभेदः किन्तु समुदितभिन्नभेदस्तस्यैकत्वात् क्लम्। यथा समीहृशदं वाक्त्वचं धवखदिरपलाशं इत्यादि समुदायिभ्योऽन्यः समुदाय इति दर्शनात्। क्तेर्लुक् त्ये चेति एकं सूत्रमिति योगविभागः कर्त्तव्यः तस्मादिष्टसिद्धिः। क्वचित् निषिद्धं स्यात् तथाहि, नौजः सहस्तमोऽम्भोऽञ्ज स्तपसः पूर्वात् च्याः। पूर्वदभ्रुतेभ्य एभ्यस्त्या लुक् न स्यात्। ओजसाहृतः पुत्रः सहसा भुक्तं तमसा पिहितं अम्भसा प्लुतं अञ्जसानिष्पादितं तपसा कृतं तथाच तमोजसानिर्जित देवराजं दृष्ट्वा रयस्यं तपसार्तसिद्धिमिति बौध्यम्। तपः शब्दात् विकल्पयन्त्यन्ये तथाच तपः कृशाः शान्त्युदकुम्भहस्ता इति भट्टिः। पूर्वात् किं? सह ओजसा वर्त्तते इत्यर्थे सौजः कृतं सततं शतमोहतमिति भारविः। उदन्वदम्भः परिवीतमूर्त्तिरिति माघः। पुंजनुषोऽनुजान्धे। आभ्यामेनयोः क्रमात् त्या लुक् न स्यात् पुंसानुजः पुंसित्यलुक् विधानादेव स्वार्थे चौपुमांसं प्रत्यनुजत्वेन पुंसो हेतुत्वाड्डितौ वा वौति। जनुषान्धः जनुर्जन्म तेनान्धः। मनसो नाम्न्याज्ञायिनि च। मनसस्त्या लुक् न स्यात् संज्ञायां आज्ञायिनि शब्दे च परे मनसादेवी मनसागुप्तं मनसा सङ्गतम्। नाम्नि किं? मनोदत्ता कन्या। मनसा आज्ञातुं शीलमस्य मनसाज्ञायी योगी असंज्ञार्थः पृथगुपादानम्। आत्मनः पूरणे। आत्मनस्त्या लुक् न स्यात् पूरणत्यान्ते परे। आत्मना षष्ठः आत्मना पञ्चमः। जनार्दनस्त्वात्मचतुर्थ एव इति तु आत्मा चतुर्थोऽस्येति हः। व्याकरणाख्यायामात्मपराभ्यां च्याः। व्याकरणे व्यवह्रियमाणा या संज्ञा तस्यां गम्यमानायां आत्मपराभ्यां च्या लुक् न स्यात्। आत्मनेपदं परस्मैपदं आत्मनेपदं भाषा उक्तिर्यस्य आत्मनेभाषः। स्तोकान्तिकदूरार्थकृच्छ्रात् क्तेः प्याः। स्तोकाद्यर्थेभ्यः कृच्छ्राच्च क्तान्ते परे प्या लुक् न स्यात्। स्तोकान्मुक्तः अल्पान्मुक्तः अन्तिकान्मुक्तः अभ्यासादागतः दूरादागतः विप्रकृष्टादागतः कृच्छ्रान्मुक्त इति तु षौ स्यात्। क्तेः किम्? स्तोकभयम्। बलब्राह्मणाभ्यां कारशंसिनोः। आभ्यां प्या लुक् न स्यात् क्रमादनयोः। बलादनौचित्यात् करणं बलात्कारः ब्राह्मणो वेदैकदेशस्तत उद्धृत्य शंसितुं शीलमस्य ब्राह्मणात् शंसी ऋत्विग् विशेषः। चेपे ष्या वा तु पुत्रे। चेपे गम्यमाने ष्या लुक् न स्यात् पुत्रशब्दे तु वा। चौरस्य कुलं दास्याः पतिः दास्याः पुत्रः दासीपुत्रः। चेपे किं? विप्रकुलं विप्रपुत्रः। वाक् दिक् पश्यतो युक्तिदण्डहरे। एभ्य एतेषु क्रमात् ष्या लुक् न स्यात्। वाचो युक्तिः

दिशो दण्डः पश्यतोहरः पश्यन्तमनादृत्य हरतीत्यर्थः। अदस' ष्णायननीनण-कान्तकुलणकान्तपुत्तेषु। अदसः ष्या लुक् न स्यात् ष्णायने नीन णकान्तकुले णकान्तपुत्ते च। अमुष्यापत्यं नड़ादित्वात् ष्णायनः आमुष्यायणः विख्यातपितृकः अमुष्य कुले साधुः आमुष्यकुलीनः साधौ प्रतिजलादेर्णीनः। अमुष्य कुलस्य भावः मनोज्ञत्वात् णकः आमुष्यकुलिका एवमामुष्यपुत्तिका इति भावार्थभूतवदङ्गीकारात् णकान्त इति विशेषणम्। ऋतो विद्यायोनिसम्बन्धे। ऋदन्तात् ष्या लुक् न स्यात् पूर्वोत्तरदयोर्विद्यायोनिसम्बन्धवाचित्वे सति। होतुः शिष्यः होतुः पुत्तः पितुरन्तेवासी स्वसुः पुत्रः। ऋत इति किम्? मातुलपुत्तः। विद्यायोनिसम्बन्धे किम्? होतृधनम्। वा स्वसृपत्योः पितुस्तु पितरि। ऋदन्तात् ष्या लुक् न स्यात् वा अनयोः पितुस्तु पितरि। मातुः स्वसा मातृस्वसा होतुः स्वसा होतृस्वसा दुहितुः पतिः दुहितृपतिः पितुः पिता पितृपिता। पितामहः पितृपिता तत् पिता प्रपितामहः इत्यमरः। दिवो दासे नाम्नि। दिवः ष्या लुक् न स्यात् दासे नाम्नि। दिवोदासः नृपतिभेदः। शुनः पुच्छलाङ्गूलशेफशेफसि। शुनः ष्या लुक् न स्यादेषु नाम्नि गम्ये। शुनः पुच्छः शुनो लाङ्गूलः शुनः शेफः शुनः शेफाः ऋषीणां नाम चतुष्टयम्। क्वचिदन्यत्रापि। उक्तलक्षणैरप्राप्तेऽपि ष्या लुक् न स्यात्। वाचस्पतिः वास्तोष्पतिः दिवस्पतिः शुनस्कर्णः देवानां प्रियः इत्यादि प्रयोगानुसारेण ज्ञेयम्। गोऽङ्गसन्तात् त्रा नाम्नि। गोशब्दाददन्ताद्ङ-सन्ताच्च परस्याः त्रा लुक् न स्यात् संज्ञायाम्। गविष्ठः गविष्ठरः वर्हिष्ठादि-त्वात् यः। अदन्तात्तु। वनेकिंशुकाः वनेकशेरुकाः वनेवल्लजाः। गोष्ठे प्रवीर इत्यादि। हसात्तु युधिष्ठिरः वर्हिष्ठादित्वात् यः त्वचिसारः। कथं त्वक्सार इति तु त्वक्सारो यस्येति हः। एभ्यः किम्? नदीकुक्कुटिका। नाम्नि इति किम्? अक्षशौण्डः। अङ्गा यमिति योनिषु। ये त्वे मतौ योनौ च परे अङ्गाः त्रा लुक् न स्यात्। अप्सु भवः दिगादित्वात् यः अप्सव्यः अप्सुमतिः अप्सु-योनिः संज्ञायामिति सः। अपूर्वादिति किम्? परमाप्सृतिः। मध्यान्ताभ्यां गुरौ। पृथग्विधानादनाम्नि। मध्येगुरुः अन्तेगुरुः अपूर्वादित्येव सन्मध्यगुरुः कथं मध्यगुरुः अन्तगुरुरिति मध्ये गुरुर्यस्य इति हः मध्यगुरुः अन्तगुरुश्च गण इति छान्दसः। अमूर्द्धमस्तकात् स्वाङ्गादकामे। मूर्द्धमस्तकवर्जात् स्वाङ्गवाचकात् त्रा लुक् न स्यात् न तु कामशब्दे परे। कण्ठेकालः उरसिलोमा शत्रुं चकारोरसि वाणमाशु। अमूर्द्धमस्तकादिति किम्? मूर्द्धनि शिखा यस्य मूर्द्धशिखः मस्तकशिखः अकामे किम्? मुखकामः अङ्गसन्तादित्येव अङ्गुलित्राणः गोचरः। स्वाङ्गादिति

## ३२०। पुंवत् स्त्रेः।

पुंवत्।१।, स्त्रेः ६।।

---

किम्? धर्म्मवृत्तिः धर्म्ममतिः। घञन्तबन्धे वा। घञन्तबन्धे परे स्वाङ्गादस्वाङ्गाच्च सप्तम्या लुक् न स्यात् वा ये सति। करेबन्धः करबन्धः चक्रेबन्ध चक्रबन्धः उरसिबन्धः उरोबन्धः। अङ्गसन्तादित्येव। मणिबन्धः गुप्तिबन्धः। बहुलं ये कृदन्तेऽस्थे। अस्थे कृदन्ते सप्तम्यालुक् न स्यात् तत् पुरुषे सति। बहुलग्रहणं नित्यविकल्पनिषेधार्थंस्तम्बेरमः कर्णेजपः पङ्केरुहः खेचरः अग्रेचरः जघनेकालः काण्डेरुहः इत्यादौ नित्यं सरसिरुहं सरोरुहं वनेचरः वनचरः दिविषदः द्युषदः इत्यादौ विकल्पः कुरुचरः स्थाण्डलशायी साङ्काश्यसिद्ध इत्यादौ लुगेव अस्थ इति किम्? समस्थः विषमस्थः कूटस्थः काम्रस्थः उदरस्था हरीतकी तथाच कपालेन करस्थेनेन्दुशेखर इति दण्डी। अन्ये तु असाधु-रित्याहुः कथं हृदिस्थ इति बाहुल्यात् सव्येष्ठः वर्हिष्ठादि पाठाद्वा अपूर्वादेव तेन नीलसरोरुहं महावनचर इत्यादि। द्युशरत् प्रावृट् कालाज्जे वर्षचरशरवरात्तु वा। एभ्यः सप्तम्या लुक् न स्यात् जे परे वर्षादेस्तु वा। दिविजः शरदिजः प्रावृषिजः कालेजः वर्षेजः वर्षजः चरेजः चरजः शरेजः शरजः वरेजः वरजः। एभ्यः किम्? अप्सुजः गृहजः स्थलजः। कालनाम्नः कालेतरादौ च। वेत्यनुवर्त्तते कालनाम्नः सप्तम्या लुक् न स्यात् वा कालशब्दे परे तरतमतनचतरां चतमांसु च। पूर्वाह्णे काले कृतं पूर्वाह्ण-कालकृतं पूर्वाह्णेतरः पूर्वाह्णतरः पूर्वाह्णेतमः पूर्वाह्णतमः पूर्वाह्णेतनः पूर्वाह्णतनः पूर्वाह्णेतरां पूर्वाह्णतरां पूर्वाह्णेतमां पूर्वाह्णतमाम् एवमपराह्णे काले कृतम् अपराह्ण-कालकृतमित्यादि। अङ्गसन्तादित्येव रात्रितरायां जागर्त्ति। अकालाद्वासशयवासिषु। अकालवाचिनः सप्तम्या लुक् न स्याद्वा वासशयवासिषु। वनेवासः वनवासः खेशयः खशयः ग्रामेवासी ग्रामवासी अन्तेवासी अन्तवासी। अकालादिति किम्? पूर्वाह्ण-शयः अङ्गसन्तादित्येव गुहाशयः भूमिशयः। कारनाम्नि हसादौ। वणिक्कर्षकपशु-पालाद्यैः पालनार्थं राज्ञो देयो यः स करः कर एव कारः तस्य नाम कारनाम तस्मिन् वाच्ये हसादौ परे सप्तम्या लुक् न स्यात् वा। हलेद्विपदिका हलद्विपदिका। द्वौ द्वौ पादौ परिमाणमस्य इत्यर्थे संख्यादेराभीक्ष्ण्ये कः पादः पदादेशः तार्थे सः स्वभावात् स्त्रीत्वं त्येन आभीक्ष्ण्यं द्योतयति यूथेपशुः यूथपशुः देय इति हसादौ किम्? अविकटे उरणो देय इत्यर्थे अविकटोरणः अङ्गसन्तादित्येव नद्यांदोहनः परे तु कारः परिभाषिकानियमः ये तु निर्विशेषणं कारनाम्नीति पठन्ति तन्मते कूपे शाणः इत्युदाहरणं भवति वस्तुतस्तु विकल्पेनायं प्रतिषेधः॥ ३१९॥

सं स्थितायाः सेः पुंवत् स्यात् त्ये च परे।
पूर्वपश्चिमे।

पुमानिव पुंवत्। त्ये चानुवर्त्तते। किञ्च त्यशब्देनात्र विभक्तिभिन्नप्रत्ययो ग्राह्यः। अन्यथा सर्वनामशब्दानां स्त्रीलिङ्गे प्रयोगो न स्यादिति। किञ्च विभक्तेः स्थाने तद्धितप्रत्ययीकृतानामादेशे पुंवत् स्यादेव। यथा सर्वस्यां दिशि सर्वतः एवं सर्वस्याः दिशः सर्वतः इत्यादि। सर्वसमासे सर्वप्रत्यये च परे सर्वनाम्नः पुंवद्भावः स्यादिति। किञ्चोपस्थितप्रथमान्तं हित्वा सेरिति विप्रकृष्टषष्ठ्यन्तग्रहणं ज्ञापयति। पूर्वपदस्य सेः पुंवद्भावः स्यादिति। तेन पश्चिमा च पूर्वा च पश्चिमापूर्वे इत्यादौ परपदस्य सेः पुंवद्भावो न स्यात् इति। न च न गौण्याख्येत्यनेन द्वन्द्वे सिसंज्ञानिषेधात् पूर्वपश्चिमे इत्यत्र कथं पुंवद्भाव इति वाच्यं न गौण्याख्येत्यनेन द्वन्द्वसमासे कृते एव सिसंज्ञा निषिध्यते पुंवत् सेरित्यनेन सं स्थितस्यैव वर्त्तमाने कृविधानात् समासे क्रियमाणे सर्वादेः पुंवद्भावो विधीयते इति विरोधाभावात्। समासो यथा पूर्वा च पश्चिमा च पूर्वपश्चिमे एवं सर्वा प्रिया यस्य स सर्वप्रियः। पूरणीप्रियेत्यादिसूत्रस्य पुंवत्स्युक्तेत्यादिना सूत्रविहितपुंवद्भावनिषेधार्थकत्वात्। एवञ्च सर्वा चासौ स्त्री चेति सर्वस्त्री सर्वासां पतिः सर्वपतिः इत्यादि। प्रत्यये यथा सर्वामिच्छति सर्वकाम्यति भवतीमिवाचरति भवत्यति इत्यादि। किञ्च सर्वादिशब्दस्य स्त्रियां सप्तम्यास्त्रादेशे सर्वत्रेत्यादौ पुंवद्भावे कर्त्तव्ये तद्धितादेशानां स्थानिवत्त्वानङ्गीकारात्॥ ३२०॥

गोरा टी—सं त्ये चानुवर्त्तते सं स्थितस्येति सर्वस्मिन् सं त्ये च सेः पुंवत् स्यात् इत्यर्थः तेन पूर्वपश्चिमे सर्वस्याः प्रियः सर्वप्रियः। पूर्वपश्चिमे इत्यादौ तु न गौण्याख्या चेति चे सिसंज्ञानिषेधस्य जसादेरिकाराद्यादेशाभावफलकत्वादुत्तरदस्यैव सिसंज्ञानिषेधस्तेन पूर्वपदस्य पुंवद्भावः चसे पूर्वदस्य सिसंज्ञानिषेधाभावात् अतएव पूर्वोत्तरे इत्यादौ नोत्तरपदस्य पुंवद्भावः तस्य सिसंज्ञानिषेधात्। यद्वा सं कर्त्तव्ये वाक्यस्थितस्य सेः पुंवद्भावः पूर्वोत्तरे इत्यादौ तु दिग्विशेषणत्वादावपि पूर्वोत्तरे इत्यादि। त्ये यथा सर्वस्याः सर्वतः सर्वस्यां सर्वत्र एकस्या भावः एकत्वं सर्वामिच्छति सर्वकाम्यति पूर्वा पुरस्तात् इत्यादि। आत् सुमाम इत्यत्र अग्रहणज्ञापकात् स्यादित्ये न पुंवद्भावः तेन सर्वा सर्वे सर्वा इत्यादौ न स्यात्। अत्राहुः। इदुदन्ताजाद्यदन्तात्याच् तरश्चेत् द्वयोर्द्वयोः। बुधैः पूर्वं प्रयोक्तव्यं बहूनामपि पूजितम्। समाचराणां भर्तॄणां यद्यत् पूर्वं क्रमेण तत्। संख्यानामल्परूपाणामर्थधर्मादिषु द्वयम्। बाध्यत्वं बाधकत्वञ्च ज्ञेयं पूर्वापरक्रमात्। यथा हरिहरौ शम्भुकृष्णौ अच्युतशङ्करौ शिवगौर्य्यौ पितापुत्रौ मात-

## ३२१। ऋटो ङा तत् पुत्रे सगोत्रविद्ये चे।

ऋत: ।६।, ङा ।१।, तत्पुत्रे ७।, सगोत्रविद्ये ७।, चे ७।

**चे स्थितस्य ऋदन्तस्य ङा स्यात्, ऋदन्ते पुत्रे च परे सगोत्रविद्ये।**

**मातापितरौ पितापुत्रौ, होतापोतारौ।**

---

ताततनूद्भवा: भरणीकृत्तिके ग्रीष्मवर्षा विंशतिसप्तती। धर्मार्थौ गुणवृद्धी च कामार्थौ मधुसर्पिषी। आद्यन्तावर्थशब्दौ च धर्मादौ परिकीर्त्तितौ। पत्नेऽयंधर्मावित्यादि शेषं ज्ञेयं प्रयोगत:। मातृताततनूद्भवा: इत्यत्र तातापेक्षया मातुरभ्यर्हितत्वम्। गर्भधारणपोषाभ्यां तातान्माता गरीयसीत्युक्ते:। एवं मातापितराविति। युधिष्ठिरार्जुनौ विप्रक्षत्रियविट्शूद्रा: इत्यादिसिद्धये भ्राता ज्यायान् वर्ण: क्रमेणेति सूत्रद्वयं कुर्वन्त्यन्ये। तदस्मन्मते तु जन्ममरणकृताद्यभ्यर्हितत्वात् सिद्धं एतत् सर्वं प्रायिकं धूमाग्नी लक्षणहेतू। समुद्रादी काकशुकौ काशकुशवल्वजमित्यादि शिष्टप्रयोगत: ॥ ३२० ॥

स च पुत्रश्च तत्पुत्रं तस्मिन्। तत्शब्देनेह पूर्वस्थितऋदन्त एवोच्यते। समाने गोत्रविद्ये यस्य तत् सगोत्रविद्यं तस्मिन्। मातापितरौ पितापुत्रौ इत्युभयत्र समानगोत्रत्वम्। होतापोतारौ इत्यत्र समानविद्यत्वम्। सगोत्रविद्ये किं दातृभोक्तारौ जामातृपुत्रौ। मातापितरौ इत्युदाहरता प्रायेण द्वन्द्वे स्त्रीलिङ्गस्यैव पूर्वस्थितिरिति सूचितम्। तेन पार्व्वतीपरमेश्वरौ लक्ष्मीनारायणौ वधूवरौ इत्यादि। क्वचिन्न स्याच्च तेन सोऽभवद्वरवधूसमागम: प्रत्ययप्रकृतिसमन्वित इति रघौ ॥३२१॥

श्रीरा-टी—स च पुत्रश्च तत्तस्मिन् गोत्रञ्च विद्या च ते समाने गोत्रविद्ये यस्य तत् तस्मिन् तत्शब्देन ऋदन्त: परामृष्यत इत्यत आह ऋदन्ते पुत्रे चेत्यादि। तथाच ऋदन्तानां चे ङा स्यात् ऋदन्तपुत्रयो:। पूर्वोत्तरद्वयोर्विद्यायोनिसम्बन्धवाचित्वे सतीत्यर्थ:। तत्रादौ योनिसम्बन्धोदाहरणमाह मातापितराविति माता च पिता च तौ पिता च पुत्रश्च तौ इत्यादि वाक्यम् एवं मातापुत्रावित्यादि पुत्रार्थग्रहणात् पुत्रौ च दुहितात्मजौ इति स्यादिति कश्चित्। होतापोताराविति होता च पोता चेति वाक्यम्। एवं नेष्टा च उद्गाता, च नेष्टोद्गातारौ होतापोतारौ च नेष्टोद्गातारौ च ते होतापोतानेष्टोद्गातार: होता च पोता च नेष्टा च होतृपोतृनेष्टार: इत्यत्र न स्यात् से सर्वादिद्वं आदिद्वं सर्वान्तद्वमुत्तरद्व-

## ३३२। चगैक्यवं क्लीवम्।

चगैक्यवं १।, क्लीवं १।।

### चस्यैक्यं गस्यैक्यं वस्य क्लीवं स्यात्।

---

मिति पूर्वाचार्य्यैर्व्यवस्थितमतः पोतृशब्देन व्यवहितत्वात्। होतृपोतृनेष्टारश्च उद्गाता च ते होतृपोतृनेष्टोद्गातार इत्यत्र तु स्यादेव समस्तासमस्तयोर्द्वयोः पुनश्च इति पूर्वोक्तव्यवस्थायां अविरुद्धत्वात्। शेषवाचिनां समानविद्यासम्बन्धः कात्यायनेन दर्शितः। यथा ब्रह्मोद्गातृ होत्रध्वर्यु ब्राह्मणाच्छंसि प्रस्तोतृ मैत्रावरुणप्रतिहर्तृपोतृ प्रतिच्छतृ अच्छावाक् नेष्ट्र अग्नीध्र अब्राह्मण्य ग्रावस्तुत् उन्नेतृ प्रतृणीता इति। सगोत्रविद्ये किं? वक्तृश्रोतारौ। अवायुर्देवतार्थस्य तस्मिन्। वायुभिन्नस्य देवतार्थस्य चे ङा स्यात् अवायुर्देवतार्थे शब्दे परे। इन्द्रासोमौ इन्द्रापूषणौ इन्द्राबृहस्पती मित्रावरुणौ अग्नाविष्णू सूर्य्याचन्द्रमसौ। इह देवताशब्देन येषामेकेन मन्त्रेण यैः पदैर्वा वेदे सहदानमुक्तं तेषामेव ग्रहणं तेन ब्रह्मप्रजापती शिववैश्रवणौ स्कन्दविशाखौ रविचन्द्रौ इत्यादौ न स्यात्। तथाच रविचन्द्रावपि नोपलक्षिताविति घटकर्परः। अवायुः इति किं? अग्निवायू वाय्वग्नी। अग्नेर्ङी सोमवरुणयोः। अग्नेर्ङी स्यात् सोमवरुणशब्दयोर्देवता च। अग्नीषोमौ अग्नीवरुणौ। लवे कुशस्य। आदरार्थोऽयं आरम्भः कुशस्य ङी स्यात् लवशब्दे परे। कुशीलवाविति वाल्मीकिप्रयोगः। दिवो द्यावापरदे पृथिव्यां दिवस च। परदे परे दिवो द्यावा स्यात् पृथिव्यान्तु द्यावादिवसौ च। द्यौश्च भूमिश्च द्यावाभूमी द्यावाभूमी द्यावाचर्मे देवतार्थस्यैव विधानात् द्युसरसी इत्यादौ न स्यात्। अनीबन्तभूमिशब्दस्यैव वेदे सहदानेनोक्तत्वेन देवतार्थत्वादीबन्ते न स्यात् तथाचैक्यं भिन्दन् द्युभूम्योरिति सूर्य्यशतकम्। परदग्रहणात् सर्वान्तद एव तेन द्युभूमित्य्यां इत्यादौ न स्यात्। द्यौश्च पृथिवी च दिवस्पृथिव्यौ द्यावापृथिव्यौ दिवसमिति अविकृतनिर्देशात् न विः। उषासोषसः। देवतार्थस्योषसः परदे परे उषासा स्यात् चे। उषासानक्तं उषासासूर्य्यौ। अग्नेर्न तौ त्रिमत्यवैष्णवे। वैष्णवभिन्ने त्रिमति परे परे अग्नेर्ङी ङा च न स्यात् चे। अग्निश्च मरुच्च तौ देवते अस्य अग्निमारुतं हविः। अग्निवारुणीमनड्वाहीमालभेत। वैष्णवे तु अग्नावैष्णवः चरुः त्रिमति किं? आग्नेन्द्रं कर्म॥ ३२१॥

चगयोरैक्यं चगैक्यं चगैक्यञ्च तस्य चगैक्यव अव्ययीभावस्य क्लीवत्वफलन्तु उपसंखं उपलक्ष्मि इत्यादौ ह्रस्वः। चगाभ्यामन्यत्र ऐक्याभावात् ऐक्यग्रहणा

देवेष्टसिद्धौ चगैक्यग्रहणं ज्ञापयति। क्वचिदन्योऽपि क्लीवं स्यादिति। यथा षष्ठ्यन्तादुपज्ञा गुरोरुपज्ञा गुरूपज्ञम्। उपज्ञा ज्ञानमाद्यं स्यादित्यमरः। षष्ठी-बहुवचनान्ताच्छाया। वृक्षाणां छाया वृक्षच्छायम्। देवमनुष्यवर्जात् षष्ठ्यन्तात् सभा। रक्षःसभम्। एवं यक्षगन्धर्वकिन्नरपिशाचादीनाम्। देवमनुष्यवर्जादिति किम्? देवसभा विप्रसभा। अराजराजार्थाच्च। इनसभं ईश्वरसभम्। राज्ञस्तु राजसभा। केचिदत्र नृपशब्दं राजार्थं वदन्ति तेन नृपसभं दासीसभं रक्षःसभ-मित्यमरः। सर्वेभ्यः समूहे। स्त्रीसभं राजसभं दासीसभम्। सेनासुराशालानिशा-छाया वा। षष्ठ्यन्तात्परा सेनादिः क्लीवं स्याद्वा। ब्राह्मणानां सेना ब्राह्मणसेनं ब्राह्मणसेना। यवजसुरं यवजसुरा। यवजो देशविशेषः। गोशालं गोशाला गोनिशं गोनिशा वृक्षस्य वृक्षयोर्वा छाया वृक्षच्छायं वृक्षच्छाया इति॥ ३२२॥

श्रीरा-टी—चश्च गश्च तौ तयोरैक्यं चगैक्यं चगैक्यञ्च वश्च तत्। चस्यैक्यमित्यादि ऐक्यं समाहारः स चगयोरित्यर्थः। स च एक एव तत्र समुदायिभ्योऽन्यः समुदाय इति न्यायादेकत्वं सिद्धमनेन तु क्लीवत्वं विधीयते। ये तु समुदायिभ्योऽन्यः समुदाय इत्याहुः ते एकत्वातिदेशार्थं पृथक् सूत्रं कुर्वन्ति। अनेकार्थाभिधायिनः शब्दस्यै-कार्थाभिधायित्वासम्भवात् वश्च। इति अधिस्त्रीत्यादौ पूर्वपदार्थप्राधान्यात् लिङ्गकृत-प्रयोगवैलक्षण्याभावे प्राप्ते उन्मत्तगङ्गमित्यादावन्यपदार्थत्वादन्यलिङ्गतायां प्राप्तायां वचनमिदम्। उपज्ञोपक्रमं ये तदादित्वकथने। उपज्ञायत इत्युपज्ञा आतोऽन्तः यङ्गेरिति ङः। उपक्रम्यत इत्युपक्रमः हे घञ् उपज्ञोपक्रमान्तं ये क्लीवं स्यात् तयो रुपज्ञोपक्रमयोः प्राथम्यस्य प्रतिपादने सति। सर्वज्ञस्योपज्ञा सर्वज्ञोपज्ञं वेदः सर्व-ज्ञेनादावुपज्ञायत इत्यर्थः। आढ्यस्योपक्रमं आढ्योपक्रमं यज्ञः आढ्येनादावारब्ध इत्यर्थः। केकयस्योपज्ञं व्रत बहुनर्थम्। तदादित्वकथने किं देवदत्तोपज्ञाप्रकारः। छाया बहूनाम्। छायान्तं ये क्लीवं स्यात् सा चेद्बहूनां सम्बन्धिनी। वृक्षाणां छाया वृक्षच्छायं विच्छायं बहूनां किम्? वृक्षस्य छाया वृक्षच्छाया। सङ्गे सभागृहेऽमनुष्या-राजार्थाभ्यां च। सभान्तं ये क्लीवं स्यात् सङ्गे गृहे तु मनुष्यभिन्नेभ्यो रक्षःपिशा चादिभ्यो राजभिन्नराजार्थेभ्यश्च। देवतानां सभा देवतासभं दासीनां सभा दासीसभं स्त्रीणां सभा संहतिः स्त्रीसभं सङ्गे किम्? दासीनां सभागृहं दासीसभा गृहे तु रक्षःसभं पिशाचसभम् अमनुष्यशब्देन रक्षःपिशाचादौ रूढ़त्वात् नृपसभं इनसभम्। कीचकबधे नृपतिसभागमद्दपमाना इत्यत्र नृपतिशब्दो राजविशेषवाची न तु राजसामान्यवाची अतएव चन्द्रगुप्तसभा इत्यत्र न स्यात्। नृणां पतिर्यत्र सभायां सा नृपतिसभेति कश्चिद् अराजेति किं राजसभा। गृहे किं राजसभमिति

## ३३३। चैक्याच्चुदषहोऽः।

चैक्यात् ५।, चुदषहः ५।, अः १।।

---

पूर्वेण। उशीनराख्यासु कन्या। उशीनराख्यजनपदप्रतिबद्धग्रामाणां संज्ञासु विषयभूतासु कन्यान्तं ये क्लीवं स्यात्। सौशमीनां कन्या सौशमिकन्यं आह्वर-कन्यम्। उशीनराख्यासु किं दाक्षिकन्या। वा तु छायासेनासुराशाला-निशाः छायाद्यन्तानि ये क्लीवानि स्युर्वा। वृक्षस्य वृक्षयोर्वा छाया वृक्षच्छायं नृसेनं यवसुरं गोशालं अश्वनिशं पक्षे वृक्षच्छायेत्यादि। व्यसंख्याभ्यां पथोषगे च। व्यसंख्याभ्यां परः कृतशान्तपथः क्लीवं स्याद् ये षगे च। विशिष्टपन्थाः विपथं उत्कृष्टः पन्थाः उत्पथं विरुद्धार्थविशब्दात् कुशब्दाच्चान्यत्रेति चान्द्राः। तथाच व्यध्वो दुरध्वो विपथः कदध्वा कापथः समा इत्यमरः। वाटः पथश्च माथश्चेति त्रिकाण्डशेषेऽदन्तपुंलिङ्गपथदर्शनात् तेनैव समासे सिद्धमिति रायः। एकश्चासौ पन्थाश्चेति एकपथं द्वयोः पन्थाः द्विपथं चतुर्णां पन्थाश्चतुष्पथम्। आभ्यां किं सत्पथः। पथ इति किं अपन्थाः। अर्द्धर्चादिर्य्यविशेषणे। अर्द्धर्चा-दिर्य्यविशेषणं च क्लीवं स्यात्। अर्द्धर्चादिर्यथा—अर्द्धर्चं सरकं विमानमलिनं मानं गृहं मोदकं धर्मं शर्मं सुवर्णतर्णरूचकं शङ्खं क्रमं गोमयम्। वज्रं छत्र-पवित्रपद्मचषकं शेषं तमालाटकं सारं शाकटकर्वटार्बुदनडं पिण्याककन्दौषधम्। कासारव्रतवासराऽङ्गननखं कार्षापणं कङ्कणं, शीर्षस्थाणुपिधानवेणुवलयग्रैव-कोलाहलम्। माषोद्योगदलान्धकारकवचं कान्तारदेहाश्रमं पात्रीवं तितउ प्रवालचरकं शीलं खलीनं सुखम्। जीवातुवस्तुकुलिशध्वजमुस्तकुञ्जद्रोणीपवास-कुमुदौदनशूलकष्टम्। आकाशकोशपटलामलकावतंसं प्रस्थव्रणस्तवकसंक्रम सानुशृङ्गम्। तण्डकरण्डककुट्टिमकच्छं सङ्गमसंवलताण्डवपुच्छम्। चेमचूड़ित-सातकचमसं यूषं चिक्कसकपिशं दिवसम्। पारावाराव्ययशतमानं यूपयुगन्धर-दिनसन्तानम्। टङ्कामण्डलुपल्लवषण्ड चरणं तोरणनूपुरमुण्डम्। मण्डपकङ्कण-चन्दनबर्हं किशलयदोहदशिखरकिरीटम्। कम्बु तड़ागं कुतपं तीव्रं हिङ्गुद्वीपं पीठकनिष्कम्। सूर्य्यसैन्धवराष्ट्राणि वर्षनिर्य्यासवास्तवम्। कटकं वारवाणोऽयद्मत भवनमासनम्। क्लीवं शरीरं कुसुमं लोमारण्यं तृणं सुखम्। वस्त्रं दण्डं वसन्तातप-हस्तं घृतादयः। केषाञ्चिद्विदुषामत्र वैदिकत्वादसम्मताः। अर्द्धर्चादि समाख्याः शेषं ज्ञेयं प्रयोगतः। शेषमित्यादिना कोरकतैलादयः। अर्द्धर्चादिपाठादेव सरव-दीनामसेऽपि क्लीवत्वं व्यविशेषणं यथा अव्ययं स्वः परमं प्रादुरित्यादि ॥ ३२२ ॥

चवर्गान्ताद्दषहान्तात् चैक्यात् अः स्यात्।

वाक् च त्वक् च इयोः समाहारः वाक्त्वचं, श्रीस्रजं शमीदृषदं वाक्त्विषं पीठच्छत्रोपानहम्।

**३३४। ऊर्व्वष्ठीवं पदष्ठीवं धेन्वनडुहौ अहोरात्रः स्त्रीपुंसौ वाङ्मनसे ऋक्सामे दारगवं अक्षिभ्रुवं इत्यादयः साध्याः।**

इति चः।

---

चदषह इति पञ्चम्येकम्। चुश्च दश्च मूर्द्धन्यषश्च ह चेति चुदषह तस्मात्। आदिस्त इत्यनेन एतदादीनां तद्धितत्वात् नदं तसावित्यनेन दान्तत्वाभावात् विरामाभावे वाक्त्वचमित्यादौ कुङादि न स्यात्। एवं समासपदोक्तप्रत्यया अन्तपदादेव स्युः। तेन त्वक् च पत्रञ्च त्वक् पत्रं सख्युःपुत्रः सखिपत्रः सखिपुत्र इत्यादौ पूर्वपदान्नप्रत्ययः। अथ निपात्याः। ऊरू च अष्ठीवन्तौ च ऊर्व्वष्ठीवं पादौ च अष्ठीवन्तौ च पदष्ठीवं उभयत्राप्रत्ययः, पादशब्दस्य पदादेशः। धेनुश्च अनड्वांश्च धेन्वनडुहौ। एतदादिभ्योऽप्रत्ययः। अहश्च रात्रिश्च अहोरात्रः। अत्र समाहारेऽपि पुंस्त्वन्तु अह्नाहान्ताः पुंडभेदा रात्रान्ताः प्रागसंख्यका इत्यमरः। संख्यापूर्वत्वे क्लीवत्वमेव यथा त्रिरात्रमित्यादि स्त्री च पुमांश्च स्त्रीपुंसौ। वाक् च मनश्च वाङ्मनसे। ऋक् च साम च ऋक्सामे। दाराश्च गावश्च दारगवम्। अक्षिणी च भ्रुवौ च अक्षिभ्रुवं इत्यादयः साध्याः निपात्या इत्यर्थः। अत्रादिशब्देन षट्समासेष्वनुक्ता उच्यन्ते। तत्र समासान्तरेऽनुक्तं तत्रैव वक्ष्यामि। द्वन्द्वेऽनुक्तानि तु विवृणोमि। यथा नक्तञ्च दिवा चेति नक्तन्दिवं रात्रिश्च दिवा च रात्रिन्दिवं एवमहर्दिवम्। ऋक् च यजुश्च ऋक्यजुषम्। एवं द्वन्द्वे देवस्य देवे दीर्घः। अग्नीसोमौ सूर्य्याचन्द्रमसौ इत्यादि। [illegible]तः स्म मित्रावरुणौ किमेतौ इति भट्टिः। रविचन्द्रावपि नोपलक्षिताविति [illegible]टकर्परः। अनपुंसकानां यजुर्वेदोक्तक्रतूनां समाहार एव। अर्कश्च अश्वमेधश्च अर्काश्वमेधम्। नपुंसकानान्तु राजसूयवाजपेये। यजुर्वेदोक्त इति किं [illegible]पौर्णमासौ। गवाश्वादीनाञ्च। गौश्च अश्वश्च गवाश्वम्। एवं गवाविकम्। [illegible]वामनं पुत्रपौत्रं उष्ट्रखरं दर्भशरदित्यादि। निकटपाठानाम्। निकटः [illegible]ो येषां तेषामपि समाहार एव। पदञ्च क्रमश्च पदक्रमं पदमधीते इति

कप्रत्ययः। वेदे हि पदमधीत्य क्रममधीते। पदक्रमयोर्निकटपाठात् तत्पाठयोरपि निकटपाठत्वम्। गुणकर्मवर्ज्यानामप्राणिजातीनाम्। आरा च शस्त्री च आराशस्त्रि। प्राणिजातेस्तु ब्राह्मणक्षत्रियविट्शूद्राः। गुणकर्मणोस्तु रूपरसगन्धस्पर्शाः। उत्क्षेपणावक्षेपणाकुञ्चनप्रसारणगमनानि। भिन्नलिङ्गानां नदीदेशनगराणाम्। शोणश्च गङ्गा च शोणगङ्गम्। कुरुश्च चेदश्च कुरुचेदम्। मथुरा च पाटलिपुत्रञ्च मथुरापाटलिपुत्रम्। अभिन्नलिङ्गानान्तु गङ्गायमुने। मद्रकेकयौ। अयोध्यामथुरे। नित्यवैरिणाम्। अहिनकुलम्। अश्वमहिषम्। काकोलूकम्। शिल्पिनाम्। तक्षा च अयस्कारश्च तक्षायस्कारम्। रजकतन्तुवायम्। प्राण्यङ्गानाम्। पाणिश्च पादश्च पाणिपादम्। मुखञ्च नासिका च मुखनासिकम्। तूर्य्याङ्गवादकानाम्। मार्दङ्गिकश्च पाणविकश्च मार्दङ्गिकपाणविकम्। मृदङ्गपणवमिति। अप्राणिजातित्वादेव। सेनाङ्गानां बहुत्वे। हस्तिनश्च अश्वाश्च हस्त्यश्वम्। बहुत्वे किं? हस्ती च अश्वश्च हस्त्यश्वौ। क्षुद्रजन्तुफलानाम्। अत्रापि बहुत्वमेव। दंशाश्च मशकाश्च दंशमशकम्। बहुत्वे किं? दंशश्च मशकश्च दंशमशकौ। क्षुद्रजन्तुरनस्थिः स्यादथवा क्षुद्र एव यः। प्रसूतं वा शतं येन केनचित्। वदराणि च आमलकानि च वदरामलकम्। बहुत्वे किं? वदरञ्च आमलकञ्च वदरामलके। वृक्षतृणधान्यमृगपक्षिविशेषाणां वा। एषां बहुत्वे समाहारः स्याद्वा। प्लक्षाश्च न्यग्रोधाश्च प्लक्षन्यग्रोधं प्लक्षन्यग्रोधाः। एवं कुशकाशं कुशकाशाः। तिलमाषं तिलमाषाः। रुरुप्रसभं रुरुप्रसभाः। हंसचक्रवाकं हंसचक्रवाकाः। बहुत्वे किं? प्लक्षन्यग्रोधौ इत्यादि। व्यञ्जनविशेषाणां बहुत्वाबहुत्वयोः समाहारः स्याद्वा। दधिघृतं दधिघृतानि दधिघृतौ इति पुंस्त्वं वैदिकमित्येके। अद्रव्याणां विरोधिनां समाहारः इतरेतरयोगश्च। सुखदुःखं सुखदुःखे सहानवस्थानमिह विरोधः। विरोधिनामिति किं? कामक्रोधौ। कामाश्रये क्रोधोऽस्तीति न विरोधः। एवञ्च दधिपयसी सर्पिर्मधुनीत्यादौ न समाहारः। अत्र प्रयोगानुसारेण इतरेतरयोगः समाहारश्च इति। पुंसा स्वरूपस्त्रिया लुक्। पुंलिङ्गेन सह द्वन्द्वे समानरूपस्त्रीलिङ्गस्य लुक् स्यात्। अश्वी च अश्वश्च अश्वौ। हंसी च हंसश्च हंसौ। रम्भोरूश्च रम्भोरुश्च रम्भोरू। युवती च युवा च युवानौ। स्वरूपस्त्रिया इति किं? लताहृक्षौ। भ्राता स्वसुः। पुत्रेण दुहितुः। भ्राता च स्वसा च भ्रातरौ। पुत्रश्च दुहिता च पुत्रौ। श्वश्रूः श्वशुरेण मातुः पित्रा वा। श्वश्रूश्च श्वशुरश्च श्वशुरौ। पक्षे श्वश्रूश्वशुरौ। माता च पिता च पितरौ मातापितरौ एवं मातरपितरौ इति। ऋदन्तोऽरश्च निपात्यते। तेन मातापितृभ्यां मातरपितृभ्यां मातृपितृभ्यां इति रूपत्रयम्। एवं जाया च पतिश्च इति द्वन्द्वे जम्पती दम्पती इति रूपद्वयं निपात्यते वा। पक्षे जायापती इति।

गोत्रतद्धितान्तेन तद्धितान्तो लोप्य:। गार्ग्यश्च गार्ग्यायणश्च गार्ग्यौ। वाह्वश्च वाह्ववायनश्च वाह्वौ। त्यदादीनां सर्व:। स च देक्यमित्यत्र दे च दानी-त्येकशेषदर्शनात्। सरूपाणामेकलिङ्गानामप्येकोऽवशिष्यते इति बोध्यम्। तेनार्जुनश्च अर्जुनश्चार्जुनौ रामश्च रामश्च रामश्च रामा:। सरूप इति किं रामश्च कृष्णश्च रामकृष्णौ। इति च: (द्वन्द्व:)॥ ३२४॥

श्रीरा-टी—चस्य ऐक्यं चैक्यं तस्मात्। चुश्च दश्च षश्च हश्च तत्तस्मात् तेन दषयोरकार उच्चारणार्थ:। चैक्यादिति कृतसमाहारचादित्यर्थ:। वाक्त्वच-मिति। वाक् च त्वक् च इमे समाहृते इति वाक्यं अस्याकारस्य तत्वान्नदं-तस्याविति दान्तत्वनिषेधेन विराममाश्रित्य न कङ्। एवं सुवाक् सुप्रच्छं श्रीस्रज-मिति एवं वागूर्जमित्यादि। चे किं? पञ्चानां वाचां समाहार: पञ्चवाक्। ऐक्यमिति किं? प्रावृट्शरदौ। सर्वो हि द्वन्द्वो विभाषयैकवद्भवतीति न्यायात् यदा समाहारस्तदा प्रावृट्शरदं इति स्यादेव। प्राणितूर्य्यसेनाङ्गानामैक्यं चे। प्राण्यङ्गादिवाचिनां चे ऐक्यं स्यात्। हस्तश्च पादश्च हस्तपादम्। शिरोग्रीवम्। मुखनासिकाभ्यां यो निष्क्रामति स वायु:। ग्रीवाकुचिललाटेषु नित्यं स्वेद: प्रशस्यते इति वैद्यके। गण्डे चुम्बो ललाटाचिकचोरुभगमूर्द्धसु इति कामशास्त्रे। नेत्रास्यनासिकाबाहुहृदयेभ्य इति चण्डी। इति तु दधिपय आदित्वात् सिद्ध-मिति। अथवा मुखसहिते नासिके मुखनासिके इति शाकपार्थिवादित्वात् मध्यपदलोप: पुटद्वयभेदात् द्वित्वम्। एवं ग्रीवाकुचिसहितानि ललाटानि इत्यादि स:। प्राणिभेदाल्ललाटादेर्बवम्। चण्डयास्तु आर्ष:। तूर्य्यशब्दोऽत्रार्श आदित्वा-दत्यान्तस्तेन तूर्य्यवत् प्राण्यर्थ:। मृदङ्गवादनं शिल्पमस्य मार्दङ्गिक: एवं पाणविक:। चे मार्दङ्गिकपाणविकम्। मृदङ्गपणवमिति त्वप्राणिजातिवाचित्वात्। अन्ये तु पृथक् तूर्य्याङ्गतत्प्रवीणयोर्ग्रहणं व्यतिकरनिरासार्थं तेन शस्त्रिशङ्खावित्यादौ न स्यात्। प्राण्यङ्गस्याप्राण्यङ्गेनापि स्यादेव यथा वाक्त्वचेनातिसर्वेणेति भट्टि:। इत्याहु:। सर्वो हि द्वन्द्वो विभाषयैकवद्भवति इति न्यायात्। वाक्त्वचेनेति परे। रथेन चरन्ति रथिका: पदातीनां समूहा: पदातानि। भिक्षादित्वात् ष्ण:। रथिकाश्च पदातानि च रथिकपादातं हस्तिघोटकम्। हस्त्यश्वरथपादातं सेनाङ्गं स्याच्चतुष्टय-मित्यमर:। इष्यन्ते पृतनाङ्गानि हस्त्यश्वरथपत्तय: इति तु अबहुत्वे सेनाङ्गानामैक्य-निषेधात्। पारिभाषिकसेनाङ्गग्रहणात् खरोष्ट्रशारिशिरस्त्राणां न ग्रहणम्। स्थेनी ध्यामनुवादे चरणानाम्। चरण: शाखा अर्श आदित्वाद:। अनुवादे गम्यमाने चरणाध्यायिप्राणिवाचिनां चे ऐक्यं स्यात्। टीपरयो: स्थेनी: प्रयोगे सति। प्रमा-णान्तरावगतस्यार्थस्य शब्देन संकीर्त्तनं अनुवाद:। कठाश्च कालापाश्च काठकालापं प्रत्यष्ठात् काठाश्च कौथुमाश्च काठकौथुममुद्गात्। यदा कठादीनां प्रतिष्ठोदयौ शब्दे-

नानूद्येते तदेवेदमुदाहरणम्। यदा प्रथममेवोपदेशस्तदा छदमुः कठकालापा इत्यादि। स्थेनोः किं? अनिन्द्येषुः कठकालापाः। क्वां किं तिष्ठन्ति कठ-कौथुमाः। अक्लीवयजुःसोमयागानाम्। क्लीवलिङ्गभिन्नानां यजुर्वेदविहित-सोमपानोपलक्षितयागवाचिनां चै ऐक्यं स्यात्। अर्कश्च अश्वमेधश्च अर्काश्व-मेधम्। साह्नश्च अतिरात्रश्च साह्नातिरात्रम्। अक्लीवेति किं? राजसूयवाजपेये। यजुरिति किं? इषुवज्रौ। सोमयागेति किं? दर्शपौर्णमासौ। पाठनिकटा-नाम्। अध्ययनेन प्रत्यासन्नानां चै ऐक्यं स्यात्। यस्तावद्वेदमर्थज्ञानं विना क्रमात् पठति स क्रमकः प्रथमपाठी। यश्च तत्रैवार्थमधीते स वार्त्तिकः। क्रमक-वार्त्तिकं पदक्रमकं पदानां क्रमस्य च पाठः प्रत्यासन्नः। छात्रोपाध्यायं गुरु-शिष्यप्रत्यासत्तौ पाठ एव निमित्तम्। पाठेति किं? पितापुत्रौ। निकटानां किं? याज्ञिकमीमांसकौ। अप्राणिजातीनाम्। प्राणिभिन्ननिष्ठा या जाति-स्तद्वाचिनां चै ऐक्यं स्यात्। आरा चर्मभेदिका शलाका। शस्त्री क्षुरिका। आरा च शस्त्री च आराशस्त्रि। धाना भृष्टयवाः। शष्कुलिः पिष्टकभेदः। धानाशष्कुलि। द्रुमशैलम्। "रञ्जिता नु विविधास्तरुशैला" इति तु तरुप्रधानाः शैलास्तरुशैला इति शाकपार्थिवादित्वात् व्यक्तिपरत्वेन निर्देशादिति परे। एवमिह कुण्डे वदरामलकानि सन्तीति। अप्राणि इति किम्? विप्रचत्रियौ। जातीति किं? विन्ध्यहिमालयौ। एवं रूपरसगन्धस्पर्शाः। गमनाकुञ्चने इति गुणक्रिया-निष्ठाया जातेरभावात्। भिन्नलिङ्गनदीदेशनगराणां नद्यादिवाचिनां चै ऐक्यं स्यात्। नदीनां नित्यस्त्रीलिङ्गत्वात् नदैः सह चै अस्य विषयः। गङ्गा च शोणश्च गङ्गाशोणं उद्धीरावति राढ़ामगधं वारेन्द्रीमगधं पृथक् नदीग्रहणात् देशोऽत्र जनपदाख्यः। तेन कैलासश्च गन्धमादनञ्च कैलासगन्धमादने इत्यादौ न स्यात्। मथुराकान्यकुब्जं मथुरापाटलिपुत्रम्। नगरस्य देशत्वेऽपि ग्रहणात् ग्रामवाचिनां ग्रामनगरवाचिनां न स्यात्। तेन जाम्बवश्च ग्रामः साम्बकिनी च नगरी जाम्बवसाम्बकिन्यौ। सौभ्रं नगरम्। केतकव्रतो ग्रामः। सौभ्रकेतकव्रतौ। कश्चित्तु सौभ्रकेतकव्रतमित्याह। भिन्नलिङ्गानां किं? गङ्गायमुने राढ़ावारेन्द्रौ कान्यकुब्जपाटलिपुत्रौ। अवहिष्कृतशूद्रक्षुद्रजन्तुनित्यविरोधिनाम्। एषां चै ऐक्यं स्यात्। रजकतन्तुवायं तक्षायस्कारं भिल्लधीवरम्। इति मे यान्ति दिवसाः समं रजकनापितैः इति त्वेकशेषात्। येन भुक्ते पात्रं पुनर्गठनेन विना न शुद्ध्यति स वहिष्कृतः शूद्रो यथा चाण्डालहड्डिपौ। दंशमशकं यूकालिक्ष्यम्। क्षुद्रजन्तुरनस्थिः स्यादथवा क्षुद्र एव यः। शतं वा प्रसृतौ येषां केचिदानकु-लादपि इति क्षुद्र एव य इति यवद्दृश्य इत्यर्थः। अश्वमहिषं श्वशृगालम्। नित्यविरोधिनां किं? देवासुराः कुरुपाण्डवाः इत्यत्र नैमित्तिकविरोधः। गवा-

श्वादीनाम् । गवाश्वादीनां चे ऐक्यं नित्यं स्यात् । गवाश्वादौ गवाश्वं स्यात् पुत्रपौत्रं गवाविकम् । शक्रन्मेद: श्वचाण्डालं गवैडकमजैडकम् । तृणोलपं स्त्रीकुमारं दासीदासं कुटीकुटम् । भागवतीभागवतं दर्भात्तु शरपूतिकम् । कुब्जाद्वामनकैरातमुष्ट्रात् खरशशौ तथा । मांसात्तु शोणितं शाट्या: पिच्चटं पुरुषोऽर्जुनात् । शक्रत्पुरीषं मूत्राच्च शेषं ज्ञेयं प्रयोगत: । गवाश्वमित्यादि निर्देशात् गोऽश्वं गोऽश्वौ इत्यादौ पशुत्वाद्विकल्प: । इह केषाञ्चिद्विकल्पे प्राप्ते दासीदासानां एकशेषनिरासार्थ: केषाञ्चिदप्राप्ते पाठ: । श्वचाण्डालमित्यस्य नित्यविरोधित्वात् सिद्धे अविरोधार्थ: पाठ: । दर्भशरं दर्भपूतिकं कुब्जवामनं कुब्जकैरातं उष्ट्रखरं उष्ट्रशशं मांसशोणितं शाटीपिच्चटं अर्जुनपुरुषं मूत्रशक्रत् मूत्रपुरीषमिति । आकृतिगणोऽयम् । पक्षिवृक्षमृगपशुधान्यतृणव्यञ्जनानां वा । पक्ष्यादिवाचिनां चे ऐक्यं स्याद्वा । हंसचक्रवाकं धवखदिरपलाशं रुरुपृषतगोमहिषं व्रीहियवं कुशकाशं दधिघृतम् । येषामव्वान्तानां दधिपय आदौ पाठस्तेषां व्वान्तानामेव वाक्यम् । पक्षे हंसचक्रवाका इत्यादि । मृगाणां पशुत्वेनैव सिद्धे पृथक् ग्रहणात् मृगवाचिनां पश्वन्तरवाचिना सह चे न स्यात् । तेन रुरुमहिषा इत्यादि । अप्राणिजातीनां नित्ये प्राप्ते विकल्पार्थ: । येषां सर्वो हि द्वन्द्वो विभाषयैकवद्भवतीति न्यायात् विकल्प: तेषां पाठो व्यतिकरनिरासार्थ: । तथाच, हनुमन् कीदृशं सख्यं नरवानररक्षसामिति भट्टि: । निरुद्धाद्रव्याणाम् । सहानवस्थितानां अद्रव्यवाचिनां चे ऐक्यं स्याद्वा । शीतोष्णं शीतोष्णे जन्ममरणं जन्ममरणे । विरुद्धेति किं ? कामक्रोधौ । अद्रव्य इति किं ? स्वर्गनरकौ । शीतोष्णे उदके । अश्ववडवपूर्वापराधरोत्तराणाम् । इहाश्वशब्देनैव पाठात् हयवडवौ इत्यत्र न स्यात् । अश्ववडवं पूर्वापरं अधरोत्तरं पक्षे अश्ववडवौ इत्यादि । न सेनाङ्गफलक्षुद्रजन्तुपक्षिवृक्षमृगधान्यतृणानामव्वान्तानाम् । अव्वान्तानामेषां चे ऐक्यं न स्यात् । रथिकाश्वारोहौ बदरामलके यूकालिख्ये हंसचक्रवाकौ प्लक्षन्यग्रोधौ रुरुपृषतौ व्रीहियवौ कुशकाशौ । दधिपय आदीनाम् । अव्वान्तानां दधिपय-आदीनां चे एक्यं न स्यात् । दधिपय आदिर्यथा । दधिपयसी ऋक्सामे स्कन्दविशाखा । वाद्यावसाने च । सर्पिर्मधुनी श्रद्धामेधे स्वर्गापवर्गौ च ब्रह्मप्रजापती मेधातपसी हरिकौषिकौ । अपवर्गोपनिषदौ परिव्राजकशैखिकौ शिववैश्रावणा विश्ववर्हिषौ दधिसर्पिषी । शुक्लकृष्णौ । तथा वाङ्मनसे अध्ययनात्तप: । उदूखलात्तु मुषलं प्रोक्ता अतीनवविंशति: । इह केषाञ्चिद्विकल्पे केषाञ्चिन्नित्ये प्राप्ते ऐक्ये निषेध: । अध्ययनात्तप इति अध्ययनतपसी उदूखलमुषले । इध्मावर्हिषी इति गणपाठात् घं इति चावयवानामियत्तायां वा तु सामीप्ये । चसावयवीभूतानां दानामियत्तायां गम्यमानायां प्राप्तमैक्यं न स्यात् । ससामीप्यायामियत्तायां

तु वा । दश दन्त्यौष्ठ्याः सप्त मार्दङ्गिकपाणविकाः । उपदशा दन्त्यौष्ठ्याः उपदशं दन्त्यौष्ठं उपदशाः इति हसः समीपप्राधान्यात् त्वम् । उपदशमिति वसः सामीप्य-प्राधान्यात् त्वम् । इदं प्रकरणं नियमार्थम् । प्राण्यङ्गादीनां समाहारे च एव दधिपय आदीनामितरेतर च एव अन्येषां विकल्पार्थं एवेति । उर्व । उरू च अष्ठीवन्तौ च तत्पादौ च अष्ठीवन्तौ च तत् धेनुश्च अनड्वांश्च तौ अहश्च रात्रिश्च सः स्त्री च पुमांश्च तौ वाक् च मनश्च ते ऋक् च साम च ते दाराश्च गौश्च तत् अक्षिणी च भ्रुवौ च तत् इति वाक्यं दभेदः । समाहारेतरेतराकारताज्ञापनार्थः । आदिना नक्तञ्च दिवा च नक्तन्दिवम् । द्वयोरधिकरणार्थत्वे नाभियसापेक्षत्वादसाम-र्थ्येऽपि सः । रात्रिश्च दिवा च रात्रिन्दिवं अहश्च दिवा च अहर्दिवं प्रतिदिन-मित्यर्थः । ऋक् च यजुश्च ऋग्यजुषं उदूखलमुषलं तण्डुलक्किन्नं चित्ररथ-वाह्लीकं विष्वक्सेनार्जुनौ चित्रास्वाती भार्य्यापती पुत्रपौत्रौ केशश्मश्रू । विशेषण-विशेष्ये इत्यपि कश्चित् । स्नातकराजानौ प्रतिष्ठालिङ्गे सूर्य्याचार्य्यौ मर्य्यादाभि-विधी शिरोजानू पाण्डुधृतराष्ट्रौ । उदूखलादीनां मुषलादिभिः सह घे पूर्व-निपातः । एवं जाया च पतिश्च जम्पती दम्पती । जायाया जन्दम्भादेशौ वा । पक्षे जायापती । माता च पिता च मातरपितरौ । मातुर्मातरादेशो वा । पितुश्च पितरः इति क्षपणकस्तन्मते मातरपितराभ्यां मातरपितरयोरिति । पक्षे माता-पितरौ इत्यादि संग्रहः । शेषं शिष्टप्रयोगानुसारेण बोध्यम् । अहोरात्र इति निर्देशात् अहोरात्रादीनां पुंस्त्वमपि निपात्यते । अहोरात्रादिर्यथा "अहो-रात्रादिषु प्रोक्ता रात्राह्नान्ता अहन्तकाः । पुण्याहसुदिनाहाभ्यां विनार्द्धर्चा-दयस्तथा । सूक्तवाकोऽनुवाकश्च शेषं ज्ञेयं प्रयोगतः ।" अहश्च रात्रिश्च अहो-रात्रावपि इतरेतरयोगात् । तथाच, अहोरात्राविमौ पुण्यौ इति । एवं पूर्वरात्रः अपररात्रः पूर्वाह्णः अपराह्णः द्व्यह्नः त्र्यह्नः इत्यादि । पुण्याह सुदिनाहयोर्वर्जनात् पुण्याहं सुदिनाहं अर्द्धं ऋचः अर्द्धर्चः सरकः इत्यादि पूर्वेण क्लीवत्वञ्च अर्द्धर्चादे-राकृतिगणत्वात् । पुण्यरात्रं प्रियागमे इत्यादि । वचधोर्घञ् । वाकः अनुक्रान्तो वाकोऽनया अनेन क्रुलेन वा अनुवाकः । एवं सूक्तवाकः इत्यादि । एषां पाठसाम-र्थ्यात् च सभिन्नसेऽपि पुंस्त्वम् । पुंस्त्रियोस्त्यभिन्नयोः शिष्यो ना । त्यमात्रकृतभेदयोः पुंस्त्रियोः पुमान् शिष्यते । देवश्च देवी च देवौ । गौरयं गौरियं इमौ गावौ इत्यत्र त्यकृतभेदाभावेऽपि अर्थकृतभेदात् स्यादेव । त्यभिन्नयोः किं ? हरगौर्य्यौ इन्द्रेन्द्राण्यौ । लिङ्गमात्रकृतभेदे विधानादिन्द्राविति कश्चित् । तथाच वरुणा-विन्द्रौ भवौ सर्वौ मृडौ इत्यादि । गोत्रयूनोर्गोत्रम् । त्यभिन्नयोर्गोत्रयुवत्यान्त-योर्गोत्रत्यान्तं शिष्यते । गार्ग्यश्च गार्ग्यायणश्च गार्ग्यौ । गोत्रयूनोः किं ? गर्ग-गार्ग्यायणौ गर्गगार्ग्यौ । त्यभिन्नयोः किं ? गार्ग्यवात्स्यायनौ । भर्गाक्षिसस्यापत्यं भार्ग-

विज्ञिः गोत्रेऽदन्तात् णिः। भागवित्तस्यापत्यं युवा कुत्सा सौवीरगोत्रात् णिकः भागवित्तिकः। भागवित्तिश्च भागवित्तिकश्च भागवित्तिभागवित्तिकौ इत्यत्र न स्यात्। त्यातिरिक्तकुत्सार्थकृतभेदात् भागवित्ती इति कश्चित्। स्त्रीपुंवच्च। त्यभिन्नयोर्गोत्रयूनोर्गोत्रत्यान्ता स्त्री शिष्यते। स्त्रियाः पुंवद्भावश्च। गार्गी च गार्ग्यायणश्च गार्ग्यौ। गार्ग्यौ च गार्ग्यायणौ च गर्गाः। दाक्षी च दाक्षायणश्च दाक्षी। त्यभिन्नयोः किम्? गार्ग्यौ वात्स्यायनौ। क्लीबाक्लीबयोः क्लीबं वा तु कश्च क्लीबाक्लीबयोः क्लीबं शिष्यते। तस्मात् कश्च वा। शुक्लश्च शुक्ला च शुक्लञ्च शुक्लम्। पक्षे शुक्लानि। त्यभिन्नयोः किं? सितधवलशुक्लानि। हिमहिमान्यौ भ्रातृस्वस्रोः पुत्रदुहित्रोर्भ्रातृपुत्रौ। भ्रातृस्वस्रोर्भ्राता पुत्रदुहित्रोः पुत्रः शिष्यते। भ्राता च स्वसा च भ्रातरौ। दुहिता च पुत्रश्च पुत्रौ। अतरुणानेकखुरग्राम्यपशुसङ्घेषु स्त्री। अतरुणानामनेकखुराणां ग्राम्यपशूनां सङ्घेषु स्त्री शिष्यते। इमे अजाश्च इमा अजाश्च इमा अजाः। इमे गावश्च इमा गावश्च इमा गावः। अतरुणेति किं? इमे वत्साश्च इमा वत्साश्च इमे वत्साः। इमा वर्करांश्च इमे वर्करांश्च इमे वर्कराः। अनेकखुरेति किं? इमे अश्वाश्च इमा अश्वाश्च इमे अश्वाः। ग्राम्येति किं? इमे रुरवश्च इमा रुरवश्च इमे रुरवः। सङ्घे किं गौश्चायं गौश्चेयं इमौ गावौ। त्यदाद्यन्यथोस्त्यदादिः। त्यदाद्यन्ययोस्त्यदादिः शिष्यते। स्यश्च चैत्रश्च त्यौ। स च मैत्रश्च तौ यश्च शिश्च यौ त्यदादीनां यत् परं तत् शिष्यते। स्यश्च स च तौ। स च यश्च यौ। यश्च एष च एतौ। स च त्वञ्च युवां स च त्वञ्च अहञ्च वयम् स च कश्च कौ। त्यदादिर्यथा। त्यद् तयद् इदम् अदस् एतद् एक द्वि युष्मदस्मद् भवत् किम् इति। स्वरूपाणामेकक्त्याविकः। तुल्यरूपाणामेकः शिष्यते। एकस्यां क्तौ। वृक्षश्च वृक्षश्च वृक्षौ। वृक्षश्च वृक्षश्च वृक्षश्च वृक्षाः। गार्ग्यश्च गार्ग्यश्च गार्ग्यश्च गार्ग्याः। माषो व्रीहिः माषो मूर्खः मासो माषकस्ते माषाः। अक्षो विभीतकः अक्षो रथावयवः अक्षः पाशकस्ते अक्षाः। पादाः रश्म्यङ्घ्रि तूर्य्यांशाः। एषामर्थभेदेऽपि सारूप्यमेकानुपूर्विकत्वात् इह सरूपाणां लोनामेकशेषः। इति मते तु वृक्ष वृक्ष औ वृक्ष वृक्ष वृक्ष जस् इति स्थिते। एकस्यामौ आदि क्ताविकः शिष्यते अर्थादन्ये निवर्त्तन्ते सरूपसमुदायात् क्ततायामेकस्यां क्तौ परत एकः सिद्धः शिष्टोऽर्थवान् समुदायमभिदधत्ते। "सरूपसमुदायाद्धि विभक्तिर्या विधीयते। एकस्तत्रार्थवान् सिद्धः समुदायार्थवाचकः" इति। वृक्षश्च वृक्षश्च वृक्षावित्यादि बालव्युत्पत्तये त्यन्तेनार्थकथनं तत्रान्योन्यार्थानुप्रवेशादेकत्वाभावात् द्वन्द्वे भवत एव न तु क्रममिति। यदुक्तम्। सहभावविवक्षायां वृत्तिर्द्वन्द्वैकशेषयोः। क्रमेणार्थप्रतीतौ हि न स्यात् द्विवचनादिकमिति। क्त्यन्तानामेकशेष इति मते तु क्तिर्विभक्तिर्विभज्यते त्यर्थोऽनयेति विभक्तिः कारकम्। तथाच, एकस्मिन् कारके विवक्षिते सति सरूपाणामेकशेष

## बहुव्रीहिसमासः। (हः)

पीतमम्बरं यस्यासौ पीताम्बरो हरिः।
नीलमुज्ज्वलं वपुर्यस्यासौ नीलोज्ज्वलवपुः कृष्णः।

---

इत्यर्थः। एवञ्च सर्वं सिद्ध्यति। किन्तु वृक्षयोर्वृक्षाणां वा पुष्पमित्यादाविकत्वेऽपि सरूपाणामेकशेषनिर्देशादेव स्यात्। न च एकशेषस्य द्वन्द्वविशेष इति वाच्यम्। पथिभ्यामृग्भ्यामित्यादौ अकारप्रत्ययप्रसङ्गात् च विशेष एकशेष इति कश्चित्। तन्मते पथिभ्याम् ऋग्भ्यामित्यादौ तु सान्तविधेरनित्यत्वात् इति चेत् युञ्जावित्यत्र युजाविति स्यात्। पूर्वोक्तानामेकशेषमते द्वे च द्वानि च तानि तानि इत्यादौ तु न्यन्तेनार्थकथनम्। तथाच कणादभाष्ये। खल्वेकत्वेभ्योऽनेकबुद्धिसहितेभ्यो निष्पत्तिरपेक्षा। बुद्धेस्तद्विनाशाद्विनाश इति। एकत्वे च एकत्वानि च इत्येकशेषं विधाय व्याख्यातमुदयनाचार्य्यैरिति। एकत्वौ किं ब्राह्मणाभ्यां ब्राह्मणाभ्यां दत्ता गौः। व्यक्तौ व्यक्तौ पदार्थे प्रत्येकं शब्दाभिनिवेशात् यावन्तस्ते पदार्थास्तावतां शब्दानां प्रयोगे प्राप्त एकशेषो विधीयते। तथाच प्रत्यर्थं शब्दाभिनिवेश इति भाष्यम्। एवं पञ्चपुली च पञ्चपुली च पञ्चपुली च पञ्चपुल्यः इत्यादि स्यात्। इह समानलिङ्गानां सरूपाणामित्येव तेन माता जननी माता ध्यानस्य तौ मातृमातरौ इत्यादौ न स्यात्। समार्थानाञ्च। समार्थानां विरूपाणामेकः शिष्यते। वक्रदण्डश्च कुटिलदण्डश्च तौ वक्रदण्डौ कुटिलदण्डौ वा। मातापित्रोः श्वश्रूश्वशुरयोः पितृश्वशुरौ वा मातापित्रोः पिता श्वश्रूश्वशुरयोः श्वशुरः शिष्यते वा। माता च पिता च पितरौ मातापितरौ श्वश्रूश्च श्वशुरश्च श्वशुरौ श्वश्रूश्वशुरौ। इति चः ( द्वन्द्वसमासः ) ॥ ३२४ ॥

स च तुल्याधिकरणानां पदानाम् अन्यार्थत्वे स्यादिति बोध्यम्। यथा पीताम्बरादिः। भिन्नाधिकरणानान्तु, पुत्राय धनमस्य शिवाय विद्याऽस्य भीत्यर्थे वासोऽस्य इत्यादौ न स्यात्। समातृक इत्युदाहरणेन कदाचिद्भिन्नाधिकरणानाञ्च स्यात्। धर्मे वृत्तिर्यस्यासौ धर्मवृत्तिः त्रिकालवृत्तिः उरसिलोमा कण्ठेकाल इत्यादि। एवं पीताम्बर इत्युदाहरता विशेषणविशेष्ययोः समासे विशेषणमेव पूर्वं स्यादिति सूचितम्। तेन पीताम्बर इत्यत्राम्बरपीत इति न स्यात्। एवं त्रिलोचनः चतुर्भुजः दीर्घकेशीत्यादि। एवञ्च शङ्गभिन्नी इत्युभयितीत्यादि उदाहरता क्वचित् क्तान्तविशेषणं पूर्वं स्यात् परं वा स्यादिति सूचितम्। तेन अभ्याहतस्वैरगतैरांत। अर्थिमित भर्तुरुपस्थितोदयमिति स वृत्तचूडश्चलकाक

[१०७] ष्रु णोंऽदान्ते न इति । हरिभाविणी हरिभाविनी । श्रीभावेण श्रीभावेन । रम्यविणा श्रीकामेण । रम्यपक्केन रम्ययूना रम्याङ्गा ।

---

पचकैरित्यादि च रघुः । सुखजातः सुरापीतो नृजग्धो माल्यधारय इति भट्टिः । एवं जातदन्तः दन्तजातः जातश्मश्रुः श्मश्रुजातः पीततैलः तैलपीतः पीतघृतः घृतपीतः ऊढ़भार्य्यः । भार्य्योढ़न्तमवज्ञायेति भट्टिः । गतभार्य्यः भार्य्यागतः गतार्थः अर्थगतः अग्न्याहितः आहिताग्निः पुत्रजातः जातपुत्रः यातयामः यामयातः दुःखजातः जातदुःखः । एवं गतकण्डुः कण्डुगतः इत्यादि बोध्यम् । एवमुद्यतचक्रः चक्रोद्यतः उद्यतासिः असुद्यतः उद्यतखड्गः खड्गोद्यतः इत्यादि युद्धेभ्यो नित्यं पूर्वमिति जौमराः । यथोद्यतचक्र इत्यादि । एवं सर्वं समानबलात् पूर्वम् । सर्वश्वेतः । संख्यासर्वनाम्नोः संख्या । द्विपरः । पूर्वं सप्तम्यन्तमचन्द्रादेः । सप्तम्यन्तं पदं पूर्वं स्यान्न तु चन्द्रादेः । धर्मे वृत्तिर्यस्यासौ धर्म्मवृत्तिः उरसिलोमा कण्ठेकाल इत्यादौ सरसिजवत् विभक्तेरलुक् । चन्द्रादेस्तु चन्द्रशेखरः चन्द्रचूड़ः पद्मनाभः शूलपाणिः कुशहस्तः । प्रियो वा गुड़प्रियः प्रियगुड़ः । क्वचिदारूढ़ो वानरो यं स आरूढ़वानरो वृक्षः । दृष्टः कृष्णो येन स दृष्टकृष्णो भक्तः । दत्ता भूमिर्यस्मै स दत्तभूमिर्विप्रः । निर्गताः पक्षिणो यस्मात् स निर्गतपक्षी वृक्षः । चत्वारो भुजा यस्यासौ चतुर्भुजो विष्णुः । बहूनि नक्षत्राणि यत्र तद् बहुनक्षत्रमाकाशम् इति द्वितीयान्ताद्यन्यपदार्था बहुव्रीहयः इति सर्वे मन्यन्ते । स्वमते तु प्रथमान्तान्यपदार्थोऽपि । यथा सह माता वर्त्तते योऽसौ समातृकः । एवं समपक्षकः सनामकः । ब्राह्मणमानिनीत्यादि । हरिभाविनीत्यादि हरिं भावयितुं शीलमस्या इति भुक् । शुद्धिचिन्तयोरित्यस्मात् ग्रहनन्दीति णिनि कृते ञेर्लोपे नान्तत्वादीपि समासोत्तरविहितेनेपा सहितस्य नस्य णत्वम् । श्रियां भावो यस्यासौ श्रीभावः तेन श्रीभावेण समासोत्तरविहितस्यादिसम्बन्धिनो नस्य णत्वम् । उभयत्र एकाच् कवर्गशब्दसम्बन्धिभिन्नत्वाद्विकल्पः । रम्यो विः पक्षी यत्र तेन रम्यविणा । श्रियां कामो यस्य तेन श्रीकामेण । उभयत्र एकाच्कवर्गशब्दसम्बन्धित्वान्नित्यं णत्वमिति । रम्यपक्केनेत्यादि । पक्कयुवाहवर्जनान्न णत्वमिति ।

श्रीरा-टी—इदानीं हंसं विशेषतो निरूपयन्नाह । पीताम्बर इत्यादि । अत्राङ्ः । अप्रान्तान्यार्थानाम् एकार्थानां हः । द्वयादित्र्यन्तान्यार्थपराणां समानाधिकरणानां दानां हः स्यात् । आरूढ़ो वानरो यं स आरूढ़वानरो वृक्षः । आरूढ़ा वृद्धा बहवो वानरा यं स आरूढ़वृद्धबहुवानरो वृक्षः । निर्जितः कामो

येन स निर्जितकामः। उपनीतं भोजनं यस्मै स उपनीतभोजनः। निःसृतो जनो- ऽस्मात् स निःसृतजनः। शुक्लः पटो यस्य स शुक्लपटः। उषितौ विहगौ यस्मिन् स उषितविहग इत्यादि। उच्चैर्मुखः नीचैर्मुखः उद्बाहुरित्यादौ उच्चैरादीनां द्रव्यवचित्वात् सामानाधिकरण्याभावेऽपि गमकत्वात् सामानाधिकरण्यमभ्युप- गन्तव्यमिति कश्चित्। अस्ति चीरा नास्ति दोष इत्यादौ अस्तिनास्तिशब्दौ त्यन्तप्रतिरूपकनिपातौ। प्रान्तान्यार्थानान्तु वृष्टे देवे गतः। एकार्थानां किं? पञ्चभिर्भुक्तमस्य। पञ्च भुक्तवन्तोऽस्य इत्यत्रानभिधानात् न स्यात्। तथाच कृत्तद्धितसमासाश्चाभिधानगम्याः इति भाष्यम्। संख्यादूराधिकासन्नव्यानां संख्येयसंख्यया। संख्यावाचिनामदूरादीनां व्यानाञ्च संख्येयवृत्तिसंख्यावाचिना सह हः स्यात्। द्वौ वा त्रयो वा द्वित्राः। त्रिचतुराः पञ्चषाः लक्षकोटाः। एकाहान् दिवसांस्तिष्ठ। सप्ताष्टैर्दिनैर्यास्यसि। वार्थ एवायं सः। वार्थोऽत्र संशयो न विकल्पः। संशयस्यैव उभयपक्षपरामर्शित्वेन व्वविषयत्वात्। अदूरे दशानां इमे अदूरदशाः। अधिका दशानां इमे अधिकदशाः। आसन्ना दशानां इमे आसन्नदशाः। समीपे दशानां इमे उपदशाः उपविंशाः। यदा समीपिप्राधान्यं तदा हस इति यदा समीपप्राधान्यं तदा वस इति। संख्येय इति किं? अधिका विंशति- र्गवाम्। दिङ्नाम्नां विदिशि। दिङ्नाम्नां हः स्यात् दिङ्मध्याख्यायाम्। पूर्वस्याश्च दक्षिणस्याश्च दिशोर्मध्ये या दिक् सा पूर्वदक्षिणा पूर्वोत्तरा उत्तरपश्चिमा दक्षिण- पश्चिमा दिङ्नामग्रहणात् यौगिके मा भूत्। तेन ऐन्द्र्याश्च कौवेर्य्याश्च दिशोर्मध्ये या दिक् इत्यत्र न स्यात्। वीप्सान्तयोः सरूपयोर्युद्धे व्यतीहारे। परस्परप्रहरणादि- रूपक्रियाकरणं व्यतीहारस्तत्र तुल्यरूपयोस्त्रीप्सान्तयोर्युद्धे वाच्ये हः स्यात्। दण्डैश्च दण्डैश्च प्रहृत्य इदं युद्धं वृत्तं दण्डादण्डि। केशेषु केशेषु गृहीत्वा आकृष्य वा इदं युद्धं वृत्तं केशाकेशि। अन्तर्भावितण्यर्थत्वात् वर्त्तितमित्यर्थः। युद्धमिति उक्तादं अन्यथा भिन्नघत्वात् त्वाच् न स्यात्। अनभिधानात् चत्रियेण चत्रियेण च प्रहृत्य इदं युद्धं वृत्तं इत्यादौ तु षत्वान्तेन स्यात्। एवं प्रहरणाकर्षणग्रहणान्य- क्रियाव्यतीहारे न स्यात्। तेन रथे रथे स्थित्वा इदं युद्धं वृत्तमिति। सरूपयोः किं? हलैश्च मुषलैश्च युद्धं वृत्तमित्यादौ न स्यात्। युद्धे किं? हस्तेन हस्तेन गृहीत्वा क्रीड़नं वृत्तम्। तुल्ययोगे सहस्य वान्तेन। तुल्ययोगे वर्त्तमानस्य सहशब्दस्य त्रान्तेन सह हः स्यात्। पुत्रेण सह आगतः सपुत्रः सच्छात्रः इहोभयोस्तुल्यमागमनम्। तुल्ययोगे किं? सहैव दशभिः पुत्रैर्भारं वहति गर्दभीति विद्यमानैः पुत्रैरित्यर्थः। सपक्षः सधर्मा सलोकः सकर्मा सदर्पः समद इत्यादौ तु नीचैर्मुख इतिवत् पूर्वेणैव सः। तथाहि। सह विद्यमानौ पक्षावस्य इति वाक्यम्। तुल्यार्थे प्रायिकत्वात् स इति परे। प्रान्तान्यार्थ-

त्वादप्राप्ते सूत्रचतुष्टयमुक्तम्। विशेषणस्त्रि क्तान्तं प्राक्। एतानि पूर्वाणि स्युर्हे। पीताम्बरः चित्रगुः। कुलालकर्त्तृको घटः गिरिप्रधानो देशः समुद्रान्ता मही विप्रपूर्वा वर्णाः चूतादयो वृक्षाः कर्मपराः सन्तः दूतोत्तरो नृपः कृष्णस्वामिका गोपा इत्यादौ तु कुलालादिषु घटादीनां साध्यत्वेन प्राधान्याद्विशेष्यत्वं अतो न प्राग्भावः। सर्वश्वेतः सर्वकृष्णः। यत्र गुणशब्देन सह सः सोऽस्य विषयः द्रव्यवाचिना सह से विशेषणत्वेनैव सिद्धत्वात्। कृतसूक्ष्मकटः कृतसर्वशुक्लः स्त्रिविशेषणाभ्यां सह यत्र सः सोऽस्य विषयः ज्ञातराम इत्यादौ ज्ञातादेर्विशेषणत्वेनैव सिद्धत्वात्। स्त्रिसंख्ययोः संख्यासंख्यानां त्वल्पाः। स्त्रिसंख्ययोर्हे से संख्या प्राक् स्यात्। संख्यानां ह्रस्वेदल्परूपाः। द्वावन्यौ यस्मात् स द्व्यन्यः त्र्यन्यः सप्त गावो यस्य सप्तगुरित्यादि। विशेषणत्वात् पूर्वेणैव द्वित्राः पञ्चषाः। त्र्यन्तात् पद्मादिक्तान्ताच्च प्रहरणार्थः। हे पद्मादित्र्यन्तात् प्राक् स्यात्। प्रहरणार्थस्तु त्रीक्तान्ताभ्यां। नाभौ स्थितं पद्मं यस्य स पद्मनाभः। गर्भे स्थिता दुहिता यस्याः सा दुहितृगर्भा। पद्महस्तः कमण्डलुपाणिः गडुकण्ठः अगुरुशिराः इत्यादि। पद्मादि किं ? कण्ठेकालः उरसिलोमा धर्मवृत्तयः। दण्डपाणिः शूलपाणिः चक्रपाणिः अस्युद्यतः चक्रोद्यतः इत्यादि प्रायिकोऽयं परनिपातः। तथाच "तमुद्यतनिशातासिं प्रत्युवाच जिजीविषुरिति" भट्टिः। उद्गूर्णलोष्टलगुडैः परितोऽनुविद्ध इति माघः। क्तान्ताज्जातिकालसुखादयः। जातिकालसुखादयः क्तान्तात् प्राक् स्युः। सारङ्गजग्धी पलाण्डुभक्षितो मासजाता संवत्सरजाता सुखजाता दुःखजाता अलीकजाता इत्यादि। प्रातोदकः उपाकृतपशुरिति तु प्रायिकत्वात्। आहिताग्न्यादिषु वा। प्राप्तपूर्वनिपातो वा स्यात्। आहिताग्निः जातपुत्रः जातदन्तः जातश्मश्रुः पीततैलः पीतघृतः ऊढ़भार्य्यः गतार्थः पक्षे अग्न्याहित इत्यादि। त्र्यन्तोपमानादेर्दस्य लोपो दे। त्र्यन्तोपमानपूर्वस्य दस्य लोपः स्यात् दे हे। कण्ठस्थित इति बहुलम्। से कृदन्ते इति त्र्या अलुक्। कण्ठेस्थितः कालोऽस्य कण्ठेकालः। उरसि स्थितानि लोमानि अस्य उरसिलोमा। उष्ट्रमुखमिव मुखं यस्य स उष्ट्रमुखः। उपमानावयवस्यैवोष्ट्रादेरुपमानत्वोपचारात् ये तु लोपं न कुर्वन्ति ते तु वैयधिकरण्येऽपि कण्ठेकाल इत्यादौ तु हसुक्ता स्थितादिपदं,अन्तर्भूतमित्याहुः। एवं उष्ट्रमुखमित्यादौ तु उष्ट्रादिशब्देन लक्षणया मुखमुच्यते। एवं परत्रापि बोद्धव्यम्। विकारसमुदायष्यादेः। विकारसमुदाययोर्विहिता या षी तदन्तपूर्वस्य लोपः स्याद्दे। सुवर्णानां विकारः सुवर्णविकारः। सुवर्णविकारोऽलङ्कारोऽस्य सुवर्णालङ्कारः। केशसमूहः चूड़ा अस्य केशचूड़ः। विकारसमुदाये किं ? राजदुहिता भार्य्या यस्य स राजदुहितृभार्य्यः। शास्त्रधन इत्यत्र शास्त्रशब्देन लक्षणया शास्त्रज्ञानमुच्यते। प्रादेः कृदन्तस्य वा। प्रपतित

## ३२५। नञो ऽनौ वाज्झसोः।

नञः ६।, अनौ १॥, वा।१।, अच्-हसोः ७॥।

**नञो ऽचि परे अन् हसे च अः स्यात् से वा।**

**नास्त्यन्तो यस्यासौ अनन्तः नान्तः। अच्युतः नच्युतः।**

---

पर्णं यस्मात् स प्रपर्णः प्रपतितपर्णः। नञोऽस्त्यर्थानां। नञः पराणामस्त्यर्थवाचिनां दानां द्वे लोपः स्याद्वा। अविद्यमानः पुत्रोऽस्य अपुत्रः अविद्यमानपुत्रः। रम्यविशेत्यादि। रम्यो विः पक्षी यत्र वने तत्। स्त्रियां स्थितः कामोऽस्य। हरिं भावयितुं शीलमस्याः सा। दानामैक्यविधानेऽपि धात् क्रीतादित्यादिज्ञापकात् स्याद्युत्पत्तेः प्रागपि कानां स इति। तथाच कृतिकारकोपदानां कृद्भिः समासवचनं प्राक् सुबुत्पत्तेरिति भाष्यम्। श्रीभावेण इति श्रीस्थितो भावो यस्येति वाक्यम् ॥३२४॥

अन् च अश्च अनौ। अच्च हस् च अज्झसौ तयोः। समासे स्थितस्य नञः स्थाने अचि परेऽन् हसे च अः स्याद्वा। नच्युत इति च्युतिर् चरणे। कुगृह्णीति के च्योततीति च्युतः नश्वर इत्यर्थः। न च्युतः अच्युतः च्युतभिन्न इत्यर्थः। तथाच "तत्सादृश्यमभावश्च तदन्यत्वं तदल्पता। अप्राशस्त्यं विरोधश्च नञर्थाः षट् प्रकीर्त्तिताः" इति प्राञ्चः। क्रमेणोदाहरणानि। न ब्राह्मणोऽब्राह्मणः ब्राह्मणसदृश इत्यर्थः। पापस्याभावः अपापम्। अघटः पटः घटादन्यः पट इत्यर्थः। अनुदरी अल्पोदरीत्यर्थः। अकेशी अप्रशस्तकेशीत्यर्थः। असुरः सुरविरोधीत्यर्थः। अत्र वाशब्दस्य व्यवस्थावाचित्वात् नाकादिषु आदेशो न स्यात्। यथा "नाको नवेदा नकुलश्च नक्रो नासत्यनक्षत्रनपाच्च नभ्राट्। नपुंसकं वै नमुचिर्नखश्च नादेशमेतेषु वदन्ति धीराः ॥" इति न पातीति नपात् औणादिकस्तप्रत्ययः। क्षेपे गम्यमाने तिबाद्यन्ते नित्यमादेशः। यथा अपचति जाल्म इत्यादि अत्र समासो वक्तव्यः। न गच्छतीति नगः अगः इत्यादि विकल्पः ॥ ३२५ ॥

श्रीरा-टी—अन् च अश्च तौ अच्च हस् च तौ तयोः नास्ति अन्त इत्यादि अन्तो नाशः च्युतं च्युतिः इदं नित्यमिति परे। तेषान्तु नान्तनच्युतावसम्मतौ। अस्य सामान्य स एव विषयः। द्वे पूरणीत्यत्र हग्रहणात् तेन अब्राह्मण अनीश्वरः इत्यादावपि स्यात्। वाशब्दस्य व्यवस्थावाचित्वात्। अगः प्राणिनि नित्यं। न गच्छति इति अगो वृषः शीतेन जड़ीकृत इत्यर्थः। प्राणिनि तु शैलवृक्षौ नगावगौ। त्याद्यन्ते चाक्षेपे। त्याद्यन्ते परे अनौ स्यातां नित्यं आक्षेपे गम्यमाने। अवचति जाल्मः। अनेधस्व पाप इति। आक्षेपे किं? न पचति चैत्रः। न नक्षत्रादिषु।

**३२६ । महत्तैकार्थे जातीयघासकरविशिष्टे तु तौ च ।**

महत् ।६। त ।१। आ ।१। एकार्थे ७। जातीयघासकरविशिष्टे ७। तु ।१। तौ ।१। च ।१। ।

**महतस्त आ स्यात् एकार्थे, जातीयादौ तु तौ च महाबलः ।**

---

नचवादौ नञो ऽनौ न स्यातां । नचवादि यथा । "नचवं नमुचिर्नाको नपान्नक्रो नपुंसकम् । नवेदा नकुलो नभ्राखासत्या नख इत्यपि" । न चरति न चीयते वा नचचम् । चरत्योस्त्रप्रत्यये चदादेशौ मनीषादित्वात् । न मुञ्चतीति नमुचिः मुचधोः किः । नास्यकं दुःखं यत्र नाकः । न पातीति नपात् पाधोः अतृ । तनूनपात्नं प्रजुह्वोतीति भट्टिः । न पातयतीति नपादिति क्विबन्त इति कश्चित् । न क्रामतीति नक्रः । क्रमधोर्गमादित्वात् डः । न स्त्री न पुमान् नपुंसकम् । मनीषादित्वात् स्त्रीदस्य लोपः अक् विधानञ्च । न वेत्तीति नवेदाः विदधोरस् । नास्ति कुलमस्य नकुलः । न भ्राजते नभ्राट् । सत्सु साधवः सत्याः न सत्या असत्या न असत्या नासत्या । नित्यं व्वविषय एवायमिति परे । त्रिकाण्डे तु नासत्यौ देवभिषजौ इति तु सूर्य्यपत्नी संज्ञा तस्या नासाविनिःसृतत्वात् व्युत्पत्त्यन्तरेणेति । नास्ति खमिन्द्रियमस्य नखः । नैकं यशो यस्य स नैकयशाः । नैकगुणाः नैककीर्त्तिरित्यादौ त्रयाणां दानां हे नञो अनादेशो न स्यात् । परदस्याज्भ्रसोर्विधानात् से सर्वोत्तरदस्यैवोत्तरदत्वात् ॥ ३२५ ॥

महत् इति लुप्तषष्ठ्येकम् । त इति लुप्तप्रथमैकम् । आ इति लुप्तप्रथमैकम् । एकोऽर्थो यस्य स एकार्थः तस्मिन् । जातीयश्च घासश्च करश्च विशिष्टश्चेति तस्मिन् । महतस्तकार आकारः स्यादेकार्थे विशेष्यशब्दे परे इत्यर्थः । जातीयादौ परे तु महतस्तौकारश्च आकार स्यादित्यर्थः । महद्बलमस्य महाबलः । एवं महती कीर्त्तिर्यस्यासौ महाकीर्त्तिरित्यादौ पुंवद्भावादीपो निवृत्तौ तकारस्यैवाकारः । परत्र विशेष्यपदन्तु बहुव्रीहौ कर्मधारयेऽपि सम्भवति । तेन महती चासौ कीर्त्तिश्चेति महाकीर्त्तिरिति एकार्थे इति किं ? महांश्च पण्डितश्च महत्पण्डितौ महतः पुत्रः महत्पुत्र इत्यादौ न स्यात् । एवं महापूजेत्यस्मादधिकरणेऽपि स्त्रीत्वादापि मह्यतेऽस्यामिति मह्या । ततो मह्या चासौ अष्टमी चेति कर्मधारये पूरणप्रत्ययान्ते पुंवद्भावनिषेधेऽपि महाष्टमी महानवमीति सिद्धं । जातीयादौ तु । महतो

### ३२७। पुंवत् स्त्र्युक्तपुंस्कः स्त्रियां ड्यमानित्व शसन्ततरादौ चारूप्ये।

पुंवत् ।१।, स्त्री ।१।, उक्तपुंस्कः १।, स्त्रियां ७।, ड्य—तरादौ ७।, च ।१।, अरूप्ये ७।।

**उक्तपुंस्कः स्त्रीलिङ्गः पुंवत् स्यात् एकार्थे स्त्रीलिङ्गे, ड्यादौ च नतु रूप्ये।**

---

महत्या वा प्रकार इत्यर्थे जातीयप्रत्यये महाजातीयः। महतो महत्या वा घासो महाघासः महतो महत्या वा करो महाकरः महतो महत्या वा विशिष्टः महाविशिष्टः। च्वौ तु नेष्यते। अमहान् महान् भूतः महद्भूतश्चन्द्रः अत्र केचित् एकार्थे समासान्तपदे परे एव महतस्त आ स्यात्। तेन महत् सुन्दरं वपुर्यस्य स महत्सुन्दरवपुरित्यत्र न स्यात् सुन्दरं महद्वपुर्यस्य स सुन्दरमहावपुरित्यत्र स्यादेव इत्याहुः॥३२६॥

श्रीरा-टी—महदिति लुप्तषष्ठीकं दं तौ इत्यनेनाप्यन्वयात् त इति लुप्तप्रथमाकं दं आ इति लुप्तप्रथमाकम्। एकोऽर्थो यस्य स तस्मिन् जातीयश्च घासश्च करश्च विशिष्टश्च तत्तस्मिन्। महाबल इति। महद्बलं यस्येति वाक्यम्। एकार्थत्वात् महादेव इति येऽपि स्यात् जातीयादावसामानाधिकरण्येऽपि महतस्तत्योराकारः पृथग्विधानात् तेन महतो महत्या वा प्रकारः महाजातीयः महत्या महतो वा घासः महाघास इत्यादि। पूर्वसूत्राद्यानुवर्त्तितस्य व्यवस्थावाचित्वात् अमहान् महान् भूतः महद्भूतश्चन्द्रमाः अमहती महती भूता महद्भूता ब्राह्मणी त्यादावभूततद्भावे न स्यात्। एकार्थे किम्? महतः पुत्रो महत्पुत्रः॥ ३२६ ॥

पुमानिव पुंवत्। उक्तः पुमान् येन स उक्तपुंस्कः शस् अन्ते यस्य स शसन्तः तर आदिर्यस्य स तरादिः शसन्तश्चासौ तरादिश्चेति शसन्ततरादिः। ड्यश्च मानिन् च तश्च त्वश्च शसन्ततरादिश्चेति तत्तस्मिन्। न रूप्योऽरूप्यः तस्मिन्। उक्तपुंस्कः स्त्रीलिङ्गशब्दः पुंवत् स्यादेकार्थे विशेष्ये स्त्रीलिङ्गे शब्दे परे ड्यादौ च परे न तु रूप्ये इत्यर्थः। यथा सुन्दरी भार्य्या यस्य स सुन्दरभार्य्यः। एवं सुन्दरी चासौ भार्य्या चेति सुन्दरभार्य्या। ड्यादौ तु सुन्दरीवाचरति सुन्दरायते। आत्मानं सुन्दरीं मन्यते या सा सुन्दरमानिनी। सुन्दर्य्या भावः सुन्दरता सुन्दरत्वम्। शसन्ततरादिस्तु। तरस्तमश्च रूपश्च चतरां चतमां तथा। इष्ठेयसू इमन्कल्पौ देश्यो देशीय इत्यपि। वहुः पाशश्चरो रूप्यश्शस चैते तरादयः। यथा इयमनयोरतिशयेन शुभ्रा शुभ्रतरा। एवं शुभ्रतमा

अतिशयेन शुभ्रा शुभ्ररूपा। एवं किन्नरां किन्नमाम् उक्तिश्च। अतिशयेन लघ्वी लघिष्ठा लघीयसी लघ्व्या भावो लघिमा ईषदूना शुभ्रा शुभ्रकल्पा शुभ्रदेश्या शुभ्रदेशीया ईषदूना शुभ्रा बहुशुभ्रा। अत्र बह्वी: परस्थित्यभावान्न पुंवद्भाव:। बह्वीश्च शसन्ततरादा-वुपन्यासस्तु अर्थप्रसङ्गात्। कुत्सिता शुभ्रा शुभ्रपाशा भूतपूर्वा शुभ्रा शुभ्रचरी। शुभ्राया भूतपूर्वो गौ: शुभ्रारूप्य: अत्र रूप्यवर्जनान्न पुंवद्भाव:। बह्वीर्देहि बहुशो देहि। उक्त-पुंस्का: किम्? गङ्गाभार्य्य:। किञ्च एकस्मिन्नर्थे यस्त्रीपुंसयोर्वर्त्तते स उक्तपुंस्क:। तेन द्रोणी सम्पत्ति: अत्र पुंवन्न स्यात्। यतो द्रोणीशब्द: काष्ठाम्बुवाहिन्यां स्त्रियां परि-माणे पुंसीति। एकार्थे किम्? सुन्दर्य्या बुद्धि: सुन्दरीबुद्धि:। स्त्रीलिङ्गे किम्? सुन्दरीधन:। तरादौ चेति चकारस्यानुक्तसमुच्चयार्थत्वात् तद्धितार्थवाच्ये द्विगौ द्वाभ्यां कुडवीभ्यां क्रीत: द्विकुडवीधा: एवं कुक्कुट्या अण्डं कुक्कुटाण्डम्। मृग्या: चीरं मृग-चीरं मृग्या: पदं मृगपदं काक्या: शाव: काकशाव: एष्वपि पुंवद्भाव: स्यात्॥३२७॥

श्रीरा-टी—एकप्रवृत्तिनिमित्तेन उक्त: पुमान् येन स: शस् अन्ते यस्य स तर आदिर्यस्य स: शसन्तश्चासौ तरादिश्चेति स: ध्यश्च मानी च तश्च त्वश्च शसन्ततरादिश्च तत्तस्मिन् पुंस्त्वं सूचत्वात्। न रूप्योऽरूप्यस्तस्मिन्। एकार्थ इत्यनुवर्त्तते इत्याह। एकार्थे स्त्रीलिङ्ग इति चित्रगुरित्यादि वक्ष्यति। एकार्थत्वात् वृद्धा चासौ भार्य्या इत्यादौ येऽपि स्यात्। एकप्रवृत्तिनिमित्तेन एकबुद्धिग्राह्यत्वेनोभयार्थस्य सन्निकृष्ट-त्वादेकप्रवृत्तिनिमित्तेनोक्तपुंस्कस्य पुंवद्भाव:। तेन द्रोणीभार्य्या इत्यादौ न स्यात् द्रोणशब्द: परिमाणे पुंसि काष्ठाम्बुवाहिन्यां स्त्रियां वर्त्तते अतो भिन्नप्रवृत्तिनिमित्तेन बुद्धिग्राह्यत्वेनोभयार्थाभिधानस्य विप्रकृष्टत्वात्। एकार्थस्त्रियां किम्? तरुणी प्रधानं यस्य स तरुणीप्रधान: ध्यादौ यथा। गौरीवाचरति गौरायते। दर्शनीयां मन्यते भार्य्यां चैत्री दर्शनीयमानी भार्य्याया:। पट्वा भाव: पटुता पटुत्वम्। इयमनयोरतिशयेन शुभ्रा शुभ्रतरा शुभ्रतमा पटुरूपा पटिष्ठा पटीयसी शुक्लिमा वृद्धकल्पा वृद्धदेश्या वृद्धदेशीया वृद्धपाशा पटुचरी बह्वीभ्यो देहि बहुश इत्यादि। अरूप्ये किम्? शुभ्रारूप्य:। एकस्या आगतम् एकरूप्यं तस्या: तत: तस्यां तत्र तया प्रकृत्य तथा तस्यां वेलायां तदा तर्हि इत्यादौ तु पुंवत् सेरिति पुंवद्भाव:। तत्वे त्वजात्याख्य इति पटुता पटुत्वमित्यादौ सिद्धे क्वचिदन्यत्रापि तेन अपत्यार्थ-णेयभिन्ने वाच्ये जातीये त्ये च पुंवत्। यथा हस्तिनीनां संघ: हास्तिकं श्येन्या इदं श्यैनं वास: अग्नायी देवता अस्य आग्नेय: स्थालीपाक इत्यादि। अपत्यार्थणेये तु रोहिण्या अपत्यं रौहिणेय:। श्यैनेय:। अजायै हिता अजय्या भूमिरिति। कुकुट्या-दिरण्डादौ। कुक्कुट्यादि: पुंवत् स्यात् अण्डादौ परे। असामानाधिकरण्ये अस्य

३२८। नोप्ताककोङ्पूरण्याख्यायुम्रक्त-विकारार्थणित्तं जातिस्वाङ्गेप् त्वमानिनि।

न।१।, ऊप्—णित्तं १।, जातिस्वाङ्गेप्।१।, तु।१।, अमानिनि ७।।

ऊबन्तं, तस्याकस्य वा केन ककारोङ्, पूरणीत्यान्तं संज्ञाभूतम्, इम्-उम्-रक्तार्थ-विकारार्थवर्जं णित्तान्तञ्च, पुंवन्न स्यात्, जातिस्वाङ्गविहितेबन्तन्तु मानिन् वर्जे।

---

विषयः। कुक्कुट्या अण्डं कुक्कुटाण्डं मृग्याः क्षीरं मृगक्षीरं मृग्याः पदं मृगपदं काक्याः शावकः काकशावकः प्राप्ता जीविका प्राप्तजीविका द्वितीयाया भिक्षा द्वितीय-भिक्षा उत्ताना शेते उत्तानशया प्रजाता भार्य्या यस्य प्रजातभार्य्यः। प्रसूता भार्य्या यस्य स प्रसूतभार्य्यः इत्यादि शिष्टप्रयोगानुसारेण ज्ञेयम्। प्रजाताप्रसूताशब्दयोर्गर्भ-विमोचकप्रवृत्तिनिमित्तेन स्त्रियां वृत्तेर्न पुंसि नित्यस्त्रीत्वादव पाठः॥ ३२७॥

तस्य अकस्य ताकौ ताकयोः कः ताककः ताकक उङ् यस्य स ताककोङ्। इश्च उश्चेति यु ताभ्यां मः। मकारस्य प्रत्येकसम्बन्धेन इम् उम् इत्यर्थः। रक्तस्य विकारस्य रक्तविकारौ रक्तविकारौ च तौ अर्थौ चेति रक्तविकारार्थौ युम् च रक्तविकारार्थौ च युम्रक्तविकारार्थाः न विद्यन्ते ते यत्र सोऽयुम्रक्तविकारार्थः। मूर्द्धन्य ण इत् यस्य स णित् णिच्चासौ तश्चेति णित्तः अयुम्रक्तविकारार्थश्चासौ णित्तश्चेति अयुम्रक्तविकारार्थणित्तः। पश्चात् ऊप् च ताककोङ् च पूरणी च आख्या च अयुम्रक्तविकारार्थणित्तश्चेति। जातिश्च स्वाङ्गञ्च जातिस्वाङ्गे ताभ्यामीप् जाति-स्वाङ्गेप् न मानिन् अमानिन् तस्मिन्। ऊबन्तं पदम्। तद्धितस्य केन अकस्य वा केन ककारोङ् पदम्। द्वितीयादिपूरणप्रत्ययान्तं पदम्। दत्ताभद्रादिसंज्ञारूपं पदम्। इम् उम् रक्तार्थविकारार्थवर्जणकारेत्तद्धितप्रत्ययान्तं पदञ्च पुंवन्न स्यात् जातिविहि-तेबन्तं स्वाङ्गविहितेबन्तञ्च मानिन्वर्जे शब्दे परे पुंवन्न स्यादित्यर्थः॥ ३२८॥

श्रीरा-टी—तस्य अकस्य तौ ताकयोः कः ताककः स उङ् यस्य सः ण इत् यस्य स णित्तौ यस्मात् तत् इश्च उश्च तौ युभ्यां युमौ अवयवापेक्षया द्वित्वं रक्तस्य विकारस्य तौ तावर्थौ येषां ते युमौ च रक्तविकारस्य ते न विद्यन्ते ते यत्र णित्ते तत् तच्च तत् णित्तञ्चेति पश्चात् ऊप् च ताककोङ् च पूरणी च आख्या च

**३२९। पूरणी प्रिया मनोज्ञा सुभगा दुर्भगा चान्ता कान्ता वामना वामा चपला बाला समा सचिवा तनया दुहितृ स्वा कल्याणी भक्तौ।**

पूरणी—भक्तौ ७।

**एषु परेषु पुंवन्न स्यात्।**

**३३०। गवाबादिः स्वोऽन्ते गौण्येऽनीयसः।**

गवाबादिः ६।, स्वः १।, अन्ते ७', गौण्ये ७।, अनीयसः ५।।

---

अयुक्तविकारार्थणित्तञ्च तत् जातिश्च स्वाङ्गञ्च ते ताभ्यां ईप् तत् न मानी अमानी तस्मिन्। उदाहरणन्तु। वामोरूभार्य्य इत्यादौ वक्ष्यति॥ ३२८॥

पूरणी च प्रिया च मनोज्ञा च सुभगा च दुर्भगा च चान्ता च कान्ता च वामना च वामा च चपला च बाला च समा च सचिवा च तनया च दुहिता च स्वा च कल्याणी च भक्तिश्चेति तस्मिन् पूरणी पूरणीप्रत्ययान्तस्त्रीलिङ्गशब्दः द्वितीयादिः भक्तिशब्दोऽत्र कर्मविहितक्तिप्रत्ययान्तो बोद्धव्यः भावसाधिते तु पुंवत् स्यादेव। एषु अष्टादशसु परेषु पुंवद्भावपरिहार इति। दृढ़भक्तिरिति ज्येष्ठे. राज्यतृष्णापराङ्मुखः इति रघुः। प्रातस्तज्जननी प्रसूततनया जामातृगेहं गता इति तु प्रसूतं तनयया यस्या इति व्यधिकरणबहुव्रीहिः॥ ३२९॥

श्रीरा·टी—पूरणी च प्रिया चेति द्वन्द्वः। एष्विति पूरणार्थत्यान्ते प्रियादि-सप्तदशशब्देषु-चेत्यर्थः। अन्ये तु चान्तातनययोः स्थाने चमातरणावाहुः बालावामाशब्दौ नाहुः इह द्रव्यार्थप्रियादिसाहचर्य्यात् ढत्यान्तस्य भज्यमानद्रव्यार्थस्य भक्तिशब्दस्य ग्रहणात् भावत्यन्तेन निषेधः। तथा मेघदूते दृष्टभक्तिर्भवान्योति रघौ दृढ़भक्तिरिति। कान्ताशब्दं परेणाहुः कोङ् पूरण्यादीत्यादीनां य से पुंवत्भावात् ङसएवानयोर्विषयः। सपत्न्यादीनाञ्च सपत्न्यादीनां प्राप्तपुंवन्न स्यात्। सपत्नीभार्य्यः। सपत्नीवृन्दारिका। सपत्न्यादिर्यथा सपत्न्यनडुही रोहिण्यनड्वाहो च रेवती। पृथिवी च सपत्न्यादाविह प्रोक्ता ग्रहायणी॥ ३२९॥

गौश्च आवादिश्चेति तस्य। न ईयस् अनीयस् तस्य पुंवद्भावस्य विधिनिषेधौ निरूप्य उदाहरति। शीतगुरित्यादि। शीता शीतला गौः किरणो यस्यासौ शीतगुश्चन्द्रः।

अन्ते स्थितस्य गोः आप ईप ऊपश्च ह्रस्वः स्यात् अप्रधानत्वे सति, नत्वीयसः। शीतगुः ध्वस्तमायः कालतनुः। ईयसस्तु बहुप्रेयसी। ऊबादेस्तु [ ३२८ ] वामोरूभार्य्यः रसिकाभार्य्यः

---

ध्वस्ता माया यस्य स ध्वस्तमायः उभयत्र पूर्वस्य पुंवद्भावः परस्य ह्रस्वः ईबन्तं बहुव्रीहौ कप्रत्ययेन बाधितत्वान्नोदाहृतम्। काली तनुर्यस्यासौ कालतनुः पूर्वस्य पुंवद्भावः अनभिधानादूपः कप्रत्ययाभावे ह्रस्वः। अन्यत्रापि गौणत्वे पञ्चगुः अतिमायः अतिस्त्रिः अतितनुरित्यादि। ईयसस्तु बह्व्यः प्रेयस्यो यस्य स बहुप्रेयसी कृष्णः। पूर्वस्य पुंवद्भावः परस्य ईयसो वर्जनादीपो न ह्रस्वः। साध्वन्यानां सखिर्द्विषि इत्यत्राप्रत्ययाभावो ज्ञापयति समासान्तविधेरनित्यत्वादिति। तेन वृतः क इत्यनेन कप्रत्ययो न स्यात्। एवञ्च न्यञ्चत्तालतमालदन्तुरदरी तत्रापि गोदावरीति विस्तृतनीव्य इति तुग्र्यत्काञ्च्य इति। विलुलितकवरी शबरीति। खरमञ्जरीत्यादिषु कप्रत्ययाभावेऽपि अनभिधानात् ह्रस्वो न स्यात्। अनीयस इति नञोऽल्पार्थत्वात् बहुव्रीहेरन्यत्र ह्रस्वः स्यादेव अतिप्रेयसिः, पञ्चभिः प्रेयसीभिः क्रीतः पञ्चप्रेयसिरिति। तथाच ईयसो न बहुव्रीहौ कश्च सुप्रेयसीकुलम्। सुप्रेयसीयुगान्यतोऽपि प्रेयसिरिति प्राञ्चः। वामोरूभार्य्य इति वामौ सुन्दरौ ऊरू यस्याः संहित वामलक्षणेति ऊप्। रसं वेत्तीति रसिका ढघेकादिति णिकः। पचतीति पाचिका तृणकौ घे इति णकः। षण्णां पूरणी षष्ठी चतुःषड्भ्यां थट्। दत्ता इति संज्ञा। मिथिलायां भवा मैथिली ढघेकादिति णः एषु पूर्वपदाना-मूबन्तादीनां पुंवद्भावनिषेधः परपदानां ह्रस्वः। ब्राह्मणीभार्य्य इति जाति-विहितेबन्तं न पुंवत्। अमानिनि किं? आत्मानं ब्राह्मणीं मन्यते या सा ब्राह्मणमानिनी ग्रहनन्दिपचादेरिति णिन् नान्तत्वादीप्। अत्र मानिनि परे पुंवद्भावः। एवं सुकेशमानिनी। युमादिस्तु व्याकरणं वेत्त्यधीते वा वैयाकरणी ढघेकादिति णः य्वोर्युमिति इम्। सुष्ठु अश्वा यस्य स स्वश्वः स्वश्वस्येयं सौवश्वी विकारसंघेति य्वोर्युमिति उम्। कषायेण रक्ता काषायी ढघेकादिति णः। हेम्नो विकारः हैमी विकारसंघेति णः युमन्तविकारार्थवर्जनादेषां पुंवद्भावः। पूरण्यादौ परे उदाहरिष्यन् सूत्रमाह ॥ ३३ ॥

श्रीरा-टी—आबादिर्यस्य सः गौश्च आबादिश्च तत्तस्य। पुंवत् सूत्रत्वात्। गुणस्य भावो गौणं तस्मिन्। न ईयोऽनीयस् तस्मात् न लीयसः इति ईयसः परस्येपः प्राप्तस्त्रो न स्यात् इत्यर्थः। तेन सुप्रेयसीकुलमित्यादौ क्लीवे ह्रस्व इति

पाचिकाभार्य्यः षष्ठीजायः दत्ताजायः मैथिलीभार्य्यः । ब्राह्मणी-भार्य्यः सुकेशीभार्य्यः । अमानिनि किं—ब्राह्मणमानिनी । युष्मादेस्तु वैयाकरणभार्य्यः सौवश्वभार्य्यः काषायकन्यः हैममुद्रिकः । पूरण्यादौ तु [ ३२९ ] ।

---

स्त्रो न स्यात् । नार्द्धपिप्पल्यादेः अर्द्धपिप्पलादेः प्राप्तस्त्रो न स्यात् । अर्द्धं पिप्पल्याः अर्द्धपिप्पल्यादिर्यथा अर्द्धपिप्पली अर्द्धखारी पूर्वनगरीत्यादि । अर्द्धपिप्पल्यादेः किं ? प्राप्ता जीविकां प्राप्तजीविकः आपन्नजीविकः । ईयसोर्हे । ईयसो र्हे एव स्त्रो न स्यात् । बह्वाः प्रेयस्यो यस्य स बहुप्रेयसी पुरुषः कुलं वा । गौणत्वेऽपि ईपः सेर्लोपः स्यादेव । र्हे किं ? अतिप्रेयसिः खलः उपप्रेयसि प्रेम । लाघवा-देकत्र सूत्रद्वयोदाहरणमाह शीतगुरित्यादि । शीता गौर्यस्येति वाक्यं शीता शैत्यगुणयुक्तेत्यर्थः । पट्वी च मृद्वी च पट्वीमृद्व्यौ ते भार्य्ये यस्य स पट्वीमृदुभार्य्यः इत्यत्र पट्वीशब्दस्य न पुंवद्भावः एकार्थस्त्रीलिङ्गोत्तरादेतविधानात् । यत्र तु पटुमृदुभार्य्यस्तत्र यगर्भ द्वः । एकार्थे किं कल्याण्या माता कल्याणीमाता । स्त्रियामिति किं ? तरुणो प्रधानं येषां ते तरुणीप्रधानाः । ध्वस्तामय इति ध्वस्ता नष्टा इत्यर्थः । कालतनुरिति काली कृष्णवर्णेत्यर्थः । गवावादेः किं ? अतिलक्ष्मीः वामोरूभार्य्यः इति वामोरूर्भार्य्या यस्य इति वाक्यम् । एवं धीवन्युश्चासौ वाला चेति धीवन्युवालेत्यादि । रसिकाभार्य्य इति रसोऽस्या अस्ति इत्यर्थे इकः । रसिकेति तककारोङ् । पाचिकाभार्य्य इति पचतीत्यर्थे णकः पाचिकेति अककारोङ् । ताककोऽङ् किं ? पाका भार्य्या यस्य पाकभार्य्यः शुष्काभार्य्यः । षष्ठीजाय इति षण्णां पूरणीत्यर्थे थट् एवं पञ्चमीभार्य्य इत्यादि । दत्ताजाय इति यद्यपि संज्ञाशब्दानां एकद्रव्याभिनिवेशित्वात् उक्तपुंस्कत्वाभावेनैव पुंवत्त्वाप्राप्ति-स्तथापि शास्त्रे लिधुसंज्ञादि शब्दवद्दत्तादीनां अनेकद्रव्याभिनिवेशित्वात् उक्त-पुंस्कत्वं दत्तगुप्तात्मकं नाम प्रशस्तं वैश्यशूद्रयोरिति स्मृतेः । तथाच दत्तत्व-प्रवृत्तिनिमित्तेनैव दत्तः पुमान् दत्ता स्त्रीति पुंस्त्रियोर्वर्त्तते अतो निषिध्यते । एवं गुप्ताभार्य्य इति । मैथिलीभार्य्य इति मिथिलायां भवा इत्यर्थे णः । ब्राह्मणीभार्य्य इति जातिवाचित्वादीप् । सुकेशीभार्य्य इति स्वाङ्गत्वादीप् । जातिस्वाङ्गेऽपिति किं ? कुमारभार्य्यः । युवती जाया यस्य सं युवजानिः । तथाच । युवजानिर्धनुष्पाणिरिति भट्टिः । कुमारत्वादिजातिवाचिनस्तु कुमारीभार्य्य इत्याहुः ब्राह्म मानिनीति ब्राह्मणी मानिनी यस्या इति वाक्यं एवं ब्राह्मणीं

## ३३१। ङे पूरणीप्रमाणीभ्याम:।

ङे ७।, पूरणी-प्रमाणीभ्यां ५॥, अ: १।।

आभ्याम् षः स्यात् ङे। [ २५८ ] यथोर्लोपो ऽयुक्तौ पौ। कल्याणीपञ्चमा रात्रयः, कल्याणीप्रियः। मुख्यात्र पूरणी ग्राह्या, तेन—

---

आत्मानं मन्यते इति वाक्येऽपि एवं सुकेशमानिनी दीर्घकेशमानिनी भार्य्यायाः। मानिनीभिन्ने जातिस्वाङ्गेप एव नियमात्। दत्ता मानिनी पञ्चमी मानिनीत्यादि निषेधः स्यादेव। वैयाकरणभार्य्यः इति व्याकरणं वेत्त्यधीते वा इत्यर्थे ष्णि यस्येम् नित्ताद्विः। सौवश्वाभार्य्य इति स्वश्वस्यापत्यं इत्यर्थे ष्णि वस्य उम् णिति त्रिः। काषायकन्यः इति कषायेण रक्ता इत्यर्थे ष्णः हैमसुद्रिक इति हेम्नो विकार इत्यर्थे ष्णः॥ ३३:॥

पूरणी द्वितीयादिः। प्रमीयते अनयेति प्रमाणी पञ्चानां पूरणी पञ्चमी नोऽसंख्यादेरिति मट्। कल्याणी प्रशस्ता पञ्चमी रात्रिर्यासु रात्रिषु ता रात्रयः कल्याणीपञ्चमाः। अत्र पञ्चमीशब्दे परे पुंवद्भावो माभूत्। पञ्चमी-शब्दादप्रत्यये यथोर्लोप इति ईपो लोपे स्त्रियामत आप्। एवं कल्याणी-प्रियः कल्याणीमनोज्ञः इत्यादि। मुख्यात्रेति अत्र पूरणप्रत्ययान्ते परे पुंवद्-भावनिषेधे पूरणप्रत्ययान्तादप्रत्ययविधाने च उभयत्र मुख्या पूरणी ग्राह्या। तेन हेतुना कल्याणी पञ्चमी रात्रिर्यस्मिन् पक्षे स पक्षः कल्याणपञ्चमीकः इत्यत्र पञ्चमीशब्दस्य गौणत्वात्तस्मिन् परे पुंवद्भावनिषेधो नाभूत् तस्माद्-प्रत्ययोऽपि नाभूत्। ततो दृतः कः इति कः प्रत्ययः। ननु समासवाच्यत्व-मेव मुख्यत्वम्। ननु तथापि पञ्चमरात्रिभिन्नानां रात्रीणां समासवाच्यत्वात् पञ्चमरात्रेः कथं मुख्यत्वं इति चेत् सत्यं समासवाच्यानां योऽसाधारणधर्मः तद्वत्त्वं मुख्यत्वम्। ततश्च समासवाच्यानां रात्रीणां असाधारणधर्मो रात्रित्वं तत्तु तासु रात्रिषु पञ्चम्यां रात्रावपि वर्त्तते अतो मुख्यत्वम्। कल्याणीपञ्चमीकः पक्ष इत्यत्र समासवाच्यः पक्षः तस्यासाधारणधर्मः पक्षत्वं तत्तु प्रतिपदादिपञ्चदश-तिथ्यात्मककाल एव वर्त्तते न रात्रौ इति भेदः॥ ३३१॥

श्रीरा-टी—पूरणी च प्रमाणी च ते ताभ्याम्। कल्याणी पञ्चमा रात्रय

३३२। द्यृतः कः।

दी ऋतः ५।, कः १।।

दीसंज्ञकादृदन्ताच्च कः स्यात्। हे। कल्याणपञ्चमीकः पक्षः। रात्रिः पूरणी वाच्या चेति पूर्वत्र मुख्यत्वम्। स्त्रीप्रमाणः।

---

इति कल्याणी पञ्चमी यासां रात्रीणां ताः पूरणीत्यान्ते परे कल्याणीत्यस्य न पुंवद्भावः एवं कल्याणीप्रिय इत्यत्र प्रियाशब्दे परे। एवं कल्याणीमनोज्ञ इत्यादि गौणमुख्ययोर्मध्ये मुख्ये कार्य्यसंप्रत्ययः इति न्यायेनात्र पूरणीप्रियेत्यत्र मुख्यपूरणीग्रहणमित्याह मुख्यात्र पूरणी ग्राह्येति अत्र अनयोरित्यर्थः एतस्य फलं दर्शयन् तेनेत्युक्त्वा सूत्रान्तरसाप्रेक्षत्वात् सूत्रयति॥ ३३१॥

दी च ऋच्चेति द्यृत् तस्मात्। स्त्रीप्रमाण इति अनुक्तपुंस्कत्वात् पूर्वस्य न पुंवद्भावः प्रमाणीशब्दादप्रत्ययः। तथा अनडुत्पुंसयोर्लक्ष्मीनावामेकत्वे बहुव्रीहौ कः द्वित्वबहुत्वयोस्तु वा। यथा लब्धोऽनड्वान् येन सः लब्धानडुत्कः एवं उक्तपुंस्कः पीतयस्कः स्थिरलक्ष्मीकः आरूढनौकः। द्वित्वबहुत्वयोस्तु लब्धौ अनड्वाहौ लब्धा अनड्वाहो वा येन स लब्धानडुत्कः लब्धानड्वान् उक्तौ पुमांसौ उक्ताः पुमांसो वा येन स उक्तपुंस्कः उक्तपुमान् पीते पयसी पीतानि पयांसि वा येन स पीतपयस्कः पीतपयाः स्थिरे लक्ष्म्यौ स्थिरा लक्ष्म्यो वा यस्य स स्थिरलक्ष्मीकः स्थिरलक्ष्मीः। दृष्टे नावौ दृष्टा नावो वा येन स दृष्टनौकः दृष्टनौः। इनन्तात् स्त्रियाम्। इनन्ताद्बहुव्रीहौ स्त्रियां कः स्यात्। बह्वो वादिनो यस्यां सा बहुवादिका सभा। स्त्रियां किं? बहुवादी राजा बहुवादि कुलम्। भ्रातुस्स्तुतौ भ्रातुः कः स्याद्बहुव्रीहौ नतु स्तुतौ। चौरभ्रातृकः। स्तुतौ तु धीरभ्राता। नाड़ी तन्त्रीभ्यामस्वाङ्गे। बहुनाड़िको दिवसः बहुतन्त्रिका वीणा। स्वाङ्गे तु बहुनाड़िर्देहः। अत्र कप्रत्ययस्याभावे ह्रस्वः। बहुतन्त्री ग्रीवा अत्र कप्रत्ययाभावेऽपि अनभिधानात् ह्रस्वो न स्यात्॥३३२॥

श्रीरा-टी—दी च ऋच्च तत्तस्मात्। कल्याणपञ्चमीकः पक्षः इति कल्याणी पञ्चमी रात्रिर्यस्मिन् पक्षे सः इहान्यपदार्थे पक्षे पञ्चमीरात्रिः परम्परया प्रविशतीत्यतो गौणत्वम्। कल्याणीपञ्चमा रात्रयः इत्यत्र तु अन्यपदार्थभूतासु रात्रिषु पञ्चमी साक्षादेव प्रविशति इत्यतो मुख्यत्वमित्याह रात्रिः पूरणी

## ३३२। सहः सो वा

सहः ६।, सः १।, वा ।१।।

सहस्य हे सः स्याद्वा ;

सह मात्रा वर्त्तते यो ऽसौ समातृकः सहमातृकः।

---

वाच्येति पूर्वत्र मुख्यत्वमिति पूर्वत्र कल्याणीपञ्चमा रात्रय इत्यत्र इत्यर्थः। स्त्रीप्रमाण इति स्त्री प्रमाणी यस्येति वाक्यं पूर्वत्र प्रमाणीत्यस्याप्रधानस्यापि ग्रहणादः। स्त्रीत्यस्य उक्तपुंस्कत्वाभावान्न पुंवद्भावः। मध्वादिकार्थनावादिभ्याम्। मध्वादेरेकत्वार्थनावादेश्च कः स्याद्धे। प्रियं मधु यस्य स प्रियमधुकः अनर्थकः। मध्वादिर्यथा। मधुपान दुरः शालि नञर्थो दधिसर्पिषी। लक्ष्मा नौर्येन स लक्ष्मीकः। नावादिर्यथा नौरनड्वान् पयो लक्ष्मीः पुमान् पञ्चेह कीर्त्तिताः। कार्थ किं? द्वे नावौ यस्य द्विनौः। स्त्रियामिनः। हेऽन्यदार्थभूतायां स्त्रियां मिनन्तात् कः स्यात्। बह्वो वाग्मिनो यस्यां सा बहुवाग्मिका सभा। स्त्रियां किं? बहुदण्डी राजा। कृद्वाकृतसान्ताभ्यां वा। कृदन्तदीसंज्ञकात् अकृतसान्ताच्च कः स्यात् वा हे। बहुतन्त्रीः बहुतन्त्रीकः सुबधूः सुबधूकः। कृद्वाः किं? सुस्त्रीः सुभ्रूः बहुमानः बहुमानकः बहुयोगिकः बहुयोगी। कृतसान्तात्तु। प्रियपयः प्रियधुरः। नाख्यायाम्। संज्ञायां गम्यमानायां प्रातः को न स्यात्। विश्वो देवो यस्य स विश्वदेवः। विश्वयशाः। ईयःस्वाङ्गार्थनाड़ीतन्त्रीभ्यः। ईयसः स्वाङ्गार्थाभ्यां नाड़ीतन्त्रीभ्याञ्च को न स्यात्। बहुप्रेयसी बहुनाड़िः कायः बहुतन्त्रीर्ग्रीवा। स्वाङ्गे किं? बहुनाड़ीको दिवसः बहुतन्त्रीका वीणा पूर्वेण वा। भ्रातुः स्तुतौ। सुभ्राता लक्षणः पुण्यभ्राता विप्रः। स्तुतौ किम्। बहुभ्रातृकः क्रूरः। निरः प्रवाल्याः। निर्गता प्रवाली शलाका यस्मात् स निष्प्रवालिः पटः। क्वचिदन्यत्रापि। ब्राह्मणमानिनिः। निस्तनीव्यः विलुलितकवरी शवरीत्यादयः॥ ३३२॥

समातृक इति पूर्वेण कः। अनेन सहस्य सः पक्षे सहमातृक इति। केचित्तु प्रथमान्तान्यपदार्थबहुव्रीहिममन्यमाना मात्रा सहितः समातृक इति तृतीयातत्पुरुषं वदन्ति॥ ३३३॥

गोरा-टी—सह इति ष्यर्थे प्री अनुकरणात् तस्या अलुक् समातृक इति वाक्यस्य सानुपूर्विकत्वात् सह मात्रा वर्त्तते इति वाक्यमिति परे। सह

## ३३४। सक्थ्यक्ष्णः षः स्वाङ्गे।

सक्थ्यक्ष्णः ५।, षः १।, स्वाङ्गे ७।।

आभ्यां हे षः स्यात् स्वाङ्गे। दीर्घसक्थः, पुण्डरीकवदक्षिणी यस्यासौ पुण्डरीकाक्षः। स्वाङ्गे किं? दीर्घसक्थि शकटम्।

## ३३५। दारुण्यङ्गुलेः।

दारुणि ७।, अङ्गुलेः ५।।

पञ्चाङ्गुलं दारु।

---

समानं उदरमस्य सोदरः सहोदरः। त्वं सोदरस्यातिमदोद्धतस्य इति भट्टिः। हे इति किं? सह कृत्वा। गोहलवत्साशिषि एष्वाशिषि गम्यमानायां सहस्य सो वा स्याद्धे। स्वस्ति ते चैवाय सगवे सहगवे सहलाय सहहलाय सवत्साय सहवत्साय। एषु किम्? स्वस्ति ते सह पुत्राय। संज्ञाधिक्यानुमेयग्रन्थसमाप्तिषु नित्यम्। एष्वर्थेषु सहस्य सो नित्यं स्याद्धे। अश्वत्थेन सह वर्त्तते यत् तत्साश्वत्थं नक्षत्रचक्रम् एवं सपलाशं सशिंशपं स्थलम्। सकाकलीको द्रोणः काकल्या अधिक इत्यर्थः साग्निः कपोतः गृहे कपोतपातात् भाव्यग्निरनुमीयते इत्यग्निरनुमेयः एवं सपिशाचा वात्या। साङ्गान् वेदानधीते अङ्गानां समाप्तिं यावदित्यर्थः॥ ३३३॥

सक्थि च अक्षि चेति सक्थ्यक्षि तस्मात्। दीर्घे सक्थिनी यस्य स दीर्घसक्थः यप्रत्यये यथोर्लोप इति इकारलोपः। पुण्डरीकाक्ष इत्यत्र पुण्डरीकमेव चक्षुर्न सम्भवतीति लक्षणया पुण्डरीकेणाक्ष पुण्डरीकतुल्यमभिधीयते इति ज्ञापनार्थमेव पुण्डरीकवदित्युक्तम् अतएव व्याघ्रश्चासौ अश्वा चेति व्याघ्राश्वा इति स्वयं वक्तव्ये व्याघ्री व्याघ्रतुल्य इत्यर्थः। षित्वादीपि दीघसक्थी सरोजाक्षी। विभाषाद्वयमध्यवर्त्तित्वान्नित्यः॥३३४॥

श्रीरा·टी—सक्थि च अक्षि चेति सक्थ्यक्षि तस्मात्। साङ्गलक्षणमुक्तं स्वाङ्गवाचिभ्यां आभ्याम् इत्यर्थः। पुण्डरीकवदिति पुण्डरीकं सितपद्मं सान्तोपमानेत्यादिना वत्शब्दलोपः षित्वात् स्त्रियां दीर्घसक्थी पुण्डरीकाक्षी दीर्घसक्थीति शकटस्य प्राणित्वाभावात् इति भावः। हे किं दीर्घसक्थि देवदत्तस्य॥ ३३४॥

अङ्गुलेः षः स्याद्धत्रीहौ दारुणि वाच्ये। पञ्च अङ्गुलयः परिमाणमस्य पञ्चाङ्गुलम् एवं द्व्यङ्गुलं दारु। षित्वादीपि पञ्चाङ्गुली समित्। दारुणीति किम्? पञ्चाङ्गुला शिला। अतएव तद्धितार्थद्विगौ संख्याव्यादिति अप्रत्यये स्त्रियामत आप्॥ ३३५॥

३३६। द्वित्रेर्मूर्द्ध्नः।

द्वित्रेः ५।, मूर्ध्नः ५।।

३३७। न्वोर्लोपौतौ ते ऽच्ये।

न्वोः ६॥, लोपौतौ १॥, ते ७।, अच्ये ७।।

नस्य लोपः स्यात् उवर्णस्य ओत् स्यादचि ये च ते। द्विमूर्द्धः।

३३८। सङ्ख्याया डो ऽबहोः।

सङ्ख्यायाः ५।, डः १।, अबहोः ५।।

---

श्रीरा-टी—अन्यदार्थे दारुणि अङ्गुले षः स्याद्वे। पञ्चाङ्गुलमिति पञ्चाङ्गुलयो यस्मिन् इति वाक्यम्। अङ्गुलितुल्यावयवयुक्तं धान्याद्युत्क्षेपणकाष्ठमुच्यते। दारुणि किम्? पञ्चाङ्गुलिर्हस्त इत्यत्र न स्यात्॥ ३३५॥

द्वित्रिभ्यां परान्मूर्ध्नः षः स्याद्बहुव्रीहौ॥ ३३६॥

श्रीरा-टी—द्विश्च त्रिश्च तत्तस्मात्। आभ्यां परस्मात् मूर्ध्नः षः स्यात् हे॥ ३३६॥

न च उश्च नू तयोः। लोपश्च ओत् च लोपौतौ। अच्च यश्च अच्यं तस्मिन् द्वौ मूर्द्धानौ यस्य स द्विमूर्द्धः। पूर्वात् षप्रत्यये अनेन न लोपे यचोर्लोपः इत्यकारलोपः। एवं त्रिमूर्द्धः द्विमूर्द्धी राक्षसी। द्वित्रेः किम्? बहुमूर्द्धा। एवं बाहविः बाभ्रव्यः। नदंतसावित्यादिना दान्तत्वनिषेधान्नोलुप्फे धावित्यस्याप्राप्तौ नलोपार्थमिदम्॥३३७॥

श्रीरा-टी—न च उश्च तौ तयोः लोपश्च ओच्च तौ अच्च यश्च तत्तस्मिन् त इत्यस्य विशेषणम्। द्विमूर्द्ध इति द्वौ मूर्द्धानौ यस्य इति वाक्यम् एवं त्रयो मूर्द्धानो यस्य स त्रिमूर्द्धः आभ्यां किं बहुमूर्द्धा। ओद्यथा बाहविः बाभ्रव्य इत्यादि। पृथक् दकरणात् क्वचिन्न स्यात्। तुरासाहं पुरोधाय धाम स्वायम्भुवं ययुरिति कुमारसम्भवे॥ ३३७॥

नास्ति बहुर्यत्र सा अबहुः तस्याः। पञ्चषा इति डप्रत्यये टेर्लोपः। पञ्चषा इत्युदाहरता संख्यावाचकानां समासे अल्पमेव पूर्वं स्यादिति सूचितम्। तेन द्वौ वा त्रयो वा परिमाणमेषां ते द्वित्राः एवं चतुःपञ्चाः इत्यादि एवम् उपगता विंशतिर्यस्य स उपविंशः डप्रत्यये विंशतेस्तिर्लोपे यचोर्लोप इत्यकारलोपः॥ ३३८॥

बहुवर्जायाः सङ्ख्याया डः स्यात् हे । पञ्च षट् परिमाणं येषां ते पञ्चषाः, उपगताः दश येषां ते उपदशाः । बहोस्तु उपबहवः ।

३३९ । नाभे र्नाम्नि ।

नाभेः ५।, नाम्नि ७। ।

पद्मनाभः ।

३४० । लोम्नो ऽन्तर्वहिर्भ्याम् ।

लोम्नः ५।, अन्तर्वहिर्भ्याम् ५॥ ।

अन्तर्लोमः वहिर्लोमः ।

---

श्रीराटी—बहुवर्जाया इति बहोरुपलक्षणत्वात् उपगणा इत्यत्र न स्यात् तेनाकृतसान्तात् उपगणका इत्यपि । बहुवर्जनात् संख्येयवृत्तिसंख्याया एव ग्रहणं तेनाष्टभिः सह वर्त्तते साष्टा पञ्चाशदित्यत्र न स्यात् । पञ्चषा इति पञ्च वा षड् वा इति वाक्यमिति परे । एवमुपदशा इत्यत्र दशानां समीपे ये ते उपदशाः नव एकादश वा इत्यर्थः । संख्यादूरेत्यादिना यत्र सः तत्रैवायं विधिस्तेन शोभना दशा येषां ते सुदशान इत्यत्र न स्यात् इत्यपि परे । उपबहव इति संख्यावडडतीति सख्यात्वातिदेशात् प्राप्तौ निषेधः । सीः श्वः प्रातर्भ्याम् । सीः पराभ्यामाभ्यां डः स्यात् हे । शोभनं श्वोऽस्य स्वश्वः स्वश्वौ स्वश्वाः सुप्रातः सुप्रातौ सुप्राताः दिवसाः । तथाच सुप्रातमासादितसम्मदं तत् इति भट्टिः ॥ ३३८ ॥

नाभिः परो डः स्यात् बहुव्रीहौ संज्ञायाम् । पद्मं नाभौ यस्य स पद्मनाभः अथवा पद्मं पद्मवत् । एवं वज्रनाभः । नाम्नि किम् ? गभीरनाभिः प्रजा इवाङ्गाद-रविन्दनाभेरिति समासान्तविधेरनित्यत्वात् ॥ ३३९ ॥

श्रा-टी—संज्ञायां गम्यमानायां नाभेर्डः स्यात् हे । पद्मनाभ इति नाभिस्थितं पद्मं यस्य इति वाक्यम् । प्रजा इवाङ्गादरविन्दनाभेरिति तु सान्तविधेरनित्यत्वात् असंज्ञात्वाद्वा एवं नाभिस्थिता ऊर्णा यस्य मनीषादित्वात् स्वे ऊर्णनाभो मर्कटः ऊर्णनाभिरित्यन्ये । तथाच प्रवृत्तिर्नो विना कार्य्यमूर्णनाभेरपीष्यते इति भट्ट-वार्त्तिकम् ॥ ३३९ ॥

## ३४१। नञ्दुःसोः सक्थ्नो वा।

नञ्दुःसोः ५।, सक्थ्नः ५।, वा ।१। ।

**असक्थः असक्थिः।**

## ३४२। अस् प्रजायाः।

अस् ।१।, प्रजायाः ५। ।

**अप्रजाः सुप्रजाः।**

---

पृथग्योगान्नाप्नोति नानुवर्त्तते। अन्तर्वहिर्भ्यां परान्नोम्नो डः स्यात् बहुव्रीहौ। अन्तर्लोमान्यस्य अन्तर्लोमः एवं वहिर्लोमः॥ ३४०॥

श्रीरा-टी—अन्तर्लोम इत्यादि अन्तर्गतानि लोमानि यस्य वहिर्गतानि लोमानि यस्य स इति वाक्यम्। अत्र नाप्नोति नानुवर्त्तते पृथग्योगात्। आभ्यां किं दीर्घलोमा चैत्रः॥ ३४०॥

नञ् च दुश्च सुश्चेति तस्मात्। एभ्यः परात् सक्थ्नो डः स्यात् बहुव्रीहौ वा। नास्ति सक्थि यस्य सोऽसक्थः असक्थिः एवं दुःसक्थः दुःसक्थिः सुसक्थः सुसक्थिः॥ ३४१॥

श्रीरा-टी—एभ्यः परात् सक्थ्नो डः स्यात् हे वा। असक्थ इति नास्ति सक्थि यस्य इति वाक्यम्। असक्थिरिति एते उदाहरणे अस्वाङ्ग एव ज्ञेये स्वाङ्गे तु षः पूर्वेणैव। परे तु इह हलिशब्दस्यापि ग्रहणात् अहलः अहलिः दुर्हलः दुर्हलिः सुहलः सुहलिरित्यप्याहुः। अन्ये तु नञ्दुःसुभ्यो हलिसक्थिसक्तिभ्यो यथाक्रममुक्ता अहलः अहलिः दुःसक्थः दुःसक्थिः सुसक्तः सुसक्तिः इत्याहुः। हलशक्तशब्दाभ्यां एव सिद्धत्वात् चान्द्रा हलि सक्ती न गृह्णन्ति। एकस्मिन्नर्थे प्रयोगद्वयसिद्ध्यर्थं अकृतसान्तात् कविधानार्थञ्च हलिसक्तिग्रहण मित्यन्ये। एतत् सर्वं ग्रन्थकृन्मते वाशब्दस्य व्यवस्थया सिद्धमिति ज्ञेयम्। सक्तिरिति सन्जधीः क्तिः॥ ३४१॥

नञ्दुःसुभ्यः परस्याः प्रजाया अस् स्याद्बहुव्रीहौ। नास्ति प्रजा यस्यासौ अप्रजाः असि कृते यथीर्लोप इत्यकारलोपः अत्वसोर्धोरिति दीर्घः। एवं दुष्प्रजाः सुप्रजाः। इह नञादेरव्यवहितोत्तरत्वमपेक्षितम्। तेन सुष्ठु गुणि प्रजा यस्य स सुगुणिप्रज इत्यादौ न स्यात्॥ ३४२॥

## ३३४। मन्दाल्पाच्च तु मेधायाः।

मन्दाल्पात् ५।, च ।१।, तु ।१।, मेधायाः ५। ।

**अमेधाः सुमेधाः मन्दमेधाः।**

## ३३४। धर्म्मादन्।

धर्मात् ५।, अन् ।१। ।

**सुधर्मा।**

---

श्रीरा-टी—वेति नानुवर्त्तते व्यतीहारे चिरित्यत्र वाग्रहणात्। नञ्दुःसुभ्यः प्रजाया अस् स्याद्बे। अप्रजा इति एवं दुष्प्रजाः सुप्रजाः अल्पसौ धीरिति घंः ॥३४२॥

मन्दाल्पाभ्यां चकारेण नञ्दुःसुभ्यश्च परस्या मेधाया अस् स्यात् बहुव्रीहौ। मन्दा मेधा यस्यासौ मन्दमेधाः। एवं अल्पमेधाः अमेधाः दुर्मेधाः सुमेधाः अत्रापि मन्दाल्पादेरव्यवहितोत्तरत्वमपेक्षितम्। तेन मन्दा बहुमेधा यस्यासौ मन्दबहुमेधः इत्यादौ न स्यात्। त्वन्तत्वादल्पादीनां परत्र नानुवृत्तिः॥ ३४३ ॥

श्रीरा-टी—चकारान्नञ्दुःसीरित्यनुवर्त्तते। नञ्दुःसीर्मन्दाल्पाच्च परस्या मेधाया अस् स्याद्बे। अमेधा इति एवं दुर्मेधाः सुमेधाः अल्पमेधाः। परे तु नञ्दुःसीर्मेधाया अस् नित्यं अन्यस्मात्तु वेत्याहुः तन्मते मन्दमेधाः मन्दमेधः अल्पमेधाः अल्पमेधः इत्यपि ॥ ३४ ॥

पूर्वपदात् परात् धर्मादन् स्याद्बहुव्रीहौ। समानधर्मा कुधर्मा विधर्मा सुधर्मा बहुधर्मा। अत्रापि पूर्वपदादव्यवहितोत्तरत्वमपेक्षितम्। तेन मुनेर्धर्मो मुनिधर्मः कृतो मुनिधर्मो येन स कृतमुनिधर्म इत्यादौ न स्यात्। अत्राकृत-समासपूर्वपदात् पराद्धर्मादन् स्यादिति वक्तव्यम्। तेन परमहितो धर्मो यस्य स परमहितधर्म इत्यादौ न स्यात् ॥ ३४४ ॥

श्रीरा-टी—त्वन्तत्वान्मन्दाल्पादयो नानुवर्त्तन्ते तेन सामान्यतोऽयं विधिः। सुधर्मेति नसव्महन्निति घंः। एवं सन्दिग्धधर्मा इत्यादि इह केवलधर्मस्यैव ग्रहणात्। स्वश्चासौ धर्मश्चेति स्वधर्मः परमः स्वधर्मो यस्य स परमस्वधर्मः इत्यादौ न स्यात् परमः स्वो धर्मो यस्य इति वाक्ये परमस्वधर्मा इति स्यादेव केवलधर्मशब्दस्य समासावयवत्वात्। सुतृणसोमहरिताज्जम्भाद्दन्ताहारयोः। स्वादिभ्यः परात् दन्त आहारे च वर्त्तमानात् जम्भशब्दादन् स्याद्बे। शोभनो जम्भो दन्त आहारो वा यस्य सुजम्भा तृणवज्जम्भो दन्तोऽस्य तृणजम्भा सोमजम्भा हरितजम्भा

## ३४५। नञ् सुत्रिव्युपाच्चतुरोऽः।

नञ सु-त्रि-वि-उपात् ५।, चतुरः ५।, अः १।।

एभ्य चतुरः अः स्यात् हे। अचतुरः सुचतुरः।

## ३४६। भान्नेतुः।

भात् ५।, नेतुः ५।।

नक्षत्रात् नेतृशब्दात् अः स्यात् हे। मृगनेत्रा रात्रिः।

---

एभ्यः किं? पतितजम्भः। दन्तयोरन्तरा क्षुद्री दन्तौ जम्भस्तयाशनमिति रुद्रः। दक्षिणादीर्माद्याधव्रणिते। दक्षिणात्परादीर्मादन् स्याद्वे व्रणश्चेद्व्याधकृतो भवति। दक्षिणस्थितमीर्मस्य दक्षिणेर्मा मृगः। अन्यत्र दक्षिणेर्मः शूकरः॥ ३४४॥

नञ्च सुश्च त्रिश्च विश्च उपश्चेति तस्मात्। एभ्यः पराच्चतुरः अः स्याद्बहुव्रीहौ। न सन्ति चत्वारि यस्यासौ अचतुरः सुष्ठु चत्वारि यस्यासौ सुचतुरः। त्रीणि चत्वारि मानं येषां ते त्रिचतुराः विगताश्चत्वारो यस्य स विचतुरः उपगताश्चत्वारो यस्याः सा उपचतुरा। संख्याया इति डप्रत्यये टिलोपादनिष्टं स्यादिति अप्रत्ययः॥ ३४५॥

श्रीरा टी—नञ्च सुश्च त्रिश्च विश्च उपश्च तत्तस्मात्। अचतुर इति अविद्यमाना धर्मार्थकाममोक्षाश्चत्वारो यस्य सोऽचतुरः सुचतुरः इति शोभनाश्चत्वारो यस्य सः एवं त्रयश्चत्वारो वा मानं येषां त्रयो वा चत्वारो इति त्रिचतुराः विगताश्चत्वारो यस्य स विचतुरः उपगताश्चत्वारो येषां चतुर्णां समीपे वा उपचतुराः॥ ३४५॥

मृगो मृगशिरो नेता प्रापको यस्याः सा रात्रिर्मृगनेत्रा अप्रत्यये स्त्रियामत आप्। एवं पुष्यनेत्रा रात्रिरित्यादि यस्मिन्नक्षत्रे रात्रिः प्रवर्त्तते तन्नक्षत्रं तां रात्रिं नयति॥ ३४६॥

श्रीरा टी—मृगनेत्रेति मृगो मृगशिरो नेता यस्याः सा एवं हस्तनेत्रा पुष्यनेत्रा रात्रिरित्यादि। यस्य नक्षत्रस्य उदयसमकालं रात्रिः प्रवर्त्तते तत्तस्या नेतृ इति। गेर्नासिकाया नस् च। गेः परस्या नासिकाया अः स्यात् तद्योगे नसादेशश्च हे। प्रगता नासिका अस्य प्रणसं उन्नसं मुखम्। नासिकां प्रतिप्रादेरगित्वेऽपि गत्यादिक्रियानुगतत्वात् गित्वम्। गेः किं? शोभना नासिका यस्य

## ३४७। सङ्ख्यासूपमानात् पात् पादो ऽहस्त्यादेः।

संख्या-सु-उपमानात् ५।, पात् ।१।, पादः १।, अहस्त्यादेः ५।।

**एभ्यः पादस्य पात् स्यात् हे। नतु हस्त्यादेः। द्विपात् सुपात्। व्याघ्रपात्। हस्त्यादेस्तु हस्तिपादः।**

---

सः सुनासिकः। अनुपश्चान्नासिका यस्य सः अनुनासिकः। अस्थूलान्नाम्नि खरखुराभ्यान्तु वात्यलुक्। स्थूलभिन्नात् परस्या नासिकाया अः स्याद्धे संज्ञायां तस्मिन् नसादेशश्च खरखुराभ्यां परस्यास्तुत्यस्य वा लुक् स्यात्। द्रुरिव नासिका यस्य स द्रुणसः वार्ध्रीनसः। नाम्नि किम्? तुङ्गनासिकः। स्थूलात्तु स्थूलनासिको वराहः। खरा तीक्ष्णा नासिका अस्य खरणसः खरणाः खुरणाः खुरणसः। वेः ख्रग्रौ च। वेः परस्या नासिकायाः अः स्याद्धे तस्मिन् ख्रग्रौ आदेशौ चकारात् नसादेशश्च। विगता नासिका अस्य विख्रः विग्रः विनसः। तथाच। विनसा हतबान्धवा इति भट्टिः। विख्र रित्येके। सुदिवाद्याः। सुदिवाद्या अदन्ता निपात्यन्ते। शोभनं दिवा यस्य स सुदिवः शारिकुक्षिरिव कुक्षिरस्य शारिकुक्षः चतस्रोऽस्रयो यस्य सः चतुरस्रः एण्या इव पादा यस्य स एणीपादः अजपदः प्रोष्ठपदः गोर्धूलिर्यस्य स गोधूल इत्यन्ये ॥ ३४६ ॥

संख्या च सुश्च उपमानञ्चेति तस्मात्। न हस्त्यादिरहस्त्यादिः तस्मात्। एभ्यः परस्य अकारान्तपादस्य अनकारान्तपात् स्याद्बहुव्रीहौ न तु हस्त्यादेः परस्य। उपमानतया प्राप्तौ हस्त्यादेर्निषेधः। द्वौ पादौ यस्य स द्विपात् शोभनौ पादौ यस्य स सुपात् व्याघ्रस्येव पादौ यस्य स व्याघ्रपात् अत्र गूढादपीति वक्तव्यं गूढपात् सर्पः। हस्त्यादेस्तु हस्तिन इव पादौ यस्यासौ हस्तिपादो जनः। हस्त्यादिश्च हस्ती महान् वै गणिका कटोलकण्डोलगण्डोलकुशूलदास्य इति कटोलश्चाण्डालः कण्डोलो धान्याद्या धारविशेषो डोल इति ख्यातः। गण्डोलो वाटुल इति ख्यातः ॥ ३४७ ॥

श्रीरा-टी—संख्या च सुश्च उपमानश्च तत्तस्मात् द्विपादित्यादि। द्वौ पादावस्य। शोभनौ पादावस्य। व्याघ्रपादा इव पादा यस्येति वाक्यम्। हस्त्यादेस्तु हस्तिपादः। हस्त्यादिर्यथा। हस्ती कटोलः कण्डोलो गणिका महान्। दासी कुशूल इत्यष्टौ हस्त्यादौ परिकीर्त्तिताः। इह महत्शब्दस्यानुपमानत्वेऽपि पाठात् क्वचिदनुपमानादपि पादस्य पात् तेन गूढो पादावस्य गूढपात् पादसमानार्थपात्शब्देनेत्यन्यः ॥३४७॥

३४८। कुम्भादेरीपि।

कुम्भादेः ५।, ईपि ७।

कुम्भादेः परस्य पादस्य पात् स्यात् हे ईपि परे। [२२३]
पात् पत् पौ। कुम्भपदी शतपदी। ईपि किं? कुम्भपादः।

३४९। व्यतीहारे चिः पूर्वो घों ऽनच्या वा।

व्यतीहारे ७।, चिः १।, पूर्वः १।, घं: १।, अनचि ७।, आ।१।, वा।१।।

---

ईपीति विषयसप्तमी। तेन कुम्भादेः परस्य पादस्य पात् स्यात् बहुव्रीहौ ईपि कर्त्तव्ये। कुम्भाविव पादौ यस्याः सा कुम्भपदी शतं पादा यस्याः सा शतपदी अनेन पाद्भावे पाच्छीणादीत्यादिना ईपि कृते पात् पत् पाविति पदादेशः पाच्छीणादीत्यस्य वैकल्पिकत्वेऽपि अत्र ईप् नित्यः। अन्यथा कुम्भादेः स्त्रियामित्यनेनापीष्टसिद्धौ ईपीति ग्रहणमनर्थं स्यात्। यदा ईप् सम्भाव्यते तदैव पाद्भाव इत्यर्थः। अतएवाह ईपि किम्? कुम्भपादः इति। कुम्भादिश्च कुम्भाष्टजालाः शतसूत्रगोधा विष्णुः शितिर्द्रोणकुणी च कृष्णः। निरर्द्धसूची सकृद्दिक दास्यौ विः शूकरो वै कलसोऽपि चेति॥ ३४८॥

श्रीरा-टी—ईपीति विषयसप्तमी तथा च। स्त्रियामन्यदार्थभूतायां कुम्भादेः परस्य पादस्य पात् स्याद्धे। कुम्भपदीति कुम्भाविव पादावस्याः शतं पादा अस्या इति वाक्यम्। कुम्भादिर्यथा। कुम्भजालशताष्टैकक्षणकुण्यर्द्धशूकराः। सूत्रगोधासकृद्दासीसूचीकलसनिर्वयः। मुनिर्द्रोणः शितिर्वाणी विष्णुश्च कथिता इमे। इह केषाञ्चित् संख्यावाचित्वात् केषाञ्चिदुपमानत्वात् पूर्वेणैव सिद्धे नियमार्थमिदमत आह। ईपि किम्? कुम्भपाद इत्यादि ईपीत्युक्तेः। पाच्छीणा-दीत्यत्र वाशब्दस्य व्यवस्थया कुम्भाद्यादिपाच्छब्दात् स्त्रियां नित्यमीप्॥ ३४८॥

परस्परमेकजातीयक्रियाकरणं व्यतीहारः तत्र यो बहुव्रीहिस्तस्य परपदात् चिः स्यात् चौ कृते पूर्वपदस्य आकारः पत्ते दीर्घश्च। एवं बाहावाहवीत्यत्र न्वोर्लोपीताविल्युकारस्य ओकारः अस्यसीति चौ कृते पूर्वस्य अचः परत्वान्न आकारः अभिधानात् तत्र गृहीत्वा तेन प्रहृत्य युद्धे व्यतीहारे यो बहुव्रीहि-स्तत्रैवायं विधिरिति। तत्र गृहीत्वेति किम्? कायश्च कायश्च गृहीत्वा युद्धमित्यादौ न समासः। गृहीत्वा प्रहृत्येति किम्? रथे च रथे च स्थित्वा युद्धमित्यादौ न समासः। युद्धे किम्? हस्ते च हस्ते च गृहीत्वा सख्यमित्यादौ न समासः।

व्यतीहारे यो हः तस्मात् चिः स्यात् पूर्वस्य च घः स्यात्। आ वा नत्वचि। केशेषु केशेषु गृहीत्वा यद् युद्धं

---

व्यतीहारे किम्? केशेषु केशेषु गृहीत्वा युद्धमित्यादौ न समासः। किञ्च कर्णाकर्णि जपन्ति हन्त निभृतं शम्भुस्वयम्भूगणा इति महानाटके। युद्धादन्यत्रापि दृश्यते। जायायाः जानिः। युवजानिर्धनुष्पाणिरिति भट्टिः। धनु धनुषी धन्वन्। अधिज्यं धनुर्यस्य स अधिज्यधन्वा। अधिज्यधन्वा विचचार दावमिति रघुः। एवं पुष्पधन्वा इत्यादि। यत्तु षष्ठौजाय इति स्वयमुक्तं तत् समासान्तविधेरनित्यत्वज्ञापनार्थम्। तेन धृतधनुषमङ्गाय वृषवदित्यादि सिद्धम्। प्रसम्भ्यां जानुनो ज्ञुः प्रशंसायाम्। प्रकृष्टे जानुनी यस्य सः प्रज्ञुः संज्ञुः। ऊर्द्ध्वाद्वा। ऊर्द्ध्वज्ञुः ऊर्द्ध्वजानुः। अस्थूलान्नासिकाया नसो नाम्नि। द्रुरिव नासिका यस्य स द्रुणसः। णत्वं प्रागुक्तम्। स्थूलात्तु स्थूलनासिकः। खुरखराभ्यां नस् वा। खुरणाः खुरणसः खरणाः खरणसः। उत्प्रादेश्च। उन्नसः प्रणसः। प्रसंज्ञार्थं नित्यार्थञ्चेदम्। वेर्ग्रः। वेः परस्या नासिकाया ग्रः स्याद्बहुव्रीहौ। विगता नासिका यस्य स विग्रः। वयसि संख्यासुभ्यां दन्तस्य दतः। ऋदित्त्वान्नुणीपौ। द्वौ दन्तौ यस्य स द्विदन् द्विदन्तौ स्त्रियां द्विदती। सुदन् सुदन्तौ सुदती। वयसि किम्? द्विदन्तः करी सुदन्तो नटः। अग्रान्तादेर्वा। पृथग्योगाद्वयसीति नायाति। अग्रान्तादिभ्यः परस्य दन्तस्य दतः स्याद्वा। कुशाग्रदन् कुशाग्रदन्तः। अग्रान्तादिस्तु कुशाग्र कुड्मलाग्र शुद्ध शुभ्र वृष वराह अहि मूषिक श्व शिखर गर्द्दभ ईशाः। अश्नीतपिबता एवं खादतमोदतेत्यादि। अश्नीत पिबतीयन्तीति भट्टिः। अतएव क्रियासातत्यद्योतकेन समासः स्यादिति केचित्। एवम् अस्ति चीरं यस्याः सा अस्तिचीरा गौः नास्ति दोषो यस्याः सा नास्तिदोषा इत्यादौ त्याद्यन्तप्रतिरूपकाभ्याम् अस्तिनास्तीत्यव्ययाभ्यां समासः॥ ३४९ ॥

गोरा-टी—परस्परं प्रहरणादिरूपक्रियाकरणं व्यतीहारस्तस्मिन् वीप्सान्तयोरित्यादिना यत्र हस्तेवायं विधिः। दण्डादण्डीत्यादि। चित्त्वाद्द्वात् क्तेर्लुक्। मुष्टामुष्टीति। परे तु पूर्वस्यात्वं नेच्छन्ति। तेषां मते तु मुष्टीमुष्टीत्येव। द्विदण्ड्यादयः द्विदण्ड्यादयश्चान्ता निपात्यन्ते। द्वौ दण्डावस्यां क्रियायां द्विदण्डि प्रहरति। द्विदण्ड्यादिर्यथा। द्विदण्डि उभयापाणि द्विमुषल्यि कपद्यपि। उभाहस्त्युभयाहस्ति उभापाण्युभयाङ्गुलि। उभाकर्णुभयाकर्णि उभयादन्त्युभाञ्जलि। संहतपुच्छ्युभादन्ति निकुच्यकर्णि इत्यपि। उभावाह्वभयावाहु प्रोष्ठपद्यव सम्मतम्। अत्रोभयशब्दस्य अप्रयोगेऽपि उभया-

प्रवृत्तं—केशाकेशि। दण्डैश्च दण्डैश्च प्रहृत्य यद् युद्धं प्रवृत्तं—दण्डादण्डि। मुष्टामुष्टि मुष्टीमुष्टि, बाहाबाहवि बाहूबाहवि। अचिनु अस्यसि।

इति हः।

---

पाणि इत्यादौ उभशब्दस्योभयादेशः। उभावाङ्ग उभयाबाहु इत्यत्र चर्लुक् निपातनात्। कर्णौ निकुच्य धावति प्रोष्ठस्य गोः पदं गृहीत्वा धावति इत्यर्थे निकुच्यकर्णि प्रोष्ठपदि इति ये चिर्गणपाठात् क्रियाविशेषणानामेवाभिधानात् द्विदण्डा शाला इत्यादौ न स्यात्। धनुर्षोऽनङ्प्रायो धातु नाम्नि। धनुर्षोऽनङ्प्रायः स्याद्धे संज्ञायान्तु वा। गाण्डीवं धनुर्यस्य गाण्डीवधन्वा गृहीतधन्वा इत्यादि। प्राय इति किम्? धृतधनुषमङ्गाय इति पुष्पदन्तः। नाम्नि किं? पुष्पधन्वा पुष्पधनुः कन्दर्पः। संप्राज्जानुनो ज्ञुर्वातु ऊर्द्धात्। संप्राभ्यां जानुनो ज्ञुः स्यात् हे ऊर्द्धात्तु वा। संहतं जानु यस्य सः संज्ञुः। प्रगतं जानु यस्य प्रज्ञुः ऊर्द्धं जानु यस्य ऊर्द्धज्ञुः ऊर्द्धजानुः। सुसंख्याभ्यां वयसि दन्तस्य दतृ। सुशब्दात् संख्यावाचकाच्च परस्य दन्तस्य दतृ स्याद्धे वयसि गम्यमाने ऋदित्। शोभना दन्ता अस्य सुदन् षोड़शदन् कुमारः द्विदन् वत्सः। वयसि किं? द्विदन्तो गजः। स्त्रियां नाम्नि। स्त्रियां अन्यदार्थभूतायां दन्तस्य दतृ स्यात् हे संज्ञायां गम्यमानायाम्। सुदती कालदती। नाम्नि किम्? सुदन्ता। अग्रान्तश्यावादिभ्यां वा। अग्रान्तात् श्यावादेश्च परस्य दन्तस्य दतृ स्यात् हे वा। कुन्दकुड्मलाग्रवद्दन्ता यस्य स कुन्दकुड्मलाग्रदन् कुन्दकुड्मलाग्रदन्तः श्यावदन् श्यावदन्तः। श्यावादिर्यथा श्यावाकोकवराहाहिवृषमूषिकगर्दभाः। शिखरः शुद्धशुभ्रौ च श्यावादौ दश कीर्त्तिताः। ककुदस्य ककुदवस्थायां शैले तु लेः। अवस्थायां गम्यमानायां ककुदस्य ककुत् स्यात् हे। लेस्तु शैले। अजातं ककुदमस्य अजातककुत् वत्सः स्थूलककुत्तरुणः। अवस्थायां किं? श्वेतककुदः ककुदिव ककुदं शृङ्गादि। त्रीणि ककुदानि यस्य त्रिककुत्रिकूटः। व्युद्भ्यां परस्य काकुदशब्दस्य काकुत् स्याद्धे पूर्णात्तु वा। विगतं काकुदमस्य विकाकुत् उत्काकुत् पूर्णकाकुत् पूर्णकाकुदः। सुदुर्भ्यां हृदयस्य हृन्मित्रशत्र्वोः। आभ्यां मित्रशत्र्वोः क्रमात् हृदयस्य हृत् स्याद्धे। शोभनं हृदयमस्य सुहृन्मित्रं दुष्टं हृदयमस्य दुहृत् शत्रुः, अनयोरिति किं? सुहृदयः साधुः दुर्हृदयः खलः। आभ्यां किं? प्रहृदयं मित्रम्। जायाया जानिः,

## कर्मधारयसमासः ( यः )।

**परमश्चासावात्मा चेति—परमात्मा। संश्चासौ चिच्चासावानन्दश्चेति—सच्चिदानन्दः।**

---

जायाया जानिः स्याद्वे। युवती जाया यस्य स युवजानिः वृद्धजानिः। तथाच युवजानिर्धनुष्पाणिरिति भट्टिः॥ ३४९॥

इति बहुव्रीहिसमासः समाप्तः।

---

स च विशेषणविशेष्ययोर्द्वयोरेव। यथा परमात्मा उत्तरपदद्विगुद्वन्द्वबहुव्रीहिवर्जं पदबहुत्वे समासो नास्तीति दुर्गसिंहक्रमदीश्वरौ। तन्मतमस्वीकुर्वन् त्रिभिः पदैरपि कर्मधारयमाह। सच्चिदानन्द इति। आनन्दयतीति पचादित्वादनि आनन्द इति विशेष्यं पदम्। त्रयाणां विशेषणत्वे समासानुपपत्तेः। तथापि विशेष्यविशेषणयोर्विशेषणं पूर्वम्। तेन दीर्घब्राह्मणः न तु ब्राह्मणदीर्घ इति। गौरादिर्वा। गौरविप्रः विप्रगौरः। गौरादिस्तु। गौर कड़ार जठर कपिल गडुल काण खोड़ खञ्ज कुब्ज कुण्ड खल वृद्ध भिक्षुक तनु इति।

श्रीरा·टी—इदानीं यमाह। परमश्चासौ इत्यादि। व्यवत् ष्यन्तम्। इतःपरं सूत्रे यत् ष्यन्तं निर्दिष्टं तद्व्यवत् स्यात् अतिदेशाद्व्यं पूर्वं पूर्वनिपातः। विशेषणानां विशेष्यैः। विशेषणानां विशेष्यैः सह यः स्यात्। एकार्थानां दानां सो यसंज्ञ इत्युक्तं तत्र एकार्थता च सामानाधिकरण्यं तच्च भिन्नप्रवृत्तिनिमित्तानामेकस्मिन्नर्थे वृत्तिः सा च विशेषणविशेष्यरूपाणामेव भवति। तत्र यत्सामान्याकारेण प्रवृत्तमनेकप्रकारवस्तु प्रकारान्तरेभ्यो व्यवच्छिद्य एकत्र प्रकारे व्यवस्थापयति तद्भेदकं विशेषणं एवं यद्भेद्यं तद्विशेष्यम्। परमात्मेत्यादि परमशब्दस्योत्कर्षार्थस्य जीवात्मनः परमात्मव्यावर्त्तकत्वाद्विशेषणत्वम्। आत्मनो भेद्यत्वाद्विशेष्यत्वं एवं नीलोत्पलं पुत्त्रवत् गृही पाचकपुरुष इत्यादि। यद्यपि नीलादिवत् उत्पलादीनामपि इतरव्यावर्त्तकत्वं तथापि नीलाद्याश्रयत्वेनोत्पलादीनां प्राधान्याद्विशेष्यत्वं नीलादीनामुत्पलाद्याश्रितत्वेनाप्राधान्याद्विशेषणत्वम्। अत एव नीलादीनामुत्पलाद्यधीनत्वात् तत्तल्लिङ्गवचनत्वम्। कुब्जकुण्ठः कुण्ठकुब्जः विस्पष्टपटुः पटुविस्पष्टः इत्यादौ द्वयोर्विशेषणत्वेऽपि विशेषणविशेष्यभावस्य कामचारादेकस्य विशेष्यत्वं कल्प्यते अभिधानाद् य सः क्वचिन्नित्यः क्वचिन्न स्यात् क्वचिद्विकल्पः। यथा कृष्णसर्पः लोहितशालिः रामो जामदग्न्यः अर्जुनः कार्त्तवीर्यः नीलोत्पलं नीलमुत्पलमित्यादि। विशेषणस्य इतरव्यावर्त्तकत्वेन

विशेष्येणैव सह यः। तेन वृक्षः शिंशपा लोहितस्तक्षकः इत्यादौ न स्यात्। आम्रवृक्षः शिंशपावृक्षः इत्यादौ आम्रादीनां यदा विशेषवृत्तिर्नाविवक्ष्यते तदैव फलवृक्षयोर्वर्त्तमानत्वात् सामान्याकारेण प्रवृत्तत्वेन विशेषणत्वात् स इति कश्चित् षोस एवेत्यन्यः। बहूनां दानामपि यसं कुर्वन्नाह संज्ञासौ इत्यादि। अन्ये तु बहूनां दानाञ्च ह्यन्यसं न कुर्वन्ति महच्च तन्नीलञ्च तदुत्पलञ्चेति। पट्वी चासौ श्यामा चासौ कन्यका चेति राज्ञी गोःचौरमित्यादौ महन्नीलोत्पलं पट्वी श्यामकन्यका राजगोचौरमित्यादिप्रयोगापत्तेः। से सर्वान्तदस्यैव परदत्वेन तस्य पुंवद्भावाकाराभावप्रसङ्गात् यगर्भयसोऽपि महानीलोत्पलं पटुश्यामकन्यका षोषगर्भषोषे राजगवीचौरमिति तु स्यादेव। बहूनां दानां हसौ स्वीकृत्यापि। राज्ञी गौश्च अश्वश्च पुरुषश्चेति पञ्च भुक्तवन्तो ब्राह्मणा अस्येत्यादौ राजगवाश्वपुरुषाः पञ्चभुक्तब्राह्मण इत्यादि न स्यादनभिधानादित्याहुः। ग्रन्थकृन्मते तु। महन्नीलोत्पलं इत्यादि रूपाभावनिश्चयश्चेदस्ति तदा राज्ञी गवाश्वपुरुषा इत्यादिवत् तादृशप्रयोगभावोऽनभिधानादिति प्रत्याख्यातम्। तथाच कालाः परिमाणेनेति पाणिनीयसूत्रे काला इति व्यनिर्देशात् चिदोऽप्ययं सत्तेन द्वे अहनी जाते अस्येति विग्रहे द्व्यह्नजात इत्यादि न्यासकृतोक्तमिति। अभिधानात् क्वचिदन्यत्रापि। एकादीनां यः। एकादीनां स्याद्यन्तेन सह यः स्यात्। एका चासौ शाटी चेति एकशाटी एकादेः पूर्वनिपातः एवं सर्ववेदाः। एकापदिर्यथा। एक सर्व जरत् पूर्व समान नव मध्यमाः। जघन्यचरमौ वीर पुराण पर केवलाः। मध्यप्रथम एकादाविह पञ्चदश स्मृताः। सामान्यशब्देनोपात्तत्वात् कार्षापणार्थपुराणशब्दस्य इह न ग्रहणम्। विशेषणविशेष्यत्वादेव सिद्धे एकपण्डितः सर्वशुक्लः जरत्पाचक इत्यादौ पूर्वनिपातार्थोऽयमारम्भः। पूर्वकालस्य। पूर्वकालक्रियावाचिनः परकालक्रियावाचिना सह यः स्यात्। आदौ स्नातः पश्चादनुलिप्तः स्नातश्चासावनुलिप्तश्चेति स्नातानुलिप्तः लूनप्ररूढ़ः लिप्तवासितः बद्धताड़ितः स्नापितभोजितः इदमपि पूर्वनिपातार्थम्। दिक्संख्ययोर्नाम्नि। दिग्वाचिनः संख्यावाचिनश्च स्याद्यन्तेन यः स्यात् नाम्नि गम्यमाने। पूर्वा चासौ इषुकामशमी चेति पूर्वेषुकामशमी चतुर्विद्याः पञ्चाम्राः सप्तर्षयः अत स एव संज्ञाप्रतीतेः वाक्याभावेऽपि बालबोधनार्थमर्थकथनम्। नाम्नि किं? उत्तरा वृक्षाः अष्टौ ब्राह्मणाः। विशेषणत्वादेव सिद्धे नियमार्थमिदम्। तेनानाम्नि न स्यात्। पञ्चपुराणानां दशदिक्षु पञ्चपुरुषगामिन्य इत्यादयो ऽसाधव इत्यन्ये शिष्टप्रयोगदर्शनात् उत्सर्गत्वेन क्वचिदनाम्न्यपीत्यन्यः। चतुर्दिगीशानवमन्य मानिमो दि-

चन्द्रज्ञानमित्यादौ तु चतसृणां दिशां समाहारश्चतुर्दिक् द्वयोश्चन्द्रयोः समाहारः द्विचन्द्रमिति गमात्। पूर्वासु वर्षासु भवः पौर्ववार्षिकः इत्यत्र तु कालवाचि-पूर्वशब्दस्यैकादिलात् सः। कतरकतमयोर्जातिप्रश्ने। कतरकतमयोर्जातिप्रश्न एव यः स्यात्। कतरकटः कतमकटः। जातिप्रश्ने किं? कतरः पाठकः। किमः चेपे। चेपो निन्दा तस्यां गम्यमानायां किमो यः स्यात्। किं राजा यो न रचति प्रजाः किं गौः यो न वहति भारम्। चेपे किं? को राजा पाटलिपुत्रे। प्रश्नेऽत्र किं शब्दः। निन्द्यानां निन्दनैः। निन्दाविषयाणां निन्दा-करणैः सह यः स्यात्। वैयाकरणश्चासौ खसुचिश्चेति वैयाकरणखसुचिः निष्-प्रतिभ इत्यर्थः। याज्ञिककितवः अयाज्ययाजनाः तृष्णापरा इत्यर्थः। तार्किक-दुर्दुरूढ़ः नास्तिक इत्यर्थः। निन्द्यानां किं? वैयाकरणचौरः न ह्यत्र वैयाकरणत्वं निन्द्यते किन्तु चौरत्वम्। निन्दनैः किं? कुत्सितो विप्रः विशेष्यस्य पूर्वनिपातार्थं इदम्। पापनकयोर्निन्द्यैः। निन्दाविषयैः सह पापानकयोर्यः स्यात्। पापा-नापितः अनकनापितः इह पापानकशब्दौ स्वहस्त्यपरिज्ञाननिन्दावचनौ निन्द्यस्य पूर्वनिपाते परनिपातार्थमिदम्। उपमानस्य सामान्यवाचिना। उपमीयते येन तदुपमानं सादृश्येन स्वभिन्नपदार्थपरिचायकं इत्यर्थः। उपमानोपमेययोरेव साधारणो धर्मः सामान्यः तद्वाचिना सह उपमानवाचिनो यः स्यात्। शस्त्रीव श्यामा शस्त्रीश्यामा देवदत्ता हंसगमनी शाटी। सामान्यवाचिना किं? पर्वता इव बलाहकाः। उपमानस्येति किं? देवदत्ता इव श्यामा। कश्चित् श्यामत्वं गुणमुपादाय शस्त्रीशब्दो देवदत्तायां वर्त्तते अतः सामानाधिकरण्यमित्याह तन्मते शस्त्री चासौ श्यामा चेति वाक्यम्। वचनसामर्थ्याद्वैयधिकरण्येऽपि य स इत्यन्यः। एवं परत्रापि। उपमेयस्य व्याघ्राद्यैः सामान्याप्रयोगे। उपमेय वाचिनो व्याघ्राद्यैः सह यः स्यात् सामान्यस्याप्रयोगे सति। पुरुषोऽयं व्याघ्र इव पुरुषव्याघ्रः। व्याघ्रादिर्यथा। व्याघ्रपुङ्गव शार्दूल सिंह कण्ठीरवर्षभाः। वराह-महिषा-कर्ष पद्मकुञ्जरहस्तिनः। कमलं पल्लवं नागः केशरी वृषभो हरिः। वृषश्चन्द्रः किशलयं कड़ारोऽन्ये प्रयोगतः। सामान्यप्रयोगे किं? पुरुषो व्याघ्र इव शूरः शूरत्वमिह उपमेयोपमानयोः पुरुषव्याघ्रयोः साधारणो धर्मः। श्रेण्यादिः कृतादिना च्व्यर्थे। श्रेण्यादिः कृतादिना सह यः स्यात्। अभूततद्-भावे। अश्रेणयः श्रेणयः कृताः श्रेणीकृताः। श्रेण्यादिर्यथा। श्रेणिः कुङ्कुम-मुदकं पूगः कुशलं निधनं कुसुमं कूटः। इन्द्रः कुण्डमपण्डितमुण्डं निचयो निपुणो देवविशिष्टम्। श्रमणश्चपलो राशिर्द्दं शब्दोऽध्यापकः पटुः। ब्राह्मणः

पचिंयो भृतौ यदान्यः कृपणो मृदुः। कुङ्कुमविशिष्टयोः स्थाने पदार्थविषयशब्दौ पठत्यन्यः। कृतादिर्यथा। कृतभूतसमाम्नात सम्भावित निराकृताः। गत उक्त समाम्नात-समाख्यात-विकल्पिताः। मतावधारिताख्यातमुक्तज्ञातयुतानि च। कलितोपकृताज्ञातावधारितमुपाकृतः। एकविंशतिरचोक्ताः शेषं ज्ञेयं प्रयोगतः। श्रेणीभूतः पूगीभूत इत्यादौ तु श्रेण्यादित्वात् सः। च्व्यर्थे किम्? श्रेणयः कृताः। अनञ्क्तस्य नञ्क्तेन। अनञ्क्तान्तस्य स नञ्क्तान्तेन सह यः स्यात्। कृतञ्च तदकृतञ्चेति कृताकृतं कृतभागसम्बन्धात् कृतम् अकृतभागसम्बन्धात् अकृतम् अवयवधर्मे समुदायस्य तथा व्यपदेशात् एवं क्लिष्टाक्लिष्टं भुक्ताभुक्तम् इत्यादि। कृतादिरपकृतादिना। कृतादिरपकृतादिना सह यः स्यात्। कृतञ्च तत् अपकृतञ्चेति कृतापकृतम् अभिमतानभिमतं भागयोः करणाकरणात् भक्तञ्च तदभ्यर्हितत्वात् विभक्तञ्चाशोभनत्वात् भक्तविभक्तं कियद्गतं कियत् प्रत्यागतं गतप्रत्यागतं यदा तु पूर्वंगतं पश्चात् प्रत्यागतमिति वाक्यं तदा पूर्वकालस्येति सः। क्रयश्चासौ क्रयिका चेति क्रयक्रयिका मनीषादित्वात् षः। क्रयावयवत्वात् क्रयः क्रयिकावयवत्वात् क्रयिका इति अवयवधर्मेण समुदायस्य तथा व्यपदेशादभेदः। एवं पुटापुटिका फलाफलिका। मालामालिका इति। सदादिपूज्यमानयोः पूज्यमाननागादिभ्याम्। सदादिः पूज्यमानवाचिना नागादिना सह यः स्यात्। संश्चासौ पुरुषश्चेति सत्पुरुषः। सदादिर्यथा। सन्महत् परमोत्कृष्टोत्तमाः पञ्च सदादयः। पूज्यमानेन किम्? सन् सत्यः विद्यमान इत्यर्थः। उत्कृष्टा गौः पङ्कादुद्धृत इत्यर्थः। नित्यसापेक्षे सदावस्थापनीय एव। गौश्चासौ नागश्चेति गोनागः। नागादिर्यथा। नागो वृन्दारकश्चैव कुञ्जरोऽव वयो मताः। व्याघ्रादित्वादेव सिद्धे सामान्यप्रयोगेऽपि यसविधानार्थमिदम्। तेन नागवृन्दारकः सूरो नरवृन्दारको बुधः। पूज्यमानस्येति किं? मैत्रो नागः मूर्खत्वात्। जातेः पोटादिप्रशंसार्थाभ्याम्। जातिवाचिनः पोटादिना प्रशंसावाचिना च सह यः स्यात्। इभ्या करेणुः पोटा स्त्रीपुंसलक्षणा इभ्या चासौ पोटा चेति इभ्यपोटा गोवेहत्। पोटादिर्यथा। पोटा वेहत् वश्या धूर्त्त स्तोक श्रोत्रिय धेनवः। प्रवक्ता युवतिर्गृष्टिस्तथावस्कारनीत्यपि। अध्यापकः कतिपयो दशभिर्विहिरिताः। वक इव वकः पुरुषः स चासौ धूर्त्तश्चेति वकधूर्त्तः इत्यत्र निन्द्यानां निन्दनैरित्यनेनैव सिद्धे कठधूर्त्तः इत्यादौ अनिन्दार्थं वचनं धूर्त्तकठः जनयति कुमुदभ्रान्तिं धूर्त्तवकोहि मत्स्यानामित्यादयो ऽसाधव इत्यन्ये उपसर्गत्वात् विशेषणविशेष्यत्वेनैव साधुत्वमित्यपरः। अत्र प्रशंसार्थशब्देन रूढ़िशब्दानां मतल्लिकादीनाम् एव ग्रहणम् गौश्चासौ मतल्लिका चेति गोमतल्लिका गोमचर्चिका। गोप्रकाण्डम् विप्रोद्घः विप्रतल्लजः। यूनः पलितादिना। युवन्शब्दस्य पलितादिना

सह यः स्यात् । युवा चासौ पलितश्चेति युवपलितः । पलितादौ तु पलितः खलितौ वलिनो जरन् । प्राणो नामग्रहणे लिङ्गविशिष्टस्यापि ग्रहणं तेन युवती चासौ पलिता चेति युवपलिता युवजरतीति । व्यतुल्यार्थयोरजात्या । व्यसंज्ञकत्यान्तानां तुल्यार्थानाञ्च जातिभिन्नवाचिभिः सह यः स्यात् । भोज्योष्णं पानीयशीतं शीतपानीयोष्णपानीयादयोऽसाधवः इत्यन्ये । शीतगुणयुक्तं पानीयमित्यादि वाक्ये शाकपार्थिवादित्वात् सिद्धमित्यन्यः । तुल्यश्वेतः सर्वश्वेतः तुल्यमहान् सदृशमहान् इत्यादौ तु सदादित्वात् प्राप्तः सोऽनेन बाध्यते परत्वात् वस्य तु महापुरुष इत्यादौ विषयः । अजात्या किम् ? भोज्य ओदनः । वर्णानां वर्णैः । वर्णवाचिनां वर्णवाचिभिः सह यः स्यात् । कृष्णसारङ्गः कृष्णसवलः सारङ्गसवलशब्दौ मुख्यवृत्त्या समुदायवृत्ती अवयवप्रसिद्धेः समुदायसिद्धेर्बलीयसीति न्यायात् कृष्णशब्दो हि कृष्णावयवसम्बन्धात् समुदाये वर्त्तते इति गौणसामानाधिकरण्यात् पूर्वेणाप्राप्तेऽनेन यो विधीयते । तत्र गौणत्वाद्विशेषणत्वेन कृष्णशब्दस्यैव पूर्वनिपातः । यत्र तु अवयवसम्बन्धात् द्वावेव समुदायवृत्ती तत्र कामचारात् प्राग्भावः । यथा कृष्णशुक्लः शुक्लकृष्ण इति । कुमार्य्याः श्रमणादिना । कुमारीशब्दस्य श्रमणादिना सह यः स्यात् । कुमारी चासौ श्रमणा चेति कुमारीश्रमणा । श्रमधोर्नन्द्यादित्वादनः । श्रमणादिस्तु । श्रमणा तापसी दासी वन्धकी कुलटेत्यपि । तथा प्रव्रजिता गर्भिण्येव सप्त प्रकीर्त्तिताः । कुमारस्य च मृद्वादिना । कुमारशब्दस्य कुमारीशब्दस्य च मृद्वादिना सह यः स्यात् । कुमारश्चासौ मृदुश्चेति कुमारमृदुः । कुमारी चासौ मृद्वी चेति कुमारमृद्वी । मृद्वादिर्यथा । मृदुपटुपण्डितचपला निपुणः कुशलाध्यापकमध्यभिरूपः । मृद्वादीनां कुमारीसामान्याधिकरण्ये स्त्रीत्वमेव विशेषणत्वात् । चतुष्पदां गर्भिण्या । चतुष्पदां जातिवाचिनां गर्भिण्या सह यः स्यात् । गोगर्भिणी । अजगर्भिणी । चतुष्पदां किं ? ब्राह्मणी गर्भिणी शरभी गर्भिणी मयूरव्यंसकाद्याः । मयूरव्यंसकाद्याः शब्दाः यसंज्ञकाः निपात्यन्ते । व्यंसयति छलयति व्यंसको धूर्त्तः । विपूर्वादंसधोर्णकः मयूरश्चासौ व्यंसकश्चेति मयूरव्यंसकः छात्रव्यंसकः काम्बोजमुण्डः यवनमुण्डः । एहीहादयोऽन्यार्थे । अन्यार्थे वर्त्तमानाः एहीहाद्याः मयूरव्यंसकादित्वात् येसे निपात्यन्ते । एहि इह यत्र कर्म्मणि वर्त्तते एहीहं वर्त्तते एहियवैरिति यत्र कर्म्मणि तत् एहियवं एहि वाणिज्ये इति यस्यां क्रियायां सा एहिवाणिज्या एहिस्वागतमिति यस्यां क्रियायां सा एहिस्वागता । प्रोहकटमिति यस्यां क्रियायां सा प्रोहकटा ! प्रोहकर्दमा आहववसना आहवचेला आहववितण्डा उद्धरचूड़ा कृन्धिविचक्षणा भिन्दिलवणमित्युच्यते यस्यां क्रियायां सा भिन्दिलवणा पचलवणा उत्सृज छत्सृजेति यस्यां क्रियायां

## ३५०। कोङादिः पुंवत् यजातीयदेशीये तत्वे त्वजात्याख्यः।

कोङादिः १।, पुंवत् ।१।, य-जातीय-देशीये ७।, तत्वे १।, तु ।१।, अजात्याख्यः १।।

---

सा उन्मरीतृहजा उद्गमविधमा उत्पतनिपता अगेहिप्रघसा उदक् च अवाक् च उच्चावचं उच्चैश्च नीचैश्च उच्चनीचं आचितश्च उपचितश्च आचोपचं आचितश्च पराचितश्च आचपराचं निश्चितश्च प्रचितश्च निश्चप्रचं नास्ति किञ्चिदस्य अकिञ्चनः न किञ्चनी वा पीला स्थिरकः भुक्ता सुहितकः प्रोष्य पापीयान् इह पञ्चमी इह द्वितीया खात्वा कालकः उत्पत्य लाचणिकजाता निपत्य रोहिणीजाता विषश्यामाजाता इत्यादि उन्मरीतृहजेत्यादीनां त्यादित्यादिना क्रियासातत्य इत्यादिना एव सिद्धेऽसातत्यार्थौ गणे पाठः। पीलास्थिरक इत्यादौ से सत्येकदत्तात् पीलास्थिरकस्य इदं इत्यर्थे णे पैलास्थिरकं भौक्तासुहितकम्। प्रोष्यपापीयसं इत्यादौ णिचे आद्यचो त्रिः। द्यन्तं ढेनाभीच्ण्ये षे। द्यन्तं ढेन सह आभीच्ण्ये गम्यमाने मयूरव्यंसकादित्वात् षसे निपात्यते यदि ससो घमाह। जहिजोडमिति यः पुनः पुनराह स जहिजोडं उज्जहिजोडं जहिस्तुम्बः उज्जहिस्तम्बः। त्यादिलेन क्रियासातत्ये। त्याद्यन्तं त्यादान्तेन सह क्रियासातत्ये गम्यमाने षसे मयूरव्यंसकादित्वात् निपात्यते। अश्नीत पिबत इति यस्यां क्रियायां सा अश्नीतपिबता पचतभृज्जता खादतमोदता इत्यादि। शाकपार्थिवाद्याः। शाकपार्थिवाद्या निपात्यन्ते। शाकः शक्तिः प्रधानं यस्य स शाकप्रधानः शाकप्रधानः पार्थिवः शाकपार्थिवः मेरुनामा महीभृत् मेरुमहीभृत् सुग्रीवनामा कपिः सुग्रीवकपिः श्रीहर्षनामा नृपतिः श्रीहर्षनृपतिः। सुखयुक्ता नासिका सुखनासिका विगुणीकृता जगती विजगती अर्द्धावशिष्टं घृतं अर्द्धघृतं इत्यादि शाकपार्थिवादिराकृतिगणः। अवहित य स लक्षणे मयूरव्यंसकादौ द्रष्टव्यं आकृतिगणत्वात्। एषां मयूरव्यंसकादीनां यान्तरं न स्यात्। तेन परमो मयूरव्यंसकः॥ ३४९॥

कोङ् आदिर्यस्य स कोङादिः। यश्च जातीयश्च देशीयश्चेति यजातीयदेशीयं तस्मिन्। तश्च त्वश्च तत्वं तस्मिन्। जातिश्च आख्या च जात्याख्ये न विद्येते जात्याख्ये यत्र कोङादौ सोऽजात्याख्यः। पुंवत् स्त्र्यूक्तपुंस्क इत्यादिना उक्तपुंस्कस्य तु कोङादेः पुंवद्भावस्य प्रसक्तौ नोप्ताककोङित्यादिना निषेधे कर्मधारयादौ पुनरनेन विधिः क्रियते। तेनायमर्थः। ताककोङ् पूरण्याख्या युक्तविका

**कोङ्पूरण्यादिः पुंवत् स्यात् यादौ। तत्वयोस्तु जाति-संज्ञावर्जम्। पाचकस्त्री। पञ्चमभार्य्या।**

---

रार्थणिचजातिस्वाङ्गेवन्तं पदं यद्युक्तपुंस्कं भवति तदा एकार्थे स्त्रीलिङ्गे परे कर्मधारये पुंवत् स्यात् जातीयदेशीयप्रत्यये च पुंवत् स्यात् तत्वयोः परयोस्तु जाति-संज्ञावर्जम् उक्तपुंस्कः कोङादिः पुंवत् स्यादिति। जातीयप्रत्यये तु पुंवद्भाव-प्रसङ्गाभावेऽपि कोङादिः पुंवत् स्यादित्यर्थः यथा रसिका चासौ भार्य्या चेति रसिकभार्य्या एवं पाचकभार्य्या पञ्चमभार्य्या दत्तभार्य्या मैथिलभार्य्या ब्राह्मणभार्य्या सुकेशभार्य्या रसिकदेशीया रसिकता रसिकत्वम्। जातीयप्रत्यये तु रसिक-जातीया पाचकजातीया षष्ठजातीया दत्तजातीया मैथिलजातीया ब्राह्मण-जातीया सुकेशजातीया। कोङादिभिन्नस्य तु दीर्घा जातीया इत्यादीनां पुंवन्न स्यात् उक्तपुंस्कः किं ? गङ्गिकाभार्य्या गङ्गिकाजातीया गङ्गिकता गङ्गिकत्वम्। अजात्याख्य इति किं ? ब्राह्मणीत्वं दत्तात्वम्। केचित्तु कोङादिशब्देनात्र येषां पुंवद्भावो निषिद्धस्ते एव गृह्यन्ते। तेन पूरण्यादिः पूर्वस्थिताः पुंवद्भावयोग्य-शब्दाः। पूरणीत्यादिना निषेधेऽपि कर्मधारये पुंवत् स्युः। यथा कल्याणपञ्चमी महाष्टमी महानवमी कल्याणप्रिया कल्याणमनोज्ञा इत्यादि इत्याहुः॥ ३५० ॥

दुर्गा-टी—कोङ् च पूरणी च ते आदौ यस्य सः। यश्च जातीयश्च देशीयश्च तत्तस्मिन्। तश्च त्वश्च तत्तस्मिन् जातिश्च आख्या च ते न स्तो यत्र सः। कोङ्पूरण्यादिरित्यादि। कोङादयो नेपाककोङ् इत्यादि सूत्रे ये पठिता पूरण्यादयः पूरणी प्रियेत्यादि सूत्रे ये पठितास्ते च पुंवत् स्युः। ये जातीये देशीये च परे। पाचकस्त्रीति पाचिका चासौ स्त्री चेति इति वाक्यं एवं रसिकभार्य्या इत्यादि पञ्चमी चासौ भार्य्या चेति वाक्यं दत्तभार्य्या मैथिल-भार्य्या सुकेशभार्य्या महाष्टमी महानवमी सुन्दरप्रिया कल्याणमनोज्ञा इत्यादि। वैयाकरणभार्य्या सौवश्वभार्य्या काषायकन्या हैमसुद्रिका ब्राह्मणमानि-नीत्यादि तु निषेधाभावात् पूर्वेणैव सिद्धम्। नेपाककोङ् इत्यादिना येषां निषेधः प्राप्तस्तेषामनेन पुंवद्भावः तेन मद्रिका वृन्दारिका द्रोणीभार्य्या इत्यादौ न स्यात्। जातीये पूर्वेणाप्राप्ते देशीये कोङादित्वादप्राप्ते विधिर्यथा तार्किकजातीयः कारकजातीयः तार्किकदेशीया इत्यादि अजात्याख्य इत्यस्य विशेषणत्वात् गुणवचनस्यैव तत्वयो पुंवत् तेन पष्ठ्या भावः पटुता पटुत्वं मृदुता मृदुत्व इत्यादौ स्यात् न तु कटीत्वं दत्तात्वं पाचिकात्वं व्यभिचारिणीत्वं इत्यादौ

**३५१। द्वित्र्यष्टाधिका द्वात्रयोऽष्टा स्त्रिद-शाद्ये ऽन्त्यषट्के त्वनशीतौ वा।**

द्वित्र्यष्टाधिकाः १।।।, द्वात्रयोऽष्टाः १।।।, त्रिदशाद्ये ७।, अन्त्यषट्के ७।, तु ।१।, अनशीतौ ७।, वा ।१। ।

**एषामेते क्रमात् स्युः दशादित्रिके। चत्वारिंशदादिषट्के अशीति वर्ज्जे तु वा। द्वाधिका दश द्वादश। त्रयोदश। अष्टादश। द्वाचत्वारिंशत् द्विचत्वारिंशत्। अनशीतौ किं? द्व्यशीतिः।**

---

ये तु क्रियापि गुणः इत्याहुः तन्मते पाचकत्वं व्यभिचारित्वमिति तन्वीत्वमित्यादौ तु नोपधाककोङ् इत्यादिना निषेधः ऊङित्यनेन यस्मात् ऊप्सम्भवस्तस्यैव ग्रहणम्। कोङ्पूरण्यादि किं ब्रह्मबन्धुवाला। यादौ किं रसिकाभार्य्यः पचमीयते आत्मानं पाचिकां मन्यते पाचिकामानिनी दत्तापाशा पाचिकाकल्पा हैमीरूप्या ब्राह्मणीदेश्या सुकेशीकल्पेत्यादि ॥ ३५० ॥

द्वि च त्रिश्च अष्टा च द्वित्र्यष्टानः द्वित्र्यष्टभिः सहिता अधिकाः द्वित्र्यष्टाधिकाः शाकपार्थिवादित्वात् सहितपदस्य लोपः द्वन्द्वात् परस्याधिकशब्दस्य प्रत्येकेन सम्बन्धात् द्व्यधिकात्र्यधिकाष्टाधिका इत्यर्थः। द्वाश्च त्रयस् च अष्टाश्च द्वात्रयोऽष्टाः। दश आद्यो येषां ते दशाद्याः त्रयाणां दशाद्यानां समाहारः त्रिदशाद्यं तस्मिन्। पात्रादित्वान्नेप्। त्रिदशाद्ये इत्येकवचनान्निमित्ते यथा-संख्याभावः। षण्णां समूहः षट्कम्। अन्त्यञ्च तत् षट्कञ्चेति अन्त्यषट्कं तस्मिन्। पूर्वतो य जातीयदेशीयानां अनुवृत्तावपि इह त्रिदशाद्ये इति परनिमित्तस्य उक्तौ जातीयादेरनुवृत्त्यभावे केवलो य एवानुवर्त्तते। तेन द्व्यधिक-त्र्यधिकाष्टाधिकानां स्थाने क्रमाद् द्वा त्रयस् अष्टा इत्येते आदेशाः स्युः दशशब्दे विंशतिशब्दे त्रिंशच्छब्दे च परे कर्मधारय इत्यर्थः। चत्वारिंशत् पञ्चाशत् षष्टि सप्तति नवतीति पञ्चसु परेषु वा स्युरित्यर्थः। यथा द्व्यधिकाश्च ते दश चेति द्वादश त्रयोदश अष्टादश एवञ्च द्वाविंशतिः त्रयोविंशति अष्टाविंशतिः त्रयस्त्रिंशत् अष्टात्रिंशत्। अन्त्यषट्के तु द्व्यधिका चासौ चत्वारिंशच्चेति द्वाचत्वारिंशत्। पक्षे शाकपार्थिवादित्वात् अधिकपदस्य लोपे द्विचत्वारिंशत् शाकपार्थिवादि-र्यथा। शाकप्रधानश्चासौ पार्थिवश्चेति शाकपार्थिवः। अत्र प्रधानशब्दस्य लोपः शाकः शक्तिः। एवं दध्ना मिश्रित ओदनः दध्योदन इत्यादि एवं

## ३५२। वैकोनस्यैकाद्वैकान्नौ सङ्ख्यायाम्।

वा ।१।, एकोनस्य ६।, एकादन्न एकान्नौ १॥, सङ्ख्यायाम् ७। ।

एकान्नविंशतिः एकान्नविंशतिः एकोनविंशतिः ।

## ३५३। सख्यहोराज्ञः षः षगे च।

सखि-अहन्-राज्ञः ५।, षः १।, षगे ७।, च ।१। ।

एभ्यः षः स्यात् ये षे गे च। प्रियसखः परमाहः महाराजः।

---

द्वापञ्चाशत् द्विपञ्चाशत् द्वाषष्टिः द्विषष्टिः द्वासप्ततिः द्विसप्ततिः द्वानवतिः द्विनवतिः इत्यादि। अनशीतौ किं द्व्यशीतिः त्र्यशीतिः अष्टाशीतिः। कर्मधारये किं? द्वाधिका दश यत्र स द्वाधिकदश इत्यादौ न स्यात्॥ ३५१॥

श्रीरा-टी—द्वौ च त्रयश्च अष्टा च ते। द्वाश्च त्रयश्च अष्टाश्च ते। दश आद्या येषां ते दशाद्याः त्रयाणां दशाद्यानां समाहारस्त्रिदशाद्यं पात्रादित्वापन्ने प् तस्मिन् षष्ठां समूहः षट्कं अन्तेभवं अन्त्यं अन्त्यच्च तत् षट्कश्चेति तत्तस्मिन् न अशीतिरनशीतिः तस्याम्। एषामित्यादि द्वित्र्यष्टन् इत्येतेषां स्थाने द्वा त्रयस् अष्टा इत्येते आदेशाः क्रमात् स्युः दशादित्रिकसंख्याशब्दे परे द्वित्र्यष्टान श्चेदधिका भवन्ति। इह त्रिदशाद्यशब्देन दशविंशतित्रिंशत् शब्दानामेव ग्रहणम्। अन्यथा अन्त्यषट्के अशीतिवर्जनमनर्थकं स्यात् त्रिदशाद्य इति क्लान्तत्वात् न यथासंख्यम्। पञ्चसु एते आदेशा इत्यर्थः। द्वि अधिका दश इति शाकपार्थिवादित्वादधिकशब्दलोपे द्वाद्यादेशः। एवं द्वाविंशतिः त्रयोविंशतिः अष्टाविंशतिः द्वात्रिंशत् त्रयस्त्रिंशत् अष्टात्रिंशत् इति द्वाचत्वारिंशदित्यादि एवं त्रयश्चत्वारिंशत् त्रिचत्वारिंशत् अष्टाचत्वारिंशत् अष्टचत्वारिंशत् इत्यादि। एवं पञ्चाशत् षष्टि सप्तति नवति शब्दे परेऽपि। द्व्यशीतिः त्र्यशीतिः अष्टाशीतिरिति सहर्षं घः। एषु किं? द्विशतं त्रिशतं अष्टशतं इत्यादि॥ ३५१॥

एकोनस्य स्थाने एकाद्वैकान्नौ स्यातां वा संख्यावाचके परे कर्मधारये। एकोना चासौ विंशतिश्चेति एकाद्वविंशतिरित्यादि। वाशब्दस्य व्यवस्थया संख्याशब्देनेह विंशत्यादिरेवोच्यते। तेन एकोनाश्च ते दश चेति एकोनदश। कर्मधारये किं? एकोनाविंशतिर्यत्र स एकोनविंशति॥ ३५२॥

श्रीरा-टी—एकाद्वश्च एकान्नश्च तौ। वाद्वयमध्यवर्त्तित्वात् नित्ये प्राप्ते वा ग्रहणम्। परे तु ऊनार्थे नञः प्रकृतिवत् भावं विधाय एकशब्दस्यानागमं कुर्वन्ति। एकाद्वविंशतिः एकान्नविंशतिः। एकोनविंशतिस्तु ऊनशब्देनेव॥ ३५२॥

**३५४। सर्वैकदेशसङ्ख्यातसङ्ख्याव्यान्नैकान्नैक्ये ऽह्नो ऽह्नः।**

सर्व—व्यात् ५।, न ।१।, एकात् ५।, न ।१।, ऐक्ये ७।, अह्नः ६।, अह्नः १।।

**एभ्यः परस्य अहन् इत्यस्य स्थाने अह्नः स्यात् यादौ न त्वेकात् न च ऐक्ये।**

**३५५। प्राग्वत् नो णो ऽतो ऽह्नस्य।**

प्राग्वत् ।१।, न. ६।, णः १।, अतः ५।, अह्नस्य ६।।

---

सखाच अहश्च राजा चेति सख्यहोराजन् तस्मात्। प्रियश्चासौ सखा चेति प्रियसखः अनेन षप्रत्यये यथोर्लोप इतीकारलोपः। षित्वादीषि प्रियसखी। परमाह इति न्वोर्लोपोताविति नलोपे यथोर्लोप इत्यकारलोपः। अह्रान्तानां पुंस्त्वमभिधानात् महाराज इत्यत्र महतस्तस्य आकारः नलोपादिश्च। एवं कृष्णस्य सखा कृष्णसखः तयाणां सखीनां समाहारः त्रिसखम् ॥ ३५३ ॥

श्रीरा-टी—षगे चेति यः कमप्राप्तः चकारः षगसमभिव्याहृतः षगमनुकर्षतीत्यत आह। ये षे गे चेति षकारस्यैवार्थत्वात् परदेभ्यः एभ्यः ष इत्यर्थः। तेन सखिसुत इत्यादौ न स्यात्। प्रियसख इत्यादि। प्रियश्चासौ सखा चेति परमश्च तदहश्चेति महांश्चासौ राजा चेति वाक्यम् ॥ ३५३ ॥

सर्वश्च एकदेशश्च संख्यातश्च संख्या च व्यश्चेति तस्मात्। न एको नैकः तस्मात्। न ऐक्यं नैक्यं तस्मिन्। अह्न एकैकभावे वर्त्तमानः पूर्वादिरेकदेशः। एभ्यः परस्य अहन्शब्दस्य अह्न इत्यकारान्तः स्याद्यादौ न त्वेकात् परस्य न च समाहारे। सर्वञ्च तत् अहश्चेति सर्वाह्णः अह्नान्तानां पुंस्त्वमभिधानात् मध्याह्नः संख्याताह्न द्वे अहनी प्रिये यस्य स द्व्यह्नप्रियः प्रकृष्टमहः प्राह्णः। नैकात् किं? एकाहः। नैक्ये किं? त्र्यहः ॥ ३५४ ॥

श्रीरा टी—सर्वश्च एकदेशश्च संख्यातश्च संख्या च व्यश्च तत्तस्मात्। न एको नैकस्तस्मात् न ऐक्यं नैक्यं तस्मिन्। एभ्य इत्यादि। सर्वशब्दात् एकदेशवाचिनः पूर्वादेः संख्यातशब्दात् एकशब्दभिन्नात् संख्यावाचिनो व्यसंज्ञकाच्च परस्याहन्शब्दस्याह्नादेशः स्यात् ये षे समाहारभिन्ने गे च। पूर्वसूत्रात् षइत्यस्य त्तिविपरिणामेनानुवृत्तेः ये परे इत्यर्थः तेन प्रियपूर्वाह्णः सुर इत्यादौ कृतसान्तत्वात् को न स्यात् ॥ ३५४ ॥

निमित्तवतोऽकारान्तपदात् परस्य अह्न इत्यकारान्तस्य नस्य णः स्यात् अव-

सर्वाह्णः पूर्वाह्णः । एकात्तु एकाहः । अत इति किं ? त्रिभि-रह्नोभिर्जातः त्र्यह्नः ।

## ३५६ । कौटग्रामात् तक्ष्णः ।

कौटग्रामात् ५।, तक्ष्णः ५। ।

कौटतक्षः । ग्रामतक्षः ।

## ३५७ । जातमहद्वृद्धादुक्ष्णः ।

जात महत् वृद्धात् ५।, उक्ष्णः ५। ।

जातोक्षः । महोक्षः । वृद्धोक्षः ।

## ३५८ । शुनोऽत्यप्राण्युपमानात् ।

शुनः ५।, अति-अप्राण्युपमानात् ५। ।

---

कुपुन्तरेऽपि सर्वाह्णः पूर्वाह्णः । अदन्तात् परस्य किं ? त्रिभिरह्नोभिर्जातः त्र्यह्नः अदन्ताह्नस्येति किं दीर्घाणि अहानि यस्यां सा दीर्घाह्नी प्रावट् ॥ ३५५ ॥

श्रीरा-टी—प्राग्वदित्यनेन ष्ठ्रु: अवकुपुन्तरेऽपीति प्राप्तं तथाच षकाररेफ-ऋवर्णयुक्तादन्तात् परस्याह्नस्य नो णः स्यात् अवकवर्गपवर्गव्यवधानेऽपि सतीत्यर्थः । सर्वाह्ण इति सर्वञ्च तदहश्चेति वाक्यं एवं पूर्वाह्णः अपराह्णः इति । अह्न इति किं दीर्घाण्यहानि यस्यां दीर्घाह्नी शरत् । एकाह इति एकञ्च तदहश्चेति वाक्यं त्र्यह्नः इति त्र्यर्थे गः प्रत्युदाहरणार्थमिहोक्तमिदम् । प्राग्वदिति किं ? संख्याताह्नः व्यह्नः इत्यादि संख्याताह इति कश्चित् । नैक्ये किं द्वयोरह्नोः समाहारः द्व्यहः । सर्वैकदेशादेः किं ? पुण्याहम् ॥ ३५५ ॥

आभ्यां परात् तक्ष्णः सः स्याद्यादौ । कौटश्चासौ तक्षा चेति कौटतक्षः एवं ग्रामस्य तक्षा ग्रामतक्षः ॥ ३५६ ॥

श्रीरा-टी—आभ्यां परात्तक्ष्णः षः स्यात् यादौ । कौटतक्षः इति कुट्यां भवः कौटः कौटश्चासौ तक्षा चेति वाक्यम् ॥ ३५६ ॥

एभ्यः परादुक्ष्णः षः स्याद्यादौ । जातश्चासौ उक्षा चेति जातोक्षः एवं महोक्षः वृद्धोक्ष. ॥ ३५७ ॥

श्रीरा-टी—एभ्यः परादुक्ष्णः षः स्यात् यादौ । जातोक्षः इति जातश्चासौ उक्षा चेति वाक्यम् । एवं महोक्षः । वृद्धोक्षः । यादौ किं महोक्षा शिवः ॥ ३५७ ॥

अतेः प्राणिवर्जादुपमानाच्च शुनः षः स्यात् यादौ। आकर्ष इव श्वा आकर्षश्वः। प्राणिनस्तु व्याघ्र इव श्वा व्याघ्रश्वा।

## ३५९। पूर्वोत्तरमृगाच्चानतेः सक्थ्नः।

पूर्व-उत्तर-मृगात् ५।, च।१।, अनतेः ५।, सक्थ्नः ५।।

एभ्यः पूर्वोक्ताच्च अतिवर्जात् सक्थ्नः यः स्यात् यादौ। पूर्वसक्थम्।

---

न प्राणी अप्राणी अप्राणी चासौ उपमानञ्चेति अप्राण्युपमानम् अतिश्च अप्राण्युपमानञ्चेति तस्मात्। आकर्ष इति। आकृष्यते ऽनेनेति आकर्षः। आकुड्षी इति ख्यातः। आकर्षः आकर्षतुल्यः इति ज्ञापनार्थं इवशब्दः। आकर्षस्य इति अप्राण्युपमानात् परात् शुनः षः। अतेस्तु श्वानमतिक्रान्तः अतिश्वः। प्राण्युपमानात्तु व्याघ्रो व्याघ्रतुल्यश्चासौ श्वा चेति व्याघ्रश्वा॥ ३५८॥

श्रीरा-टी—उपमीयते यत् तदुपमानम् उपमेयमित्यर्थः। अप्राणी च तदुपमानं चेति तत् अतिश्च अप्राण्युपमानञ्च तत् तस्मात्। आकर्षः श्वेवेति उपमेयस्य व्याघ्राद्यै-रित्यनेन षः। आकर्षो द्यूत इन्द्रिये। पाशके शारिफलके कोदण्डाभ्यासवस्तुनि। आकर्षणे ऽपि पुंसि स्यादिति मेदिनी। श्वन्शब्दो व्याघ्रादौ द्रष्टव्यः आकृतिगण-त्वात् यद्यपि आकर्षशब्दोऽपि व्याघ्रादौ वर्त्तते तथापि श्वन्शब्दस्य आकर्षशब्देन सह यः। उपमेयवाचिनः उपमानवाचिभिर्व्याघ्राद्यैः सह षविधानम्। इह तु उपमेयवाच्याकर्षशब्दः। एवं व्याघ्रश्वेति प्रत्युदाहरणेऽपि। परे तु अप्राणिनि वर्त्तमानात् उपमानवाचिनः शुनः षः इत्याहुः। एके तु आकर्ष इव आकर्षः आकर्षश्चासौ श्वा चेति आकर्षश्व इत्याहुः। मूले आकर्ष इव श्वेति दर्शनात् तन्मते उपमीयते ऽनेन इति उपमानं भे अनट्॥ ३५८॥

पूर्वश्च उत्तरश्च मृगश्चेति पूर्वोत्तरमृगं तस्मात्। नास्ति अतिर्यत्र सोऽनतिः तस्मात्। पूर्वोत्तरमृगेभ्योऽप्राण्युपमानाच्च परात् सक्थ्नः यः स्याद्यादौ पूर्वञ्च तत् सक्थि चेति पूर्वसक्थम् एवम् उत्तरसक्थं मृगस्य सक्थि मृगसक्थं फलकमिव सक्थि फलकसक्थं प्राण्युपमानात्तु कूर्म इव सक्थि कूर्मसक्थि अनतेः किं? सक्थि अतिक्रान्तः अतिसक्थिः॥ ३५९॥

श्रीरा-टी—पूर्वश्च उत्तरश्च मृगश्च तत्तस्मात् न अतिः अनतिः तस्मात्। पूर्वोक्तादिति अप्राण्युपमेयवाचिन इत्यर्थः पूर्वसक्थमिति पूर्वशब्दः सक्थ्नः

## ३६० । देशात् ब्रह्मण: कुमहद्भ्यान्तु वा ।

देशात् ५।, ब्रह्मण: ५।, कु-महद्भ्यां ५॥, तु ।१।, वा ।१। ।

**कुत्सितो ब्रह्मा कुब्रह्म: कुब्रह्मा ।**

## ३६१ । सरोऽनोऽयोऽश्मन: संज्ञाजात्यो: ।

सरस् अनस् अयस् अश्मन: ५।, संज्ञा-जात्यो: ७॥ ।

**महानसम् उपानसं लोहितायसं कालायसं पिण्डाश्म: अमृताश्म:।**

---

पूर्वावयववाची सक्थिशब्दोऽपि तदवयववाची पूर्वञ्च तत् सक्थि चेति वाक्यं पूर्वं सक्थ: इति। एवमुत्तरसक्थमिति फलकं शरावरणं चर्मफलकं फलकं सक्थि इवेति वाक्यं तथापि सर्वं पूर्ववदूह्यम् ॥ ३५९ ॥

देशवाचकात् परात् ब्रह्मण: य: स्यायादौ कुमहद्भ्यां परात्तु वा। अवन्तौ ब्रह्मा अवन्तिब्रह्म: कुत्सितो ब्रह्मा कुब्रह्म: कुब्रह्मा। एवं महाब्रह्म: महाब्रह्मा ॥३६० ॥

श्रीरा-टी—देशो जनपद: तद्वाचिन: परात् ब्रह्मशब्दात् य: स्यात् यादौ वा तु कुमहद्भ्याम्। कुत्सितो ब्रह्मेति वाक्यम्। ब्रह्मशब्दोऽत्र ब्राह्मणवाची। कुशब्दस्य ब्रह्मशब्देन सह य स इति परे एवं महांश्चासौ ब्रह्मा चेति महाब्रह्म: महाब्रह्मा देशात्तु अवन्तिब्रह्म इति वक्ष्यति ॥ ३६० ॥

सरस् च अनस् च अयस् च अश्मन् चेति सरोऽनोऽयोऽश्मन् तस्मात्। संज्ञा च जातिश्च संज्ञजाती तयो:। एभ्य: य: स्याद् यादौ संज्ञायां जातौ च। जालस्य सर: जालसरसम् इति संज्ञा। एवं मण्डूकसरसमिति जाति: महच्च तत् अनश्चेति महानसमिति संज्ञा। एवम् उपगतमन: उपानसमिति जाति:। लोहितमय: लोहितायसमिति संज्ञा एवं कालायसमिति जाति: पिण्ड इव अश्मा पिण्डाश्म इति संज्ञा एवम् अमृताश्म इति जाति:। संज्ञाजात्यो: किम्? दीर्घसर: दृढ़ान्य: कृस्नाय: भग्नाश्मा ॥ ३६१ ॥

श्रीरा-टी—सरस् अनस् अयस् अश्मन् इत्येतेभ्य: नाम्नि जातौ च य: स्यात् यादौ। महानसमिति महच्च तत् अनश्चेति उपगतञ्च तदनश्चेति लोहितञ्च तत् अयश्चेति कालञ्च तदयश्चेति पिण्डश्चासावश्मा चेति वाक्यम् अमृतश्चासौ अश्मा चेतिवाक्यम्। सर:शब्दस्य तु मण्डूकसरसं जालसरसमिति वक्ष्यति एषु जालसरसमहानसलोहितायसपिण्डाश्मा: संज्ञायाम्। मण्डूकसरसोपान- सकालायसामृताश्मा: जातौ। अनयो: किम्? सत्सर: महाश्मा। चन्द्रसर:

## ३६२। सर्वैकदेश सङ्ख्यातपुण्यवर्षादीर्घाद्रात्रेः।

सर्व—दीर्घात् ५।, रात्रेः ५।।

रात्रेरन्तैकदेशे वर्त्तमानः पूर्वादिरेकदेशः। पूर्वरात्रः अपररात्रः।

## ३६३। गोरतार्थे।

गोः ५।, अतार्थे ७।।

गोशब्दात् यः स्यात् यादौ। नतु तार्थे। परमगवः।

## ३६४। नावो ऽर्द्धात् गे च।

नावः ५।, अर्द्धात् ५।, गे ७।, च ।१।।

---

द्वैतवनसर इत्यत्र चन्द्रद्वैतवनशब्दौ संज्ञे न तु समुदायो विशेषनिष्ठसंज्ञाशब्दस्य सम्बन्धादुत्तरदस्य विशेषत्वत्तेः॥ ३६१॥

सर्वश्च एकदेशश्च संख्यातश्च पुण्यश्च वर्षाश्च दीर्घश्चेति तस्मात्। एभ्यः परस्या रात्रेः यः स्याद्यादौ। सर्वा चासौ रात्रिश्चेति सर्वरात्रः। रात्रान्तानां पुंस्त्वमभिधानात्। पूर्वा चासौ रात्रिश्चेति पूर्वरात्रः रात्रेः पूर्वभाग इत्यर्थः। एवं संख्यातरात्रः पुण्यरात्रः वर्षाणां रात्रिः वर्षारात्रः दीर्घरात्रः॥ ३६२॥

श्रीरा-टी—सर्वशब्दादेकदेशवाचिपूर्वादेः संख्यात पुण्य वर्षा दीर्घेभ्यश्च परस्या रात्रेः यः स्याद्यादौ। पूर्वरात्र इति रात्रिशब्दोऽपि लक्षणया पूर्वावयवे वर्त्तते पूर्वा चासौ रात्रिश्चेति वाक्यम्। पूर्वं रात्रेरिति परे। एवम् अपररात्रः मध्यरात्र इत्यादि। सर्वा चासौ रात्रिश्चेति सर्वरात्रः संख्याता चासौ रात्रिश्चेति संख्यातरात्रः पुण्या चासौ रात्रिश्चेति पुण्यरात्रः वर्षाणां रात्रिः वर्षारात्रः दीर्घा चासौ रात्रिश्चेति दीर्घरात्रः। परे तु वर्षादीर्घशब्दौ नाहुः। विरात्रं अतिरात्रम् इत्यादौ संख्याव्याद्रात्रावाङ्गुलिभ्यामः। यादौ किम्? पुण्यरात्रिर्हेमन्तः॥ ३६२॥

परमश्चासौ गौश्चेति परमगवः राज्ञो गौः राजगवः त्रिगवं पञ्चगवधनः। अतार्थे किं पञ्चगुः॥ ३६३॥

श्रीरा-टी—यादाविति ये ये तार्थभिन्नगे चेत्यर्थः। परमगवः इति परमश्चासौ गौश्चेति वाक्यम्। एवं पुमांश्चासौ गौश्चेति पुङ्गवः षणां गवां समाहारः षड्गवं राज्ञो गौ राजगवः स्त्रियां परमगवीत्यादि। अतार्थे किम्? पञ्चभिर्गोभिः क्रीतः पञ्चगुः तार्थ इति वाच्य एव तेन पञ्चभ्यो गोभ्यः आगतः पञ्चगवरूप्य इति स्यात् परसूत्रे ग ग्रहणज्ञापकात्॥ ३६३॥

अर्द्धात् परात् नौशब्दात् यः स्यात् अतार्थे गे च। अर्द्धनावम् ।

३६५ । खार्य्या वा ।

खार्य्याः ५।, वा ।१। ।

अर्द्धखारम् अर्द्धखारी ।

इति यः ।

---

अर्द्धात् परान्नौ शब्दात् यः स्यायादौ। अत्र परत्व च यादेरनुवृत्तावपि अर्द्धशब्दस्य नार्थि खार्य्याञ्च अभिधानात् कर्मधारय एव। चकारान्नौ शब्दात् यः स्यादतद्धितार्थे द्विगौ इतपरोऽर्थ.। अर्द्धञ्च तत् नौश्चेति अर्द्धनावम् अत्र क्लीवत्व-मभिधानात्। अर्द्धात् किम्? दीर्घनौ एवं त्रिनावं द्विनावधनः। तद्धितार्थे तु पञ्चभिर्नौभिः क्रीतः पञ्चनौः ॥ ३६४ ॥

श्रीरा-टी—अर्द्धनावमिति अर्द्धञ्च तत् नौश्चेति वाक्यम् अर्द्ध नाव इति परे। एवं द्वयोर्नावोः समाहारः द्विनावं त्रिनावम्। अतार्थे किम्? पञ्चभिर्नौभिः क्रीतः पञ्चनौः वाच्य एव निषेधात्। द्वाभ्यां नौभ्यामागतः द्विनावरूप्यः इति ॥ ३६४ ॥

अर्द्धात् परात् खारीशब्दात् यः स्यात् वा यादौ इत्येकोऽर्थः। खारीशब्दाद्वा यः स्यादतद्धितार्थे द्विगौ इत्यपरोऽर्थः। अर्द्धञ्च तत् खारी चेति अर्द्धखारं क्लीवत्व-मभिधानात्। पचे अर्द्धखारी। एवं त्रिखारं त्रिखारि त्रिखारं द्विखारधनः। तद्धितार्थे तु द्वाभ्यां खारीभ्यां क्रीतः द्विखारिरिति ॥ ३६५ ॥

श्रीरा टी—अर्द्धात् परस्याः खार्य्याः यः स्याद्वा ये ये तार्थभिन्नगे च। अर्द्धखार-मिति अर्द्धञ्च तत् खारी चेति वाक्यम् अर्द्ध खार्य्या इति परे। गे द्वयोः खार्य्योः समाहारः द्विखारं द्विखारि त्रिखारं त्रिखारि द्वे खार्य्यौ धनमस्य द्विखारधनः इत्यादि। याभावपचे द्विखारिः त्रिखारिः स्त्रियामिति न्यासः वाशब्दस्य व्यवस्था-वाचित्वात् अर्द्धखारमित्यत्र क्लीवत्वम् अर्द्धनावः अर्द्धनावी अर्द्धनावमित्यत्र त्रिलिङ्ग-त्वमिति ॥ ३६५ ॥

इति यः ।

---

## तत्पुरुषसमासः (षः)।

### कृष्णमाश्रितः कृष्णाश्रितः।

---

अथ तत्पुरुषः। कृष्णमाश्रितः कृष्णाश्रितः एवं क्रियाविशेषणस्य नित्यं भीरुः नित्यभीरुः मन्दगामीत्यादि।

श्रीरा-टी—इदानीं षमाह कृष्णमाश्रित इत्यादि। द्या आश्रिताद्यैः षः। द्यान्तस्याश्रिताद्यैः सह षः स्यात्। कृष्णाश्रित इति एवं कष्टं श्रितः कष्टश्रितः वेदं विद्वान् वेदविद्वान्। विप्राय वेदविदुषे इति भागवते। आश्रितादिर्यथा। आश्रितश्रितविद्वांसोऽतीतोऽभ्यस्तबुभुत्सवः। आपन्नपतितप्राप्तगमिगामिबुभुक्षवः। गमिन् गामिन् इत्युभयपाठात् भव्यार्थे णिन्यपि वा त्रिरित्यन्ये। औणादिक इनिगमीति परे। आकृतिगणत्वात् सुखमीप्सुः सुखेप्सुः द्विषद्वीर्य्यनिराकरिष्णुः हंससमुज्ज्वलद्युतिजिष्णुरित्यादि। खट्वायाः क्तेन क्षेपे। द्यन्तायाः खट्वायाः क्षेपे गम्यमाने क्तान्तेन सह षः स्यात्। खट्वारूढो जाल्मः खट्वाप्लुतो जाल्म उत्पथस्थित इत्यर्थः। न केवलं खट्वारोहणमात्रेण यस्य निन्दा सोऽभिधीयते किन्तु येन केनाप्युपायेनानुचिताचरणेन यस्य निन्दा स इति। इह वाक्ये निन्दा न गम्यते इति वाक्याभावात् नित्योऽयं षः। सवाक्यो यः समासः स्यात् स विकल्पः सुसम्मतः। वाक्याभावे तु नित्यं स्यादिति शब्दविदो विदुः। क्षेपे किं? खट्वामारूढो अध्यापकः शिष्यान् अध्यापयति। कालानाम्। द्यन्तानां कालवाचिनां क्तान्तेन सह षः स्यात्। दिनं संक्रान्ता दिनसंक्रान्ता मुहूर्त्ताः रात्रिमारूढा रात्र्यारूढाः किरणाः मासं प्रमितः मासप्रमितश्चन्द्रः मासं प्रमातुमारब्ध इत्यर्थः। मासस्यैकदेशस्य प्रतिपदश्चन्द्रेण सह सम्बन्धान्नात्यन्तसंयोगः। व्याप्तावन्यैश्च। अत्यन्तसंयोगे द्यन्तस्य कालवाचिनः क्तान्तेनान्यैश्च स्याद्यन्तैः सह षः स्यात्। मासौ स्थितः मासस्थितः वर्षं भोग्यः वर्षभोग्यः मुहूर्त्तं सुखं मुहूर्त्तसुखं सर्वरात्रकल्याणी सर्वरात्रशोभना। इति द्वीषः। अथ त्रीषः। तृयाः समाद्यैः। त्रान्तस्य समाद्यैः सह षः स्यात्। पित्रा समः पितृसमः धान्येनार्थः। धान्यार्थः। समादिर्यथा। समाऽर्थौ निपुणः पूर्व ऊनार्थ सदृशावराः। श्लक्ष्णः कलहसप्राद्यप्रादिमिश्रौ मताविह। ऊनार्थग्रहणात् एकोनः पुण्यहीनः विकाररहितः इत्यादि प्रायो नामग्रहणे लिङ्गविशिष्टस्यापि ग्रहणं इति न्यायात् गुरुसदृशीत्यपि। सप्राद्यप्रादिमिश्र इति धान्यप्रमिश्रः गुड़मिश्र इत्यादि। अस्याकृतिगणत्वात् भयविह्वलः अस्त्रशून्यः प्रकटजरा गमनमन्थरः वयोज्येष्ठः। विरहकृशः। खेदार्द्रः गुणाधिकः बन्धुविधुरः द्वाङ्गविकलः गुरुतुल्य

इत्यादि वीकृतगुणवचनेन। वा: कृत: वीकृत: वीकृतश्चासौ गुणवचनश्चेति गुणमुक्तवान् गुणवचन: क्वभावेऽमीत्युक्ते घेंऽनट् य: पूर्वं गुणे वर्त्तित्वा पश्चात् द्रव्ये वर्त्तते स गुणवचनो न तु गुणमात्राभिधायक: गुणेनेत्यकरणात् तेन द्यूतेन पाटवमित्यत्र न स्यात्। वान्तस्य वान्तार्थकृतगुणवचनेन सह ष: स्यात्। शङ्कुलया कृत: खण्ड: शङ्कुलाखण्ड: गिरिणा कृत: काण: गिरिकाण: प्रमादेन कृतो मूर्खः प्रमादमूर्खः। खण्डकाणादय: खण्डननिमीलनादौ गुणे वर्त्तित्वा पश्चात् तद्वति द्रव्ये वर्त्तन्ते। शङ्कुला शस्त्रभेद:। गिरि: शिशुक्रीड़नद्रव्यं प्रमादोऽनवधानता। खण्डादयस्तु वान्तशङ्कुलादिवाच्यकृता इति। वीकृतेति किम्? अक्ष्णा काण: न ह्यत्र वान्तेन अक्ष्णा काणत्वं कृतं किन्त्वन्येन केनापि। भागवृत्तिस्तु वान्तेनाक्ष्णा काणत्वकरणादक्षिकाण: स्यादित्याह। गुणवचनेन किं? गोभिर्वपावान् गोशब्देन लक्षणया गव्यमुच्यते परभृतध्वनिमुखर: शरदन्तुर: इत्यादयस्तु षीपेण मुखरदन्तुरशब्दयोरगुणवचनत्वात्। विशेषार्थावगति: शब्द-सिद्धौ कृतमर्थावगतिनिमित्तमर्थनियमं मण्डपादिवदतिक्रामतीति वीषस्यैव वाक्यार्थव्यवस्थाघटकत्वात् इत्यन्ये। समादेराकृतिगणत्वात् वीष इत्यन्य:। धघयो: कृता बहुलम्। धघयोर्विहिता या वी तदन्तस्य कृदन्तेन सह षो बहुलं स्यात। नखलून: चक्रच्छिन्न: अहिहत: हरिवात: इत्यादि। बहुल-ग्रहणात् गलेचोपक: पादहारक इत्यादौ क्यन्तरस्यापि ष:। दात्रेण लूनवान् परशुना छिन्नवान् इत्यादौ न स्यात्। धघयो: किं? भिक्षाभिरुषित:। अत्र हेतौ त्री। स्तुतिनिन्दयोर्ल्यै:। स्तुतिनिन्दयोर्गम्यमानयोर्धघविहितवान्तस्य ल्यन्तस्य ल्यसंज्ञकान्तै: सह ष: स्यात्। कारचेतव्यानि पुष्पाणि वाष्पच्छेद्यानि तृणानि विश्वैरुपास्यो विश्वोपास्य: शम्भु: शुना लेह्य: श्वलेह्य: कूप:। अनयो: किं? काकेन पातव्यं जलं मैत्रेण गम्यो ग्राम: बहुलानुवृत्तेस्तृणोपेक्ष्यं तृणेन उपेक्ष्यं ज्वलनं इत्यादि स्यात् नात्र स्तुतिनिन्दावगम्यते पूर्वस्यैवायं विधि: प्रपञ्च इत्यन्ये। संस्कारस्य संस्कार्य्येण। वान्तस्य संस्कारवाचिन: संस्कार्य्यवाचिना सह ष: स्यात्। दध्ना उपसिक्त ओदन: दध्योदन: गुड़ेन मिश्रा धाना: गुड़धाना: गुड़पूपा इत्यादि। अश्वरथ: गोयानं मणिमुकुटं कुङ्कुमवस्त्रं जलगर्गरी दधिभाण्डं धान्य-कुशूल इत्यादयस्तु अश्वयुक्तो रथ इति षसे शाकपार्थिवादित्वात् मध्यपदलोप इति वीष:। अथ चौष:। च्या बल्याद्यै:। च्यन्तस्य बल्याद्यै: सह ष: स्यात्। कुबेराय बलि: कुबेरबलि:। बल्यादिर्यथा। बलिर्हितसुखे चैव रक्षितोऽन्यै: प्रयोगत:। आकृतिगणत्वात् वरप्रदेया कन्या। गुरुप्रदेयोऽधिकनिस्पृहोऽर्थी पितृदानमित्यादि। विकृते: प्रकृत्या तादर्थ्येन तादर्थ्ये विहितच्यन्तस्य विकृति-वाचिन: प्रकृतिवाचिना सह ष: स्यात् यूपाय दारु यूपदारु कुण्डलाय हिरण्यम्

अन्यत्र रन्धनाय स्थाली। अश्वाय घासः। श्वश्रूश्वशुरः रन्धनस्थालीति तु चीषेण।
नित्यं प्रयोजनार्थार्थेन वाच्यलिङ्गता च। प्रयोजनवाचिना अर्थशब्देन सह चन्तस्य
षः स्यात्, नित्यं वाच्यलिङ्गता च। ब्राह्मणार्थं पयः ब्राह्मणार्थः सूपः ब्राह्मणार्था
यवागूः। वाच्यलिङ्गताविधानात् यत्र वाच्यलिङ्गता नास्ति तत्र न स्यात्। तेन नृपाय
अर्थः मशकार्थो धूमः इत्यत्र मशकशब्देन लक्षणया मशकनिवृत्तिरभिधीयते अर्थ-
शब्दस्तु प्रयोजनार्थः। अत्र अप्रयोजनार्थार्थशब्दप्रयोगे चीविधानाभावेऽपि प्रयो-
जनार्थग्रहणं निवृत्तिरूपप्रयोजनवाच्यर्थशब्देन चीषविधानार्थमिति कश्चित्। मशक-
स्यार्थो निवृत्तिर्यस्मात् इति व्यधिकरणहेनेत्यन्यः। इति चीषः। अथ पीषः। प्या
मुक्ताद्यैः। प्यन्तस्य मुक्ताद्यैः सह षः स्यात्। पापान्मुक्त पापमुक्तः। मुक्तादिर्यथा। मुक्तो
भीतिरपत्रस्तो जुगुप्सा भीतनिर्गताः। इतरः पतितोऽपेतोभयापेतौ मताविह। अस्या-
कृतिगणत्वात् वृश्चिकभीः अधर्मजुगुप्सुः तदन्यः वृक्षच्युतः भास्वत्ग्रावोद्गतः वेदवहिष्कृत
इत्यादि। अनभिधानात् क्वचिन्न स्यात्। महाप्रासादात् पतितः महाभोजनादपत्रस्त
इत्यादि। इति पीषः। अथ षीषः। सम्बन्धे कृता च ष्याः सदात्वकेन क्रीड़ा जीवि-
कयोः। सम्बन्धे कृद्योगे च विहिता या षी तदन्तस्य स्याद्यन्तैः सह षः स्यात्।
क्रीड़ाजीविकयोर्विहितणकान्तेन तु नित्यम्। राज्ञः पुरुषः राजपुरुषः। विप्रवस्त्रम्।
गोस्वामी गवीश्वर इत्यादौ स्वामीश्वरेत्यादिना विहितत्वेऽपि सम्बन्धेष्वेव सम्बन्धषीवा-
धकषीविधाने ष्यप्राप्तौ चकारेण तदनुकर्षणात् कृद्योगे यथा एधसो व्रश्चनः एधो-
व्रश्चनः। पलाशानां शातनं पलाशशातनम् इत्यादि। क्रीड़ायां पुष्पभञ्जिका मदन-
भञ्जिका पुष्पप्रचारिका। जीविकायां दन्तलेखकः नखलेखकः चित्रलेखकः नित्यसा-
काङ्क्ष्याभावः। क्रीड़ाजीविकयोर्णको वक्तव्यः। क्रीड़ाजीविकयोरिति किम्? ओदनस्य
भोजकः। न निर्द्धारणे सङ्ङर्थक्तेन च। निर्द्धारणे वर्त्तमानाधिकर योर्विहितक्तेन
योगे च विहिता या षी तदन्तानां षो न स्यात्। नराणां क्षत्रियः शूरतमः। गवां कृष्णा
चीरिणी। अध्वगानां धावन्तः शीघ्रतमाः। राद्[illegible]तः। नराणां पूजितः। कलहंस
रामसहितः कृतवानिति तु अतीतक्तान्तेन घ वा: स्यात् सम्बन्धष्याः स्याद्वा इदमेषा-
मुपगतम्। ढघप्राप्तौ ढे। ढे घे च ष्यां प्राप्तौ सत्यां ढे या षी तदन्तस्य षो न स्यात्।
गवां दोहो गोपालकेन समुद्रस्य बन्धो वानरैः। उभयप्राप्तौ ढे इत्यनेन यत्र नियमः
तत्रैवायं निषेधस्तेन इक्षुभक्षिका विप्रस्य अर्थेहा दरिद्रस्य इत्यत्र ष्याः षः स्यात्।
ओदनपाकः सूपकारस्य इत्यत्र तु ओदनस्येति सम्बन्धविवक्षायां षी ततोऽनेन न
निषेधः। टणकाभ्यामहीवादिभ्याम्। हीवादिभिन्नाभ्यां टणन्तणकान्ताभ्यां सह
ष्यन्तस्य षो न स्यात्। पुरां भेत्ता अपां स्रष्टा ओदनस्य भोजकः तण्डुलस्य पाचकः।

अहोत्रादिभ्यां किम्? हविर्होता शचीभर्त्ता पत्यर्थभर्त्तृग्रहणात् वज्रस्य भर्त्ता धारक इत्यत्र निषेधः। चत्त्रिययाजक देवपूजक इत्यादि। होत्रादिर्यथा होता पत्यर्थभर्त्ता च हन्ता याजकपूजकौ। गणको रथपङ्क्तिभ्यां स्नापकः परिचारकः। उत्सादको-द्वर्त्तकाध्यापकाश्च परिवेशकः। प्रयोजका इमे प्रोक्ताः शेषं ज्ञेयं प्रयोगतः। रथपंक्तिभ्यां परस्य गणकस्यैवेह पाठात् ग्रहाणां गणक इत्यत्र ष प्रतिषेधः। आकृतिगणत्वात् चित्तग्राहकः सम्प्रदानबोधक इत्यादि। तृण्साहचर्य्यात् घविहितणकान्तस्यैवेह ग्रहणं तेन तमोभेदिका चन्द्रस्येत्यादौ षः स्यात् भावविहितत्वात्। व्यक्तक्त्वान-पूरणैः। व्यसंज्ञकक्तदन्तेन शतृशानाभ्यां पूरणत्यान्तेन च सह ष्यन्तस्य षो न स्यात्। ब्राह्मणस्य कृत्वा विप्रस्य प्रकृत्य देवस्य कुर्वन् ब्राह्मणस्य कुर्वाणः सर्वत्र सम्बन्धविव-क्षायां षो। विप्राणां दशमः छात्राणां पञ्चमः। एभिः किम्? तदुपरि मदुपरि। तथाच, यत्कृतेऽरीन् व्यगृह्णीम समुद्रमतराम चेति भट्टिः। यस्याः कृते इति वाक्यम्। द्रव्यात्मगुणैः। ये गुणा गुणे गुणिनि च वर्त्तन्ते ते द्रव्यात्मगुणाः तैः सह ष्यन्तस्य षो न स्यात्! पटस्य शुक्लः जलस्य शीतमित्यादि। यदुक्तम्। कदाचिन्न प्रयोगोऽस्ति गो शुक्लगुण इत्ययम्। तेनैवमादिषु प्राप्तः समासोऽयं निषिध्यते इति। इह वैशेषिकशास्त्रीयाणां संख्यासुखदुःखादीनां न ग्रहणं तेन गोशतं मत्सुखं त्वद्दुःख-मित्यादि। यदुक्तम्। वैशेषिकगुणा नेह संख्यादुःखसुखादयः। गृहीता गोशतं सीता दुःखमित्यादि दर्शनात्। द्रव्यात्मेति किं? चन्दनगन्धः कन्यारूपं नदीघोषः फलरसः कुचस्पर्श इत्यादि। गन्धादिशब्दानां केवलगुणस्थत्वात्। यदुक्तम्। न कदाचित् प्रयो-गोऽस्ति चन्दनं गन्ध इत्ययम्। चन्दनस्यैव गन्धो हि स्वप्रधानं प्रतीयते। एवं रूपादय-स्तस्मात् समासो न विहन्यते इति पटशौक्ल्यम् अर्थगौरवं वचनकौशलं गात्रमार्दव-मित्यादौ भावत्यान्तानां केवलगुणवृत्तित्वात् षः स्यादेव। तथाच यथा गन्धादयः शब्दा गुणमात्रव्यवस्थिताः। तथा शौक्ल्यादयस्तेन पटशौक्ल्यादयः स्मृताः इति भागुरिः। अन्ये तु भावत्यान्तेनापि काष्र्ण्यादिना निषेधस्तेन काकस्य कार्ष्ण्यं बलाकायाः शौक्ल्य-मित्यत्र निषेधः। अर्थगौरवमित्यादौ तु स्यादेवेत्याहुः। एवं पुरुषोत्तमदेवेनाप्युक्तं न्यासकारादिभिस्तु नोक्तमिति समानाधिकरणैः। समानाधिकरणैः स्याद्यन्तैः सह ष्यन्तस्य षो न स्यात्। सुन्दरस्य देवदत्तस्य धनम् कुरुस्य राज्ञो मातङ्गाः। समाना-धिकरणैः किम्? राजस्त्रियौ गौरवं कृष्णचरणौ वन्द्यौ। घृतस्य तीव्रो गन्धः चन्दनस्य मृदुर्गन्धः इत्यादौ त्वन्वयाभावान्न स्यात्। इति षोषः। अथ तोषः। त्राः शौण्डाद्यैः। त्रान्तस्य शौण्डाद्यैः सह षः स्यात्। अक्षेषु शौण्डः अक्षशौण्डः शौण्डशब्दः सुरापे रूढः। इह तूपचारात् अक्षधूर्त्त इत्यभिधीयते। नन्वक्षेष्विति क्रियाभावादधिकरणत्वाभावेन

कथं त्नौ ? इति चेत् सत्यम्। प्रवृत्तिक्रियाया वृत्तावन्तर्भावाद्विषयसप्तमी। शौण्डादिर्यथा, शौण्डकितव सम्वीत प्रवीण व्याड़ पण्डिताः। सिद्धः साहसिको दक्षश्चतुरो निपुणः पटुः। कुशलश्चपलो धूर्त्तः शुष्कपक्वावधीत्यपि। मध्यार्थान्तस्तथा बन्धः परे शिष्टप्रयोगतः। अधिशब्दस्याधेयाप्राधान्येऽत्र पाठः। यथा ब्राह्मणेष्वधि ब्राह्मणाधीनः परेष्वधि पराधीनः अध्युत्तरदात् सदैव ईनः केवलाधिप्रयोगाभावात्। मध्यार्थस्यान्तःशब्दस्याधिकरणप्राधान्ये पाठः। यथा वनान्तर्वसति वनमध्ये वसतीत्यर्थः। अधिकरणाप्राधान्येऽधिशब्दस्य पूर्वपदार्थप्राधान्येऽन्तःशब्दस्य तु वसः यथा अधिस्त्रि अन्तर्वनमिति। आकृतिगणोऽयम्। त्य येन नियमे। त्यसंज्ञकयकारत्यान्तेन सह सप्तन्तस्य षः स्यात् अवश्यकरणीयत्वे गम्यमाने सति। मासे एव देयमृणं मासदेयं मासे समाप्ते सति ऋणम् अवश्यं दातव्यमित्यर्थः। एवं वर्षदेयमृणं पूर्वाह्णगेयं साम मासकरणीयं दिवसकरणीयम्। जन्मकृतमित्यादौ तु शौण्डादेराकृतिगणत्वात्। त्ययेनेति किम् ? पर्वणि स्थातव्यम्। तत्राहोरात्रावयवानां क्तेन चेपे च। तत्रेत्यस्य दिनावयवरात्र्यवयववाचिनश्च सप्तन्तस्य क्तान्तेन सह षः स्यात् निन्दायाञ्च। तत्र कृतं तस्येदं तावत्कृतं आद्यचो त्रिः। मध्याह्नगतः पूर्वरात्रकृतः। अवयवेति किम् ? अह्नि कृतं रात्रौ कृतं दिनकृताः सिध्येयुः रात्रिवृत्तमावेदयत इत्यादि घघयोः कृता बहुलमित्यनेन त्नौ स्यात्। निन्दायां प्रवाहे मूत्रितं प्रवाहमूत्रितं भस्मनि हुतं भस्महुतम् उदकविशीर्णम् अन्धकारनटितमित्यादि। प्रवाहादिना मूत्रितादिना च मुख्यार्थमपहायार्थान्तरमभिधीयते तथाहि। प्रवाह इव अनादेये कार्य्ये मूत्रितमिव निष्फलं प्रवर्त्तनमित्युभयदयोरेव मुख्यार्थत्यागात् निन्दा गम्यते इत्यादि क्रमेणार्थो बोद्धव्यः। ध्वाङ्क्षार्थेन सह सप्तन्तस्य षः स्यात् निन्दायां गम्यमानायाम्। तीर्थे ध्वाङ्क्ष इव तीर्थध्वाङ्क्षः तीर्थकाकः नगरवायसः ध्वाङ्क्ष इव स्थित इत्यर्थः। पात्रे समितादयः। चेपे गम्यमाने पात्रे समितादयः षौपे निपात्यन्ते। पात्रे एव समिताः सङ्गता न पुनः क्वचित् कार्य्ये पात्रे समिताः। आखनिके खाते बक इव आखनिकबकः यथा बकः खातगतानेव मत्स्यान् भक्षयति तद्वत् यो गृहगतमेव भक्षयति नान्यत्र गच्छति सः। मातरिपुरुषः प्रतिषिद्धसेवीत्यर्थः। उडुम्बरे मशका इव एकस्था उडुम्बरमशकाः। यथा उडुम्बरमध्ये मशकाः एकस्था एव नान्यत् पश्यन्ति तथा ये अदृष्टदेशान्तरास्ते इत्यर्थः। पिण्ड्यामेव शूरः पिण्डीशूरः अन्यत्र कार्य्याक्षम इत्यर्थः। एवं गेहे विजीतीत्यादावपि निन्दा गम्यते। पात्रे समितादिर्यथा। पात्रे समिता आखनिकबको मातरिपुरुष उडुम्बरमशकाः। पिण्डीशूरो गेहे विजिती गेहेनर्द्दी गेहेनर्त्ती। गेहेदाही गेहेदृप्तो गेहेमेही गर्भे तृप्तः। गोष्ठेपण्डितः गोष्ठे शूरो गेहेक्ष्वेड़ी गेहे व्याड़ाः। उडुम्बरकृमिः पात्रे बहुलाः कूपकच्छपः। कर्णे

चुरचुराश्चैव कूपमण्डूक इत्यपि। कर्णे टिटिरिका गेहेप्रगल्भोऽन्ये प्रयोगतः। येषां गणे व्याप्तता तेषां प्रयोगेऽपि व्याप्तता। तथा च हतस्त्वं पात्रे समितैरिति भट्टिः। पात्रे समितादीनां द्वातिरिक्तसान्तरं न भवतीत्येतदपि ज्ञेयम्। तेन परमाः पात्रे समिता इत्यादौ न षः। बहुपात्रे समिता इत्यादौ हः स्यादेव। वने कशेरुकाद्या नाम्नि। वने केशेरुकाद्याः ष्णौषे निपात्यन्ते संज्ञायाम्। वने कशेरुकाः वने किंशुकाः पुरुषोत्तमः नगाधिराज इत्यादि। वने केशरुकादीनां पात्रे समिताद्यन्तर्गतत्वे सिद्धे पृथग्विधानमनिन्दार्थम्। पुरुषोत्तमः नगाधिराज इत्यत्र न निर्द्धारण इति निषेधे प्राप्ते वने कशेरुकादिपाठात् संज्ञायां स इत्यन्ये। परे तु संज्ञायामिति सूत्रयित्वा वनेकिंशुकाः वनेकशेरुकाः इत्युदाहरन्ति। ते तु यत्र समुदायो निर्द्धार्य्यमाणो निर्द्धारणहेतुश्चेति द्वयं तत्रैव न निर्द्धारण इति निषेधस्तेन पुरुषोत्तम इत्यादौ न निषेध इत्याहुः। यद्यपि द्यादिन्त्यन्त पूर्वदानामेव ग्रन्थकृता ष उक्तस्तथापि प्रान्तपूर्वदानामप्यभिधानात् ज्ञेयमिति तथा च। नञः। नञिति व्यस्य स्याद्यन्तेन सह षः स्यात्। न ब्राह्मणोऽब्राह्मणः। नञोऽर्थौ हि द्विविधः। पर्य्युदासः प्रसज्यप्रतिषेधश्चेति। यदुक्तम्। प्रधानत्वं विधेर्यत्र प्रतिषेधेऽप्रधानता। पर्य्युदासः स विज्ञेयो यत्रोत्तरपदे न नञ्॥ अप्राधान्यं विधेर्यत्र प्रतिषेधे प्रधानता। प्रसज्यप्रतिषेधोऽसौ क्रियया सह यत्र नञ्। इति अब्राह्मण इत्यादौ परपदार्थसदृशार्थकत्वात् विधेः प्राधान्यं प्रतिषेधांशे तात्पर्य्याभावात् प्रतिषेधस्याप्राधान्यं अतएव पर्य्युदास नञः परदेन सह परस्परसापेक्षत्वात् सः। किञ्चित् न कुर्वाण इत्यादौ विध्यंशे तात्पर्य्याभावात् विधेरप्राधान्यं प्रतिषेधांशे शब्दप्रयोगात् तस्य प्राधान्यं अतएवोत्तरदेन सह प्रसज्यप्रतिषेधनञः करोतीत्यर्थः। क्रियया सह सम्बन्धेन परस्परसापेक्षत्वाभावान्न सः। नन्वेवं सति सूर्य्यं न पश्यन्ति इत्यर्थे असूर्य्यंपश्यानि मुखानि। पुनर्न गीयन्ते अपुनर्गेयाः श्लोकाः। श्राद्धं न भुङ्क्ते अश्राद्धभोजी ब्राह्मण इत्यादौ कथं स इति चेत् सत्यम्। नहि क्रियया सह सम्बन्धः स निषेधकारणं किन्तु अगमकत्वं तथाहि असूर्य्यंपश्यानीत्यादौ गमकत्वात् सः। किञ्चिन्न कुर्वाण इत्यादावगमकत्वान्न स इति। यद्वा असूर्य्यंपश्यानि मुखानि सूर्य्यविषयकदर्शनवद्भिन्नानि मुखानि। सैककर्त्तृकपुनर्गेयभिन्नाः श्लोकाः श्राद्धकर्मकभोजनवद्भिन्नो ब्राह्मण इत्यर्थात् पर्य्युदास एवेति अत्यन्ताभाववत् कालभेदात् भेदस्याव्याप्यवृत्तिः। देवदत्तेन न भूयते इत्यादौ क्रियया सह सम्बन्धात् प्रसज्यप्रतिषेध इति दिक्। प्राञ्चस्तु नञोऽर्थः षड्विधः। यदुक्तम्। तत्सादृश्यमभावश्च तदन्यत्वं तदल्पता। अप्राशस्त्यं विरोधश्च नञर्थाः षट् प्रकीर्त्तिताः।

यथा अब्राह्मणः। अपापम्। अघटः पटः। अनुदरी कन्या। अकेशी वेश्या। असुर इत्याहुः। असितं अधर्मः इत्यादौ रूढ़िविषयत्वात् न सादृश्याद्यवगमः। केचित्तु नञ्संयेऽन्तर्भावयन्ति तन्मते उच्चैर्मुख इत्यादिवत् विशेषणविशेष्यत्वमवगन्तव्यम्। न नीलोऽनील इत्यादौ नञो द्योतकत्वादप्राधान्येन विशेषणत्वात् न पूर्वनिपातोऽनियम इति। अन्ये तु तदसदेवेत्याहुः। ईषतो गुणवचनैः। गुणमुक्त्वा गुणिनि वर्त्तन्ते ये ते गुणवचनास्तैः सह ईषदिति व्यस्य षः स्यात्। ईषत्-पिङ्गलस्तस्यापत्यं ऐषत्पिङ्गलिः। एवं ईषद्विकटः ईषत्पातः ईषदुन्नत इत्यादि। ईषद्गार्ग्य इत्यत्र गार्ग्य द्रव्याश्रितगुणक्रिययोरल्पत्वबोधकत्वेऽपि ईषतो गार्ग्यशब्देन सह न षो द्रव्यवाचित्वात्। पूर्वादेरंशिनैकत्वे। एकत्वे वर्त्तमानेनांशिना सह पूर्वादेः षः स्यात्। पूर्वं कायस्य पूर्वकायः अपरकायः उत्तरकायः पूर्वाह्णः मध्याह्नः सायाह्नः पश्चिमरात्रः। उपारताः पश्चिमरात्रगोचरादिति भारविः। यद्यप्येकदेशे समुदायोपचारात् विशेषणविशेष्ययोर्यसेनैव पूर्वकाय इति सिध्यति तथाप्यवयवावयविसम्बन्धष्याः ये कायपूर्व इत्याद्यनिष्टरूपनिरासार्थमिदम्। षीषेऽपि राजदन्तादित्वात् परनिपात इति कश्चित्। तन्मते तु नेदं सूत्रमिति। एकत्वे किं? पूर्वं छात्राणां पूर्वं वर्षाणां पूर्ववर्षा इति तु वर्षाख्यास्यांशिन एकत्वात्। क्लीवार्द्ध तुर्य्य द्वितीय तृतीय चतुर्थ तुरीयाणां वा। क्लीवलिङ्गानामेषामेकत्वे वर्त्तमानानां अंशिना सह षः स्याद्वा। अर्द्धं कायस्य अर्द्धकायः तुर्य्यभिक्षा द्वितीयभिक्षा तृतीयभिक्षा चतुर्थभिक्षा तुरीयभिक्षा। पक्षे कायार्द्धमित्यपि। तथाचाह पूपार्द्धं भक्षितं मयेति भाष्यम्। एवं भिक्षातुर्य्यमित्यादि। एकत्वे किं? अर्द्धं धान्यानाम् अर्द्धपिप्पल्य इति तु अर्द्धपिप्पली च अर्द्धपिप्पली च अर्द्धपिप्पली च इति एकशेषात्। अस्य नित्यत्वात् अर्द्धं कायस्येत्यादि वाक्यसत्वेऽपि वा ग्रहणं पाक्षिकषीषज्ञापनार्थम्। तेन व्यक्तकृतानपूरणैरिति न षीषनिषेधः। कालानां परिमाणिभिः। कालवाचिनां परिमाणवाचिभिः सह षः स्यात्। मासो जातस्य मासजातः द्वे अहनी जातस्य द्व्यह्नजातः। यद्यपि द्रोणाढ़कादीनामेव परिमाणवाचकत्वं प्रसिद्धम् तथाप्यत्र कालस्य गौणं परिमाणत्वमवच्छेदहेतुत्वात् तथाहि मासो जातस्येत्यादौ मासादयो जातसम्बन्धिनः सूर्य्यगतिक्रिया गमयन्ति इत्यच्छेदहेतव इति। द्वा प्राप्तापन्नयोः। अनयोर्द्वान्तेन सह षः स्यात्। प्राप्तो जीविकां प्राप्तजीविकः आपन्नजीविकः जीविकाप्राप्तः जीविकापन्न इति द्वा आश्रितादित्वात्। प्राप्तजीविका आपन्नजीविका इत्यत्र तत्त्वग्रहणज्ञापकात् पुंवद्भावः। एवं द्वितीया भिक्षा द्वितीयभिक्षा इत्यपि। स्वयं साम्योक्तेन। स्वयं सामि इत्येतयोर्व्यसंज्ञयोः क्तान्तेन सह षः स्यात्। स्वयं धौतः तस्येदं स्वायंधौतं सामिकृतं सामिशब्दोऽर्द्धपर्य्यायः। तेन तदर्थस्य ग्रहणात् नेमिकृतं

## ३६६। व्यं पूर्वम्।

व्यं १।, पूर्वं १।

---

अर्द्धकृतमित्यपि कश्चित्। कृदन्तग्रहणे कारकोपसर्गपूर्वस्यापि ग्रहणमिति न्यायात्। स्वयं चिरविलीनः स्वयं धर्मगत इत्यादि। कुप्राद्योर्नित्यम्। कु इत्यस्य प्रादेश्च व्यसंज्ञकस्य स्याद्यन्तेन सह षः स्यान्नित्यं नित्यसे स्वपदविग्रहाभावात् पदान्तरेणार्थकथनम्। कुत्सितः पुरुषः कुपुरुषः ईषज्ज्वलं काजलं प्रकृष्टगतः प्रगतः प्रपतितो वा पुरुषः प्रपुरुषः। विशिष्टो विरुद्धो वा पुरुषः विपुरुषः दुष्टो जनः दुर्जनः शोभनो जनः सुजनः इत्यादयः शिष्टप्रयोगानुसारेण ज्ञातव्याः। क्रान्तादावत्यादिर्द्वा। क्रान्तादावर्थे वर्त्तमानस्यात्यादिर्द्वान्तेन सह नित्यं षः स्यात्। अतिक्रान्तो वेलामतिवेल उद्गतो विद्यां उद्विद्यः। क्रुष्टादाववादिस्त्यां। क्रुष्टादावर्थे वर्त्तमानस्यावादिस्त्यन्तेन सह नित्यं षः स्यात्। अवक्रुष्टं कोकिलया अवकोकिलं वनम्। अवक्रुष्टः कोकिलेन अवकोकिलो वृक्षः। सशब्द इत्यर्थः। सन्नद्धो वर्मणा संवर्मा परिणद्धो वीरुद्भिः परिवीरुत् सङ्गतमशनेन समशनं प्रतीतोऽक्षेण प्रत्यक्षो घटः सुसङ्गतो वेलया सुवेलः अधिगतोऽक्षेण अध्यक्षो घट इत्यादि। ग्लानादौ पर्य्यादिश्चा। ग्लानादावर्थे वर्त्तमानस्य पर्य्यादिश्चान्तेन सह नित्यं षः स्यात्। परिग्लानोऽध्ययनाय पर्य्यध्ययनः पर्य्याप्तं कुमार्य्यै अलंकुमारिः अलंशब्दस्य पाक्षिकः स इति कश्चित्। तन्मतेऽलंकुमार्य्यै इति वाक्यमपि। उद्युक्तो युद्धाय उद्युद्धः अभिगतः सुताय अभिसुतः। क्रान्तादौ निरादेः प्या। क्रान्तादावर्थे वर्त्तमानस्य निरादेः प्यन्तेन सह नित्यं षः स्यात्। निष्क्रान्तो वनात् निर्वनः अपगतो ग्रामात् अपग्रामः अन्तर्गतो मुखात् अन्तर्मुखः इत्यादि। क्वचिदन्यत्रापि एतैः सूत्रैर्यत्राप्राप्तः सत्रापि शिष्टप्रयोगदर्शनात् षः स्यात्। पुनाराजः पुनर्गवः भूतपूर्वः पुनःशिल्पी अविनाभूतं अविनाभावः अन्यार्थोपपत्तिः अध्वगन्तव्य इत्यादि। अस्याद्यन्तेनापि कृतोपपदस्य स्याद्युत्पत्तेः प्रागपि कृदन्तेन सहो-पपदस्य नित्यं षः स्यात्। कुम्भं करोतीति कुम्भकारः। शक्तिग्रहः धनक्रीतीत्यादि। हरिभाविनीत्यादौ तु णिनोऽन्यार्थत्वात् ह एवोक्तम्। न द्वादिनिमित्तस्य प्रत्यादेः। द्वादिर्निमित्तस्य प्रत्यादेः कुप्राद्योरित्यनेन प्राप्तः षो न स्यात्। प्रति वृक्षं विद्योतते विद्युत् अभिमन्युरर्जुनतः प्रति स्थितः गतः। त्रिगर्त्तेभ्यः परीत्यादि।

समासान्तप्रत्ययानामेव निमित्तीभूतस्य षादेरिह पूर्वनिपातेऽनुवृत्तिर्नास्ति। तेन समासमाचऽस्य विधानात् उपकृष्णमित्यव्ययीभावेऽपि पूर्वनिपातः अति-

परं व्यं पूर्वं स्यात् से सति। राजानमतिक्रान्ता अतिराजौ। अतिश्वौ। अत्यङ्गः। अतिस्त्रिः।

### ३६७। सङ्ख्याव्याद्रात्र्यङ्गुलिभ्याम्।

संख्याव्यात् ५।, रात्रि-अङ्गुलिभ्यां ५॥, अः १।।

---

राजौति। सख्यहरिति ष प्रत्यये नकारादिलोपे षित्त्वादीप्। एवं अतिश्वौति शुनोऽत्यप्राण्युपमानेति षः। अत्यङ्ग इति सर्वैकदेशेति अङ्गादेशः अतिस्त्रिरिति गवावादेरिति ह्रस्वः। एवं अतिमायः अतिवामोरुः। राजानमतिक्रान्ता अतिराजी-त्युदाहरता क्रान्ताद्यर्थैरत्यादिभिर्द्वितीयान्तस्य समास इति सूचितम्। तेन वेलामुद्गतः उद्वेलः ज्यामधिरूढं अधिज्यं मुखमभिगतः अभिमुखः इत्यादि बोध्यम् ॥ ३६६ ॥

श्रीरा टी—व्यमिति सविधायकलक्षणे षीनिर्दिष्टस्योपलक्षकं तेन पूर्वकायः अर्द्धपिप्पलीत्यादौ पूर्वादीनां पूर्वनिपातो ननु शाकं प्रति इत्यत्र प्रतेरिति। अतिराजीति अतिक्रान्ता राजानमित्यादिस्वरूपेणार्थकथनमित्यन्ये। सख्यहो राज्ञः षः षगे च इति षः। षित्त्वादीप्। अतिश्वीत्यत्र शुनोऽत्यप्राण्युपमानात् इति षः। अत्यङ्गः इत्यत्र सख्यहोराज्ञः इति षे सर्वैकदेशेत्यादिनाङ्गो ङ्गादेशः। पूर्वपदार्थप्राधान्येऽपि षविधानस्येति फलम्। एवं अतिनदिः अतिभर्त्ता इत्यादौ कादयो न स्युः अहत्वात् अतिस्त्रिरिति परपदार्थस्याप्राधान्याद्गौणत्वेन गवा-वादेरिति ह्रस्वः। राजदन्तादिषु परम्। प्राप्तपूर्वनिपातं दं राजदन्तादिषु पठितं चेत् परं स्यात्। दन्तानां राजा राजदन्तः लिप्तवासितं सिक्तसंसृष्टं नष्टमुषितं भ्रष्टलुठितं अवक्लिन्नपक्वं अर्पितोदस्तं उप्तगाढम्। अत्र तु पूर्वकालस्य लक्षणस्य विषयः। उदूखलमुषलं तण्डुलक्लिन्नं चित्ररथवाह्लीकं विष्वक्सेनार्जुनौ चित्रास्वाती भार्य्यापती पुत्रप्रश्वौ केशश्मश्रू विशेषणविशेष्य स्नातकराजानौ प्रतिष्ठालिप्से शूद्राचार्य्यौ मर्य्यादाभिविधी शिरोजानू पाण्डुधृतराष्ट्रौ अलाबुश्च कर्कन्धुश्च ते अलाबुकर्कन्धू ईदूतौ वा परदे इति ह्रस्वः। ते च हनूभूश्च ता अलाबु-कर्कन्धूहनूभूः उदूखलादिभिर्मुषलादीनां चे परनिपातः। विशेष्यविशेषणे इत्यपि स्यादिति कश्चित्। एवं वनस्याग्रे अग्रेवनं रात्रीणां गणो गणरात्रं वाणस्य वारो वारवाणः अन्तरं गृहं गृहान्तरम्। अन्तरशब्दोऽत्रान्यार्थः। श्वः परं परश्वः इत्यादि शेषं शिष्टप्रयोगानुसारेण ज्ञेयम् ॥ ३६६ ॥

संख्या च व्यश्च संख्याव्यं तस्मात्। एकवचनं यथासंख्यानिरासार्थम्। मण्डूकप्लुताधिकारात् आदेरनुवृत्तिः। रात्रिमतिक्रान्तोऽतिरात्रः एवं अत्यङ्गुलः

संज्ञायां व्याञ्च पराभ्यां रात्राङ्गुलिभ्या-मः स्यात् यादौ नतु तार्थे। अतिरात्रः अत्यङ्गुलः। हरिणा त्रातो हरित्रातः। विष्णवे दत्तं विष्णुदत्तम्। अच्युतात् जातं अच्युतजातम्। कृष्णस्य सखा कृष्णसखः, महाघासः, ग्रामतक्षः, मृगसक्थं, जालसरसं, मण्डूकसरसं, राजगवः, वर्षारात्रः।

---

एवं निरात्रं द्व्यङ्गुलम्। तृतीयामाह। हरिणा त्रातः इति। एवं खड्गच्छिन्न-रथ्यव्रज्या हर्षजागरा मासपूर्वः वर्षावरः मासीनः असिकलहः वाङ्निपुणः गुड़-मिश्रः इत्यादि। वक्षुषा हतान् शस्त्रेण ज्ञात्वा मनसा कर्त्तुमिच्छति। हस्तेन कुर्वन् बलेन कुर्वाण इत्यादावनभिधानान्न स्यात्। एवं दध्ना मिश्रित ओदनः दध्योदनः दध्ना मिश्रिता शक्तवः दधिशक्तवः गुड़ेन मिश्रिता धाना गुड़धाना हस्तिना युक्तो रथः हस्तिरथः एवं अश्वरथः दध्ना पूर्णो घटः दधिघटः इत्यादौ शाकपार्थिवादित्वान्मध्यपदलोपः। अवादयः क्रुष्टाद्यर्थे तृतीयान्तेन समस्यन्ते। कोकिलया अवक्रुष्टं अवकोकिलं वनं अवस्य पूर्वनिपातः। गवावादेरिति ह्रस्वः। एवं अवमयूरं वत्सरेण परिणतः परिवत्सरः अक्षेण अधिगतः अध्यक्षः अक्षेण प्रतीतः प्रत्यक्षः अक्षमिन्द्रियम्। चतुर्थीमाह। विष्णवे दत्तं विष्णुदत्तं एवं गोभ्यो हितः गोहितः यूपाय दारुः यूपदारु एवं अश्वघासः वासगृहं शयनपर्य्यङ्क इत्यादि। एषु षष्ठीसमास इति केचित्। एवञ्च ग्लानाद्यर्थे पर्य्यादिना चतुर्थीसमासः। तथा अध्ययनाय परिग्लानः पर्य्यध्ययनः युद्धाय उद्युक्त उद्युद्धः कुमार्य्यै अलं अलङ्कुमारिः गवावादेरिति ह्रस्वः। गोभ्योऽलं अलंगवः गोरतार्थे इति विशेषविधानात् षः। पञ्चमीमाह। अच्युताज्जातं अच्युतजातं एवं व्याघ्रभीतः धर्मभीतः अश्वपतितः अर्जुनपराजितः राजगृहीतः सर्परचितः घटभिन्न इत्यादि। गुरोरध्येता ग्रामादुद्गूढ़ः प्रसादात् पतित इत्यादावनभिधानान्न स्यात्। गताद्यर्थे निरादिना पञ्चम्याः समासः। कौशाम्ब्या निर्गतः निष्कौशाम्बिः गवावादेरिति ह्रस्वः। शाखाया अपगतं अपशाखं यूथाद्विच्युतः वियूथः। षष्ठीमाह। कृष्णस्य सखा कृष्णसख इति सख्यहोरात्र इति षः। महती देशस्य महत्या भूमेर्वा घासः महाघासः। महतस्तकारस्य तीकारस्य वा आकारः। ग्रामतक्षः कौटग्रामादिति षः। मृगसक्थं पूर्वोत्तरेति षः। जालसरसं सरो न इति षः। एवं मण्डूकसरसं राजगवः। गोरतार्थे इति षः। वर्षाणां रात्रिः वर्षारात्र इति सर्वैकदेशेति षः। रात्रान्ताः प्रागसंख्यका इत्यमरात्

## ३६८। मुख्यार्थोरसः।

मुख्यार्थे त्वरसः ५।।

मुख्यार्थादुरस्शब्दादः स्यात् यादौ। अश्वोरसं, मुख्यो-

---

पुंस्त्वम्। एवं मासजातः ससंवत्सरजात इत्यादौ सम्बन्धे षष्ठीसमासः। आषष्ठः भिचा द्वितीया इत्यादौ पूरणप्रत्ययान्तेऽपि समासः॥ ३६७॥

श्रीरा-टौ—मण्डूकप्लुत्या यादावित्यनुवर्त्तते इति तत्र षसे पृथक् संख्यावाचिनो रात्रेः षावधानात् षगयोरेवास्य विषयः इत्यत आह यादाविति। न च तत्र षित्वात् स्त्रियामीव्विधानात् संख्याग्रहणं कर्त्तव्यमिति वाच्यम्। रात्रन्तानामह्नोरात्रादित्वात् सदैव पुंस्त्वात्। संख्याव्यादिति क्रनिर्देशान्न यथासंख्यमित्यत आह अतिरात्रः अत्यङ्गुलमिति। गे तु द्वयोः रात्र्योः समाहारः द्विरात्रः त्रिरात्रः अतिरात्र अत्यङ्गुल इति एवं निर्गतमङ्गुलिभ्यो निरङ्गुलं द्वे अङ्गुली परिमाणमस्य द्व्यङ्गुलं चैवं द्व्यङ्गुला भूमिः। भूमेरप्यूर्द्धमङ्गुलमिति तु यवमानार्थो अङ्गुलशब्दस्तथाच। अङ्गुलन्तु यवो मत इत्यमरमाला। कृष्णसख इति सख्यहो राज्ञः इति षः। महाघास इति महती महत्या वा घास इति वाक्यम्। घासशब्दे परे महतो महत्यास्तयोरा:। ग्राम तच इति। ग्रामस्य तचा इति वाक्यम्। कौटग्रामादिति षः। मृगसक्थमिति मृगस्य सक्थि इति वाक्यं पूर्वोत्तरमृगादिति षः। कालसरसमिति। अत्र कालस्य कालकूटाख्यगरलस्य सरः कालसरसं काशीयक्षेत्र इति परे। राजगव इति गौरतार्थ इति षः। वर्षारात्र इति वर्षाणां रात्रिरिति वाक्यं सर्वैकदेशेत्यादिना षः॥ ३६७॥

त्रयाणां पञ्चम इत्यादावनभिधानान्न स्यात्। मुख्यार्थः। मुख्यार्थादिति किं? वृक्षस्य उरः वृक्षोरः वृक्षस्य वक्ष इत्यर्थः। सप्तमीमाह पुरुषेष्विति। निर्द्धारणे षष्ठ्यन्तस्य समासनिषेधात् पुरुषेषु उत्तमः पुरुषोत्तम इति सप्तमीतत्पुरुषः। अवन्तिब्रह्मः देशाद्ब्रह्मण इति षः। इत्यादयः साध्या इति वचनादवेदं विहरणोमि। आश्रितातीत पतिताभ्यस्त प्राप्तापन्न गम्यादिभिर्द्वितीयान्तस्य। कृष्णमाश्रितः कृष्णाश्रितः एवं संसारातीतः कूपपतितः कृच्छ्राभ्यस्तः सुखप्राप्तः शोकापन्नः ग्रामगमी सुखेच्छुः मुक्तिप्रेप्सुः अन्नबुभुक्षुः। एभिः किं? ओदनं भुक्तवान् घटं कुर्वन् पटं कुर्वाणः ग्रामं गत्वा तीर्थं गन्तुं इत्यादौ न स्यात्। क्तान्तेन द्वितीयान्त खट्वायाः क्षेपे। खट्वामारूढः खट्वारूढो जाल्मः। गुरुसमत्वमिति क्षेपः। क्षेपे किं? खट्वामारूढो गुरुः पाठयति। सामिकालयोः। सामि इत्यव्ययमर्द्धार्थम्। काशी दिनादिः। द्वितीयान्तयोरेतयोः क्तान्तेन समासः स्यात्।

ऽस्व इत्यर्थः। पुरुषेषु उत्तमः पुरुषोत्तमः, अवन्तिषु ब्रह्मा अवन्तिब्रह्मः।

इति षः।

---

सामिकृतं रात्रिमारूढः रात्र्यारूढः। एवं मासप्रतिपन्नश्चन्द्रः। व्याप्तौ द्वितीयान्तस्य। मुहूर्त्तं व्याप्य सुखं मुहूर्त्तसुखम्। एवं सर्वरात्रकल्याणी। प्राप्तापन्नयोर्द्वितीयान्तेन समासे पूर्वनिपातः पुंवच्च। प्रियां प्राप्तः प्राप्तप्रियः अत्र प्राप्तस्य पूर्वनिपातः। गवादेरिति प्रियाया ह्रस्वः। राजानं प्राप्तः प्राप्तराजः गामापन्नः आपन्नगवः जायां प्राप्तः प्राप्तजायः धर्मं प्राप्तः प्राप्तधर्मः। एषु बहुव्रीहौ कृते प्राप्तप्रिय इत्यत्र प्रियाशब्दे परे पुंवन्न स्यात्। प्राप्तराजः आपन्नगवः इत्युभयत्र ष प्रत्ययो न स्यात्। प्राप्तजाय इत्यत्र जानिरादेशः स्यात्। प्राप्तधर्म इत्यत्र धर्मादन् स्यादित्यतस्तत्पुरुषविधानम्। प्रज्ञां प्राप्ता प्राप्तप्रज्ञा स्त्री जीविकामापन्ना आपन्नजीविका स्त्री इत्युभयत्र परपदस्य एकार्थत्वाभावे पुंवन्न स्यादिति पुंवद्भावविधानम्। न हेतुविशेषणसहार्थे कुत्सिताङ्गे च तृतीयासमासः। अन्यया शोकः भूषाभिः शिवः पित्रा सहागतः अक्ष्णा काणः पृष्ठेन कुब्जः। दृष्टान्तमास्थाति भवानपि पुत्त्रशोकादिति रघौ। पुत्त्रशोकादिति सम्बन्धविवक्षया षष्ठ्याः समासः। क्तान्तेन स्तोकादेर्न पञ्चम्याः। स्तोकान्मुक्तः स्तोकयुक्तः कृच्छ्राल्लब्धः कृच्छ्लब्धमपि लब्धवर्णभाक् इति रघौ तृतीयया। गुणमात्रवाचकैरूपादिभिः षष्ठ्याः समासः स्यात्। हिम्नो रूपं हिमरूपं एवं इक्षुरसः चन्दनगन्धः वायुस्पर्शः शङ्खशब्द इत्यादि। किञ्च शुक्लादीनां शीतादीनां मधुरादीनाञ्च गुणमात्रवाचित्वे षष्ठ्याः समासो न स्यात्। यथा पटस्य शुक्लः जलस्य शीतं आम्रस्य मधुरं एषां गुणवाचित्वे तु द्रव्यस्य विशेषणतया पूर्वस्थायिनां बहुव्रीहिः कर्मधारयश्च स्यात्। यथा शुक्लपटो विप्रः शुक्लपटोऽयं शीतलजला नदी शीतलजलमिदं मधुराम्रो देश मधुराम्रमिदं इति। एषां भावप्रत्ययेषु षष्ठ्या समासः स्यादेव। यथा पटस्य शौक्ल्यं पटशौक्ल्यम् एवं जलशैत्यं आम्रमाधुर्य्यम्। संख्यायास्तु संख्यामात्रवाचित्वेऽपि षष्ठ्या समासः स्यात्। यथा गवां शतं गोशतं एवं नरसहस्रमित्यादि। याजकादीनां कर्मणि षष्ठ्या समासः। विप्रस्य याजकः विप्रयाजकः एवं विष्णुपूजकः वेदपाठकः। अव्ययैः पश्चादादिभिरेव षष्ठ्या समासो न च पूर्वनिपातः। पूर्वस्य पश्चात् पूर्वपश्चात् सर्वपश्चात् तदुपरि तत्कृते इत्यादि। नियमः किं ? व्रतिनस्तूष्णीं ग्रीष्मस्य दिवा छात्रस्योच्चैर्गृहमित्यादौ न स्यात्। निर्द्धारणे षष्ठ्या समासो न

## द्विगुसमासः (गः) ।

**तस्यार्थे—विषये, वाच्ये अपत्यार्थष्णिकादिकम् ।**
**प्रोज्झ्याजादेः, समाहारे, गस्त्रिधोत्तरदे परे ॥**
**पञ्चभिर्गोभिः क्रीतः पञ्चगुः ।**

---

स्यात् । पुरुषाणां शूरः । एवं मातुः स्मृतवान् सर्पिषो ज्ञानवान् वर्षशतस्य जीवक इत्यादावपि न स्यात् । राजदन्तादीनां परस्य पूर्वनिपातः । यथा दन्तानां राजा राजदन्तः कायस्य पूर्वः पूर्वकायः ऋणे उत्तमः उत्तमर्णः ऋणे अधमः अधमर्णः इत्यादि । तीर्थे काकादयः चेपे सप्तम्या समस्यन्ते । तीर्थे काक इव चञ्चलः तीर्थकाकः एवं तीर्थवायसः तीर्थध्वाङ्क्षः कूपमण्डूकः कूपकच्छपः । चेपे किं ? तीर्थे काकस्तिष्ठति इत्यादि । तत्रशब्दः क्तेन समस्यते । तत्रकृतं तत्रभुक्तमित्यादि । समासे तद्धितादिशब्दस्य न लोपः । तत्रकृतस्येदं तात्रकृतं इत्येकपदत्वात् पूर्वस्य वृद्धिः । पात्रे समितादयः चेपे समस्यन्ते विभक्तेरलुक् च । यथा पात्रेसमितः पात्रेबहुलः गेहेनर्द्दी पिण्डीशूरः इत्यादि । पात्रे एव नान्यत्र इति चेपो बुध्यते । एवं पिण्डीशूरः इत्यत्र विभक्तेर्लुक् अभिधानात् । बिलेशयादेर्विभक्तेर्न लुक् । वचनेचरादेस्तु वा । बिलेशयः खलेशयः उरसिलोमा कण्ठेकालः वनेचरः वनचरः खेचरः खचरः त्वचिसारः त्वक्सारः सरसिजं सरोजमित्यादि ॥ ३६८ ॥

श्रीरा टी—मुख्योऽर्थो यस्य तत् मुख्यार्थं तच्च तत् उरश्चेति तस्मात् । अश्वोरसमिति अश्वस्य उर इति वाक्यम् । उरःशब्दो मुख्यवृत्त्या हृदयवाची लक्षणया प्रधानार्थः तथाहि । यथा उरःशरीरावयवानां प्रधानं तथा अश्वानां प्रधानमित्यर्थः मुख्यार्थादिति किं ? मेत्रस्योरो मैत्रोरः । अवन्तिब्रह्म इति अवन्तिर्देशभेदः तत्र ब्रह्मा ब्राह्मणः एवं सुराष्ट्रब्रह्मः कान्यकुब्जब्रह्म इत्यादि । देशादिति किं ? देवब्रह्मा नारदः ॥ ३६८ ॥

इति षमधिकृत्य कृतो ग्रन्थः ।

---

तस्यार्थे इति गो द्विगुः तस्य तद्धितस्यार्थे समाहारे उत्तरे पदे परे च भवन् त्रिधा भवति । तद्धितार्थेऽपि द्विधा भवति यथा तद्धितप्रत्ययमात्रस्य अजादेर्हसादेर्वाऽर्थे विषये इत्येकः अपत्यार्थष्णिकादिकं प्रोज्झ्य त्यक्त्वा अजादेस्तद्धितस्यार्थे वाच्ये इत्यपरः । इति तद्धितार्थमधिकृत्य द्वाभ्यामेकोऽर्थः ।

## ३६६ । गैक्यादतोऽपाचादेरीप् ।

गैक्यात् ५।, अत: ५।, अपाचादे: ५।, ईप् ।१।

---

अपत्यार्थणिकादिकमिति । णिरेव णिक: छन्दोऽनुरोधात् स्वार्थे क: णिप्रभृतिकमित्यर्थ: । यत्र तस्यार्थविषये समास: क्रियते तत्र तद्धितप्रत्ययोत्पत्ते: पूर्वावस्थायां समासे कृते तत: प्रत्ययप्राप्तौ द्वन्द्वादि । तेन द्वयोर्मात्रोरपत्यमित्यत्र प्राप्तव्यस्य णप्रत्ययस्योत्पत्ते: पूर्वावस्थायां द्विमातृ एतयोरेकपदीभावे पश्चात् णप्रत्यये कृते द्वि इत्यस्यैव वृद्धौ संख्यासंभद्रादित्यादिना ङुरि कृते द्वैमातुर इति । एवं पञ्चानां नापितानामपत्यं पाञ्चनापिति: । वाच्ये तु यथा पञ्चभिर्गोभि: क्रीत: पञ्चगुरित्यत्र कर्मणि वाच्ये करणकारकात् ढणिकादित्यादिना प्राप्तव्यप्रत्ययस्यार्थे वाच्ये समासेनैव तद्धितस्य उक्तार्थत्वे उक्तार्थानामप्रयोग इति न्यायात् तद्धितप्रत्ययस्यानुत्पत्तौ गवावादेरिति ह्रस्व: । अजादेरिति किं ? द्वयोर्मूर्ध्नोर्भव: द्विमूर्द्धन्य इत्यादौ विषये एव समास: स्यान्न तु वाच्ये । समाहारे यथा त्रयाणां सखीनां समाहारस्त्रिसखम् इत्यादि । उत्तरपदे परे यथा पञ्चगवधन इत्यादि ।

श्रीरा-टी—इदानीं गमाह तस्यार्थे इत्यादि । गस्त्रिधा विप्रकार: तत्र तस्यार्थे एक:,समाहारे एक:,उत्तरपदे परे एक:,इति तस्यार्थे कृतगणात् तत्यस्य सत्वासत्वात् तस्यार्थे इत्यत्र एकस्या: प्रग्रा एव विषयत्वं वाच्यत्वं चेत्यर्थ इत्यत आह विषय इत्यादि । अपत्यार्थे णिकादिकञ्च विहाय अजादेस्तस्यार्थे वाच्ये अपत्यार्थे णिकादिकस्य ह्रसादेश्च तस्यार्थे विषयभूत ग इत्यर्थ: । यथा पञ्चसु कपालेसु संस्कृत: सूप: पञ्चकपाल: सूप: द्वौ वेदौ वेत्त्यधीते वा द्विवेद: द्वितन्त्र: इत्यादौ संस्कृताद्यर्थस्य सेनोक्तत्वात् उक्तार्थानामप्रयोग: इति न्यायात् न णादय: । पञ्चानां नापितानामपत्यं पाञ्चनापिति: द्वाभ्यां शूर्पाभ्यां क्रीतं द्विशौर्पिकं द्विखारीक: अर्द्धखारीण: पञ्चानां गणां भूतपूर्वो गौ; पञ्चगर्गरूप्य: पञ्चसु ब्राह्मणेषु साधु: पञ्चब्राह्मण्य: इत्यादौ अपत्याद्यर्थस्य विषयभूतत्वेनानुक्तत्वात् णादय: स्युरेव णिकादि इत्यनेन अर्हति इत्यादौ विहितो ष: णिकस्तदाद्या अर्हति इत्यादिविहिता ये त्या: संज्ञायामेव तेषां वेत्त्यादिभिन्नेष्वर्थेषु येऽजादयस्त्यास्तेषाञ्च ग्रहणं तेन पञ्चगुरित्यत्र क्रीतार्थस्य अर्हादित्वेऽप्यसंज्ञायामणिकादित्वाद्वाच्य ग: । संज्ञायान्तु पञ्चभिर्लोहितै: क्रीतं पाञ्चलोहितकमित्यादौ विषय एव ग: णिकादित्वात् । द्वाभ्यां सुवर्णाभ्यां क्रीतं द्विसौवर्णिकं द्विसुवर्णं द्विसाहस्रं द्विसहस्रमित्यादौ संज्ञायामपि वाच्यस्य विधानात् विषये वाच्येऽपि ग; । एतत् सर्वं तत्रादं विविच्य वक्तव्यम् ।

गैक्यादकारान्तादीप् स्यात् नतु पात्रादेः ।
त्रयाणां लोकानां समाहारः त्रिलोकी ।
पात्रादिस्तु द्विपात्रं त्रिपात्रं त्रिभुवनं, चतुर्युगम् ॥

## ३७० । वानापः ।

वा ।१।, अन्-आपः ५। ।

अनन्तादापश्च ईप् स्याद्वा । पञ्चकर्मी पञ्चकर्मं त्रिखट्टी त्रिखट्टम् ।

---

गस्य ऐक्यं गैक्यं समाहारद्विगुः । त्रयाणां लोकानां समाहार स्त्रिलोकी । समाहारद्विगूनां क्लीवत्वेऽपि ईपो विधानाददन्तानां स्त्रीत्वं सूचितं पात्रादिस्तु एकपात्रं द्विपात्रं त्रिभुवनं चतुर्युगं चतुष्पथ मित्यादि ॥ ३६९ ॥

श्रीरा-टी—गस्यैकं गैक्यं तस्मात् । पात्रमादिर्यस्य पात्रादिर्न पात्रादिरपात्रादिस्तस्मात् निषेधो यज्जातीयस्य विधिरपि तज्जातीयस्य इति न्यायात् पात्रादिवर्जनेनैवात इत्यस्य लाभेऽपि अतो ग्रहणं कृतसान्तादन्तस्यापि प्राप्त्यर्थं तेन षोड़शराजी द्विधुरी पञ्चराजीत्यादि । पञ्चराजशब्दस्य पात्रादौ पाठात् पञ्चराजमिति भाष्यम् । त्रिलोकीति ईपः पित्करणादेव चगैक्यवमित्यनेन न क्लीवत्वमतो नित्यस्त्रीत्वमिति । एवं पञ्चमूली सप्तशतीत्यादि । ननु समाहारस्यानेकवृत्तित्वात् कथमेकापूपीति चेत् सत्यं दानक्रियया सम्भ्रमेण वा एकस्याप्यपूपस्य बहुत्वमध्यारोप्य समाहार इति । पात्रादिस्त्वित्यादि द्विपात्रं त्रिभुवनं त्रिगुणं चतुर्गुणं चतुःशतं चतुष्पथं चतुर्मुखं पञ्चनावं पञ्चगवं द्विखारमित्यादि शिष्टप्रयोगानुसारेण बोध्यम् अत इति किं ? त्रिजगत् पञ्चपटु ॥ ३६९ ॥

अन् च आप् चेति अनाप् तस्मात् । वाशब्दोऽत्र चकारार्थः तेन अदन्तादावन्ताच्च गैक्यादीप् स्यात् वाशब्देनानुकृष्टः संख्याव्यादित्यादितोऽप्रत्ययश्च स्यादित्यर्थः । किन्तु चानुकृष्टं नोत्तरत्र इति न्यायात् अप्रत्ययस्य परत्रानुवृत्तिर्नास्तीति । पञ्चकर्ममिति पञ्चानां कर्मणां समाहारः इति वाक्येऽनेन अप्रत्यये न्वोर्लोपौताविति नलोपे ययोर्लोप इत्यकारलोपे चगैक्यवमिति क्लीवत्वे समाहारे एकत्वे सेर्मः । एवं पञ्चकर्मी इत्यत्र ईपि नकार अकारयोर्लोप इति ॥ ३७० ॥

श्रीरा-टी—मण्डूकगत्या संख्याव्यादित्यतोऽकारानुवृत्त्या वेत्यत्राऽप्रसक्तेषाद्द वा

## ३७१। तार्थे मानात् काण्डात्त्वक्षेत्रे।

तार्थे ७।, मानात् ५।, काण्डात् ५।, तु ।१।, अक्षेत्रे ७।

**व्याढ़की, विकाण्डी रज्जुः। क्षेत्रे तु विकाण्डा भूमिः।**

## ३७२। पुरुषात् वा।

पुरुषात् ५।, वा ।१।।

**द्विपुरुषी द्विपुरुषा। त्रिसखं त्रिगवं त्रिनावं, त्रिखारं त्रिखारि, त्र्यहः।**

---

अर्हत्यस्य लाभः। वाशब्दोऽत्र समुच्चयार्थः तथाचाऽनन्तावन्ताभ्याम् अदृप् च स्यादित्यर्थः। तेन पञ्च कर्म्म विंशचमित्यादि स्यात्। अक्षेपक्षसंज्ञकत्वेन पञ्च-कर्म्मी वितचौत्यत्र नकाराकारयोर्लोपः ॥ ३७० ॥

अत्र अप्रत्ययो नानुवर्त्तते। तेन ताद्धितार्थद्विगौ परिमाणवाचकादीप् स्यात् काण्डात्तु तद्धितार्थे द्विगौ क्षेत्रभिन्ने वाच्ये ईप् स्यात्। त्रय आढ़काः परिमाण-मस्याः त्र्याढ़की धान्यसंहतिः। एवं विकाण्डी रज्जुः। क्षेत्रे तु विकाण्डा क्षेत्रभूमिः अत्र आवेव ॥ ३७१ ॥

श्रीर·टी—इह वाऽकारत्यो नानुवर्त्तते परत्र वा ग्रहणात् तार्थे गे मानार्थ-कादीप् स्यात् काण्डशब्दात्तु क्षेत्रभिन्ने वाच्ये। त्र्याढ़की त्रयः आढ़का मान-मस्या इति वाक्यम्। एवं द्वौ द्रोणौ मानमस्या द्विद्रोणी द्व्याढ़कीत्यादि वि-काण्डीति त्रयः काण्डाः परिमाणमस्या इति वाक्यं एवं द्विकाण्डीत्यादि सर्वत्र परिमाणार्थविहितस्य मात्रस्य लुक्। अक्षेत्रे इति किं? द्विकाण्डा क्षेत्रभूमिः क्षेत्रैकदेशः। मानात् किं? पञ्चभिरश्वैः क्रीता पञ्चाश्वा द्विवर्षा त्रिशता इत्य-त्रापि न स्यात्। सुपाञ्चालादौ संख्यापूर्वपरिमाणार्थसंवत्सरसंख्यानां पृथग्-ग्रहणेन कालसंख्ययोरपरिमाणत्वात् समाहारे तु दशशतीत्यादयः स्युरेव। न विस्तारितकम्बल्यात्। तार्थे गे मानार्थेभ्य एभ्य ईप् न स्यात्। द्वे विस्ते मानमस्या द्विविस्ता द्व्याचिता द्विकम्बल्या ॥ ३७१ ॥

पुरुषादीप् स्याद्वा तद्धितार्थे द्विगौ। द्वौ पुरुषौ परिमाणमस्या द्विपुरुषी द्विपुरुषा भित्तिः। समाहारमाह। त्रयाणां सखीनां समाहारस्त्रिसखं सख्य-हेरिति षप्रत्ययः। त्रयाणां गवां समाहारस्त्रिगवम् अत्र गोरतार्थे इति षप्रत्ययः। तिसृणां नावां समाहारस्त्रिनावम् अत्र नावोर्द्धादिति षप्रत्ययः।

## ३७३। द्विवेर्वाञ्जलेः।

द्विवेः ५।, वा ।१।, अञ्जलेः ५।, अः १। ।

द्व्यञ्जलं द्व्यञ्जलि, द्व्यङ्गुलं त्रिरात्रम्। पञ्च गावो धनं यस्यासौ पञ्चगवधनः द्विनावधनः द्विखारधनः द्व्यह्नप्रियः।

इति गः।

---

तिसृणां खारीणां समाहारस्त्रिखारम् अत्र खार्या वा इति षप्रत्ययः पक्षे त्रिखारि अत्र क्लीवे ह्रस्व इति ह्रस्वः। त्रयाणामह्नां समाहारस्त्र्यहः। अत्र सङ्ख्याह्नोराज्ञ इति षप्रत्यये सर्वैकदेशेत्यत्र समाहारवर्जनात् अह्नादेशाभावे अहान्तत्वात् पुंस्त्वम् ॥३७२॥

गोरा-टी—तार्थे गे मानार्थात् पुरुषादीप् स्याद्वा। त्रिपुरुषीति त्रयः पुरुषा मानमस्या इति वाक्यं एवं द्विपुरुषी द्विपुरुषा परिखा त्रिसखमित्यादि त्रयाणां सखीनां समाहार इति वाक्यम्। क्रमेण सङ्ख्याह्नोराज्ञः गोरतार्थे नावोर्द्वाद् गे च खार्या वेति षप्रत्ययः त्रिखारि षाभावपक्षे चगेक्यवमिति क्लीवत्वात् क्लीवे ह्रस्वः। त्र्यह इति त्रयाणां अह्नां समाहार इति वाक्यं सङ्ख्याह्नोराज्ञ इति षे सर्वैकदेश इत्यत्र ऐक्यनिषेधात् अह्नो नाह्नादेशः अहोरात्रादित्वात् पुंस्त्वं एवं द्व्यहः। अनैक्ये तु द्वयोरह्नोर्भावः द्व्यह्नः त्र्यह्नः इत्यादि स्यादेव ॥ १७२ ॥

द्वित्रिभ्यां परादञ्जलेः अः स्याद्वा तद्धितार्थे द्विगौ। द्वावञ्जली परिमाणमस्या द्व्यञ्जलं जलम्। पक्षेऽप्रत्ययाभावे जलवाचित्वात् क्लीवत्वं एवं त्र्यञ्जलं त्र्यञ्जलि जलम्। त्रिलोचनस्तु तद्धितार्थभिन्ने द्विगौ द्वित्रिभ्यामञ्जलेरप्रत्ययं विधाय द्वयोरञ्जल्योः समाहारः द्व्यञ्जलं द्व्यञ्जलि एवं द्वावञ्जली प्रियौ यस्य स द्व्यञ्जल-प्रियः द्व्यञ्जलिप्रियः इति समाहारोत्तरपदयोरुदाहृत्य तद्धितार्थे तु द्वाभ्या-मञ्जलिभ्यां क्रीतः द्व्यञ्जलिरित्यन्नमाह। द्वयोरङ्गुल्योः समाहारः द्व्यङ्गुलम्। तिसृणां रात्रीणां समाहारस्त्रिरात्रम् इत्युभयत्र संख्याव्यादिति अप्रत्ययः। उत्तर-पदे परे उदाहरति। पञ्चगावो धनं यस्यासौ पञ्चगवधनः अत्र धने उत्तरपदे-परे द्विगौ गोरतार्थे इति ष प्रत्ययः। द्वे नावौ धनमस्य द्विनावधनः नावोर्द्वा-दिति षः। द्वे खार्यौ धनमस्य इति द्विखारधनः द्विखारीधनः खार्या वा इति ष प्रत्ययो वा द्वे अहनी प्रिये यस्यासौ द्व्यह्नप्रियः अत्र सङ्ख्याह्नोरिति षप्रत्यये सर्वैकदेशेति अह्नादेशः ॥ ३७३ ॥

## अव्ययीभावसमासः (व)।

व: कसामीप्यसादृश्य साकल्यानुक्रमर्द्धिषु।
वीप्सापर्य्यन्तयोग्यत्व पश्चादर्थानतिक्रमे।
शब्दप्रादुर्भावाभाव यौगपद्येष्वनेकधा ॥

---

श्रीरा-टी—वाग्रहणात् तार्थे इत्यस्य च निवृत्तिः तथाच द्वित्रिभ्यां परादञ्जलेरःस्यादतार्थे गे। द्व्यञ्जलमिति द्वयोरञ्जल्योः समाहारः इति वाक्यं एवं त्र्यञ्जलं त्र्यञ्जलि द्वावञ्जली जलमस्य द्व्यञ्जलजलः द्व्यञ्जलिजल इत्यादि। तार्थे तु द्वाभ्यामञ्जलिभ्यां क्रीतः द्व्यञ्जलिः द्व्यङ्गुलमित्यादि संख्याव्यादित्यत्र उत्तरदगमाह। पञ्चगवधन इति। आदौ त्रिभिः दैः हः पश्चात् धनशब्दे परे पूर्वयोर्द्वयोर्गः गसौ गोरुत्तरदत्वात् गोरतार्थे इति षः। एवं द्विनावधनः द्विखारधनः द्विखारीधनः द्व्यङ्गप्रियः इत्यत्र नावोर्द्वात् गे च खार्य्यां वा सख्यहोराज्ञ इति क्रमेण षः षेऽङ्गोऽङ्गादेशः। द्वे अङ्गे जातस्य द्व्यङ्गजात इत्यादौ त्रिभिर्दैः षः पश्चात् पूर्वयोर्द्वयोर्गः अभिधानात् उत्तरदे गसो नित्य एव तेन पञ्चगोधनं इति न स्यात् अन्ये तु समाहारः संघः तत्र तार्थे इत्यनेनैव गे सिद्धे समाहार इति कृतं संघरूपार्थे गनिराकरणार्थमित्याहुः। परे तु दिग्वाचिपूर्वदानामपि गमुक्त्वा पूर्वस्यां शालायां भवः पौर्वशालः पूर्वं शाला प्रिया अस्य पूर्वशालाप्रियः इत्युदाहरन्ति ॥ ३७१ ॥

इति गसमासः (द्विगुः।)

---

व: कसामीप्य इत्यादि। वोऽव्ययीभावः। कारकादिषु चतुर्दशसु अर्थेषु भवति प्रयोगानुसारादनेकधा च भवति इत्यर्थः। पर्य्यन्तः शेषसीमा। शब्दस्य प्रादुर्भावः शब्दप्रादुर्भावः। युगपदेककालः तस्य भावो यौगपद्यम्।

श्रीरा-टी—इदानीं वमाह। वः कैत्यादि। व्यपूर्वदानां सो वस उक्तः स च कसामीप्याद्यर्थेषु गम्यमानेषु व्यानां दानां स्याद्यन्तैः सहाभिधानप्राधान्यान्नित्यं स्यात् कसामीप्याद्यर्थभेदादनेकधा अनेकप्रकार इत्यर्थः। परसूत्रसापेक्षत्वादिह नोदाहृतम्।

## ३७४। वात् क्तेर्मोऽतोऽप्याः।

वात् ५।, क्तेः ६।, मः १।, अतः ५।, अप्याः ६।।

अकारान्तात् वात् परस्याः क्ते र्मः स्यात् नतु प्याः।

कृष्णमधिकृत्य प्रवृत्ता कथा, अधिकृष्णम्।

अप्याः किं? कृष्णस्य समीपात् गतः उपकृष्णात् गतः॥

## ३७५। त्रीप्सोर्वा।

त्री-प्सोः ६॥, वा।१।।

उपकृष्णं उपकृष्णेन कार्य्यम्। उपकृष्णं उपकृष्णे स्थितः।

---

अकारान्तशब्दस्य अव्ययीभावसमासे कृते क्तेर्लुक् त्येचेत्यनेन क्तेर्लुकि पुनर्लिङ्ग-संज्ञायां उत्पद्यमानविभक्तीनां स्थाने मः स्यात् नतु पञ्चम्या इत्यर्थः। यादृग् जातीयस्य प्रतिषेधो विधिरपि तादृग्जातीयस्येति न्यायात् पीवर्जनेनैव क्तेः प्राप्तौ क्तेर्ग्रहणं लुक् परादित्यत्रानुवृत्त्यर्थम्। कारकमाह कृष्णमधिकृत्य अधिकृष्णं अत्राधिशब्देन कर्मणि वाच्ये समासः। व्यंपूर्वमिति अधेः पूर्वनिपातः। क्तेर्लुगि त्यनेन कृष्णशब्दादनो लुक् अधिकृष्ण इत्यस्य पुनर्लिङ्गसंज्ञायां जातस्य सेः स्थाने मः एवं सर्वत्र। सामीप्य आह कृष्णस्य समीपं उपकृष्णं अत्र उपशब्देन सामीप्ये वाच्ये समासः। तत्र उपकृष्ण शब्दस्यापादानविवक्षायां जातायाः पञ्चम्या वर्जनान्न मकारः उपकृष्णादिति। अव्ययीभावादेव विभक्तेर्मकारविधानात् उपकृष्णमति-क्रान्तौ अत्युपकृष्णौ इत्यादौ पुनर्द्वितीया तत्पुरुषे विभक्तेर्मो न स्यात्॥ ३७४॥

श्रीरा-टी—अप्या इति पृथक् दकरं लुक् परादित्यत्राऽननुवर्त्तनार्थं कृष्णमधि-कृत्येत्यादि। यद्यपि क इति सामान्येनोक्तं तथाप्यभिधानात् त्रीप्सोरर्थ एव ज्ञेयः। एवं स्त्रीष्वधिकृत्य कथा प्रवर्त्तते अधिस्त्रीत्यादि। अन्ये तु प्स्वर्थ एव वसं कुर्वन्ति नित्यत्वादस्य त्रीप्सान्तदेनार्थकथनम्। उपकृष्णादिति अप्या इत्यस्य प्रत्युदाहरणेनैव सामीप्योदाहरणं दर्शितं एवं कुम्भस्य समीपं उपकुम्भमित्यादि। दण्डकाद्दक्षिणे नाहं सरितोऽद्रीन् वनानि च इत्यत्र एनत्यान्तदक्षिणेनेति व्यस्य सामीप्यार्थत्वेऽपि न सः अनभिधानात्।' गृहस्योपरि उपरि तिष्ठति शिरसो घट इत्यत्र सामीप्यार्थ-स्याविवक्षितत्वात् अन्यथा उपरिशब्दस्य द्वित्वं स्यात्॥ ३७४॥

अकारान्तादव्ययीभावात् परयोस्तृतीयासप्तम्योर्मो वा स्यात्। कृष्णस्य समीपं

## ३७६। लुक् परात्।

लुक् ।१।, परात् ५।।

**अकारान्तादन्यस्मात् वात् परस्याः क्तेर्लुक् स्यात्।**

## ३७७। सहः सोऽकाले।

सहः ६।, सः १।, अकाले ७।।

**सहस्य सः स्यात् नतु काले।**

---

उपकृष्णमिति स्थिते पश्चात्तस्य करणविवक्षायां अधिकरणविवक्षायाञ्च जातयोस्तृतीयासप्तम्योर्मो वा उपकृष्णं उपकृष्णेन कार्य्यं श्रेयः उपकृष्णं उपकृष्णे स्थितः साधुरित्यर्थः। एवं गङ्गायाः समीपं उपगङ्गं इत्यादौ चगैक्यवमिति क्लीवत्वे क्लीवे स्व इति ह्रस्वे तृतीयासप्तम्योः उपगङ्गं उपगङ्गेन उपगङ्गं उपगङ्गे पञ्चम्यां उपगङ्गात् इत्यादि। अन्यत्र सर्वविभक्तौ उपगङ्गमिति ॥ ३७५ ॥

श्रीरा-टी—अकारान्तात् वात् परयोस्तृतीयासप्तम्योर्मः स्याद्वा। वाशब्दस्य व्यवस्थावाचित्वात् सुमद्रं उन्मत्तगङ्गं एकविंशतिभारद्वाजमित्यादौ संज्ञिनदी संख्यावयवेभ्यः मा न वा मादेशः ॥ ३७५ ॥

सामान्यविधानेऽपि विशेषविधिभ्यां पूर्वसूत्राभ्यां अवर्णे बाधिते तद्भिन्नस्यैव प्राप्तौ परादिति ज्ञापयति पूर्वतरात् अप्वा इति पूर्वात् तीसप्तोरिति वा इत्यपि नानुवर्त्तते। क्तेरित्यनुवर्त्तत एव ततश्च अकारान्तभिन्नादिजन्ताद्धसन्ताच्च अव्ययीभावात् परासां सर्वविभक्तीनां नित्यं लुक् स्यादित्यर्थः। यथा उपहरि उपगौरि उपलिट् उपपयः इत्यादि ॥ ३७६ ॥

श्रीरा टी—वेति नानुवर्त्तते क्लीवाद्वेत्यत्र वाग्रहणात् क्तेरित्यनुवर्त्तते इत्यत आह क्तेरिति ॥ ३७६ ॥

सादृश्ये आह हरेः सदृशमिति सहशब्देन सादृश्ये वाच्ये समासेऽनेन सहस्य सादेशः पूर्वेण विभक्तेर्लुक्। साकल्ये आह तृणेनेति। यदर्थं यद्गृहीतं तत्र तस्य निःशेषत्वं साकल्यम्। तृणेन सह सकलमत्ति सतृणं किञ्चिदप्यदनीयं न त्यजतीत्यर्थः। अनुक्रमे आह अनुज्येष्ठमिति ज्येष्ठस्य हीनो भूत्वा गच्छतीत्यर्थः। ज्येष्ठमनुक्रम्य इत्यत्र हीनार्थेन अनुना योगे द्वितीया न तु कर्मणि अन्यथा कारकत्वादेव समासे सिद्धे अनुक्रमस्य पृथक् ग्रहणं विफलं स्यात्।

हरेः सदृशं सहरि। काले तु सहपूर्वाह्णम्।

तृणेन सह सकलमत्ति सतृणम्। ज्येष्ठमनुक्रम्य अनुज्येष्ठम्। मद्राणां समृद्धिः सुमद्रम्। विष्णुं विष्णुं प्रति प्रति-

---

अत्राकर्मकोऽयं क्रमधातुः। ऋद्धौ उदाहरति मद्राणां समृद्धिः सुमद्रमिति। वीप्सायां आह विष्णुं विष्णुं प्रति प्रतिविष्णु इति। एवम् अतिविष्णु परिविष्णु अनुविष्णु इति। पर्य्यन्ते आह अग्नेर्ग्रन्थपर्य्यन्तमधीते साग्नि अत्र सहस्य सादेशः अग्निग्रन्थात् परं किमपि नाधीते इत्यर्थः। योग्यत्वे आह रूपस्य योग्यमनुरूपमिति। पश्चादर्थे आह शिवस्य पश्चादनुशिवमिति। अनतिक्रमे आह शक्तिमनतिक्रम्य यथाशक्ति इति। शक्तिः सामर्थ्यं यादृशं सामर्थ्यं तादृशं धारयतीत्यर्थः। अत्रापि अतिशब्देन योगे द्वितीया न तु कर्मणि। शब्दप्रादुर्भावे आह हरेः शब्दः प्रादुर्भूत इति हरि। इति शब्देन शब्दप्रादुर्भावो वाच्यः। हरिरित्ययं शब्दो लोके प्रादुर्भूत इत्यर्थः। अभावे आह पापस्याभावोऽपापमिति। अत्र नञोऽकारादेशः। एवं मक्षिकाणामभावो निर्मक्षिकमित्यादि। अत्ययोऽपि अभाव एव। अत्ययो वसन्तस्य अतिवसन्तम्। एवमतिशीतमित्यादि। एवम् ऋद्ध्यभावेऽपि ऋद्ध्यभावो यवनस्य दुर्यवनम्। ऋद्ध्यभावो भिक्षाया दुर्भिक्षम्। यौगपद्ये आह चक्रेण युगपद्धेहि सचक्रमिति। हे विष्णो एकस्मिन् काले चक्रेण सह गदां धारय इत्यर्थः। अनेकधा इत्यस्य उदाहरणमाह यावन्तः श्लोकास्तावन्तोऽच्युतप्रणामा यावच्छ्लोकमिति। श्लोकानामियत्तया प्रणामानामियत्ता विवक्षिता इत्यर्थः। एवं यावद्भोजनपात्रं ब्राह्मणान्निमन्त्रयस्व इति। यावन्ति भोजनपात्राणि वर्त्तन्ते तावतो ब्राह्मणानित्यर्थः॥ ३७७॥

श्रीरा टी—वादित्यस्यार्थवशात् क्तेर्विपरिणामः तेन वे इत्यर्थः हरेः सदृशः इति सहरि गुरुरित्यत्र गुणभूतेऽपि सादृश्ये वः सादृश्येत्यनेन गुणागुणभूतसादृश्यग्रहणात्। एवं सदृशः किख्याः सकिखि हरेः सादृश्यं सहरि गुरोः सकिखि कुकुरस्येत्यादौ किखिः खिँखीति ख्यातः शृगालभेदः। तथाच किखिः शृगालभेदे स्यादिति विश्वः वानरीति केचित्। सह पूर्वाह्णमिति पूर्वाह्णस्य सदृशमित्यर्थः। कालस्य निषेधान्न सहस्य सः तृणेन सहेति यदर्थं यद्गृहीतं तत्र तस्याः शेषत्वं साकल्यं सतृणमत्ति तृणमपि न परित्यजतीत्यर्थः। ज्येष्ठमनुक्रम्येति अनुक्रमं आनुपूर्व्वम् अनुज्येष्ठं प्रविशति ज्येष्ठानुपूर्व्वेण प्रविशतीत्यर्थः। मद्राणां समृद्धिरिति सुमद्रं वर्त्तते सुभिक्षं वर्त्तते मद्राणां भिक्षाणां वाधिक्येन ऋद्धिः प्रवर्त्तते इत्यर्थः

विष्णु । अग्निग्रन्थपर्य्यन्तमधीते साग्नि । रूपस्य योग्यं अनुरूपम् । शिवस्य पश्चात् अनुशिवम् । शक्तिमनतिक्रम्य यथाशक्ति । हरेः शब्दः प्रादुर्भूतः इतिहरि । पापस्याभावः

---

यदा समृद्धेः प्राधान्यं तदैव वसः । यदा समृद्धेरप्राधान्यं तदा प्रादित्वात् षः एव यथा समृद्धाः मद्राः सुमद्रा इति समृद्ध्या मद्राणां विशिष्यमाणत्वात् । विष्णुं विष्णुं प्रतीति यद्यप्यस्य नित्यसत्वात् वाक्याभावः तथापि धिक्समयेत्यनेन वीप्सायां प्रतिना द्वीविधानार्थं वाक्यात् वाक्यस्थितिः वीप्सार्थस्य सेनोक्तत्वान्न द्विः । अग्नि-ग्रन्थपर्य्यन्तमधीते इति यद्यप्यत्र साकल्यमस्ति तथाप्यग्निग्रन्थपर्य्यन्तमधीते ततोऽन्यत् नाधीते इत्यस्य असाकल्यार्थं वचनम् । एवं सालोकमधीते असालोकेऽप्यध्ययने आलोकपर्य्यन्तं पठतीत्यर्थः । रूपस्य योग्यमिति अनुरूपं ददाति रूपस्य योग्यं ददातीत्यर्थः । शिवस्य पश्चादिति अनुशिवं भक्ताः । एवमनुरथं पदाताः रथानां पश्चादित्यर्थः तथाच मेघदूते तदनु जलद श्रोष्यसि श्रोत्रपेयमिति तु षौ स्यात् अवस्थि-वर्जनमिति परे । शक्तिमनतिक्रम्येति यथाशक्ति ददाति एवं यथाबलमधीते इत्यादि हरेः शब्दस्य प्रादुर्भूतमिति प्रादुर्भावः प्रकाशः हरिशब्दो लोके प्रकाशते इत्यर्थः इति पाणिनिः । एवं विक्रमादित्योऽपि । अभावस्योदाहरणमाह अपापमिति । अभावः संसर्गाभावः स च प्रतियोगिनिरूपणाधीननिरूपणक एव तेन अर्थाभाव ऋद्ध्यभाव-प्रध्वंसाभावोपभोगाभावानां ग्रहणं अत्रार्थाभावो ह्युत्तरदार्थाभावः यथा अपापं मक्षिकाया अभावो निर्मक्षिकं इत्यादि । ब्राह्मणो न भवतीत्यत्र प्रसज्यप्रतिषेधनञा ब्राह्मणत्वधर्मो निषिध्यते गौरश्वो न भवतीत्यत्र अन्योन्याभावेनार्थान्तरं निषिध्यते अतो नाप्युभयत्रार्थाभावः अर्थशब्दस्यात्र वस्तुपरत्वात् ऋद्ध्यभावो यवनस्य दुर्यवनं दुर्भिक्षमित्यत्र नोत्तरदार्थाभावः किन्तु यवनादिसम्बन्धिन्या ऋद्धेरिति । अत्ययः शीतस्य अतिशीतम् अत्ययो वसन्तस्य अतिवसन्तमित्यादि । अत्ययोऽतिक्रमः प्रध्वंसा-भावः स च नात्यन्ताभावः अर्थाभावे हि क्वचित् प्रदेशे वस्तुनि संसर्गाभावो न वस्तुनः प्रध्वंस इति । यौवनस्य नायमुपभोगकालोऽतियौवनम् अतिकम्बलमित्यादि उपभोग-कालस्तु विद्यमानस्यैव यौवनादेर्वर्त्तमानकाले उपभोगाभावः अतो नार्थाभावो-ऽत्ययश्चेति । चक्रेण युगपद्धेहीति यौगपद्यम् एककालीनता सचक्रं निधेहि युगप-च्चक्रं निधेहीत्यर्थः । सहः सोऽकाले इति सहस्य सः यौगपद्येष्विति ष्वनिर्देशादन्येषु अर्थेष्वपि तेनावधारणे गम्यमाने यावदिति व्यस्य नित्यं वस इत्यत आह यावन्त

अपापम्। चक्रेण युगपद्धेहि सचक्रम्। यावन्तः श्लोका-स्तावन्तोऽच्युतप्रणामाः यावच्छ्लोकम्।

---

इत्यादि। अवधारणमियत्तापरिच्छेद इयदेवेति निश्चयः यावच्छ्लोकमच्युतप्रणामाः एवं यावद्भोजनपात्रं ब्राह्मणानामन्त्रयस्व यावद्वृद्धं यून आनयस्व इत्यादि। अव-धारणे किं? यावत् दत्तं तावद्भुक्तं कियद्दत्तं कियद्भुक्तं इत्यादि नावधारितमित्यर्थः। एवमसादृश्यार्थे वर्त्तमानस्य यथेति व्यस्य वसस्तेन गे ये तथाभूताः यथातथमिति ये ये वृद्धा यथावृद्धं ब्राह्मणास्तिष्ठन्ति यथाशक्ति ददतीत्यत्रानुक्रमानतिक्रमयोः पूर्व्वेणैव इति सादृश्ये तु यथा वृद्धस्तथा युवा इह गुणभूतसादृश्ये निषेधादन्यत्र स्यादे-वेति ज्ञापितम्। अव्यस्य च प्रतिनाऽल्पत्वे। अल्पत्वे वर्त्तमानेन प्रतिना सह व्यस्याव्यस्य च वो नित्यम्। स्वः प्रति सायं प्रति सूपप्रति शाकप्रति स्वर्गादेः स्तोकमित्यर्थः। अल्पत्वे किं? वृक्षं प्रति द्योतते विद्युत् वृक्षं लक्षीकृत्य विद्योतते इत्यर्थः। एक द्वि त्रिचतुरऽक्षशलाकानां परिणा द्यूतपराजये। द्यूतपराजये गम्य-माने परिणा सहैषां नित्यं वः स्यात्। एकेन परि एकपरि द्विपरि त्रिपरि चतुष्परि एकादिशब्दैरक्ष एवाभिधीयते द्यूतपराजय इत्यस्य सम्बन्धात्तथाहि एकेनाक्षेण हारितमित्यादि। क्रमेणार्थः तथाच पञ्चभिरक्षैः शलाकाभिर्वा पञ्चिका नाम द्यूतं तत्र यदि पञ्च उत्ताना: अवाञ्चो वा पतन्ति तदा पातयिता जयति अन्यथा पाते पातयिता हारयतीति। एवं अक्षपरि शलाकापरि अक्षेण शला-कया हारितमित्यर्थम्। वृहाक्षशलाकयोरेकत्वे वर्त्तमानयोरेवायं सः स्वभावात् न हि स्वभावार्थौ निमित्तान्तरमपेक्षते इति। अनोर्दैर्घ्यसामीप्ययोः। अनयो-र्वर्त्तमानस्यानोः स्याद्यन्तेन सह वो नित्यं स्यात्। अनुयमुनं मथुरा यमुनेव मथुरा दीर्घेत्यर्थः। अनुवृक्षं नदी वृक्षस्य समीपा इत्यर्थः। धर्मिवचनस्यानो-रनेन सः सामीप्यधर्मवाचिनस्तु पूर्व्वेणैव यथा अनुवृक्षं नदी वृक्षस्य सामीप्ये इत्यर्थः। अनयोः किं? वृक्षमनु विद्योतते विद्युत् वृक्षं लक्षीकृत्य इत्यर्थः। नाम्नि नदीभिरन्यार्थे। नदीवाचिभिः शब्दैः सहान्यदार्थे वर्त्तमानस्य स्याद्यन्तस्य वो नित्यं स्यात् संज्ञायां विषये। उन्मत्तगङ्गं लोहितगङ्गं शनैर्गङ्गं तूष्णीं गङ्गं चत्वारि देशनामानि। नाम्नि किं? शीघ्रा गङ्गा यस्मिन् स शीघ्रगङ्गो देशः अन्यार्थे किं? कृष्णा चासौ वेन्ना चेति कृष्णवेन्ना। तिष्ठद्ग्वाद्याः। तिष्ठद्ग्वाद्या वसंज्ञका निपात्यन्ते। तिष्ठद्ग्वादिसु तिष्ठद्गु वहद्गु चायतीगवम्। खले संक्लियमाणाभ्यां नूयमानाच्च संस्कृतात्। नूनाद्यवबुषेपूर्णात् पूर्य्यमाणात् यव-

तथा। आयतीपुण्यपापाघाव् समोऽप्यथ समं समात्। भूमिः पदातिरित्येती सुनिर्दुरपरात् समम्। प्ररथं प्रमृगं प्राक्लमपसव्यं प्रदक्षिणम्। सम्प्रत्यसम्प्रत्ये-कान्तं तथापदिशमित्यपि। षट्त्रिंशत् कथिता ज्ञेयं शेषं शिष्टप्रयोगतः। तिष्ठन्ति वहन्ति आयन्ति च गावो यस्मिन् काले स कालः तिष्ठद्गु वहद्गु आयाती-गवञ्च। खले यवा यस्मिन् काले स कालः खलेयवं संस्क्रियमाणयवं लूयमानयवं संस्कृतयवं लूनयवं खलेवुषमित्यादि पूर्णा यवा यस्मिन् काले स कालः पूर्णयवं पूर्यमाणयवम्। आयत्यः समाः संवत्सरा आयतीसमम् एवं पुण्यसमं पापसमम् अघसमं समत्वं भूमेः समं भूमि समभूमि एवं समं पदाति समपदाति। पूर्वदार्थ-प्राधान्य एव वसः परदार्थप्राधान्ये तु समभूमिः समपदातिरिति य एव समाः पदा-तयो यस्मिन् समपदातीति परायणं समशब्दस्य वा सममादेशो निपातनात् समं भूमि समं पदातीत्यन्ये। समार्थसममिति व्यस्ताभ्यां सह व स इति कश्चित् शोभनत्वं समस्य सुषमं निःषमं दुःषमम् अपरसमम्। एवं प्रगतत्वं रथस्य प्ररथं प्रमृगं प्राक्लमपसव्यं प्रदक्षिणमिति। परदार्थप्राधान्यात्तु कुप्राद्योर्नित्यमिति ष एव सम्प्रतिशब्दं पठित्वा असम्प्रतीति पठितं वसे कृते सान्तराभावात्। एकमन्तस्य एकान्तं दृशोर्मध्यमपदि शमिति। अस्याकृतिगणत्वात् अपदक्षिणमित्यादि। इह यद्यत् कार्य्यं लक्षणेन न सिध्यति तत्तत् सर्वं निपातनाज्ज्ञेयम्। तिष्ठद्गवादीनां वादन्यसो न स्यात् यथा परमं तिष्ठद्गु इत्यादि वसस्तु स्यादेव तथाच अतिष्ठद्गु जपन् सन्ध्यां प्रक्रान्तामायती-गवमिति भट्टिः। अभिप्रत्योराभिमुख्ये लक्षणद्वा वा। आभिमुख्य वर्त्तमानयोरभिप्रे-तोर्लक्षणेऽर्थे विहिता या द्वो तदन्तेन सह वः स्याद्वा। अभ्यग्नि प्रत्यग्नि पक्षे अभ्यग्निं प्रत्यग्निं शलभाः पतन्ति। अग्निं लक्षीकृत्य शलभाः पतन्तीत्यर्थः। अत्राग्नि-र्लक्षणं तेन पतङ्गानां पातो लक्ष्यते तयोर्लक्ष्यलक्षणसम्बन्धो यथाऽभिप्रतिभ्यां द्योत्यते तथा शब्दशक्तिस्वभावादाभिमुख्यमपि द्योत्यते अतएव अग्नेरभिमुखमेव पतङ्गाः पतन्ति न पार्श्वे न पृष्ठे इत्यर्थः। आभिमुख्ये किम्? गङ्गामभिवसति। लक्षणद्वेति किम्? स्रुघ्नं प्रतिगच्छति स्रुघ्नान्मथुरायाञ्चलितो दिङ्मोहात् दिग्-भ्रमात् स्रुघ्नमेव निवर्त्तत इत्यर्थः। नात्र लक्षणे द्वो किन्तु ढ इति। आङ्पर्य्यप-वहि रक्षां प्या। एषां प्यन्तेन सह वः स्याद्वा। आपाटलिपुत्त्रं परित्रिगर्त्तं अपत्रिगर्त्तं वहिर्ग्रामं प्राक्ग्रामं वृष्टो देवः पक्षे आ पाटलिपुत्त्रात् परित्रिगर्त्तेभ्यो इत्यादि। वहिरादिसाहचर्य्यादाङादीनां योगे येष्वर्थेसु प्यो तेष्वर्थेसु एवेह ग्रहणं तेनापगतः शब्दात् अपशब्दः अपधर्मः अपचार इत्यादौ क्रान्तादौ निरादेः इति षः। वहिरङ्गो गुण इत्यत्र त्वन्यपदार्थप्राधान्याद्वः। वहिरङ्गं प्राग्ग्राम

३७८। शरद्विपाड़यश्चेतोमनोविड्डपान-
ड्डिमवद्दिद्दिवनडुद्दिक् चतुर्यत्तदो ऽः।

शरद्—तद्; ५।, अः १।

एभ्यः अः स्यात् वे। उपशरदम्।

---

इति तु विशेषणविशेष्यत्वेन ष सः। पारे मध्ये ष्या। पारे मध्ये इत्येतयोः ष्यन्तेन सह वः स्याद्वा। पारेगङ्गं मध्ये काशि सूत्रनिर्देशात् ङ्याः ष्वलुक् पचे पारे गङ्गायाः मध्ये काश्याः। गङ्गापारं काशीमध्यम् इति तु षीषात्। एके तु षष्ठेऽन्तरोग्रहणं कृत्वा अग्रे ग्रामस्य अग्रग्रामम् अन्तः प्रयोगम् अन्तः प्रयोगस्येत्याहुः। संख्याया विद्याजन्मैकयोगैः। विद्यया जन्मना वा एको योगो यत्र तद्वाचिभिः सह संख्यावाचिनो वः स्याद्वा। द्वौ मुनी व्याकरणस्य द्विमुनि व्याकरणस्य विद्यया पाणिनिकात्यायनयोर्मुन्योरेको योगः। पूर्वदार्थप्राधान्य एव वसस्तेन द्विमुनिरागम इत्यत्रान्यदार्थप्राधान्याद्वः। एके तु वा त्वन्यार्थे इति सूत्रं विधाय द्विमुनिशब्दानुशिष्टः द्विमुनिषां इत्याहुः। द्वौ गार्ग्यौ लोकानां द्विगार्ग्यं दशभारद्वाजं द्वयोर्गार्ग्ययो-र्दशभारद्वाजानाञ्च जन्मनैकयोगः। समाहारे नदीभिश्च। समाहारेऽर्थे नदीवाचिभिः सह संख्यावाचिनां वः स्यात्। द्वयोर्गङ्गयोः समाहारः द्विगङ्गं सप्तगोदावरम्। समाहारे किम्? एकनदी एके त्वेकभिन्न संख्याया एव वसं विधाय एकमुनिर्भाष्य-स्येत्यादि प्रत्युदाहरन्ति॥ ३७७॥

शरद् च पिपाश् च अयस् च चेतस् च मनस् च विश् च उपानह् च हिमवच्च चिद् च दिव् अनडुह् च दिश् च चतुर् च यद् च तद् चेति तस्मात्। शरदः समीपम् उपशरदम् एवम् उपविपाशम् उपायसम् उपचेतसम् उपमनसम् उपविशम् उपोपानहम् उपहिमवतम् उपविदम् उपदिवं प्रत्यनडुहं प्रतिदिशम् उपचतुरम् उपयदम् उपतदमिति॥ ३७८॥

मौरा-टी—शरच्च विपाट् च अयश्च चेतश्च मनश्च विट् च उपानच्च हिमवांश्च विच्च द्यौश्च अनड्वांश्च दिक् च चतुश्च यच्च तत् तस्मात् उपशरदमिति शरदः समीपमिति वाक्यम् एवम् उपविपाशम् उपायसम् उपचेतसं प्रतिमनसं प्रतिविशम् उपोपानहम् उपहिमवतम् उपविदं प्रतिदिवं प्रत्यनडुहं प्रतिदिशम् उपचतुरम् उपयदम् उपतदम् इति। वे किम्? चतसृणां दिशां समाहारः चतुर्दिक् तथाच चतुर्दिगीशानवमन्य मानिनीति कालिदासः। अन्ये तु पथिद्दृशदुपसत्-किमदनेहः शरदादौ पठन्ति अयश्चेतो मनोविड्डदस्तु नाहुः॥ ३७८॥

## ३७९ । जराया जरस् च ।

जरायाः ६।, जरस् ।१।, च ।१। ।

**उपजरसम् ।**

## ३८० । सरजसोपशुने ।

सरजसस-उपशुने १॥ ।

**निपात्ये ।**

## ३८१ । सम्परःप्रत्यनुभ्यो ऽक्ष्णः ।

सम् परस् प्रति अनुभ्यः ५॥।, अक्ष्णः ५। ।

**समक्षम् ।**

---

जराशब्दाद् स्यादव्ययीभावे तस्य जरसादेशश्च । जरायाः समीपम् उपजरसम् इति ॥ ३७९ ॥

श्रीरा-टी—जरायाः अः स्याद्वा तस्मिन् जरसादेशश्च । उपजरसमिति जरायाः समीपमिति वाक्यम् ॥ ३७९ ॥

रजसः सदृशं सरजसं शुनः समीपम् उपशुनम् एतौ निपात्यौ ॥ ३८० ॥

श्रीरा-टी—सरजसश्च उपशुनश्च ते । रजसा सह सकलमत्ति सरजसं साकल्ये वः । सहः सोऽकाले इति सहस्य सः । हे तु सरजसं पद्ममित्यसाधु । सरजसतामवनेरपां निपातः इति किराते चिन्त्यं शुनः समीपम् उपशुनं श्वयुवमघोनामिति ते निषिद्धेऽपि वस्योक्तं निपातनात् सहोपाभ्यामेव नियमात् उपरजः प्रतिश्व इत्यत्र अन इत्यनेन सूत्रेण अल्योऽपि न स्यात् ॥ ३८० ॥

एभ्यः परादक्ष्णः षः स्यादव्ययीभावे । अक्ष्णोः समीपं समक्षम् अक्ष्णः परः परोक्षः । अत्र परपदस्य निपातनादसन्तस्य परस् इति भागस्य ग्रहणम् । तेनाव्ययत्वादव्ययीभावः । अक्ष्णोरभिमुखं प्रत्यक्षम् अन्वक्षञ्च प्रत्यक्षः परोक्ष इति तु अथाक्षमिन्द्रिय इत्यमरोक्तेः न इन्द्रियवाचिना अकारान्तेनाक्षशब्देन अक्षाणां प्रति प्रत्यक्षः अक्षाणां परः परोक्ष इति षष्ठीसमासे व्यं पूर्वमति पूर्वनिपातः ॥ ३८१ ॥

श्रीरा-टी—सञ्च परश्च प्रतिश्च अनुश्च ते, तेभ्यः परादक्ष्णोऽः स्यात्। समक्षमिति अक्ष्णोः समीपमिति वाक्यं पर इति कृतसान्ताक्षशब्दे परे मनीषादित्वात्

## ३८२ । अनः ।

अनः ५।।

अनन्तात् अः स्यात् वे। अध्यात्मम्।

## ३८३ । क्लीवाद्वा ।

क्लीवात् ५।, वा ।१। ।

उपचर्मम् उपचर्म।

## ३८४ । झप्नदीपौर्णमास्याग्रहायणीगिरेर्वा ।

झप्—गिरेः ५।, वा ।१। ।

उपसमिधम् उपसमित्, उपनदम् उपनदि।

इति वः।

---

परिशब्दस्यादिष्टस्य परस् इत्यस्य ग्रहणं अक्ष्णः परि परोक्षं आङ्पर्य्यप इत्यादिना यः अन्ये तु अक्षि अक्षि परि परोक्षमिति वीप्सायां व इत्याहुः। एके तु अक्ष्णोः परः परोक्षं पर इत्यपस्कारादित्वात् सुट् इत्याहुः अक्षिणी प्रति प्रत्यक्षं अभिप्रत्योराभिमुख्ये इत्यादिना वः। वीप्सायामित्यन्यः प्रत्यक्षो घट इति तु इन्द्रियार्थेनाक्षशब्देन प्रादिषात् अक्ष्णः समीपमन्वक्षं सामीप्ये वः ॥ ३८१ ॥

पृथग्योगात् समादेर्नानुवृत्तिः। अनन्तादः स्यादव्ययीभावे। आत्मानमधिकृत्य अध्यात्मम्। एवं अधिराजं अधिपूषम् ॥ ३८२ ॥

गोरा-टी अध्यात्ममिति आत्मानमात्मनि वा अधिकृत्य अध्यात्मं कार्थे वः अकारत्वे न्वोर्लोपो ताविति नलोपे ययोरित्यादिना अलोपः ॥ ३८२ ॥

क्लीवादनन्तादः स्यात् वा अव्ययीभावे। चर्मणः समीपं उपचर्मं उपचर्म एवं उपकर्मं उपकर्म ॥ ३८३ ॥

गोरा-टी—क्लीवलिङ्गादनन्तादः स्यात् वा वे। उपचर्ममित्यादि चर्मणः समीपमिति वाक्यं सामीप्ये वः एवं प्रत्यहं प्रत्यह वीप्सायां वः ॥ ३८३ ॥

झपान्तात् नद्यादेश्च अः स्यात् वा अव्ययीभावे। वाग्रहणं परत्र वाधिकारनिवृत्त्यर्थम्। समिधः समीपं उपसमिधं उपसमित्। एवं उपतड़ितं उपतड़ित् प्रतिनदं प्रतिनदि प्रतिपौर्णमासं प्रतिपौर्णमासि प्रत्याग्रहायणं प्रत्याग्रहायणि उपगिरं उपगिरि अप्रत्ययाभावपक्षे दीर्घान्तानां क्लीवे ह्रस्वः अन्येषां लुक्

परादिति विभक्तेर्लुक्। अनेकधा इत्युक्तेः इत्यादयः साध्याः इत्युक्तेश्च विशेषोऽपि अग्रे मध्ये पारे अन्तरः षष्ठ्या वा। एवं षष्ठ्यन्तेन सह अव्ययीभावः स्यात् वा। केषाञ्चिलुगभिधानात्। अग्रेरामं अग्रेरामस्य मध्येकाशि मध्ये काश्याः पारे गङ्गायाः पारेगङ्गं अन्तःप्रयागं अन्तःप्रयागस्य एवं पारेसमुद्रं लङ्कायामिति भट्टौ। पारे सिन्धुपुरी पुरीपरिसरे प्राचीरमभ्रंलिहमिति महानाटके। पर्य्यपाङ्वहिरञ्चां पञ्चम्या वा। एषामव्ययानां पञ्चम्यन्तेन सह अव्ययीभावः स्यात् वा। परित्रिगर्त्तं परित्रिगर्त्तात् अपत्रिगर्त्तं अपत्रिगर्त्तेभ्यः आपाटलिपुत्रं आ पाटलिपुत्रात् वहिर्ग्रामं वहिर्ग्रामात्। प्रत्यक्तरु प्रत्यक्तरोः। प्रत्यभेर्लक्षणेनाभिमुख्ये वा। आभिमुख्ये वर्त्तमानायाः प्रत्यभ्योर्लक्षीभूतेन सहाव्ययीभावः स्यात् वा। प्रत्यग्नि प्रत्यग्निं शलभाः पतन्ति अग्निं लक्षीकृत्य पतन्तीत्यर्थः। अनोर्दैर्घ्ये। अनुगङ्गं काशी गङ्गावत् दीर्घा इत्यर्थः। रूढौ नद्या। उन्मत्तगङ्गं लोहितगङ्गं देशः। द्व्यादिः समाहारे नद्या। समाहारे द्विप्रभृतेर्नद्या सहाव्ययीभावः स्यात्। द्वयोर्गङ्गयोः समाहारः द्विगङ्गं एवं त्रियमुनम्। काले खलेयवादीनि। कालेऽर्थे अव्ययीभावे खलेयवादीनि निपात्यन्ते। खले यवा अस्मिन् काले। खलेयवं संस्कृतयवं संस्क्रियमाणयवं खलेबुषं संस्कृतबुषं संक्रियमाणबुषं लूनयवं लूयमानयवं पूतयवं पूयमानयवं एवं तिष्ठन्ति वहन्ति आयन्ति गावो यस्मिन् काले इत्यर्थे तिष्ठद्गु वहद्गु आयतीगवं स्वभावादेते ऽन्यपदार्थपरत्वात् कालविशेषवाचिनः तथा समत्वं भूमेः समं भूमि समंपदाति सममिति मान्तमव्ययं तुल्यार्थे पचे समभूमिः समपदातिरित्यपि जौमराः। एवं आयतीत्व समाया आयतीसमं पापत्वं समायाः पापसमं एवमपरसमं अघसमम्। समा वत्सरः तथा शोभनत्वं समस्येत्यादि वाक्ये सुषमं विषमं निःषमं दुःषमम्। एषु षत्वं प्रागुक्तं एवं निम्नगं प्रदक्षं प्रदक्षिणमित्यादि। तथा क्वचिदव्ययस्य पूर्वनिपातो नास्ति यथा अक्षेण परि अक्षपरि शलाकापरि एकपरि द्विपरि इत्यादि। एवं यथायथं तथातथं यथातथं ब्राह्मणास्तिष्ठन्ति। यथाशब्दस्य सादृश्यवाचित्वे तु न स्यात् यथावृद्धस्तथा युवेति। अव्ययीभावसंज्ञा तु द्वन्द्वबहुव्रीह्यादिवन्निरन्वया एव। तेनाव्ययीभावस्य अनव्ययत्वे अकारान्तात् पञ्चम्यादेः स्थितिः स्यात् तद्भिन्नात् सर्वविभक्तेर्लोपोऽपि सहरीकरोति इति च्वौ परे दीर्घः स्यात्। सहरिम्मन्य इत्यत्र खिति परे मन् स्यादिति ॥ ३८४ ॥

गोरा-टी—भप्प्रत्याहारः। भप् च नदी च पौर्णमासी च आग्रहायणी च गिरिश्च तस्मात् भवन्तान्नयादेश्च अः स्यात् वा वे। पुनःवाग्रहणं परत्र नित्य-

## षट्समासाः ।

### ३८५ । पथ्यप्पुरः से ।

पथिन्-अप् पुरः ५।, से ७। ।

एभ्यः अः स्यात् से सति । सखिपथौ, रम्यपथो देशः, महापथः, दक्षिणापथः, चतुष्पथम्, उपपथं विमलापं सरः, विष्णुपुरम् ।

---

त्यर्थं उपसमिधमित्यादि । समिधः समीपमिति वाक्यम् । एवं उपदृशदं उपदृशत् उपतड़ितं उपतड़ित् इत्यादि । उपसमित् उपनदमित्यादि । नद्यादीनां स्वरूपस्य ग्रहणं नद्याः समीपमिति वाक्यम् । एवं उपपौर्णमासं उपपौर्णमासि उपाग्रहायणं उपाग्रहायणि उपगिरं उपगिरि उपगिरन्नतुभिर्विभासमानामिति माघः ॥ ३८४ ॥

इत्यव्ययीभावः (व) ।

---

पथिन् च अप् च पुर् चेति तस्मात् समासाधिकारेऽपि समासग्रहणं सर्वसमासप्राप्त्यर्थम् । सखा च पन्थाश्च सखिपथौ । रम्यः पन्था यत्र स रम्यपथो देशः । महांश्चासौ पन्थाश्चेति महापथः । दक्षिणस्यां दिशि दक्षिणे देशे वा पन्थाः दक्षिणापथः अत्र दक्षिणोत्तरादाहौ इत्यनेन सप्तम्याः स्थाने आ इत्यादेशः तद्धितादेशत्वान्नलोपः एवं उत्तरापथः । चतुर्णां पथां समाहारश्चतुष्पथं पथः समीपं उपपथं एषु अप्रत्यये न्वोर्लोपोऽताविति न लोपे यपोरितीकारलोपः । विमला आपो यत्र तद्विमलापं सरः विष्णोः पूः विष्णुपुरं अत्र क्लीवत्वमभिधानात् से इत्यस्य पादसमाप्तिपर्य्यन्तेषु इत्यधिकारः ॥ ३८५ ॥

श्रीर-टी—पन्थाश्च आपश्च पूश्च तत् तस्मात् स इति सामान्यार्थो मतः षट्सु उदाहरति सखिपथावित्यादि सखा च पन्थाश्च तौ रम्यः पन्था यत्र महांश्चासौ पन्थाश्चेति दक्षिणस्यां पन्था इत्यर्थे दक्षिणोत्तरादाहौ इति स्मा आकारादेशः चतुर्णां पथां समाहारः पथः समीपे उपपथं विमला आपो यस्मिन् विष्णुपुरमिति

३८६ । द्व्यन्तर्गेर्योऽपोऽनात् ।

द्वि-अन्तर्-गेः ५।, ई ।१।, अः १।, अपः ६।, अनात् ५। ।

एभ्यो ऽनवर्णान्तेभ्यो ऽपो ऽकार ईः स्यात् ।

द्वीपम् अन्तरीपं समीपम् । अनात् किं ? प्रापम् ।

३८७ । समापानूपौ ।

समाप-अनूपौ १॥ ।

निपात्यौ । समापो देवयजनं, अनूपो देशः ।

३८८ । सम् तुम् मनः-कामे, ऽवश्यं ल्ये,

---

विष्णोः पूरिति वाक्यं यद्यपि अदन्तः पुरशब्दोऽस्ति तथापि पुर्शब्दे नानिष्टनिवारणार्थमिदम् ॥ ३८५ ॥

अन्तरिति रेफान्तमव्ययम् । दिश्च अन्तर् च गिश्च द्व्यन्तर्गि तस्मात् ई इति लुप्तप्रथमैकं न अः अनः तस्मात् द्वयोर्दिशोरापो यत्र तत् द्वीपं अन्तर्गता आपो यस्य तत् अन्तरीपं शोभना आपो यत्र तत् समीपम् । से किं ? अस्य अन्तः आपो वर्त्तन्ते ॥ ३८६ ॥

शीरा-टी—द्वौ च अन्तश्च गिश्च तत् तस्मात् नः अः अनस्तस्मात् ई इति लुप्तशीक्तं द्विशब्दान्तः शब्दौ अनदन्तावेव अवर्णोभ्य इति गेर्विशेषणम् । एभ्यः इति द्विशब्दादन्तः शब्दादनवर्णान्ताद्गे रित्यर्थः । द्वीपमित्यादि द्विगता आपो यत्र इति एवं अन्तर्गता आपो यत्र सम्यक् आपो यत्रेति वाक्यं एषां रूढ़िशब्दत्वाद्‌-तद्व्युत्पत्तिमात्रं एवमन्वीपं प्रतीपमित्यादि । प्रापमिति प्रगता आपो यत्र इति वाक्यं एवं परापमिति ॥ ३८६ ॥

एतौ निपात्यौ । शोभना आपो यत्र स समापो देवयजनं अनुगता आपो यत्र स अनूपो देशः ॥ ३८७ ॥

शीरा-टी—निपातो ह्यर्थविशेषे अत आह समासो देवयजनमित्यादि । समीचीना आपो यत्र अनुगता आपो यत्रेति वाक्यं अन्यत्र समीपमन्वीपमिति अन्ये तु समाङ्पूर्वादपः समीपमिति साधयन्ति ॥ ३८७ ॥

सम् इति लुप्तप्रथमैकम् । तुम् इति च लुप्तप्रथमैकम् । मनःकामाभ्यां

# ऽन्त्यलोपं, सम्-मांसौ तु हित-तते पाक-पचने वा।

सम् ।१।, तुम् ।१।, मनः-कामे ७।, अवश्यं ।१।, ल्ये ७।, अन्तलोपं २।, सम्मांसौ १॥, तु ।१।, हित-तते ७।, पाक पचने ७।, वा ।१। ।

सम् तुम् च मनः-कामयोः, अवश्यं ल्ये, अन्त्यलोपं याति ; सम् हिततयोः, मांसः पाक-पचनयो र्वा ।

समनाः सकामः, रन्तुमनाः रन्तुकामः, अवश्यसेव्यः, सहितः संहितः सततः सन्ततः, मांस्पाकः मांसपाकः, मांस्पचनं मांसपचनम् ।

---

यथासंख्यानिरासार्थम्। मनस् च कामश्च मनःकामं तस्मिन्। सम् च मांसश्च सम्मांसौ अत्र स्वरूपप्रधानत्वात् पुंस्त्वम्। हितश्च ततश्च हिततं तस्मिन् पाकश्च पचनञ्च पाकपचनं तस्मिन्। सम् मनःकामयोः तुम् मनःकामयोः अवश्यम् ल्ये ऽन्त्यलोपं याति से सति। सम् हिततयोर्मांस पाकपचनयोरन्त्यलोपं याति वा से सतीत्यर्थः। सम्यक् मनो यस्य स समनाः सम्यक् कामो यस्य स सकामः तुम् इति तादर्थ्ये चतुम्। रन्तुं मनो यस्य स रन्तुमनाः रन्तुं कामो यस्य स रन्तुकामः ल्यस्त्यादिः अवश्यं सेव्यः अवश्यसेव्यः एवं अवश्यकर्त्तव्यः अवश्यकरणीयः अवश्यगम्यः अवश्यकृत्यं अवश्यपचेलिमास्तण्डुलाः सम्यक् हितमस्य सहितः संहितः सम्यक् ततमस्य सततः सन्ततः ण्यप्रत्ययान्तयोर्हिततयोः सम्-शब्दस्य मकारलोपो नित्यमिति केचित्। साहित्यं सातत्यम्। स्वमते तु तद्-वाशब्दव्यवस्थाप्यम्। मांसस्य पाकः मांस्पाकः। अत्र अकारलोपस्य स्थानिव-त्वान्न विसर्गः। पचे मांसपाकः मांसस्य पचनं समासे किं? रन्तुं मनो भवति नैव कदाचिदस्य गन्तुं कामो यदि नहि भवेत् तीर्थराजं महीन्द्र। अवश्यं सेव्यन्ते भवति यदि लक्ष्मीपतिरसौ इत्यादि॥ ३८८॥

श्रीरा-टी—सम् च तुम् च तौ सौत्रत्वादौ लुक् मनश्च कामश्च तत्तस्मिन् अन्त्यस्य लोपः अन्त्यलोपस्तं सम् च मांसश्च तौ हितञ्च ततञ्च तत्तस्मिन्। पाकश्च पचनञ्च तत्तस्मिन् स इत्यनुवर्त्तते ल्ये तव्यादौ सम् हितते मांसः पाकपचने इति पदद्वयकरणात् सम् मांसावित्यनेन यथाक्रमं दर्शयति सम् हिततयोर्मांसः

## ३८९। धुरो ऽनक्षस्याः।

धुरः ५।, अनक्षस्य ६।, अः १।।

राजधुरा। अक्षस्य तु अक्षधूः।

## ३९०। ऋचः।

ऋचः ५।।

ऋचः परः अः स्यात् से। अर्द्धर्चम्।

## ३९१। नञ्बह्वो र्मानवक-चरणे।

नञ्-बह्वोः ५।, मानवक-चरणे ७।।

---

पाकपचनयोरिति सकाम इत्यादि। सम्यक् कामो यस्य सम्यङ्मनो यस्य इति वाक्यं अवश्यसेव्य इति अवश्यंशब्दस्य मयूरव्यंशकादित्वात् ल्यान्तेन सः समासः असे तु अवश्यं सेव्य इति तथाच भट्टवार्त्तिकं सम्बन्धानुभवो ऽवश्यमेषणीयस्य लिङ्गेन इति सहित इत्यादि सम्यक् हितं प्राप्तं येन इति वाक्यं सततमित्यादि सम्यक् ततमिति प्रादिसः वाशब्दस्य व्यवस्थावाचित्वात् सातत्यमित्यत्र नित्यं मांसपाक इत्यादि मांसस्य पाकः मांसस्य पचनं इति वाक्यं सम्मांसौ त्विति तु शब्दो भिन्नक्रमार्थस्तेन वाशब्दस्य व्यवस्थावाचित्वात् पूर्वोक्तैस्त्रिभिर्न सम्बन्धः। अवश्यं गि प्रादुरादिव्यवधानेऽपि। अवश्यप्रसेव्यः अवश्यप्रादुःसेव्यः अवश्याङ्गीकरणीय इत्यादि ॥ ३८८ ॥

धूस्तु स्याद्भारचिन्तयोरित्यमरः। धूरः अः स्यात् समासे न त्वक्षसम्बन्धिन्याः। राज्ञो धूः राजधुरा अत्र स्त्रियामत आप्। एवं महाधुरा इत्यादि अनक्षस्येति किं ? अक्षस्य धूः अक्षधूः एवं दृढ़धूरक्षः। से किं ? मम धूः ॥ ३८९ ॥

श्रीरा-टी—धुरः अः स्यात् से न तु अक्षसम्बन्धिन्याः। राजधुरेति राज्ञो-धूरिति वाक्यं स्त्रीत्वादाप् अक्षधूरिति अक्षस्य धूरिति वाक्यम्। अक्षो रथावयव-चक्रसम्बन्धिकाष्ठविशेषस्तस्य धूर्भारः एवं दृढ़धूरक्षस्य इत्यादि ॥ ३८९ ॥

अर्द्धञ्च तत् ऋक् चेति। अथवा ऋचोऽर्द्धं राजदन्तादिः। अर्द्धर्चं अत्र क्लीवत्वमभिधानात्। एवं सप्त ऋचो यस्मिन् स सप्तर्चो मन्त्रः ॥ ३९० ॥

श्रीरा-टी—अर्द्धर्चमिति अर्द्धं ऋच इति वाक्यम्। सप्त ऋचो यस्मिन् सप्तर्चो मन्त्रः ॥ ३९० ॥

अनृचो मानवकः, बह्वृचः चरणः। अन्यत्र अनृक् साम, बह्वृक् सूक्तम्।

३९२। प्रत्यन्ववात् सामलोम्नः।

प्रति अनु-अवात् ५।, साम-लोम्नः ५।।

प्रतिसामं प्रतिलोमम्।

३९३। अक्ष्णोऽचक्षुषि।

अक्ष्णः ५।, अचक्षुषि ७।

गवामक्षीव गवाक्षः। चक्षुषि तु विप्राक्षि।

---

नञ् च बहुश्च नञ् बहुः तस्मात्। मानवकश्च चरणश्च मानवकचरणं तस्मिन्। नञः परादृचः अः स्यान्मानवके वाच्ये। बहोः परादृचः अः स्याच्चरणे वाच्ये से सति इत्यर्थः। नास्ति ऋक् यस्यासौ अनृचो मानवकः। बह्व्यः ऋचो यत्र स बह्वृचश्चरणः। मानवकचरणे किं ? न ऋक् अनृक् साम, बह्वृक् सूक्तम्। अत्र पूर्वेणापि सः स्यात् ॥ ३९१ ॥

श्रीरा-टी—नञ् च बहुश्च तत्तस्मात् पुंस्त्वं सौत्रात् मानवकश्च चरणश्च तत्तस्मिन्। नञ् बहुभ्यां परस्या ऋचोऽः स्यात् क्रमात् मानवकचरणयोर्वाच्ययोः अनृच इत्यादि नास्ति ऋक् यस्य बह्व्य ऋचो यस्मिन् इति वाक्यं अनृक् सामेति अक्षतसान्तत्वात् वाक्ये अनृक्कं बह्वृक्कमित्यपि ॥ ३९२ ॥

प्रतिश्च अनुश्च अवश्च प्रत्यन्वं तस्मात्। एभ्यः पराभ्यां सामलोमभ्यामः स्यात् से सति। साम साम प्रति प्रतिसामं लोम लोम प्रति प्रतिलोमम् एवं अनुलोमम् अवलोमम्। समासे किं ? दातारं प्रति साम गायति वटुः ॥ ३२२ ॥

श्रीरा-टी—प्रतिश्च अनुश्च अवश्च तत्तस्मात्। एभ्यः पराभ्यामाभ्यामः स्यात् से सति। प्रतिसाममिति प्रतिगतं साम इति प्रादिसः प्रतिगतं साम यस्येति वा हः साम साम प्रति इति वीप्सायां वा वः। एवं प्रतिलोममिति अनुसामं अनुलोमं अवसामं अवलोमम् ॥ ३९२ ॥

न चक्षुरचक्षुः तस्मिन्। अक्ष्णोऽः स्यात् समासे अचक्षुषि वाच्ये। गवामक्षीव गवाक्षो वातायनम्। चक्षुषि तु विप्रस्याक्षि विप्राक्षि ॥ ३९३ ॥

श्रीरा-टी—अनेवार्थादक्ष्णोऽः स्यात् से। गवामक्षीव इति गावो जालानि

## ३९४ । ब्रह्महस्तिराजपल्यात् वर्च्चसः ।

ब्रह्म—पल्यात् ५।, वर्चसः ५। ।

**ब्रह्मवर्चसं हस्तिवर्चसं राजवर्चसं पल्यवर्चसम् ।**

## ३९५ । समवान्धात् तमसः ।

सम्-अव-अन्धात् ५।, तमसः ५। ।

**सन्तमसम् ।**

## ३९६ । श्वोवसीयस-श्वःश्रेयस-निःश्रेयसम् ।

श्वोवसीयस—निःश्रेयसं १। ।

**एते निपात्याः ।**

---

तेषामक्षीव गवाक्षं पद्मादि वातायने रूढ़स्तत्र पुंलिङ्गः । एवं पुष्करमक्षीव पुष्कराक्षं लवणमक्षीव लवणाक्षं सर्व्वत्र उपमेयस्य व्याघ्राद्यैरिति यसः विशालाक्षः पद्माक्षः इति तु हसात् विप्राक्षीति विप्रस्याक्षीति षीषात् ॥ ३९३ ॥

पल्य इति पल्यङ्व्यवहृतौ स्तुताविति मूर्द्धन्यान्तस्य रूपम् । पल्य इति अन्तस्थात्तृतीयमध्यमिति केचित् । एभ्यः परात्वर्चसोऽः स्यात् से । ब्रह्मणो वर्चः ब्रह्मवर्चसम् एवं हस्तिवर्चसं राजवर्चसं पल्यवर्चसं वर्चस्तेजः ॥ ३९४ ॥

श्रीरा-टी—ब्रह्मा च हस्ती च राजा च पल्यश्च तत्तस्मात् । एभ्यः परात् वर्चसोऽः स्यात् से । ब्रह्मवर्चसमिति ब्रह्मणो वर्च इति वाक्यम् एवं हस्तिवर्चसं राजवर्चसं पल्यवर्चसमिति वर्चस्तेजस्तथाच तेजः पुरीषयोर्वर्च्च इत्यमरः । पलमुन्मानमांसयोरिति रुद्रः पलमुन्मानमस्य पल्यम् उन्मान प्रकारेण रक्ष्यं द्रव्यमित्यर्थः सर्वस्वे तु पलालरज्ज्वा वेष्टयित्वा व्रीहेरवस्थापनं पल्यमित्युक्तं यत्र पलालरज्ज्वा व्रीहिं वेष्टयित्वा स्थापयन्ति तत् पल्यमिति धातुपारायणम् ॥ ३९४ ॥

एभ्यः परात्तमसोऽः स्यात् से । सन्ततं विस्तीर्णं तमः सन्तमसम् अवक्षीणं तमः अवतमसम् अन्धं करोतीति ञ्यन्तात् पचादित्वादनि अन्धम्, अन्धञ्च तत् तमश्चेति अन्धतमसम् ॥ ३९५ ॥

श्रीरा-टी—एभ्यः परात् तमसोऽः स्यात् से । सन्तमसमिति सन्ततं व्याप्तं तम इति प्रादिसः एवम् अवहीनं तमः अवतमसम् अन्धयतीति अन्धम् अन्धत् क इक्ष्यन्ते अस्मात् पचादित्वादन् अन्धञ्च तत् तमश्चेति अन्धतमसमिति यः ॥ ३९५ ॥

३९७। तप्तान्ववाद्रहसः।

तप्त-अनु-अवात् ५।, रहसः ५। ।

तप्तरहसम्।

३९८। प्रत्युरसानुगवे।

प्रत्युरस अनुगवे १।।

एते निपात्ये।

---

एते निपात्याः अव्ययानामनेकार्थत्वात् श्वः शोभनम् अवसीयः श्वोवसीयसं कल्याणं श्वः शोभनं श्रेयः श्वःश्रेयसं कल्याणं निर्निश्चितं श्रेयो निःश्रेयसं निर्वाणम्॥ ३९६॥

श्रीरा टी—निपातौ ह्यर्थविशेषे तेन श्वोनिर्भ्यां श्रेयसः श्वसोवसीयश्च शुभे वाच्ये यसी अदन्ता निपात्यन्ते वसुमत् शब्दादियसु लुङ्मद्दिनामिति मतोर्लुक् औमंश्चेति डित्त्वादुकारलोपे वसीयः शब्दशक्त्या श्रेय आह श्वोऽनागतेऽह्नि वसीयः श्वोवसीयसम् एवं प्रशस्यशब्दादीयसुः श्रेयः श्वःश्रेयसं निःश्रेयसम् उभयत्र मयूरव्यंश-कादित्वात् यः यद्यपि श्वःशब्दोऽनागतदिनार्थः वसीयः श्रेयः शब्दौ श्रेयोऽर्थौ तथाप्युज्झितावयवार्थेन समुदायेन शुभमाह निपातनात्। निश्चितं श्रेयो निःश्रेयस-मिति प्रादिसः॥ ३९६॥

एभ्यः परात्रहसोऽः स्यात् से। तप्तमिति तप्योदवैश्ययोरित्यस्य ऐश्वर्य्यार्थस्य अकर्मकत्वात् कर्त्तरि क्ते रूपम्। तप्तञ्च तत् रहश्चेति तप्तरहसं श्रेष्ठं रह इत्यर्थः। रहो रहोऽनु अनुरहसम् अवगतं रहः अवरहसम्॥ ३९७॥

श्रीरा-टी—एभ्यः परात् रहसोऽः स्यात् से। तप्तरहसमिति तप्तमिव तप्तं सतञ्च तत् रहश्चेति वाक्यम्। अकथ्यं यद्भवेत् वाक्यं तत् तप्तरहसं विदुः इति। एवम् अनुरहसम् अवकलितं रहः अवरहसमिति प्रादिसः॥ ३९७॥

एते निपात्येते। उरसि प्रति वर्त्तते प्रत्युरसम् अधिकरणे वाच्ये अव्ययीभावे अः। गवामनु आयातम् अनुगवं शकटम्। अन्यत्र प्रतिगतमुरः प्रत्युरः। गवां पश्चादनुगु पश्चादर्थे अव्ययीभावे क्लीवे ह्रस्वः॥ ३९८॥

श्रीरा टी—उरसि प्रति वर्त्तते प्रत्युरसं सप्तम्यर्थे वः गवामनु दीर्घम् अनुगवं शकटम् अनोर्दैर्घ्यसामीप्यार्थयोरित्यादिना वः अन्यत्र उरः प्रति प्रत्युरः वीप्सायां वः गवां पश्चात् अनुगु पश्चादर्थे वः॥ ३९८॥

३९९। गेरध्वनः।

गेः ५।, अध्वनः ५।।

प्राध्वो रथः।

४००। पाण्डूदक्कृष्टात् भूमेः।

पाण्डु-उदक्-कृष्टात् ५।, भूमेः ५।।

पाण्डुभूमो देशः।

४०१। सङ्ख्याया नदीगोदावरीभ्याञ्च।

सङ्ख्यायाः ५।, नदी-गोदावरीभ्यां ५॥, च।१।।

पञ्चनदं सप्तगोदावरं, द्विभूमः प्रासादः।

४०२। निसः शतो डः।

निसः ५।, शतः ५।, डः १।।

---

उपसर्गात् परादध्वनोऽः स्यात् से। प्रगतोऽध्वानं प्राध्वो रथ एवं प्रत्यध्वं शकटम्॥ ३९९॥

श्रीरा-टी—गेः परादध्वनोऽः स्यात् से। प्राध्व इति प्रगतोऽध्वानमिति वाक्यं कुप्राद्योर्नित्यमिति सः प्रगतोऽध्वा येन इति वा बः॥ ३९९॥

उदक् इति उत्पूर्वस्याञ्चतेर्गतावर्थे कर्त्तरि क्विबन्तस्य न लोपे रूपं कृष्ट इति कृषौ विलेखने इत्यस्य क्तान्तस्य रूपम्। एभ्यः परस्या भूमेरः स्यात् से। पाण्डुः भूमिर्यस्मिन् स पाण्डुभूमो देशः उदीची उन्नतः भूमिर्यस्मिन् सः उदग्भूमः। पुंवद्भावादुदक् इति स्थितिः। कृष्टा भूमिर्यस्मिन् स कृष्टभूमः केचित्तु कृष्ण इति पठित्वा कृष्णा श्यामा भूमिर्यस्मिन् स कृष्णभूम इत्युदाहरन्ति॥ ४००॥

श्रीरा-टी—एभ्यः परस्या भूमेरः स्यात् से। पाण्डुभूम इति पाण्डुर्भूमिर्यस्मिन् देशे इति वाक्यम् एवं पाण्डुश्चासौ भूमिश्चेति पाण्डुभूमा उदीची भूमिरस्यां नगर्य्याम् उदीची चासौ भूमिश्चेति वा उदग्भूमा कृष्टा भूमिर्यस्यां नगर्य्यां कृष्टा चासौ भूमिश्चेति वा कृष्टभूमेति। कृष्टस्थाने कृष्ण इति वदन्ति केचित्॥ ४००॥

संख्यायाः पराभ्यां नदीगोदावरीभ्यां चकारात् भूमेश्च अः स्यात् से। पञ्चानां नदीनां समाहारः पञ्चनदम् एवं सप्तगोदावरं द्वे भूमी यस्य सः द्विभूमः प्रासादः॥४०१

श्रीरा टी—संख्यायां पराभ्यां नदीगोदावरीभ्यां भूमेश्च अः स्यात् से। पञ्च-

निस्त्रिंशः निश्चत्वारिंशः ।

४०३ । **सूत्सुरभिपूते र्गन्धादि र्वातूपमानात् ।**

सु-उत्-सुरभि-पूतेः ५।, गन्धात् ५।, इः १।, वा ।१।, तु ।१।, उपमानात् ५। ।

**सुगन्धिः, पद्मगन्धिः पद्मगन्धः ।**

---

नदमित्यादि पञ्चानां नदीनां समाहारः पञ्चनदं एवं सप्तानां गोदावरीणां समाहारः सप्तगोदावरं चकारात् द्वे भूमी यत्रेति वाक्यम् ॥ ४०१ ॥

निसः परात् शदन्तात् डः स्यात् से । निर्गता त्रिंशद्यस्य स निस्त्रिंशः । एवं निश्चत्वारिंशः, निष्पञ्चाशः, संख्याया डो बहोरित्यनेनैवेष्टसिद्धौ एतद्विधानं नियमार्थम् । तेन कुत्रिंशत् दुस्त्रिंशत् इत्यादौ न स्यात् ॥ ४०२ ॥

श्रीरा-टी—निसः परात् शदन्ताड्डः स्यात् से । निस्त्रिंश इति निर्गता त्रिंशदिति वाक्यं क्रान्तादौ निरादिः प्या इति षः अस्य ष एव विषय इति परे । एके तु सामान्य एवेत्याहुः । एवं निश्चत्वारिंशः निष्पञ्चाशः । शत इति किं ? निःषष्टिः निःसप्ततिः इत्यादि । गोष्ठश्वाद्याः । गोष्ठश्वाद्या निपात्यन्ते । गोष्ठे श्वेव गोष्ठश्वः पुरुषस्यायुः पुरुषायुषं षोषः । द्वे आयुषी समाहृते द्व्यायुषं त्रीणि आयूंषि समाहृतानि त्र्यायुषं समाहारे गः । द्विस्तावा त्रिस्तावा वेदिः प्रकृते यज्ञे यावती वेदिः करणीयेति कथिता ततो द्विगुणा त्रिगुणाः वा अन्यस्मिन् यज्ञ इत्यर्थः । क्रियया सह सामानधिकरण्यात् द्वित्रिशब्दात् सुच् तयोस्तावती-शब्देन मयूरव्यंशकादित्वात् सः । एषां विशेषार्थे विशेषयोर्निपातनात् गोष्ठस्य श्वा गोष्ठश्वा पुरुषस्य आयुश्च पुरुषायुषी द्वयोस्त्रयाणां वा आयुः द्व्यायुस्त्र्यायुर्द्विस्ता-वती त्रिस्तावती रज्जुरित्यत्र न स्यात् ॥ ४०२ ॥

सुश्च उच्च सुरभिश्च पूतिश्चेति सूत्सुरभिपूतिस्तस्मात् । एभ्यः पराद्गन्धादिः स्यात् से । उपमानवाचकात् पदात्तु वा इत्यर्थः । शोभनो गन्धो यस्य स सुगन्धिः । एवं उद्गन्धिः सुरभिगन्धिः पूतिगन्धिः । पद्मस्येव गन्धो यस्य स पद्म-गन्धिः, पद्मगन्धः, चितावेव गन्ध इति तार्किकाः स तु गन्धः पुष्पादौ समवाय-सम्बन्धेनैव वर्त्तते । वाय्वादौ तु संयोगसम्बन्धेनैवेति । ततश्च समवायसम्बन्धेन वर्त्तमानात् गन्धादेव इः स्यात् नतु संयोगसम्बन्धेन वर्त्तमानादिति सम्प्रदायः । अतएव भट्टो आम्नायिवान् गन्धवहः सुगन्ध इति, केचित्तु संयोगसम्बन्धेन वर्त्त-मानाद्गन्धादिर्वा स्यादिति मत्वा सुगन्धिः सुगन्धो वायुरित्युदाहरन्ति । स्वमतेऽपि

## ४०४। नार्चायां स्वतेः सख्यादेरः।

न ।१', अर्चायां ७।, सु-अतेः ५।, सख्यादेः ५।, अः १।।

**स्वतिभ्यां परात् सख्यादेरो न स्यात् पूजायाम्। शोभनो राजा सुराजा, अतिशयेन राजा अतिराजा। अर्चायां किं? ग्राममतिक्रान्तः अतिगवः।**

---

तद्वाशब्दाद्द्रवस्थाप्यं अतएव अपां हि तृप्ताय न वारिधारा स्वादुः सुगन्धिः स्वदते तुषारा इति श्रीहर्षः। नवमालिकयाति सुगन्धौ इति जयदेवश्च। एवं गन्धस्याल्पत्वेऽपि द्रव्यं। तेन घृतगन्धि घृतगन्धं भोजनमिति। किञ्चात गुणवाचकादेव गन्धादिः स्यात् न तु गुणवद्वाचकादिति बोध्यम्। यथा शोभनानि गन्धद्रव्याणि यस्यां सा सुगन्धा विपणिरिति॥ ४०३॥

श्रीर-टी—सुश्च उच्च सुरभिश्च तत्तस्मात् एभ्यः परागन्धादिः स्वादुपमानाच्चु वा। सुगन्धिरिति शोभनो गन्धोऽस्येति वाक्यं एवं उद्गतो गन्धोऽस्य उद्गन्धिः सुरभिर्गन्धोऽस्य सुरभिगन्धः पूतिर्गन्धोऽस्य पूतिगन्धः। यद्यपि सामान्येनोक्तं तथापि ह एवास्य विषयः। अत्र यद्यपि समवायसम्बन्धेन गन्धो वर्त्तते तदेकारस्तथाच आघ्रायिवान् गन्धवहः सुगन्ध इति भट्टिः। कस्तूरिकामृगविमर्दनसुगन्धिरिति माघः। उपमानविवक्षयेति पद्मगन्धिरिति पद्मगन्ध इव गन्धो यस्येति वाक्यम्। एभ्यः किं? दुर्गन्धः। भृतित्यादेर्मासादिकः। भृतिर्वेतनं तच्च विहितो यस्य-स्तदन्तादेर्मासादिकः स्यात् से। पञ्चास्य भृतय इत्यर्थे कः। पञ्चको मासोऽस्य पञ्चकमासिकः। एवं दशकमासिकः इत्यादि अस्यापि ह एव विषयः॥ ४०३॥

प्रशंसायां वर्त्तमानाभ्यां स्वतिभ्यां परात् सख्यादेरप्रत्ययो न स्यात्। सख्योराज्ञ इत्यारभ्य गेरध्वन इति पर्य्यन्तेषु येभ्योऽप्रत्ययो विहितस्तेभ्य इत्यर्थः। शोभनो राजा सुराजा अतिशयेन राजा अतिराजा एवं अतिशयेन श्वा अतिश्वा सुगौः अतिगौः सुरात्रिः अतिशयेन रात्रिः अतिरात्रिः सुपन्थाः सुधूः अतिधूः स्वृक् अत्यृक् स्वध्वा अत्यध्वा। अर्चायां किं? ग्राममतिक्रान्तोऽतिगवः एवं अतिसखः इत्यादौ स्यादेव। सख्यादिग्रहणात् तत् पूर्ववर्त्तिभिः सक्थ्यक्ष्णः ष इत्यादिभिर्बहुव्रीहौ अप्रत्यये स्वच्च इत्यादयः स्युरेव॥ ४०४॥

श्रीरा-टी—सुश्च अतिश्च तत्तस्मात्। सखा आदिर्यस्य स तस्मात्। सख्यादे-

## ४०५। किमः क्षेपे।

किमः ५।, क्षेपे ७।।

किं राजा।

## ४०६। नञो ऽह्ववे।

नञः ५।, अ-ह्व-वे ७।।

नञः परात् सख्यादे रो न स्यात् नतु ह्व-वयोः।

असखा। ह्व-वेतु अनपं सरः, अधुरम्।

---

रिति सख्यङ्गीराज्ञ इत्यादि सूत्रे येभ्योऽकारः उक्तस्तेभ्यः पूजार्थं स्वतिभ्यां परेभ्यो न अः स्यात्। सुराजा अतिराजा। कुप्राद्योर्नित्यमिति षः सख्यादेः किं? शोभनं सक्थि यस्य सुसक्थः प्रत्यञ्चो विप्रः। स्वतेः किं? परमराजः अन्ये तु पूजार्थस्वतिभ्यां परस्याः संख्याया डोऽनि न स्यात्। सुदशा अतिदशा ब्राह्मणा इत्याहुः॥ ४०४॥

किमः परात् सख्यादेः अः न स्यात् निन्दायाम्। कुत्सितो राजा किं-राजा, किं राजा यो न रक्षति प्रजाः एवं किं गौर्यो न वहति भारम्। निन्दायां किं? केषां राजा किंराजः किंगवः॥ ४०५॥

श्रीरा-टी—क्षेपो निन्दा तस्यां वर्त्तमानात् किमः सख्यादेः अः न स्यात्। किंराजा कुत्सितो राजेत्यर्थः। एवं निन्दिता धूरस्य किंधूः शकटम्। क्षेपे किं? केषां राजा किंराजः॥ ४०५॥

नञः परात् सख्यादेः अः न स्यात् से न तु ह्ववयोः। न सखा असखा एवं अराजा अगौरित्यादि। ह्ववयोस्तु न सन्ति आपो यत्र तत् अनपं सरः पथ्यप् पुर इति अप्रत्ययः स्यादेव। धुरोऽभावः अधुरं अत्र धुरोऽनक्षस्येति अप्रत्ययः स्यादेव॥ ४०६॥

श्रीरा-टी—ह्वश्च वश्च तत् न तत् तस्मिन् ह्ववभिन्ने से नञः परात् सख्यादेः अः न स्यात्। असखेति न सखा इति वाक्यं नञः इत्यनेन समः यद्यपि नञ इत्यनेनैव सिद्ध्यति तथापि नञः स्याद्यन्तेन सह इव संज्ञापनार्थमइव इत्युक्तं अनपं सर इति न सन्त्यापो यस्मिन् सरसीति वाक्यं अधुरमिति धुरोऽभाव इति वाक्यम्॥ ४०६॥

## ४०७। पथो वा।

पथः ५।, वा ।१।।

अपथं अपन्थाः। ह्व-वे तु अपथो देशः, अपथम्।

## ४०८। कत् क्वच्चिरथवदे।

कत् ।१।, कु ।१।, अच् चिरथवदे ७।।

कोः स्थाने कत् स्यात् से अजादौ परे। कदन्नं कत्त्रयः।

## ४०९। का ऽच्चे।

का।१।, अच्चे ७।।

काच्चम्।

---

नञः परात् पथः अः स्याद्वा न तु ह्ववयोः। न पन्थाः अपन्थाः। पक्षे अपथमित्यत्र क्लीवत्वम्। अपन्थास्त्वपथं तुल्ये इत्यमरात्। ह्वे तु नास्ति पन्था यस्यासौ अपथो देशः पथोऽभावः अपथम्। उभयत्र पथ्यप् पुर इति अप्रत्ययो नित्यम् ॥४०७॥

श्रीरा-टी—ह्ववभिन्ने से नञः परात् पथो न अः स्याद्वा। अपन्था इति न पन्था इति वाक्यं अपथमिति व्यसंख्याभ्यां पथ इति क्लीवत्वं अपथो देश इत्यादि नास्ति पन्था यस्मिन् देशे पथोऽभावः इति वाक्यम् ॥ ४०७ ॥

अच्च त्रिश्च रथश्च वदश्चेति अच्चिरथवदं तस्मिन्। पापकुत्सेषदर्थे कु इत्यमरोक्तस्य अव्यय कुशब्दस्य कत् स्यादजादौ परे से सति। भिन्नविषयत्वात् पूर्वतः किमपि नानुवर्त्तते कुत्सितमन्नं कदन्नम्। एवं कदाकारः कदौषधम्। एवं कुत्सितास्त्रयः कत्त्रयः कद्रथः कद्वदः अव्ययस्येति किं? गोत्रा कुः पृथिवीत्यमरोक्तस्य तु कोः पृथिव्या उत्थितः इत्यादौ न स्यात् तृणजातौ च वक्तव्यः कत्तृणं जातौ किं? कुतृणमिदम् ॥ ४०८ ॥

श्रीरा-टी—अच्च त्रिश्च रथश्च वदश्च तत्तस्मिन्। कदन्नमित्यादि कुत्सितमन्नं कुत्सिताः त्रयः इति वाक्यम् कुप्रादैर्नित्यमिति सः। एवं कद्रथः कद्वदः इति वदतीति वदः पचाद्यच्। एष्विति किं? कुब्राह्मणः अस्य सूत्रस्य ष स एवाभिधानात् कुत्सितो रथो यस्येत्यादौ न स्यात् जातौ तृणे। तृणशब्दे परे जातौ वाच्यायां कोः कत् स्यात् कत्तृणं नाम जातिः अजातौ कुत्सितानि तृणानि ॥४०८॥

## ४१० । पथिपुरुषे वा ।

पथि-पुरुषे ७, वा ।१। ।

कापथः कुपथः, कापुरुषः कुपुरुषः ।

## ४११ । कावीषदर्थे ।

कोः ६।, ईषदर्थे ७। ।

ईषज्जलं काजलम् ।

---

अकारान्तेऽचे परे कोः काः स्यात्। कुत्सितमचमिन्द्रियं काचम्। एवं कुत्सितोऽचः पाशा इति ख्यातः काचः एवञ्च कुत्सिते अक्षिणी चक्षुषी यस्य स काचः। अत सक्थ्यक्ष्णः इति ष प्रत्यये इकारलोपे अच इति लाभात् कादेशः स्यादेव ॥ ४०९ ॥

श्रीरा-टी—अचशब्दे परे कोः का स्यात्। काचमिति अचमिन्द्रियं कुत्सित-मचमिति वाक्यं कुप्रादेर्नित्यमिति षः। अच इत्यस्य सामान्यतो ग्रहणात् कुत्सितेऽक्षिणी यस्य काचो विप्र इत्यत्राक्षिशब्दात् षे कृतेऽपि स्यात् ॥ ४०९ ॥

कोः काः स्याद्वा पथिपुरुषयोः परयोः। कुत्सितः पन्थाः कापथः कुपथः एवं कापुरुषः कुपुरुषः ॥ ४१० ॥

श्रीरा-टी—पन्थाश्च पुरुषश्च तत्तस्मिन्। कोः का स्यात् वा पथि पुरुषयोः परयोः। कापथमिति कुत्सितः पन्था इत्यर्थः व्यसंख्याभ्यां पथ इति क्लीवत्वं एवं कुपथमिति परे तु कापथमिति नित्यमाहुः। कापुरुषः इति कुत्सितः पुरुषः इत्यर्थः। ईषदर्थे कोः पुरुषे शब्दे परे वा कादेश इति भागवृत्तिः तन्मते ईषत् पुरुषः कापुरुषः कुपुरुषः इति ॥ ४१० ॥

कोरिति पुनरुपादानं वाधिकारनिवृत्त्यर्थं परनिमित्तनिवृत्त्यर्थञ्च तेन ईषदर्थे वर्त्तमानस्य कोर्नित्यं काः स्यात्। प्रयोगानुसारेण यस्मिन् कस्मिन्नपि परे इत्यर्थः। यथा ईषज्जलं काजलं एवं ईषदन्नं कान्नम्। कातन्त्रं कालवणं एवञ्च ईषत् पन्थाः कापथः। कुत्सायान्तु पूर्वेण विकल्पः ॥ ४११ ॥

श्रीरा-टी—पुनः कुग्रहणं पथिपुरुषयोरननुवर्त्तमानत्वार्थमत आह कालव-णमिति एवं ईषल्लवणं ईषद्वादो यत्र कावाद इत्यादि। ईषदन्नं कान्नं ईषदम्लं काम्लं ईषदाकारोऽस्य स काकारः इत्यादौ अनेनापि कादेशो बाध्यते

४१२। कात्कवौ चाग्न्युष्णे।

कत्-कवौ १॥, च ।१।, अग्नि-उष्णे ७।।

कदग्निः कवाग्निः काग्निः, कदुष्णं कवोष्णं कोष्णम्।

४१३। ज्योति र्जनपद रात्रि नाभि बन्धु गन्ध पिण्ड लोहित कुक्षि वेणी ब्रह्मचारी तीर्थ पती पक्षे समानः सः।

ज्योतिः—पक्षे ७।, समानः १।, सः १।।

समानं ज्योति र्यस्यासौ—सज्योतिः।

---

अपेक्षितविधित्वात् परत्वात्। तथाच भारविः। देवाकानिनिकावे वाहिकास्व-स्वकाहि वा। काकारेभभरेकाका निस्वभव्य व्यभस्वनि॥ ३११॥

ईषदर्थे कोः स्थाने कत्कवौ चकारात् का च स्यात् अग्न्युष्णयोः परयोरित्यर्थः। ईषदग्निः कदग्निः कवाग्निः काग्निः एवं कदुष्णं कोष्णम्॥ ३१२॥

श्रीरा-टी—ईषदर्थे कोः कत्कवकाः स्युरग्न्युष्णयोः परयोः। कदग्निरिति। परे तु अग्निशब्दे परे काकवादेशौ नाहुः। कदुष्णमिति अनीषदर्थेऽपि कोष्ण-शब्दे परे कत्कवादेशा इत्यन्ये॥ ३१२॥

एषु चतुर्दशसु परेषु समानः सः स्यात् से सति। समानं ज्योतिर्यस्यासौ सज्योतिः एवं सजनपदः जनपदपर्य्यायग्रहणात् समानो देशः सदेशः। सरात्रिः सनाभिः सबन्धुः सगन्धः सपिण्डः सलोहितः सकुक्षिः सवेणीकः। ब्रह्मचर्य्यादि-सम्बन्धेन समानशब्देन एक एव उच्यते न तु तुल्यः, समाने एकस्मिन् ब्रह्मणि वेदे चरतीति वाक्ये ग्रहादित्वाण्णिनि ब्रह्मचारिणि परे समानः सः अतएव एक-ब्रह्मव्रताचारा मिथः सब्रह्मचारिण इत्यमरः। तीर्थमृषिजुष्टजले गुरावित्यमरः। समानात् एकस्मात् तीर्थात् गुरोः पठतीति ढणेकादिति अनित् यत्र तीर्थ्य इति भागे समानः सः अतएव सतीर्थ्यास्त्वेकगुरव इत्यमरः। निर्य्यकारे तीर्थे न स्यात् तेन समानं तीर्थं गङ्गातीरादि येषां तेन समान तीर्था इति। समान एकः पतिरस्या इति वाक्ये निपातनात् पत्युः पत्नादेशे समानस्य सादेशे सपत्नी एवं सपक्षः। से किं ? हे चन्द्रेण समानं ज्योतिस्तव कुत्र॥ ३१३॥

४१४। रूप नाम गोत्र स्थान वर्ण वयो वचन धर्म जातीयो-दर्य्ये वा।

रूप—उदर्य्ये ७, वा ।१।।

सरूपः समानरूपः।

इति समास पादः।

---

श्रीरा-टी—एषु चतुर्दशसु परेषु समानस्य सः स्यात्। सज्योतिरिति समानञ्च तत् ज्योतिश्चेति वाक्यम् एकादीनाञ्च इति षसः एवं सजनपदः सरात्रिः सनाभिः सबन्धुः सगन्धः सपिण्डः सलोहितः सकुचिः सवेणी सब्रह्मचारी ब्रह्म वेदः तदध्ययनार्थं यदुक्तं तदपि ब्रह्म तच्चरतीति ब्रह्मचारी समानो ब्रह्मचारी तस्यैव वेदाख्यस्य ब्रह्मणः सदृशं व्रतं चरतीत्यर्थः। समाने तीर्थे गुरौ वसतीति सतीर्थः एकगुरुः समानतीर्थशब्दात् तत्र वासिनीत्यर्थे ष्णोत्ये समानस्य सः। समानः पतिर्यस्याः सपत्नी ईपि पतिशब्दस्य पत्वादेशे समानस्य सः। समानः पत्तः सहायः सपक्षः परे तु गन्ध पिण्ड लोहित कुचि वेणीति पञ्च नाङ्ः। अन्ये तु पञ्चस्विति पिण्डभिन्नान्नाङः सेतुशब्दञ्चाहुः॥ ३१३॥

एषु दशसु परेषु समानः सः स्यात् वा से सति। समानं रूपं यस्यासौ सरूपः समानमेकं नाम यस्य स सनामा समाननामा। एवं सगोत्रः समानगोत्रः सस्थानः समानस्थानः सवर्णः समानवर्णः सवयाः समानवयाः सवचनः समानवचनः सधर्मा समानधर्मा। इत्युभयत्र धर्मादन् इति अन् समानस्य प्रकार इति जातीयप्रत्यये परे सजातीयः समानजातीयः। समाने एकस्मिन्नुदरे भवतीति ढघे कादिति अनिति ष्णे परे समानः सो वा। सोदर्य्यः समानोदर्य्यः। समासे इति किम्? हे देवेन समानं नाम किन्ते इत्यादौ न स्यात् इति। इत्यादयः साध्या इति वचनादवेदं विहर्णोमि अहमेव पुरुषोऽतेति सम्भावना अहोपुरुषिका। अहं पूर्वमवेति आविष्क्रिया अहंपूर्विका। अहं प्रधानमवेति अहंकृतिरहमिका सैव परस्परञ्चेत् अहमहमिका इत्यादयो बहवो निपात्याः। अथ लिङ्गनिर्णयः। इतरेतरकद्वन्द्वः कर्मधारय एव हि अथ तत्पुरुषश्चैते परशब्दीयलिङ्गिनः। अह्नाहान्तास्तु पुंसि स्यू रात्रान्ताः प्रागसंख्यकाः। तद्धितार्थे द्विगुपुरुषौ बराढ़क्याद्याः स्त्रियां मताः। अभावादिरदन्तस्य समाहारद्विगुः स्त्रियाम्। आबन्तानामनन्तानां तथैव स्त्रीनपुंसकम्। समाहारद्विगुद्वन्द्वावव्ययीभाव एव च। संख्यापूर्वकरात्रान्ताश्चत्वारः स्युर्नपुंसके। अर्द्धनावञ्चार्द्ध-

स्वारमर्द्धर्चमपथं तथा। बहुव्रीहिस्तद्धितार्थे तथोत्तरपदे द्विगुः। वाच्यलिङ्गा इमे ख्याताः परं ज्ञेयं प्रयोगतः इति ॥ ४१४ ॥

इति श्रीदुर्गादासविद्यावागीशविरचितायां सुबोधायां
मुग्धबोधटीकायां समासटीका समाप्ता।

---

श्रीरा टी—एषु दशसु समानस्य सः स्यात् वा। सरूप इति समानं रूपं यस्येति वाक्यम् एवं सनामा सगोत्रः सस्थानः सवर्णः सवयाः सवचनः सधर्मा समानप्रकारः सजातीयः समान उदरे शयिता इत्यर्थे यः सोदर्य्यः पक्षे समान-रूप इत्यादि। परे तु उदर्य्यभिन्नेष्वपि नित्य माहुः। धर्मोदर्य्यभिन्नेषु वेति चान्द्राः। अरिष्टादिचिह्नार्थस्य कर्णे घः। रिष्टादिभिन्नस्य चिह्नार्थस्य घः स्यात् कर्णे शब्दे परे। दात्रमिव चिह्नं कर्णे यस्य स दात्राकर्णः द्वौ गुणौ यस्य स द्विगुणः तदाकारं चिह्नं कर्णे यस्य स द्विगुणाकर्णः गुणशब्दो-ऽत्रावयवार्थः। द्वयोरङ्गुल्योः समाहारः द्व्यङ्गुलं तदाकारं चिह्नं कर्णे यस्य स द्व्यङ्गुलाकर्णः। इह चिह्नशब्देन पशूनां स्वामिविशेषसम्बन्धज्ञापनार्थं कर्णे दात्रा-काराादि यत् क्रियते तस्यैव ग्रहणं तेन शोभनकर्णः मह्नाकर्णः इत्यादौ न स्यात् रिष्टादेस्तु रिष्टकर्णः। रिष्टादिर्यथा। रिष्टस्वस्तिकपञ्चाष्टच्छिन्नच्छिद्राणि च श्रवः। भिन्नश्चेतीह रिष्टादावष्टशब्दाः प्रकीर्त्तिताः। विश्वस्य वसुनि। विश्वस्य घः स्यात् वसुशब्दे परे। विश्वं वसस्य विश्वावसुः। अपील्वादेरिको वहे। पील्वादिभिन्नस्येगन्तस्य घः स्यात् वहशब्दे परे। कपिं वहतीति पचाद्यन् कपीवहं मुनीवहं शमीवहम्। पील्वादेस्तु पीलुवहं चारुवहं दारुवहमित्यादि। इकः किम्? गन्धवहः। गेः काशे। इगन्तस्य गेः काशशब्दे परे घः स्यात्। निकाशते इति पचाद्यन् नीकाशः अनुकाशः। इकः किम्? प्रकाशः। गेर्घञ्य-मनुष्ये बहुलम्। गेर्घः स्यात् मनुष्यभिन्नवाच्ये घञन्तपरे बाहुल्यात् क्वचिन्नित्यः क्वचिद्विकल्पः क्वचिन्निषेधः क्वचिदन्यत्रापि। यथा अपामार्गः वीमार्गः नीक्लेदः नीहारः नीशारः नीवारः वृतौ प्राकारः गृहभेदे प्रासादः इत्यादौ नित्यम्। अन्यत्र प्रकारः प्रसादः प्रतीवेशः प्रतीहारः प्रतीकारः प्रतीरोधः नीकारः अतीसारः परीहासः पक्षे प्रतिवेशः इत्यादि वेशादौ विकल्पः। प्रवेशः प्रहारः विशारः परिवेशः इत्यादौ निषेधः। पूर्वामुखः पश्चिमामुखः उत्तरामुखः दक्षिणामुखः इत्यादौ गिभिन्नस्याप्यघञन्तेऽपि। अमनुष्ये इति किम्? निषादश्वा-

रुडालः। क्विबन्तरुचादौ कस्य च। गेः कस्य च क्विबन्तरुचादौ परे घः स्यात्। अतीरुक् वीरुत् नीरुत् प्रावृट् परीतत् उपानत् कारकस्य मर्मावित् मृगावित्। गिकयोः किं ? तिग्मा रुग् यस्य स तिग्मरुक्। तुरादेः सहि वा तु वेरुहधयोः तुरादेः घः स्यात् सहि वेस्तु रुहधयोर्वा। तुरं वेगवन्तं सहते ढाङ्गजसहवहेति विण् तुराषाट् एवं ऋतीषाट् जनाषाट् इत्यादि। विरोहति क्विप् वीरुद्धो घङ् क्वौ वीरुत् विरुत् रुवधोः क्विपीत्यन्ये। विवधतीति पचाद्यन् वीवधः विवधः। शुनो दन्तादौ। दन्तादौ परे शुनो घः स्यात्। शुनो दन्तः श्वादन्तः श्वादंष्ट्रा। दन्तादिर्यथा। दन्तदंष्ट्रा कर्ण कुञ्ज पद पुच्छाः षडीरिताः। वराहो-ऽप्यत्र एतेन श्वा वराहाविति क्वचित्। पदपुच्छयोर्वेति चान्द्राः तन्मते श्वपदः श्वपुच्छः इत्यपि। चितेः के। अक्तसान्तादित्यनेन विहिते के परे चित्यन्तस्य घः स्यात्। एका चितिर्यस्य एकचितीकः। कोटराकिंशुलकाद्योः वनगिर्य्योर्नाम्नि। कोटरादेर्वनशब्दे परे किंशुलकादेर्गिरिशब्दे परे घः स्यान्नाम्नि। कोटराणां वनं कोटरावनम्। कोटरादिर्यथा कोटर शारिक सिध्रक् प्लवगः मिश्र इति पञ्चेह प्रोक्ताः। किंशुलुकानां गिरिः किंशुलुकागिरिः किंशुलकाञ्जनभञ्जन-लोहितकुक्कुटमिति पञ्चेह प्रोक्ताः। नाम्नि किं ? कोटरवनं भञ्जनगिरिः। विश्वस्य मित्रनरयोः। विश्वस्यानयोः घः स्यान्नाम्नि। विश्वामित्रो नाम ऋषिः विश्वानरो नाम कश्चित्। नाम्नि किं ? विश्वं मित्रं यस्य स विश्वमित्रो विप्रः। विश्वे नरा यस्य विश्वनरो राजा। अष्टनो वक्रादौ। अष्टनो घः स्यात् वक्रादौ नाम्नि। अष्टौ वक्राणि यस्य अष्टावक्रो नाम ऋषिः अष्टापदं सुवर्ण-मित्यादि। अनाम्नि अष्टवक्रो वृत्तः। गोकपालयोर्युक्तहविषोः। गोशब्दे परे युक्ते वाच्ये कपालशब्दे परे हविषि वाच्ये अष्टनो घः स्यात्। अष्टभिर्गोभि-र्युक्तं अष्टागवं शकटं अष्टसु कपालेषु संस्कृतं हविः अष्टाकपालं हविः उभयत्र तार्थे गः। युक्तहविषोः किं ? अष्टगवं अष्टकपालं विप्रस्य समाहारे गः। इष्टकादेश्चितादौ ख.। इष्टकादेः खः स्यात् चितादौ परे इष्टकाभिश्चितं इष्टक-चितं, इषीकायास्तूणं इषीकतूणं मालां भर्त्तुं शीलमस्य मालभारीत्यादि। तदन्त-स्यापि। पक्वेष्टकचितं मुञ्जेषीकतूणं मल्लिकामालभारिण्यः इति दण्डी। आवीपो-र्नाम्नि बहुलम्। आवीपोर्बहुलं खः स्यात् नाम्नि। बहुलञ्च क्वचित्नित्यं क्वचिद्विकल्पः क्वचिन्निषेधः क्वचिदपूर्वविधिः। यदुक्तं प्रवृत्तिश्च निवृत्तिश्च विभाषोक्तविधिः क्वचित्। पूर्वोक्तस्याविधानञ्च बहुलं स्याच्चतुर्विधम्। कन्या

कुला ऽस्मिन् देशे कान्यकुब्जो देशः शिलं वहतीति शिलवहं शिला प्रस्थोऽस्येति शिलप्रस्थं नगरं मन्दुरायां जातो मन्दुरजोऽश्वः रेवतीमिवमस्य रेवतिमित्रः रहिण्याः पुत्रो रोहिणिपुत्रः इत्यादौ नित्यम्। शिंशपस्थली शिंशपास्थली प्रमदावनं प्रमदवनं रेवतिपुत्रः रेवतीपुत्रः कालिदासः कालीदासः इत्यादौ विकल्पः लोमकाग्टहं लोमकाषण्डं नान्दीकरः नान्दीघोषः नन्दीविशाल इत्यादौ निषेधः। कलिङ्गः सुसूक्ष्मः जटकेशः इत्यादौ असंज्ञायामपि बाहुल्यात्। अनीवियुव व्यस्ययूतो वा परदे। ईप इयुव ईदूतो व्यसंज्ञकादन्यस्य ईदूतः स्वः स्याद्वा परदे। ग्रामणिपुत्रः ग्रामणीपुत्रः धीबन्धुपुत्रः धीबन्धूपुत्रः। अलाबुपुत्रः अलाबूपुत्रः। अलाबुकर्कन्धूदृन् भू फलमित्यत्र दृन् भ्वा एव स्वः न तु पूर्वयोः से तु सर्वान्तदस्योत्त-रदत्वात् यदा अलाबूश्च कर्कन्धूश्च अलाबुकर्कन्धौ ते च दृन् भूश्च अलाबुकर्कन्धुदृन्-भ्वः तासां फलं अलाबुकर्कन्धुदृन्भुफलमिति तु स्यादेव। ईवादेस्तु गार्गी पुत्तः स्त्रीकुलं भूकुलं शुक्लीभूतम्। भ्रुवः कुंसादावदतौ च। भ्रुवः कुंसादौ अत् अत् स्व एते बहुलं स्युः। भ्रुवः कुंसो भाषणमस्य भ्रकुंसश्च भ्रकुंसश्च भ्रुकुं-सश्च भ्रूकुंसश्च इति शब्दमहार्णवः। एवं भ्रुवो कुटिः भ्रकुटिः भ्रकुटिः भ्रुकुटिः भ्रूकुटिश्चेति अन्ये तु स्वाभावं इत्याहुः। तथाच तन्त्री प्रमीला भ्रकुटिः भ्रकुटिः भ्रूकुटिः—स्त्रियामित्यमरः। कुंसः स्याद्भाषणे पुंसि। यङ ईः पुत्रपत्योः ये। णणोरनार्षयोरित्यादिना विहितस्य यङ ईः स्यात् पुत्रपत्योः परयोः षे सति। कारीषगन्धर्योः पुत्रः कारीषगन्धीपुत्रः कारीषगन्ध्यायाः पतिः कारीषगन्धीपतिः एवं वाराहीपुत्रः वाराहीपतिः इत्यादि। षे किं? कारीषगन्ध्या पतिर्यस्य स कारीषगन्ध्यापतिर्ग्रामः। बन्धौ हे वा तु मातमातृमातृकेषु। यङ ईः स्यात् बन्धौ हे सति वा तु मातादिषु। कारीषगन्ध्या बन्धुरस्य कारीषगन्धीबन्धुः कौमुद-गन्धीबन्धुः कारीषगन्ध्या माताऽस्य कारीषगन्धीमातः कारीषगन्ध्यामातः कारीष-गन्धी माता कारीषगन्ध्यामाता समासान्तविधेरनित्यत्वाद्वा कः कारीषगन्धीमातृकः कारीषगन्ध्यामातृकः इति। मातृकशब्दस्याकारान्तमातादेशो वचनसामर्थ्यात् मनीषादित्वाद्वा सर्वं सुस्थमिति ॥ ४१४ ॥

इति श्रीमहामहोपाध्याय श्रीरामतर्कवागीशभट्टाचार्यविरचिता

सपादस्य टिप्पनी सम्पूर्णा।

---

# मुग्धबोधं व्याकरणम् ।

## चतुर्थः पादः ।

### तद्धितः ( त ) ।

**४१५ । बाह्वाद्यतोऽत्र्याबादेर्गर्गादेर्नड़ादेः पितृष्वस्रादे रेवत्यादेः शेषशिवादेः ष्णि-ष्णेय-ष्णायन-ष्ण-यन-णीय-ष्णिक-ष्ण अपत्ये ।**

बाह्वाद्यतः ५।, अत्र्याबादेः ५।, गर्गादेः ५।, नड़ादेः ५।, पितृष्वस्रादेः ५।, रेवत्यादेः ५।, शेषशिवादेः ५।, ष्णि-ष्णाः १।।।, अपत्ये ७।

**एभ्यः परा एते क्रमात् स्युरपत्यार्थे ।**

---

बाह्वादिश्च अच्च बाह्वाद्यत् तस्मात् । अत्रिश्च आप् च अत्र्यापौ, तौ आदी यस्य स अत्र्याबादिः तस्मात् । आदिशब्दस्य द्वन्द्वात् परतया प्रत्येकेन सम्बन्धात् अत्र्यादेराबादेश्चेत्यर्थः । आबादिश्च—आप् ईप् ऊप् निपातनेन युवन् शब्दादिश्चेति चत्वारः । उक्तादन्यः शेषः । शेषश्च शिवादिश्च शेषशिवादिः तस्मात् न पतति वंशो येन जातेन तदपत्यं तस्मिन्, तेन पुत्रपौत्रप्रपौत्रादौ एवं कन्यायाञ्च अपत्यप्रत्ययः स्यात् । अतएव राघवावपि निनाय बिभ्रतौ तद्धनुःश्रवणजं कुतूहलमिति रघौ राघवशब्देन रघोः प्रपौत्रावपि रामलक्ष्मणावुक्तौ । ततश्च अपत्यप्रत्ययान्तात् पुनरप्रत्ययो न स्यात् एकेनवापत्यप्रत्ययेन तदर्थस्यापि प्रतिपादनात् । यत्तु गर्गस्यापत्यं गार्ग्यः तस्यापत्यं गार्ग्यायणः । दक्षस्यापत्यं दाक्षिः तस्यापत्यं दाक्षायणः इत्युदाहरणं तत् प्रशंसार्थमेवेमि दुर्गसिंहः । अपत्यस्य सम्बन्धिशब्दत्वात् षष्ठ्यन्तस्याकाङ्क्षायां षष्ठ्यन्तादेव प्रत्ययः ष्णिप्रभृतीनां षकार ईवर्थः णकारो वृद्ध्यर्थः ॥ ४१५ ॥

श्रीरा-टी—बाह्वादिर्यस्य सः बाह्वादिः स च अञ्च तत्तस्मात् अविश्च आप् च तौ अवयापौ तावादी यस्य स अवयावादिः तस्मात्, गर्ग आदिर्यस्य स तस्मात्; रेवती आदिर्यस्य स तस्मात्, शिव आदिर्यस्य सः । शेषश्च शिवादिश्च तत्तस्मात् । पुंस्त्वं स्त्रीत्वत्वात् णिश्च ष्णेयश्च ष्यञ्च ष्यायनश्च णीयश्च ष्णिकञ्च णञ्च ते । एते सप्तदभिन्येभ्यः सप्तभ्यः क्रमात् स्युरित्यर्थः । अपत्य इति अपतनादपत्यं यो व्यवहिते जनितः सोऽप्यपत्यं भवत्येवेति तस्मिन् वाच्ये यस्य सम्बन्धः अवगम्यते तस्मात् ष्यन्तात् भवतीत्यर्थः । यद्यपि अपत्ये इति सामान्येनोक्तं तथाप्यभिधानात् गर्गनड़ादिभ्यां गोत्रापत्य एव तत्र किं गोत्रमिति चेत् अत्रोच्यते पौत्रादिर्गोत्रमेकस्त्यस्तत्र लुक् न भवाद्यचि तस्मादेवास्त्रियां यूनि तत्र लुङ् नाद्यमस्तु वा । वंश्ये जीवत्यपत्यं तस्याः पौत्रप्रभृतेर्युवा । "जीवति भ्रातरि ज्येष्ठे कनीयांस्तु स उच्यते । वृद्धतरे स वान्यस्मिन् सपिण्डे सति जीवति । पूज्ये वृद्धं युवा वा स्यात् कुत्सायां वाऽयुवा युवा ।" आद्येऽपां यस्य भवेत् तदादि प्राग्देशः एङित्त्वमयत्यदादि । वृद्धं तथा गोत्रपरीत्तरं दं बालाबधियं प्रणयन्ति वृद्धाः । अस्यायमर्थः यत् पौत्राद्यपत्यं तद्गोत्रं परिभाष्यते तस्मिन् विवक्षिते भेदेन अपत्यत्योत्पत्तिप्रसङ्गे नियमः क्रियते एकश्च इति तत्र गोत्रे एक एव त्य इत्यर्थः । तथा च एकस्य त्यसः तत्तदपत्यार्थबोधकत्वमिति । यथा गर्गस्यान्तरापत्यं गार्ग्यस्तत्पुत्रोऽपि गार्ग्य इति । तस्य गोत्रत्यस्य भचीति विषयंप्तौ भवाद्यचि विषये गर्गयस्क इत्यादिना प्राप्तौ लुक् न भवतीत्यर्थः । यथा गर्गस्यान्तरापत्यानां छात्राः गार्गीया छात्राः एवं यास्कीया वैदीया इत्यादि । भवादीति किं गार्गेभ्यो हितं गर्गीयम् । अपि किं गर्गेभ्यः आगतः गर्गरूप्य इति । गोत्रापत्यस्य ष्वे लोपिनो यूनि ष्वान्तस्य ङ्वयोर्बहु लुक् । विदानामपत्यं युवा वैदः विदानाम् अपत्ये युवानौ वैदौ वैदशब्दात् यूनि वाच्ये णौ कृते ष्णट् न चस्त्रियेत्यादिना णेर्लुक् ङ्वान्तस्य गोत्रस्य तु यूनि ष्वे लुग्भवत्येव यथा वैदस्य वैदयोर्वा अपत्यानि युवानः विदाः एवम् उर्वा इत्यादि । ननु यून्यपत्ये विवक्षिते कस्याः प्रकृतेस्त्यो भवतीत्यत आह तस्मादित्यादि तस्मादेव गोत्रादेव पुनस्त्यो भवतीति नियम्यते स्त्रियां न भवति यथा गर्गस्यान्तरापत्यं गार्ग्यः गार्ग्यस्यान्तरापत्यं युवा गार्ग्यायणः एवं वात्स्यायनः । दक्षस्यान्तरापत्यं दाक्षिः तस्यापत्यं युवा दाक्षायणः । प्लाक्षायणः एवं प्लाक्षायणः । उपगोरन्तरापत्यं औपगवः तस्यापत्यं युवा औपगविः । एवं कापटविः नड़स्यान्तरापत्यं नाड़ायनः तस्यापत्यं युवा नाड़ायनिः एवं चारायणिः । स्त्रियां दाक्षी गार्गीत्यादि तत्रेत्यादि तत्र भवाद्यचि विषये युवत्यस्य लुग् भवति यथा फाण्टाहृत-

स्यान्तरापत्यं युवा सौवीरगोत्रात् फाण्टाहृतिमिमतादिति णः फाण्टाहृतस्य छात्रा इति विवक्षिते तस्य लुकि गोत्रत्वान्तात् छः प्राप्तः फाण्टाहृताश्छात्राः एवं भागवित्तस्यान्तरापत्यं भागवित्तिः भागवित्तेरपत्यं युवा रेवत्यादित्वात् ठकः तस्य छात्रा भागवित्ता इत्यादि। नायनस्तु वेति आयन्निति नान्तनिर्देशात् णायननायनयोर्ग्रहणं तथाच भवाद्यचि विषये युवत्यस्यायनो लुग्वा भवति यथा गार्ग्यायणानां छात्राः गार्ग्यायणीयाः गार्गीयास्तथा यस्कस्यान्तरापत्यं यास्कः यास्कस्यान्तरापत्यं युवा इति कादित्वात् नायनिः यास्कायनिः तस्य छात्रा यास्कायनीया यास्कीयाश्छात्रा इत्यादि। भवाद्यचि इति किं फाण्टाहृतरूप्यः यास्कायनिरूप्य इत्यादि प्रसङ्गादाह। वंश्ये जीवतीति वंशे भवो वंश्यः पित्रादिः तस्मिन् जीवति सति पौत्रप्रभृतेरपत्यं युवोच्यते गर्गे गार्ग्ये गार्ग्ये जीवति सति गार्ग्यस्यापत्यं युवा गार्ग्यायणः नडादित्वात् णायनः तुशब्दोऽत्रावधारणार्थः युवैव न गोत्रमिति असवंश्येऽपि ज्येष्ठे भ्रातरि जीवति सति कनीयान् भ्राता युवोच्यते गार्गस्य द्वौ पुत्रौ जातौ तयोः कनीयान् युवा ज्येष्ठो गार्ग्य एव ज्येष्ठे अविद्यमाने कनीयानपि गार्ग्य एव। वृद्धतरे इत्यादि सप्तपुरुषावधयो ज्ञातयः सपिण्डाः तत्र भ्रातुरन्यस्मिन्नपि सपिण्डे पितृव्ये पितामहभ्रातरि वा वयोधिके जीवति पौत्रादेरपत्यं युवा भवति। गार्ग्यस्यापत्यं गार्ग्यायणो गार्ग्यो वा वृद्धतराभावे स्थिते वा गार्ग्य एव। पूज्य इत्यादि शास्त्रान्तरे परिभाषणादगोत्रं वृद्धं पूजायां वा युवोच्यते। स भवान् गार्ग्यायणो गार्ग्यो वा पूजायामिति किं गार्ग्य एव। कुत्सायां इति ये येषु वा न युक्तास्ते निन्दायां अयुवानो वा भवन्ति गार्ग्यायणा गार्ग्या वा जाल्म इत्यादि। इदानीं वृद्धलक्षणमाह आदैजित्यादि अचां मध्ये यस्यादैच् आद्यास्ति तद्वृद्धं वृद्धाः प्रणयन्ति यथा मालाया इदं मालीयं शिवस्य विषयो देशः शैवः तत्र भवः शैवीयः औपगवीय इत्यादि। प्राग्देशाभिधानेऽचां मध्ये एङादि तद्वृद्धं यथा एनीपचनो देशस्तत्र भवः एनीपचनीयः गोनर्दीयः भोजकटीयः गोमतीया मत्स्या एङि किं आहिच्छत्रे भवः आहिच्छत्रः कान्यकुब्जः प्राग्देश इति किं देवदत्तो नाम वाहीकग्रामः तत्र भवः देवदत्तः गौमतामिदं गौमतं प्राग्देशस्तु "प्रागुदीच्यौ विभजते हंसः क्षीरमिवोदकम्। विदुषां शब्दसिद्ध्यर्थं सा नः पातु शरावती"। त्यदादिरपि वृद्धमुच्यते त्यत्र भवस्त्यदीयः अस्मदीय इत्यादि एवं गोत्रं आदि परं येषां तानि गोत्रोत्तराणि यस्य गोत्रि परोत्तरपदमित्यस्य विशेषणं यथा शुद्धगार्ग्यस्यायं शुद्धगार्गीयश्छात्रः एवं वृद्धकाश्यपीय इत्यादि। परे तु जिह्वाकात्यहरितकात्ययोर्वृद्धत्वं नेच्छन्ति तेन जैह्वाकाताः

**४१६ । णित्ते ञ्रिराद्यचः सुभग-सुपञ्चालाद्योस्तु द्वान्त्यदानाम् ।**

णित् ते ७।, ञ्रिः १।, आद्यचः ६।, सुभग-सुपञ्चालाद्योः ६॥, तु।१।, द्वान्त्यदानाम् ६॥।

अचां मध्ये आद्यचो ञ्रिः स्यात् णिति ते परे, सुभगादेस्तु द्वयोर्द्वयोः, सुपञ्चालादेस्त्वन्त्यस्य दस्य। [३३७ न्वोर्लोपौ तौ तेऽच्ये] बाह्वोरपत्यं बाह्वविः, उपविन्दोरपत्यम् औपविन्दविः, उडुलोम्नोऽपत्यम् औडुलोमिः, अग्निशर्म्मणोऽपत्यम् आग्निशर्म्मिः। कृष्णस्यापत्यं कार्ष्णिः।

---

हरितकात इति। नामधेयं वा वृद्धमुच्यते। यथा यज्ञदत्ताय: यज्ञे दत्त इत्यादि एतास्तिस्रः संज्ञा यथायथं विशिष्यलक्षणेषु वक्तव्या इति॥ ४१५॥

मूर्द्धन्य ण इत् यस्य स णित् णिश्चासौ तश्चेति णित्तः तस्मिन्। आदिश्चासौ अच्चेति आद्यच् तस्य। सुभगश्च सुपञ्चालश्च सुभगसुपञ्चालौ तौ आदौ ययोस्तौ सुभगसुपञ्चालादी तयोः। द्वे च अन्तश्च द्वान्तानि च तानि दानि चेति द्वान्तदानि। तेषां अचां मध्ये आद्यस्याचो ञ्रिः स्याण्णिति ते परे। सुभगादेस्तु द्वयोः पदयोराद्यचो ञ्रिः। सुपञ्चालादेस्तु अन्तस्य पदस्य आद्यचो ञ्रिः स्यादित्यर्थः। पूर्व्वः अतएव वृद्धिः स्थानिवत्त्वेन निर्देशेऽपि अत्वांचो ग्रहणं परसूत्रे आद्यचोऽनुवृत्त्यर्थम्। बाह्वादीनाह बाह्वोरपत्यं बाह्वविरिति पूर्व्वेण षष्ठ्यन्तात् णिः। अकारस्य वृद्धिः। नोर्लुक् त्ये चेत्यनेन षष्ठ्या लुकि न्वोर्लोपौतावविति उकारस्यौकारे सन्धौ बाह्वविरिति भागस्य पुनर्लिङ्गसंज्ञायां स्यादुत्पत्तिः एवं सर्व्वत्र। यया विभक्त्या वाक्यं तद्विभक्त्यन्तात् प्रत्ययः। उपविन्दोरपत्यं औपविन्दविः एवम् उडुलोम्नोऽपत्यं औडुलोमिः अग्निशर्म्मणोऽपत्यं आग्निशर्म्मिः उभयत्र न्वोर्लोपौताविति न लोपे ययोरित्यकारलोपः कृष्णस्यापत्यं कार्ष्णिः। बाह्वादिस्तु बाहु चटाकु उपचाकु निताकु चूडा बलाका वृषाक पुष्करसद् अन्तरहित सुमित्रा दुर्म्मित्रा कृष्णदेव आजीगर्त्त युधिष्ठिर अर्ज्जुन शाम्ब गद प्रद्युम्न राम रावण नड्डा इन्द्रशर्म्मन् उदञ्च अनधेनु उपविन्दु मूषिका ध्रुवका नगला शकला अनडुत् देवशर्म्मन् कुनामन् सुनामन् पञ्चन्

अष्टन् शङ्खभेदिन् खरनर्दिन् प्रकारमर्दिन् मासशराविन् क्षेमधृत्वक् इत्यादि। अत्र येऽदन्तास्तेषां गणान्तरपाठात् णेरप्राप्तौ बाह्वादौ पाठः ॥ ४१६ ॥

श्रीरा·टी—ण इत्यस्य स णित् णिश्चासौ तश्चेति स णित्तस्तस्मिन् आदिश्चासौ अच्चेति आद्यच् तस्य, सुभगस्य सुपञ्चालस्य तौ तावादी ययोः तौ सुभगसुपञ्चालादी तयोः, इं च अन्तञ्च तानि इअन्तानि तानि च तानि दानि चेति तानि इअन्तदानि तेषाम् आद्यच इति अजपेक्षया बोद्धव्यं अन्यथा आग्निशर्म्मिः औपगविः इत्यादिष्वेव स्यात्। न तु कार्ष्णि रित्यादौ स्यादच आदित्वात् इत्याह अचां मध्ये आद्यस्याच इति औडुलोमिः औडुलोमी उडुलोमाः एवं शारलोमीव लोमाः ष्वे तु शिवादित्वात् अनित्यणः। बाह्वादिर्यथा। "बाहुः कुनामाता कुलितकस्तरहस्ततम्। भद्रशर्म्माग्निशर्म्माणौ देवशर्म्मा च कश्यपः। युधिष्ठिरार्ज्जुनौ रामः कृष्णप्रद्युम्नकेशवाः। शाल्वो दशरथोऽनड्वान् पञ्चसप्ताष्टलक्षणः। क्षेमधर्त्तेन्द्रशर्म्माणौ गदमायशराविणौ। शङ्खभेदिसुनामानौ सेनलोमशिरोन्तदाः। णौ शीर्षशिरसश्चाथ चटाकुखरनर्दिनौ। पुष्करसदजीगर्त्तद्रोणजीवातु पर्वताः। अजधेनुश्च मण्डूक उदङ्गरनर्दिनौ। चूड़ा सुमित्रा दुर्म्मित्रा चूकना भगना तथा। ध्रुवका धुवका जङ्घा हिड़िम्बा चैव मूषिका। सवर्णा सकला चैव नगनः कारुवाचिनः। उदङ्कश्वशुरौ नाम्नि वेदणाकारनर्दिनौ। सस्य लोपो भवेत् णौ च सदभूर्थोन्तौ मितौजसाम्। अकौशिकेशलङ्कुश्च लोपः णौषायनेऽप्युतः। उपविन्दुर्व्यासविम्बौ निषादश्च्यववी तथा। षट्सु धाता च चण्डालो व्यासादौ परिकीर्त्तिताः।" इह केषाञ्चिदप्राप्ते पाठः अदन्तानां णिवाधकवाधनार्थः अन्तरहतोऽपत्यं आन्तरहातिः सुभगादित्वात् दइयोर्व्रिः। कश्यपस्य त्रिषु पाठात् काश्यपिः काश्यपेयः काश्यपः। युधिष्ठिरादिद्वयोः कुरुवंशत्वात् रामादिपञ्चानां वृष्णिवंशत्वात् शिवादि णवाधनार्थः। दशरथस्योभयत्र पाठात् दाशरथः दाशरथिः च तथा प्रदीयतां दाशरथाय मैथिलीति। उभयत्रानडुहः पाठात् आनडुहिः आनडुह्यः लक्षणशब्दस्य इह कुर्वादौ च पाठात् लाक्षणिः लाक्षण्यः एवं सेनान्तानां हारिषेणिः हारिषेण्यः सहस्रशिरसोऽपत्यं साहस्रशीर्षः। णौ शिरसः शीर्षादेशः एवं हास्तिशीर्षिः इत्यादि। पुष्करसदोऽपत्यं पौष्करसादिः सुभगादित्वात् इयोर्व्रिः। द्रोणादित्रयाणां उभयत्र पाठात् द्रौणिः द्रौणायनः जैवन्तिः जैवन्तायनः पार्व्वतिः पार्व्वतायनः मण्डूकशब्दस्य त्रिषु पाठात् माण्डूकिः माण्डूकेयः माण्डूकः उदीचोऽपत्यं औदञ्चिः मनीषादित्वात् उदञ्चादेशः। मूषिकाशब्दस्य इह गोधादौ च पाठात् मौषिकिः मौषिकारः। सवर्णाया उभयत्र पाठात्

**४१७। य्वोर्युम् दान्तेऽस्वङ्ग व्यङ्ग व्यड़ व्यवहार व्यायामं स्वागत स्वध्वर णनः।**

य्वोः ६॥, युम् ।१॥, दान्ते ७।, अस्वङ्ग—णनः ६।।

**आद्यचः स्थाने जातयोर्दान्ते स्थितयोर्यवयोः स्थाने क्रमादिमुमौ स्तो णिति ते परे, न तु स्वङ्गादेः।**

---

सावर्णिः सावर्णिकः। कारुवाचिनां इह कुर्वादौ च पाठात् तान्तुवायिः तान्तुवाय्यः नापितिः नापित्यः। उदङ्को नाम कश्चित् तस्यापत्यं औदङ्किः अदन्तात् प्राप्ते यौगिकशब्दान्निषेधार्थः पाठः। एवं श्वाशुरिः। नाम्नीति किं औदङ्कः श्वशुर्य्यः। तथाच श्वशुर्य्यौ देवरश्यालौ इति। सङ्गूयसोऽपत्यं सादभूयिः णौ सलोपः एवम् आम्भिः आमितौजिः। इहाकौशिके शलङ्कुः पठ्यते कौशिके तु नड़ादौ तथाच णौ णायने उतो लोपो भवति तेनाकौशिके शालङ्किः अकौशिके शालङ्का-यनः॥ ४१६॥

य च व च य्वौ तयोः इश्च उश्च यू ततो मकारानुबन्धस्य प्रत्येकेन सम्बन्धात् इम् उम् इत्यर्थः। युमिति लुप्तप्रथमाद्विवचनं यथासंख्यार्थं। स्वङ्गश्च व्यङ्गश्च व्यड़श्च व्यवहारश्च व्यायामश्च स्वागतश्च स्वध्वरश्च णन् चेति। पश्चान्नञ्-समासः तस्य। स्वङ्गादयः स्वरूपाः। णन्निति व्यतीहारे णन्स्त्रीति कृत्प्रत्ययः। तेन तदन्तस्य ग्रहणं आद्यच इति णिति इत्यनुवर्त्तते। आद्यचः स्थाने जातयोर्दान्तेस्थितयोर्यवयोः स्थाने क्रमादिमुमौ स्यातां णित्तद्धिते परे। न तु स्वङ्गादीनाम्॥ ४१७॥

श्रीरा-टी—य च व च तौ तयोः इश्च उश्च तौ यू ताभ्यां ममितं करोति युम् यस्मान्तो दान्तः तस्मिन्। स्वङ्गस्य व्यङ्गस्य व्यड़स्य व्यवहारस्य व्यायामस्य स्वागतस्य स्वध्वरस्य णन् च तत् न तत् अस्वङ्गव्यङ्गव्यड़व्यवहारव्यायामस्वागतस्वध्वरणनं तस्य पूर्वसूत्रादाद्यच इत्यनुवर्त्तयन्नाह आद्यच इति। णिति आदौ इमुमि कृते पश्चात् त्रिः। उदाहरणानि वैयश्विरित्यादि वक्ष्यति आद्यच इति किं दधिप्रियोऽश्वः शाकपार्थिवा-दित्वान्मध्यपदलोपे दध्यश्वः तस्यापत्यं दाध्यश्विः। दान्ते इति किं इन् ल गतौ शतृ यत् तस्येदं यातमित्यादि। ननु कथं द्याशीतिक इति चेन्न सुपाञ्चालादिपाठेन पूर्वपदस्यानिमित्तत्वात्॥ ४१७॥

**४१८। द्वार स्वर स्वः स्वस्ति स्वादु मृदु व्यल्कस श्वः श्वन् स्फाकृत स्व स्वाध्याय स्वग्रामैकन्यग्रोधानां श्वापदन्यङ्क्वोस्तु वा नत्विति श्वादेः।**

द्वार-न्यग्रोधानां ६।।।, श्वापदन्यङ्क्वोः ६।, तु ।१।, वा ।१।, न।१।, तु।१।, इति ७।, श्वादेः ६। ।

**द्वारादेरद्वितीयस्य न्यग्रोधस्य च य्वोर्युम् स्यात्, श्वापदन्यङ्क्वोस्तु वा, न तु श्वादेरिकारादौ ते।**

**वैयश्विः सौवश्विः। सङ्गादेस्तु स्वाङ्गिः व्याङ्गिः व्याड़िः।**

---

एकोऽद्वितीयश्चासौ न्यग्रोधश्चेति एकन्यग्रोधः। ततो द्वारश्च स्वरश्च स्वरिति रेफान्तमव्ययञ्च स्वस्तीत्यव्ययञ्च स्वादुमृदुश्च व्यल्कसश्च श्वस् इति सान्तमव्ययञ्च श्वा च स्फाकृतश्च धनादिवाची स्वश्च स्वाध्यायश्च स्वग्रामश्च एकन्यग्रोधश्च ते तेषाम्। श्वापदश्च न्यङ्कुश्चेति श्वापदन्यङ्कू तस्य। श्वा आदिर्यस्य स श्वादिः तस्य। द्वारादीनां यवयोरदन्तत्वादप्राप्तौ ग्रहणं पृथक्। द्वारादेर्यवयोरियुमौ स्यातां णित्तद्धिते परे। श्वापदन्यङ्क्वोस्तु वा। न तु श्वगणप्रभृतीनां इकारादौ तद्धिते परे इत्यर्थः। अदन्तानाह वैयश्विरित्यादि विगतोऽश्वो यस्य स व्यश्वः तस्यापत्यं वैयश्विः। अत्र यकारस्य इमि कृते तस्यैव वृद्धिः एवं शो..नोऽश्वो यस्य स स्वश्वः तस्यापत्यं सौवश्विः अत्र वकारस्य उमि कृते तस्यैव वृद्धिः। आद्यचः स्थाने जातयोः किं दधिप्रियोऽश्वः दध्यश्वः तस्यापत्यं दाध्यश्विः। मधुप्रियोऽश्वः मध्वश्वः तस्यापत्यं माध्वश्विः इत्यादौ युम् न स्यात्। दान्ते स्थितयोः किं इण गतौ शट् यिणोऽच्यनाविति यादेशे यन्निति। यत इदं यातमिति। एवं टुडु उपतापे कुडोरिति किः मनीषादित्वादुकारस्य वकारे द्विरिति शब्दः। द्वयोर्वर्षयोर्भवं द्विवार्षिकं इत्यादौ युम् न स्यात्। स्वङ्गादेस्तु शोभनमङ्गं यस्य स स्वङ्गः तस्यापत्यं स्वाङ्गिः इत्यादीनां आद्यचः स्थाने जातत्वाद्दान्तत्वाच्च प्राप्तौ निषेधः। णनन्तस्य तु व्यावक्रोशी कृत व्यतीहारे णन्स्त्रीति णन् प्रत्यये णनन्तात् स्वार्थे ण इति स्वयं वक्ष्यति। तेन षित्त्वादीपि इत्यादौ न स्यात्॥ ४१८॥

## ४१९। व्यासादेर्ङक् ष्णौ।

व्यासादेः ६।, ङक् ।१।, ष्णौ ७।

**वैयासकिः सौधातकिः। आत्रेयः शौभ्रेयः। गाङ्गेयः माह्येयः यौवतेयः।**

---

श्रीरा-टी—एकश्चासौ न्यग्रोधश्चेति एकन्यग्रोधः दान्तरानुपलक्षित इत्यर्थः। द्वारश्च स्वरश्च स्वश्च स्वस्तिश्च स्वादुमृदुश्च व्यल्कसश्च श्वश्च श्वा च स्फ्यकृतश्च श्वश्च स्वाध्यायश्च स्वग्रामश्च एकन्यग्रोधश्च ते तेषां श्वापदश्च न्यङ्कुश्च तत्तस्य • पुंस्त्वं सौत्रत्वात् श्वादिर्यस्य सः श्वादिस्तस्य आदिः पूर्वः। एतेषां यवयोरदान्तत्वात् आद्यचः स्थानेऽजातत्वाच्च पूर्वेणाप्राप्ते वचनमिदम्। पूर्वसूत्रोदाहरणमाह वैयश्विरिति। विगतोऽश्वो यस्य स व्यश्वः तस्यापत्यमित्यर्थेऽदन्तत्वात् णिः यस्यादाविम् पश्चात् त्रिः। एवं शोभनः अश्वो यस्य स स्वश्वः तस्यापत्यं सौवश्विः। प्रत्युदाहरति स्वाङ्गिरिति शोभनमङ्गं यस्य सः तस्यापत्यं इत्यादि वाक्यम्॥ ४१८॥

व्यासादेर्ङक् स्यात् ष्णौ परे ङित्वादन्त्यस्य स्थाने। व्यासस्यापत्यं वैयासकिः यकारस्य इमि कृते वृद्धौ ङक्। एवं सुधातुरपत्यं सौधातकिः। अत्र ष्णौ परे सुधातृशब्दस्य ङक्विधानसामर्थ्यादेव णिः। व्यासादिस्तु व्यास वरुढ़ निषाद चण्डाल विम्ब सुधातृ इत्यादि। अत्र्यादीनाह अत्रेरपत्यं आत्रेयः शुभ्रस्यापत्यं शौभ्रेयः। अत्र्यादिस्तु अत्रि निधि शुभ्र विष्ट पुरु ब्रह्म कृत शतद्वार शताद्वार शलाका शाला खुला कुमारिका कुवेरिका अम्बिका गन्ध पिङ्गला खलोन्मत्ता रोहिणी अजवस्ति विश्वक्रन्दि शलाकाभ्रू लेखाभ्रू विमातृ विधवा किकसा रुक्मिणी दग्धशालूक शाकम्बि गोधा कृकलास अनीवी प्रवाहण भरत भारत मृकण्डु मयूर कर्पूर अन्यतर आलीढ़ सुदन्त दन्त सुदच्च सुनामन् कद्रु उद आकाशायन किशोरिका जिह्माशिन् परिधि वायुदत्त शवल शकल खदूर अशोक अन्तर्दृष्टिन् हरितिन् वलीवर्द्दिन् विश्वचित् वीज अश्व अश्विन् अश्मन् श्वन् कद्रु पाण्डु अजिरेत्यादि अत्र ये आवन्ता ईवन्ताश्च तेषां गणान्तरपाठात् ण्यस्य वाधे अत्र्यादौ पाठः। आवादीनाह गङ्गाया अपत्यं गाङ्गेयः मह्या अपत्यं माहेयः। एवं युवतेरपत्यं यौवतेयः। अत्र युवत्यनडुहीति निपातसूत्रेण युवन्शब्दात् कृतस्य

तिप्रत्ययस्यापि आवादित्वात् ण्येयः। पाच्छौणादीत्यनेन पचे ईपि क्रते तु युवत्या अपत्यं यौवतेयः अत ईकन्तत्वात् सुतरां ण्येयः॥ ४१९॥

श्रीरा टी—व्यास आदिर्यस्य सः तस्य व्यासादेरिङक् स्यात् णौ परे। वैयासकिरित्यादि व्यासस्यापत्यं सुधातुरपत्यम् इत्यादि वाक्यम्। ङित्वादन्त्यस्याक् एवं वैश्वकिः नैषादकिः वारुड़किः चाण्डालकिरिति एषाम्वृष्ण्यन्धककुरुभ्यश्चेति णे प्राप्ते बाह्वादौ पाठः येऽत्र गोत्रवाचित्वेन प्रसिद्धास्तेभ्यो गोत्रवाचित्वे णिः तेन बाहुर्नाम कश्चित् तस्यापत्यं बाहविः इत्यादि। ण्यट्रचत्रियार्षेभ्यो युव णेर्लुक्। ण्यात् ट्रात् चत्रियात् आर्षाच्च यून्यर्थे णेर्लुक् स्यात्। कुरोर्ब्राह्मणापत्यं कौरव्यः तस्यापत्यं युवा कौरव्यो ब्राह्मणः चत्रिये तु कौरव्यायणिः। ट्रात् विदस्यापत्यं वैदः तस्यापत्यं युवा वैदः। एवं मौत्सः। चत्रियात् श्वफल्कस्यापत्यं श्वाफल्कः तस्यापत्यं युवा श्वाफल्कः। एवं वासुदेवः आनिरुद्धः। आर्षात् वशिष्ठस्यापत्यं वाशिष्ठः तस्यापत्यं युवा वाशिष्ठः एवं वैश्वामित्रः गर्गशब्दो नड़ादिस्तेन गार्ग्यं भर्गस्यापत्यं भार्गिः तस्यापत्यं युवा भार्गायण इति आत्रेय इति अत्रेरपत्यं ण्येयः तोर्लुकि ययोर्लोपः त्रिः। शौभ्रेय इति शुभ्रस्यापत्यमिति वाक्यम् एवं गाङ्गेयः। अत्र्यादिर्यथा। "अत्रिः शुभ्रसुनामदत्तशबलाः शालूकजिह्वाशिनौ शाकम्बार्यन्तराजवस्तिशकलाः कर्पूरवीजाश्विनः। विश्वक्रन्दिशलाखलापविषयः कद्रुः खडूरोऽजिरः श्वानीवीभरतो मृकण्डुकुकरावश्रादशाश्ववीदिशः। अम्बा विमाता विधवा शलाका किशोरिका विष्णुपुरीमयूरः। प्रवाहणा लोहसुदन्तसुग्धा कुमारिकाशीकसुदचगोधाः। वायुर्दत्तशलाकाभ्रू लेखाभ्रू गन्धपिङ्गलाः। अन्तर्दृष्टी वलीवर्दो हरिती विश्वचित्तथा। शतद्वारः शताह्वारः खलोन्मत्ता कुवेरिका। अम्बिकारोहिणी ब्रह्मह्रदाकाशायनोभवः। विश्रोभुवो भुवः ण्येये वाशिष्ठे श्यामलचणौ। अणायाद्याजिकावान्ता वड़वा शक्रलो मतः। विकर्णः काश्यपे प्रोक्तस्तत्रैव हि कुसीतकः। अम्बिका च चतुष्पादः पाण्डु कमण्डलु दुष्कुलाः। माता पितृष्वसुः ण्येयः उकाराभ्यां ङिदीरितम्।" अत्रिशब्दस्य ऋषिवाचकत्वात् णे प्राप्ते पाठः अत्रादन्तानां पाठोऽतः णिबाधनार्थः। शखलादिशब्दानां आबोवन्तानां अद्व्यानां नदी मानुषकीसंज्ञकानां शिवादित्वात् णे प्राप्ते पाठः। शखला इत्यत्र नाम निशखला शब्दोऽपि कश्चित्। इह कद्रुशब्दः पिङ्गवर्णार्थकः। अथाच मेदिनिः कद्रुस्त्रिषु स्वर्णपिङ्गे नागानां मातरि स्त्रियाम् इति। कृकलास रोहिणी अजवस्ति प्रभृतयो येऽत्र चतुष्पाज्जातिवाचिनस्तेषां अचतुष्पाज्जातिवाचकत्वेऽपि ण्येयार्थः पाठः विधवाशब्द-

## ४२० । ओर्लोपोऽकद्रुपाण्ड्वोरेये ।

ओः ६।, लोपः १।, अकद्रुपाण्ड्वोः ६॥, एये ७ ।

**उवर्णस्य एये परे लोपः स्यात् नत्वनयोः । कामण्डलेयः । तयोस्तु काद्रवेयः पाण्डवेयः ।**

---

स्त्र्यादित्वात् ष्णौ सिद्धे पाठः यदा दुःशीलाभिधायिनी तदैव बाधनार्थः प्रवाहण-शब्दस्य सुभगादिसुपञ्चालाद्योः पाठात् प्रवाहणेयः गोधाशब्दस्यापाठो गोधादे-रारस्य नित्यत्वज्ञापनार्थः । भ्रुवोऽपत्यं भौवेयः ष्णेये भ्रुवादेशः भ्रुव इति किं शालाकाभ्रेयः लेखाभ्रेयः ष्णेये भ्रूर्लोपः । श्यामेयो वाशिष्ठः ब्राह्मणेयो वाशिष्ठः अन्यत्र श्यामायनः लाक्षणायणिः लाक्षणायण्यः अणेय इत्यादि । हरेरपत्यं हारेयः एवं वैधवेयः शाक्रेय इत्यादि । अण इति किं दाक्षेरपत्यं दाक्षायणः प्लाक्षायणः । ह्रच इति किं मारीचं सौरुचः वड़वाया अपत्यं वाड़वेयः शुक्लः अन्यत्र वाड़वः वैकर्णेयः काश्यपः कौसीतकेयः काश्यपः अन्यत्र वैकर्णिः कौसीतकिः चतुष्पाद इति कमण्डलुश्चतुष्पादजातिविशेषः तस्यापत्यं ष्णेये उत्लोपार्थमाह ॥ ४१९ ॥

कमण्डलोरपत्यं कामण्डलेयः अत्र कमण्डलुशब्दात् संज्ञायामूप् प्रागुक्तः । ऊव-न्तात् ष्णेये उकारस्य लोपः । महाकुलीन ऐक्ष्वाके वंशे दाशरथिर्ममेति" भट्टौ । ऐक्ष्वाक इति तु इक्ष्वाकुमाचष्टे इति ञौ डित्वात् टिलोपे इक्ष्वाकयति इति स्थितौ ततः इक्ष्वाक्यते इक्ष्वाकुरुच्यते असौ इति कर्म्मणि घञि इक्ष्वाकः इक्ष्वाकस्यायं ऐक्ष्वाकः इति साध्यम् । तयोस्तु काद्रवेयः पाण्डवेय अत्र न्वोर्लोपौतावित्युकारस्य ओकारः । पाण्डुशब्दस्य गर्गादिपाठात् ष्णे पाण्डव्यः शिवादिपाठात् ष्णे पाण्डवः ॥ ४२० ॥

श्रीरा-टी—कद्रुश्च पाण्डुश्च तत् कद्रुपाण्डु तस्य पुंस्त्वं सौत्रत्वात् अनिताऽका ष्णौ गृह्यते उकारलोपे कामण्डलेयः एवं शितिवाहोरपत्यं शैतवाहेयः अम्बाया अपत्यं आम्बेयः काद्रवेयः इति नागमातृवाचकस्य नेह ग्रहणं तस्योवन्तत्वात् ष्णेयप्राप्तेः । पाण्डवेयः इति शिवादित्वात् पाण्डवः दौष्कुलेयं दुष्कुलीनः । मातृष्वसृपितृष्वसृभ्यां ष्णेयी डित् मातृष्वसेयः पैतृष्वसेयः पितृष्वस्रादित्वात् मातृष्वस्रीयः पैतृष्वस्रीयः अदितेरपत्यम् आदितेयः कुर्वादित्वात् आदित्यः एवं दैतेयः दैत्य आकृतिगणो-ऽयम् । आचार्य्युदाहरति माहेयः इति मह्या अपत्यम् इति वाक्यम् एवं यौवतेयः

४२१। कल्याणी सुभगा दुर्भगा बन्धकी रजकी वलीवर्द्दी ज्येष्ठा कनिष्ठा मध्यमा परस्त्र्यनुसृष्ट्यनुदृष्टिकुलटाभ्य इनेयः।

कल्याणी—कुलटाभ्यः ५।।।, इनेयः १। ।

सौभागिनेयः दौर्भागिनेयः।

---

सौपर्णेयः कौम्भकारेयः। द्व्यचोऽनद्याः नदीवर्जितात् प्रीत्यान्तात् द्व्यचः ढ्णेयः स्यात्। दाक्षेयः गौपेयः नद्या इति किं गौणा गोदावरी गौणः वृद्धाभ्यो नदी मानुषी संज्ञाभ्यः इति ढ्णेयप्राप्तेर्विषयम् एतत् ग्रन्थकृता माहेय इत्युक्तम् ॥ ४२० ॥

अर्थवशाद्विभक्तेर्विपरिणाम इति न्यायात् एय इति सप्तम्यन्तं षष्ठ्यन्तं भूत्वाऽनुवर्त्तते इति तयोदशभ्यः परस्य ढ्णेयस्य स्थाने इनेयः स्यात्। स्थानिवत्त्वाद्वृद्धिः स्त्रियामीप् च। कल्याण्या अपत्यं काल्याणिनेयः स्त्रियां काल्याणिनेयी अत्र सुभगा दुर्भगा परस्त्री इति त्रयाणां सुभगादित्वात् उभयपदस्य वृद्धिः यथा सौभागिनेयः परस्त्रिया अपत्यं पारस्त्रैणेयः इत्यत्र इनेये कृते सुभगादिपाठसामर्थ्यात् यथोर्लोप इतीकारस्य लोपाभावे सन्धौ अस्यैव वृद्धिः ॥ ४२१ ॥

श्रीरा·टी—कल्याणी च सुभगा च दुर्भगा च बन्धकी च रजकी च बलीवर्द्दी च ज्येष्ठा च कनिष्ठा च मध्यमा च परस्त्री च अनुसृष्टिश्च अनुदृष्टिश्च च कुलटा च ताः ताभ्यः। राजतीस्थाने रजकीति लिपिकरप्रमादः। जिनेन्द्रबुद्धिपादैन जृधीरत्वेन साधितम् एभ्यश्चतुर्दशभ्यः पूर्वस्थितप्रान्तनिर्दिष्टस्य ढ्णेयस्य क्ति विपरिणामात् इनेयः यकारणकारं विनैवादेशः। अतएव षीत्त्वादीप् णित्वाद्वृद्धिः। तेन काल्याणिनेयीत्यादि। इतो लुगिनेयस्य परस्त्रियाः। परस्त्रीशब्दात् परस्य इनेयस्य इतो लुक् स्यात् पारस्त्रैणेयः सुभगादित्वात् पदद्वयोर्वृद्धिः। इहासत्यर्थकुलटाया ग्रहणं तेन सत्याः कुलटाया अपत्यं कौलटिनेयः अत्रादेराकृतिगणत्वात् कौलटिनेयः। असत्यास्तु कौलटेरः कौलटेयः। सौभागिनेय. इति। सुभगादिर्यथा। "सुभगजङ्गलकृत् सिन्धु धेनु वनजदोत्तराः। वध्योगो गारवेणुश्च शतकुम्भपरस्त्रियौ। इह सर्वपरादिस्तु लोकः प्रयोग.इत्यपि। असिहत्या चतुर्विद्या कुरुपञ्चाल एव च। अधिदेवादिभूतौ च ढ्णो राजपुरुषो मतः। सर्वात् पुरुषभूमी च तथा सान्तरहत् स्मृतः। अन्वादि-

शति कोऽपि स्यादनुसंवत्सरो मतः। अस्य हेत्यस्य हेत्यौ च तथा कुरुकाती मतः। स्यात् पुष्करसादित्येव सूत्रपूर्वनड़ः स्मृतः। अभिगमोऽनुहोड़श प्राग्लेशनगरान्तदाः। नेन्द्रान्तर्घादिवरुणास्तचे चेद्देवता अपि। अथ प्रवाहणः णेग्रे णेयान्ताच षणी-त्यपि। अर्द्धादिपरिमाणञ्च भवेदायजनद यदि। अनोशूरोऽशुचिश्चैवाचेवज्ञा-कुशलौ मतौ। सुभगादिरिति ख्यातोऽसंख्यस्तत्रेषु तान्त्रिकैः।" सुभगादीनि दान्यु-त्तरदानि येषां ते सुभगाया अपत्यं सौभागिनेयः। द्वयोर्द्वयोर्वृद्धिः। एवं सौभाग्यं दौर्भाग्यं महासौभगाय दीयते उद्याचिदिषु छान्दसः। कुरुजङ्गले भवः कौरु-जाङ्गलः कश्चित् जङ्गलधेनुवनजान्ताः सुभगादौ न पठ्यन्ते तन्मते कौरुजङ्गलः वैश्व-धेनवः सौवर्णवनज इति। सुहृद इदं भावः सौहार्द्यं सौहार्दम् इह मुख्यस्य ग्रहणात् आदिष्टस्य तु सौहृदमिति सुहृद इदं सौहार्दं शक्तुप्रधानः सिन्धुः मध्यदलोपात् शक्तु-सिन्धुः तत्र भवः शाक्तुसैन्धवः सिन्धुशब्दः कच्छादिषु पठ्यते तेन तदन्तविधेरपि ष्णः वैश्वधेनवं समूहे आधेनवं सौवर्णवानजं वध्योगशब्दो विदादिस्तस्यान्तरापत्यं ष्ण्रः वाध्यौगः अनन्तरे वाध्यौगिः। अगारवेणुनामा कश्चित् तस्यापत्यम् आगारवैणवः, एवं शातकौम्भं परस्त्रिया अपत्यं पारस्त्रैणेयः षेयस्य इनेयः इह लोके भव ऐह-लौकिकः लोकोत्तरादिति ष्णिकः सर्वलोके विदितः सार्वलौकिकः परलोके भवः पारलौकिकः प्रयोगे भवः प्रायौगिकः आध्यात्मादित्वात् ष्णिकः असिहत्यायां भवः आसिहात्यं चतस्रो विद्याः चतुर्विद्याः चतुर्विद्या एव चातुर्विद्यं चातुर्वर्ण्यमित्यन्यः। परे तु विद्यास्थानेऽप्येवमाहुः कुरुपाञ्चाले भवः कौरुपाञ्चालः अधिदैवे अधिभूते भवम् आधिदैविकम् आधिभौतिकम् आध्यात्मादित्वात् ष्णिकः। राजपुरुषस्य भावो ब्राह्म-णादित्वात् ष्यः राजपौरुष्यं षेता किं राजपुरुषस्यापत्यं राजपुरुषायणिः सर्वपुरुष-स्येदं सार्वपौरुषं सर्वभूमे र्निमित्तम् ईश्वरः संयोगः उत्पातो विदितो वा सार्वभौमः। अन्तरहतोऽपत्यम् आन्तरहातिः अनुशतिकस्येदम् आनुशतिकम् अनुसंवत्सरेण दीयते आनुसंवत्सरिकम् अस्य हेतिः प्रयोजकमस्य आस्यहैतिकः गणपाठात् मध्यलुक्। अस्य हत्येति युक्तः आस्यहात्यः ष्णः। अत्र परेकदेशिनः अस्यहेति अस्यहेत्यौ शब्दौ न पठन्ति। अस्यहत्यशब्दोऽध्याये वर्त्तते। कुरुकतस्यापत्यं कौरुकात्यः गर्गादित्वात् ष्ण्यः। पुष्करसदोऽपत्यं पौष्करसादिः बाह्वादित्वात् ष्णिः। सूत्रं पूर्वं यस्य स सूत्रपूर्वः स चासौ नड़श्चेति तस्यापत्यं सौत्रनाड़िः। अभिगमम्हर्च्छति अभिगामिको गुणः। अनुहोतेन पठति आनुहौतिकः। नगररूपमिदं येषां ते प्राग्लेशे वर्त्तमानाश्चेत् सुभ-गादयः। पुण्ड्रनगरे भवः पौण्ड्रनागरः सौचनागरः। प्राग्लेश इति किं महानगरे भवः

महानागरः इन्द्रोऽन्तो यस्य स इन्द्रान्तः घ आदिर्यस्य स घादि घादिश्चासौ वरुणश्चेति घादिवरुणः इन्द्रान्तश्च घादिवरुणश्च तौ न विद्येते यासु ताः तच्छब्देन देवतोच्यते। तासाञ्च: द्वन्द्वः तत्र तस्मिन् तथाच देवतानां चेत् सति देवतावाचकशब्दाः सुभगादौ पठ्यन्ते तेनाग्निश्च मरुच्च तौ देवतेऽस्य आग्निमारुतं कर्म क्रियते यो देवताद्वन्द्वः सूक्त-सम्बन्धी हविःसम्बन्धी वा तत्रैवायं विधिः इह तु न भवति स्कान्दविशाखः ब्राह्म-प्रजापत्यः नेन्द्रान्तघादिवरुणा इति किं सौमेन्द्रम् ऐन्द्रावरुणं हविः इह तु स्यादेव ऐन्द्राग्नम् आग्निमारुतम्। अथानन्तरं प्रवाहणशब्दोऽस्यादिषु पठ्यते णेय एव तस्य ग्रहणं तेन प्रवाहणस्यापत्यं प्रावाहणेयः तस्यापत्यं युवा प्रावाहणेयिः एतदादि सर्वे सुपञ्चालादावपि पठ्यन्ते। तेन पूर्वदस्य विकल्पः प्रावाहणेयः प्रावाहणेयिः। आदि-श्चासौ अच्चेति आद्यच् न अत् अनत् आद्यच् अनत् यस्य तत् परिमाणविशेषणं तथा चाकारात् भिन्नाद्यच् अर्द्धादिपरिमाणं सुभगादौ पठ्यते तेन अर्द्धद्रोणेन क्रीतम् आर्द्धद्रौणिकम् अर्द्धकौड़विकम् अनदिति किम् अर्द्धप्रस्थेन क्रीतम् आर्द्धप्रास्थिकम् अर्द्धप्रस्थिकम् इति कश्चित् सुपञ्चालादित्वात् अर्द्धद्रौणिकम् अर्द्धकौड़विकम्। एवम् आनैश्वर्य्यम् आशौचम् अशौचम् आचैतन्यम् अचैतन्यम् आकौशलम् अकौशलम् आनैपुण्यम् इत्यादि। असंख्यः सुभगादिः तन्त्रे तान्त्रिकैरुक्तः तेन उदकशुद्धस्यापत्यम् औदकशुद्धिरित्यादि। प्रसङ्गसङ्गत्या साहित्येन सुपञ्चालादिरिह निरूप्यते। सुसर्वा-र्द्धाज्जनपदा दयामद्रादिशश्च ते। प्राग्ग्रामनगरादिभ्योऽवयवाद्दृत्तवाचिनः। संवत्सरस्तु संख्यादिः संख्या संख्यादिरेव च। अशानपरिमाणञ्च संख्यादिश्चेदनामनि। अभि-विष्याति संख्यादिवर्षं प्रोष्ठपदास्तुजे। अथ प्रवाहणः णेये णेयान्तषणीत्यपि। अर्द्धादिपरिमाणञ्च भवेदाद्यजमद्यदि। अनोश्वरो शुचिश्चैव चेतन्याऽकुशलौ मतौ। अनिपुणश्च केप्यत्र यथा तथा यथा पुरौ। सुपञ्चालादयश्चैते कथ्यन्ते कोविदोत्तमैः। सु सर्व अर्द्ध इत्येतेभ्यो जनपदाः सुपञ्चालादौ पठिताः तेन सुपाञ्चाले भवः सुपाञ्चालकः एवं सर्वपाञ्चालकः अर्द्धपाञ्चालकः अथानन्तरं ते जनपदा मद्रभिन्ना दिक्पूर्वाश्चेद्भवन्ति तदा सुपञ्चालादौ पठ्यन्ते यथा पूर्वपाञ्चालकः उत्तरपाञ्चालकः दक्षिणपाञ्चालकः अमद्रा इति किं पौर्वमद्रः आपरमद्रः दिग्वाच-केभ्यः प्राग्देशवर्त्ति ग्रामनगरवाचकाः सुपञ्चालादौ यथा पूर्वा चासौ इषुकामशमी तत्र भवः पूर्वेषुकामशमः पूर्वकार्ष्णमृत्तिकः नगराणां तावत् पूर्वस्मिन् पाटलिपुत्रे भवः पूर्वपाटलिपुत्रकः पूर्वकान्यकुब्जकः नगराणां ग्रामग्रहणेनैव सिद्धे भेदेन यत् उभयोरुपादानं तत् सम्बन्धभेदप्रतिपत्त्यर्थं तथाच दिक्पूर्वसमुदायः पूर्वेष

## ४२२। क्षुद्रागोधाभ्यो वैरारौ।

क्षुद्रागोधाभ्यः ५।॥, वा ।१।, एरारौ १॥।

**नाटेरः नाटेयः, गौधेरः गौधारः गौधेयः। गार्ग्यः वात्स्यः जामदग्न्यः पाराशर्य्यः।**

---

कामशम्यादिर्ग्रामनामधेयम् इह तु दिग्वाचकं विनैव पाटलिपुत्रादिशब्दो नगरमाह। पूर्वत्र ग्रामवाचकसमुदायस्यादिक्पूर्वावयवादुत्तरस्य त्रिः। इह तु दिग्वाचकान्नगरस्योत्तरदस्य त्रिरिति। ऋतुशब्दस्य समभिव्याहारात् ऋत्ववयववाचिनः पूर्वदात् ऋतवः सुपञ्चालादौ पठ्यन्ते यथा पूर्वं वर्षाणां पूर्ववर्षास्तत्र भवः पूर्ववार्षिकः पूर्वहैमन्तम् अवयवादिति किं पूर्वासु वर्षासु भवः पौर्ववार्षिकः। संख्यापूर्वसंवत्सरः सुपञ्चालादौ पठ्यते यथा द्वौ संवत्सरौ व्याप्याधीष्टो भृतो भावी वा द्विसांवत्सरिकः एवं संख्यापूर्वसंख्यापि सुपञ्चालादौ यथा द्वे षष्टी व्याप्याधीष्टो भृतो भावी वा द्विषाष्टिकः द्विसाप्ततिकः द्विषष्ट्यादिशब्दाः संख्यासु वर्त्तमानाः कालाधिकारीयत्यमुत्पादयन्ति। संख्यादिशानवर्जितं परिमाणमसंज्ञायां सुपञ्चालादौ पठ्यते। यथा द्वौ कुड़वौ मानमस्य द्विकौड़विकः द्वाभ्यां सुवर्णाभ्यां क्रीतं द्विसौवर्णिकम्। अनामनि इति किं पाञ्चलोहितिकः पाञ्चकपालिकः। भविष्यति तु त्रीणि वर्षाणि व्याप्य भावी त्रैवार्षिकः तथाच नक्षत्रं ताभिर्युक्तकाल इत्यर्थे णः तस्याऽर्थशेषे लुप् प्रोष्ठपदा तत्र जातः इत्यर्थे ऋतुनक्षत्रात् णः प्रोष्ठपादः ज इति किं प्रोष्ठपदासु भवः कुशली वा इत्यर्थे णः प्रोष्ठपदः प्रोष्ठपदा। इति निर्देशात् तत् पर्य्यायभाद्रपदाशब्दस्यापि ग्रहणं तेन भाद्रपादः अजि तु भाद्रपद इति। अथ प्रवाहणं णेय इत्यादि प्रयोगाः प्रदर्शिताः। केऽपीत्यादि आहुरिति शेषः तेन अयाथातथ्यम् अयाथापूर्व्यं परमते अयथातथ्यम् अयथापूर्व्यमिति ॥४२१॥

क्षुद्राश्च गोधाश्च क्षुद्रागोधाः ताभ्यः एरश्च आरश्च एरारौ। क्षुद्राः शीलकुलहीना अङ्गहीनाश्च। गोधा गोधादिः अत्र वाशब्दस्य व्यवस्थावाचित्वात् क्षुद्राभ्यः परस्य णेयस्य एरः स्याद्वा। गोधादेः परस्य णेयस्य एरारौ स्यातां वा इत्यर्थः। शीलहीना यथा नट्या अपत्यं नाटेरः नाटेयः एवं कुलटाया अपत्यं कौलटेरः कौलटेयः पूर्वादिनेये कौलटिनेयः एवं दास्या अपत्यं दासेरः दासेयः। अङ्गहीना यथा। काणाया अपत्यं काणेरः काणेयः गोधाया अपत्यं गौधेरः गौधेयः गौधारः।

चटकाया अपत्यं चाटकेरः अत्र यर्योर्लोपः इत्यत्र यर्योरिति ज्ञापकादाकारलोपाभावः वाशब्दव्यवस्थयास्य नित्यम्। एवं स्त्र्यपत्ये णेरस्य लुकि चटका इत्येव निपात्यते। गर्गादिमाढ्‌। गर्गस्यापत्यं गार्ग्यः इत्यादौ यर्योरित्यनेन अकारादेर्लोपः। स्त्र्यपत्ये गार्गी सूर्य्यागस्त्यस्येति यकारलोपः एवं वात्स्य इत्यादि॥ ४२२॥

श्रीरा-टी—क्षुद्राश्च गोधाश्च ताभ्यः व्वनिर्द्देशेनार्थ एयवाविधानसामर्थ्यात् नट्या अपत्यं इति वाक्यं पक्षे नाटेयः एवं यदा कुलटाशब्दोऽसतीवाचकस्तदा कौलटेरः कौलटेयः शीलहीनत्वात्। अङ्गहीनायास्तु काणाया अपत्यं काणेरः काणेयः एवं कौञ्जेर इत्यादि। गोधार इति गोधाया अपत्यम् इति वाक्यं क्षुद्रादिपाठात् गौधेरः अत्रादौ पृथक्‌ण पाठात् गोधेय इति जुष्टस्यापत्यं जौष्टारः मृग्या अपत्यं मार्गारः षण्डस्यापत्यं षाण्डारः काक्या अपत्यं काकारः मूषिकाया अपत्यं मौषिकारः वाह्वादित्वात् मौषिकिः। चटकाभ्यो मैरो लुक्‌ण तु स्त्रियाम्। चटकाच्च चटकायाश्च परस्य णेरस्य ऐरः स्यात्। स्त्र्यपत्ये ऐरस्य लुक्। अतएव चटकात् ढणेयः चटकस्य चटकाया अपत्यं चाटकेरः स्त्रियान्तु चटकस्य चटकाया अपत्यं स्त्री चटका। गार्ग्य इत्यादि। ननु गर्गादिनड़ादिभ्यां गोत्र एव ढ्ण्य्रढ्णायनौ तत् कथमपत्यसामान्ये विहित इति चेत् सत्यं जामदग्न्यः पाराशर्य्यः इत्युभाभ्याम् अनन्तरे ढ्ण्यस्य द्रौणायन इत्यत्र ढ्णायनस्य दर्शनात् सामान्येनोक्तं अन्यत्रान्तरे ढ्ण्यस्य द्रौणायन इत्यत्र ढ्णायनस्य दर्शनात् समान्येनोक्तम् अन्यत्रान्तर एवेति भावः। गर्गस्य गोत्रापत्यं गार्ग्यः अनन्तरे तु अतः ञ्णिः गार्गिरित्यादि। गर्गादिर्यथा। गर्गोवत्साक्रतीरेभ्यो व्याघ्रपादवटः शठः। अजो विलम्ब्यविशेषौ जवमानो धनञ्जयः। हृचो विश्वावसुः शङ्खो वर्म्मधूमपुलस्तयः। संस्कृतिर्वेदभृद्द्वयागेन्द्रहुराजस्वसेनधुः। विप्रोऽथ लोहितो मण्डुर्जिगीषुर्गुहसुर्नतुः। कपि बोधवतण्डास्त्वाङ्गिरसेऽप्यथ कौशिके। कद्रु शंसित्वसूत्विन्द्र मानायी मनुकच्छपाः। मङ्‌सुः शम्बुः कतेस्तण्डस्तरुचो रुव मङ्‌चु च। तनुः ढणरुकतस्चैव शकलिभनरं तथा। कण्वागस्तिविरोहितौ वृषवहः पूर्वोगणः शिप्पलुः कृष्णौ भिण्डिलशण्डिलौ च चिकितोदभ्रक्षितिचाभिषक्। गोकक्षारिव काचुलूकसुयनौ स्थूलासुनाभ्यूलुकम्। ताता मन्त्रितभिक्षुजोऽग्निरथ गोलुन्दं तथा कुण्डली। अनडुद्यज्ञवल्कौ च पर्णवल्कः पराशरः। जतुकर्णः शर्कराक्षः पूतिमाषश्च पिङ्गलः। मूद्यानो वृहदग्निश्च कुटीभृज्जमदग्नि च। लोहितादिश्च कर्णादिर्गर्गादौ परिकीर्त्तिताः। गर्गस्याऽन्तरापत्यम् इति वाक्यं ण्य यर्योर्लोप इति अकारलोपे त्रिः स्त्रियां षित्वादीप् गार्गी वानायनपक्षे गार्ग्या-

## ४२३। ओदौतोऽच्वत्तक्तद्य-क्यङ्याः।

ओत् औतः ५।, अच्वत्।१।, तक्तद्यः क्य-ङ्याः १॥।।

**ओदौद्भ्यां परस्तसंज्ञः क्तसंज्ञकस्य यः क्यङ्यौ च अज्वत् स्यात्। बाभ्रव्यः। नाड़ायनः गार्ग्यायणः दाचायणी। पैतृष्वस्रीयः। मातृष्वस्रीयः। रैवतिकः। आश्वपालिकः। यादवः आङ्गिरसः।**

---

यणी एवं सर्वत्रोहनीयम्। इह पुलस्तिशब्दपाठात् ष्णे पुलस्त्यः पुलस्त्यशब्दस्य तु ष्णे पौलस्त्या इति। यद्यपि वेदभृच्छब्दात् ऋषिष्णे कृते पश्चात् स्वार्थे ष्णेत्र वैदभृत्य इति सिद्धाति तथापि ष्णे लुकि वेदभृत इति सिद्धार्थः पाठः तत्र तु वैदभृत्या इति राजशब्दोऽसे गर्गादिः तेन राजस्यापत्यं राज्यःसे तु सौराजिः एतेनान्येषां सेऽपि सौगार्ग्य इत्यादि। माधव्यो विप्रः अन्यत्र माधवः शकलान्ताल्लौहिताद्यैः ष्णास्य स्त्रियां नायन्नित्यं तेन लौहितायनीत्यादि। कपेरन्तरापत्यं काप्यः स्त्रियां काप्यायनी एवं बोध्यः बौध्यायनी वातण्ड्यः वातण्ड्यायनी। अनाङ्गिरसे तु कापेयः बौधिः वातण्डः शिवादित्वात् ष्णः अनाङ्गिरसेऽपि गर्गादित्वाच्च वातण्ड्यः स्त्रियां वातण्ड्यायनी वातण्डीति कश्चित्॥ ४२२॥

अच् इव अज्वत् अच्तुल्याः। तश्च क्तश्च तौ तक्तौ च तौ यौ चेति तक्तद्यौ तक्तद्यौ च क्यश्च ङ्यश्च ते। बभ्रोरपत्यं बाभ्रव्यः इत्यत्र ष्णे कृते ष्वोर्लोपौताविति उकारस्यौकारे अनेन यकारस्याच्तुल्यत्वे ओकारस्यावादेशः। एवं नावा तार्य्यं नाव्यम् अत्र ढघेकादिति षो कृते अनेन यकारस्याच्तुल्यत्वे ओकारस्य आव्। एवं लूयते यः स लव्यः तव्यानीययाः इति यप्रत्यये उकारस्य गुणे यकारस्य अच्-तुल्यत्वात् ओकारस्य अव्। एवञ्च भाव्यमित्यत्र घ्यणि कृते वृद्धौ यकारस्याच्तुल्यत्वे औकारस्य आव् ओकारस्य अव् ये। एवञ्च गामिच्छति गव्यति नावमिच्छति नाव्यति इत्युभयत्र क्यौम्याद्यश्चेति क्ये कृते यस्याच्तुल्यत्वादवावौ। एवञ्च गौरिवाचरति गव्यते नौरिवाचरति नाव्यते इत्युभयत्र घान्ङ्यक्वीति ङ्ये तस्याच्-तुल्यत्वादवावौ। नचात्र अयां य्वोरित्यनेन पत्त्वे वकारलोपोऽस्त्विति वाच्यं न लोपः क्यङ्ये इत्यनेन क्यङ्ययोर्नकारलोपादन्यस्य विरामविहितकार्य्यस्य निषेधेन दान्त-त्वाभावात् अतएव वाचमिच्छति वाच्यति इत्याद न कुँङादिः। ननु व्यय इत्युक्तौ

प्रत्ययकारेणैवेष्टसिद्धौ तत्कद्वयकरणा इति गौरवं कथम् इति चेन्न। उङ्शब्दे इत्यस्य प्रपूर्वस्य प्रीयते। केवलस्य घ्यां भूयोऽसि श्रीयत इत्यादौ यकोऽपि अव्यत्त्वापत्तेः। गर्गादिस्तु गर्ग वत्स आकृति संस्कृति अज व्याघ्रपद वेदभृत् वीणायाग पुलस्ति विलस्ति रेभ अग्निवेश शङ्ख शट अवट धूम वर्म्मिन् धनञ्जय दृच विश्वावसु जवमान लोहित संशित बभ्रु मण्डु मङ्‌चु मङ्क्षु मनु वोध शम्बू नितु गुग्गुलु जिगीषु मन्यु तन्तु इन्द्र मनायी मनावी मनु कत्यक रूच तनुच तरुच तण्ड वतण्ड कपितक कुरुकत सकल देवहू कख गोकच अगस्ति कुण्डली अनड्वाह यज्ञवल्क पर्णवल्क जात विवोहित वृष गणनावह गण शण्डिल मुद्गल मुषल पराशर जतूकर्ण मन्त्रित अश्वरथ शर्कराच पुतिमास स्थूला अवरका पिङ्गल कृष्ण गोलुन्द उलुक तितिच भिषज् विष्णुज भण्डिल दन्त किकत एकलू पिप्पलु वृहदग्नि जमदग्नि सुलोभिन् कुटीषु पाण्डु इत्यादि। ८७। नड़ादिमाह। नड़स्यापत्यं नाड़ायनः क्वचित् एतदुभयप्रत्ययान्तेऽपि नड़ादिः स्यादित्यत आह गार्गायणः दाचायणोति गर्गस्यापत्यं गार्ग्यः गार्ग्यस्यापत्यं गार्ग्यायणः अत्र क्यञ्चौ चेत्यत्र आकारवर्जनात् णस्य लोपो न स्यात्। एवं दचस्यापत्यं दाचिः दाचेः स्त्र्यपत्यं दाचायणी अत्र यञोर्लोप इति इकारलोपः षित्त्वादीप्। नड़ादिस्तु। नड़ अश्व अश्मन् शङ्ख विद पुट रोहिण खर्ज्जूर स्वरूप भड़िल भड़ित भण्डिल भण्डित प्रकृति वामदच अनुग्रीवा काश काण कौशल गोलाच अकंश्मन् वलसद चक्र कुल श्रविष्ठा षवितिन् गोमिन् श्याम धूम धूम्र वाग्मिन् विश्वानर कूट जल वड़ ग्रीष्म अर्ह वृच विशष्य विशाल गिरि चपल चुप दासक वैल्व वाप्य अनुडुह्य अर्जुन शूद्रक सुमनस् ओजस् हंस आतप किर खिर खदिर चरमुञ्ज इतिक इतिस उदक नमक सप्तन् राजन्यतिक प्राण नव सायक दास मित्र द्वीप पिञ्जर पिङ्गल किङ्कर कातर काखल काश्य काव्य अज अमुष्य अमित्र खिप्त चित्र कुमार लोह मूर्द्ध स्तम्भ शिंशपा अग्र श्रण शकट तृण शलभ मिमत ऋच् जल इन्ध जलन्धर युगन्धर हंसक दण्डिन् हस्तिन् पञ्चाल चमसन सुकृत्य स्थिरक ब्राह्मण चरक वदर अश्मल स्वरूप कामुक ब्रह्मदण्ड उडुम्बर शोण आलोह मण्डप इत्यादि। कुञ्जादिस्तिकादिश्च नड़ाद्यन्तर्गणौ ॥ ११६ ॥ पितृष्वस्रादिमाह। पितृष्वसुरपत्यं पैतृष्वस्रीयः एवं मातृष्वस्रीयः स्त्रियां पैतृष्वस्रीया षित्वाभावादाबेव। पितृष्वस्रादिस्तु। पितृष्वसा मातृष्वसा भ्राता चतुष्टयमिति। रैवत्यादिमाह। रैवत्या अपत्यं रैवतिकः एवम् आश्वपालिकः। रैवत्यादिस्तु। रैवती अश्वपाल द्वारपाल मणिपाल

वृक वृष्णिक वृकग्राह कर्णग्राह कुक्कुटाच्च ॥ ९ ॥ शेषमाह। यदोरपत्यं यादवः अत्र न्वोर्लोपौताविति उकारस्य ओकारेऽव् अङ्गिरसोऽपत्यं आङ्गिरसः एवं रघोः राघवः उपगोः औपगवः पशोः पाशवः इत्यादि। न्वोर्लोपौतावित्यनेन प्राप्तं नलोपं निषेधयति ॥ २३ ॥

श्रीरा·टी—औश्च औच तत्तस्मात् अजिव अज्वत् तश्च क्तश्च तौ तक्तौ तक्तोर्यः तक्तद्वयः तक्तद्वयश्च क्यश्च ञ्यश्च ते। बाभ्रव्यः इति बभ्रोरन्तरापत्यं ष्णः न्वोर्लोपौताविति उवर्णस्यौकारः यस्याज्वद्भावात् यलायवायाव इत्यवादेशः कौशिक एवाभिधानम् अन्यत्र बाभ्रवः तनुस्थाने तन्तुरिति पठत्यपरः। कतो मुनिविशेषः तस्यानन्तरापत्यं कात्यः स्त्रियां कात्यायनी। कण्वादेः प्रयोजनमग्रे वक्ष्यति। गर्गादेराकृतिगणत्वात् रामरथशब्दः कण्वादौ ज्ञातव्यः रामरथस्यापत्यं रामरथ्यः द्वि तु रामरथाः स्त्रियां रामरथ्यायनी रामरथी रामरथ्यस्यापत्यं युवा रामरथ्यायनः रामरथस्य छात्रा रामरथाः सङ्घाङ्कघोषलक्षणानि रामरथानि रामरथशब्दादगोत्रेऽप्युपचारात्। कुर्वादेरषिङ्गौराजश्वशुरात्त्वनिन्मनोऽस्तु संश्च। कुर्वादेर्गोत्रेऽगोत्रे च ष्णीषित् स्यात् ण्य इत्यर्थः गौराजश्वशुरेभ्यस्तु अनित् इत्शून्यो य इत्यर्थः। मनोऽस्तु ययोगे संश्च न इत्। कुरोरपत्यं कौरव्यः कौरव्यौ कौरव्या इत्यादि स्त्रियां कौरव्यायणी कौरव्या, केचित् कौरव्यायणीति नित्यमाहुः। एवं लाक्षण्यः लाक्षायण्यौ लाक्षायण्याः स्त्रियां लाक्षण्या इत्यादि। कुर्वादिर्यथा। कुरु करि गर्ग गर्णिकाकूटं शकल शलाका सत्यङ्कारम्। शाकं शुभ्रौमतिमङ्कुष तथा लक्षणवड़भीकारम्। एवंकार कैशोरि रथकारकश्च पट्टिका:। पिण्डीमूलिन्द्रजालौ राकेशकम्भुकविधारकः। एकजित् स्यात् न मन्यायश्च पितृमत् पथिकारिणौ। हन्ता भर्त्ता शूर्पनायौ दामोश्चिषि विनस्तथा। भर्वुः श्यावरथः श्यावपुत्रः सेनान्तदा मताः। कारवः चत्त्रिये सम्राट् कैशिन्याः कैशिनो भवेत्। न्येभ्रातुर्वंशं तस्यैव वेनः केनचिदीरितः। यमादित्यावदितिश्चैवा पश्वाद्यादिपतिर्दितिः। पश्वश्वकुलराष्ट्रार्थगणवास्तु धनं वसु। विद्याशतनवञ्चेवं प्राणधान्य सभाजगत्। रथकारशब्दोऽत्र जातिवचनः। शिल्पिवचनस्तु कारुत्वेन एव प्राप्तेः। शके भवतीति शकं भूरिह पाठबलान्यकारागमः। हारिषेण्य वैष्वक्सैन्यः वाह्वादित्वात् हारिषेणिः वैष्वक्सेनिः एवं तान्त्ववाय्यः तान्त्ववायिरित्यादि। सम्राजोऽपत्यं साम्राज्यः चत्त्रियः अन्यत्र वाह्वादेराकृतिगणत्वात् साम्राजिः कैशिन्या अपत्यं कैशिन्यः ण्ये कैशिनादेशः अन्यथा पुंवद्भावे कैश्यः स्यात्। भ्रातुरपत्यं भ्रातृव्यः व्यस्य वम् पितृष्वस्रादित्वात् भ्रातीयः कस्यचिन्मते वेणशब्दस्य

कुर्वादित्वात्, वैण्यः तथा च वैण्यं पृथुं हैहयमर्जुनञ्च इति। वेणाच्छान्दसीति पाणिनिसूत्राच्छान्दसमिदम्। यमस्यापत्यं याम्यः आदित्यस्यापत्यम् आदित्यं ण्ये ण्यलोपः अदितेरपत्यम् आदित्यः प्राजापत्यः एवं वैश्वपत्यः दितेरपत्यं दैत्यः पश्वाद्यादिपतेस्तु पाशुपतः जागत्पतम् इति कुर्वादि। गोरपत्यं गव्यः राज्ञोऽपत्यं राजन्यः क्षत्रियेऽभिधानम् अन्यत्र राजनः मनवर्जेत्यादिना नियमेन न नलोपः हनषण इति नियमान्न उङ्लोपः श्वशुरस्यापत्यं श्वशुर्य्यः संज्ञायां बाह्वादित्वात् श्वाशुरिः मनोरपत्यं मनुष्यः ये सन् न इत्। नाड़ायन इति नड़स्यान्तरापत्यम् इति वाक्यम्। नड़ादिर्यथा। नड़ भक्षित रोहिण शङ्खपुटं पद काण चरं गिरि चक्र कुटम्। विद काश वनं कुल धूम जलं किर चित्र सुरं खड़लोह नरम्। भड़िलो भड़लो भड़ितः प्रकृतेश्चपलो नमकः खदिरो मिमतः। चरकः शकटः सुषभो वदरः स्थिरकः खरपः सुमनोऽजजनाः। शायक दासक किङ्कर दुर्गं कातर काखल पिङ्गल धूम्रम्। भण्डिल कोशल सुपक्व विशालं सातप चुपभश्वविशष्पम्। भूजः खरूपः खञ्जालः वामो दत्तो धरित्रिणः। अश्मा गोलो च गोलाच जलन्धर युगन्धराः। कुमारः शिंशपा काव्यो वोचाहाविति सेतिको षानडूह्यार्जुनो दण्डोश्यामो वाग्मी च सप्तमः। इन्द्रामुष्यो निगुः काश्यो राजव्यातोकपिञ्जराः। द्वीपः प्राणो दास मित्रो मुञ्जाप दत्त शूद्रकाः। अनुग्रीवः श्रविष्ठा च विश्वानरश्च हंसकः। मण्डपा कश्मलस्तम्ब खर्जूर चमसश्च ऋटक्। ग्रीष्मो हस्तो वैणुवाप्यो सुक्रतः शोणकामुको। ब्राह्मणोडुम्बरा नोह द्रोणजीवन्त पर्वताः। स्तम्भोऽश्वत्थोऽग्रदण्डः स्यात् शलङ्कुस्तु ह्यकौशिके। वाशिष्ठे तु वर्णविप्रे कृष्णजातस्तु पूरुषे। दर्भ आग्रायणे भर्गस्त्रैगर्त्ते शुनकस्तथा। वत्स्ये ऋषावग्निशर्मा स्याच्छरद्वांस्तु भार्गवे। भारद्वाजे तु आत्रेयो भरद्वाजः शपस्तथा। आत्रेयेऽथ षायणे च क्रोष्टोरुम्नुक् सदा मतः। षाग्रान्ता षाग्रन्ताश्च गोत्रार्थाः षाग्रान्ताश्च हरितादयः। शिंशपाया अपत्यमित्यर्थे। आद्यचो णित्ते शिंशपादाश्रयो दीर्घसत्वद्विकानाम्। शिंशपादीनां णित्ते परे आद्यचः स्थाने विप्रसङ्गे आत् स्यात् शांशपायनः आनडुह्य इति गर्गादि षाग्रान्तः अर्जुनस्यान्तरापत्यम् आर्जुनायनः बाह्वादित्वादार्जुनिः। एवं साप्तायनः साप्तिः पश्वानामपत्यं पाश्वायनः बाह्वादित्वात् पाश्विः। वैण्य इति वेणो नाम राजर्षिस्तस्यापत्यं वृद्धेऽकोशलाजादेरिति ण्यङ् वैण्यस्तस्यापत्यं युवा वैण्यायनः अतएव ण्यट्नः क्षत्रियार्षेभ्य इति न लुक्। द्रोणायणोऽश्वत्थामा इति तु पुत्रे पौत्रत्वोपचारात्। शलङ्कोरन्तरापत्यं शालङ्कायषः षायने ङती षोपः। इदमकौशिके कौशिके तु बाह्वादिः वानायनो वाशिष्ठः

अन्यत्र वार्त्तिः कार्ष्णायनी विप्रः अन्यत्र कार्ष्णिः जातस्यान्तरापत्यं जातायनः पुमान् पुरुष इति किं जाताया अन्तरापत्यं जातेयिः प्रातिपदिक ग्रहणे लिङ्गविशिष्टस्यापि ग्रहणमित्यस्य ज्ञापकमिदम्। दार्भायणः आग्रायणः अन्यत्र दार्भिः भार्गायणः त्रैगर्त्ते अन्यत्र भार्गिः शौनकायनी वात्सः अन्यत्र शौनकः विदादित्वात् ट्नः आग्निशर्मायणः ऋषिः अन्यत्र बाह्वादित्वात् आग्निशर्मिः शारद्वतायनी भार्गवः अन्यत्र शारद्वतः विदादित्वात् ट्नः आत्रेयायणी भरद्वाजः अन्यत्रात्रेयिः भारद्वाजायनः शापायनश्चात्रेयः अन्यत्र भारद्वाजः ऋषिणः शापिः अतः णिः क्रौष्टीरपत्यं क्रौष्टायनः उतो लुक् णायने इदमकौशिक इति कश्चित्। गोत्रविहितणान्ताऽगोत्रविहितणान्ताश्च नड़ादौ पठ्यन्ते तस्मादेव नियमात् यूनि प्रत्ययः। मूले गार्ग्यायणः इति गर्गस्यान्तरापत्यं गार्ग्यः तस्यापत्यं युवा इत्यर्थे णायनः आति न णस्य लोपः एवं वात्स्यायनः इत्यादि। मूले दाचायण इति दत्तस्यान्तरापत्यम् इति दाक्षिस्तस्यापत्यं युवा दाचायणः एवं प्लाचायण इत्यादि स्त्रियां गर्गस्यापत्यं यूनी गार्गी गार्ग्यायणी दाक्षीति स्त्रियां युवत्वनिषेधात् दाचायणी तु दत्तस्यापत्यं दाचायणः स्त्रियां षित्वादीप्। गोत्रार्थ इति किं सोमो देवता अस्य सौम्यस्तस्यापत्यं सौमिः। सुतङ्गमस्य निवासः सौतङ्गमि-स्तस्यापत्यं सौतङ्गमः शेष णः एवं ट्नान्ता हरितादयः हरितस्यान्तरापत्यं हारितः विदाद्यन्तर्गणत्वात् गोत्रे ट्नः तस्यापत्यं युवा हारितायनः परस्त्रिया अपत्यं पार-शरस्तस्यापत्यं युवा पाराशरायणः इत्यादि। बाल्यादेः णायनस्य लुक्। बाल्यादेः परस्य णायनस्य यूनि विहितस्य लुक् स्यात्। बालस्यान्तरापत्यं बालिः तस्यापत्यं युवा बालिः। एवमुदीचोऽपत्यम् औदञ्चिस्तस्यापत्यं युवा औदञ्चिरित्यादि। बाल्यादि-र्यथा। बालिरौदञ्चि मौलिङ्गि सात्यकामि च सात्यकिः। औदव्रज्यौद मद्यौद शुङ्गि शालङ्कयस्तथा। गौपासङ्गौदमयी च दैवस्थान्गोज्ञायनी। श्वाफल्की दच्चितौ-वाह चितिश्चैवौज्जिहायनिः। पैङ्गलायनि वाल्कायनि पैङ्गायनि वारुयवाणिः। णान्तानामेषां प्राचां णेश्चाबैङ्ग्यादेरित्यनेन लुकि सिद्धे प्राच्यार्थं पृथगुपादानम्। प्राचां णेश्चाह वैङ्ग्यादेः वैङ्ग्याद्यैः। प्राचां गोत्रे यः णिस्तदन्तात् यूनि विहितस्य णायनस्य लुक् स्यात् न तु वैङ्ग्यादेः। पन्नागारस्यापत्यं पान्नागारिस्तस्यापत्यं युवा पान्नागारिः। वैङ्ग्यादेस्तु विङ्कस्यान्तरापत्यं वैङ्गिः तस्यापत्यं युवा वैङ्ग्यायनः। धारणस्यान्तरापत्यं धारणिः तस्यापत्यं युवा धारणायनः इत्यादि। वैङ्गि धारणि वाल्मीकि दैवप्राणा-र्हतिस्तथा। तौन्नस्या सुविदैवौद्दि पौञ्चिवैरकिवैकनिः। कारेणुपादि वैकर्णी कालिङ्ग्या ह्नंसकी तथा। चापेटक्यासिबान्धी पौष्करसादिश्च नैयमिः। दैवमत्यन्ति

वृहती तथा दैवयज्ञिर्मतः। न भरतगोत्राच्च। प्राच्यात् भरतगोत्राच्च यूनि विहि-
तस्य लुक् स्यात्। अर्जुनस्यान्तरापत्यम् आर्जुनिस्तस्यापत्यं युवा आर्जुनायनः पूर्वस्य
बाधकोऽयम्। पैतृष्वसीय इत्यादि पितृष्वसुरपत्यमिति वाक्यं णीयः णित्त्वाद् ङीः
स्त्रियां पैतृष्वसीया पैतृष्वसीया भार्य्या इत्यादि पितृष्वसा तथा मातृष्वसा भ्रातु-
रनित् भवेत्। कुत्साद्यं णायणिश्चैव सौवीरगोत्रसम्भवः। भ्रातृशब्दात् णीयो णित्
तेन भ्रात्रीयभार्य्यः इति सौवीरगोत्रसम्भवो णायनिः कुत्सायां पितृष्वस्रादौ पठ्यते
तस्मादपि अणिणीयः। यमुन्दस्यापत्यं यामुन्दायनिः तस्यापत्यं युवा नित्यं यामुन्दा-
यनीयो जाल्मः रेवत्यादित्वात् यामुन्दायनिकः एवं सौयामायनीयः सौयामायनिकः
वार्ष्णायनीयः वार्ष्णायनिकः। तथाच यमुन्दश्च सुयामा च वार्ष्णस्तेभ्यः फिञः स्मृताः।
सौवीरेषु च कुत्सायात् द्वौ योगौ शब्दवित् स्मरेत्। इति महावृत्तिः द्वौ णीय-
णिकौ। णित्त्वाभावे पूर्ववत् प्रयोजनम्। रैवतिकः इति रेवत्या अपत्यम् इति
वाक्यं यस्येरित्यादिना ईकारलोपः ङीश्च स्त्रियाम्। रैवतिकी आश्वपालिक इति
अश्वं पालयतीति अश्वपालः षण् तस्यापत्यमिति वाक्यम्। रेवत्याश्वमणिद्वारपूर्व-
पालोऽथ कुत्सने। गोत्रस्त्रियश्च बाहुल्याद् वृद्धाः सौवीरगोत्रजाः। कर्णभा[illegible]कग्राहौ
कुक्कुटास्यस्तथैव च। वृकवञ्चौ सवर्णौ च परे शिष्टप्रयोगतः। अश्वमणिद्वारेभ्यः
पालो रेवत्यादौ पठ्यते जयादित्यन्तु अश्वपाली मणिपाली। द्वारपालीति स्त्रीलिङ्ग-
मङ्गीकरोति न्यासे तु द्वारपालादीनामदन्तनिर्देशः। अथानन्तरं गोत्रविहितत्यान्ता-
स्त्रिलिङ्गाः कुत्सायां पठ्यन्ते गार्ग्या अपत्यं युवा गार्गिकः ग्लुचुकायनेरपत्यं युवा
ग्लौचुकायनिकी जाल्मः मिमतादित्वात् गार्ग्यः ग्लौचुकायनश्च जाल्मः। गोत्र इति
किं कारिकेयो जाल्मः स्त्रियः इति किम् औपगविः कुत्सायामिति किं गार्ग्यो
मानवकः। कुत्सन इत्येव सौवीरगोत्रे ये वृद्धास्तेऽपि बाहुल्याद्रेवत्यादौ पठ्यन्ते भाग-
वित्तस्यान्तरापत्यं भागवित्तिस्तस्यान्तरापत्यं युवा भागवित्तिको जाल्मः बाहुल्यात् पक्षे
यथा प्राप्तं भागवित्तायनो जाल्मः। तृणविन्दोरन्तरापत्यं तार्णविन्दवः तस्यापत्यं
युवा तार्णविन्दविकः। आकशायस्यान्तरापत्यम् अतग्रादेराकृतिगणत्वात् आक-
शायेयः तस्यापत्यं युवा आकशायेयिकः अन्ये तु अतग्रादिपठितत्वात् आकशायन-
शब्दस्यैव आकाशायनेयिको जाल्मः इति वदन्ति तन्न तथाचाहुः भागपूर्वपदो विच्चि-
र्द्वितीयस्तार्णविन्दवः। तृतीयस्त्वाकशायेयो गोत्रात् ठग्बहुलं तत इति परे। ठक्
णिकः। वृद्धिग्रहणमिह स्त्रीनिवृत्त्यर्थं सौवीरगोत्रज इति किम् औपगविर्जाल्मः
कुत्सायामिति किं भागवित्तायनो मानवकः। शेषानुदाहरति यादव इति यदुर्नाम

## ४२४। मन्वर्जान् वर्म्मोक्षस्येनोऽनोऽध्वात्मनो-ऽपत्यष्णेऽविकारष्णाभावकर्म्मय ईने न नलोपः।

मन्वर्जान् वर्म्मोक्षस्येनः ६।, अनः ६।, अध्वात्मनः ६।, अपत्यष्णे ७।, अविकार-ष्णाभावकर्म्मये ७।, ईने ७।, न ।१।, नलोपः १।।

मन्वर्जस्यानो वर्म्मण उक्ष्णः स्यात् परस्येनस्यापत्यार्थ-ष्णे अनो विकारार्थवर्जे ष्णे भावकर्म्मार्थवर्जे ये च, अध्वात्मनोरीने, नलोपो न स्यात्। याज्वनः भाद्रवर्म्मणः औक्ष्णः चाक्रिणः। शैवः वाग्मिष्ठः।

---

कश्चित् तस्यान्तरापत्यम् इत्यर्थे ष्णः आङ्गिरस इति अङ्गिरसोऽपत्यम् इति वाक्यं मुनौ तु शिवादित्वात् एवम् औपगवः माधवः मारीच इत्यादि ॥ ४२३ ॥

मनं वर्जयतीति मन्वर्ज ढात् षण् मन्वर्जश्चासौ अन् चेति मन्वर्जान्। स्यः संयोगः स्यादिन् स्येन् मन्वर्जान् च वर्मन् उक्षन् च स्येन् च मन्वर्जान्वर्म्मोक्षस्येन् तस्य। अध्वन् च आत्मन् च अध्वात्मन् तस्य। अपत्ये ष्णः अपत्यष्णः तस्मिन्। न विकारोऽविकारः अविकारे ष्णः अविकारष्णः भावस्य कर्म्म च भावकर्म्मणी न भाव-कर्म्मणी अभावकर्म्मणी अभावकर्म्मणोर्यं अभावकर्म्मयः। अविकारष्णश्च अभाव-कर्म्मयश्चेति अविकारष्णाभावकर्म्मयं तस्मिन् विकारार्थवर्जष्णेषु सर्वेषामनन्तानां नलोपनिषेधे अपत्यष्णे मनन्तस्य नलोपार्थमाह मन्वर्जानिति। अपत्यष्णे परे मन्वर्जस्यैव अनन्तस्य नलोपो न स्यात्। मनन्तस्य तु नलोपः स्यादेव। अपत्या-र्थादन्यत्र मनन्तस्यापि नलोपो न स्यात्। मनन्तवर्जनात् वर्म्मणोऽपि नलोपे सिद्धे तस्य नलोपनिषेधार्थं पुनर्वर्म्मणो ग्रहणम्। उक्ष्णस्तु इह ग्रहणं नियमार्थमेव तेन उक्ष्णोऽपत्यार्थष्णे एव नलोपो न स्यात् अन्यार्थष्णे तु नलोपः स्यादेवेति। यथा उक्ष्णोऽपत्यं औक्ष्णम्। अन्यत्र उक्ष्णः इदम् औक्षं चर्म्म। यज्वनोऽपत्यं याज्वनः शिषत्वात् ष्णे कृते अनेन नलोपनिषेधः। मनन्तस्य तु सौपामः भाद्रपामः। हित-नाम्नस्तु नलोपो वा वक्तव्यः। हैतनाम्नः हैतनामः भद्रवर्म्मणोऽपत्यं भाद्रवर्म्मणः उक्ष्णोऽपत्यम् औक्ष्णः इत्यत्र हन् यत् धृत राज्ञामिति उङ्लोपः। चक्रिणोऽपत्यं चाक्रिणः एवं शाङ्गिनः दाण्डिन इत्यादि। अनन्त विकारार्थवर्जं ष्णे यथा ब्रह्मणो

जातः ब्रह्म वेत्ति इत्यर्थे वा ढघेकादिति णे ब्राह्मणः। एवं साम्न इदं सामनम् अत्र मनन्तस्यापि वर्जनं नास्ति। युन इदं यौवनं माघवनं चर्म्मण इदं चार्म्मणम्। युनः सङ्कोचे चर्म्मणः कोषे वाच्ये ब्रह्मण इदमित्यर्थे न आ निर्दिष्टमनित्यमिति न्यायात् नलोपनिषेधो न स्यात्। यौवः सङ्कोचः। चार्म्मः कोषः। ब्रह्मणोऽयं ब्राह्मो मन्त्रः। विकारार्थे णे तु हैम्नो विकारः हैमः अश्मनो विकारः आश्मः। अन्यत्र हैमनम् आश्मनम्। भावकर्मार्थवर्जे णे मूर्द्धनि भवो मूर्द्धन्यः सामनि साधुः सामान्यः ब्रह्मणि साधुः ब्रह्मण्यः। भावकर्मणि तु राज्ञो भावः कर्म वा राज्यम् एवं सौदाम्यम् अध्वात्मनोरीने यथा अध्वनि साधुः अध्वनीनः एवम् आत्मनीनः एवम् अध्वन्यः अत्र तु अनन्तत्वादभावकर्म्मणि सामान्यान्नलोपनिषेधः। शिवस्यापत्यं शैवः एवं वाशिष्ठः। शिवादिस्तु। शिव तक्षन् गङ्गा विपाशा कुञ्चा कोकिला प्रोष्ठ वतण्ड पिष्ट मयूर कर्ण खर्जूरक भूरि सन्धि मुनि कुठार अनभिम्लान ककुत्स्थ सुपिष्ट ऋष्टिषेण यस्कभूमि इणा सपत्नी जरत्कारु पैष्टिक चण्ड कुम्भ कहोड़। ककुभ बोध पीवर तृण कर्ण चीरह्रद जलह्रद परिषिक गोभिल जटिलक बधिरक मुञ्जरिक वृष्णिक खञ्जारक खञ्जाल रेख लेख वर्त्तुल पिषाक इक्ष्वाकु नड़ाक ऊर्ण- नाभ उत्केश्या रोहितिका आर्य्यश्वेता लच वशिष्ठ त्वच अम्लस्थूल किनन्दन विरूपाच इत्यादि॥ ६२॥ यस्कादिर्विदादिश्च शिवाद्यन्तर्गणौ॥ ४२४॥

श्रीरा-टी—मनं वर्जयतीति मन्वर्जः स चासौ अन् चेति मन्वर्जान् स च वर्म्मा च उचा च स्येन् च (स्यादिन् स्येन्) तत् मन्वर्जान् वर्मोचस्येन् तस्य अध्वा च आत्मा च तत्तस्य न विकारोऽविकारस्तस्मिन् णः अविकारणः। भावश्च कर्म च ते भावकर्मणी न भाव कर्मणी अभावकर्मणी तयोर्यः अभावकर्मयः पश्चात् अवि- कारणश्च अभावकर्मयश्च तत्तस्मिन्। याज्वन इति सज्वनोऽपत्यम् इत्यर्थे णः न्वोर्लोपौतौ तेऽच्ये इति प्राप्तलोपोऽनेन निषिध्यते मन्वर्ज इति किं भाद्रसामः सौसामः अपत्यण इति किं चर्म्मणा परिवृतो रथः चार्म्मणो रथः मन्वर्जानित्युक्तेः वर्म्मणो वर्जने प्राप्ते वर्मग्रहणादाह भाद्रवर्म्मणः इति भद्रवर्म्मणोऽपत्यम् इति वाक्यं एवं शार्ववर्मणः इत्यादि औक्ष्ण इत्यादि। यद्यपि मन्वर्जेत्यनेन नलोप प्रतिषेधा- दुक्षोऽपि प्रतिषेधः सिध्यति तथाप्युक्षः पृथग्ग्रहणं एवं ज्ञापयति अपत्यणाति- रिक्ते णे नलोपनिषेधो न भवति तेन औक्षं पदमित्यत्रानो विकारणे निषेधो न स्यात् चाक्रिण इति चक्रिणोऽपत्यम् इति वाक्यं न्येनो न नलोपः। अस्य सूत्रस्य योगविभागः कर्त्तव्यः तेन क्वचिदन्यत्रापि तथाहि। ब्रह्मणो जातापत्यणे।

ब्रह्मणोऽपत्यणे नलोपी न स्यात् जातौ । ब्रह्मण: अपत्यं ब्राह्मणी जाति: अपत्यण इति किं ब्राह्मी नामौषविजाति: जातौ किं ब्रह्मणोऽपत्यं ब्राह्म इति । पणि गणि गाथि केशि विदथिनो वा तु हितनाम्न: । एषामपत्यणे नलोपी न स्यात् हितनाम्नस्तु वा । पाणिनोऽपत्यं पाणिन: गाथिन: कैशिन: वैदथिन: । हितनाम्नोऽपत्यं हैतनाम: । इनोऽकलाप्यादेरनपत्ये । इनो नस्य लोप: स्यात् न तु कलाप्यादे: अनपत्यणे परे स्त्रग्विण इदं स्राग्विण: मेधाविन: अपत्ये तु मेधाव इत्यादि । कलाप्यादिस्तु कलापिन इदं कालापम् कलापी पीठसर्पि:षु कुथुमी तैतिली तथा । जाजली लाङ्गली स्यात् स ब्रह्मचारिशिखण्डिनौ । कलाप्यादौ शिलाली च नवशब्दा: प्रकीर्त्तिता: । कर्मचर्मणोरताच्छील्यकोषयो: । ताच्छील्यभिन्ने कर्मण: कोषभिन्ने चर्म्मणो नलोपी न स्यात् । कार्मण: चार्म्मण: अताच्छील्यकोषयोरिति किं कार्म: कर्मशील: चार्म्म: कोष: । दण्डिहस्तिन: णायने जिह्माशिवासिनोऽस्तु णेयायन्यो: । दण्डिनो हस्तिनश्च णायने नलोपो न स्यात् जिह्माशिवासिनोस्तु मात् णेयायन्यो दण्डिनोऽपत्यं दाण्डिनायन: एवं हास्तिनायन: जैह्माशिनेय: वासिनायनि: । अथर्वण: णिके । अथर्वणा कृती ग्रन्थ: अथर्वाणमधीते वेत्ति या आथर्वणिक: । शैवा इत्यादि । शिवस्यापत्यमिति वाक्यम् । शिव तक्ष गङ्गा: ककुभी मयूरी वतण्ड भूमी मुनि सन्धि यस्का: । पृथा विपाशा तृणकर्ण कुम्भा मण्डूक वौधान भिमान चण्डा: । इच्वाक खञ्जावक रेखकर्णा: खञ्जाल कोलच सुपिष्ट पीला: । खदूरको भूमिलता कपिष्टा: पिञ्जारको वृष्णिक कोकिलिला: । पटको वत्तन: शोफो निरूपाच: कलन्धन: । मञ्जीरको जरत्कारु कहोड़ा लेख पोवरा: । ऋष्यशृङ्गो वधिरक उत्कोया प्रोष्ठवर्त्तुलौ । क्रुञ्चा जटिलको गोभिलकौत्कुर्य्यौ अनन्दन: । खर्जूरको नभिम्लान: ककुत्स्थ: पौष्ठिकस्तथा । ऋषिषेण कुठाराग्य श्वेत लोहितिका अपि । ऊर्णनाभश्च पिठक: सपत्नी प्रोष्ठिकस्तथा । तक्षशाला जलह्रद कुर्वस्यन्धक वृष्णय: । अह्ना मानुषी संज्ञा नदीसंज्ञा मता इह । भारद्वाजे तु शुङ्ग: स्यादात्रेये छगलो मत: । वाम्यत् विकर्णोऽथ चीरह्रद: परिषकोऽपि च । दशरथोऽथ कुलीनश्च कन्याया: णे भवेत्तथा । विवेण्यास्त्रिवणो विश्रवसस्तु वरणोऽपि च । विश्रवणो मनीर्वा सन् गणसूत्रप्रमाणत: । इहादन्तानां पाठ: णिबाधनार्थ: ह्रजिकारान्तानां स्त्रीत्यान्तानां णेयबाधनार्थ: तक्षन् शब्दस्य कारुवाचकत्वात् णिबाधनार्थ: तक्ष्णोऽपत्यं ताक्ष्ण: मनवर्जान् इति अनन्तत्वात् नलोपी न स्यात् कुर्वादित्वात् ताक्षण्य: । गङ्गाया

अपत्यं गाङ्गः। अवग्रादित्वात् गाङ्गेयः तिकादित्वात् गाङ्गायनिः। पीलाया अपत्यं पैलः अवग्रादेराकृतिगणत्वात् पैलेयः परे तु क्वचित् अपवादविषये उत्सर्गेऽपि निविशत इति न्यायात् इत्याहुः एवं शालाया अप्यूहनीयम् जरत्कारुशब्द उदन्तत्वादिपाठात्। ऋषिषेणशब्दस्यानन्तत्वात् णणिबाधनार्थः। कुरुवंशोत्पन्ना ऋषिवाचका अन्धकवंशोत्पन्ना वृष्णिवंशोत्पन्नाश्च सर्वे शिवादौ पठ्यन्ते। कुरौ नाकुलः साहदेवः ऋषिः। मूले वाशिष्ठ इति वशिष्ठस्यापत्यम् इति वाक्यम् एवं वैश्वामित्रः। अन्धकस्य स्वाफल्कः तौरसः। वृष्णौ वासुदेवः आनिरुद्ध इत्यादि। ननु सर्वेषां व्याकरणानां माहेशमूलकत्वेनाधुनिककुर्व्वन्धकवृष्णिवंशवाचकानां कथं शिवादौ पाठ इति चेत् सत्यं शिवस्य सर्वज्ञत्वात् तत्र तेषां सङ्कलनं यद्वा ऋषेरनादित्वात् कुर्व्वन्धकवृष्णिवंशा एवानादयः। अतएव तेभ्यस्त्यविधानमित्यदोषः। अवृद्धानां मानुषीसंज्ञानां तावत्, चिन्तिताया अपत्यं चैन्तितः शैचितः गौतमः। अवृद्धानां नदीसंज्ञकानां तावत्, यमुनाया अपत्यं यामुनः इरावत्या अपत्यम् ऐरावतः नार्म्मद इत्यादि। अवृद्धा इति किं वासवदत्तेयः चान्द्रभागेयः शुङ्गस्यापत्यं शौङ्गो भारद्वाजः अन्यत्र शौङ्गिः। छगलस्यापत्यं छागलः आत्रेयः अन्यत्र छागलायनिः विकर्णस्यापत्यं वैकर्णो वात्स्यः अन्यत्र वैकर्णिः कन्याया अपत्यं कानीनः कर्णः व्यासश्च। विवेण्या अपत्यं वैवेणः। विश्रवसोऽपत्यं वैश्रवणो रावणः वैश्रवणश्च मनोरपत्यं इत्यर्थे णः तस्मिन्ननीः सन् वा न इत् मानुषः पचे मानवः इति। विदादेर्गोत्रेऽनृषेस्त्वानन्तर्य्ये ट्नः। विदस्यान्तरापत्यं वैदः और्वः स्त्रियां षित्त्वादीप् वैदी इत्यादि। विदादिर्यथा। विद उर्वो भरद्वाजः किलातः कुशिको हरित्। विश्वानरः काश्यपापस्तम्बौ वृद्धरथो भरौ। कुचवारशरद्वन्तौ रथन्तरगविष्ठिरौ। ऋषिषेणश्च किन्दर्भौ मठरोऽथ विविष्टपिः। पुनर्भूर्दुहितापुत्रः प्रतिबोधननान्दरौ। हर्य्यश्च प्रियको धेनुर्बध्योगशुनकावपि। ऋतभागश्च किन्दासो व्ययस्कार्काकरावपि। महाकुलः पृदाकुश्च निषादोऽथ परस्त्रियाः। परशुष्टुस्याङ्गोप्रबलः शिशुभामजविन्दवः। अश्वावतारश्यामाकसुपर्णाः समुदीरिताः। अत्र ये शब्दा अनृषिवाचकास्तेभ्यो गोत्रवाचकेभ्योऽन्तरापत्य एव ट्नः। अतएव पौत्रः पौनर्भवः दौहित्रः इत्यादि। ननु कथं; वा कुशिकास्यन्तरापत्यं कौशिको विश्वामित्रः कथं वा व्यवहितापत्ये इन्द्रहूर्नाम सप्तमः काश्यपानां ब्वे लुगिति चेत् सत्यं क्वचिदपवादविषयेऽप्युत्सर्गो निविशत इति न्यायात् ऋषिणेन भवितव्यम् अथवा तस्येदमित्यर्थे णेन। परस्त्रिया अपत्यं पारशवः ट्नि परशवादेशः। अत्र परस्त्री-

## ४२५। संख्यासंभद्रान्मातुर्ङुर्णौ।

संख्या-सं-भद्रात् ५।, मातुः ६।, ङुर् ।१।, णौ ७।।

द्वैमातुरः।

---

शब्देन भिन्नजातीया स्त्री वाच्या अतएव पारशवो विदुरः तथाच पारशवः पुमान् परस्त्रीतनये शस्त्रे द्विजाच्छूद्रासुतेऽपि च इति मेदिनीकारः। अर्थान्तरे तु पारस्त्रैणेयः बाह्वादेराकृतिगणत्वात् विदस्यान्तरापत्यं वैदिरित्यादौ णिः न तु ऋषिणः। यद्यपि शिवादित्वात् णो कृते वैद इत्यादि सिद्धे विदादेः पृथक् टविधानं मवड्वाधनार्थम्। उत्सादेः। उत्सादिष्टः स्यात् पृथक्योगादप्रत्यसामान्ये। उत्सस्यान्तरापत्यम् औत्सः आनपद इत्यादि उत्सादिर्यथा—उत्सो जनपदविनदौ धन्वा विकाच महानदः तरुण' धेनुः। भरत महानस पृथिवी देव' पंक्तिर्जगती कुरुपञ्चालम्। उदप्राणो महापाणः ककुभस्तनुनो महाम्। इद्रावसान विकारविष्टबुणिगतष्टभः। उशीनरः सुवर्णश्च भल्लकीयो रथन्तरः। वृहन्मध्यन्दिनश्चाथ सत्वती नुण् भवेदिह। उदस्थानन्तु देशे से वग्रस्कोऽंशे वृषन्मतः। ग्रैष्मोऽकृते समाख्यातः शेष' त्रयं प्रयोगतः। इह कुरुशब्दस्य पाठात् कुरोरपत्यम् इत्यर्थे कौरवः इति जयादित्यः। सत्वत्शब्दो वत्वन्तस्य टः नुण् सत्वतोऽपत्यं सात्वन्तः पाठवलात् उदस्थाने भव औदस्थानो देशः। अदेशे तु उदस्थानः कश्चित् तस्यापत्यम् औदस्थानिः। वृषदशब्दोऽंशे वाच्ये टः वार्षदः अनंशे त वार्षदः णः। नन णाट्योः को विशेषः इति चेत सत्यं णान्तवार्षदस्य सङ्के वार्षदकः। टान्तस्य तु वार्षद इति विशेषः। अकृत्त इति वृत्तं छन्दः तस्मिन ग्रैष्मः अवृत्त इति किं ग्रैष्मी त्रिष्टविति ऋतनञ्चवादिति णः तस्माद्विकारे मयट ग्रैष्ममयं टान्ताद्विकारे ग्रैष्ममिति विशेषः॥ ४२४॥

संख्यावाचकेभ्यः समो भद्राच्च परस्य मातृशब्दस्य ङुर् स्यात णौ ङित्यादन्त्यस्य स्थाने। ङुरो रेफस्य विसर्गाभावः स्पष्टार्थः द्वयोर्मात्रोरपत्यं द्वैमातुरः। अत तद्धितार्थे विषये द्विगौ शेषत्वात् णो कृते एकपदीभावात् द्वेरिकारस्य वृद्धिः। एवं तिसृणां मातृणामपत्यं त्रैमातुरः, षसां मातृणामपत्य' षाण्मातुरः संमातुरपत्य' सांमातुरः एव' भाद्रमातुरः॥ ४२५॥

गोरा-टी—संख्या च सम् च भद्रश्च तत्तस्मात् संख्यावाचकात् समो भद्राच्च मातृशब्दस्य ङुर् स्यात् णौ। ङित्वादन्त्यस्य लोपत्वाच्च त्रिः द्वैमातुर इति द्वयोर्मात्रोरपत्यमिति वाक्य' शेषात् णः एव' षाण्मातुरः॥ ४२५॥

## ४२६। नन् पुंस्त्रियोः।

नन् ।१।, पुंस्त्रियोः ६॥।

**पौंस्नः स्त्रैणः।**

## ४२७। कुञ्जादेर्णायन्योऽस्त्रीब्बेऽपत्ये।

कुञ्जादेः ५।, णायन्यः १।, अस्त्रीब्बे ७, अपत्ये ७।।

**कुञ्जादेरपत्यार्थे णायन्यः स्यात् न तु स्त्रियां न च ब्बे। कौञ्जायन्यः ब्राध्नायन्यः। स्त्रीब्बे तु। कौञ्जायनी कुञ्जायनाः।**

---

अनयोर्नन् स्यात् णे नित्त्वादन्ते। नकारोऽदन्तः। पुंसोऽपत्यं पौंस्नः तत्र णे परे पुम्स्शब्दस्य ननि कृते नकारस्य प्रकृत्यवयवत्वेन दान्तत्वाभावात् सकारस्य लोपो न स्यात्। यर्योर्लोप इति नकारस्य अकारलोपः। स्त्रिया अपत्यं स्त्रैणः एवम् इदमाद्यर्थे णे कृतेऽपि नन् स्यादेव। तेन पुंस इदं पौंस्नम् कर्म। स्त्रियां इदं स्त्रीणां समूहो वा स्त्रैणम्॥ ४२६॥

श्रीरा-टी—पुमांश्च स्त्री च ते तयोः॥ ४२६॥

स्त्री च ब्बश्च स्त्रीब्बं न स्त्रीब्बम् अस्त्रीब्बं तस्मिन्। कुञ्जादिर्नड़ाद्यन्तर्गणः। कुञ्जस्यापत्यं कौञ्जायन्यः णित्त्वाद् वृद्धिः। ब्रध्नस्यापत्यं ब्राध्नायन्यः स्त्रीब्बे तु कुञ्जस्य स्त्र्यपत्यं कौञ्जायनी कुञ्जस्यापत्यानि कौञ्जायनाः इत्युभयत्र नड़ादित्वात् णायन एव। केचित्तु कुञ्जादेः प्रथमापत्ये णायन्यः णायनोऽपि न स्यात् अदन्तत्वात् णिरेव तेन कुञ्जस्य प्र पत्यं कौञ्जिरिति प्राहुः। कुञ्जादिस्तु। कुञ्ज ब्रध्न शङ्ख भस्मन् लोमन् गण शट शाक शुण्डा शुभा विपाश स्कन्द स्कम्भ इत्यादि।१३। तिकादिर्नड़ाद्यन्तर्गण-त्वात् अपत्यार्थे णायनः तदन्तस्य प्रयोगाभावाद्व्यवहारीतिवत् णायनान्तात् स्वार्थे णिः। यथा तिकस्यापत्यं तैकायनिः। तिकादिस्तु। तिक कितव संज्ञा बाल शिखा शाट्या कौशल्या सैन्धव मुञ्ज रूप्य ग्राम्य नोड़ कुरु देवरथ तक्षिलै औरस लाङ्गट कोकच चतियार्थ कौरव्य गोकर्ण भौरिकि भौलिकि तैकयत चैकयत वैकयत सैकयत ध्वाजयत चन्द्रमस् उरस् अमित्र शुभ गङ्गा वारुण्या बन्ध आवटी वज्रका खल्यका लोमका सुयामन उदन्य यज्ञवल्क गवेठ काकण्ट्र काक लङ्का चर्मिण इत्यादि।४७। एवं त्यदादेर्नड़ाद्यन्तर्गणत्वात् णायनः तदन्तस्य प्रयोगाभावात्

स्वार्थे णिः। यथा तस्यापत्यं तादायनिः एवं यादायनिः। कैमायनिः एवञ्च त्यदादेः शिवाद्यन्तर्गणत्वात् णः। यथा त्यस्यापत्यं त्यादः यादः कैमः॥ ४२७॥

श्रीरा-टी—स्त्री च ब्वं च स्त्रीब्वं न स्त्रीब्वम् अस्त्रीब्वं तस्मिन्। अपत्यग्रहणं पूर्ववत् सामान्यविधानात् अयं नड़ाद्यन्तर्गणः णायन्येन णायनो बाध्यते तेनानन्तरापत्ये कौञ्जिः कौञ्जायन्यः इति कुञ्जस्यान्तरापत्यमिति वाक्यम् एवं ब्राध्नायन्यः। कुञ्जादि-र्यथा। कुञ्जो ब्रध्नो बुधो लोम भस्म शङ्खाः शटो गणः। शोकः शुभ्रा विपाशा च शण्डा स्तम्भः प्रकीर्त्तितः। तिकादेर्नायनिर्वृषादेस्तु यम् च। तिकादेरपत्ये नायनिः स्यात् वृषादेस्तु नायनेर्यम् च न इत्। तिकस्यापत्यं तैकायनिः कितवस्यापत्यं कैतवायनिः। तिकादिर्यथा। तिककितवौ वस तौतिल नील भौरिकि भौलिकि वस्त्रारब्धं चौपयतः कुरुसंज्ञा यज्ञं गङ्गा लाङ्गट शूद्रय मुन्नम्। खल्यका लोमका रूप्य ग्राम्यध्वाजायता उरः। शाठ्या बालशिखा वेङ्कयतः सैकयतस्तथा। चैकयतः स्वग्रामोऽथ कौरव्यः चत्रिये मतः। गौकचश्चन्द्रमाचैव जयतो रथान्तदा मताः। द्रयचः णान्ता देवरथोऽमित्रा दन्यं प्रकीर्त्तितम्। चत्रियार्थे कौरव्यः षठ्यते तेन जनपदण्यान्तस्य न तु कुर्वादिण्यान्तस्य, स तु ब्राह्मणवचनस्तस्मात् णेर्लुगेव जनपद-ण्यात्तु कुरोरपत्यं युवा कौरव्यायणिः चत्रियः। रथान्तात्तावत् गौरथस्यापत्यं गौरथायणिः कार्माय्यायणिः कुर्वादित्वात् कार्मार्य्यः। कौशलो शब्दो जनपदवचनः। ननु कथं कौशल्यायनि वल्लभामिति भट्टिः। उच्यते नृजातेरिति ईपि कौशल्या-यनी तस्यापत्यं युवा इत्यर्थे आवादित्वात् णेयस्तस्य लुकं विधाय स्त्रीत्यस्य लुकि कौशल्यायनिरिति परे वस्तुतस्तु तिकादेराकृतिगणत्वात् नायनिरिति यथा च कौशल्यकार्माय्याभ्याञ्चेति पाणिनिसूत्रम्। वृद्धादनपत्याद् वा पुत्रान्ताद् वा किलादि-भ्यश्च अनपत्यान्ताद् वृद्धसंज्ञकात् नायनिर्वा स्यात् पुत्रान्तात् वा किलादिभ्यश्च तेषां तुकन् च न इत्। आत्मगुप्तस्यापत्यम् आत्मगुप्तायनिः नापितायनिः एवं त्यादायनिः तवापत्यं त्वादायनिः युवयोर्युष्माकं वा अपत्यं यौष्मदायनिः कथं भारतायनिः वाशब्दस्य व्यवस्थावाचित्वात् पत्ते आत्मगुप्तिः नापितिः नापित्यः त्याद-त्तस्यापत्यं युवा त्यादायनिः वृद्धादिति किं दैवदत्तिः याज्ञदत्तिः औपगवः। अनपत्या-दिति किम् औपगविः पुत्रान्तात् गार्गी पुत्रकायणिः गार्गी पुत्रायणीति पूर्वेणैव सिद्धे कविधानार्थः पाठः आयनाभावपत्ते गार्गीरिति पुत्रीरिति रूपद्वयं वाकिलादि-स्तावत् वाकिलकायनिः वाकिलायनिः वाकिलिः। वाकिलादिर्यथा वाकिलशर्मि-गावेठौ काकलङ्का तथैव च। कार्कव्यवर्मिणावत्र षड् बुधैः परिकीर्त्तिताः। परे

नु कन् विकल्पयन्ति तन्मते वाकिनादेर्द्वैरूप्यम्। अवृद्धादायनिर्वा। वाशब्दो बहुलार्थः वृद्धसंज्ञकभिन्नादायनिर्वा स्यात् अपत्ये। ग्लुचुकस्यापत्यं ग्लुचुकायनिः पक्षे ग्लौचुकिः। आहिचुम्बकायनिः आहिचुम्बकिः बाहुल्यात् क्वचिन्न भवति तेन दक्षस्यापत्यं दाक्षिः प्लाक्षिरित्यादि। यूनि लुक् नायनेः ष्णस्य। नायने परस्य यूनि विहितस्य ष्णस्य लुक् स्यात्। तिकस्यापत्यं तैकायनिः तस्यापत्यं युवा तैकायनिरित्यादि। कुलाददादिनो येन णेयका दादेस्त्वीनः। दादिभिन्नात् कुलात् य ईन णेयक एते स्युः दपूर्वादीन एव। कुलस्यापत्यं कुल्यः कुलीनः कौलेयकः बहुकुल्यः बहुकुलीनः बाहुकुलेयकः। बहुलस्यादत्वात् दादेस्तु आढ्यकुलीनः श्रोत्रियकुलीनः। दुर्महद्भ्यां णेयकनीनौ वा। आभ्यां परात् कुलात् णेयकनीनौ क्रमाद्वा स्याताम्। दौष्कुलेयकः। अवृद्धादित्वात् दौष्कुलेयः पक्षे दपूर्वत्वात् दुष्कुलीनः महाकुलीनः उत्सादित्वात् माहाकुलः पक्षे महाकुलीनः। क्षत्रादियो जातौ। क्षत्रशब्दाज्जातावपत्ये इयः स्यात् क्षत्रियः जातिः। जाताविति किं क्षात्रिः। सौवीरगोत्रात् फाण्टाहृतिमिमतात् णणायनौ। सौवीरगोत्रात् फाण्टाहृतिमिमताच्च णणायनौ स्यातां फाण्टाहृतेरपत्यं फाण्टाहृतः। सौवीरगोत्रत्वात् यून्यस्य विषयः फाण्टाहृतायनिः एवं मिमतस्यापत्यं मैमतः मैमतायनिः। परे तु अल्पाच्छब्दस्य व्युत्क्रमनिर्देशात् यथासंख्यमिच्छन्ति तन्मते फाण्टाहृतः मैमतायनिः इत्येव सौवीरगोत्रादिति किं फाण्टाहृतायनः। मैमतायनः। देवपृथिवीभ्यां ष्णाणौ वा। आभ्यां क्रमात् ष्णाणौ वा स्यातामपत्ये। देवस्यापत्यं दैवः पृथिव्या अपत्यं पार्थिवः स्त्रियां दैव्या पार्थिवा उत्सादित्वात् दैवः पार्थिवः दैवी पार्थिवी। थामान्तादो लोमान्तात्तु ष्वे। थामन् इत्यन्तादः स्यात् लोमन्नन्तात्तु ष्वे। अश्वत्थामा नाम कश्चित् तस्यापत्यम् आश्वत्थामः उडुलोम्नोऽपत्यानि बहूनि उडुलोमाः। ष्वे किम् औडुलोमिः औडुलोमी। रूढाद्राज्ञि च ट्नः ष्णस्तु ह्राङ् मगध कलिङ्ग शूरमसात्। अपत्ये राज्ञि च देशतुल्याख्यक्षत्रियात् ट्नः स्यात् ह्राङ् मगधादेस्तु ष्णः पञ्चालानामपत्यं राजा वा इत्यर्थे पाञ्चालः वैदेहः। ह्राजादेस्तु आङ्गः वाङ्गः सौह्मः मागधः कालिङ्गः शौरमसः। रूढादिति किं पञ्चालस्य ब्राह्मणस्यापत्यं पाञ्चालिः। वृद्धे कौशलाजादाद्गान्धारिशाल्वेयात् ञ्यङ्। गान्धारिशाल्वेयभिन्नात् वृद्धादिकारात् कौशलादजादाच्चापत्ये राजनि च ञ्यङ् स्यात् ट्नष्णयोरपवादः आम्बष्ठस्यापत्यं राजा वा आम्बष्ठ्यः सौवीरस्यापत्यं राजा सौवीर्यः। कुन्तेर्जनपदक्षत्रियस्यापत्यं राजा वा कौन्त्यः अवन्तेरावन्त्यः कौशलस्य कौशल्यः आजात्यः स्त्रियामजादित्वादाप् आजात्या।

**४२८। गर्गयस्कविदादि-भृग्वत्रि-कुत्साङ्गिरो वशिष्ठ गोतम-रूढाल्लुक् ब्वेऽस्त्रियाम्।**

गर्ग—रूढात् ५।, लुक् ।१।, ब्वे ७, अस्त्रियां ७।

देशतुल्याख्यः क्षत्रियो रूढः। एभ्यः परेषामुक्तानां त्यानां ब्वे विहितानां लुक् स्यात् न तु स्त्रियाम्।

गर्गाः वत्साः यस्काः लह्याः विदाः उर्व्वाः भृगवः अत्रयः कुत्साः अङ्गिरसः वशिष्ठाः गोतमाः अङ्गाः वङ्गाः कलिङ्गाः। स्त्रियान्तु भार्गव्यः।

---

कौन्त्यावन्त्ययोश्च कुन्ती अवन्ती कुरुकुन्त्यवन्तिभ्योऽपत्यस्य लुकि नृजातेरिति ईपि ङित्वात् पतिपुत्रादौ यङ् ई आम्बष्ठीपतिः आम्बष्ठीपुत्र इत्यादि। गान्धारिशाल्वेयात्तु गान्धारः शाल्वेयः पूर्वेण ट्नः। कुरुन्यादिभ्योः ण्यः पाण्डोर्ङिच्च। कुरोर्निपूर्वशब्देभ्यो जनपदेभ्यो ण्यः स्यात् ङिच्च पाण्डोः। कुरोर्जनपदस्यापत्यं राजा वा कौरव्यः कथं माघे कुकुरकौवरस्त्रियः तथा संरक्षन्तु कौरवा इति उच्यते जनपदाविवक्षायां विषयी देश इत्यर्थे णो वा तस्येदमित्यर्थे वा। कथमक्षत्रियकौरव्याः परश इत्युपचारात्। न्यादेः निधनस्यापत्यं राजा नैधन्यः नैपुण्यः नैषध्यः पाण्डोर्जनपदस्य क्षत्रियस्यापत्यं राजा वा पाण्ड्यः ङिति टिलोपः। रूढ इति किं महाभारते पाण्डोरपत्यं पाण्डवः। न हि तस्य पाण्डुर्देशः उडुम्बरादेः णिः। रूढाद्राज्ञि चेति ट्नस्य बाधकः उडुम्बरस्य जनपदस्य क्षत्रियस्यापत्यं राजा वा। औदुम्बरिः तैलखलिः। उडुम्बरिस्तिलखली मद्रकारी युगन्धरः। भूलिङ्गः शरदण्डश्च कालकूटोऽश्वकस्तथा। प्रत्यग्रहे नव प्रोक्ताः परे शिष्टप्रयोगतः। केकय मलय मित्र यूनां णिच्ये यादेरियः। एषां यादेर्भागस्य णिच्ये इयादेशः स्यात्। केकयस्यापत्यं कैकेयः मलयादागतं मालेयं हिमं मित्रयोर्भावः मैत्रेयिका गोत्रचरणात् णकः॥ ४२७॥

गर्गश्च यस्कश्च विदश्च गर्गयस्कविदाः ते आदयो येषां ते गर्गयस्कविदादयः। आदिशब्दस्य प्रत्येकेन सम्बन्धात्। गर्गादियस्कादिविदादय इत्यर्थः। गर्गयस्कविदादयश्च भृगुश्च अत्रिश्च कुत्सश्च अङ्गिरस् च वशिष्ठश्च गोतमश्च रूढश्चेति तस्मात्। अत्र अपत्ये इत्यनुवर्त्तते इत्यत आह उक्तानां त्यानामिति। अपत्यार्थ प्रत्ययाना-

मित्यर्थः। लुक्करणात् त्यलोपे त्यलचणमिति न्यायात् वृद्धादिर्न स्यात्। गर्गस्यापत्यानि गर्गा एवं वत्साः आभ्यां णस्य लुक्। यस्कस्यापत्यानि यस्का. एवं लह्याः विदस्यापत्यानि विदाः एवम् उर्वाः भृगोरपत्यानि भृगवः एभ्यः णस्य लुक्। अत्रेरपत्यानि अत्रयः अत्र णेयस्य लुक्। कुत्सस्यापत्यानि कुत्साः अङ्गिरसोऽपत्यानि अङ्गिरसः वशिष्ठस्यापत्यानि वशिष्ठाः गोतमस्यापत्यानि गोतमाः एभ्योऽपि णस्य लुक्। ब्वे किं गार्ग्यः गार्ग्यौ एवं सर्वत्र। एकवचने द्विवचने च प्रत्ययस्थितिः। देशतुल्याख्य इति। देशेन तुल्या आख्या नाम यस्य चत्रियस्य स देशतुल्याख्यः चत्रियो रूढ इत्यर्थः। यथा वङ्गो देशविशेषः वङ्गं पालयतीति हृषेकादिति अनित् णे वङ्गो राजा। वङ्गस्यापत्यानि वङ्गाः एवम् अङ्गाः कलिङ्गाः मत्स्याः पञ्चालाः विदेहाः मगधाः इत्यादयः एभ्योऽपि णस्य लुक्। एषामपि एकत्वद्वित्वयोः वाङ्गः वाङ्गौ इत्यादयो बोध्याः। देशतुल्याख्य इत्युपलचणम् कदाचित् प्रसिद्धचत्रियोऽपि रूढो वा वक्तव्यः। तथा च गलितवयसामिच्वाकूणामिदं हि कुलव्रतमिति। आचच्च मत्वा वशिनां रघूणां मनः परस्त्रीविमुखप्रवृत्ति इति च रघुः। पायादपायात् सततं भवन्तं नाथो रघूणामथवा यदूनामित्युद्भटः। स्त्रियान्तु भृर्गोः स्त्र्यपत्यानि भार्गव्यः अत्र णस्य न लोपः। अपत्यार्थप्रत्ययानामिति किं भृगोरिमे भार्गवा मन्त्रा इति अत्र इदमर्थे जातस्य णस्य लोपो न स्यात् एवं प्रिया गर्गा यस्य स प्रियगर्गः अत्र समुदायस्य एकत्वेऽपि गार्ग्यशब्दस्य बहुत्वे प्रयुक्तत्वात् णास्य लोपः स्यादेव। एवं प्रियो गार्ग्यो येषां ते प्रियगार्ग्याः अत्र समुदायस्य बहुत्वेऽपि गार्ग्यशब्दस्य एकत्वे प्रयुक्तत्वात् णास्य लोपो न स्यात्। एवं प्रिययस्कः प्रिययस्काः इत्यादयो बोध्याः। यस्कादिस्तु। यस्क लभ्र अय स्थूल तृण कर्णभ्र नन्दन वहिर्योग कर्णाटक पिण्डी जङ्गावक सूता वचस् अग्नर जङ्गारथ उत्कास कटक गन्तुक विष्णुपद उपरि मेखला क्रोष्टू वास्त्र क्रोष्टूपाद शीर्षमाण शीर्षमाय पदक कर्षक विशिच्चलि अजवस्ति भड़िल भण्डिल भड़ित खरप पुस्करसद् इति। २३। विदादिस्तु। विद पुत्र उर्व कश्यप कुशिक भरद्वाज किलात किलदर्भ विश्वानर ऋष्टिषेण ऋतभाग हर्य्यश्व प्रियक अयस्तम्भ कुचराव शरद्वत् शुक्क धेनु इति। १९। यस्कादिर्विदादिश्च द्वावेव शिवाद्यन्तर्गणौ। ततश्च द्वाभ्यामेकगणोक्त्यापि इष्टसिद्धौ गणद्वयकरणं प्राचामनुरोधात्॥ ४२८॥

श्रीरा टी—गर्गश्च यस्कश्च विदश्च ते आदयो येषां ते गर्गयस्कविदादयः ते च भृगुश्च अत्रिश्च कुत्सश्च अङ्गिराश्च वशिष्ठश्च गोतमश्च रूढश्च तत्तस्मात्। रूढशब्दस्य

व्युत्पत्तिमाह देशतुल्याख्य इत्यादि तथाच गर्गादि ष्ण्य यस्कादि ष्ण्य ष्णायनि ष्णि ष्णेया: न्दिादि ट्र: अचि ष्णेय: भृगुकुत्साङ्गिरो वशिष्ठगोतम ष्ण: रूढ़ ष्णट्र ष्यङ् ष्यणि इत्येषां ब्वे लुगित्यर्थ:। क्रमेणोदाहरति गर्गा इत्यादि। क्रद्वयोस्तु गार्ग्य: गार्ग्यौ यास्क: यास्कौ वैद: वैदौ भार्गव: भार्गवौ आत्रेय: आत्रेयौ कौत्स: कौत्सौ आङ्गिरस: आङ्गिरसौ वाशिष्ठ: वाशिष्ठौ गौतम: गौतमौ आङ्ग: आङ्गौ इत्यादि। एवं ब्वे लुगिति किं गर्गाणां धनं गर्गधनम्। अङ्गधनमित्यादि ब्वे विहितानां त्यानामिति किं गार्ग्यस्य वात्स्यस्य आग्निवेश्यस्य ते गार्ग्यवात्स्याग्निवेश्या: एवं गार्ग्यौ च वात्स्यौ च आग्निवेश्यौ च ते गार्ग्यवात्स्याग्निवेश्या इत्यादौ लुग् न स्यात्। पारेकदेशिनस्तु एकवचनान्तानामपि द्वन्द्वसमार्थे वाक्ये समासे एकार्थाभावात् सहभावविवक्षायां बहुत्वे लुगित्याहु:। तेन गर्गवत्साग्निवेशा इति उदाजह्रु:। प्रियवाङ्गा इत्युदाजह्रुरिति। गर्गविदादौ उक्तौ। यस्कादिर्यथा। यस्को लह्यवचोयस्तृणकलन्दतुर्णकर्णा:। भण्डितखरुभाड तथा रूपा भाड सदा मत:। क्रोष्टु मायो वहिर्योग: कण्ठ्योहारकर्षकौ। क्रोष्टुमालो विषपुट: परि-मेखलपादका: कर्णाटक: क्रोष्टुपादस्तथा कटुकमन्थक:। वकशक्र: शीर्षमाय: पिण्डीजङ्घस्तथैव च। जङ्घारथ: शीर्षमालल्लजारचाऽसुरास्तथा। उपकाशोऽज वस्तिश्च विश्रि: चुदिरिमे वय:। यस्कादय: षट् शिवादय: भण्डितादय: पञ्च नड़ादय: अजवस्त्यादयस्त्रय: अत्र्यादय:। शेषाणामदन्तत्वात्। यस्कादेराकृति-गणत्वात् पुष्करसच्छब्दोऽपि तेन पौष्करसादि: पौष्करसादो ब्वे पुष्करसद:। बह्वचो गोत्रस्य प्राच्यभरतेषु। बह्वच: शब्दात् प्राच्यभरतगोत्रविहितस्य त्यस्य लुक् स्यात् ब्वे। पन्नगारस्यान्तरापत्यं पान्नागारि: पान्नागारी ब्वे पान्नागारा:। भरत-गोत्रे यौधिष्ठिरि: यौधिष्ठिरी युधिष्ठिरा:। एवमार्जुनि: आर्जुनी अर्जुना:। बह्वच इति किं भैमि: भैमी भैमय:। अगस्त्यकुण्डिन्योरगस्तिकुण्डिनौ च। आभ्यां गोत्रत्यस्य ब्वे लुक् स्यात् लुकि सति अगस्तिकुण्डिन्योरगस्तिकुण्डिना वादेशौ क्रमात् स्त:। अगस्त्यस्यान्तरापत्यम् ऋषिण: आगस्त्य: आगस्त्यौ ब्वे अगस्तय:। कुण्डिन्या अपत्यं गर्गादित्वात् कौण्डिन्य: कौण्डिन्यौ कुण्डिना:। तिककित वादेश्च ब्वे। गोत्रविहितस्य त्यस्य चे लुक् स्यात् ब्वे। तैकायनश्च कैतवायनश्च ते तिककितवा:। उपलभका: कुनककुभा: उरोलङ्कटा: अग्निवेषकशेरुका वङ्कुर-भण्डीरथा: पापकनरका: वररथा: श्वग्रपरिग्रहा: लङ्काशान्तमुखा: कृष्णाजिन कृष्णसुन्दरा: भष्टकपिष्ठिला: इत्यादि। चे किं तैकायनय: कैतवायनयस्च ब्वे किं

तैकायनिश्च कैतवायनीश्च तैकायनी कैतवायनी। उपकादिभ्यो वाचे च। उपकादिभ्यो ब्वे विहितस्य गोत्रत्यस्य अचे चे च ब्वे लुक् स्यात् वा। उपकाः औपकायनाः नमकाः नमकायनाः औपकायनाश्च नामकायनाश्च उपकनमकाः औपकायननामकायनाः। उपकादिर्यथा। उपकनमकसुपिष्टमयूरं जटिलकवधिरकक्षणिककर्षम्। पिष्टकपिष्ठिलभावी जङ्घामुजकमलाखनकलसी कण्ठम्। कासकृत्स्नो निदाघश्च मन्दकः कृष्णसुन्दरः। कृष्णादिनावतारश्च भष्टकः कृष्णपिङ्गलः। उन्दुकग्राहकण्ठौ चाकटावककुसीतकौ। अनुलोमा प्रतिहतः प्रतालो जपथस्तथा। उपकनमकौ नड़ादौ सुपिष्टादयः शिवादयः। अनुलोमनत्राह्वादिः शेषाणामदन्तत्वात् णिप्राप्तिः। ब्वे किं औपकायनस्य नामकायनी च औपकायननामकायनाः गर्गविदादयः कृद्वयोः ये। गर्गादेर्विदादेश्च ये वर्त्तमानस्य कृद्वयोर्विहितस्य गोत्रत्यस्य लुक् स्यात् वा। गार्गस्य गार्ग्ययोर्वा धनम् गर्गधनं गार्गधनम् एवं वैदस्य वैदयोर्वा धनं विदधनं वैदधनम्। रूढ़ात् कम्बोजादेर्नित्यम्। कम्बोजादेः रूढ़ात् उत्पन्नराजापत्यत्यस्य लुक् नित्यं स्यात्। कम्बोजजनपदस्यापत्यं राजा वा कम्बोजः कम्बोजौ कम्बोजाः। कम्बोजः केवलश्चोलभोजनिन्द्रखशाः शव इत्यादि। स्त्रियाम् कुरुकुन्त्यवन्तिभ्यः। एभ्यो राजापत्योत्पन्नत्यस्य स्त्रियां लुक् स्यात्। कुरोर्जनपदस्यापत्यं स्त्री राज्ञी वा कुरुः उत इत्यादिना ऊप् एवं कुन्ती अवन्ती। ण्यङो लुकि नृजातेरित इति ईप्। अतश्चाप्राच्यभर्गयौधेयादेः। प्राग्गोत्रभर्गादियौधेयादिभिन्नाद्राजापत्योत्पन्नस्य अतस्त्यस्य स्त्रियां लुक् स्यात्। शूरसेनस्यापत्यं स्त्री राज्ञी वा शूरसेनी इड़विड़ोऽपत्यं स्त्री राज्ञी वा इड़विड़ी इत्यत ट्रस्य मद्रस्यापत्यं स्त्री राज्ञी वा मद्री दरदोऽपत्यं स्त्री राज्ञी वा इय्चः ण्यस्य वा लुक् लुकि जातेरत इति ईप् मद्रशूरसेनाभ्याम्। अत इति किं कौशल्या आजाद्या। अप्राच्यभर्गयौधेयादेरिति किं पाञ्चाली वैदेही भा... आङ्गी वाङ्गी सौङ्गीत्यादि। भर्गादेः भार्गी कैकेयी। कथं प्राक् कैकयीतो भरतस्ततोऽभूत् आद्यप्रकृतेर्ब्वे नदादिपाठात् भागवृत्तिः। भर्गादिर्यथा भर्गः करूशः कश्मीरः कौरवः सुरथकेकयौ। शाल्वोऽनुभवश्चैव भर्गादिः परिकीर्त्तितः। यौधेयादेः यौधेयी शौभ्रेयीत्यादि। स्त्रियामिति चकारेणानुकर्षणान्न ब्वमत्र। नगोपरणादेः। गोपरणादेर्गोत्रत्यस्य लुङ् स्यात्। अयं विदाद्यन्तर्गणः। गौपरणी गौपरणाः गौपरणस्य गौपरणयोः कुलं गौपरणकुलमित्यादि। उक्तोऽपत्याधिकारः। णो वेत्यादौ यमादिभ्यस्त्व पत्यवत्। स्याद्यन्तात्तेः णः स्यात् वेत्त्यादिष्वर्थेषु यमादिभ्यस्तु अपत्यवत् त्याः स्युः। वेत्त्यादि-

**४२८। ढघे कात् णीककणीनेयाश्चानितश्च।**

ढ-घे ७, कात् ५।, णीक कन् णीन इया: १।॥, च ।१।, अनित: १।॥, च ।१।।

कात्परा एते पूर्वे च सेतोऽनितश्च स्यु: ढे घे च वाच्ये।

तर्कं वेत्ति अधीते वा तार्किक:, पदक:, क्रमक:, वैयाकरण:। वाचा कृतं वाचिकं, पाणिनीयम्। शक्त्या युध्यतेऽसौ शाक्तीक:, याष्टीक:; तिष्येण युक्ता रात्रि: तैषी, पौषी; चत्राय साधु: चत्रिय:, यज्ञाय हितं यज्ञियं, मथुराया आगत: माथुर:, इह भवं ऐहिकं, कदाचिद्भवं कादाचित्कं, ग्रामीण:, ग्राम्य:, मूर्द्धन्य:, नादेय:, शालीय:, नागर:, अग्र्य:।

---

यथा। वेत्ति अधीते रक्तं युक्त: काल: दृष्टं मास: परिवृतो रथ:। उद्धृतं संस्कृतं भक्ष्यं व्रतशायिता पौर्णमास्यस्मिन्। अस्य देवसमूहविषयो देश:। अस्य प्रागर्थस्य संग्राम:। तदस्त्यस्मिन् देशे निवृत्त: निवास:। अदूरभव: विकार: अवयवभव: व्याख्यानां प्रायभव: जात: कृत: क्रीतलब्ध: चणं दृश्यते सम्भूत: साधु: पुष्यते पच्यमानम् उप्तं देयमृणं मृगी व्याहरति अस्य सोढ़म् आगत: प्रभवति गच्छति अभिनिष्क्रामति। अधिकृत्य कृतो ग्रन्थ: अस्य निवास: अस्याभिजन: अस्य भक्ति: गदृह्यते श्रूयते उच्यते प्रोक्त उपज्ञातं कृती ग्रन्थ: इदम्। यमादिस्तावत्। यम आदित्य अग्नि कलि दिति अदिति पृथिवी देवम् अपश्चाद्यादिस्थानान्त: उत्सादयश्च पश्चादिर्व्यक्त: कुर्वादौ। उदाहरणानि तत्र तत्र वक्ष्यामि। दित्यदितिभ्यां न णेय:। आभ्यां वेत्त्यादौ णेयो न स्यात्। दितिं वेत्ति अधीते वा दैत्य: आदित्य इत्यादौ ण्य: न दैतेय इति॥ ४२८॥

ढश्च घश्च ढघं तस्मिन्। णीकश्च कण् च णीनश्च इयश्च ते। न विद्यते इत् येषां तेऽनित:। णीककणीनेयाश्चेति प्रत्ययसम्बन्धचकारेण पूर्वोक्ता: णिप्रभृतय: प्रत्यया: समुच्चीयन्ते। अनितश्चेति प्रत्ययसम्बन्धचकारेण सेत इति विशेषणान्तरं समुच्चीयते। ततश्च इह चत्वार: पूर्वोक्ता: सप्त इत्येकादश प्रत्यया: प्रयोगानुसारेण सर्वकारकेभ्य: कर्म्मणि कर्त्तरि च वाच्ये स्युरित्यर्थ:। ते च प्रयोगानुसारेण सर्वकारकेभ्य: कर्म्मणि कर्त्तरि च वाच्ये स्युरित्यर्थ:। ते च प्रयोगानुसारेण क्वचित् इद्रहिता: स्युरित्यर्थ:। ननु अन्येषां मते वेत्त्यधीते वा इत्यर्थे तर्कादि: णिकादि: क्रियते इह अर्थानुक्तौ तर्कं

अधीतीत्यादावपि तार्किक इत्यादि प्रयोगोऽस्तु इति चेत् सत्यं तेषां मते प्रकृतेरनु-क्तावपि वेत्त्यधीते वा इत्यर्थे तर्कात् णिकः व्याकरणात् णः पदक्रमाभ्यां कः इति प्रकृतिनियमः कथं लभ्यते। कृत्तद्धितसमासानामभिधानं नियामकमिति वचना-देव इति चेत् अस्मन्मतेऽपि तद्वचनादेव प्रकृतिनियमोऽर्थनियमः प्रत्ययनियमश्च लभ्य इति कर्म्मणः कर्त्तरि वाच्ये आह तार्किक इति। तर्कं वेत्त्यधीते वा इत्यर्थे णिके णित्त्वाद् वृद्धिः यर्योर्लोप इत्यकारलोपः एवं पदकः क्रमकः उभयत्र अणित् कण्। एवं वैयाकरणः अत्र णे कृते य्वोर्युमिति यकारस्य इमि तस्य वृद्धिः करणात् कर्म्मणि वाच्ये वाचा कृतमिति अत्र णिके कृते नदन्तसावित्यनेन दान्तत्वनिषेधाद्विरामाभावे चकारस्य कुङ्गादिर्न स्यात्। स्त्रियान्तु वाचिकी वृत्तिः। कर्त्तृकारकात् कर्म्मणि वाच्ये शर्ववर्म्मणा कृतं शार्ववर्म्मिकमित्यत्र णिके कृते वृद्धौ न्वोर्लोपौताविति न लोपे यर्योरित्यकारलोपः एवं पाणिनीयम् अत्र णीये कृते यर्योरितीकारलोपः। करणात् कर्त्तरि वाच्ये शक्त्या युध्यते शाक्तीक इति अत्र णीके कृते वृद्धौ यर्योरिति इकार-लोपः एवं यष्ट्या युध्यते याष्टीकः पुनः कर्त्तृकारकात् कर्म्मणि वाच्ये तिष्येण युक्ता रात्रिः तैषी अत्र णे कृते वृद्धौ सूर्य्यागस्त्यस्येति यकारलोपे षित्त्वादीप्। एवं पौषी। चवाय साधुर्भवतीति चवियः। यथा परिभाषायां सत्यामपि संज्ञापाद इत्युक्तं तथा-त्रापि तादर्थ्ये चतुर्थ्यन्तात् प्रत्ययं करिष्यतापि कारकादित्युक्तं प्राधान्येन व्यपदेशा भवन्तीति न्यायात्। अथवा वसोर्थसेकाञ्ञिणात इत्यस्य वृत्तौ नान्यत इति ज्ञापका-दकारकादपि प्रत्ययः। न चात्र साधुना योगे षष्ठीसप्तम्योरेव प्राप्तिरिति वाच्यं सम्बन्धविवचायामेव स्वाम्यादिभिर्योगे षष्ठी सप्तम्योः प्राप्तेः। अन्यथा चैत्रो मैत्रस्य प्रतिभूर्धनाय भवतीत्यत्र धनादपि षष्ठीसप्तम्यापत्तेः। एवं यज्ञियम् उभयत्र इये यर्यो-रित्यकारलोपः। अपादानात् कर्त्तरि वाच्ये मथुराया आगतः माथुर इत्यत्र णे कृते वृद्धिः अधिकरणात् कर्त्तरि वाच्ये इह भवम् ऐहिकम् इति णिके कृते वृद्धिः। एवं कदाचिद्भवं कादाचित्कम् अत्र कणि कृते णित्त्वाद् वृद्धिः। ग्रामे भवो ग्रामीणः अत्र णीनः। एवं ग्राम्यः अत्र ण्यः। मूर्द्धनि भवो मूर्द्धन्यः अत्रानित् ण्यो मन्वर्ना-निति नलोपनिषेधः। नद्यां भवो नादेयः अत्र णेये वृद्धौ यर्योरिति इकारलोपः। शालायां भवः शालीयः अत्र णीयः नगरे भवो नागरः अत्र णे वृद्धिः अग्रे भवोऽग्र्यः अत्रानित् ण्यः॥ ४२९॥

श्रीरा टी—कं कारकं ढश्च घश्च तत्तस्मिन् णीकश्च कण् च णीनश्च इयश्च ते। भाक्ति इत् येषां ते। चकारेण पूर्वसप्तत्या अनुकृष्यन्ते तथाच अवत्यास्ता एकादश

सेतोऽनितश्चाभिधानाद् भविष्यन्तीत्यर्थः ढादित्यधिक्रियते ढात् प्राक्। वेत्त्यधीते। ढात् परः णः स्यात् वेत्त्यधीते चार्थे। वैयाकरण इति व्याङ्पूर्वात् कृधोरनट णः अर् व्याकरणं वेत्ति अधीते वा इत्यर्थे णः णित्त्वे युम् त्रिः ययोरित्याकारलोपः एवं प्रभाकरोपलक्षितो ग्रन्थः प्राभाकरस्तं वेत्ति अधीते वा प्राभाकर इत्यादि। णिक-उक्थादेः षष्टिपथशतपथाभ्यां त्वनित्। उक्थादेः णिकः स्यात् षष्टिपथशतपथाभ्यान्तु णिकः। उपचारात् उक्थशब्दस्य औक्थिकार्थः तं वेत्ति अधीते वा औक्थिकः। लौकायतिकः। उक्थादिर्यथा। उक्थो लोकायतः श्लक्ष्णः पुराणं संहिता शरद्। वर्षा वसन्तो हेमन्तः सङ्घातः संग्रहो गणः। अथर्वा शिशिरो वृत्तिश्चाथर्वणलक्षणम्। न्याय न्यासा वहुपदा नुगुणात्मगुणा अपि। द्विपदा त्रिपदा ज्योतिरायुर्वेदः क्रमेतरः। यज्ञलक्षानुकल्पश्च पुनरुक्तः पदक्रमः। चरम-प्रथमाभ्यान्तु गुणोऽथ क्रतुवाचिनः। आख्यानाख्यायिकाश्चेहितासो वै लक्षणोत्तराः। अधर्म्माद्यादिविद्यान्ता अथ कल्पादिवर्जिताः। सूत्रान्ताश्चाथ कल्पान्तस्तथास्मिन्ननुसूरपि। अथर्वाणं वेत्त्यधीते वा आथर्वणिकः इके न लोपः। नैयायिकः नैयासिकः य्वोर्युम् इतीमि त्रिः। अनुकल्पशब्दं परे पठन्ति। वस्तुतस्तु कल्पान्तत्वात् सिद्ध्यति चारमगुणिकः प्राथमगुणिकः। क्रतुवाचिनः क्रतुविशेषवाचिनः। आश्वमेधिकः वाजपेयिकः राजसूयिकः आख्यानं ग्रन्थान्तर्गतापेक्षितस्य वर्णनं यवक्रीतमधिकृत्य कृतो ग्रन्थ इत्यर्थे णः कृते क्वचित्तस्य लुक् तं वेत्त्यधीते वा यावक्रीतिकः पैङ्गविकः। मूले तार्किकः इति। आख्यायिका प्रबन्धविशेषः तमधिकृत्य कृतो ग्रन्थः तस्य लुक् तं वेत्त्यधीते वा इत्यर्थे णिकः एवं वासवदत्तिकः सौमनोङ्गविक इत्यादि। लक्षणोत्तरा इति लक्षणशब्द उत्तरो येषां गौलक्षणिकः आश्वलक्षणिकः। अधर्म्माद्यादिविद्यान्ता इति सार्पविद्यिकः वायसविद्यिकः। धर्म्मादयस्तु धार्म्मविद्यः त्रैविद्यः आङ्गविद्यः। अथानन्तरं कल्पादिवर्जिताः सूत्रान्ता इति संग्रहसूत्रिकः वार्त्तिकसूत्रिकः। कल्पादिस्तु काल्पसूत्रम् कल्पान्ता इति मातृकल्पिकः पाराशरकल्पिकः अनुसूर्नाम ग्रन्थविशेषः तं वेत्त्यधीते वा इत्यर्थे णिकः। इसुसुक्तान्तादिकस्य कः। उक् प्रत्याहारः। इसन्तादुसन्तादुक् प्रत्याहारात् तान्ताच्च परस्य इकस्य कः स्यात्। आनुसूकः णिकस्येकस्य कत्वविधानात् णित्त्वे त्रिः। षष्टिपथं वेत्त्यधीते वा षष्टिपथिकः षष्टिपथिकी शतपथिकी। पदादेः कः। ढादित्येव पदादेर्वेत्त्यधीते वार्थे कः स्यात्। मूले पदकः क्रमक इति। पदं शिक्षा क्रमः साम मीमांसोपनिषच्च षट्। शिक्षकः मीमांसकः कोऽकः स्वः।

पदोत्तरादिकः। पदमुत्तरपदं यत्र तस्मात् इकः स्यात् वेत्त्यधीतेऽर्थे पूर्वपदं वेत्त्यधीते वा पूर्वपदिकः उत्तरपदिकः एकदेशिनस्तु पदोत्तरपदादेव इकः इकः पदोत्तरपदिकः इत्याहुः आनुपदिक इति उक्थादित्वात्। अनुब्राह्मणादिन्। उपनिषद्भागातिरिक्तवेदव्याख्यानं ब्राह्मणशब्देनोक्तं तस्य सदृशम् अनुब्राह्मणं सादृश्ये च सः तद्वेत्त्यधीते वा अनुब्राह्मणी अनुब्राह्मणिनौ अनुब्राह्मणिन इति चान्द्रास्तु अध्ययनासाधयन्ति इति चिन्त्यम्। इयस्तु वाधीते छन्दसः श्रोत्रिय। छन्दसोऽधीतेऽर्थे इयः स्यात् वा तस्मिन् छन्दसः श्रोत्रोदेशश्च छन्दोऽधीते श्रोत्रियः पक्षे छान्दसः त्वन्तस्य नानुवृत्तिः। सूत्रात् संख्याकोडा लुक्। सूत्रवाचिनः संख्याप्रकृते कोडोऽध्येतृवेदित्रोर्विहितस्य त्यस्य लुक् स्यात्। पाणिनीयमष्टकं सूत्रं वेत्त्यधीते वा अष्टकः पाणिनीयः दशको वैयाघ्रपद्यः। संख्येति किं महावार्त्तिकं सूत्रं वेत्त्यधीते माहावार्त्तिकः कोड इति किं चतुष्टयं सूत्रं वेत्त्यधीते वा चातुष्टयः। सहसर्वपूर्वाच्च। सहपूर्वात् सर्वपूर्वाच्च तेः परस्याध्येतृवेदित्रोर्विहितस्य त्यस्य लुक् स्यात्। सवार्त्तिकं वेत्त्यधीते वा सवार्त्तिकः ससंग्रहः एवं सर्ववेदः सर्वशास्त्रः पञ्च वेदान् वेत्त्यधीते वा ताचि वाच्ये गः। प्रोक्ताच्च। प्रोक्तविहितत्यान्तादध्येतृवेदित्रोर्विहितस्य तस्य लुक् स्यात्। पाणिनिना प्रोक्तं पाणिनीयं तद्वेत्त्यधीते वा पाणिनीयः स्त्रियां पाणिनीया अपिशलस्यापत्ये आपिशलिः तेन प्रोक्तम् आपिशलं तद्वेत्त्यधीते वा आपिशलः स्त्रियामापिशला षित्त्वेऽपि गौणत्वान्नेप्। कल्पसूत्रच्छन्दो ब्राह्मणानि तद्विषयाणि। एतानि प्रोक्ताधिकारत्यानि अध्येतृवेदितृविषयाणि भवन्ति अन्यत्र भावी विषयार्थः। तथाच प्रोक्तत्यान्तानामध्येतृवेदितृविषयताव्याप्यविषयताकत्वमिति पर्य्यवसितार्थः एतेन स्वातन्त्र्यम् उपाध्यन्तरयोगे वाक्यं निवर्त्तते। कल्पस्य तावत् कश्यपेन प्रोक्तम् कल्पं वेत्त्यधीते वा काश्यपी कश्यपशब्दात् प्रोक्तार्थे णित् तस्मादध्येतृवेदित्रोः षणः तस्य लुक् लुकि सति अनेन प्रोक्तस्याध्येतृवेदितृविषयत्वे लिङ्गवचने न भवतः। एवं कौशिकी इह कल्पविषयस्य ग्रहणात् पैङ्गीकल्पः इत्यादौ न स्यात्। सूत्रस्य तावत् पराशरेण प्रोक्तं भिक्षुसूत्रं तद्वेत्त्यधीते वा पाराशरी भिक्षुः शैलाली नटः कर्मन्दी कृशाश्वी। छन्दसस्तावत् कठो ब्राह्मणः तेन प्रोक्तं छन्दो वेत्त्यधीते वा कठः। मौदः पैप्पलः अचिणभी वाजसनेयी। ब्राह्मणस्य तावत् भाल्लिना विप्रेण प्रोक्तं ब्राह्मणं वेत्त्यधीते वा भाल्लवी शाट्यायनी ऐतरेयी एषामिति किं पाणिनीयं व्याकरणम्। अगोत्रणिकस्वादिणत्राह्वादीयो भवादौ। गोत्रविहितणत्रन्तवर्जितात् कण्वादिणत्रान्तवर्जि-

स्याच्च वृद्धसंज्ञकादीयः स्यात् भवादिष्वर्थेषु गार्गीयः वात्सीयः शालीयः शैवीयः औपगवीयः त्वदीय मदीयः अस्मदीयः इत्यादि। गोत्रणिकखादिणाभ्यान्तु दाचः काण्वः जामदग्न्यः गोत्रार्थ इति किं सुतङ्गमेन निर्वृत्तः सौतङ्गमः तस्येदं सौतङ्गमीयं णत्र इति किं कर्णो देवताऽस्य कार्णः तस्येदं कार्णीयम्। दाचः प्राच्यभरताच्च। प्राच्यगोत्रणान्तात् भरतगोत्रणान्ताच्च दाच ईय स्यात् भवादौ। पूर्वेणाप्राप्तेऽनेन विधीयते पौर्व्वीयः ;वैङ्गीयः काशीयः दाच इति किं पान्नागारः प्राच्यभरतादिति किं दाचः शाचः ननु कथं काशीय इत्युदाहृतं काश्यादेर्णिकणिकयोर्विधानादिति चेन्न तत्र चेदिशब्दसमभिव्याहृतदेशवाचककाशीशब्दग्रहणात् इह गोत्रार्थस्य ग्रहणं न तु देशवाचकस्येति। कखोङ्गी देशे। वृद्धादित्येव ककारोङ्गः खकारोङ्गश्च देशे वर्त्तमानादीयः स्यात् भवादौ। कोङ्णस्य वाहीकग्रामेभ्यश्चेति णिकणिकयोर्बाधनार्थम्। आवहनकीयं द्रोघनकीयं आश्वत्थकीयं कौटशिखीयम् आयोमुखीयं वृद्धादिति किं सौमुखम्। ग्राम कन्थ ह्रद फलद नगरोत्तरदात्। ग्रामाद्युत्तरदाद्देशवाचकात् वृद्धादीयः स्यात् भवादौ। दाचिग्रामीयं दाचिकन्थीयं दाचिह्रदीयं द्राचिफलदीयं दाचिनगरीयं माहकिग्रामीयमित्यादि। वृद्धादिति किं महानगरे भवः माहनगरः उत्तरदादिति किं बाहुग्रामं बाहुनगरम्! वाहीकग्रामेभ्यश्चेति णिकणिकयोर्बाधकमिदम्। पर्णकृकणाद्भारद्वाजे। वृद्धादिति निवृत्तम्। भारद्वाजे नाम्नि देशे वर्त्तमानाभ्यां पर्णकृकणाभ्याम् ईयः स्यात् भवादौ। पर्णीयं कृकणीयम्। भारद्वाजदेशभिन्ने तु पार्णं कार्कणं गहादेर्भवतस्तु दङ् च। गहादेरीयः स्यात् भवादौ भवच्छब्दस्य ईये दङ् च ङ इत्। गहीयम् अन्तरीयम्। गहादिर्यथा। गहान्तरौ नेमि समानशाखौ दत्ताशका चेबलि धन्विनश्च। आक्षिसिनाचैवलिपूर्वपचा भौरिः शमः शैशिरिरुत्तरश्च। उत्तमो विषमो भौलिरन्तस्थो मगधासुरौ। इषुप्रपरपक्षीऽङ्गाधमशाखौ तथा ध्यमिः। शौरिरुत्तमशाखश्च व्याड़ि खाड़ायनौ तथा। इष्वनीकोऽग्निशर्म्मा च शौभिरा राढ़कौ तथा। एकवृचश्च वाल्मीकि परस्यन्दन पार्श्वतः। एकग्रामो देवशर्मिः कामप्रस्थस्त्वेकतः। आमित्यैकपलाशौ च सुखतः चेमधूर्त्ति च। येऽच वृद्धास्तेभ्य औत्सर्गिकः णो येऽवृद्धास्तेभ्यो जनपदत्वात् णको ये तु णान्तास्तेभ्यो व्यभिन्नप्राच्यभवत्वात् णो बाध्यते। पार्श्वतीयः व्यटेर्लोप इति टिलोपः कामप्रस्थशब्दात् प्रस्थान्तत्वात् णके प्राप्ते विधानं पूर्ववदेकतीय इति चान्द्राः आकृतिगणोऽयं भवच्छब्दस्यान्तस्य दङ् भवदीयः। पर्वतात् वा त्वऽमनुष्ये। पर्वतशब्दात् मनुष्ये वाच्ये ईयः स्यात् भवादौ

मनुष्यभिन्ने तु वा। पार्वतीयो मनुष्यो राजा वा पार्वतीयं पार्वतमुदकम्। गर्त्तोत्तरदाद्देशे। देशवाचकात् गर्त्तोत्तरदादीयः स्यात् भवादौ। वृकगर्त्तीयः उत्तरदादिति किं बाहुगर्त्तः। बाह्लीकग्रामेभ्यश्चेति णिकणिकयोर्बाधनार्थम्। प्राचि तु कटादेः। प्राग्देशवाचिनः कटपूर्वादीयः स्यात् भवादौ। कटनगरीयः कटघोषीयः। प्राग्देश इति किं काटनगरः। स्व पर देव राज जनस्य कश्च। स्वकीयः देवकीयः परकीयः राजकीयः जनकीयः। आगमशासनमनित्यमिति न्यायात् स्वीयं देवकीयमित्याद्यपि। तथा च धनमद्दरद्दत्तं स्वीयमिति शिष्टप्रयोगः। वामनधर्मदासौ तु स्वस्य इदं सौवमित्याहतुः। पृथिवीमध्याच्च मध्यमश्च। पृथिवीमध्यशब्दात् ईयः स्यात् तस्मिन्मध्यमादेशश्च। मध्यमीयः। रेणुकादेर्णित्। रेणुकादेरीयो णित् स्यात् भवादौ। रैणुकीयः। रेणुकादिर्यथा। रेणुक चिचकमुत्तरपदकं मध्यमपदकः प्रस्थकमन्यत्। अन्यदित्यनेन प्रारदीयं रेणुकादि पञ्चानां कोङ्लात् णे प्राप्ते पाठः। आकृतिगणोऽयम्। काश्यादेर्णिकणिकौ। काश्यादेः परौ णिकणिकौ स्यातां भवादौ। काशिका काशिकी चैदिका चैदिकी। काश्यादिर्यथा। काशिश्च चेद्यच्युत मोदमाना: संवाद्य गौरासन साधुमित्रम्। सुरङ्ग सम्पात्युपराज पूर्वकालोर्द्ध्वकाला अपि सिन्धुमित्रः। शकुलादी हस्तिकर्षुः कुलाम्मकरणेन च। आपत्काल हिरण्याभ्यां दासमित्रेण संयुतः। दासग्रामी देवदत्तो युवराजयुतस्तथा। सर्ववर्म्मा देवराजो व्यासोऽरिन्दम एव च। सौधावतान इत्यष्टाविंशतिः समुदीरिताः। काशिचैदिभ्यां जनपदत्वात् णकः सम्पातिशब्दात् व्यञ्जिन प्राच्यभरतगोत्रणग्रन्तात् णे येऽव वृद्धात्तेभ्यः ईयो ये अवृद्धास्तेभ्यः णोऽस्ति कर्षुशब्दाद्देशवाचकात् दान्तात् णिकश्च बाध्यते। देवदत्तशब्दोऽत्र प्राग्देशवाचकः तस्मात् वृद्धसंज्ञकत्वादीये प्राप्ते विधानम्। बाह्लीकग्रामवाचकात्तु देवदत्तः। वृद्धाद्बाह्लीकग्रामात् वा तूशीनरग्रामात्। बाह्लीकग्रामवाचकात् वृद्धात् णिकणिकौ स्यातां भवादौ। शाकलिका शाकलिकी मान्थरिका मान्थरिकी। अवृद्धात्तु माहनगरम्। उशीनरग्रामवाचकात्तु आह्वजालिका आह्वजालिकी सौदर्शनिका सौदर्शनिकी पक्षे आह्वजालीया सौदर्शनीया। देशे युक् मरुवचनाभ्यां णकोऽव्याजः वृद्धात् युक्तो देशवाचकात् वृद्धान्मरुवाचकाच्च णकः स्यात् भवादौ न तु व्याजः। सांकाश्यकः काम्पिल्यकः मागध्यकः धन्वनशब्दो मरुवाची पारे मध्ये इत्यादिना वसः अन इत्यनेनात्यः पारे धन्वे जातः पारेधन्वकः ऐरावते जातः ऐरावतकः। व्याजस्तु सुप्रख्यस्य इदं सौप्रख्यं सौप्रख्यदेशे भवः सौप्रख्णीयः व्याजो यकारः यकारस्थानीयः तस्यासिद्धत्वमिति पाणिनीयाः। वहु-

प्रस्थपुरान्ताच्च। वहान्तात् प्रस्थान्तात् पुरान्ताच्च देशवाचिनो वृद्धात् णकः स्याद्वादौ पैलुवहकः फाल्गुनीवहकः मालाप्रस्थकः नान्दीपुरकः रुङन्तात् परसूत्रेण सिद्धे पुरग्रहणम् प्राच्यार्थं तथाहि नान्दीपुरमुदीच्यं वृद्धादिति किं ग्रैवपुरः। प्राची त्वीरुङः। प्राचीति देशविशेषणम् ईकारान्ताद्रेफोङश्च प्राग्देशवाचकात् वृद्धात् णकः स्याद्वादौ। माकन्दकः काकन्दकः पाटलिपुत्रकः एकचक्रकः एकचक्रशब्दस्य प्राग्देश एङादित्वात् वृद्धसंज्ञा। वृद्धादिति किं दशपुरे जातः दाशपुरः प्राचीति किं दात्तामित्रीयः सौवीरनगरीयः दत्तामित्री सौवीरनगरी एते उदीच्यदेशस्थे। जनपदतदवधिभ्याम्। वृद्धाद्द देशवाचिनो जनपदात् जनपदावधेश्च णकः स्याद्वादौ। अभिसारकः अप्राच्यत्वात् पूर्वेणाप्राप्तेऽनेन णकः आदर्शकः जनपदावधेस्तावत् औष्ट्रकः श्यामायनकः ननु जनपदावधिर्जनपद एव न ग्रामः किमर्थं तर्हि पृथग् ग्रहणमिति चेत् सत्यं तदवधिग्रहणं बाधकबाधनार्थं तेन सौगर्त्तकः इत्यत्र गर्त्तोत्तरदादितीयं बाधित्वा जनपदावधेर्णक एव स्यादिति वामनः। त्वविषयाद्द वृद्धाच्च। जनपदवाचिनस्तदवधिवाचिनश्च त्वविषयात् णकः स्याद्वादौ। णीयर्णोरपवादः। अवृद्धाज्जनपदात्तावत् अङ्गाः अङ्गकः। अवृद्धाज्जनपदावधेस्तावत् अजमीढ़ाः आजमीढ़कः अजक्रन्दाः आजक्रन्दकः। वृद्धाज्जनपदात्तावत् दार्वाः दार्वकः। वृद्धाज्जनपदावधेस्तावत् कालकञ्जराः कालकञ्जरकः विषयग्रहणमन्यत्र भावार्थं तेन जनपदैकदेशे माभूत् वर्त्तनी च वर्त्तिनी च ता वर्त्तन्यः वार्त्तनः। ननु वृद्धात् पूर्वेणैव णके सिद्धे किमर्थं चकारेण तदनुकर्षणमिति उच्यते। ब्राह्मणेभ्यो दधि दीयतां तक्रं कौण्डिन्याय इति न्यायात् त्वविषयात् वृद्धाद्द बाधा विज्ञेयेत्यदोषः। वर्त्ताग्निकाच्छवक्रोत्तरदात्। वर्त्ताद्युत्तरदात् देशवाचकात् वृद्धादवृद्धाच्च णकः स्याद्वादौ। णीयर्णोरपवादः। चक्राणि वर्त्तन्तेऽत्र चक्रवर्त्तः वृतुङ् वर्त्तने ङे घञ् तस्माच्चक्रावर्त्तकः एवं कालाग्निकः चारुकच्छकः ऐन्द्रवक्रकः वर्त्ताग्निकच्छचक्रान्तादिति कृते सिद्धे उत्तरपदग्रहणं बहुत्यपूर्वादप्राप्त्यर्थं तेन बाहुवर्त्तः। कथं बाहुवर्त्तकः इति उच्यते बह्वी वर्त्तन्तेऽत्र इति व्युत्पत्त्या बाहुवर्त्तकः। धूमादेः। धूमादेर्देशवाचकाण्णकः स्याद्वादौ। धौमकः घौषस्थलकः। धूमादिर्यथा धूमा घोषस्थली घोषपुष्पी दण्डायनस्थली। वार्त्ताराज्ञी सुराज्ञी च तीर्थपल्ली शशादनाः। शास्त्राश्रिता राजगृहं भद्राणीववर्बरावरी। सम्यायी माठरी मद्र कुलाङ्गी कुलगर्दभौ। अर्ज्जुनायन साकेत षडङ्गा दक्षिणापथः। द्वीपान्तरीपोज्जयिनी ह्यथवाकण कुक्षयः। एकविंशदिमे प्रोक्ता ख्याहाराश्च महास्थली। नगरात् कुत्सनप्रावी-

ण्ययोः। निन्दायां प्रावीण्ये च नगरशब्दाद्वुञ् स्याच्छैषिके। नागरकः चौरः प्रवीणश्च। कुत्सनप्रावीण्ययोरिति किं नागरः पुरुषः। अरण्यान्नृपथिन्यायविहाराध्यायहस्तिषु वा तु गोमये। अरण्यादेतेषु वाच्येषु वुञ् स्याच्छैषिको गोमये तु वा। आरण्यको मनुष्यः न्यायो विहारोऽध्यायो हस्ती च। आरण्यको गोमयः आरण्यश्च एष्विति किम् आरण्याः पशवः। कच्छादेर्नृतत्स्थयोः। देशवाचकात् कच्छादेर्मनुष्ये मनुष्यस्थे च वाच्ये वुञ् स्याच्छैषिके। काच्छको मनुष्यः काच्छिका चूडा काच्छिको नखः काच्छकं हसितं काच्छको विवादः काश्मीरको मनुष्यः काश्मीरको नखः काश्मीरकं हसितम्। कच्छादिर्यथा कच्छ काश्मीर कम्बोज मधुमत् कुरु सिन्धवः। कलूभवविरूपौ च द्वीपा ध्रुप विजायकाः। शाल्वाङ्गाराऽनुषण्डाश्चाजपादवर्णरङ्कु च। इह शाल्वशब्दपाठो वक्ष्यमाणस्य प्राप्त्यर्थम्। शाल्वादपदातौ। शाल्वशब्दात् पदातिभिन्ने मनुष्ये मनुष्यस्थे च वाच्ये वुञ् स्याच्छैषिके। शाल्वको मनुष्यः शाल्वकं हसितम्। पदातौ तु शाल्वः पदातिर्व्रजति। नियमार्थं वचनम्। गोयवाग्वोश्च। शाल्वादित्येव शाल्वको गौः शाल्विका यवागूः। वर्णौः कन्यायाः। वर्णुर्नाम नदः वर्णुनदसमीपवाचिनः कन्याशब्दात् वुञ् स्याच्छैषिके। णिकस्य बाधकमिदम्। कान्थकः अन्यत्र कान्थिकः। वा तु कुरुयुगन्धराभ्याम्। आभ्यां वुञ् वा स्याच्छैषिके। कौरवकः कौरवश्च गौः। नृतत्स्थयोस्तु। कौरवको मनुष्यः कौरविका चूडा। कच्छादिपाठात् यौगन्धरकः यौगन्धरश्च गौः जनपदावेतौ एताभ्यां वृद्धादपीति नित्ये प्राप्ते विकल्पः। कुलात् सौवीरे। कुलशब्दात् सौवीरे वाच्ये वुञ् स्याच्छैषिके। कौलकः सौवीरः अन्यत्र कौलः पाथेयानर्त्तविदेहपाण्डुकात्। एभ्यो वुञ् स्याच्छैषिके। पाथेयशब्दस्य वुञ्त्वेऽपि आदेशार्थं वचनम् आनर्त्तविदेहयोर्जनपदत्वेऽपि अजनपदार्थम्। पाण्डुकाशब्दात् कोञः णस्य बाधनार्थं यथा पाथेयकः आनर्त्तकः वैदेहकः पाण्डुककः। राष्ट्रादियः। राष्ट्रशब्दादियः स्यात् भवादौ। राष्ट्रियः। दूरोत्तराभ्यामित्यणादौ। आभ्यामेतौ क्रमात् स्तः भवादौ। दूरेत्यः औत्तराहः। नदीकर्त्रीपारदिवादिभ्यः ण्येयणेयकेनयाः। नद्यादेः ण्येयः कर्त्र्यादेर्येयकः पारादेरीनो दिवादेर्यः स्यात् भवादौ। नादेयः वाराणसेयः। नद्यादिर्यथा। नदी वाराणसी दूर्वा वामा काशायनी मही। श्रावन्ती खादिरी दामा कौशाम्बी सेनकी गिरिः। शाल्वा दर्वी पुरं पूर्व नगरी वडवा वृषे। चम्पवनमिति प्रोक्तं नद्यादौ कोविदोत्तमैः। येऽत्र वृद्धास्तेभ्यः ईयः येऽवृद्धास्तेभ्यः णः वृद्धेकारान्तात्वकः वुञो वकश्च बाध्यते वाडवेयो वृषः अन्यत्र वाडवः। कर्त्रादिस्तावत् कार्त्रेयकः

कौलेयकः। कर्व्यादिर्यथा। कर्वग्रन्थि पुष्कर हस्ती पुष्कलं ग्रामयौवनम्। कुण्डी चर्म्मखती माहिष्मती ग्रीवा तु भूषणे। कुक्ष्यायास्तु यलोपोऽस्मिन्नसौ कुक्षिकुल- शानि। संज्ञायां नगरी पञ्चदशेह परिकीर्त्तिताः। ग्रैवेयकं कण्ठभूषा कौड़ेयकः। अत्र यैयके यलोपः कौक्षेयकः खड्गः कौलेयकः श्वा। अत्र संज्ञायां नगरी शब्दः पठ्यते नागरेयकः जातौ तु नागरः। पारादेः। पारीणः अवारीणः। पारादिर्यथा। पारावारा वारपार पारादारा इमे मताः। ग्रामस्य पञ्च पारादाविह पण्डित- सत्तमैः। दिवादेः। दिवि भवं दिव्यम्। दिवादिर्यथा—दिक् प्राक् प्रागुदक् प्रत्यक् पराङ्ग्रामित्यपि। अर्द्धावराद्दा धर्म्मार्द्धोत्तमार्द्धमिह कीर्त्तितम्। ग्राम- शब्दस्य विषु ग्रामेयकः ग्रामीणः ग्राम्य इत्यादि। कापिश्यादेः ष्णायनी वा तु रङ्कोरनृप्राणिनि। कापिश्यादेः ष्णायनः स्याद्भवादौ रङ्कोस्तु नृभिन्न- प्राणिनि वा। कापिशायनः। कापिश्यादिर्यथा। कापिशीवङ्क्षिपत्यर्द्धि चतुष्कं परिकीर्त्तितम्। कापिशीशब्दात् वृद्धसंज्ञकादीयः प्रदेभ्यः अवृद्धादपि त्वविषया- दिति णको बाध्यते। राङ्कवायणी राङ्कवी गौः प्राणिनीति किं राङ्कवः कम्बलः। अनरीति किं राङ्कवको मनुष्यः रङ्कुशब्दः कच्छादौ पठ्यते। रूप्योत्तरदारण्याभ्यां णः। रूप्योत्तरदादरण्याच्च णः स्यात् भवादौ। वार्करूप्य णस्यापवादः वृद्धसंज्ञ- कात् तु नालिकरूप्यात् युङ्णको बाध्यते णविधानात् स्त्रियामारण्या गौः। दिक्- पूर्वादनामनि दिक्शब्देन दिग्वाचकोऽभिधीयते। दिक् पूर्वो दो यस्य तस्मात् असंज्ञायां णः स्यात् भवादौ। पौर्वशालः औत्तरशाला स्त्री दिशि उत्तरदे तार्थे भव इति परे। नाम्नि तु पूर्वा चासाविषुकामशमी चेति पूर्वेषु कामशमी तस्मात् पूर्वेषु कामशमः। सुपञ्चालादित्वात् औत्सर्गिकणो अन्त्यस्य दस्य ञ्रिः दग्रहणं स्वरूपविधेर्निरासार्थम्। मद्रात् ट्नः। दिक्पूर्वदादित्येव। दिक्पूर्वदात् मद्र- शब्दात् ट्नः स्याद्भवादौ। पूर्ववद् यसः। पौर्वमद्रः अमद्रादिश इति पर्य्युदासात् पूर्वदस्य ञ्रिः। बह्वचोऽन्तोदात्तादुदीच्यग्रामात् उदीच्यग्रामवाचकादन्तोदात्तात् बह्वचो लेः ट्नः स्यात् भवादौ। णस्यापवादोऽयं माहनगरम्। महनगरशब्दस्य यसः। स्वरेणान्तोदात्तत्वात् उदीच्यग्रामादिति किं माथुरः मध्यदेशग्रामत्वात् णः। बह्वच इति किं ध्वाजः ध्वजीशब्दात् णे अन्तोदात्तादिति किं शार्करा- धनम् अस्मिन् शास्त्रे स्वरलक्षणाभावादपि वृद्धोपदेशादन्तोदात्तादिकमवगन्तव्यं स्वरलक्षणानि नोक्तानि अस्मिन्ननुपयुक्तत्वात्। तीरोत्तरदाच्च। तीरोत्तरदाच्छब्दात् ट्नः स्याद्भवादौ णयोरपवादः। वाल्जतीरं कार्त्ततीरम्। कन्था भवद्भ्यां ष्णिकः।

श्वाभ्यां णिकः स्याद्भवादौ णेययोरपवादः। कान्यिकः भावत्कः। इ सुसुक्तान्तात् णिकस्य कः गहादिपाठात् भवदीयः। भवद्व डवन्तस्य ग्रहणात् शत्रन्तभव-च्छब्दात् माभूत् तेन भावत इति। श्वोर्देशे वृद्धात्तु प्राचि। उवर्णान्ताद्देशवाचकात् णिकः स्याद्भवादौ। प्राग्देशे वर्त्तमानादुवर्णान्ताद् वृद्धादेव नान्यस्मात्। मरौ जातः मारुकः उवर्णान्तादिकस्य कः णिति त्रिः एवं नैषादकर्षुकः शारवजम्बूकः शारवजम्बूशब्दस्य इकस्य के कृते वोहकः स्व इति ह्रस्वः। देशे इति किं पाटवः वैणवः। प्राचि वृद्धात् आढ़काजम्बूकः नापितजम्बूकः उवर्णात् वृद्धादित्येव णिकः वृद्धादिति नियमात् अवृद्धात् माभूत् तेन पर्णवात् तुशब्दस्य पार्णवास्तवः एवं मान्दवास्तवः। कालेभ्यः। कालवाचिभ्यः णिकः स्यात् भवादौ। मासिकम् आर्द्धमासिकं सांवत्सरिकम् आर्द्धसांवत्सरिकं यथा कथञ्चिद् गुणवृत्त्या काले वर्त्तमानादपीष्यते तेन कादम्बपुष्पिकः त्रैहिपलालिकः। न च गौणमुख्ययोर्मुख्ये कार्य्यसंप्रत्ययः इति वाच्यं गौणवृत्त्या काले वर्त्तमानेभ्यो नक्षत्रवाचिभ्यः णविधानात् कालेभ्य इति ब्वनिर्देशः स्वरूपविधेर्निरासार्थः। श्राद्धे शरदो वा तु रोगातपयोः। श्राद्धे वाच्ये शरच्छब्दात् णिकः स्यात् भवादौ रोगे आतपे च वाच्ये वा, ऋतुणस्य बाधकोऽयम्। शारदिकं श्राद्धं, श्राद्धं कर्म्मविशेषः न तु श्राद्धवान् पुरुषः। शारदिको रोगः आतपश्च पक्षे शारदः शारदीयः। वर्षाभ्यो षा तु निशाप्रदोषहेमन्तपूर्वाह्णपराह्णेभ्यः। वर्षाशब्दात् णिकः स्यात् भवादौ निशादिस्तु वा। वार्षिकं नैशिकं नैशं प्रादोषिकं प्रादोषं हैमन्तिकं हैमन्तस्य णे तलोपो वा हैमन्तः हैमनः तथाच हैमनीषु रजनीषु शेरते इति वृत्तिकृता शिष्टप्रयोग उद्भावितः। पौर्वाह्णिकम् आपराह्णिकं पक्षे त्यवाद्यचिर इति ष्टनः पूर्वाह्णेतनम् अपराह्णेतनम्। श्वसः णिकस्य तम्। श्वस्शब्दात् णिकस्यादौ तम् स्यात् म इत्। शौवस्तिकः। ननु त्यवाद्यचिर इत्यादिनात्यष्टनाभ्यां बाधिष्यते इति चेत् सत्यं णिकस्य तम् विधान-सामर्थ्यात् णिकोऽपि तत्तोभयगणपाठात् श्वस्त्यः श्वस्तन इत्यपि। सपूर्वदादर्द्धात् दिक्पूर्वदात्तु यश्च। पूर्वदेन सह वर्त्तमानादर्द्धशब्दात् णिकः स्यात् दिक्पूर्वदात्तु यः णिकश्च भवादौ। गौतमार्द्धिकं वाणेयार्द्धिकं दिक्पूर्वात्तु पौर्वार्द्धिकं पूर्वार्द्ध्यं दाक्षिणार्द्धिकं दक्षिणार्द्ध्यं दिवादित्वात् परार्द्ध्यमिति नित्यम् उभयत्र दग्रहणं स्वरूपविधेर्निरासार्थम्। ग्रामजनपदैकदेशादिक्पूर्वादर्द्धात् ट्नञ्च। ग्रामैकदेश-वाचिनो दिक्पूर्वादर्द्धाज्जनपदैकदेशवाचिनो दिक्पूर्वादर्द्धाच्च णिकट्नौ स्यातां भवादौ यस्यापवादः। पौर्वार्द्धिकः पौर्वार्द्धः ग्रामजनपदैकदेशादिति किं पौर्वा-

ञिकं पूर्वार्द्धग्रमिति पूर्व्वेण णिकञौ। प्रावृष एण्यः। प्रावृट्शब्दादेण्यः स्यात् भवादौ। प्रावृषेण्यः णत्वविधानं प्रावृषेण्यमाचचाण: प्रावृषेण इत्यत्र णत्वार्थम्। मध्यादः साधारणे। साधारणे वाच्ये मध्यशब्दादः स्यात् भवादौ। मध्यो वैयाकरणः नोत्तमो नाधम इत्यर्थः। त्यत्राद्यचिरेति प्राप्तस्यापवादः। द्वीपादुपसमुद्रात् ण्यः। समुद्रसमीपे वर्त्तमानात् द्वीपात् ण्यः स्यात् भवादौ। कच्छादित्वात् णे प्राप्ते वृतत्स्थयोर्णके च प्राप्ते विधानम्। द्वैप्यं द्वैप्या भवन्तोऽनुचरिष्यन्ति तत् क्रमम्। अनुपसमुद्रात् द्वैपः वृतत्स्थयोस्तु द्वैपकः। ऋतुनक्षत्रात् णः। ऋतुवाचकान्नक्षत्रवाचकाच्च णः स्यात् भवादौ। कालष्णिकस्यापवादः। ग्रैष्मं पौषम्। कौङ् कच्छनद्यादेः। कौङः कच्छादेः नद्यादेश्च णः स्यात् भवादौ। नैलीनकः निलीनकशब्दात् बह्वचोन्तोदात्तात् ट्ने प्राप्ते विधानम् इक्ष्वाकुशब्दादोर्द्देश इत्यनेन णिकं बाधित्वा वृद्धादपि ब्वविषयादिति प्राप्तौ णकौ बाध्यते णट्नयोरैक्ष्वाकः कच्छशब्दो न नित्यबहुवचनान्तः तस्मात् णौ वेत्यादाविति णे सिद्धे इह पाठः कच्छादेर्वृतत्स्थयोरिति णकबाधनार्थः विजायकशब्दात् कौङ्त्वात् णे सिद्धे वृतत्स्थयोरिति णकबाधनार्थः पाठः कच्छादेर्देश एवाभिधानात् पलद्यादेस्तावत् पालदः पारिखः। पलद्यादिर्यथा। पलदी परिखा गोष्ठी पर्षद्वाहीकपर्वताः। फलकीटः शूरसेनी बहुकीटः पटच्चरः। तच्चोदपानलोमानि गोतमी कमलं भिदा। सन्धिवेला यकृत्सन्ध्या पौर्णमासी त्रयोदशी। अमावस्या त्वमावास्या नैकती प्रतिपत् शरत्। पुरं वनं गिरिः पञ्चदशी संवत्सर फले। पर्वण्यपि पलद्यादौ शेषं शिष्टप्रयोगतः। गोष्ठी नैकती गोतमीशब्दानां वाहीकग्रामत्वात् प्रसक्तयोर्णिकष्णिकयोर्बाधक ईदन्तलक्षणको बाध्यते। वाहीकशब्दस्य कौङ्त्वात् णे सिद्धे अत्र पाठ एवं ज्ञापयति येषां लक्षणानां वृद्धावृद्धसामान्यविषयस्तेषां लक्षणानां वृद्धविहित ईयो बाधको भवति तेन औलुके भव औलुकीयः वाहकरूपे भवः वाहकरूपीयः इत्यादौ कौङ्णं बह्वचोन्तोदात्तादुदीच्यग्रामादिति ट्नं च बाधित्वा ईय एव भवति। सन्धिवेला सन्ध्या पौर्णमासी अमावास्या प्रतिपत् पञ्चदशीशब्दानां पाठः कालष्णिकबाधनार्थः। शरच्छब्दस्येह रैवतकादौ च पाठात् शारदः शारदीयः पुरवनगिरीणाम् इह नद्यादौ च पाठात् पौरः पौरेयः वानः वानेयः गैरः गैरेयः इति सांवत्सरं फलं सांवत्सरं पर्व अन्यत्र सांवत्सरिकमृणम्। शेषाणामुदीच्यग्रामत्वात् प्राप्तट्नबाधनार्थः पाठः। प्रस्थोत्तरदात्। प्रस्थोत्तरदाच्छब्दात् णः स्यात् भवादौ। माघीप्रस्थः बह्वचोऽन्तोदात्तादुदीच्यग्रामादिति प्राप्तट्नो बाध्यते। निवा-

स्यात् पृथ्वीमध्यान्मध्यमश्च चरणे। चरणे वाच्ये निवासवाचकात् पृथ्वीमध्य-शब्दात् णः स्यात् तस्मिन् मध्यमादेशश्च। पृथ्वीमध्ये निवासोऽस्य मध्यमः कठः अनिवासस्य तु पृथ्वीमध्यादागतः मध्यीयः कठः पृथ्वीमध्यस्य मध्यमश्चेति ईयस्य बाधकमिदं चरण इति किं मध्यमीयः शूद्रः। युस्मदस्मदो वा णीनश्च। आभ्यां णो णीनश्च वा स्यात् भवादौ। वृद्धादीयस्यापवादौ। यौषाकः यौस्माकीणः पक्षे युस्मदीयः एवम् आस्माकम् आस्माकीनम् अस्मदीयम्। ननु नाधिकारो धादित्यतः प्राक् तत् कथं ढाधिकारे भवादिनिरूपणमिति चेत् सत्यं भवादिपठितगच्छ-त्याद्यर्थे ढान्तात् भवादियो भवन्ति अतएव प्रसङ्गादुक्तमिति। गच्छति पथि दूतयोः। ढादिति वर्त्तते गच्छतीत्यर्थे यथाविहितं त्यः स्यात् यो गच्छति स चेत् पन्था दूतो वा भवति। स्रुघ्नं गच्छति पन्था दूतो वा स्रौघ्नः पन्था दूतश्च। ढात् धेत्यः माथुरः कान्यकुब्जः वाराणसेयः राष्ट्रियः इत्यादि पथिदूतयो-रिति किं मथुरां गच्छति साधुः। अभिनिष्क्रामति द्वारम्। ढादित्येव अभिनिष्क्रम-तीत्यर्थे यथा विहितं त्यः स्यात् यन्निष्क्रामति तत् द्वारं चेत् भवति स्रुघ्नमभिमुखेन निष्क्रामति द्वारं स्रौघ्नं द्वारम् एवं माथुरं कान्यकुब्जं वाराणसेयं राष्ट्रियमित्यादि। द्वारं निष्क्रमणक्रियायाः साधनत्वेन प्रसिद्धं तदिह स्वातन्त्र्येण विवक्ष्यते यथा साध्वसिश्छिनत्ति द्वारमिति किं मथुरानभिनिष्क्रामति पुरुषः। अधिकृत्य कृतो ग्रन्थः। ढादित्येव अधिकृत्य एतदपेक्षया शौपमधिकृत्य आरभ्य अभिप्रेत्य इत्यर्थः। अधिकृत्येत्यस्मिन्नर्थे यथाविहितं त्यः स्यात् यः कृतः स ग्रन्थश्चेत् भवति सुभद्रामधि-कृत्य कृतो ग्रन्थ सौभद्रो ग्रन्थः ग्रन्थ इति किं सुभद्रामधिकृत्य कृतः प्रासादः। आख्यायिकाभ्यो लुब् बहुलम्। आख्यायिकाभ्योऽधिकृत्य कृतो ग्रन्थ इत्यर्थे उत्प-न्नस्य त्यस्य बहुलं लुप् स्यात्। वासवदत्तामधिकृत्य कृतो ग्रन्थः वासवदत्ता सुमनो-त्तरा उर्वसी। बहुलं किं भैमरथः। सीतान्वेषणादेरीयः। ढात् सीतान्वेषणादे-रधिकृत्य कृतो ग्रन्थ इत्यर्थे ईयः स्यात् णस्यापवादः। सीतान्वेषणीयः। सीतान्वे-षणमसभं रक्षोऽसुरगुणमुख्यावपि शिशुक्रन्दः। शिशुक्रन्दो नाम रोगः। अदेवा सुरादेश्च। देवासुरादिभिन्नादधिकृत्य कृतो ग्रन्थ इत्यर्थे ईयः स्यात् चे से सति। श्येनकपोतीयो ग्रन्थः किरातार्जुनीयः सर्वार्थसम्बन्धीयः देवासुरादेश्च देवासुरः रक्षो-गन्धर्व इत्यादि। परे तु रक्षोऽसुरगुणमुख्यशब्दौ देवासुरादौ प्रद्युम्नागमनशब्द सीता-न्वेषणादौ पठन्ति। तेषां मते रक्षोऽसुरः गौणमुख्यः प्रद्युम्नागमनीयः येषां द्वन्द्व-समासे ईयप्रतिषेधस्ते च देवासुरादौ द्रष्टव्याः। णिको रक्षत्यादौ। ढादित्येव

रचतीत्याद्यर्थेषु णिकः स्यात्। समाजं रचति सामाजिकः। ढात् घे त्यः रचति उञ्छति वर्त्तते वक्ति धारयते गृह्णाति समवैति हन्ति तिष्ठति प्रयच्छति करोति चरति पश्यति वर्त्तयति आपनुपृच्छति गच्छति अधीष्ट भूत भूतभावी अर्हति नित्यमर्हति पचति सम्भवति अवहरति वहति हरति आहरति एवं शाकानुञ्छति शाकिकः। प्रतीपादेर्वर्त्तते। ढात् प्रतीपादेर्वर्त्ततेऽर्थे णिकः स्यात् यद्यपि वृतधीरकर्म्मकत्वात् ढाभावस्तथापि धुविशेषणत्वात् ढसंज्ञाप्रतीपं यथा स्यात् तथा वर्त्तते प्रातीपिकः। प्रतीपः प्रतिकूलः प्रतिलोमानुलोमनी। परिपार्श्वन्नीपपरिमुखानुकूलमित्यपि। प्रभूतादेर्वक्ति। ढात् प्रभूतादेर्वक्त्यर्थे णिकः स्यात्। प्रभूतं यथा तथा वक्ति प्राभूतिकः। प्रभूतः प्रतिभूतोऽव पर्य्याप्तेन सहेरिताः। माशब्दो नित्यशब्दश्च कार्य्यशब्दस्तथेति षट्। पदव्यादेस्तद्धावति। ढात् पदाव्यादेस्तद्धावतीत्यर्थे णिकः स्यात्। पदवी वर्त्म पदवीं धावति पादविकः पदस्य पश्चादनुपदं तत् धावति आनुपदिक आक्रन्दत्यस्मिन् आक्रन्दो देशः तं धावति आक्रन्दिकः। माथोत्तरदाच्च। ढान्माथशब्दोत्तरदाद्धावतीत्यर्थे णिकः स्यात्। दण्डमाथं धावति दाण्डमाथिकः पादमाथिकः माथशब्दः पथिपर्य्यायः। पदोत्तरदात् गृह्णाति। ढात् पदोत्तरदात् गृह्णातीत्यर्थे णिकः स्यात्। पौर्वपदिकम् उभयत उत्तरदग्रहणं बहुत्वे निषेधार्थम्। अर्थललामप्रतिकण्ठाच्च। ढेभ्य एभ्यो गृह्णातीत्यर्थे णिकः स्यात्। अर्थं गृह्णाति आर्थिकः लालामिकः कण्टं कण्ठं प्रतिकण्ठं तत् गृह्णातीति प्रातिकण्ठिकः। समूहार्थात् समवैति। ढात् समूहार्थात् समवैति इत्यर्थे णिकः स्यात्। समूहं समवैति सामूहिकः सामवायिकः ण्यः परिषदो वा तु सेनायाः। ढात् परिषच्छब्दात् समवैत्यर्थे ण्यः स्यात् णिकस्यापवादः सेनायास्तु वा। परिषदं समवैति पारिषद्यः सेनां समवैति सैन्यः सैनिकः। मृगमत्स्यपक्षिभ्यो हन्ति। ध्वनिर्देशः स्वरूपविधिनिरासार्थः। मृगमत्स्यपक्षिवाचिभ्यो हन्तीत्यर्थे णिकः स्यात् मृगं हन्ति मार्गिकः रौरुकः शौकरिकः नैयङ्कुकः श्वापदम्यङ्कोस्तु वेति वा युम् पक्षे न्याङ्कुकः इकस्य कः मात्सिकः शाकुनिकः प्रौष्ठिकः पाक्षिकः हारीतकः मायूरिकः पातत्कः। तान्तादिकस्य कः। परिपथात् तिष्ठति च परिपन्थश्च। ढात् परिपथात् हन्तीत्यर्थे तिष्ठतीत्यर्थे च णिकः स्यात् तस्मिन् परिपथस्य पन्था देशश्च। परिपथं हन्ति तिष्ठति वा पारिपन्थिकश्चौरः पन्थानं परिव्रज्य हन्ति तिष्ठति वेत्यर्थः। परिपथपर्य्यायः परिपन्थशब्दोऽस्तीति वृत्तिकारः। निन्द्यात् प्रयच्छति। शास्त्रोक्तव्यवहाराद्विरुद्धव्यवहारो निन्द्यः तस्मात् ढात् प्रयच्छतीत्यर्थे णिकः स्यात्। द्विगुणार्थं द्रव्यं द्विगुणं

प्रयच्छति द्वैगुणिकः यदा उत्तमर्णः एकद्रव्यं द्विगुणार्थं कृत्वा प्रयच्छति पश्चात् तद्वर्द्धयति तदा द्विगुणं निन्द्यं यदा त्वेकं गुणं प्रयच्छति पश्चाद् द्विगुणं गृह्णाति तदा न द्विगुणं निन्द्यं शास्त्रविहितत्वात् एवं वैगुणिकः। वृधुषश्च वृद्धेः। निन्द्यात् वृद्धिशब्दात् ढात् प्रयच्छतीत्यर्थे णिकः स्यात् वृद्धिशब्दस्य वृधुषादेशश्च। वृद्ध्यर्थं द्रव्यं वृद्धिः वृद्धिं प्रयच्छति वार्द्धुषिकः। यद्यपि वृद्धिशब्दपर्य्यायो वृधुषीशब्दोऽप्यस्ति तथापि वृद्धिशब्देनानिष्टनिवारणार्थमिदम्। कुसीददशैकादशाभ्यां षिकः। निन्द्यात् कुसीदशब्दात् ढात् दशैकादशशब्दाच्च प्रयच्छतीत्यर्थे षिकः स्यात्। कुसीदं वृद्धिस्तदर्थं द्रव्यं कुसीदं तत् प्रयच्छति कुसीदिकः दशशब्दो दशार्थे वर्त्तते एकादशशब्द एकादशार्थेऽपि उपचारात् दशसु वर्त्तते अतः सामानाधिकरण्यात् दश च ते एकादश चेति यसः दशैकादश प्रयच्छति दशैकादशिकः दशैकादशिकी दश एकादशार्थं प्रयच्छतीत्यर्थः। शब्ददर्दूराभ्यां करोति। आभ्यां करोतीत्यर्थे णिकः स्यात्। शब्दं करोतीति शाब्दिको वैयाकरणः दार्दुरिकः कुलालः। दर्दुरो वाद्यभाण्डविशेषः भाण्डसंस्कारकाले दर्दुरशब्दविशेषं करोति इति रचितः। धर्म्मादिश्चरति। ढात् धर्म्मादिश्चरतीत्यर्थे णिकः स्यात्। धर्म्मं चरति धार्म्मिकः चरणमत्र सेवा तेन कदाचिदाचरणे माभूत् धर्म्मादिर्यथा। धर्म्माधर्म्मौ महानाम्नी गोदानसहितास्तथा। आदित्यव्रतमित्येते पञ्चेह समुदीरिताः। अवान्तरदीक्षादेर्डिन्। ढादवान्तरदीक्षादेर्डिन् स्यात् चरतीत्यर्थे। अवान्तरदीक्षां चरति अवान्तरदीक्षी एषोऽवान्तरदीक्षात देवव्रतं तिलव्रतम्। अष्टाचत्वारिंशतो डकश्च ढादष्टाचत्वारिंशच्छब्दात् चरतीत्यर्थे डिन् डकश्च स्यात् णिकस्यापवादः। अष्टाचत्वारिंशद्वर्षाणि व्रतं चरति अष्टाचत्वारिंशी अष्टाचत्वारिंशकः। चातुर्मास्यानां यलोपश्च। चातुर्मास्यशब्दात् चरतीत्यर्थे तौ स्यातां तयोर्यलोपश्च। चातुर्मास्यानि व्रतानि चरति चातुर्मासी चातुर्मासकः। नाम्नि ललाटकुक्कुटाभ्यां पश्यति। ढाभ्यामाभ्यां पश्यतीत्यर्थे णिकः स्यात् ललाटं पश्यति लालाटिकः यः सेवकः शिष्यो वा प्रसादचिह्नज्ञानाय प्रभोर्गुरोर्वा ललाटमेव पश्यति यः कार्य्याक्षमः सोऽभिधीयते कुक्कुटशब्देन कुक्कुटपातयोग्यदेशोऽभिधीयते तं देशं पश्यति कौक्कुटिको भिक्षुः यः कुक्कुटः पातयोग्यमल्पतरदेशं पश्यन् गच्छतीति स इत्यर्थः। पारायणोत्तरायण चान्द्रायणेभ्यो वर्त्तयति। ढेभ्य एभ्यो वर्त्तयतीत्यर्थे णिकः स्यात्। पारायणं वेदस्य शास्त्रस्य वा समस्ताध्ययनकर्म्म, उत्तरायणं यज्ञविशेषः चान्द्रायणं व्रतविशेषः संज्ञायामुत्तरदस्य णो णः पारायणं वर्त्तयति पारायणिकः यद्यपि पारायणं शिष्ये गुरौ च वर्त्तते

तथापि शिष्यं एव त्य इति न्यासः। एवमौत्तरायणिको यजमानः न तु याजकः चान्द्रायणिकस्तपस्वी। तदन्ताच्च। ईपारायणिकः द्वैौत्तरायणिकः ईचान्द्रायणिकः। संशयादापन्ने। ढात् संशयशब्दात् आपन्नेऽर्थे णिकः स्यात्। संशयः सन्देहः तमापन्नः सांशयिकः संशयितेति न्यासकारस्तु संशय्यमाने स्थाण्वादौ त्यमुत्पादयति न तु संशयितरीति तत् बहुनामसम्मतम्। अतएवामरकोषे प्राणिवर्गे सांशयिकः संशयापन्नमानसः इति। सुस्नातादिः पृच्छति। ढात् सुस्नातादिः पृच्छतीत्यर्थे णिकः स्यात्। सुस्नातं पृच्छति सौस्नातिकः सौख्यसुप्तिकः सुस्नातादिरत्र सुप्तशय्या रात्रयः सुखशब्दात्। योजनादेर्गच्छति। ढात् योजनादेर्गच्छतीत्यर्थे णिकः स्यात्। योजनं गच्छतीति यौजनिकः। योजनादिर्यथा। योजनं गुरुतल्पञ्च दारागुरीः परादपि। शतं क्रोशात् योजनाच्च वुधैरत्र षड़ीरिताः। पथः षिकः। ढात् पथिशब्दात् षिकः स्यात्। पन्थानं गच्छतीति पथिकः स्त्रियां पथिकी। नित्यं णः पन्थश्च। ढात् पथो नित्यं गच्छतीत्यर्थे णः स्यात् तस्मिन् पन्थादेशश्च। पन्थानं नित्यं गच्छति पान्थः स्त्रियां पान्था। कालेभ्योऽधीष्टभूतभूतभाविषु। ब्वनिर्देशः स्वरूपविधेर्निरासार्थः। तेभ्यः एभ्यः कालवाचिभ्योऽधीष्टे भूते भूते भाविनि चार्थे णिकः स्यात्। अधीष्टः सत्कृत्यव्यापृतः भृतो वेतनेन क्रीतः भूतः सत्तया व्याप्तकालः। भावी सत्तया व्याप्तकालो भविष्यति यः सदाध्वादीति ढं मासं अधीष्टो मासिकोऽध्यापकः मासं भृतः मासिकः मासं भूतो मासिको व्याधिः मासं भावीति मासिक उत्सवः नन्वध्येषण भवने सुकृतं व्याप्य क्रियते तत् कथं ताभ्यां मासो व्याप्यते इत्युच्यते। यदर्थं हि ते क्रियेते तत्फलभूतया क्रियया मासो व्याप्यमानस्ताभ्यामपि व्याप्यत इत्युच्यते उपचारात्। संख्याशब्दोऽपि यदाकाले संख्येये वर्त्तते तदापि त्यः। ई षष्ठीभूतो भावी वा। द्विषाष्टिकः द्विसाप्ततिकः सुपञ्चालादित्वादुत्तरपदस्य त्रिः। मासात् यनीनौ वयसि। ढान्मासाद्वयस्यभिधेये एष्वर्थेषु यनीनौ स्याताम्। मासं भूतो भावी वा मास्यः मासीनः माणवक इति पुरुषोत्तमः। अपरे भूतेऽर्थे अभिधानमित्याहुः वयसीति किं मासिकः कर्म्मकरः। गाद्द यः। ढात् क्तगात् मासाद्वयस्यभिधेये यः स्यात् भूते। द्वौ मासौ भूतः द्विमास्यः। षण्मासाद्यणिकौ च। ढात् क्तगात् षण्मासात् वयस्यभिधेये भूताद्यर्थे यणिक य एते स्युः। षण्मासान् भूतः षाण्मास्यः षाण्मासिकः षण्मास्यः विधानसामर्थ्यात् नैको लुक् इकण्याववयसि। ढात् क्तगात् षण्मासात् भूतेऽर्थे इकण्यौ स्याताम्। षाण्मासिकः

षाण्मास्यो रोगः। समाया ईनो गात्तु वा। ढात् समाशब्दात् ईनः स्यात् कृतगात्तु वा एष्वर्थेषु। समामधीष्टो भृतो भावी वा समीनः द्वे समे अधीष्टो भृतो भावी वा द्विसमीनः पत्ते द्वैसमिकः। गाद्रात्त्यह्नः संवत्सरादीन ष्णिकौ वर्षात्तु लुक् च वा चित्तवति नित्यम्। ढेभ्य एभ्यः कृतगेभ्य ईन ष्णिकौ स्यातां तेषु वर्षात्तु वा लुक् चित्तवति तु नित्यम्। द्वे रात्री अधीष्टो भृतो भावी वा द्वैरात्रिकः द्व्यह्नीनः द्वैयह्निकः द्विसंवत्सरीणः द्विसांवत्सरिकः सुपञ्चालादित्वात् उत्तरदस्य वृद्धिः। द्विवर्षीणः द्विवार्षिकः द्विवर्षः अभविष्यति संख्यादिवर्षादीति परदस्य वृद्धिः। भविष्यति तु द्वे वर्षे भावी द्वैवार्षिकः द्विवर्षो वत्सः नित्यं तयोर्लुक् चित्तवतीति किं द्विवर्षीणो द्विवार्षिकः द्विवर्षो व्याधिः। अर्हति। ढात् अर्हतीत्यर्थे ष्णिकः स्यात्। वस्त्रमर्हति वास्त्रिकः श्वैतच्छत्रिकः। दण्डादेर्यः। ढाद्दण्डादेरर्हतीत्यर्थे यः स्यात्। दण्डमर्हति दण्ड्यः कश्यः। दण्डः कशावधो मेधा मोघार्घो मुसलं धनम्। मधुपर्कः शुभं वंशः सवोदकयुगं पणम्। कडङ्गरस्थालीविलदक्षिणाभ्य ईयश्च। ढेभ्य एभ्योऽर्हत्यर्थे ईयोयश्च स्यात्। कडङ्गरम् अर्हति कडङ्गरीयः कडङ्गर्यः स्थालीविलीयः स्थालीविल्यः दक्षिणीयः दक्षिण्यः। पात्रादेर्येयौ। ढात् पात्रशब्दादर्हति इत्यर्थे य एयश्च स्याताम्। पात्रमर्हति पात्र्यः पात्रेयः। यज्ञर्त्विग्भ्यामियणीनौ कर्म्मार्हति च। ढाभ्यामाभ्याम् अर्हति कर्म्मार्हति चेत्यर्थे क्रमात् स्यातां यज्ञमर्हति कर्म्मार्हति। यज्ञियो ब्राह्मणः। ऋत्विजमर्हति कर्म्मार्हति वा आर्त्विजीनः। छेदादेर्नित्यमर्हति। ढाच्छेदादेर्नित्यमर्हति इत्यर्थे ष्णिकः स्यात् छेदं नित्यम् अर्हति छैदिकः भैदिकः। छेदादिर्यया, छेदो भेदस्तथा द्रोहो नर्त्तकर्षे ष्णिके भवेत्। विरागस्य विरङ्गोऽथ सम्प्रयोगश्च सम्प्रति। सम्प्रेषणश्च सम्प्रश्नो दशेह परिकीर्त्तिताः। विरागं नित्यमर्हति वैरङ्गिकः ष्णिके विरङ्गादेशः। शिरश्छेदात् यश्च शिरः शीर्षः। ढात् शिरश्छेदशब्दात् नित्यमर्हति इत्यर्थे ष्णिकः यश्च स्यात् ये कृते शिरसः शीर्षादेशश्च। शिरश्छेदं नित्यमर्हति शैर्षच्छेदिकः शीर्षच्छेद्यः। पचति सम्भवति अवहरति च। ढादेतेष्वर्थेषु ष्णिकः स्यात् सम्भवत्यर्थेऽत्र सम्भवः आधेयस्य प्रमाणानतिरेकस्तथा च "सम्भवः कथितो हेतावुत्पत्तौ मेलकेऽपि च आधारानतिरिक्तत्वे आधेयस्य च सम्भवः" इति विश्वः। अवहरत्यर्थोऽवहरणं संहरणमित्यर्थः प्रस्थं पचति सम्भवति अवहरति वा प्रास्थिकः कौड़विकः कटाहः यद्यपि प्रस्थं पचति चरुः प्रास्थिक इत्यत्र पाकेऽपि सम्भवो विद्यते तथापि प्रस्थं पचति ब्राह्मणी प्रास्थिकीत्यत्र सम्भवत्यर्थेन विनापि पचत्यर्थदर्शनात् पृथक् पचति-

ग्रहणम् । पात्राचिताढ़कविस्ताद्दीनौ वा । ढेभ्यः एभ्य एष्वर्थेषु ईनः स्यात् वा । पात्रं पचति सम्भवत्यवहरति वा पात्रीणा आचितीना विस्तीना स्थाली । पचे पात्रिकीत्यादि । गात् षिकश्च वा । ढेभ्यः क्रतगेभ्यः षिक ईनश्च स्यात् वा एष्वर्थेषु । द्वे पात्रे पचति सम्भवति अवहरति वा द्विविस्तिकी द्विपात्रिकी द्विपात्रीणा द्व्याचितिकी द्व्याचितीना द्व्याढ़की द्व्याढ़कीना द्विविस्तिकी द्विविस्तिना पचे णिकस्यार्थे लुकि तार्थे मानादित्यादिना ईपि द्विपात्री द्व्याढ़की आचितविस्ताभ्यान्तु अजादित्वात् द्व्याचिता द्वि विस्ता आप् नत्वीप् पूर्वत्रयाणां षिकणिकयोर्न विशेषः पृथग्योग उत्तरार्थः । कुनिजाल्लुक् षिकणिकेनाः । ढात् क्रतगात् कुनिजात् लुक् षिक णिक ईन एते स्युः एष्वर्थेषु । द्विकुनिजी मनादितीप् द्विकुनिजिकी द्वैकुनिजिकी द्विकुनिजीना । वंशादिभ्यो भाराद्वहति हरत्याहरति । ढात् वंशादिपूर्वभाराद्वहति इत्याद्यर्थे लुक् षिक् णिक ईनः स्यात् । वंशभारं वहति हरति आहरति वा वांशभारिकः । वाल्वजभारिकः । वंश वल्वज मूलेचु स्थूलाचकुटजाः कुटाः । अश्मा खट्वा दश प्रोक्ता वंशादिरिह कोविदैः । केचित् भारशब्दोऽर्थद्वारेण वंशादीनां विशेषणात् भारभूतेभ्यो वंशादिभ्य इत्यर्थः तेन भारभूतान् वंशान् वहति वांशिकः वाल्वजिकः इत्याहुः । वहति उत्क्षिप्य धारयति । हरति देशान्तरं प्रापयति आहरति उत्पादयतीत्यर्थः । द्रव्यवस्त्राभ्यां केकौ । ढाभ्यामाभ्यां क्रमात् केकौ स्यातां एष्वर्थेषु । द्रव्यं वहति हरति आहरति वा द्रव्यकः वस्त्रिकः अर्हत्यदौ शताद्येकावशते । ढाच्छतशब्दात् अर्हतीत्याद्यर्थेषु य इक इत्येतौ स्यातां न तु शते । शतमर्हति पचति सम्भवति अवहरति वहति हरति आहरति वा शत्यः शतिकः कम्बलः अशत इत्युक्तेर्यत्र प्रकृत्युक्तसंख्यायास्त्यवाच्यस्य संख्येयत्वं भवति तत्र न स्यात् । तेन शतमध्यायाः परिमाणमस्य शतकं निदानमित्यादौ प्रकृत्या शतशब्देन उक्तायाः संख्यायास्त्यवाच्यस्य निदानस्य संख्येयत्वात् तौ न स्यातामिति शत्यः शतिकः कम्बल इत्यादौ त्यवाच्यस्य कम्बलस्य न संख्येयत्वं किन्तु येन क्रीतस्तस्यैवेति । संख्याया अतिशदन्तायाः कः । ढात् त्यन्तशदन्तवर्जात् संख्यावाचकात् कः स्यादर्हत्यादौ । पञ्चकः बहुकः गणकः । अतिशदन्ताया इति किम् । साप्ततिकः चत्वारिंशत् कः तादिकस्य कः । अथ वितस्तिशब्दस्य वर्जनात् डतेरप्रतिषेधस्तेन कति कः । विंशतिविंशद्भ्यां चासंज्ञायान्तु डकः । ढाभ्यामाभ्याम् अर्हत्यादौ कः स्यात् असंज्ञायान्तु डकः । विंशतिकः विंशत्कः असंज्ञायान्तु विंशकः त्रिंशकः । वतोः कस्येम् वा । वत्वन्तात् कस्य इम् वा स्यात् म इत् । यावतिकः

तावतिकः यावत्कः तावत्कः। कंसार्द्धाभ्यां षिकः। टाभ्यामाभ्यां षिकः स्यात् अर्हत्यादौ। कांसिकी अर्द्धिकी। कार्षापणा द्वा तु प्रतिश्च। टात् कार्षापणात् षिकः स्यात् अर्हत्यादौ अस्मिन् प्रतिरादिश्यते वा। कार्षापणिकः प्रतिकः। वसन सहस्र शतमान विंशतिकात् णः। टेभ्य एभ्यः णः स्यात् अर्हत्यादौ। वासनं साहस्रं शातमानं वैंशतिकम्। शूर्पात् ट्ञौ वा। टात् शूर्पात् ट्ञौ वा स्यादर्हत्यादौ णिकस्यापवादः। शौर्पः पक्षे शौर्पिकः। गादध्यर्द्धादेरसंज्ञायां लुक् स्यात्। टात् कृतगात् अध्यर्द्धपूर्वाच्चार्हत्यादौ ये विहितास्तासां तेषाम् असंज्ञायां लुक् स्यात्। द्विकंसम् अध्यर्द्धकंसम् अध्यर्द्धशूर्पम् असंज्ञायामिति किम्। पाञ्चलौहितिकं पाञ्चकपालिकम् अत्र त्यान्त नाम इति। सहस्रशतमानसुवर्णकार्षापणेभ्यो वा। टेभ्य एभ्य कृतगेभ्योऽध्यर्द्धपूर्वेभ्यश्च अर्हत्यादौ विहितानां त्यानां लुक् स्याद्वा। द्विसहस्रम् अध्यर्द्धसहस्रं द्विशतमानं द्विसुवर्णम् अध्यर्द्धसुवर्णं द्विकार्षापणम् अध्यर्द्धकार्षापणं पक्षे द्विसाहस्रं अध्यर्द्धसाहस्रं द्विशातमानम् अध्यर्द्धशातमानं द्विसौवर्णम् अध्यर्द्धसौवर्णं सुपञ्चालादित्वात् अन्तस्य दस्य ञिः। द्विकार्षापणिकं द्विप्रतिकं षिकः एवमध्यर्द्धकार्षापणिकम् अध्यर्द्धप्रतिकम्। विंशतिकादीनः। टात् कृतगात् अध्यर्द्धपूर्वाच्च विंशतिकादीनः स्यात् अर्हत्यादौ। द्विविंशतिकीनः लुग् बाध्यते। पाद पण मासात् यो वा तु शतशाणात्। टेभ्यः कृतगेभ्योऽध्यर्द्धपूर्वेभ्यश्च एभ्यो यः स्यात् अर्हत्यादौ शतशाणाभ्यान्तु वा। द्विपाद्यं द्विपण्यं द्विमास्यम् अध्यर्द्धपाद्यम् अध्यर्द्धपण्यम् अध्यर्द्धमास्यं शतशाणादिस्तु द्विशत्यम् अध्यर्द्धशत्यं पञ्चशाण्यम् अध्यर्द्धशाण्यं पक्षे द्विशतम् अध्यर्द्धशतं पञ्चशाणम् अध्यर्द्धशाणम्। खारीकाकिनीभ्यामीकः केवलाभ्याञ्च। टाभ्यां कृतगाभ्याम् अध्यर्द्धपूर्वाभ्यां केवलाभ्याञ्चार्हत्यादौ ईकः स्यात्। द्विखारीकः अध्यर्द्धखारीकः द्विकाकिनीकः अध्यर्द्धकाकिनीकः खारीकः काकिनीकः। द्वित्रेः शाणात् णो वा। द्वित्रेः पूर्वात् अर्हत्यादौ णो वा स्यात्। द्वैशाणं त्रैशाणं पक्षे पूर्वेण वा यश्च द्विशाण्यं त्रिशाण्यम् उभयत्यक्तपक्षे लुक् द्विशाणं त्रिशाणमिति। बहोश्च निष्क विस्तात् णिकौ वा। टात् द्वित्रिबहुपूर्वात् निष्कात् विस्ताच्च णिकौ वा स्यात् अर्हत्यादौ। द्विनैष्किकं त्रिनैष्किकं बहुनैष्किकं द्विवैस्तिकं बहुवैस्तिकं पक्षे द्विनिष्किकं त्रिनिष्किकं बहुनिष्किकं द्विविस्तिकं त्रिविस्तिकं बहुविस्तिकम्। उक्तो रथ्यादिः। युग रथ प्रासङ्गात् यो वहति। टेभ्य एभ्यो वहत्यर्थे यः स्यात्। युग्यं वहति युग्यः रथ्यः प्रासङ्ग्यः गादपि द्वियुग्यः द्विप्रासङ्ग्यः। नाम्नि तु जनात्। टाज्जनशब्दात् वहत्यर्थे यः संज्ञायाम्। जनं वहति जन्यो वरस्निग्धः। जनी-

शब्दात् वधूवाचकाद् य इति जयादित्यः। धुरः णेयेनौ च। ढात् धुर् शब्दात् वहत्यर्थे णेय इनय एते स्युः। धुरं वहति धौरेयः धुरीणः धुर्य्यः। सर्वदक्षिणोत्तरात् धुराया इनः। ढात् सर्वादिपूर्वात् धुराशब्दात् वहत्यर्थे ईनः स्यात्। सर्वधुरां वहति सर्वधुरीणः दक्षिणधुरीणः उत्तरधुरीणः। एकधुराया लुक् च। एकधुरीणः एकधुरः। शकटाद्हलसीरात् णणिकौ गाञ्च। ढात् शकटात् कृतगाञ्च णः हलसीरात् कृतगाञ्च णिकः स्यात् वहत्यर्थे। शकटं वहति शाकटः द्वे शकटे वहति द्वैशकटः हलं वहति हालिकः सैरिकः द्वे हले वहति द्वैहलिकः द्वैसीरिकः। धनगणाभ्यां यो लब्धरि। ढाभ्यामाभ्यां लब्धर्य्यर्थे यः स्यात्। धनं लब्धा धन्यः गण्यः शीलार्थे तृणो ढे न यो णोऽर्थात्। अर्थं लब्धा आर्थयाव। वशाद्गते। ढात् वशाद्गतेऽर्थे यः स्यात्। वश आयत्तता तं गतो वश्यः। सर्वादेः पथपथ्यङ्गकर्म्मपत्रपाद्रीनो व्याप्नोति। ढात् सर्वपूर्वात् पथादेर्व्याप्नोत्यर्थे ईनः स्यात्। सर्वपथं व्याप्नोति सर्वपथीणः सारथिः सर्वपथीनो रथः सर्वाङ्गीनं वासः सर्वकर्मीणः पाणिः सर्वपात्रीण ओदनः। आप्रपदात् प्राप्नोति। ढादाप्रपदात् प्राप्नोत्यर्थे ईनः स्यात्। आप्रपदं प्राप्नोति आप्रपदीनं वासः। सर्वान्नाद्भक्षयति। सर्वान्नानि भक्षयति सर्वान्नीनो भिक्षुः। अनुपदाबद्धा। अनुपदं बद्धा अनुपदीना उपानत् पदप्रमाणेत्यर्थः। अयानयान्नेये। अयः प्रदक्षिणम्। अनयः अपसव्यं प्रदक्षिणापसव्यगामिनां शारीणां यस्मिन्नपरैह समावेशः सोऽयानयः ढादयानयशब्दान्नेयेऽर्थे ईनः स्यात्। अयानयं नेयः अयानयीनः शारिः। परस्परपत्रपौत्रपरावरेभ्योऽनुभवति। ढेभ्य एभ्योऽनुभवत्यर्थे ईनः स्यात्। पारङ्गामी पारीणः। परञ्चापरञ्चानुभवति सूत्रनिर्देशात् परम्परीणः पुत्रपौत्रीणः तथाच लक्ष्मीं परम्परीणां त्वं पुत्रपौत्रीणतां नयेति भट्टिः। परांश्चपरांश्चानुभवति सूत्रनिर्देशादीत्वं परावरीणः त्वेन विनापि परस्परशब्दो दृश्यते न तु परीवर इति। पारादेर्गामिनि। ढात् पारादेर्गामिन्यर्थे ईनः स्यात्। पारङ्गामी पारीणः। पारावारा पारवार पारावारं प्रकीर्त्तितम्। अत्यन्तमनुकामञ्च पारादौ कोविदोत्तमैः। अध्वनो यश्चालङ्गामिनि। अध्वानमलङ्गामी अध्वनीनः अध्वन्यः। अभ्यमित्रादीये नौ च। ढादभ्यमित्रादलङ्गामिन्यर्थे ईन ईय य एते स्युः। अभ्यमित्रम् अलङ्गामी अभ्यमित्रीणः अभ्यमित्रीयः अभ्यमित्रः अमित्राभिमुखम् अलं गच्छतीत्यर्थः। भविष्यन्निर्देशो वैचित्र्यार्थः गन्तृमात्रे त्यः। समांसमीनानुगवीनाद्यश्वीनाः एते निपात्यन्ते। समां समां विजायते समांसमीना गौः प्रत्यब्द प्रसवेत्यर्थः। अनुगुगोः पश्चादलङ्गामी अनुगवीनो

गोप: । अद्य श्वो वा विजायते अद्यश्वीना गौ: आसन्नप्रसवेत्यर्थ: । कथमद्यश्वीनो वियोग: विजायते इत्यस्यानुवृत्तिरिति जयादित्य: । निपातो ह्यर्थविशेषे । उक्तो ढाधिकार: । धात् । धादित्यधिक्रियते घादित्यत: प्राक् । णिको दीव्यतीत्यादौ । दीव्यति जयति खनति जितं कृतं भवति चरति जीवति हरति निहृत्तं कार्य्यं लभ्यं सुकरं परिजय्यं संस्कृतं संसृष्टम् उपसिक्तं वर्त्तते सम्पादी क्रीतं गच्छति आहृतं युध्यते दृश्यते श्रूयते इति । धादिष्वर्थेषु णिक: स्यात् । हलेन दीव्यति जयति खनति जितो वा हालिक: जितेऽर्थे ढेऽपित्यस्तेन अचैर्जितं द्रव्यम् आचिकम् । धादिति किं देवदत्तेन जितम् । प्राक् वत् कायाभ्यां कृते । धाभ्यामाभ्यां कृतेऽर्थे णिक: स्यात् । मूले वाचिकमिति । एवं कायेन कृतं कायिकम् आभ्यामिति किं मनसा कृतं मानसं तथाच हेमसूरि: । कायिकं वाचिकं तत् स्याद्वाचा कायेन यत् कृतम् इत्याह इदं पाणिनीयमिति । चरति । धाच्चरति इत्यर्थे णिक: स्यात् । दध्ना चरति दाधिक: दध्ना भक्षयति इत्यर्थ: हस्तिना चरति हास्तिक: हस्तिना गच्छतीत्यर्थ: । चरेरुभयार्थे ग्रहणम् । पर्पादे: षिक: । पर्पादेश्चरत्यर्थे धात् षिक: स्यात् । पर्पेण चरति पर्पिक: स्त्रियां पर्पिकी पर्पशब्देन हस्त्यादिनयनार्था तृणपूर्णा नौरुच्यते । पर्पाकष रथ व्यास व्याल जालाश्वमेव च । पादस्य पद्भवेन्नित्यमष्टपर्पादय: स्मृता: । पादेन चरति पदिक: आकर्षो निकषो पल: । आकषशब्दपाठात् आकषिकभार्य्य: इत्यत्र कौङ्त्वेऽपि न पुंवन्निषेध: । व्यासव्यालशब्दयो: रणित्तेन युम् जालशब्दस्य इकबाधनार्थ: पाठ: । स्वगणाद्वा । धात् स्वगणाच्चरत्यर्थे षिको वा स्यात् । स्वगणेन चरति स्वगणिक: स्वागणिक: । वेतनादेर्जीवति । धाद्वेतनादेर्जीवत्यर्थे णिक: स्यात् । वेतनेन जीवति वैतनिक: । वेतन वाहजालाऽर्द्धवाहप्रेषण शक्तय: । दण्डोधनरुपस्थानं सुखशय्या तथैव च । स्थिरपादौ धनुर्दण्डोपनिषद्देशमेव च । उपास्थिरुपदेशश्च सप्ततिर्दशकीर्त्तिता: । वत्स क्रयविक्रय क्रयविक्रयादिक: । येभ्य एभ्यो जीवत्यर्थे ईक: स्यात् । वत्सेन जीवति वत्सिक: क्रयिक: विक्रयिक: क्रयविक्रयिक: । आयुधादीयश्च व्रतान्नीन: । आयुधेन जीवति आयुधिक: आयुधीय: । ये नानाजातीया अनियतवृत्तय: शरीरमायास्य जीवन्ति ते व्राता: तत्कर्म्मापि व्रातं तेन जीवति व्रातीनो विप्र: । उत्सङ्गादेर्हरति । ढादुत्सङ्गादेर्हरत्यर्थे णिक: स्यात् उत्सङ्गेन हरति औत्सङ्गिक: । उत्सङ्ग पटकोष्ठश्च उडुपोत्पोटमेव च । भस्त्रादे: षिक: । ढाद्भस्त्रादे: षिक: स्यात् णिकस्यापवाद: । भस्त्रया हरति भस्त्रिक: स्त्रियां भस्त्रिकी । भस्त्राऽशभार वरटाऽश भारभरक

कथा। भस्त्रादौ शीर्षभारश्च शीर्षे भारः प्रकीर्त्तितः। विवध वीवधाभ्यां वा। विवधेन हरति विवधिकः वैवधिकः स्त्रियां विवधिकी वैवधिकी एवं वीवधिकी इत्यादि। कुटिलिकायां ष्णः। धात् कुटिलिकाशब्दात् हरत्यर्थे ष्णः स्यात्। कुटिलिकाशब्देन कुटिला गतिः अग्रवक्रा लौहादिमयी यष्टिश्च उच्यते कुटिलिकया कुटिलगत्या व्याधं हरति वञ्चयति कौटिलिको मृगः तथा कुटिलिकयाऽग्रवक्र लौहयष्ट्याङ्गारान् हरति कौटिलिकः कर्म्मकारः। अचद्यूतादेर्निर्वृत्ते। धादचद्यूतादेर्निर्वृत्तेऽर्थे ष्णिकः स्यात्। आचद्यूतेन निर्वृत्तम् आचद्यूतिकं वैरम् अचद्यूत जयाम्बेदपाद मर्दनकण्टकम्। यातोपयात प्रकृत गतागत गमागमम्। याचितापमित्याभ्यां कक्णौ। धाभ्यामाभ्यां क्रमात् कक्णौ स्यातां निर्वृत्ते। याचितेन निर्वृत्तं याचितकम् अपपूर्वमेङ्प्रतिदाने यदि अपमित्यनिर्वृत्तम् आपमित्यकम्। अतेऽपि निर्देशो अनुकरणात्। कालेभ्यः कार्य्ये लभ्य सुकर परिजय्येषु च। ध्वनिर्देशः स्वरूपविधेर्निरासार्थः। धेभ्यः कालवाचिभ्यो निर्वृत्ते कार्य्यादिषु च ष्णिकः स्यात्। मासेन निर्वृत्तः मासिकः आर्द्धमासिकः सांवत्सरिकः एवं मासेन कार्य्यः लभ्यः सुकरः परिजय्यो वा मासिक इत्यादि। समादेरधीष्टादिवत्। धात् समादेर्निर्वृत्तेऽर्थे अधीष्टादिवत् यथा विहितं त्याः स्युः। समान्निर्वृत्तः समीनः द्विसमीनः द्वैसमिकः द्विरात्रीणः द्वैरात्रिकः द्व्यहीनः द्वैयह्निकः द्विसंवत्सरीणः द्विसांवत्सरिकः द्विवर्षीणः द्विवार्षिकः द्विवर्षः। चित्तवति नित्यं लुक् द्विवर्षोत्सवः एतत् पुरुषोत्तमेनोक्तम्। षष्टिकाः। निपात्याः। षष्टिरात्रेण पच्यते षष्टिको व्रीहिः। संसृष्टे। धात् संसृष्टेऽर्थे ष्णिकः स्यात्। द्रव्यान्तरेण यन्मिश्रीकृतं तत् संसृष्टं दध्ना संसृष्टं दाधिकं शार्करिकम्। मुद्गचूर्णाभ्यां ष्णिनौ। धाभ्यामाभ्यां क्रमात् संसृष्टेऽर्थे ष्णिनौ स्याताम्। मुद्गेन संसृष्टः मौद्ग ओदनः चूर्णेन संसृष्टं चूर्णिनोऽपूपः। लवणात् लुक्। लवणेन संसृष्टः लवणः सूपः। लवणशब्दोऽत्र द्रव्यवाची। व्यञ्जनेभ्य उपसिक्ते। धेभ्यो व्यञ्जनवाचिभ्य उपसिक्तेऽर्थे ष्णिकः स्यात्। दध्ना उपसिक्तं दाधिकं शार्करिकम्। व्यञ्जनादिति किम्। उदकेनोपसिक्त ओदनः। ओजः सहोऽम्भसो वर्त्तते। धेभ्य एभ्यो वर्त्ततेऽर्थे ष्णिकः स्यात्। ओजसा वर्त्तते औजसिकः साहसिकः आम्भसिकः। सम्पादिनि। धात् सम्पादिन्यर्थे ष्णिकः स्यात्। सम्पादी शोभायुक्तः कर्णवेष्टकाभ्यां सम्पादि मुखं कार्णवेष्टकिकं मुखं वास्त्रयुगिकं शरीरं विभूषितो भाजत इत्यर्थः। कर्म्मवेष्टाभ्यां यः। धाभ्यामाभ्यां सम्पादिन्यर्थे यः स्यात्। कर्म्मणा सम्पादी कर्म्मण्यः वेष्यः। वेषोऽत्र नेपथ्यवाची। मूल्यात् क्रीते।

मूल्यवाचिनः क्रीतेऽर्थे णिकः स्यात्। वस्त्रेण मूल्येन क्रीतं वास्त्रिकम्। मूल्या-दिति किं हस्तेन क्रीतं युद्धम्। द्यन्तात् व्यान्ताच्च त्यो न भवति अनभिधानात् तेन प्रस्थाभ्यां प्रस्थैर्वा क्रीतमित्यर्थे न स्यात् यत्र तु प्रकृत्यर्थस्य संख्याभेदागमे प्रमाणमस्ति तत्र भवत्येव यथा द्वाभ्यां क्रीतं द्विकं पञ्चकमित्यादि। कथं मुद्गैर्मा-षैर्वा क्रीतं मौद्गिकं माषिकं वसनमिति चेत् सत्यं तत्र भवत्यभिधानात् न ह्येकेन मुद्गेन माषेण वा क्रयणं सम्भवति। शतादेरर्हत्यादिवत्। धात् शतादे-रर्हत्यादिवत् यथाविहितं स्यात् क्रीतार्थे। शतेन क्रीतं शत्यं शतिकं द्विकं पञ्चकं विंशतिकं यावत्कं कंसिकं कार्षापणिकं प्रतिकं वासनं शौर्पं शौर्पिकं द्विकंसम् अध्यर्द्धकंसं द्विसुवर्णं द्विसौवर्णं शतिकीनः द्विपाद्यं द्विशत्यं द्विशतं खारीकं द्विशाणं द्वैशाणं द्विनैष्किकमित्यादि। उत्तरादेः पथो गच्छत्याहृतयोः। धादुत्तरादिपूर्वात् पथिशब्दात् गच्छति आहृते चार्थे णिकः स्यात्। उत्तरपथेन गच्छति आहृतो वा औत्तरपथिकः आहृतेऽर्थे ठे त्यः। वारिपथिकः। उत्तरो वारि कान्तार जङ्गल स्थल शङ्कवः। अजः सप्तैतेषूत्तरादौ कोविदैः परिकीर्त्तिताः। युध्यते। धाद्युध्यतेऽर्थे णिकः स्यात्। खड्गेन युध्यते खाड्गिकः धनुषा युध्यते धानुष्कः उसन्तत्वात् इत्यस्य कः। शक्तियष्टिभ्यां णिकः। धाभ्यामाभ्यां युध्यतेऽर्थे णिकः स्यात्। मूलि शक्त्या युध्यत इत्यादि। परे तु धात्मोदाहृतं किन्तु प्रान्ता-दित्याहुः। उक्तो दीव्यत्यादिः रागाद्रक्ते। धाद्रागवाचिनो रक्तेऽर्थे णः स्यात्। यद्यपि रञ्जधोरनेकार्थत्वं यथा भोजने रक्तः रक्ता गौः तथाप्यत्र शुक्लस्य वर्णान्तरा-पादनं रञ्जेरर्थः। काषायेण रक्तं काषायं माञ्जिष्ठं कौसुम्भम्। कथं काषायौ गर्दभस्य कर्णौ हारिद्रौ कुक्कुटस्य पादौ इति तु उपमानाद्भविष्यति। कषायेण रक्ताविव काषायौ हरिद्रया रक्ताविव हारिद्रौ इत्यर्थः। रागादिति किं प्राणिना प्रोक्तम्। हरिद्रा महारजनीभ्यां ट्णौ नीलात्त्वनित्। धाभ्यामाभ्यां रक्तेऽर्थे ट्णः स्यात् नीलीशब्दात्तु ट्णोऽनित्। हरिद्रया रक्तं हारिद्रं माहारजनं नील्या रक्तं नीलम्। चान्द्रास्तु नीलिशब्दात् अमाहुः। पीतात् को लाचारोचनात्तु णिको वा तु शकलकर्दमात्। धात् पीतात् कः स्यात् लाचा रोचनाभ्यान्तु णिकः शकल-कर्दमाभ्यां णिको वा। पीतेन रक्तं पीतकं लाचया रक्तं लाचिकं रौचनिकं शाकलिकं कार्दमिकं पक्षे णः शाकलः कार्दमः। नक्षत्रेभ्यो युक्ते काले। धेभ्यो नक्षत्रवाचिभ्यो युक्तेऽर्थे वेत्यादित्वात् णः स्यात् यो युक्तः स कालश्चेद्भवति मूले तिष्ये णेत्यादि कृते णे सूर्य्यागस्त्य इत्यादिना य लोपः। एवं पौषी। ननु कालेन

सह सर्व्वदैव नक्षत्राणां योगः कालस्य नित्यत्वात् कथं तिथ्यादिना कालविशेषोऽभिधीयते इति चेत् सत्यं गङ्गायां घोषः प्रतिवसति इत्यादौ यथा गङ्गाशब्देन तत्समीपस्थमुपलक्ष्यते तथाऽत्रापि तिष्यादिभिर्नक्षत्रैः समीपस्थ चन्द्रो यदा लक्ष्यते तदा तेभ्यस्त्य उत्पद्यते तथाच तिष्यसमीपस्थेन चन्द्रमसा युक्त इत्यर्थः । नक्षत्रेभ्य इति किं चन्द्रमसा युक्ता रात्रिः । काल इति किं पुष्येण युक्तश्चन्द्रमाः । अविशेषे लुबऽश्वत्थश्रवणाभ्यान्तु नाम्नि । येभ्यो नक्षत्रवाचिभ्यो विहितस्य ण लुप् स्यात् अश्वत्थश्रवणाभ्यन्तु संज्ञायाम् । रात्र्यादिविशेषो यदि नाभिधीयते । अद्य पुष्यः अद्य मघा । अत्र यावान् नक्षत्रेण कालो लक्ष्यते स कालोऽहोरात्रस्तस्य विशेषाभावात् । अविशेषे इति किं पौषी रात्रिः पौषमहः अश्वत्थेन युक्तो मुहूर्त्तः अश्वत्थो मुहूर्त्तः श्रवणा रात्रिः विशेषार्थोऽयमारम्भः । संज्ञायामिति किम् आश्वत्थो रात्रिः श्रावणमहः । सर्व्वत्र लुपि युक्तवद्भावः । भवादीयः क्षतभान्नक्षत्रवाचकात् युक्ते कालेऽर्थे ईयः स्यात् । तिष्यपुनर्व्वसवीयमहः । अद्य तिष्यपुनर्व्वसवीयं राधानुराधीया रात्रिः अद्य राधानुराधीयम् । परत्वात् लुपं वाधित्वा विशेषाविशेषयोः प्रवर्त्तते । भ इति किं विधुश्च पुष्यश्च ताभ्यां युक्तः कालः परिवृतेऽर्थे । धात् परिवृतेऽर्थे वेत्त्यादित्वात् णः स्यात् यः परिवृतः स रथश्चेद्भवति वस्त्रेण परिवृतो रथः वास्त्रो रथः चार्म्मणो रथः विकारभिन्ने णे न नलोपः । काम्बलो रथः समन्ताद्वेष्टित इत्यर्थः । यस्य सर्व्वावयवो न वेष्टितस्तत्र न भवति यथा छत्रैः परिवृतो रथः । रथ इति किं वस्त्रेण परिवृतः कायः । द्वैपवैयाघ्रात् ट्रः इंस्तु पाण्डुकम्बलात् धाभ्यामाभ्यां ट्रः स्यात् पाण्डुकम्बलात् तु इन् । परिवृतो रथेन द्वैपो रथः वैयाघ्रो रथः पाण्डुकम्बली रथः । हस्त यथा कथा चाभ्यां यणौ दीयते कार्य्ये च । धाभ्यामाभ्यां क्रमात् य णौ स्यातां दीयते कार्य्ये च । हस्तेन दीयते कार्य्यं वा हस्त्यं यथा कथाच शब्दो व्यं समुदायोऽनादरार्थः । यथा कथाच दीयते कार्य्यं वा याथाकथाचम् । छन्दसो यो निर्म्मिते उरसः णश्च । धात् छन्दसो निर्म्मितेऽर्थे यः स्यात् उरसो यः णश्च । छन्दसा इच्छया निर्मितं छन्दस्यं विश्वम् उरसा निर्मितम् उरस्यम् औरसम् । पूरणान्तात् को ग्रन्थं गृह्णाति तस्य लुक् च । पूरणप्रत्ययान्तात् ग्रन्थं गृह्णाति इत्यर्थे कः स्यात् तस्य पूरणस्य लुक् च । ग्रन्थग्रहणयोग्यो रूपादिरेव पूरणप्रत्ययान्तोऽभिधेयः । द्वितीयेन रूपेण ग्रन्थं गृह्णाति द्विको वटुः तृतीयेन रूपेण ग्रन्थं गृह्णाति त्रिकः लुकि पूर्व्वप्रकृतिः ग्रन्थभिन्नग्रहणे तु पञ्चमेन दिनेन शब्दं गृह्णाति द्वितीयेन हस्तेन दण्डं गृह्णाति । एवं चक्षुषा दृश्यते

चाक्षुषः श्रवणेन श्रूयते श्रावणः मनसा ज्ञायते मानसः इत्यविज्ञानार्थ इति धाधिकारः। घात्। घादित्यधिकारो जादित्यतः प्राक्। दृष्टे साम्नि। घात् दृष्टेऽर्थे वेत्त्यादित्वात् णः स्यात्। यत् दृष्टं तत् साम चेद्भवति। वशिष्ठेन दृष्टं साम वाशिष्ठं वैश्वामित्रम्। णो डिद्वा। अत्रार्थे विहितः णो डिद्वा स्यात्। विंशत्या दृष्टं साम वैंशं डिति टेर्लोपः। पक्षे वैंशतं साम। एवं औशनसं साम। यमादिभ्यस्त्वपत्यवत् इति यमेन दृष्टं साम याम्यम् आदित्यम् आग्नेयं कालेयं दैव्यं दैवं प्राजापत्यं पाशुपतम् औत्समित्यादि। वामदेवात् यः। घाद्वामदेवशब्दाद्य यः स्यात् दृष्टे साम्नि। वामदेवेन दृष्टं साम वामदेव्यं साम। तीयात् णीकः। तीयान्तादत्रार्थे णीकः स्यात्। द्वितीयेन दृष्टं साम द्वैतीयीकं तार्त्तीयीकं साम। गोत्रादङ्कवत्। अपत्यान्तेभ्यो येभ्योऽङ्केऽर्थे येत्या विधेया अत्राऽर्थे ते त्याः स्युः दृष्टे सामन्यर्थे। औपगवेन दृष्टं साम औपगवकं साम। ग्लुचुकायनिना दृष्टं साम ग्लौचुकायनकं साम तेदेन दृष्टं साम वैदं साम गार्गं साम दाक्षं साम। नाम्नि मक्षिकादेः कृते। घान्मक्षिकाद्येः कृतेऽर्थे णः स्यात् समुदायेन संज्ञा चेद्भवति। मक्षिकाभिः कृतं माक्षिकं मधु। मक्षिका पुत्तिका गमुत् सरघाः परिकीर्त्तिताः। पौत्तिकं गार्मतं सारघं मधुनः संज्ञा। क्षुद्रा भ्रमरः वरटा वातपात् ट्नः। घेभ्यः एभ्यः कृतेऽर्थे ट्नः स्यात्। क्षुद्राभिः कृतं क्षौद्रं भ्रामरं वाराटं वातपं मधु। कुलालादेर्णकः। घात् कुलालादेः कृतेऽर्थे णकः स्यात् नाम्नि। कुलालेन कृतं कौलालकम्। कुलालो गिरिकः सेना चण्डालः परिहृद्रुधः। कर्मारो वरुडोऽनड्वान् कुम्भकार उरुस्तथा। ब्राह्मणो देवराजश्च श्वपाकः परिकीर्त्तितः। निषादश्च कुलालादौ परिशिष्टप्रयोगतः। कृते ग्रन्थे। घात् कृतेऽर्थे वेत्त्यादित्वात् णः स्यात् यः कृतः स चेद्ग्रन्थो भवति। वररुचिना कृतो ग्रन्थः वाररुचिकः प्राभाकरः। यमादेस्तु याम्यः आग्नेयः प्राजापत्यः कालेयः दैव्यः औत्सः। भवादित्वात् पाणिनिना कृतो ग्रन्थः पाणिनीयः ग्रन्थविशेषणत्वात् मूले पाणिनीयमिति क्लीवम् एवं काशकृत्स्नं कात्स्नमित्यादि। प्रोक्ते। घात् प्रोक्तार्थे वेत्त्यादित्वात् णः स्यात्। प्रकर्षेणोक्तं प्रोक्तं व्याख्यातम् अधीतं वा न कृतो ग्रन्थ इत्यनेनावगतत्वात् याज्ञवल्क्येन प्रोक्तं याज्ञवल्क्यं गौतमं मूले शार्ववर्म्मिकं शर्ववर्म्मणा प्रोक्तमिति वाक्यं काश्यादित्वाण्णिकणिकौ स्त्रियां शार्ववर्म्मिका शार्ववर्म्मिकीति एवं पाणिनीयम्। पणोऽस्यास्ति पणी तस्यापत्यं णो पाणिनः पण्यादित्वात् न नलोपः स भवान् पाणिनिः युवत्वः पूज्यत्वेन न्यासकारस्तु पणोऽस्यास्ति फणादित्वादिनः तस्यापत्यम् अतः णिः

तेन प्रोक्तं गाहादिपाठादीय इत्याह। गौवाऽर्थे णोस्तु। आपिशलिना प्रोक्तम् आपिशलम् एवं काशकृत्स्नेन प्रोक्तं काशकृत्स्नं याज्ञवल्क्यम्। यमादेस्तु याम्यं प्राजापत्यम् आग्नेयं कालेयं पाशुपतं औत्समित्यादि। उखतित्तिरि वरतन्तु खण्डिकाणीयश्छन्दसि। येभ्य एभ्यश्छन्दसि विषये प्रोक्तार्थे णीयः स्यात् कल्प सूत्र छन्दो ब्राह्मणानि तद्विषयाणि इति तद्विषयता। उखेन प्रोक्तं छन्दोऽधीते औखीयः तैत्तिरीयः वारतन्तवीयः खाण्डिकीयः। छन्दसीति किम् उखेन प्रोक्ताः श्लोकाः औखाः। छगलिनो णेयिन्। घाच्छगलिना प्रोक्तेऽर्थे छन्दोविषये णेयिन् स्यात्। कलाप्यन्तेवासिलाक्षिणीऽपवादः। छगलिना प्रोक्तं छन्दोऽधीते वा छागलेयः प्रोक्तात् लुगित्यनेन अध्येतवेदितृणस्य लुक् एवमन्यत्र। शौनकादेर्णिन्। घाच्छौनकादेश्छन्दसि विषये प्रोक्तार्थे णिन् स्यात् शौनकेन प्रोक्तं छन्दोऽधीते शौनकी स्कान्दी। शौनक स्कन्द शालेय शाम्पेय पुरुषायुषः। शापायनी रज्जुकण्ठी देवदर्शेन शाङ्करः। स्तम्ब वाजसनेयौ च नवकारेण संयुतौ। खाड़ायनी रज्जुभारः कषाय इह कीर्त्तिताः। कठशाठौ शौनकादौ षड्भिर्दशमनीषिभिः। कठशाठाविति समुदितस्यात्र ग्रहणम्। कठशाठाभ्यां प्रोक्तं छन्दोऽधीते काठशाठी केवलात् तु लुक् वक्ष्यति यत्र वृद्धास्तेभ्य ईयः अन्येभ्यः णो बाध्यते। कलापिशिष्याकलापिवैशम्पायनशिष्येभ्यः। येभ्यः कलापिशिष्येभ्य कलापिवर्जेभ्यो वैशम्पायनशिष्येभ्यश्छन्दो विषये प्रोक्तेऽर्थे णिन् स्यात्। तत्र कलापिशिष्याश्चत्वारो हरिद्रुश्छगली तथा। उपलस्तुम्बुरुश्चाथ वैशम्पायनशिष्यकाः। पलिङ्गकामलाऽलम्बिकः भाण्ड्रकलापिनः। श्यामायनोऽपि ऋषभोऽरुणिरेते नव स्मृताः। हरिद्रुणा प्रोक्तं छन्दोऽधीते हारिद्रवी एवं पालिङ्गी। ननु कलापी वैशम्पायनशिष्यः तच्छिष्या हरिद्रादयश्चत्वारो वैशम्पायनशिष्या भवन्ति वैशम्पायनशिष्यद्वारेणैव सिद्ध्यति किं पृथग्ग्रहणेनेति चेत् सत्यम् अत्र कलापिशिष्यग्रहणं साक्षात् शिष्यज्ञापकार्थम्। अन्यथा कठशिष्यस्य खाड़ायनस्य वैशम्पायनशिष्यत्वात् शौनकादौ पाठोऽनुचितः न च खाड़ायनशब्दस्तत्र न पठनीय इति वाच्यम् अस्य प्रशिष्येभ्यो णिन् प्रसङ्गात्। अकलापिन इति किं कलापिना प्रोक्तं छन्दोऽधीते कालापः कलाप्यादित्वान्नलोपनिषेधाभावात् न लोप इकारलोपः। कठचरकात् लुक्। घाभ्यामाभ्यां लुक् स्यात्। कठेन प्रोक्तं छन्दोऽधीते कठः चरकः। छन्दसीति किं काठः चारकः श्लोकः। ऋषेः काश्यपकौशिकाणिन् कल्पे च। घाभ्यामाभ्यां कल्पे छन्दसि च वाच्ये प्रोक्तेऽर्थे णिन् स्यात् ईयस्यापवादः। काश्यपेन प्रोक्तं कल्पं छन्दो वाऽधीते काश्यपी कौशिकी। ऋषेरिति किम्

इदानीन्तनकाश्यपगोत्रः काश्यपः तेन प्रोक्तं कल्पं छन्दो वा अधीते काश्यपीयः कौशिकीयः ब्रह्मादीयः। यत्रकर्मानुष्ठेयविधिर्विधायको ग्रन्थः कल्पः। काश्यपेन ऋषिणा प्रोक्तः श्लोकः काश्यपीयः श्लोकः। अपरे इह छन्दो नानुवर्त्तयन्ति। पाराशर्य्यशिलालिभ्यां भिक्षुनटसूत्रयोः। घाभ्यामाभ्यां क्रमात् भिक्षुनटसूत्रयोर्वाच्ययोः प्रोक्तार्थे णिन् स्यात्। पाराशर्य्येण प्रोक्तं भिक्षुसूत्रमधीते पाराशरी भिक्षुः ईयो बाध्यते। शिलालिना प्रोक्तं नटसूत्रमधीते शैलाली नटः। कर्म्मन्दकृशाश्वाभ्यामिन्। घाभ्यामाभ्यां क्रमात् भिक्षुनटसूत्रयोर्वाच्ययोः प्रोक्तेऽर्थे इन् स्यात्। कर्म्मन्देन प्रोक्तं भिक्षुसूत्रमधीते कर्म्मन्दी भिक्षुः कृशाश्वेन प्रोक्तं नटसूत्रमधीते कृशाश्वी नटः भिक्षुनटसूत्रयोरिति किं कार्म्मन्दः कार्शाश्वः श्लोकः। ऋषिप्रोक्तयोर्ब्राह्मणकल्पयोर्णिन् न याज्ञवल्क्यादेः। याज्ञवल्क्यादिभिन्नात् घात् ऋषिप्रोक्तयोर्ब्राह्मणकल्पयोर्णिन् स्यात् उपनिषद्भागातिरिक्तवेदव्याख्यानं ब्राह्मणं शाट्यायनेन प्रोक्तं ब्राह्मणमधीते शाट्यायनी पिङ्गेन प्रोक्तः कल्पः पैङ्गी कल्पः। याज्ञवल्क्यादेस्तु याज्ञवल्कः आश्वत्थः शौनभनः। याज्ञवल्क्यादिभ्यो वेत्यादिविहितणस्य प्रोक्ताधिकारविहितत्वाभावादध्येतृवेदितृविषयता माभूत् पैङ्गीत्यत्र णिनः प्रोक्ताधिकारविहितत्वेऽपि न स्यात् कल्पग्रहणेन तत्र ऋषेः काश्यपकौशिकाणीनः कल्प इति कल्पस्यैव ग्रहणात्। इति घाधिकारः। अत्र चवाय साधुः चवियः यज्ञिय इति मूले लिपिकरप्रमादः। भाष्याभावात्। जादित्यधिकारो ङात् प्राक्। आगते। जादागतेऽर्थे वेत्यादित्वात् णः स्यात्। मूले मथुराया इत्यादि णे आकारलोपः त्रिश्च एवं औघ्न इत्यादि। यमादेस्तु यमादागतः याम्यः प्राजापत्यः पाशुपतः आग्नेयः औत्सः। भवादित्वात् गार्गीयः काशिकः राष्ट्रियः नादेय इत्यादि। इह यन्मुख्यजं तस्यैव ग्रहणं तेनेह न स्यात् शुघ्नादागतः सन् वृक्षमूलादागत इति। आयस्थानेभ्यः णिकोऽशुण्डिकादेः। जेभ्य आयस्थानवाचिभ्यः आगतेऽर्थे णिकः स्यात् न तु शुण्डिकादेः आयः स्वामिग्राह्यो भागः स यस्मिन् उत्पद्यते तदायस्थानम्। शुल्कशालाया आगतः शौल्कशालिकः आतरिकः ब्वनिर्देशः स्वरूपविधेर्निरासार्थः शुण्डिकाया आगतः शौण्डिकः। शुण्डिककृकणस्तीर्थभूमिपर्णटणोपलम्। उपदानं स्थण्डिलञ्च शुण्डिकादौ नवेरिताः। कृकणपर्णयोः पाठः पर्णकृकणाद्भारद्वाज इति ईयस्य बाधनार्थः तीर्थस्य धूमादिपठितस्य णकबाधनार्थः। उदपानस्य उत्सादिपठितस्य ट्नबाधनार्थः अन्येषामायस्थानवाचित्वात् णिकनिषेधार्थः पाठः। विद्यायोनिसम्बन्धाद्वृतः। विद्याकृतो योनिकृतश्च सम्बन्धो यस्य तस्माद्वृतो जात्

आगतेऽर्थे णिकः स्यात्। होतुरागतः हौतृकः मातृकः स्वासृकः उक प्रत्याहारादिकस्य कः। विद्यायोनिसम्बन्धादिति किं सवितुरागतं सावित्रं कार्यम्। अस्मिन्नर्थे णणिकौ स्यातां पितुरागतं पित्र्यं पैतृकं पूर्ववदिकस्य कः। अनृतो णकः! जाद्विद्यायोनिसम्बन्धादनृदन्तात्णकः स्यात् आगतेऽर्थे। उपाध्यायादागतः औपाध्यायकः पैतामहकः मातामहकः मातुलकः। नृहेतुभ्यो मयट्रूप्यौ वा। जेभ्यो नृवाचिभ्यो हेतुवाचिभ्यश्च आगतेऽर्थे मयट् रूप्यश्च स्यात्। देवदत्तादागतं देवदत्तमयं देवदत्तरूप्यं पक्षे देवदत्तं वृद्धपक्षे देवदत्तीयः एवं यज्ञदत्तमयं यज्ञदत्तरूप्यं यज्ञदत्तीयमित्यादि। हेतुस्तावत् समादागतः सममयं समरूप्यं पक्षे समीयं गहादित्वात् ईयः एवं विषममयं विषमरूप्यं विषमीयं ब्वनिर्देशः स्वरूपविधिनिरासार्थः। अपत्यादङ्कवत्। अपत्यान्तेभ्योऽङ्केऽर्थे येभ्यो ये त्या विधेयास्तेभ्य आगतेऽर्थे ते त्याः स्युः। औपगवादागतः औपगवकः वैदं गार्गं दाक्षं इत्यादि। प्रभवति। जात् प्रभवत्यर्थे वेत्त्यादित्वात् णः स्यात्। हिमवतो गङ्गा प्रभवति हैमवती गङ्गा दारदी सिन्धुः। यमादिस्तु याम्यः प्राजापत्यः पाशुपतः आग्नेयः औत्सः इत्यादि। भवादित्वाद् गाङ्गीयः काशिकः राष्ट्रियः नादेयः इत्यादि। बालवायात्स्यो विदूरश्च। जात् बालवायात् प्रभवत्यर्थे ख्यः स्यात् ख्ये विदूरादेशश्च बालविदूरादेशश्च। बालवायात् प्रभवति वैदूर्य्योमणिः परैकदेशिनस्तु वैदूर्य्यं साधयन्ति। धर्म्मादेर्योऽनपेते। जाद्धर्म्मादेरनपेतेऽर्थे यः स्यात्। धर्म्मादनपेतं धर्म्यं धर्म्मार्थन्यायपथ्यानश्चत्वारोऽव प्रकीर्त्तिताः। इति जाधिकारः। ङात्। ङादित्यधिकारः त्याः प्राक्। पात्रादुद्धृते। ङात् पात्रवाचिन उद्धृतेऽर्थे वेत्त्यादित्वात् णः स्यात्। पात्रं भाजनं उद्धृतं भुक्तोच्छिष्टम्। शरावेषूद्धृत ओदनः शारावः कार्परः। पात्रादिति किं पाणावुद्धृतम्। स्थण्डिलाद् व्रतशयितरि। व्रतेन यः शेते स व्रतशयिता तस्मिन्। ङात् स्थाण्डिलात् वेत्त्यादित्वात् णः स्यात्। स्थण्डिले व्रतेन शेते स्थाण्डिलो ब्रह्मचारी व्रतमिति शास्त्रतो नियमः। संस्कृते भक्ष्ये। ङात् संस्कृतेऽर्थे वेत्त्यादित्वात् णः स्यात् यत् संस्कृतं तत् भक्ष्यं चेत् भवति। भ्राष्ट्रे संस्कृताः भ्राष्ट्रा मुद्गाः पैठराः पूपाः। खरविषदमभ्यवहार्य्यं भक्ष्यमिति जयादित्यादिभिरव रूढ़िरुक्ता खरमभ्यवहार्य्यं भ्रष्टमुद्गादिविषदमभ्यवहार्य्यम् ओदनादि। भक्ष्य इति किं पुष्पपटलेन संस्कृतो मणिगुणः। दध्नः णिको वा तूदश्वितः। ङाद्दध्नः संस्कृतेऽर्थे णिकः स्यात् उदश्वितस्तु वा दध्नि संस्कृतं दाधिकं तेन संस्कृतमित्यत्र दधिकृतमेवोत्कर्षाधानम् इह तु द्रव्यान्तरेण लवणादिना

आधारभूतं दधि संस्क्रियत इति भेद: । अन्ये तु दधिसंस्कृतमित्यर्थविवक्षायां णो माभूदित्येतदर्थमित्याहु: । उदश्चिति संस्कृतम् औदश्चित्कं तादिकार: क: । पक्षे औदश्चितम् । क्षीरात् ण्येय: । डात् क्षीरात् संस्कृते भक्ष्येऽर्थे ण्येय: स्यात् । क्षीरे संस्कृता क्षैरेयी यवागू: । शूलोखाभ्यां य: । डाभ्यामाभ्यां संस्कृते भक्ष्येऽर्थे य: स्यात् । शूले संस्कृतं शूल्यम् उखायां संस्कृतम् उख्यम् मांसम् । भवे । डाद्भवेऽर्थे वेत्यादित्वात् ण: स्यात् । स्रुघ्ने भव: स्रौघ्न: माथुर: श्रेयसि भव: श्रायस: । आदाद्यचो णित्ते शिंशपेत्यादिना च आत् एवं दार्षदं दाविकं यमादेस्तु याम्य: प्राजापत्य: पाशुपत: आग्नेय औत्स: भवादित्वात् गार्गीय: काशिक: राष्ट्रिय इत्यादि । अध्यात्मादे: णिक: । डादध्यात्मादे: भवेऽर्थे णिक: स्यात् । अध्यात्मे भव आध्यात्मिक: आध्यात्ममुपजानुपकर्णं स्यादुपनीवि च । अधिभूताधिदैवञ्च स्वग्रामोर्द्धन्दमं तथा । ऊर्द्ध्वदेह: समानादिर्लोकोत्तरदमेव च । स्वाध्यायचतुरर्थे च कादाचिदिह षोडश । अध्यात्मादाविह प्रोक्ता: समानोऽन्ये प्रयोगत: । आध्यात्मादय: षट्कृतवा: आधिभौतिकम् आधिदैविकं सुतगादित्वात् द्वयोर्द्वयोर्वृ: । ऊर्द्ध्वन्दमशब्द ऊर्द्ध्वसमानार्थ: समानादित्वावत् समानदेशिक: समानग्रामिक: लोकोत्तरदात्तावत् ऐहलौकिक: पारलौकिक: द्वयोर्द्वयोर्वृ: । चतुरर्थे भव: चातुरर्थिक: अत्र पाठात् गवाक्षे न लुक् त्यस्य । मूले ऐहिकमिति एव कादाचित्कं समाने भव: सामानिक: अस्याकृतिगणत्वात् शेषे भव: शैषिक: । वाऽन्त: पूर्वात् । डात् कृतवात् अन्त:-शब्दपूर्वात् भवेऽर्थे णिक: स्यात् । अन्तरागारे भव: आन्तरगारिक: आन्तर्देहिक: अन्त:शब्दस्याधिकरणप्रसिद्धत्वात् मत्यर्थे वस: । ग्रामात् पर्य्यनुपूर्वात् । डात् कृतवात् पर्य्यनुपूर्वाद् ग्रामाद्भवेऽर्थे णिक: स्यात् । परिग्रामे भव: पारिग्रामिक: आनुग्रामिक: आभ्यामिति किं मूले ग्रामीण: ग्राम्य इति पारादित्वात् ईन: दिवादित्वात् य: । प्राग्वङ्गदिगादिभ्यां यो देवादेस्तु णित् । डेभ्य: प्राग्वङ्गवाचिभ्यो दिगादिभ्यश्च भवेऽर्थे य: स्यात् णित्तु देवादे: । मूले मूर्द्धन्यमिति मूर्द्धि भवमिति वाक्यम् एवं हृद्यं कण्ठ्यं तालव्यमिति । दिगादित्वावत् दिशि भवं दिश्यम् । दिक्-पक्षस्वगपथ्यानोऽनीकशाखिवह्नीगणा: । वर्गमित्रान्तराकाशवेशकालादयो मुखम् । जघनं मेघयूथाऽन्ता न्यायधार्य्यावुखापि च । मेवोऽनुवंशो वंशोऽथ संज्ञायामुदकं मतम् । अत्र ये:द्वादत्वेभ्य ईय: शेषेभ्य: णो बाध्यते । मुखजघनयो: प्राग्वङ्गवचनत्वेऽपि प्राग्वङ्गभिन्नेऽपि य प्राप्त्यर्थ: पाठ: । उदके भवा: उदक्या रजस्वला नात्र प्रकृतिप्रत्ययार्थेन शब्दवृत्ति: संज्ञायामिति किम् औदका मत्स्या: देवादित्वावत् देवे

## ४३० । व्यटेर्लोपोऽनाराच्छश्वतोऽच्येऽयौ ।

व्यटेः ६।, लोपः १।, अनारात्शश्वतः ६।, अच् ये ७।, अयौ ७।।

**पौनःपुनिकः वाह्यः वाह्लीकः ।**

---

भवं दैव्यं यद्यपि यमादित्वात् दैव्यमिति सिद्ध्यति तथापि भवार्थे दैवमिति वारणार्थम्। दैवः पञ्चजनश्चैव गम्भीरोऽथ वसे परे। परिशीवानुसीवीपसीतोपटणमेव च। पर्य्योशापकालापानुशीतं परिमुखं तथा। परिहन्वनुगङ्गानुमाषानुव्रयमेव हि। अनुवंशं परिखलाऽनुपथानुतिलस्तथा। अनुशूपमथो यज्ञे चतुर्मासं प्रकीर्त्तितम्। अथानन्तरं परे शब्दाः परिसोवादयः सप्तदश वसे दैवादौ पठ्यन्ते। पूर्वमनुवंशशब्दोऽवसे। परिमुखमित्यत्र सर्वतो भावार्थः परिशब्दस्य योगविभागादिह वसग्रहणज्ञापकाद्वा वसः। चतुर्षु मासेषु भवः चातुर्मास्यो यज्ञः मूले नादेयमिति नद्यादित्वात् णेयः। शालीयमिति वृद्धादीयः। शालायां भव इति वाक्यं नागर इति णः। अग्रात् येयेयाः। ढादयशब्दात् य इय ईयः एते स्युर्भवेऽर्थे। मूले अग्रमिति अग्रियम् अग्रीयं परेकदेशिनः तदन्तादपीच्छन्ति तेनात्यग्रमित्यादि ॥ ४२९ ॥

व्यस्य टिः व्यटिः तस्य। आराच्च शश्वत् च आराच्छश्वत् न आराच्छश्वत् अनाराच्छश्वत् तस्य। अच्च यश्च अच्यं तस्मिन्। नास्ति युर्यत्र सोऽयुस्तस्मिन्। अव्ययस्य टेर्लोपः स्यात् प्रकरणबलात् शुभिन्ने तद्धितसंज्ञकेऽचि ये च। न तु आरात् शश्वतोः। पुनःपुनर्भवतीति णिके वृद्धौ अनेन टेर्लोपे पौनःपुनिकः एवं वहिर्भव इति णे कृते टेर्लोपे बाह्यः। एवं णीके वाह्लीकः। एवं सायं प्रातर्भवतीति सायम्प्रातिकः। अयौ किं शंयुः अहंयुः। आरात् शश्वतोस्तु आरात् भवतीति णीये लोपाभावे वक्ष्यमाणेन दान्तत्वनिषेधात् तस्य दकाराभावे आरातीयः एवं शाश्वतिकः अत्र णिकः। यादृग्जातीयस्य प्रतिषेधो विधिरपि तादृग्जातीयस्येति न्यायादेवाव्ययप्राप्तौ पुनरव्ययस्य ग्रहणं ज्ञापयति कस्यचिदव्ययस्य क्वचित् टेर्लोपो न स्यात् इति। तेन सुष्ठु इत्यस्य भावः सौष्ठवं विकारसङ्केति णः। एवं शंयः कंय इत्यादौ टेर्लोपो न स्यात् ॥ ४३० ॥

श्रीरा टी—व्यस्य टिः व्यटिः तस्य आराच्च शश्वच्च तत् न तत् अनाराच्छश्वत् तस्य अच्च यश्च अच्यं तस्मिन् नास्ति युर्यस्मिन् अयुस्तस्मिन् आराच्छश्वद्वर्ज्जितस्य व्यस्य टेर्लोपः स्यात् अचि ते युवर्ज्जिते ये च। पौनःपुनिक इति पुनः पुनर्भव इति

## ४३१। न दं तसौ त्वस्त्यर्थे च।

न ।१।, दं १।, तसौ १॥, तु ।१।, अस्त्यर्थे ७।, च ।१।।

**अयावचि ये च ते पूर्वं दसंज्ञं न स्यात् तान्तसान्तौ तु अस्त्यर्थे च। आरातीयः शाश्वतिकः।**

---

वाक्यम् अध्यात्मादेराक्रतिगणत्वात् ष्णिकः अनेन टिलोपः। अयाविति किम् अहंयुः। बहिषी ष्यणीकौ। डावहिसशब्दात् भवेऽर्थे ष्यणीकौ स्याताम्। मूले वाह्य इति पचे वाहीकः बहिर्भव इति वाक्यम् अनेन ष्ये पूर्वेण टिलोपः॥ ४३०॥

तश्च सश्च तसौ। अस्ति इति अर्थो यस्य सोऽस्त्यर्थः तस्मिन्। प्रत्ययेषु कोर्लुक् व्यचेत्यनेन विभक्तेर्लुकि कृतेऽपि आतिदेशिकं यद्दान्तत्वं तन्निषेधयति यथा त्वच इदं त्वाचं दिशि भवं दिश्यम् इत्यादौ दान्तत्वाभावाद्विरामे न कुङादिः। एवम् अनडुह इदम् आनडुह्यम् अत्र न दङ् मधुलिह्यमित्यादौ लङ्गोदुह्यमित्यत्र न घः। उपानह इदम् औपानहमित्यत्र न धङ्। तसन्तत्वे तु तडिती भावः ताडित्वं तडित्वानित्यादौ चपो जब् न स्यात्। एवं पयसो विकारः पयस्यं घृतादिपायसः परमान्नम्। पयोऽस्त्यस्य पयस्वान् पयस्वी तेजस्वी इत्यादौ सस्य विसर्गो न स्यात्। अत्र सकारस्य दान्तत्वनिषेधज्ञापकात् अदान्ते सोर्विः फे इति न स्यात्। अयौ किं शंयुः अहंयुः अत्र दान्तत्वाद्दान्ते न इति मस्यानुस्वारः। अचे किं त्वङ्मावं दिङ्महम् अनडुन्मावम् इत्यादौ दान्तत्वाद्विरामविहितं कार्य्यं स्यादेव। किञ्च नञा निर्दिष्टमनित्यमिति न्यायात् भवदीयमित्यादौ दान्तत्वाज्जब्। एवं शंयः कंयः इत्यत्रापि मस्यानुस्वारः॥ ४३१॥

श्रीराटी—अचे याविन्यनुवर्त्तते। तश्च सश्च तौ अस्ति अर्थो यस्य तस्मिन् तस्मिन्निर्दिष्टे पूर्वस्येति न्यायात् पूर्वदसाचिपतीत्यत आह पूर्वं दसंज्ञं न स्यादिति अत्र कोर्लुकि लुप्तक्तिमाश्रित्य दत्वे अनेन निषिध्यते आरातीय इति आराद्भव इति वाक्य हदसंज्ञकत्वादीयम् अनेन दत्वनिषेधाय चपोऽवे जब्। काङे च। क्ये ङ्ये च पूर्वं दसंज्ञं न स्यात्। गामिच्छति गव्यति गौरिवाचरति गवते इत्यादौ दान्तत्वात् वाऽवगोर्दान्ते इति न अवादेश इति, एवं तडितमिच्छति तडित्यति न चपोऽवे जद् नमस्यति इत्यत्र न विः। शाश्वतः ष्णिकौ वा णकश्च। ड्रास्वच्छब्दात् ष्णिकौ वा स्यात् ष्णिकस्य णकश्च मूले शाश्वतिक इति शश्वत् त्रिषु कालेषु भवः

विद्यमान इत्यर्थः पचे शाश्वतः न टेर्लोपः न चपोऽवे जवश्च । अहि-वस्त्यऽस्ति कुचि-
इति कलसीभ्यः ण्येयौ ग्रीवाया: णश्च । डेभ्य एभ्यो भवार्थे ण्येयः स्यात् ग्रीवाया:
ण्येयणौ । अहौ भवम् आहेयं वास्तेयम् अस्तीति त्यन्तप्रतिरूपनिपातस्य धनवाचक-
स्यास्तिशब्दस्य ग्रहणम् आस्तेयं कौचेयं दार्त्तेयं कालेयं ग्रैवेयं ग्रैवम् । अङ्गुलि-
जिह्वामूलाभ्यामीयः । डाभ्यामाभ्यां ईयः स्यात् भवेऽर्थे । अङ्गुलौ भवः अङ्गुलीयः
जिह्वामूलीयः कथं मुखतीयः पार्श्वतीयः गहादित्वात् । वर्गान्ताच्च । डाद्वर्गा-
न्ताद्भवेऽर्थे ईयः स्यात् । कवर्गे भवः कवर्गीयः पवर्गीयः वर्गान्तादिति किं वर्ग्यः
दिगादित्वात् यः । अशब्दे यीनौ च । डाद्वर्गान्तात् य ईन ईय एते स्युः भवेऽर्थे ।
कृष्णवर्गे भवः कृष्णवर्गीयः कृष्णवर्ग्यः कृष्णवर्गीणः । शब्दे तु कवर्गीयो वर्णः ।
मध्यानामीय दिनणीया दस्य नुम् च । डान्मध्यादेते स्युः भवेऽर्थे दस्य नुम् च म
इत् । मध्ये भवः मध्यमः मध्यमीयः माध्यन्दिनः मध्यीयः । कर्णललाटाभ्यां
कोऽलङ्कारे । डाभ्यां भवेऽर्थे कः स्यात् भूषणार्थे । कर्णे भवोऽलङ्कारः कर्णिका
ललाटिका यस्यापवादः । अलङ्कार इति किम् कर्ण्यं लालाट्यम् । त्थामाजिना-
न्तात् लुक् । डात् त्थामान्तादजिनान्ताच्च भवे विहितस्य त्यस्य लुक् स्यात् । अश्व-
त्थाम्नि भवः अश्वत्थामा वृकाजिनः सिंहाजिनः । ग्रन्थादनेकाचः णिकः । डात्
ग्रन्थवाचकादनेकाचः णिकः स्यात् भवेऽर्थे । इष्टौ भवः ऐष्टिकः पाशुकः । एका-
चस्तु सुपि भवः सौपः तैङः । बह्वचोऽन्तोदात्ताच्च । डादन्तोदात्ताद् बह्वचो ग्रन्था-
द्भवेऽर्थे णिकः स्यात् । षत्वञ्च णत्वञ्च षत्वणत्वे तयोर्भवः षात्वणत्विकः स स्वरेणा-
न्तोदात्तः । अन्तोदात्तादिति किं संहितायां भवः सांहितः प्रादिसस्वरेणाद्युदात्तः
पूर्वेणैव सिद्धेऽनन्तोदात्ताद् बह्वचः ण एव पृथग्विधानात् । ऋटक् पुरश्चरणाख्या-
तेभ्यः । ऋदन्तात् ऋक्शब्दात् पुरणश्चरणशब्दात् आख्यातशब्दाच्च डात् णिकः
स्यात् भवेऽर्थे । पञ्चसु होतृषु भवः पाञ्चहोतृकः ऋचि भवः आर्चिकः एकाच्त्वात्
णस्यापवादः पौरश्चरणिकः आख्यातिकः अनन्तोदात्तत्वात् णस्यापवादः । ऋषे-
रध्याये । डादृष्यभिधानग्रन्थवाचकात् भवेऽर्थे णिकः स्यादध्याये वाच्ये । ऋषि-
शब्द उपचारात् ग्रन्थविशेषमभिधत्ते वशिष्ठे भवः वाशिष्ठिकः वैश्वामित्रिकः अध्याय
इति किं वाशिष्ठी ऋक् । यज्ञक्रतुवाचिभ्याम् । डाभ्यां यज्ञवाचिभ्यां क्रतुवाचिभ्यां
च णिकः स्यात् भवार्थे । अनन्तोदात्तार्थ आरम्भः । नवयज्ञे भवः नावयज्ञिकः ।
क्रतुभ्यस्तावत् राजसूयिकः । क्रतुभ्य इत्येवं सिद्धे यज्ञग्रहणसोमयागे यथा स्यात्
पाञ्चौदनिकः पुरोडाशपौरोडाशाभ्यामणित् । डाभ्यामाभ्यां ग्रन्थाभ्यां भवेऽर्थे

ष्णिकोऽणित् स्यात्। पुरोडाशः पिष्टकपिण्डः तत्र भवः पुरोडाशिकः। पुरोडाशिकी ऋक् पुरोडाशसंस्कारको मन्त्रः पौरोडाशः तत्र भवः पौरोडाशिकः पौरोडाशिकी पौरोडाशशब्दादन्तोदात्तात् पूर्वेण ष्णिकविधाने पौरडाशिकः पुरोडाशिकीति सिद्धे पौरडाशग्रहणं पुंवद्भावनिषेधाभावार्थमिति। ण ऋगयनादेश्छन्दसो यश्च। ङाहृगयनादेर्ग्रन्थाद्भवेऽर्थे णः स्यात् छन्दसस्तु यणौ ऋगयने भवः आर्गयणम्। ऋगयनविद्यानिगमन्यायं छन्दोभाषोत्पत्ति पुनरुक्तम्। छन्दोविचिति छन्दोविजिति छन्दोमानव्याकरणानि। अङ्गविद्या त्रयीविद्या पदव्याख्यानमेव च। छन्दोव्याख्यानोपनिषच्छिचासंवत्सराद्यपि। उपपाती मुहूर्त्तश्च चैत्रविद्या तथैव च। वास्तुविद्यानिमित्तञ्च निरुक्तं परिकीर्त्तितम्। छन्दसि भवः छन्दस्यः छान्दसश्च। सर्वस्मात् ष्णिको बाध्यते। सरय्वाः णेयलोपः। सरय्वां भवः सारवः अत्र यलोपः। भवे किं सरय्वां जातः सारयवः। जाते। ङादित्येव। तज्जातेऽर्थे वेत्यादित्वात् णः स्यात्। भवजातयोरयं भेदः भवो विद्यमानः जातः उत्पन्नः। स्रुघ्ने जातः स्रौघ्नः माथुरः। यमादेस्तु याम्यः आदित्यः आग्नेयः कालेयः प्राजापत्यः पाशुपतः औत्स इत्यादि। भवादित्वात् गार्गीयः शालीयः नादेयः कावेयकः कालिकः राष्ट्रिय इत्यादि। प्रावृष इकः। प्रावृषि जातः प्रावृषिकः एण्यस्यापवादः। नाम्नि शरदो णकः। ङाच्छरच्छब्दाण्णकः स्यात् जातेऽर्थे त्यान्तेन संज्ञा चेत् गम्यते। शरदि जाताः शारदकाः मुद्गाः दर्भाश्च। अनाम्नि तु शारदिकः यथा प्राप्तं मूलार्द्रावस्करप्रदोषपूर्वाह्णापराह्णात् कः। ङेभ्य एभ्यो जातेऽर्थे कः स्यात्। मूले जातः मूलकः आर्द्रायां जातः आर्द्रकः केऽकस्व इति ह्रस्वः अवस्करकः प्रदोषकः पूर्वाह्णकः अपराह्णकः अनाम्नि तु यथा प्राप्तम्। पथः पन्थश्च। के पथः पन्थादेशश्च पथि जातः पन्थकः। अमावास्यामावस्याभ्यामश्च वा। ङाभ्यामाभ्यां वः अश्च वा स्यात् जातेऽर्थे संज्ञायाम्। अमावास्यायां जातः अमावास्यकः अमावास्यः। पक्षे पलद्यादि णः आमावास्यः एवम् अमावस्यकः अमावास्यः आमावास्य इति। सिन्ध्वपकराभ्यां कः णटौ च। ङाभ्यामाभ्यां जातेऽर्थे कः स्यात् णट्रौ च क्रमात् स्याताम्। सिन्धौ जातः सिन्धुकः णे सैन्धवः कच्छादिपाठात् तत्तत्स्वरयोर्णकस्यापवादः। अपकरे जातः अपकरकः ट्रे आपकरः। एतत् पर्य्यन्तं नास्तीत्येकदेशिनः। तिष्यपुनर्वसुस्वातिहस्ता विशाखाबहुलाभ्यो लुक्। एभ्यो जातार्थस्य त्यस्य लुक् स्यात्। तिष्ये जातः तिष्यः पुनर्वसुः स्वातिः हस्तः विशाखः बहुलाः कृत्तिकाः तासु जातः बहुलः तस्य लुकि स्त्रो त्यस्य लुक्। नक्षत्रेभ्यो वा। नक्षत्रवाचिभ्यो जातार्थत्यस्य लुक् वा स्यात्। अश्विन्यां जातः अश्वी

णे अस्य लुकि स्त्रीत्यस्य लुक्। पक्षे आश्विन: अश्वयुक् आश्वयुज: रौहिण: मृग-शिरा: मार्गशीर्ष: अभिजित् आभिजित: चित्र: चैत्र: श्रवण: श्रावण: रेवत: रैवत:। वत्सशालात्। वत्सशालशब्दाज्जातार्थत्यस्य लुक् वा स्यात्। वत्सशाले जात: वत्स-शाल:। फल्गुनी शतभिषग्भ्यां टडी। आभ्यां जातार्थत्यस्य लुक् वा स्यात् लुकि सति क्रमात् टडी वा स्याताम्। फल्गुन्यां जात: फल्गुन: टडीऽपि फल्गुन: स्त्रियां फल्गुना फल्गुनी च न्ये क्ते टिलादीप् उभयत्वक्तपक्षे फाल्गुनी शतभिषजि जाता शतभिषा डिति टिलोप: लीपे अत आप् डाभावपक्षे शतभिषक् लुगभाव-पक्षे शातभिषजी। श्रविष्ठाषाढ़ादीयणीयौ च वा। आभ्यां जातार्थत्यस्य लुक् वा स्यात् लुकि ईय: णीयश्च वा। श्रविष्ठायां जात: श्रविष्ठ: पक्षे श्राविष्ठीय: लुगभावपक्षे श्राविष्ठ:। आषाढ़ायां जात: आषाढ़: पक्षे आषाढ़ीय: लुगभावपक्षे आषाढ़: अन्ये तु आषाढ़ेति क्रमादि तथाच अद्रौहिणीयोगफलं तदेव भवेदाषाढ़ा सहिते च चन्द्र इति वराह इत्याहु:। स्थानान्तखरशालगोशालात् लुक् न नित्यम् एभ्यो जाता-र्थत्यस्य लुक् नित्यं स्यात्। गोस्थाने जात: गोस्थान: ...स्थान: खरशाले जात: खरशाल: गोशाल: एभ्य: किं स्थाने जात: स्थानीय: माहिषशाल:। स्त्रियां चित्रा-रोहिणीरेवतीभ्य:। आभ्यो जातार्थत्यस्य नित्यं लुक् स्यात् स्त्रियां वाच्यायाम्। चित्रायां जाता चित्रा रोहिणी रेवती कन्या उभयत्र नड़ादेराकृतिगणत्वादीप्। स्त्रियामिति किं चित्रायां जात: चित्र: रौहिण: रैवत:। न मघादे:। मघादे-र्जातार्थत्यस्य लुक् न स्यात्। मघासु जात: माघ: आश्वयेषु जात: आश्वत्थ: प्रौष्ठ-पदासु जात: प्रौष्ठपाद: सुपञ्चालादित्वात् अन्त्यदस्य वि:। क्रतलब्धक्रीतेषु। डादि-रनुवर्त्तते डादेरर्थेषु वेत्यादित्वात् ण: स्यात्। स्रुघ्ने क्रतो लब्ध: क्रीतो वा स्रौघ्न: माथुर:। यमादेस्तु याम्य: आदित्य: आग्नेय: काशेय: प्राजापत्य: पाशुपत: औत्स इत्यादि। भवादित्वात् गार्गीय: नादेय: राष्ट्रिय इत्यादि। कुशले। डात् कुशला-र्थे वेत्यादित्वात् ण:। स्रुघ्ने कुशल: स्रौघ्न: माथुर:। यमादेस्तु याम्य: औत्स इत्यादि भवादित्वात् गार्गीय: नादेय: राष्ट्रिय: इत्यादि। पथ्यादेरक:। डात् पथ्यादेरक: स्यात् कुशलार्थे। पथि कुशल: पथक:। पन्था: पिचिण्डा निचया-श्मद्रादाह्लादानयाकर्षजयै: पिशाच:। पथ्यादयश्चेह दृश्यैव सिद्धा भाष्यादिशास्त्राणि बुधैर्विचार्य्य। त्सरुशकुन्यशनिभ्य: क:। डेभ्य: कुशलार्थे क: स्यात्। त्सरौ कुशल: त्सरुक: शकुनिक: अशनिक:। प्रायभवे। डात् प्रायभवेऽर्थ वेत्यादित्वात् ण: स्यात्। स्रुघ्ने प्रायभव: बाहुल्येन भव: स्रौघ्न: माथुर:। यमादेस्तु याम्य: आदित्य:

आग्नेयः कालेयः प्राजापत्यः पाशुपतः औत्स इत्यादि भवादित्वात् गार्गीयः नादेयः राष्ट्रिय इत्यादि। उपनीव्युपजानूपकर्षणात् ष्णिकः। ङेभ्य एभ्यः प्रायभवेऽर्थे ष्णिकः स्यात्। उपनीविनि प्रायभवः औपनीविकः औपजानुकः औरिकस्य कः औपकर्षिकः। सम्भूते। ङात् सम्भूतेऽर्थे वेत्त्यादित्वात् ष्णः स्यात् अत्र सम्भूतशब्देन सत्तोत्पत्ती नोच्येते भवजाताभ्यामनुगतार्थत्वात् किन्तु आधाराधेययोरन्यूनानतिरिक्तता। स्रुघ्ने सम्भूतः स्रौघ्नः माथुरः। यमादेस्तु याम्यः आदित्यः आग्नेयः कालेयः प्राजापत्यः पाशुपतः औत्स इत्यादि। भवादित्वात् गार्गीयः नादेयः राष्ट्रिय इत्यादि। कोषाद्वस्त्रभेदे ष्णेयः। ङात् सम्भूतेऽर्थे वस्त्रविशेषवाच्ये ष्णेयः स्यात्। कोषे सम्भूतं कौषेयं क्रमिकोषोत्थं वस्त्रम्। वस्त्रभेद इति किं कौषः क्रमिः। कालेभ्यः साधुपुष्प्यत्पच्यमानेषु। ङेभ्यः कालवाचिभ्य एत्वर्थेषु भवादित्वात् यथाविहितं त्याः स्युः न तु सामान्यत्वेः। हेमन्ते साधुः पुष्प्यति पच्यते वा हैमन्तिकः हैमन्तः हैमनः वासन्ती कुन्दलता शारदाः शालयः प्रावृषेण्याः तिला इत्यादि पुष्पविकसने शद्शपचौञ पाके द्वयेऽशना: पच्यमानः। उप्ते च। ङेभ्यः कालवाचिभ्यः उप्तेऽर्थे भवादित्वात् यथाविहितं त्याः स्युः। हेमन्ते उप्यन्ते हैमन्तिकाः हैमन्ता हैमना यवाः प्रावृषेण्यास्तिलाः शारदा मुद्गा इत्यादि पृथग्योग उत्तरार्थः। आश्वयुज्या णकः। ङादाश्वयुजीशब्दादुप्तेऽर्थे णकः स्यात्। आश्वयुज्यामुप्तः आश्वयुजको मासः आश्वयुजी आश्विनी पौर्णमासी। ग्रीष्मवसन्ताभ्यां वा। ङाभ्यामाभ्यामुप्तेऽर्थे णकः स्यात् वा। ग्रीष्मे उप्तः ग्रैष्मकः वासन्तकः। पक्षे ग्रैष्मं वासन्तः। देयमृणे। ङेभ्यः कालवाचिभ्यो देयेऽर्थे भवादित्वात् यथाविहितं त्याः स्युः यद्देयं तदृणं चेद्भवति। मासे देयमृणं मासिकम् आर्द्धमासिकं सांवत्सरिकं सन्ध्यायां देयमृणं सान्ध्यं पलद्यादित्वात् ष्णः। अश्वत्थकलापियववुषादकः। ङेभ्यः एभ्यः कालवाचिभ्यो देयर्णेऽर्थे अकः स्यात् यस्मिन् कालेऽश्वत्थः फलिनः मयूराः कलापिनः यववुषमुत्पद्यते स कालः साहचर्यादश्वत्थादिभिरुच्यते। अश्वत्थे देयमृणम् अश्वत्थकं कलापकं यववुषकम्। ग्रीष्मावरसमाभ्यां णित्। ङाभ्यामाभ्यां देयर्णेऽर्थे अको णित् स्यात्। ग्रीष्मे देयमृणं ग्रैष्मकम् अवरसमायां देयमृणम् आवरसमकम्। अवरसमाशब्देनागामिवत्सर उच्यते। संवत्सराग्रहायणीभ्यां णिकश्च। ङाभ्यामाभ्यां देयर्णेऽर्थे णक ष्णिकौ स्याताम्। संवत्सरे देयमृणं सांवत्सरकं सांवत्सरिकम् आग्रहायणकम् आग्रहायणिकम्। ननु वेति कृते सिद्धे णकाभावपक्षे कालवाचित्वात् ष्णिको भविष्यति किमिह ष्णिकविधानेनेति चेत् सत्यं पलद्यादौ फलपर्वणोः संवत्सरशब्दस्य पाठात्

देयर्णत्वेन काले विवक्षिते णिकं बाधित्वा ण: प्रवर्त्तते तद्वाधनाय इदमिति । व्यवहरति मृगे । कालेभ्य इति प्रवर्त्तते ङेभ्य: कालवाचिभ्यो व्यवहरत्यर्थे भवादित्वात् यथाविहितं त्या: स्यु: यो व्यवहरन् स मृगश्चेद्भवति । निशायां व्यवहरन् मृग: नैशिको नैश: प्रादोषिक: प्रादोष हैमन्तिक: हैमन्त: हैमन: प्रावृषेण्य इत्यादि । मृग इति किं निशायां व्यवहरन्नर: । कालेभ्य इति किं वने व्यवहरति मृग: । णिको नियुक्ते । ङेर्डान्नियुक्तेऽर्थे णिक: स्यात् । द्वारे नियुक्तो दौवारिक: धर्म्मे नियुक्त: धार्म्मिक: । अगारान्तादिक: । ङादगारान्तान्नियुक्तेऽर्थे इक: स्यात् । देवागारे नियुक्त: देवागारिक: । निषिद्धदेशकालाभ्यामधीते णिक: । ङाभ्यां देशकालाभ्यामधीतेऽर्थे णिक: स्यात् । चतुष्पथेऽधीते चातुष्पथिक: चातुर्दशिक: । कठिनान्तप्रस्थानसंस्थानेभ्यो व्यवहरति । ङेभ्य एभ्यो व्यवहरत्यर्थे णिक: स्यात् । वंशकठिने व्यवहरति वांशकठिनिक: प्रास्थानिक:, सांस्थानिक: । वसतिनिकटात् षिकस्त्वावसथात् । ङात् निकटशब्दात् वसत्यर्थे णिक: स्यात् आवसथात्तु षिक: । निकटे वसति नैकटिक: आवसथिकी आवसथिकभार्य्य: पुंवद्भाव: । पृथिवीसर्वभूमिभ्यां ट्णौ विदिते । ङाभ्यामाभ्यामेतौ क्रमात् स्याताम् । पृथिव्यां विदित: पार्थिव: सर्वभूमौ विदित: सार्वभौम: सुभगादित्वात् द्वयोर्व्रि: । लोकसर्वलोकाभ्यां णिक: प्रसिद्धे च । प्रसिद्धे विदिते चार्थे णिक: स्यात् । लोके । लोके प्रसिद्धो विदितो वा लौकिक: सार्वलौकिक: दयोर्द्वयोर्व्रि: । कालेभ्यो दीयते कार्य्ये वा भववत् । ङेभ्य: कालवाचिभ्यो दीयते कार्य्ये वाऽर्थे भववत् त्या: स्यु: । मासे दीयते कार्य्यं वा मासिकम् आर्द्धमासिकं सांवत्सरिकं प्रावृषेण्यं हैमन्तं हैमनमित्यादि । व्युष्टादे: ण: । ङाद्व्युष्टादेर्दीयते कार्य्ये वाऽर्थे ण: स्यात् व्युष्टे दीयते कार्य्यं वा वैयुष्टम् । व्युष्टसङ्घातनित्योपवासतीर्थप्रवेशनं प्रवालनिष्क्रमौ पीलमूलाग्निपदमित्यपि । य: साधौ । ङात् साधावर्थे य: स्यात् । सामनि साधु: निपुणो योग्यो वा सामन्य: । एवं ब्रह्मण्य कर्म्मण्य: । प्रतिजनादेर्णीन: । ङात् प्रतिजनादेर्णीन: स्यात् साधावर्थे । प्रतिजनं साधु: प्रतिजनीन: । प्रति पञ्च महद्विश्वसर्वादिजनसंयुगौ । परपूर्वकुलामुष्य कुलं सत्यपरायुगम् । इदं युगमिह प्रोक्ता दश एकाधिका बुधै: । जनं जनं प्रति प्रतिजनं वीप्सायां वस: प्रतिसंयुगीनमित्यादि । अमुष्य कुलमिति न नीतान्तकुलस्य । कुले न ष्य लुक् । अमुष्य कुलीन: । भक्तात्स: परिषदो ण्यश्च । ङात् भक्तशब्दात् साधावर्थे ण: स्यात् परिषदस्तु ण्यश्च । भक्ते साधु: भाक्त: पारिषद: पारिषद्य: । अपरे तु परिषच्छब्दात् णं नेच्छन्ति । कथादे: णिक: । ङात् कथादे:

## ४३२। अह्नोऽह्नोऽनीने।

अह्नः ६।, अह्नः १।, अनीने ७।

आह्निकम्। ईने तु द्व्यह्नीनः।

सुपाञ्चालकः अर्द्धपाञ्चालकः।

दौवारिकः सौवरं सौवं सौवस्तिकः सौत्रादुम्हदवं वैयल्कसं श्वौवं श्वौवनं स्फैयकृतं सौवं सौवाध्यायिकं सौवग्रामिकम्। नैयग्रोधम्। एकेति किं न्यग्रोधमूलिकम्। श्वौवापदं श्वापदं, नैयङ्कवम् नाङ्कवम्। श्वागणिकम्।

---

साधावर्थे ष्णिकः स्यात्। कथायां साधुः काथिकः। कथा वितण्डाजनवादबाधी गुणी गणी वेणु गुडी निवासः। सजुपवासौ वसुधा च वृत्तिः प्रवासमांसौदनसंग्रहाश्च। विक्रयेक्षु कृष्णविदायुवेदौ निसुरा तथा। कुल्माषपूपसंग्रामसङ्गताः पञ्चविंशतिः। पथ्यादेः ष्णेयः। ङात् पथ्यादेः साधावर्थे ष्णेयः स्यात्। पथि साधुः पाथेयः स्वापतेयं धनम्। पथ्याश्च स्वपतिश्चैवातिथिर्वसतिरित्यपि। सतीर्थो ह्यो वासिनि। ङात् वासिन्यर्थे सतीर्थशब्दात् यः स्यात्। सती वासी सतीर्थ्यः एक गुरुसमीपे यस्य वासोऽस्ति स इत्यर्थः। सोदरसमानोदराच्छयितरि। ङाभ्यामाभ्यां शयितर्य्यर्थे यः स्यात्। सोदरे शयिता सोदर्य्यः समानोदर्य्यः। सगर्भसयूथाभ्यामनुजसहचारिणोः। ङाभ्यामाभ्यां क्रमादनयोरर्थयोर्यः स्यात्। समानो गर्भः सगर्भः तत्रानूजः सगर्भ्यः समानं यूथं सयूथं तत्र सहचारी सयूथ्यः। अन्ये तु छान्दसमित्यप्याहुः॥ ४३१॥

न ईनोऽनीनः तस्मिन्। अहन्शब्दस्य अह्नः स्यादचि ये च तद्धिते न तु ईने। त्वन्तसम्बन्धत्वादत्यर्थे इत्यस्य नानुवृत्तिः। अह्नि भवम् आह्निकम् अत ष्णिके अह्नादेशे वृद्धिः। ईने तु द्वयोरह्नोर्भवतीति तद्धितार्थविषये द्विगौ ईने कृते अह्नादेशनिषेधात् न्वीर्लोपौ ताविति नलोपे ययोरित्यकारलोपे द्व्यह्नीनः। सुपञ्चालादीनुदाहरति। सुपञ्चाले भवः सुपाञ्चालकः अर्द्धपञ्चाले भवः अर्द्धपाञ्चालकः इत्युभयत्र काणि कृते सुपञ्चालादित्वात् परपदस्य वृद्धिः। सुपञ्चालादिस्तु। सुपञ्चाल अर्द्धपञ्चाल सर्वपञ्चाल पूर्वपञ्चाल दक्षिणपञ्चाल उत्तरपञ्चाल गुरु लघु संहत परार्थ

पितृपितामह वा.,पित्त वातश्लेष्म एकपुरुष पूर्वपुरुष पूर्वहायन अपरहायन पूर्वेषु कामशम पूर्वकृष्ण मृत्तिका पूर्वपाटलिपुत्रक पूर्वकान्यकुब्जक द्विसंवत्सर त्रिसप्तति द्विवर्ष द्विकुड़व द्विनिष्क त्रिसुवर्ण प्रोष्ठपद भाद्रपद इत्यादि। द्विकुलिजी वा द्विकुलिजिकं द्वैकौलिजिकम्। द्वारादीनुदाहरति द्वारे नियुक्तः दौवारिकः अत्र णिके द्वारस्वरेत्यादिना वस्य उमि तस्य वृद्धिः। द्वार इति अदन्तस्य ग्रहणात् रेफान्तस्य न स्यात् तेन द्वारि नियुक्तः द्वारिकः अत्र उम् न स्यात्। एवं स्वरे भवं सौवरम् अत्र णः। स्वः स्वर्गे भवं सौवम् अत्र णे व्यटेरिति टेर्लोपः। दुर्गसिंहस्तु स्वर्गमनमाह इत्यत्रापि सौवर्गमनिकमित्याह। स्वस्तीत्याह सौवस्तिकः णिके टेर्लोपः। स्वादुमृदोरपत्यं सौवादुम्रदवः अत्र शेषत्वात् णः। एवं स्वादुमृदुना कृतं सौवादुम्रदवम् इति वा। विगतोऽर्कः व्यर्कः तं स्यतीति व्यल्कसः कपिलिकादित्वात् रेफस्य लत्वम्। वाल्कसी भवं वैयल्कसम् अत्र णः आयचः स्थाने जातत्वादेव इमि सिद्धे अस्य द्वारादौ पाठोऽव्युत्पत्तिपक्षे इम्प्राप्त्यर्थः। श्वः परदिने भवं शौवम् अत्र णे टेर्लोपः। शौवस्तिकत्वं विभवा न येषां व्रजन्ति तेषां दयसे न कस्मादिति भट्टौ। शौवस्तिकत्वमिति श्वः परदिनः तेकते गच्छतीति श्वस्तिकः कृगॄह्वा प्रीति कः। श्वस्तिकः एव शौवस्तिकः स्वार्थे णे उमि वृद्धिः। तस्य भावः शौवस्तिकत्वम्। शुनि भवं शौवनं अत्र णे कृते श्वयुवमघोनामित्यत्र अते इत्युक्तेर्वस्य उत्वाभावे मनवञ्जोनिति न लोप निषेधः। स्फ्यकृतस्येदं स्फैयकृतं विकारसङ्घेति णः। स्वस्येदं सौवं विकारसङ्घेति णः स्वश्चासावध्यायश्चेति स्वाध्यायः, तेन जीवति तत्र भवो वा सौवाध्यायिकः अत्र णिकः। स्वग्रामे भवं सौवग्रामिकम् अत्र णिकः स्वग्रहणेनेवेष्टसिद्धौ स्वाध्यायस्वग्रामयोर्ग्रहणम् अन्यशब्दान्तरस्य निषेधार्थम्। तेन स्वशब्दस्येदं स्वाशब्दम् अत्र णः स्वोदरं पूरयति स्वौदरिकः अत्र णिकः इत्यादौ उम् न स्यात्। न्यग्रोधस्येदं नैयग्रोधम् अत्र विकारसङ्घेति णः। एक इति किं न्यग्रोधमूले भवं न्यग्रोधमूलिकम्। श्वापदस्येदं शौवापदं श्वापदम्। न्यङ्कोरिदं नैयङ्कवं न्याङ्कवम् उभयत्र विकारसङ्घेति णे पक्षे उमि इमि च कृते वृद्धिः। नत्विति श्वादेरिति शुनां गणः श्वगणः श्वगणस्येदं श्वागणिकम् अत्र णिके उम्निषेधः इकारादाविति किं श्वदंष्ट्रायां भवः शौवादंष्ट्री मणिः अत्राकारस्य दीर्घो मनीषादित्वात्। अन्यान्यप्युदाहरामि। कर्म्मणः कर्त्तरि। पन्थानं सततं गच्छति पथिकः अत्राणित् कण्। परिपार्श्वे वर्त्तते पारिपार्श्विकः क्रियाविशेषणस्य कर्म्मत्वम् अत्र णिके वृद्धिः बदराणि चिनोति बादरिकः। समाजं समवैति सामाजिकः शब्दं करोति शाब्दिकः

वैयाकरणे रूढ़ः। मृगादेर्हन्तीत्यर्थे णिकः। मृगं हन्ति मार्गिकः एवं पाचिकः मात्सिकः शाकुनिकः ऐणिकः शौकरिकः मायूरिकः। द्विगुणं गृह्णाति द्वैगुणिकः एवं त्रैगुणिकः वृधुषी धान्यादेर्वृद्धिः तां गृह्णाति वार्धुषिकः। धर्म्मं चरतीति धार्म्मिकः ललाटं पश्यति लालाटिकः लालाटिकः प्रभोर्भालदर्शी कार्य्याचमश्च य इत्यमरः। कुक्कुटी दाम्भिकचेष्टा तामाचरति कौक्कुटिकः। योजनादेस्तं गच्छतीत्यर्थे णिकः। योजनं गच्छतीति यौजनिकः एवं पारदारिकः गौरुतल्पिकः सुस्नातान् पृच्छति सौस्नातिकः दिष्टमाह दैष्टिकः अपूपम् करोति आपूपिकः कन्दुं करोति कान्दविकः अर्चैर्दीव्यति आर्चिकः अत्र दिवः करणस्य कर्म्मत्वम् एषु णिकः। सर्वपथं व्याप्नोति सर्वपथीना सेना एवं सर्वाङ्गीनः संयोगः पादाग्रं प्रपदम् आप्रपदं व्याप्नोति आप्रपदीनं वस्त्रम् एवं सर्वपत्रीणं सर्वकर्मीणः सर्वकर्म्मदक्षः सर्वान्नं भुङ्क्ते सर्वान्नीनो भिक्षुः। दण्डादेस्तदर्हेऽणित् ण्यः। दण्डमर्हति दण्ड्यः। दण्डादिस्तु। दण्ड बध धन मुषल मधुपर्क कशा अर्घ मेधा मेष उदक वंश युग शुभम्। १३। दक्षिणादेरणित् णीयश्च। दक्षिणामर्हति दक्षिण्यः दक्षणीयः। दक्षिणादिस्तु दक्षिणा कड़ङ्गरः स्थाली विल इत्यादि। अत्यन्तं भृशं गच्छतीति अत्यन्तीनः गामनुचरतीति अनुगवीनो गोपः अमित्रस्य अभिमुखम् अभ्यमित्रं तद्ग-च्छतीति अभ्यमित्रः अभ्यमित्रीयः अभ्यमित्रीणः एषु अणित्त्वान्न वृद्धिः। युगरथ-प्रासङ्गेभ्यस्तद्वहतीत्यर्थेऽणित् ण्यः युगं वहति युग्यः एवं रथ्यः प्रासङ्ग्यः। करणात् कर्म्मणि। नावा तार्य्यं नाव्यं जलं विषेण बध्यः विष्यः एवं मुषल्यः तुलया सम्मितं तुल्यम् एषु अणित् ण्यः चक्षुषा गृह्यं चाक्षुषं रूपम्। एवं श्रावणः शब्दः कुसुम्भेन रक्तं कौसुम्भम् एवं हारिद्रम् एषु णः दध्ना संसृष्टं दाधिकम् एवं मारीचिकम् उभयत्र णिकः। शतेन क्रीतः शातिकः अत्राणित् णिकः। द्विशौ-र्पिकः सुपञ्चालादित्वादन्त्यपदवृद्धिः। एवं कार्षापणिकः प्रास्थिकः उभयत्र णिकः। सप्तभिः पदैः प्राप्यं साप्तपदीनं सख्यम् अत्र णीनः। करणात् कर्त्तरि। तेन चरतीत्यर्थे पर्पादेरणित् णिकः। पर्पेण चरति पार्पिकः। पर्पादिस्तु। पर्प अश्वरथ जाल व्यास व्याल आकर्ष इत्यादि। योऽनियतवृत्तिः सन् शरीरमुपास्य जीवति स व्रातः तस्य कर्म्म व्रातम् इदमर्थे णः। तेन जीवति व्रातीनः अत्र णीनः। अश्वमेधेन ब्रह्महत्यां तरति आश्वमेधिकी ब्रह्महत्यायाः काण्डप्लवेन नदीं तरति काण्डप्लविको नद्याः उभयत्र सम्बन्धे षष्ठी शकटेन तरति शाकटिकः एवं दाण्डिकः शार्ङ्गवेधिकः घाण्टिकः एषु णिकः एवं गोपुच्छिकः प्लाविकः उभयत्राणित्

ष्णिकः। चन्दनेन शोभते चान्दनिकम् एवं कार्यवेष्टनिकम् उभयत्र ष्णिकः भूम्या जीवति भूमिकः अत्र अणित् ष्णिकः एवं ताम्बूलिकः तैलिकः तेन जीवतीत्यर्थे वेतनादेः ष्णिकः। वेतनेन जीवति वैतनिकः। वेतनादिस्तु वेतन वाह मृदङ्ग पणव मुरज जाल वेश प्रेषण उपास्ति मुख शय्या शक्ति उपनिषद् स्थिग पट उपस्थान धनुर्दण्ड वसु क्रम विक्रम क्रय विक्रय इत्यादि। अधिकरणात् कर्म्मणि। उदूखले क्षुण्णाः औदूखलास्तण्डुलाः। दृषदि पिष्टाः दार्षदाः शक्तवः। अधिकरणात् कर्त्तरि। कर्म्मणि साधुः कर्म्मण्यः एवं पित्र्यः वने भवो वन्यः। कण्ठे भवः कण्ठ्यः एवं तालव्यः मूर्द्धन्यः दन्त्यः ओष्ठ्यः एभ्योऽणित् ण्यः। पन्थानं वर्जयित्वा इत्यर्थे परिपन्थं मनीषादित्वान्निपात्यम्। परिपन्थे तिष्ठतीति पारिपन्थिकश्चौरः परलोके भवं पारलौकिकम् एवं ऐहलौकिकम्। निकटे वसति नैकटिकः एवं वार्क्षमूलिकः आवसथिकः एषु ष्णिकः। अद्य श्वो वा प्रसूते अद्यश्वीना गौः अद्य श्वो वा भवति अद्यश्वीनं मरणम् उभयत्र ईने व्यटेर्लोपः अध्वनि कुशलः अध्वनीनः उभयत्राणित्त्वान्न वृद्धिः। कानीनाद्या निपात्यन्ते। कन्याया अपत्यं कानीनः ह्यो गोदोहाद्भवति हैयङ्गवीनं घृतं हैयङ्गवमित्येके। परांश्च परतरांश्च अनुभवतीति परम्परीणः परांश्च अपरांश्च अनुभवतीति परावरीणः पुत्रश्च पौत्रश्च अनुभवति पुत्रपौत्रीणः समां समां प्रसूते समांसमीना गौः। आशितास्तृप्ता गावो यत्र तत् आशितं गवीनं वनं देविकायां भवः दाविकः सरय्वां भवः सारवः गोदानपर्य्यन्तं कर्म्म करोति आगवीनः कर्म्मकरः। परलोके कर्म्मफलमस्तीत्याह आस्तिकः। तन्नास्तीत्याह नास्तिकः इत्यादि ॥ ४३२ ॥

श्रीरा टी—न ईनः अनीनः तस्मिन्। तथाचाहन् इत्यस्य ईनभिन्ने ताणि युभिन्ने त्य ये च अह्न इत्यादेशः स्यात्। आह्निकमिति अह्नि भवतीति वाक्यम् कालवाचित्वात् ष्णिकेऽनेनाह्नादेशः। द्व्यहीन इति द्वे अहनी अधीष्टो भृतो भावी वा इत्यर्थे वा द्व्यह्नः संवत्सरादित्वादीनः सान्तविधेरनित्यत्वात् यत्याभावेन सर्वैकदेशेत्यादिना नाह्नादेशः। अथवा अत्र ईनवर्जनज्ञापकात् यत्ये कृतेऽपि नाह्नादेशः। सुपञ्चालादेरन्त्यस्य दस्य त्रिं दर्शयति सुपाञ्चालक इति शोभनाश्च ते पाञ्चालाश्चेति सुपञ्चालास्तत्र भव इत्यर्थे व्वविषयादवृद्धाच्चेति णकः। पञ्चालानाम् अर्द्धम् अर्द्धपञ्चालास्तत्र भवः अर्द्धपाञ्चालकः पूर्व्ववण्णकः। पञ्चालादिः प्रागुक्तः। द्वारस्वरेत्यादिसूत्रस्योदाहरणमाह दौवारिकः इत्यादि। द्वारे नियुक्त इत्यर्थे ष्णिके वस्य उम् पश्चाद त्रिः। स्व रमधिकृत्य कृतो ग्रन्थः सौवरः स्वः स्वर्गे भवं

## ४३३। विकारसङ्घभावेदं हितस्वार्थादौ।

विकार स्वार्थादौ ७।

**एष्वर्थेषु च ते त्याः स्युः। हेम्नो विकारः हैमः आप्यः आग्नेयः, भिक्षाणां समूहः भैक्षम् आङ्गं गाणिक्यं राजकं, गुरोर्भावः गौरवं यौवनं साम्यं वैरूप्यं राज्यं सौहार्दं, विष्णोरिदं वैष्णवं त्वदीयं माधवनं श्रौवनम्।**

---

सौवं व्यटेरिति णो टेर्लोपः स्वस्ति वक्ष्यति सौवस्तिकः स्वस्ति यथा स्यात्तथा वक्ति सौवस्तिकः प्रभूतादित्वात् णिक इत्यन्ये। स्वादुम्रदुनि संस्कृतं सौवादुम्रदवं भक्तं संस्कृते भक्ष्येऽर्थे वेत्यादित्वात् णः। व्यल्कसोऽव्युत्पन्नस्तत्र भवः वैयल्कसः। अन्ये द्वारादौ न पठन्ति तेषां मते विगतोऽर्को व्यर्कस्तं स्यति व्यर्कसः कपिलिकादित्वात् रस्य लः तत्र भवः वैयल्कस इति आद्यचः स्थानजातत्वात् यस्य इम् पश्चाद्त्रिः। श्वो भवं शौवस्तिकम् अत्र शौवमिति पाठो लिपिकरप्रमादः। कालवाचित्वात् णिकः तस्य तम्। तथाच शौवस्तिकत्वं विभवा न येषां व्रजन्ति तेषां दयसे न कस्मादिति भट्टिः। शुनि भवं शौवनं मांसं अविकारत्वे नलोपाभावः। स्फ्यकृते भवं स्फैयकृतं स्फ्यः खादिरः खड्गस्तेन कृतमिति वीसः स्वे धने भवं सौवं स्वपरदेवराजजनस्येत्यत्रात्मार्थस्वशब्दस्य ग्रहणात् इह स्वस्य धनार्थत्वात् वामनधर्म्मदासौ तु आत्मार्थस्वशब्दस्यापि इदमर्थे सौवमित्यप्याहतुः। स्वाध्याये भवं सौवाध्यायिकं वेदाध्ययनम्। स्वग्रामे भवं सौवग्रामिकम्। आभ्यामध्यात्मादित्वात् णिकः। यद्यपि स्वाध्यायस्वग्रामशब्दयोः स्वशब्दस्य ग्रहणेनैव सिद्ध्यति तथापि अन्यवादिस्थितस्वशब्दस्य न स्यादित्येतदर्थं पृथगनयोर्ग्रहणम्। दुर्गटीकायान्तु स्वग्राम इत्यत्र स्वर्गमनमित्युक्त्वा स्वर्गमनं वक्तीत्यर्थे सौवर्गमनिक इति वर्त्तते। न्यग्रोधे जातः नैयग्रोधश्चमसः। न्यग्रोधमूलिकमिति न्यग्रोधमूलेन संसृष्टम् इत्यर्थे णिकः। शुन इव पदमस्य श्वापदः शुनोऽदन्तादावितिर्घः तत्र भवं शौवापदं पक्षे श्वापदमिति पलद्यादेराकृतिगणत्वात् णः अथवा क्वचिदपवादविषये उत्सर्गोऽपि निविशते इति न्यायात् णः। न्यङ्कौ भवं नैयङ्कवं न्याङ्कवं श्वागणिकमिति श्वगणेन चरति श्वगणानन्वेति षिकणिकौ णिकपक्षे इकारादौ णित्त्वे न वस्य उम्। इकारादिभिन्ने तु श्वदंष्ट्रायां भवः शौवादंष्ट्र इत्यादौ स्यादेव। अत्रापि शुनोऽदन्तादावितिर्घः। अत्र

त्यादि: अपूर्वस्यैव इकारादौ ते वस्य उम् निषेधात् डारादीनां सर्वेषां णित्वे सामान्य-यवयोरिमुमौ स्यातामित्यर्थ: अतएव न्यग्रोधस्यैकेति विशेषणस्य सार्थकत्वमिति। तथा इश्वदि पिष्टा: चुलाश्च दार्शदा:माषा इत्यादि ॥ ४३२ ॥

स्वस्य आत्मनोऽर्थोऽभिधेय: स्वार्थ:। स्वार्थ आदिर्यस्य स स्वार्थादि: विकारश्च सङ्घश्च भावश्च इदम् च हितञ्च स्वार्थादिश्चेति तस्मिन्। अवस्थितपदार्थस्य प्रकारान्तरापत्तिर्विकार: सङ्घ: समूह: भावोऽसाधारणधर्म्म:। यथा घटस्य घटत्वम् इदमिति सम्बन्धोपलक्षणम्। हितमिष्टसाधनम्। स्वार्थोऽर्थानतिरिक्त:। ते एकादश प्रत्यया एष्वर्थेषु च स्यु:। अत्रापि अस्या: प्रकृते: अस्मिन्नर्थे अयं प्रत्यय: सेत् अणिदा स्यात् एतत् सर्वं प्रयोगानुसारेणैव बोध्यम्। यथा हेम्नो विकार: हैम: अनेन णे वृद्धौ न्वोर्लोपौताविति न लोपे ययोरित्यकारलोप:। एवम् अपाम् आप्य: अत ण्य: एवम् अग्ने: आग्नेय: अत णेय:। भिक्षाणां समूह: भैक्षम् अत ण: एवम् अङ्गाम् आङ्गम् अत णे अङ्गो अङ्ग इत्याङ्गादेश:। एवं गणिकानां गाणिक्यम् अत ण्य: एवं राज्ञां राजकम् अत कण् गुरोर्भाव: गौरवम् अत ण: एवं यूनां यौवनम् अत्र णे श्वयुवमघोनामित्यत्र अते इत्युक्तेर्वकारस्य उत्वं न स्यात्। अविकारणे न लोपाभाव: एवं समस्य साम्यं विरूपस्य वैरूप्यम् उभयत्र ण्य:। एवं राज्ञ: राज्यम् अत ण्य न्वोर्लोपौताविति नलोपे ययोरित्यकारलोप:। एवं सुभगस्य सौभाग्यम् अत ण्य: सुहृद: सौहार्दम् अत ण:। उभयत्र सुभगादित्वात् उभयपदस्य वृद्धि:। सुभगादिस्तु। सुभग दुर्भग अनुहोड़ अनुसंवत्सर पुष्करसद अन्तर हत सूत नड उदक स्रुघ्न अगार वेणु बध्योग कुरुकत कुरुपञ्चाल इहलोक परलोक अधिदेव अधिभूत प्रयोग असिहत सर्वलोक सर्वपुरुष शतकुम्भ परस्त्री अनुशत सर्वभूमि अभिगम चतुर्विद्या सुहृद शक्तसिन्धु शुभ्र नगर अग्नि मरुत राजपुरुष अस्य हेति अस्यहत्य इत्यादि। ३३। विष्णोरिदं वैष्णवम् अत णे न्वोर्लोपौताविति उकारस्य ओकारे अव्। एवं तव त्वदीयम् इत्यादौ, अणित् णीय:। एवं मघोन: माघवनं पक्षे तुङि माघवतं शुन: शौवनम् उभयत णे श्वयुवमघोनामित्यत्र अते इत्युक्तेर्वकारस्य न उकार: अविकारणे न लोपनिषेध: ॥ ४३३ ॥

श्रीरा टी—विकारश्च सङ्घश्च भावश्च इदञ्च हितञ्च स्वार्थश्च ते आदयो यस्य स तस्मिन्। आदिशब्द: प्रत्येकमभिसम्बध्यते द्वन्द्वोत्तरश्रुतत्वात्। प्रकृतेरवस्थान्तरं विकार:। सङ्घ: समूह:। शब्दस्य प्रवृत्तिनिमित्तं भाव:। इदमिति सम्बन्ध-

मार्त्तीपलक्षणं हितमिष्टसाधनं स्वार्थः प्रकृत्यर्थानतिरेकः ते ष्याः स्युरिति ष्णि ष्णेय ष्णत्र ष्णायन ष्णीय ष्णिक ष्ण ष्णीक कण् ष्णीन इय एते सेतोऽनितश्चेति अभिधानात् ज्ञातव्या इत्यर्थः। ष्याः। ष्या इत्यधिकारः प्रग्राः प्राक्। विकारे। ष्यन्ताद्विकारे वेच्यादित्वात् ष्णः स्यात् मृत्तिकाया विकारः मार्त्तिकः आश्मः प्रासादः। नञा निर्दिष्टस्यानित्यत्वात् आश्मन इति कश्चित् तथाच यश्चापमाश्मनप्रख्यं सेषुं धत्तेऽन्यदुर्वहमिति भट्टिः। अस्मन्मते तु इदमर्थे भविष्यति। प्राण्योषधिवृक्षेभ्योऽवयवे च ष्यन्तेभ्य एभ्यो विकारेऽवयवे च वेच्यादित्वात् ष्णः स्यात् प्राणिभ्यः ष्णं वक्ष्यामि तत्रैवोदाहार्य्यम् इह प्राणिग्रहणन्तु अतःपरे ये ष्या वक्तव्यास्ते. प्राण्योषधिवृक्षेभ्यो विकारावयवयोः अन्येभ्यो विकारमात्रे भवन्तीति ज्ञापनार्थम् ओषधिभ्यस्तावत्। मूर्वाया विकारोऽवयवो वा मौर्वः एवं दौर्वः वृक्षेभ्यस्तावत् पलाशस्य विकारोऽवयवो वा पालाशः शिंशपाया विकारोऽवयवो वा शांशपः। इकारः स्यात्। उप्राणिरजतादिभ्यः ष्णः। ष्यन्तात् उवर्णान्तात् प्राणिवाचकाद्रजतादेश्च ष्णः स्यात् विकारावयवयोः। देवदारोर्विकारोऽवयवो वा दैवदारवः प्रैयङ्गवः कपोतस्य विकारोऽवयवो वा कापोतः मायूरः शुनो विकारोऽवयवो वा शौवं मांसं रजतस्य विकारोऽवयवो वा राजतं कुण्डलं काञ्चनं तथाच पुरीं द्रक्ष्यथ काञ्चनीमिति भट्टिः। काञ्चनी वासयष्टिरिति कालिदासः। परशव्यस्य विकारोऽवयवो वा पारशव्यः विकारे वा विहितस्य लुक् वक्ष्यते। रजतं काञ्चनं लौहं सीसं लोहितकं तथा। उडुम्बरः पीतदारुविकण्टकविभीतकाः। कण्टकारी नीपदारुः परशवोऽत्र कीर्त्तितः। अनुदात्तादेः। ष्यन्तादनुदात्तादेर्विकारेऽवयवे चार्थे ट्नः स्यात्। दण्डिनो विकारोऽवयवो वा दाण्डः दाधित्थः कापित्थः। पलाशादेर्वा। ष्यन्तात् पलाशादेस्तयोः ट्नो वा स्यात्। पालाशः पक्षे ष्णः पालाशः पालाशस्य विकारः पालाशमयः। पलाशः खदिरो रम्भा पुन्नागशिंशपावपि। विकङ्कतः करीरश्च शिरीषः स्यन्दनस्तथा। यवासश्च दश प्रोक्ताः पलाशादौ मनीषिभिः। ट्ने नन् शम्याः। शमीशब्दस्य विकारावयवोत्पन्ने ट्ने नन् स्यात् न इत्। शम्या विकारोऽवयवो वा शामीनं पल्लवः शामिनी स्रुक् अतएव ट्नः विधानसामर्थ्यात् न नलोपः। वृद्धशराद्येकाज्भ्यो मयड्भक्ष्याच्छादनयोर्वा त्वन्येभ्यः। ष्यन्तात् वृद्धात् शरादेरेकाचश्च भक्ष्याच्छादनभिन्ने वाच्ये विकारावयवयोर्मयट् स्यात् वृद्धादिभिन्नात् तु वा ट्नष्णयोरपवादः। आम्रस्य विकारोऽवयवो वा आम्रमयं शालमयम्। शरादेस्तु शरमयं दर्भमयम्। शरो दर्भः कुटीरश्च तृणसोमश्च वल्वजः हिरण्येन सह

प्रोक्तौ हिरण्यस्य हिरण्मये। एकाचः मृण्मयं वाङ्मयं तन्मयं त्वन्मयम्। अभक्ष्याच्छादनयोरिति किं त्वाचं व्यञ्जनं वस्त्रञ्च। अन्येभ्यस्तावत्। अश्मनोविकारः अश्ममयं आश्मं दूर्वामयं दौर्वं कपोतमयं कापोतं लोहमयं लौहं भक्ष्याच्छादनयोरिति किं मौद्गः सूपः कार्पासं वासः। व्रीहेः पुरोडाशे यवतिलाभ्यां त्वसंज्ञायाम्। ष्यन्ताद् व्रीहिशब्दात्तयोर्मयट् स्यात् पुरोडाशे वाच्ये असंज्ञायान्तु यवतिलाभ्याम्। व्रीहेर्विकारोऽवयवो वा व्रीहिमयः पुरोडाशः पुरोडाश इति किं व्रैहमन्यत् यवमयं तिलमयं संज्ञायान्तु यावकं यवादित्वात् स्वार्थे कः तैलम्। पिष्टाच्च कस्तु नाम्नि। ष्यन्तात् पिष्टशब्दान्मयट् स्यात् संज्ञायां तु कः पिष्टस्य विकारः पिष्टमयं भस्म संज्ञायान्तु पिष्टकः पूपः। अप्कंसीयाभ्यां य्यणौ। ष्यन्ताभ्यामाभ्यां विकारे य्यणौ स्याताम्। मूले आप्यमिति अपां विकार इति वाक्यम् कथमम्मयम् अपवादविषये क्वचिदुत्सर्गः। कंसीयस्य विकारः कांस्यं विकारत्वे हितार्थे त्यस्य लुक् वक्ष्यते। एणीपुरुषाभ्यां णेयः। ष्यन्ताभ्यामाभ्यां विकारावयवयोः णेयः स्यात्। एण्या विकारोऽवयवो वा ऐणेयः पौरुषेयः। मूले आग्नेय इति। अग्निर्विकारोऽवयवो वा इति वाक्यं यमादित्वात् णेयः एवं कालेयः याम्यः प्राजापत्यः पाशुपतः औत्समित्याद्यूहनीयम्। कोङ्विल्वादिभ्यां णः। ष्यन्ताभ्यां कोङ्विल्वादिभ्यां तयोः णः स्यात् ट्रादेरपवादः। मधूकस्य विकारोऽवयवो वा माधूकं तार्कवं तैन्तिड़ीकं विल्वादेस्तावत् विल्वस्य विकारोऽवयवो वा वैल्वः गोधूमः। विल्व गोधूम कर्पासी मुद्ग रेणु गवेधुकाः। मसूर वरुण व्रीहि पटलोन्द्रा उर्ध्वचवः। इन्द्राणिका च कर्कन्धुः कुटीरश्चापि वाहिनः। इन्द्रस्मविसपीयूचा काण्डः श्यामाकमित्यपि। वृद्धेभ्यो मयट् अन्येभ्यः ट्रः णश्च बाध्यते। हेमार्थतालाभ्यां मानधनुषोः। ष्यन्तात् सुवर्णवाचिनो माने तालाद्धनुषि वाच्ये तयोः णः स्यात्। मूले हैममिति। विकारार्थणे नस्य लोपः हैमो निष्कः एवं हाटकं पलं जातरूपं कार्षापणम्। मान इति किं हेममयी यष्टिः। तालस्य विकारोऽवयवो वा तालं धनुः। धनुषि किं तालमयो दण्डः। सत्त्याट्रान्तात् विकारावयवार्थट्रान्तात् विकारावयवयोः णः स्यात्। दैवदारवस्य विकारोऽवयवो वा दैवदारवः कापोतस्य कापोतः शौवस्य विकारोऽवयवो वा शौवः राजतस्य राजतः पारशवस्य पारशवः दाधित्थस्य दाधित्थः पालाशस्य पालाशः णः, पक्षे पालाशस्य पालाशमयः शामीनस्य शामीनः। तदिति किं हारिद्रस्य विकारोऽवयवो वा हारिद्रमयः ट्रान्तादिति किं वैल्वमयः। कांस्यैणेयात्। विकारावयवार्थत्यान्ताभ्यां आभ्यां

विकारावयवयोः णः स्यात्। कंसीयस्य विकारः कांस्यः तस्य विकारः कांस्यः एण्या ऐणेयः तस्य ऐणेयः तस्यादिति वर्त्तते तेन एण्या अपत्यम् ऐणेयः अस्य विकारोऽवयवो वा ऐणेयमयम्। त्रपुजतुनोः षे सन्। अनयोर्विकारविहिते षे सन् स्यात् न इत्। त्रपुणो विकारः त्रापुषम् एवं जातुषम् अतएवाभ्याम् उदन्तत्वेऽपि षः। उष्ट्रात्सकौ वा तुमोर्णाभ्याम्, ष्यन्तादुष्ट्रशब्दात्तयोर्णकः स्यात् उमोर्णाभ्यान्तु वा। उष्ट्रस्य विकारोऽवयवो वा औष्ट्रकः प्राग्विट्त्स्यापवादः। उमा अतसी ऊर्णा मेषलोम औमकम् औमम् और्णकम् और्णं षः। गोद्रुपयोभ्यो यो माने तु द्रोर्वयः। ष्यन्तेभ्य एभ्यस्त-योर्यः स्यात् द्रुशब्दात्तु वयो माने वाच्ये। गोर्विकारोऽवयवो वा गव्यं द्रोर्द्रव्यं पयसः पयस्यं माने तु द्रोर्विकारोऽवयवो वा द्रुवयं मानम्। अप्लचादेः फले लुक् तेषां कदम्बादेस्तु पुष्पे च। प्लचादिभिन्नेभ्यः। विकारावयवयोरुत्पन्नत्यानां फले वाच्ये लुक् स्यात् कदम्बादेस्तु फले पुष्पे वाच्ये। आमलक्या विकारोऽवयवो वा फलं आमलकम् उलुकि स्त्रीत्यस्य लुक्। एवं वदरं पीलु वकुलं फलं फलितस्य वृक्षस्य फलमवयवो विकारश्च भवति। यथा पल्लवितस्य पल्लवः इति वामनः। प्लचादिस्तु प्लचस्य विकारोऽवयवो वा फलं प्लाचं फलम्। प्लचन्यग्रोधवृहतीकाकु-भाश्वत्थवेणवः। ककुद्रुरिङ्गुदी शिग्रुहस्तिन्यः कथिता दश। कदम्बादेस्तावत् कदम्बस्य विकारोऽवयवो वा कादम्बं फलं पुष्पञ्च चम्पकं फलं पुष्पञ्च। कदम्ब-चम्पकाशोककोविदारसुकण्टकाः। कुटजः करवीरश्च सिन्धुवार इहेरिताः। कर्णि-कारः पाटला च कदम्बादौ दशेति च। जम्ब्वा लुप् च वा। जम्बुशब्दाद्विकारा-वयवोत्पन्नत्यस्य लुप् लुकौ स्यातां वा। चानुकृष्टं पुष्पं नानुवर्त्तते फल एव। जम्ब्वा विकारोऽवयवो वा लुकि जम्बूफलं लुपि जम्बूफलं फले फलानि चेति विशेषः। लुपि सति प्रकृतेर्लिङ्गवचने स्त इति न्यायात् उभयत्यन्तपचे जाम्बवं फलं जाम्बवे फले जाम्बवानि फलानि। व्रीहिहरीतक्यादिभ्यां लुप् पुष्पमूलयोस्तु मल्लिकाविदार्य्यादिभ्याम्। व्रीह्यादेर्हरीतक्यादेश्च फलविषये तदुत्पन्नस्य लुप् स्यात्। मल्लिकादेस्तु पुष्पे विदार्य्यादेस्तु मूले लुप्। व्रीहीणां विकारोऽवयवो वा व्रीहयः फलानि एवं मुद्गा माषाः यवास्तिला इत्यादि। हरीतक्यादेस्तु तावत् हरीतक्या विकारोऽवयवो वा फलं हरीतकीफलम्। हरीतकी शीतपाकी देती शेफालिका काशा। मल्लिका पिप्पली चिञ्चा श्वेतपाकी च कर्कटी। पथ्या कोषातकी द्राचा मृद्वीका कण्टकारिका। तथा चार्ज्जुनपाकी च शेषं शिष्टप्रयोगतः। मल्लिकायाः पुष्पं मल्लिका। मल्लिका मालती जाती केतकी वनमालिका। शेफाली माधवी

देती पाटली नवमालिका। शेफालिकैकादशप्रोक्ताः शेषं शिष्टप्रयोगतः। इह हरीतक्यादौ च मल्लिकादेतीशेफालिकानां पाठात् फलपुष्पयोस्त्यस्य लुप्। पाटला-शब्दस्येह कदम्बादौ लुक्लुपौ फले लुप् वा। विदार्य्या विकारोऽवयवो वा विदारीमूलम्। विदारी बृहती रम्भा गम्भारी शालपर्ण्यपि। हरिद्रांशुमती सप्त शेषं शिष्टप्रयोगतः। व्रीह्यादीनां लुपि प्रकृतेर्वचनं न भवति किन्त्वभिधेयवत् तेन व्रीहेर्विकारोऽवयवो वा फलानि व्रीहयः एवं हरीतक्याः फलानि हरीतक्यः फलानीत्यादि। मानात् क्रीतवत्। परिमाणवाचिनः क्रीतार्थे यस्मात् यो विहितस्तस्माद्विकारेऽर्थे स त्यः स्यात्। निष्कस्य विकारः नैष्किकः द्विनैष्किकं द्विनिष्कम् इह मानशब्देन संख्यापि गृह्यते तेन शत्यः शातकः द्विसहस्रं द्विसाहस्रम् इत्यादि बोध्यम्। ष्णौ गोदोहाखीनो हैयङ्गुश्च घृते। ष्णन्तात् ष्णौ गोदोहशब्दात् विकारे घृते वाच्ये खीनः स्यात् तस्मिन् हैयङ्ग्वादेशश्च। ष्णौ गोदोहस्य विकारः हैयङ्गवीनं घृतं घृते किं ष्णौ गोदोहमुदश्वित्। सङ्घे। ष्णन्तात् सङ्घेऽर्थे वेत्यादि-त्वात् णः स्यात्। नराणां सङ्घः नारं काकं यमादिस्तु याम्यम् आदित्यं प्राजापत्यं पाशुपतम् आग्नेयं कालेयं औत्समित्यादि। कवचि हस्त्यभिचाद्यचित्तेभ्यः णिकः। ष्णन्तात् कवचिनी हस्तिनी भिचादिवर्णेभ्योऽचित्तवाचिभ्यश्च सङ्घे णिकः स्यात्। कवचिनां सङ्घः कावचिकं हस्तिनां सङ्घः हास्तिकं प्रतिपदोक्तग्रहणे लिङ्गविशिष्ट-स्यापि ग्रहणं तेन हस्तिनीनां सङ्घः हास्तिकं णेयभिन्नवाच्ये पुंवद्भावः। अचित्तेभ्य-स्तावत् अपूपानां सङ्घः आपूपिकं शाष्कुलिकं घाटिकमित्यादि। भिक्षादिस्तु भैक्षम्। भिक्षवेतकरीषाङ्गवर्म्मपद्धतिदक्षिणाः। सहस्राङ्गारगर्भिण्योऽथर्वा युवतिचर्म्मिणौ। गर्भिणीयुवत्योश्चित्तत्वात् णे सिद्धे पुंवद्भावार्थः पाठ इति जयादित्यः। तेन गर्भिणीनां संघः गार्भिणं यौवनं भाष्यकारस्तु वा पुंवद्भावमङ्गीकरोति तन्मते यौवनमिति च। तथाच स्वरूपमभिनिप्रेक्ष्य कलाकुशलयौवनम्। यस्य पुण्यकृतः प्रेक्ष्यं सफलं तस्य यौवतमिति भाष्यम्। मूले आङ्गमिति अङ्गां संघ इति वाक्यम्। भिक्षादिपाठात् णः न तु णिकः अङ्गोऽङ्गोऽनीन इति अङ्गादेशः। क्रतावीनोऽङ्गः। ष्णन्तादहन् शब्दादीनः स्यात् संघे क्रतुविषये एव अह्नां संघः अहीनः ईने नाङ्गादेशः। गणि-कायाः ण्यः केशात्तु वा। ष्णन्तात् गणिकाशब्दात् ण्यः स्यात् केशात्तु वा। मूले गाणिक्यमिति गणिकानां संघ इति वाच्यं केशानां संघः कैश्यं पक्षेऽचित्तवत्त्वात् णिकः कैशिकम्। केदारात् कण् च वा। ष्णन्तात् केदारशब्दात् ण्यकणौ वा स्याताम्। केदाराणां संघः कैदार्य्यं कैदारकं पक्षेऽचित्तवत्त्वात् णिकः कैदारिकम्।

गोत्रराजादिभ्यां वुञः कस्तु धेनोरनञः। ष्यन्तादपत्यान्ताद्राजादेश्च सङ्घे वुञः स्यात् नञ् वर्जाद्धेनुशब्दात् तु कण्। दाक्षीणां सङ्घः दाक्षकं मार्गकम् औपगवकम्। मूले राजकमिति राज्ञां समूहः इति वाक्यम्। राजराजन्यवत्साजा उरभ्रो ग्रद्ध इत्यपि। राजपुत्रा मनुष्योऽष्टौ चर्षोऽत्र दशकीर्त्तिताः। धेनूनां सङ्घः धैनुकं गोधेनुकम्। अनञ इति किम् आधेनवम् आधिनवमिति कश्चित्। अश्वादीयो वा। ष्यन्तादश्वशब्दादीयः स्यात् वा सङ्घे। अश्वानां सङ्घः अश्वीयं पक्षे आश्वम्। पर्शोर्ड्वण्। ष्यन्तात् पर्शुशब्दात् ड्वण् स्यात् सङ्घे। पर्शूनां सङ्घः पार्श्वं डिति टिलोपः। अनुदात्तादिखण्डिकादिभ्यां ट्ञः। ष्यन्तादनुदात्तादेः खण्डिकादेश्च सङ्घे ट्ञः स्यात्। कपोतानां सङ्घः कापोतं मायूरं तैत्तिरम् अनुदात्तादिः पूर्वाचार्य्यादिभ्यो ज्ञातव्यः। खण्डिकानां सङ्घः खाण्डिकम्। खण्डिकावडवोलूक हलवल्कयुगंशुकाः। वरवा भिक्षुका निम्बा हरिद्रा च प्रकीर्त्तिताः। अत्र येऽचित्तास्तेभ्यः ष्णिकः ये आद्युदात्तास्तेभ्यः ष्णो बाध्यते अहन्शब्दस्योभयत्र पाठात् ष्णट्ञौ स्यातां न ष्णिकः। क्षुद्रकमानवात् सेनाख्यायाम्। ष्यन्तात् क्षुद्रकमानवशब्दात् सङ्घेऽर्थे ट्ञः स्यात्। सेनासंज्ञायां क्षुद्रकमानवशब्दो रूढ़ो क्षुद्रकस्यापत्यं राजा वा क्षुद्रेत् कौशलाजाविति मानव्यः व्विरूढ़ात् लुक् क्षुद्रकाश्च मानवाश्च ते क्षुद्रकमानवास्तेषां सङ्घः चौद्रकमानवी सेना सेनाभिन्ने चौद्रकमानवकम्। यद्यपि अनुदात्तादित्वात् ट्ञः सिद्ध्यति तथापि योगविभागात् सामूहिके तदन्तविधिज्ञापनार्थं सेनाख्यायां नियमार्थञ्चेदम् अतएव गोत्रत्वेऽपि गोत्रान्तत्वात् सेनाभिन्ने चौद्रकमानवकमिति गोत्रराजादिभ्यामिति कणः एवं बालहास्तिकमिति अचित्तवत्त्वात् ष्णिकः। परे तु अनञ् सिद्धिरनुदात्तादेः कोऽर्थः क्षुद्रकमानवात्। गोत्राद्वुञ् चेन्न तज्जीवं तदन्तान्न तु सर्वतः। ज्ञापकं स्यात् तदन्तत्वे तथाचापिशलेर्विधिः। सेनायां नियमार्थञ्च यथाबाध्येताञ्वुञा। वुञा वकेन अञ् ट्ञौ बाध्यते। एतेन पूर्वविप्रतिषेधश्च वके ष्णाधित इति वृत्तिकारः। अन्ये तु समूहाद्यर्थजाद्दितद्धितविषये लुकं निषिध्य क्षौद्रकमानव्यशब्दादेव त्वमाहुः। पुरुषात् ष्णेयः। ष्यन्तात् पुरुषशब्दात् सङ्घेऽर्थे ष्णेयः स्यात्। पुरुषाणां सङ्घः पौरुषेयम्। पृष्ठब्राह्मणवाड़वमानवाद्यः। ष्यन्तेभ्यः एभ्यः सङ्घेऽर्थे यः स्यात्। पृष्ठानां सङ्घः पृष्ठ्यं ब्राह्मण्यं वाड़व्यं मानव्यम्। पृष्ठात् क्रतौ। ष्यन्तात् स्तोत्रार्थपृष्ठशब्दात् क्रतौ विषये सङ्घेऽर्थे यः स्यात्। पृष्ठ्यः षड़हो यागः। तथाच पृष्ठाहीनौ क्रताविति चान्द्रसूत्रम्। पाशादेः स्त्रियां ष्यन्तात् पाशादेः सङ्घेऽर्थे यः स्यात् स च स्त्रियां पाशानां सङ्घः पाश्या धूम्या। पाशधूमवनाङ्गारतृणपीठगण

ष्ठलम्। वार्त्तो नड़: पीटगल: पिटग: खरगोरथा:। अङ्गारशब्दस्तोभयत्र पाठात् आङ्गारम् अङ्गार्या। चरणेभ्यो धर्म्मवत्। ष्यन्तेभ्यश्चरणवाचिभ्यो धर्म्मेऽर्थे ऐभ्यो ये त्या वक्तव्यास्तेभ्यस्ते त्या: सङ्घेऽपि स्यु:। कठानां सङ्घ: काठकं कालापकं छान्दोग्यम् औकथिक्यं वाह्वृच्यम् आथर्वणमित्यादि। विषये देशे। सङ्घ: इति नानुवर्त्तते ष्यन्ताद्विषयेऽर्थे वेत्त्यादित्वात् ण:। यो विषय: स देशश्चेद्भवति अत्र विषयशब्देन ग्रामसमूहो गृह्यते। देशग्रहणात् न तु इन्द्रियग्राह्यरूपादि:। शिवानां विषयो देश: शैव: देश इति किं चक्षुषो विषयो रूपम्। राजन्यादेर्णक:। ष्यन्ताद्राजन्यादेर्णक: स्यात् विषये देशे णस्यापवाद:। राजन्यानां विषयो देश: राजन्यक: साम्रियक:। राजन्यसम्रियो दाक्षिर्मानवीडुम्बरावपि। आर्जुनायनशालङ्काजलजालन्धरायणा:। शैलूषा त्रीड़वसतिविगर्त्तावभ्रवस्तथा। ऊर्णनाभश्च वैकर्णो दैवपातस्तथैव च। आर्थकामेयाम्बरीषपुत्रौ देणवनं तथा। बिल्ववनं विराटश्च शेषं शिष्टप्रयोगत:। विधो भौरिक्यादे:। ष्यन्तात् भौरिक्यादे: विषये देशे विध: स्यात्। भौरिकीणां विषयो देश: भौरिकिविध: भौरिकिर्भौलिकिश्चोपयाता विर्यङ्कतस्तथा। शैकयतश्च कान्वेया भौरिक्यादौ षड़ीरिता:। चान्द्रायणादेर्भक्त:। ष्यन्ताच्चान्द्रायणादेर्विषये देशे भक्त: स्यात्। चान्द्रायणानां विषयो देश: चान्द्रायणभक्त:। चान्द्रायणो दासमित्रिवैषुका विषमण्डि च। तुण्ड खाड़ायनौ देवदासमित्रायणावपि। वैश्वाधनवसौरोरौ तथा शायण्डिरित्यपि। शौद्रायणश्च श्यालस्यायनदाचायणावपि ताचायणश्च इत्येते पञ्चभिंदश कीर्त्तिता:। ग्रन्थाद्व्याख्याने मवत्। ग्रन्थवाचिभ्यो येभ्यो ये त्या उक्ता भवेऽर्थे तेभ्य: ष्यन्तेभ्य: ते त्या व्याख्याने स्यु:। इष्टे व्याख्यानो ग्रन्थ: ऐष्टिक: पाशुक:। एकाचस्तु सुपो व्याख्यान: सौप:। षात्वणात्विक: पाञ्चौविक: आर्चिक: वैश्वामित्रक: राजसूयिक: पुरोडाशिक: आग्नेयणं छान्दस: ग्रन्थादिति किं पाटलिपुत्रो सुकोशला पाटलिपुत्रं सुकोशलयोर्व्याख्यायत इत्यर्थ:। व्याख्यायतेऽनेनेति व्याख्यान: घेऽनट्। भावे वर्णदृढ़ादिभ्य: णो वा। ष्यन्तेभ्यो वर्णविषयेभ्यो दृढ़ादिभ्यश्च भावे णो वा स्यात्। वर्णविशेष: शुक्लादि: शुक्लस्य भाव: शौक्ल्यं कार्ष्ण्यं पक्षे शुक्लता शुक्लत्वं शुक्लिमा इत्यादि। दृढ़स्य भाव: दार्ढ्यम्। दृढ़ादिर्यथा। दृढ़वृढ़परिवृढ़भृशकृशशीतम्। विसतिर्यमलीवधिरविलातम्। पण्डिततरुणो मधुरो लवण: सम्मतिरम्लो जड़सम्मानौ। मूकोपेन्द्र विजात्युष्णमूर्खा: पाठविशारदौ। वक्रो दृढ़ादौ विबुधैरीरिता: षट् च विंशति:। पक्षे दृढ़ता दृढ़त्वं द्रढिमेत्यादि। ष्यन्तानां वर्णदृढ़ादीनां क्लीवत्वं स्वभावात् षित्त्वन्तु उत्तरार्थम्।

गुणवचनब्राह्मणादिभ्यः क्रियायाञ्च। ष्यन्तेभ्यो ब्राह्मणादिभ्यश्च भावे क्रियायाञ्च ष्णाः स्यात् वा। मधुरस्य भावः क्रिया वा माधुर्यं जाड्यं कार्श्यं कापेयम्। यद्यपि दृढ़ादीनां गुणवचनत्वादनेन सिद्धप्रति तथापि पूर्वत्र पाठः पृथ्वन्तस्य मध्ये परत्वात् इमन्नर्थः। पुरुषोत्तमस्तु इमन्नर्थः कर्म्मणि ष्णो माभूदित्येतदर्थश्च पाठः इत्याह तन्मते जड़क्लशशब्दौ दृढ़ादौ न पाठ्यौ। ब्राह्मणस्य भावः क्रिया वा ब्राह्मण्यं मानव्यं ब्राह्मणमानवचपलसहायं गडुलो बद्रानिपुणविषायम्। मित्रं तत्परदूत-विदग्धं परिषदिकपरसंन्यविधर्म्मम्। मद्दितपुरोहितसारथितनुस्थं शिशिकी धार्म्मिकसदृशं खस्तम्। पिशुनो बालिशकुशलसमग्र्यं विषमसमालसकविविष-मन्यम्। खण्डिकदण्डिकवाड़वचोरं वर्म्मिक धर्म्मिकः सुकारसमग्रम्। सूचिकपूतिक-तरमदौनं ग्रामिकरूपविशेषमुदासीनम्। आबाधयापबाधयविबाधयकापुरुषदुष्पुरु-षाश्च। उपबाधयविज्ञातौ प्रतिकूलाः तौक्ष्णदायादाः। सम्भाषी वहुभाषी संवेशी शीर्षविघातिसमाजी। पूर्वापरोत्तराधरपुनः पुनरितिह धर्माश्च। एकभावविभावा-ल्पभावकञ्जलिका अपि। ज्येष्ठाभिरूपसंवादिपरस्परमनीश्वरः। एकानुकुशला रचा धूर्तो मध्यस्थ इत्यपि। अचेतज्ञानपूर्वञ्च प्रतिखेदविशन्ति च। पत्यन्ताश्च यथा कामद्विभावचतुरोचितम्। ब्राह्मणादिरिह प्रोक्तं परे शिष्टप्रयोगतः। ब्राह्मण-बालिशशब्दयोः पाठः ट्ञबाधनार्थः। विषायविशस्योः तलबाधनार्थः नैताभ्यां तत्वमिति अन्येऽप्याहुः। चौरधूर्त्तयोर्मनोज्ञादिसमावेशार्थः कुशलादीनाञ्च खरादिगणसमा-वेशार्थः। आबाधयशब्दो जनपदवचनस्तस्मात् द्वन्द्वे कोशलेत्यादिना ण्यङ् तथा उप-बाधयविबाधयापबाधयाश्च जनपदास्तेभ्यः ट्ञः रुढ़ात् कम्बोजादेर्लुक्नित्यमिति लुक् ततो गोत्रचरणविहितं णकबाधनार्थं एवं मानववाड़वयोरपि अनीश्वरादिप्रभृतीनां नञ्ग्रादिति प्रतिषेधनार्थः। पत्यन्तात्तावत् आधिपत्यं गाणपत्यं प्राजापत्यम्। पत्यन्त-पुरोहितादिभ्यं इति सूत्रयन्ति तन्नादृतमस्माभिः खरस्येहाप्रयोगात्। वा स्त्रियां रुद्रा-देरर्हतस्तु नुण् च। ष्यन्तादुद्रादेर्भावक्रिययोः ष्णः स्याद्दास च वा स्त्रीलिङ्गः अर्ह-तस्तु नुण् च। ब्राह्मणादित्वे सिद्धे लिङ्गव्यत्ययार्थं वचनम्। रुद्रस्य भावः क्रिया वा रौद्री रौद्रं षित्वादीपि ईपि ष्णस्य लोपः। रुद्रमित्रयथाकाम समग्रसचितन्तथा। चतुराश्चानुपूर्वश्च रुद्रादिः परिकीर्त्तितः। अर्हतो भावः क्रिया वा आर्हन्ती आर्हन्त्यं प्रशंसायां त्वन्। राज्ञसदन्ताच्च। ष्यन्ताद्राजशब्दात् तदन्ताच्च भावक्रिययोः ष्णः स्यात्ता ब्राह्मणादेरयं प्रपञ्चः। राज्ञो भावः क्रिया वा राज्यम्। भावकर्म्मये नस्य लोपः अधिराज्यं प्रादिसः। दूतवणिग्भ्यां यश्च। ष्यन्ताभ्यामाभ्यां भावक्रिययोः ष्णो ,

यश्च वा स्यात् । दूतस्य भावः क्रिया वा दौत्यं दूत्यं वाणिज्यं वणिज्यं पक्षे दूतत्वं वणिक्त्वं प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापि ग्रहणम् । दूत्या भावः क्रिया वा दौत्यं दूत्यं दूतत्वमिति तथा चागतप्रियकथैव दौत्यमिति भारविः । अन्ये वणिक्-शब्दस्य स्त्रीत्वमिच्छन्ति वाणिज्या वणिज्येति । दूतवणिग्भ्याञ्च वक्तव्यमिति न्यासकारः । सखिस्तेनाभ्यां नलोपश्च । योगविभागात् ष्णौ नानुवर्त्तते ष्यन्ताभ्यामाभ्यां भावक्रिययोर्यः स्याद्वा स्तेनस्य नलोपश्च । सख्युर्भावः क्रिया वा सख्यं स्तेनस्य भावः क्रिया वा स्तेयं पक्षे सखित्वं स्तेनत्वं परे तु ब्राह्मणादित्वात् स्तैन्यमिति वदन्ति । घुपूर्वे-गन्तहायनान्तयुवादिभ्यः ष्णः । ष्यन्तात् घुपूर्वेगन्तात् हायनान्तात् युवादेश्च तयोः ष्णः स्याद्वा । मूले गौरवमिति घुपूर्वेगन्तत्वात् ष्णः एवं पाटवमिति । पक्षे गुरुता गुरुत्वमिति पटुता पटुत्वं घुपूर्वेति किं शक्रुता शक्रुत्वं द्विहायनस्य भावः क्रिया वा द्वैहायनं वैहायनं युवादित्वात् मूले यौवनम् अविकारणे न नलोपः । साम्यं वैरूप्यं सौभाग्यं सुभगादित्वात् द्वयोर्द्वयोर्व्रिः ब्राह्मणादित्वात् सिद्धं वाणिज्यमिति राजदन्ताच्चेति ष्णः सौहृद्यमिति युवादित्वात् । युवाचपलवृषलस्स्त्रीकुशलपिशुनयनमानसुहृदयानि । होता भ्राता दुःस्त्रीकुस्त्रीकुरुकवर्णकनिपुणाश्च । सुब्रह्मचारिसभातसुहृत् दुर्हृत् कुतूहलाः । श्रोत्रियश्चान्नृशंसश्च दुर्हृदयः कमण्डलुः । दुर्भ्रात-स्थविरौ ज्ञेयौ परिव्राजक इत्यपि । श्रवणश्च युवादौ स्युरष्टाविंशतिरीरिताः । युवन्निति मनोज्ञादिसमावेशार्थं सुहृदयदुर्हृदयशब्दौ मित्रामित्रवाचकौ ब्राह्मणादि-ष्ण्यासमावेशार्थौ । तेन सुहृदयस्य भावः क्रिया वा ष्णे कृते नित्यं हृदादेशः सुभगादित्वात् द्वयोर्द्वयोर्व्रिः सौहार्द्दं ष्ण्ये तु हृदयस्य हृल्लास इत्यादिना वा हृदादेश । सौहार्द्दं सौहृदयम् एवं दुर्हृदयस्य हृदादेशाभावपक्षे दौर्हृदय्यमिति वस्तुतस्तु हृदयपर्य्यायहृच्छब्दस्य सौहार्द्दं सुहृदयदुर्हृदयशब्दयोस्तु सौहृदं सौहृदय्यं दौर्हृदं दौर्हृदय्यमिति । होतृस्थविरशब्दयोः ट्रसमावेशार्थः तेन सङ्घाद्यर्थेषु ट्रे कृते ष्णः होत्रं ष्णे कृते वृद्धादीयः होत्रीयम् एवं स्थाविरीयम् । छत्पुरुषाभ्याञ्चासे । ष्यन्ताभ्यामाभ्यां तयोरसे ष्णो वा स्यात् । हार्दं पौरुषम् । असे किं परमपुरुषत्वम् । श्रोत्रियस्येयस्य लोपश्च । श्रोत्रियस्य भावः क्रिया वा श्रौत्रं ष्णे इयस्य-लोपः । होत्रादिप्राणिजातिवयोभ्यः ट्रः । ष्यन्तात् होत्रादेः प्राणिजातेः वयोवचनाच्च भावक्रिययोः ट्रः स्याद्वा । होतुर्भावः क्रिया वा होत्रम् । होता भर्त्ता प्रशास्ता च उद्गातृगणकौ रथः । उन्नेता प्रतिहन्ता च अध्वर्य्युः सुष्ठु दुष्ठु च । होतृ उद्गातृ उन्नेतृ अध्वर्य्यु इत्येषां पाठः होत्रादिभ्यः य इति बाधनार्थः । प्राणिजातत्वात् ।

शुनो भाव: क्रिया वा शौवं रुरो: रौरवं वयोवचनात्तावत् कौमारं स्थाविरम्। कपिज्ञातिभ्यां ष्णेय:। ष्यन्ताभ्यां तयो: ष्णेय: स्याद्वा। कपेर्भाव: क्रिया वा कापेयं ज्ञातेयं पक्षे कपिता कपित्वं ज्ञातिता ज्ञातित्वं कपिशब्दस्य वपूर्वेगन्तत्वात् ष्णो बाध्यते। मनोज्ञादेर्ष्णक:। ष्यन्तान्मनोज्ञादेस्तयोर्ष्णक: स्याद्वा। मनोज्ञस्य भाव: क्रिया वा मनोज्ञकम्। मनोज्ञकल्याणकुरूपपुत्रा युवा सहाय: कुलपुत्रवन्द्वा:। अमुष्यपुत्र: परपुत्रधूर्त्तौ मेधाव्यवश्यं बहुलश्च चौर:। आढ्यकुलाभिरूपेन्द्रक्षान्दसश्रोत्रिया अपि विश्वोदरस्तथा ग्राम्यपुत्रामुष्यकुलावपि। ग्रामात् षण्ड कुमारी च परे च स्यु: प्रयोगत:। सहायचौरधूर्त्तानां ब्राह्मणादिष्णसमावेशार्थ: तेन साहाय्यं साहायकमिति अमुष्यपुत्रामुष्यकुलशब्दयोर्ष्णकान्तकुलपुत्रयोरिति ष्या न लुक् आमुष्य पुत्रिका आमुष्यकुलिका स्वभावात् स्त्रीत्वम् एवं यौवनिका इति कश्चित्। बहुलशब्दस्य फे मन्समावेशार्थ: तेन बाहुलकं बाहुल्यं बंहिमा इत्यादि। युङ् रूपोत्तमादसुप्रख्याच्च। य उङ् यस्य स युङ् उत्तमशब्द: स्वभावात् त्रिप्रभृतीनामन्त्यमाह उत्तमस्य समीपम् उपोत्तमं रु उपोत्तमं यस्य स रूपोत्तम: युङ् चासौ रूपोत्तमश्चेति स तस्मात् ष्यन्तात् भावक्रिययोर्ष्णक: स्यात् न तु सुप्रख्यात् रमणीयस्य भाव: क्रिया वा रामणीयकं रमणीयकम् युङ् इति किं त्रिमानता त्रिमानत्वम्। रूपोत्तमादिति किं चत्रियत्वं चत्रियता। असुप्रख्यादिति किं सौप्रख्यं सुप्रख्यत्वं सुप्रख्यता। चात् स्त्रियाम्। ष्यन्तात् क्षतचसाङ्गावक्रिययोर्ष्णक: स्यात् स च स्त्रियाम्। गोपालपशुपालानां भाव: क्रिया वा गोपालि पशुपालिका। शौर्य्योपाध्यायिका कौत्सकुशिकिका दैवासुरिका। गोत्रचरणाच्च श्लाघादौ। ष्यन्ताद्गोत्रवाचिनश्चरणवाचिनश्च भावविक्रयोर्ष्णक: स्यात् श्लाघादिविषये। स च स्त्रियाम्। या आख्या अपत्यनिमित्ता सा गोत्रपदवाच्या अथवा ये पठ्यन्ते ते गोत्रपदवाच्या इति या आख्या वेदाध्ययनप्रयुक्तान् पुरुषानाचष्टे सा चरणपदवाच्या। गार्गिकया काठिकया च श्लाघते अधिक्षिपति तामवगतवान् प्राप्तवान् वा गार्गत्वेन श्लाघत आत्मनि कत्थनं करोति अधिक्षिपति परान्निन्दति तामवगतवान् तच्छब्देन गोत्रचरणसम्बन्धिन्यौ भावक्रिये उच्येते ते ज्ञातवान् प्राप्तवान् लब्धवान् इत्यर्थ:। एवं कठत्वेन श्लाघते इत्यर्थ: श्लाघादेरन्यत्र गार्गत्वम् काठत्वम्। ऋत्विग्भ्य ईय:। ष्यन्तेभ्य: ऋत्विग्विशेषवाचिभ्यो भावक्रिययोरीय: स्यात्। मित्रावरुणीय: प्रस्तोत्रीय:। मित्रावरुणप्रस्तोतृब्राह्मणाच्छंसि पोतृ च। ग्रावस्तुतार्द्रभावौ च प्रतिप्रस्तोतृहोतृ च। क्षायायेष्टा सुब्रह्मण्योऽच्छावागोऽग्नीध्रमेव

च। अध्वर्युः प्रतिहर्त्ता च ब्रह्मोद्गाता च कीर्त्तितः। एते पञ्चदशशब्दा ऋत्विग्विशेषवाचिन इति कात्यायनः। ऋत्विगर्थाद् ब्रह्मणस्त्वः। ष्यन्तादृत्विग्वाचिनो ब्रह्मशब्दाद्भावक्रिययोस्त्वः स्यात् ब्रह्मणो भावः क्रिया वा ब्रह्मणो भावः क्रिया वा ब्रह्मत्वं नेति वक्तव्ये त्ववचनान्तबाधनार्थम्। ब्राह्मणार्थात् तु ब्रह्मत्वं ब्रह्मता। न नञो यादचतुरादेः। नञ्पूर्वात् भूतात् भावे क्रियायाञ्च उक्तास्त्या न स्युः न चतुरादेः। न शुक्लः अशुक्लस्तस्य भावः क्रिया वा अशुक्लत्वम् अशुक्लता अदृढ़त्वम् अदृढ़ता अमधुरत्वम् अमधुरता अब्राह्मणत्वम् अब्राह्मणतेत्यादि यादिति किं नास्ति पटुर्यस्यापटुस्तस्य भावः अपाटवम्। अचतुरादेरिति किम् अचातुर्य्यम् अचतुरत्वम् अचतुरता न चतुरोऽचतुरस्तस्य भावः क्रिया वेति वाच्ये एवम् आसङ्गत्यम् आनरण्यम् आवन्ध्यम् आरूच्यम् आबुध्यम् आवश्यम् आलस्यम्। धान्यवाचिनस्तत्चैत्रे णीनः। ष्यन्तेभ्यो धान्यवाचिभ्यो णीनः स्यात् तत्चेत्रे वाच्ये। मुद्गानां भवनं चेत्रं मौद्गीनं कौलत्थीनं कौद्रवीणं धान्यानमिति भागवृत्तिः। शालिव्रीहिभ्यां णेयः। ष्यन्ताभ्यामाभ्यां चेत्रे वाच्ये णेयः स्यात् णीनस्यापवादः। शालीनां भवनं चेत्रं शालेयं व्रैहेयं चेत्रं स्त्रियां शालेयी भूः। यव यवक षष्टिकाभ्यो वा तु तिल भङ्गा माषाऽणुमाभ्यः। ष्यन्तेभ्य एभ्यस्तत्चेत्रे यः स्यात् तिलादिभ्यस्तु वा। यवानां भवनं चेत्रं यव्यं यवक्यं षष्टिक्यम्। यवकशब्दो व्रीहिधान्ये रूढ़ः तिलादिभ्यस्तु तिल्यं भङ्ग्यं माष्यम् आणव्यम् उम्यं पक्षे तैलीनमित्यादि। भङ्गाशब्दः कार्पासे वर्त्तते इति धातुप्रदीपः। रचितस्तु भङ्गासमाख्यशस्येऽपीति विश्व इति। अश्वादेकाहगमे णीनः। एकाहेन गम्यते एकाहगमः तस्मिन् वाच्ये अश्वशब्दात् णीनः स्यात्। अश्वस्य एकाहगमः पन्था आश्वीनः पन्थाः। इदमर्थे। ष्यन्तादिदमर्थे वेत्त्यादिवत् णः स्यात् मूले विष्णोरिदमिति वाक्यं भवादित्वात् वृद्धादीयः एवं त्वदीयं गार्गीयं नादेयं राष्ट्रीयमित्यादि। माघवनमिति मघोन इदमिति वाक्यं तेन उः अविकारणे न नलोपः तुङ्पक्षे माघवतमिति शौवनमिति श्वन इदमिति वाक्यं हारादित्वान् वस्रोम् पूर्ववन्न नलोपः। यमादेस्तु याम्यं प्राजापत्यं पाशुपतम् आग्नेयम् कालेयम् औत्समित्यादि अत्र लिङ्गवचनमतन्त्रं तेन विष्णोरियं वैष्णवी विष्णोरिमौ वैष्णवावित्यादि। इदमिति सम्बन्धमात्रं विवचितं तथाच शैवं शिवसम्बन्धीत्यर्थः। रथरथान्तात् यो रथाङ्गे। ष्यन्तात् रथात् रथान्ताच्च इदमर्थे रथाङ्गे वाच्ये यः स्यात् णस्यापवादः। रथस्येदं रथ्यं चक्रं परमरथ्यं चक्रं रथाङ्गम् इति किं रथस्येदं स्थानमिति। वाहनवाहनादिपरिषदध्वर्य्युभ्यः ट्नः। वाहनवाचकात्

वाहनवाचिपूर्वशब्दात् परिषच्छब्दादध्वर्य्युशब्दाच्च इदमर्थे ट्ञः स्यात्। हस्तिन इदं हास्तं आश्वं आश्वम्। वाहनपूर्वात् हस्तिनः चर्म्म हस्तिचर्म्म तस्येदं हास्तिचर्म्मं आश्वशकटम्। पारिषदं आध्वर्य्यवम्। जयादित्यस्तु वाहनाद्वाद्य एवार्थे वाहनपूर्वरथशब्दाच्च त्यमुक्त्वा अश्वस्येदं वहनीयं आश्वं यानं अश्वरथस्येदम् आश्वरथमित्याह तद्भाष्यादिविरुद्धमिति। हलसीराभ्यां ष्णिकः। हलस्येदं हालिकं सैरिकम्। अपत्याणकौ शिष्यदण्डमानवयोः। ष्यन्तादपत्यान्तादिदमर्थे णकः स्यात् न तु शिष्ये दण्डमानवे च। ग्लुचुकायनेरिदं ग्लौचुकायनं औपगवकम्। अशिष्यदण्डमानवयोरिति किं दाचेरयमन्तेवासी दाचः गौकचदण्डमानवः दण्डप्रधानो मानवः शाकपार्थिवादित्वाल्लोपः। चरणाद्धर्म्मामायर्योः। ष्यन्ताच्चरणवाचिन इदमर्थे धर्म्मास्नायर्योर्वाच्ययोर्णकः स्यात्। कठस्यायं धर्म्मः आम्नायो वा काठकः कालापकः चरणा वेदनिमित्तेन पुरुषे वर्त्तमानाः कठादयश्चरणवाचकाः आम्नायः पाठपरम्परा। नटौक्थिकबह्वृचच्छन्दोगयाज्ञिकाण्यः। अन्तेभ्य एभ्य इदमर्थे धर्म्मामायर्योर्वाच्ययोर्ण्यः स्यात्। नटस्यायं धर्म्म आम्नायो वा नाट्यः औक्थिक्यः बाह्वृच्यः छान्दोग्यः याज्ञिक्यः। औक्थिकः सामव्याख्यानाऽध्येता बह्वृचः ऋग्वेदी छन्दोगः सामवेदी याज्ञिको यज्ञविद्याध्येता। चाददेवासुरादेरको वैरविवाहयोः। ष्यन्ताद्देवासुरादिभिन्नात् कृतचसादिदमर्थे वैरविवाहयोर्वाच्ययोरकः स्यात्। वैरं विरोधः काकस्य उलूकस्य तयोरिदं वैरं काकोलूकिका अश्वमहिषिका। अवियश्च भरद्वाजस्य तेषां विवाहः अविभरद्वाजिका कुत्सकुशिकिका गर्गेयस्कोत्यादिना व्येऽपत्यस्य लुक् स्वभावादस्य स्त्रीत्वम्। देवासुरादेस्तु दैवासुरं रचोगन्धर्वं यचोशीरमित्यादि देवासुरादेर्वैरम् एवं निषेध इत्येके। अग्नीधो रण् गेहे नदश्च ष्यन्तादग्नीध्शब्दादिदमर्थे रण् स्यात् गेहे वाच्ये तस्मिन् पूर्वं दसंज्ञं न स्यात्। अग्नीध इदं गृहम् आग्नीध्रम् अग्निमिन्धे इत्यग्नीध् होता अन्तर्भावितण्यन्तादिन्धधोः क्विप्। समिध आधाने ष्यण्य एनम् च। समिध् शब्दादाधाने वाच्ये इदमर्थे ष्यण्यः स्यात् ष्यण्यस्य एनम् च, म इत्। समिध इदमाधानं सामिधेन्यो मन्त्रः सामिधेनी ऋक् ईपि ष्यण्यस्य लोपः। रैवतिकादेरीयः। ष्यन्ताद्रैवतिकादेरिदमर्थे ईयः स्यात्। रैवतिकस्येदं रैवतिकीयं वैजवापीयम्। रैवतिको वैजवापिः शौरग्रीवोदमेघि च। चौमदृत्योदवापी च स्वापिशिः सप्त कीर्त्तिताः। सर्वेभ्योऽपत्यान्तत्वात् णको बाध्यते। हास्तिपादकौपिञ्जलात् णः। ष्यन्ताभ्यामाभ्यामिदमर्थे णः स्यात्। हास्तिपादस्येदं हास्तिपादं कौपिञ्जलस्येदं कौपिञ्जलम्।

४३४ । ऋतो रो ये ।

ऋत् ।१।, रः १।, ये ७। ।

पित्र्यम् ।

४३५ । हन्षन् धृतराज्ञामुङ्लोपः णे ।

हन् षन् धृतराज्ञां ६।।।, उङ्लोपः १।, णे ७। ।

वार्त्रघ्नं पौष्णं धार्त्तराज्ञम् । एषां किं सामनम् ।

---

अपत्यत्यान्ताभ्यां णकौ बाध्यते । आथर्वणिकादथर्वणश्च । ष्यन्तादाथर्वणिकादिद-मर्थे णः स्यात् णे अथर्वणादेशश्च । अथर्वणा प्रोक्तम् आथर्वणं तदधीते तद्वेत्ति वा आथर्वणिकः पाठवत्वात् अध्येतृवेदित्रोर्न लुक् आथर्वणिकस्यायं धर्मो आम्नायो वा आथर्वणः धर्माम्नाययोरेवाभिधानात् आथर्वणिकं गृहमित्यादौ न स्यात् । वोढु-र्वहितश्च । ष्यन्ताद्वोढृशब्दादिदमर्थे णः स्यात् तस्मिन् वहित्रादेशश्च । वोढुरिदं वाहित्रं संपूर्वादपि सांवाहित्रम् । णिण्यट्ट्वात् सङ्घाङ्कघोषलक्षणे । ष्यन्तेभ्यः ण्यन्तण्यान्तट्टान्तेभ्य इदमर्थे सङ्घादिषु वाच्येषु णः स्यात् । दाक्षेः सङ्घोऽङ्को घोषो लक्षणं वा दाक्षः प्राक्षः ण्यान्तात् गार्ग्यः वात्स्यः ट्टान्तात् बैदः औत्स इत्यादि एभ्योऽपत्यत्यान्तेभ्यो णकौ बाध्यते गोबलीवर्दवदिहाङ्कलक्षणयोर्भेदः । शाकला-णकश्च । ष्यन्ताच्छाकलशब्दादिदमर्थे सङ्घादिषु वाच्येषु णकः स्यात् णस्यापवादः । शाकलेन प्रोक्तमधीते शाकलः तस्य सङ्घोऽङ्को घोषो लक्षणं वा शाकलकः चका-रात् णश्च शाकलः । नानन्तरादिषु । ष्यन्तादिदमर्थेऽनन्तरादिषु वाच्येषु इदमर्थे विहितास्त्या न स्युः । समुद्रस्येदम् अनन्तरं दूरं समीपमुपर्य्यधो वा इत्यादि ॥४३३॥

ऋकारो रः स्यात्तद्धितये । पितुरिदं पित्र्यम् अणित् णरः । ये किं णित् कणि-पैतृकम् ॥ ४३४ ॥

श्रीरा-टी—ऋत् लुप्तषष्ठीकं दम् । पित्र्यमिति पितुरिदमिति वाक्यम् अत्र ये रेफविधानात् य एव ॥ ४३४ ॥

हन् च षन् च धृतराजन् च तें तेषां उङो लोपः । षन्निति मूर्द्धन्यषादि वकारोङ् इत्यनान्तोभागः तस्य केवलस्य असम्भवात् उक्षन् पूषन् प्रभृतीनां ग्रह-णम् । अधिकन्तु प्रविष्टं न तु तद्धानिरिति न्यायात् सदानोऽल्लोप इत्यनेनैवाल्लोपे

## ४३६। युष्मदस्मदोस्त्वन्मदां युष्माकास्माकतवकममकाः ष्णखीने।

युष्मद्-मदां ६।।।, युष्माक-ममकाः १।।।, ष्णखीने ७।।

यौष्माकं यौष्माकीणं, आस्माकम् आस्माकीनं, तावकं तावकीनं, मामकं मामकीनम्। सूर्य्याय हितं सौरीयम् आगस्तीयम् आत्मनीनम्। चोर एव चौरः त्रैलोक्यं रामकः।

---

सिद्धे इदं नियमार्थं तेन ष्णे परे एषामेव उङ् लोपः स्यान्नान्यस्य इत्यर्थः। वृत्रघ्न इदं वार्त्रघ्नम् अत्र ष्णे परे वृद्धौ अनेन अल्लोपे हनोऽङ्ग्नोघ्नः एवं पूष्णः पौष्णं धृतराज्ञः धार्त्तराज्ञम्, उभयत्र ष्णे वृद्धौ उङ्लोपः। उक्ष्णस्तु अपत्यार्थे ष्णे औक्ष्ण इति पूर्व्वमुदाहृतम् इदमर्थे ष्णे तु मनववर्ज्जेत्यनेन अपत्यार्थभिन्ने ष्णे नकारलोपादुङ्लोपाभावे औक्षं चर्म्म। एषां किं साम्न इदं सामनम् अत्र ष्णे पूर्व्वेणापि उङ्लोपो न स्यात्॥ ४३५॥

श्रीरा-टी—हंश्च पूषंश्च धृतराजंश्च ते तेषां उङो लोपः उङ् लोपः। हनन्त षनन्त धृतराजन् इत्येषां ष्णे परे उङो लोपः स्यात्। वार्त्रघ्नम् इति वृत्रघ्न इदमित्यर्थे ष्णः अनेन उङो लोपे हनोऽङ्ग्नोघ्न इति घ्नः। पौष्णमिति पूष्ण इदं ष्णे उङो लोपे णत्वञ्च एवमौक्ष्णम्। धार्त्तराज्ञमिति धृतो राजा येन धृतराजा तस्येदं ष्णे उङो लोपे चुत्वं सर्व्वत्राविकारत्वात् नल्लोपाभावः। सदानोऽल्लोप इत्यनेन उङो लोपे प्राप्ते नियमार्थं वचनं तेन साम्न इदं सामनमित्यादौ न स्यात्॥ ४३५॥

युष्मद् अस्मद् त्वद् मद् एषां स्थाने क्रमात् युष्माक अस्माक तवक ममक एते आदेशाः स्युः ष्णे खीने च परे। युष्माकमिदमित्यर्थे ष्णे खीने च विभक्तेर्लुकि युष्मद् स्थाने युष्माकादेशे वृद्धौ यौष्माकं यौष्माकीणम् एवम् आस्माकम् आस्माकीनमिति एवं तव इदम् इत्यर्थे ष्णे खीने च तेर्लुकि युष्मद एकत्वात् त्वदादेशे तस्य च तवकादेशे वृद्धौ तावकं तावकीनम् एवं मामकं मामकीनमिति। सूर्य्याय हितं सौरीयम् अत्र खीये वृद्धौ सूर्य्यागस्त्यस्येति यलोपः। एवम् आगस्तीयम् आत्मने हितम् आत्मनीनम् अत्र खीने अध्वात्मनोरीने इति नलोपनिषेधः। स्वार्थमुदाहरति। चोर एव चौरः अत्र ष्णे वृद्धिः त्रिलोकी एव त्रैलोक्यम् अत्र ष्णे वृद्धौ यवोर्लोपः इत्यकारलोपः।

स्वार्थप्रत्ययान्तास्तल्लिङ्गा एव इति नियमेऽपि अस्य क्लीवत्वमभिधानात्। राम एव रामकः अत्र कण्। कण्प्रत्ययस्य स्वार्थादतिरिक्तोऽप्यर्थः यथा अज्ञाने कुत्सिते चैव संज्ञायमनुकम्पने। तद्युक्तनीतावप्यल्पे वाच्ये ह्रस्वे च कः स्मृतः इति प्राञ्चः। यथा अश्वकः कस्यायमश्वः कुत्सितो वा इत्यर्थः। इत्यादौ कणोऽणित्त्वान्न वृद्धिः। विप्रकः कुत्सितो विप्र इत्यर्थः। संज्ञायां देवदत्तकः यज्ञदत्तकः अनुकम्पायां वत्सकः दुर्बलकः बुभुक्षितकः पुत्रकः अनुकम्पायुक्तनीतौ आयुर्वित्तं गृहच्छिद्रं यत्नात् कुर्वीत गुप्तकम्। अल्पे तैलकं ह्रस्वे वृक्षकम् ॥ ४३६ ॥

श्रीरा टी—युष्मच्च अस्मच्च त्वच्च मच्च ते तेषां युष्माकश्च अस्माकश्च तवकश्च ममकश्च ते। णश्च खीनश्च तत्तस्मिन्। एषामेते क्रमात् स्युः णखीनयोः परयोः। यौष्माकमित्यादि युवयोर्युष्माकमित्यर्थे युष्मदो युष्माकादेशः णखीनयोः। यौष्माकीणमित्यत्र णत्वम् एवमास्माकमिति आस्माकीनमिति आवयोरस्माकं वा इदमिति वाक्यम्। तावकमित्यादि तवेदमिति वाक्यम्। णखीनयोरिति किं•युष्मदीयम् अस्मदीयं त्वदीयं मदीयं पक्षे वृद्धादीयः। च्या ईयो हितेऽराजादेः। च्यन्ताद्धितेऽर्थे ईयः स्यात् न तु राजादेः। मूले सूर्य्याय हितमिति सूर्य्यस्यायं धर्मः सौर्य्यः तस्मै हितमित्यर्थे ईये कृते सूर्य्यागस्त्यस्येति यलोपः। एवमागस्तीयमिति एवं सूर्य्याय हितं सूरीयम् एवमागस्तीयं वत्सीयमित्यादि। राजादेस्तु राज्ञे हितम्। राजा ब्राह्मण आचार्य्यो वृषलोऽन्ये प्रयोगतः। यद्यपि च्यन्तस्य ष्यन्तभिन्नत्वं तथापि ष्यर्थविहितायाश्चया: कत्वाभावात् पूर्वत्र नोदाहृत्य इहोदाहृतम्। च्या इत्यधिकारः प्राः प्राक्। सर्वात्सश्च। च्यन्तात् सर्वशब्दात् हितेऽर्थे ईयो णश्च स्यात्। सर्वेभ्यो हितं सर्वीयः सार्वः स्त्रियां सर्वीया सार्वा। प्राग्यङ्गतदन्तब्रह्मादेर्यः। च्यन्तात् प्राग्यङ्गवाचकात् प्राग्यङ्गवाचकान्तात् ब्रह्मादेश्च हितेऽर्थे यः स्यात् ईयस्यापवादः। दन्तेभ्यो हितं दन्त्यम् औष्ठ्यं राजदन्त्यं राजोष्ठ्यं शीर्षण्याः केशाः ब्रह्मणे हितं ब्रह्मण्यम् अभावकर्म्मये न नलोपः। ब्रह्मातिलवणो माषरथौ खलवृषे इति शिरसे हितं शीर्षण्यम्। अव्यजाभ्यां ख्यः। च्यन्ताभ्यामाभ्यां हितेऽर्थे ख्यः स्यात्। अवये हिता अविख्या शाला अजाय हिता अजख्या भूमिः प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापि ग्रहणमिति न्यायात् अजायै हिता अजख्या इत्यपि च। आत्मभोगोत्तरदाभ्यामीनः। च्यन्तादात्मन्शब्दात् भोगोत्तरदाच्च हितेऽर्थे ईनः स्यात्। मूले आत्मनीनमिति आत्मने हितमिति वाक्यम् अध्वात्मनोरीन इति न लोपः। भोगशब्दः शरीरवाची राज्ञां भोगः राजभोगः तस्मै हितं राजभोगीनं मातृभोगीनं

शुभ्रादित्वान्नञ्। चरकमानवाभ्यां खञ्। च्यन्ताभ्यामाभ्यां हितेऽर्थे ईनो णित् स्यात्। चरकाय हितं चारकीणं मानवीनम्। विश्वजनादेर्ये। च्यन्तात् विश्वजनादेर्हितेऽर्थे ईनः स्यात् यसे सति। विश्वजनाय हितं विश्वजनीनं य इति किं विश्वे जना यस्य तस्मै हितं विश्वजनीयम्। भाष्ये तु सामानाधिकरण्यमात्रेऽभिधानं तन्मते विश्वस्य जनो विश्वजनस्तस्मै हितं विश्वजनीयं सर्वजनीयमिति प्रत्युदाहरणं पूर्वत्र विश्वजनीनमिति। सर्वजनमहाजनाभ्यां णिकः। च्यन्ताभ्यामाभ्यां हितेऽर्थे णिकः स्यात् यसे सति। सर्वजनाय हितं सार्वजनिकः विश्वजनादिपाठाच्च सर्वजनीन इति पूर्वेण महाजनिकः। य इति किं सर्वेषां जनः तस्मै हितं सर्वजनीयं महान् जनो यस्य तस्मै हितं महाजनीयमिति। पुरुषात् णेयस्तद्वधतत्कृतयोः। च्यन्तात् पुरुषशब्दात् हितेऽर्थे तद्वधे तत्कृते च वाच्ये णेयः स्यात्। पुरुषाय हितं पौरुषेयो वधः पुरुषकारश्च। कंसपरशुभ्यां लुक् विकारार्थे। आभ्यां हितार्थे लुक् स्यात् विकारार्थे ते परे। कंसीयस्य विकारः कांस्यं परशव्यस्य विकारः पारशवम्। परशोर्हितादौ यो वक्ष्यते। ईयो विकारादुपादानकारणे तादर्थ्ये। प्रकृतेरवस्थान्तरं विकारः तदर्थात् उपादानकारणे वाच्ये तादर्थ्ये गम्यमाने ईयः स्यात्। अङ्गारेभ्यः एतानि काष्ठानि अङ्गारीयाणि काष्ठानि अङ्गारशब्दो विकारार्थस्तस्योपदानं काष्ठं तस्य तादर्थ्यं गम्यते। एवं प्राकारीया इष्टका इत्यादि। तादर्थ्य इति किं धान्यानां यवाः विकारादिति किम् उदकाय कूपः। छदिर्बलिभ्यां णेयः। च्यन्ताभ्यामाभ्यां विकारार्थाभ्यामुपादानकारणे वाच्ये तादर्थ्ये गम्यमाने णेयः स्यात्। छदिषे तृणानि छादिषेयाणि तृणानि बालेयास्तण्डुलाः। ऋषभोपानद्भ्यां ण्यः। च्यन्ताभ्यामाभ्यां विकारवाचकाभ्याम् उपादानकारणे वाच्ये तादर्थ्ये गम्यमाने ण्यः स्यात् ऋषभाय वत्स आर्षभ्यो वत्स औपानह्यं काष्ठम्। चर्म्मणि ट्रोऽनुपानहः। च्यन्तादुपानच्छब्दभिन्नात् विकारार्थादुपादानकारणे चर्म्मणि वाच्ये तादर्थ्ये गम्यमाने ट्रः स्यात्। वरत्रायै चर्म्म वारत्रं चर्म्म व्याघ्रं चर्म्म। अनुपानह इति किम् औपानह्यं चर्म्म। ब्रह्माद्यादेरित्यतः सर्वत्र तदन्तविधिरिष्यत इति न्यासकारस्तेन परमब्रह्मण्यं परमादित्या परमाजव्या परमात्मनीनः परमविश्वजनीयः पारममहाजनिकः पारमचरकीणः परमाङ्गारीयं काष्ठं परमवरत्रायै चर्म्म पारमवरत्रं चर्म्मेत्यादि। विकारार्थादुपादानकरणे ये त्या एकान्ते हितार्थे भवन्तीत्यन्ये तेषां मतेऽङ्गाराय हितम् अङ्गारीयं छादिषेयमित्यादि। हितादावुगवादेर्योऽपूपादिहविर्वीचिभ्यस्तु वा। च्यन्तादुवर्णान्ताद्गवादेश्च हितादावर्थे यः

स्यात् अपूपादेर्हविर्वाचिभ्यस्तु वा। धेनवे हितं धेनव्यं बभ्वे हितं बभव्यं शल-ङ्कुर्ऋषिविकारोऽर्थः तस्मात् ट्वं बाधित्वाऽनेन यः शलङ्कवे चर्म्म शलङ्कव्यं चर्म्म। गवादित्वावत् गवे हितं गव्यं हविष्यम्। गोहविर्युगमेधाविविस्वदसादक्रपसु चाः। अष्टैकादशकं प्रोक्तमचरं बहिरष्टका। अपूपादित्वावत् अपूपाय हितम् अपूप्यम् अपूपीयं पृथुक्यं पृथुकीकम्। अपूपः पृथुकोऽभ्यूषो धूमार्घोऽपिक्षुणा सह। स्थूना-कटकल्किनानि प्रदीपो दीपतण्डुलौ। अपूपादाऽथ सर्वेऽन्नविकारा इह कीर्त्तिताः। सर्वेऽन्ने विकारवाचका अपूपादयः यथा पिष्टाय हितं पिष्ट्यं पिष्टीयं शक्तुशब्दा-दुवर्णान्तत्वात् पूर्वेण नित्यम्। शक्तव्यम्। हविर्वाचिनस्तावत् आमिक्षायै हितं आमिक्षीयं पुरोडाशेभ्यस्तण्डुलाः पुरोडाश्याः पुरोडाशीयाः तण्डुलाः। चरुशब्दा-दुवर्णान्तत्वात् हविःशब्दात् गवादित्वात् पूर्वेण नित्यं चरव्यं हविष्यमिति। उधसो नङ् च। यन्तादुधःशब्दाद् यः स्यात् हितादौ तस्मिन् नङ् च भङ्गावितौ। उधसे हितम् उधन्यम्। शुनः शुनशूनौ च। यन्तात् श्वन्शब्दात् हितादौ यः स्यात् तस्मिन् शुनशूनौ इत्येतौ स्याताम्। शुने हितं शुन्यं शून्यम्। नाम्नि कम्बलात्। यन्तात् कम्बलशब्दात् हितादौ यः स्यात् नाम्नि गम्यमाने। कम्बलाय हितम् उपादानकारणं वा कम्बल्यं ऊर्णा पलशतम्। नाम्नीति किं कम्बलीया ऊर्णा। अप्राण्यङ्गे नाभेर्नभश्च। यन्तान्नाभिशब्दात् हितादौ यः स्यात् अप्राण्यङ्गे तस्मिन्ना-भेर्नभादेशः। रथैकदेशो नाभिः नाभये हितम् उपादानकारणं वा नभ्यं काष्ठम्। अप्राण्यङ्ग इति किं नाभये हितं नाभ्यं तैलं प्राण्यङ्गवाचित्वाद् यः पूर्वेणैव। गवादितः सर्वत्र तदन्तविधिरिति जयादित्यः। तेन परमगव्यं यवापूप्यं यवापूपीयं परमामिक्ष्यं परमामिक्षीयं परमोदन्यं परमशून्यं परमनभ्यम् इत्यादि। हितादि-रिह हितं तादर्थ्ये उपादानकारणम् उपादानकारणं चर्म्म इति। सन्तापादेः ष्णिकः प्रभवति। यन्तात् सन्तापादेः प्रभवत्यर्थे ष्णिकः स्यात्। सन्तापाय प्रभवति सान्तापिकः। सन्तापमांसप्रवेशशक्तुसङ्घातमोदनः। उपवासप्रवासोपसर्गे-सम्पादनन्तथा। मांसोदनश्च सन्नाहः संयोगश्च प्रकीर्त्तितः। पारायग्रामापवास्तु नर्मो निष्पेयु इत्यपि। निसर्गश्च विसर्गश्च धौगैरेकोनविंशतिः। योगाद्यश्च। योगाय प्रभवति योग्यः यौगिकश्च। कर्म्मणो णुकः। यन्तात् कर्म्मशब्दात् प्रभवत्यर्थे णुकः स्यात् ण इत्। कर्म्मणे प्रभवति कार्मुकं धनुः। अतिथेर्ण्यस्तादर्थ्येऽणिच्चदेवतान्त-पादार्घेभ्यः। यन्तादतिथेर्ण्यः स्यात् तादर्थ्ये देवतान्तादिस्त्वणित्। अतिथये जलम् आतिथ्यम् अतिथ्यर्थमित्यर्थः। पितृदेवतायै इदं पितृदैवत्यम् अग्निदैवत्यम्

पादाय इदं पाद्यम् अर्घाय इदम् अर्घ्यम् । प्रज्ञा: । प्रज्ञा इत्यधिक्रियते चातुरर्थिकात् प्राक् । ण: प्रज्ञादे: स्वार्थे वा । प्रज्ञान्तात् प्रज्ञादे: स्वार्थे ण: स्याद्वा । प्रजानातीति प्रज्ञ: प्रज्ञ एव प्राज्ञ: पक्षे प्रज्ञ: मूले चौर एवेति । प्रज्ञ चौर वणिक् विद्या देवता वसुबन्धव: । उष्णिक् साधारणकृष्ण पिशाचासुरशत्रव: । सत्वदाश्रयणाऽग्नीध्रवयो वचोमलोहित: । मरुत् प्रत्यच्च चक्षूंषि विपति व्याहृतौ विदन् । चिकीर्षद् योध शुक्लन्तचण्डाल विखरोऽपि च । अग्रहायण इत्येते विंशच्च द्व्यधिका इह । साधारणशब्दोऽनत्यान्त: स्त्रियां साधारणैव साधारणी । सत्वच्छब्दोऽसधो: शत् सत् तस्मात् वत्: सत्वन् स एव सात्वत: विदद्दिति शवन्त: कृष्णमृगार्थ: शुक्लदिति शवन्त: कृष्णमृगार्थ: शुक्लन्नेव शौक्लत: कृष्णमृग: । आकृतिगणोऽयम् । छन्दोभ्य: । प्रज्ञान्तेभ्य: छन्दोवाचिभ्य: स्वार्थे ण: स्याद्वा । त्रिष्टुबेव त्रैष्टुभं जागतं गायत्रं स्वभावात् क्लीवत्वं पक्षे त्रिष्टुबित्यादि । सन्देशवाग्युक्तात् कर्म्मण: । प्रज्ञान्तात् सन्देशवाचा युक्तोऽर्थे वर्त्तमानात् कर्म्मशब्दात् स्वार्थे ण: स्याद्वा । कर्म्मैव कार्म्मण: यद्वाचिकं श्रुत्वा वशीकरणादिकर्म्मानुष्ठीयते तदेवोच्यते । कृष्णविसारिभ्यां मृगमत्स्ययो: । प्रज्ञान्ताभ्यामाभ्यां क्रमादनयोर्वर्त्तमानाभ्यां णो वा स्यात् । कृष्ण एव कार्ष्णो मृग: विसार्य्येव वैसारिणो मत्स्य: इनोऽकलापादेरिति न नलोप: पक्षे कृष्ण: विसारी श्रोत्रौषधिभ्यां शरीरजात्यो: । प्रज्ञान्ताभ्यामाभ्याम् अनयो: क्रमाद्वर्त्तमानाभ्यां स्वार्थे णो वा स्यात् । श्रोत्रमेव श्रौत्रं शरीरं मणिबन्धवाचके तु न भवति औषधिरेवौषधम् औषधिभिरवकन्दादिजातौ तु औषधि: फलपाकान्ता जाति: । विनयादे: णिक: उपायस्य स्वश्च । प्रज्ञान्ताद्विनयादे: स्वार्थे णिक: स्याद्वा उपायशब्दस्य णिके स्वश्च । विनय एव वैनयिक: विनयव्यवहारोपचाराऽत्यन्ताऽनुगामिन: । सम्प्रदाय समुत्कर्ष विशेष विषयात्यया: । समाहारसमूहौ चाकस्मात् समयसङ्गति: व्यासादेशौ च सम्प्रोक्ता: सप्तभिर्दश कोविदै: । अकस्मादेव आकस्मिक: टेर्लोप: । व्यास एव वैयासिक: तेन निर्वृत्ता वैयासिकी संहिता इति आदिश्यतेऽसौ आदेश: आदेश एव आदेशिक: । उपाय एव औपयिकं णिके स्व: । अस्याकृतिगणत्वात् चातुरर्थिक इत्यादि । वाच: सन्देशे । प्रज्ञान्तात् सन्देशे वर्त्तमानात् वाच्शब्दात् स्वार्थे णिक: स्यात् णिकं विनैव शब्दहत्त्वभावात् विकल्पप्रकरणे नित्योऽयं विधि: । वाचिकं सन्देश: । सन्देश इति किं वागस्य मधुरा । चतुर्वर्णादे: ष्ण्य: । प्रज्ञान्ताच्चतुर्वर्णादे: स्वार्थे ष्ण्य: स्याद्वा चतुर्वर्णा एव चातुर्वर्ण्यं चतुर्वर्णमुखाऽनन्तचतुराश्रमषड्गुणा: । त्रिलोको सर्वदेवश्च सेना भेषजसन्निधि: । त्रिकालावसथो चैव समीप-

मणिकोपमा:। विषष्टिरितिह प्रोक्ता: कोविदैर्दशसप्तति:। मूले वेलोश्यमिति इतिह एव ऐतिह्यम्। यावादि: क:। प्रग्न्तात् यावादे: क: स्वाद्वा। याव एव यावक:। यावमानसमुद्राढ़ज्ञाताऽज्ञाताचिं भिच्चव:। चन्द्रो रामगङ्गुस्नस्निपुष्ट-दूताश्चतुर्दश। मूले रामक इति। आकृतिगणोऽयं तेन पोतक इति। वृहत्यणु-पुत्रतनुभ्य आच्छादन निपुण इविम सूत्रेषु। प्रग्न्तेभ्य एभ्य एष्वर्थेषु क्रमादुक्तमानेभ्य एभ्य: स्वार्थे क: स्वाद्वा। वृहत्येव वृहतिका आच्छादनविशेष: अन्यत्र वृहती ओषधि: अणुरेव अणुक: निपुण: अन्यत्र अणु: सूक्ष्म:। पुत्र एव पुत्रक: क्रविम: अन्यत्र पुत्र:। तनु एव तनुकं सूत्रम् अन्यत्र तनुर्देव:। शीतोष्णाभ्यामृतौ। प्रग्न्ता-भ्यामाभ्याम् ऋतौ वाच्ये क: स्वाद्वा स्वार्थे। शीत एव शीतक: उष्णक: ऋतु: अन्यत्र शीतो वायु: उष्ण: कम्बल:। लूनविपाताभ्यां पशौ। प्यन्ताभ्यामाभ्यां पशौ वर्त्त-मानाभ्यां स्वार्थे क: स्वाद्वा। लून एव लूनक: पशु: विपातक: पशु: अन्यत्र लून: विपात:। कुमारखेलनेभ्य:। कुमारै: खेल्यते येन तद्वाचिभ्य: स्वार्थे क: स्वाद्वा। कन्दुरेव कन्दुक: भ्रमक: गिरिक: शृङ्गक: पत्ते कन्दुरित्यादि। स्नातशून्यलोहितेभ्यो वेदसमाप्तिरिक्तमणिषु। प्रग्न्तेभ्य एभ्य एष्वर्थेषु क्रमात् स्वार्थे क: स्वाद्वा। वेदं समाप्य स्नात: स एव स्नातक: अन्यत्र स्नात:। शून्य एव शून्यक: धनादिहीन इत्यर्थ:। लोहित एव लोहितको मणि: अन्यत्र लोहित:। प्रियादेर्जातौ। प्रग्न्ता-ज्जातौ प्रियादे: स्वार्थे क: स्वाद्वा। प्रिय एव प्रियक: चित्रक: मृगजाति: गुह्य एव गुह्यको देवयोनिजाति: गोल एव गोलक: कुब्राह्मणजाति:। कुब्ज एव कुब्जक: तरु-जाति: इत्यादय: प्रयोगदर्शनात् ज्ञातव्या:। काललोहिताभ्यामनित्यवर्णे। प्रग्न्ता-भ्यामाभ्यामनित्यवर्णे वर्त्तमानाभ्यां स्वार्थे क: स्वाद्वा। काल एव कालको वैलच्चण्येन लोहित एव लोहितक: पीडनेन तदनित्यं यत् कदाचित् भवति कदाचिन्न भवति गुणवृत्तेरस्य द्रव्यवाचित्वे त्यो विधीयते न तु गुणवृत्तेरिति। अनित्य इति किं काला लोहिता गौ:। यावत् द्रव्यभावित्वान्नित्यो वर्ण:। वर्ण इति किम् असति वर्ण-ग्रहणे नित्य इति द्रव्यस्यापि विशेषणं स्यात् तर्हि लोहितिका: समुद्रा: पार्थिवा: परमाणव इत्यत्र को न स्यात् तेषां नित्यत्वात् सति वर्णग्रहणे नित्येऽपि द्रव्येऽनित्ये वर्णे त्य: सिद्ध्यति। रक्ताच्च। रक्तार्थे विहितात् स्वार्थे को वा स्यात्। कालेन रक्त: काल: काल एव कालक: वा लोहितक: काललोहिताभ्यामेव विधि: यदा-ऽनयोर्यावत् द्रव्यभाविता तदैवोदाहरणमनित्यतायान्तु पूर्ववेव। लोहिनीशब्दादपि के स्ले लोहिनिकेति भवति अन्यत्र लोहितेति। अनात्यन्तिके क्तात्। प्रग्न्तात्-

नात्यन्तिकविशिष्टे वर्त्तमानात् क्तान्तात् स्वार्थे को वा स्यादनात्यन्तिकं भिन्नं भिन्नकम् अनात्यन्तिक इति किं भिन्नम् अत्यन्तमेव भिन्नमित्यर्थः। साग्निक्तम् अर्द्धभुक्तं नैमित्तकमित्यत्र न भवति अनात्यन्तिकस्य साम्यादिभिरुक्तत्वात् स्वयं साम्यौक्तेनेति वसः। अर्द्धभुक्तमित्यत्र साम्यार्थे स इत्येके। अथवा विशेषण सः ङसी वा। बहुभिन्नोपपन्नसुकरादेस्तरात्। प्रान्तात् बह्वादिपूर्वतरात् स्वार्थे कः स्याद्वा। बहुतरकम् अभिन्नतरकम् उपपन्नतरकं सुकरतरकं तरादिति किं बहुतरमित्यादि। ईयसोः। प्रान्तादीयसुन्तान्तात् स्वार्थे कः स्याद्वा। श्रेयानेव श्रेयस्कः। पूरणान्ताद् ग्रहणे तस्य लुक् वा। गृह्यतेऽनेनेति ग्रहणं रूपादि प्रान्तात् पूरणप्रत्ययान्ताद् ग्रहणे वर्त्तमानात् स्वार्थे को वा स्यात्तस्य पूरणप्रत्ययस्य लुक् वा स्यात्। द्वितीयमेव द्वितीयकं द्विकं रूपं द्वितीयेन रूपेण गृह्यते इत्यर्थः एवं तृतीयकं त्रिकं चतुर्थकं चतुष्कम्। उपधिचतुष्पाद्भ्यां ण्येयः। प्रान्तादुपधेश्चतुष्पाद्वाचिनश्च स्वार्थे ण्येयः स्याद्वा। उपधीयत इत्युपधिः रथाङ्गम्। उपधिरेव औपधेयम्। शरण एव शारणेयः धारणेयः। अहमादिवर्णेभ्यः कारो रात्तेफः। प्रान्तादहमादेर्वर्णविशेषवाचकाच्च कारः स्याद्वा स्वार्थे रवर्णात्तु एफश्च। अहमेव अहङ्कारः एव एव एवकारः ओमेव ओङ्कारः सत्यमेव सत्यङ्कारः तुरेव तुकारः टुरेव टुकारः इत्यादि। वर्णात्तु अतएव अकारः औकारः ककारः हकार इत्यादि। र एव रेफः। उत्सर्गापवादयोः क्वचिदुत्सर्गोऽपि निविशते इति न्यायात् रकार इत्यपि तथाच रकारादीनि नामानि शृण्वती मम पार्वतीति। मृदस्तिकः प्रशंसायान्तु सस्नौ। प्रान्तात् मृच्छब्दात्तिकः स्याद्वा स्वार्थे प्रशंसायान्तु सः स्नश्च। मृदेव मृत्तिका प्रशस्ता मृत् मृत्सा मृत्स्ना च। रूपनामभ्यां धेयो भागात्तु यश्च। प्रान्ताभ्यामाभ्यां स्वार्थे धेयः स्याद्वा भागशब्दात् तु धेयो यश्च। रूपधेयं नामधेयं भागधेयं भाग्यम्। देवात्तः। देव एव देवता स्वभावात् स्त्रीत्वम्। नवाद् यत्न न तना नूश्च तेषु। प्रान्तात् यवशब्दात् य न ईन तन एते स्युः स्वार्थे। तेषु नवशब्दस्य नूरादिश्यते। नवमेव नव्यं नूत्नं नवीनं नूतनम्। प्रान्नीनतनाः। प्रान्तात् प्रशब्दात् न न ईन तन इत्येते स्युः स्वार्थे। प्र एव प्रणं प्रत्नं प्रीणं प्रतनम्। तीयादविद्यार्थात् ष्णीकः। प्रान्ताद्विद्याव्यतिरिक्तार्थात् तीयान्तात् स्वार्थे ष्णिकः स्याद्वा। द्वितीयैव द्वैतीयीकी तार्त्तीयीकी अविद्यार्थादिति किं द्वितीया विद्या। अध्यध्यन्ता षड़क्षाशितङ्ग्वलं कर्म्म पुरुषादीनः। प्रान्तेभ्य एभ्यः स्वार्थे ईनः स्यात् वा। अधिशब्द आयत्तपर्य्यायः। अध्येव अधीनः तथाच अस्मास्वधीनं किमु निस्पृहाणामिति भारविः। अधिशब्दः शौण्डादिः गुरुषु अधि

गुर्वधि गुर्वध्येव गुर्वधीनः एवं ब्राह्मणाधीनः। भाष्यकारमते तु केवलादधिशब्दात् यः तन्मतेऽधीनः इति च। षड् अक्षीणि यस्मिन् षड़चः न षड़चः अषड़च एव अषड़क्षीणः द्वाभ्यामेव कृतो मन्त्रः। आश्रितास्तम्भा गावो यस्मिन् वने तत् आश्रितङ्गु सूत्रनिर्देशादाश्रितस्य मन् आश्रितङ्ग्विव आश्रितङ्गवीनम्। अलं कर्म्मणि अलं कर्म्म तदेव अलंकर्म्मीणम् अलं पुरुषाय अलंपुरुषः स एव अलंपुरुषीणः भावप्रधानोऽत्र पुरुषशब्दः अलंपुरुषभावाय इत्यर्थः गोष्ठाद्भूतपूर्वे खीनः। प्रयन्ताद्भूतपूर्वे वर्त्तमानाद्गोष्ठशब्दात् स्वार्थे खीणो वा स्यात्। भूतपूर्वं गोष्ठं गोष्ठीनं भूतपूर्वं इति किं गोष्ठी वर्त्तते। वस्तुनि जात्यन्तादीयः। प्रयन्ताद्वस्तुनि द्रव्ये वर्त्तमानाज्जातिशब्दान्तात् स्वार्थे ईयः स्यात् वा। ब्राह्मणी जातिरस्य ब्राह्मणजातिः ब्राह्मणजातिरेव ब्राह्मणजातीयः तज्जातीयः वस्तुनि किं ब्राह्मणजातिरदुष्टा। स्थानान्तात् तत्तुल्ये वा। प्रयन्तात् तत्तुल्ये वर्त्तमानात् स्थानान्तात् स्वार्थे ईयः स्यात् वा। पितृस्थानीयः पितृस्थानः राजस्थानीयः राजस्थानः तत्तुल्य इत्यर्थः। मानार्थवत्वन्तान्मात्रद्वयसटौ। प्रयन्तान्मानार्थे वत्वन्तात् स्वार्थे मात्रद्वयसटौ स्यातां वा। कियदेव कियन्मात्रं कियद्द्वयसं तावन्मात्रं तावद्द्वयसं स्त्रियां कियन्मात्री कियद्द्वयसीत्यादि पक्षे कियदिति। विशोजातौ यः। प्रयन्ताज्जातौ वर्त्तमानात् विशशब्दात् स्वार्थे यः स्यात् वा विडेव वैश्यः विट्च जाताविति किं विशात्म्। सुरचेमसर्त्तयविष्ठात् यः। प्रयन्तेभ्य एभ्यो यः स्यात् वा स्वार्थे। सूर एव सूर्य्यः चैत्यं मर्त्त्यः यविष्ठ्यः पक्षे सूर इत्यादि। पूगादमुख्यपूर्वात्। पूगाः संघा नानाजातीया अनियतवृत्तयो धर्मकामप्रधानास्तद्वाचिनः शब्दादमुख्यपूर्वाण्यः स्यात् अनिर्दिष्टार्थास्त्याः स्वार्थे भवन्ति इति न्यायात्रः स्वार्थे लौहध्वजशब्दः सङ्घवाचकः लौहध्वज्यः शिविशब्दात् शैव्यः स्वमुख्यपूर्वात् तु देवदत्तो मुखोऽस्य देवदत्तको लोकः स एषां मुख्य इति कः अत्र देवदत्तशब्दो मुख्यवाचकोऽस्य पूर्वावयव इति अस्मात् त्यो न स्यात्। वाहीकेष्वराजन्यादब्रह्मण्यादायुधजीविसङ्घात् णः। वाहीकेषु आयुधजीविनां सङ्घवाचकात् राजन्यशब्दभिन्नात् ब्राह्मणजातिवर्ज्जात् णः स्यात् नञ्द्वयेन ब्राह्मणराजन्ययोर्जातिस्वरूपे अवगन्तव्ये कौण्डीवृषशब्दात् कौण्डीवृष्यः चौद्रक्यः मानव्यः वाहीकेष्विति किं शवरपुलिन्दः अराजन्यादिति किं शालङ्कायनः आयुधः जीविनामिति किं मन्दः सङ्घातादिति किं वक्रघोणः। वृकात् णेन्यः। आयुधजीविसङ्घवाचकात् वृकशब्दात् णेन्यः स्यात् स्वार्थे। वार्केन्यः। जातिशब्दान्माभूत् कामक्रोधौ मनुष्याणां खादितारौ वृकाविव। दामन्यादेरीयः।

## ४३७। केऽकः स्वो हे तु वा।

के ७, अकः ६।, स्वः १।, हे ७, तु ।१।, वा ।१।।

कन्यका सुकन्यकः सुकन्याकः। शिवो देवता यस्यासौ शैवः शाक्तेयः।

---

आयुधजीवसङ्घाद्दामन्यादेरीयः स्यात्। दामनीयः। दामनी सौमपादिश्च सावित्रीपुत्रः औदधिः। काकन्दक्या विसक्ती च सार्वसेनिश्च वैदधिः। औदकिर्बैजवापिश्च शाकुन्तकिस्तथौपनिः। मौञ्जायनः समुद्दिष्टा दामन्यादौ त्रयोदश। क्रौष्टुक्यादेस्त्रिगर्त्तेषु। आयुधजीविसङ्घात् क्रौष्टुक्यादेः स्वार्थे ईयः स्यात्। क्रौष्टुकीयः। क्रौष्टुकिर्ब्रह्मगुप्तिश्च काध्याषि दाण्डकी तथा। जालमासिर्जालकिश्च कौण्डोपरथ इत्यपि। पर्श्वौधेयादिभ्यां ष्ट्णावस्त्रियाञ्च आयुधजीविसङ्घात् पर्श्वादेः ष्णः यौधेयादेः ट्ञः स्यात् स्वार्थे। पर्शुशब्दः ह्रुहशब्दवत् व्युत्पन्नः। पार्शवः ब्वे पर्शू-स्त्रिगर्त्ताः स्त्रियां पर्शूः। पर्शूरची मरुत् सलत् वाह्लीकवसवोऽसुरः। दाशार्हश्च पिशाचश्च वयः कार्षापणोऽश्मनिः। सन् यस्यास्ति वलन्तः। यौधेयादेः यौधेयः ब्वे यौधेयाः अजादेराकृतिगणत्वात् स्त्रियां यौधेया इत्यादि। यौधेयौशीनरावैयशौभ्रेयभरता अमी। यौक्तेयचारणेयौ च त्रिगर्त्तोऽत्र नव स्मृताः। आयुधजीविनिवृत्ते सङ्घ इति प्रवर्त्तते। व्रातवचनाण्ञः। ये नानाजातीया अनियतवृत्तयः उत्सवजीविनस्ते व्राता सङ्घास्तेभ्यो ण्ञः स्यात् स्वार्थे न तु स्त्रियाम्। व्रात्यः व्रे हसत्यः कापोतपाक्यः अस्त्रियामिति किं व्रातेति। अभिजिदादेरपत्यणान्तात् ण्यः। सङ्घादिति निवृत्तम् अभिजिदादेरपत्यणान्तात् ण्यः स्यात् स्वार्थे न तु स्त्रियाम्। अभिजितोऽपत्यम् आभिजितः स एव आभिजित्यः। अभिजिद्वैदभृच्छालावदूर्णातत् श्रमता सह। शिखावच्च शमीवच्च शश्वदष्टाव कीर्त्तिताः। अपत्यग्रहणं किम् अभिजिद्देवता अस्य आभिजितः स्थालीपाक इत्यादौ न स्यात्। अस्त्रियामिति किम् आभिजित्यः स्त्रियः। अस्यापत्यार्थत्वात् अभिजित्यस्यापत्यं युवा अभिजित्यायन इति। पूगण्यादेर्लुग् ब्वे। पूगाण्य इत्यादि स्वार्थिकात्स्या ब्वे लुक् स्यात् न तु स्त्रियाम्। लौहध्वजाः। कपोतपाकाः कौण्डीवृषाः वृकाः दामनयः क्रौष्टुकयः पर्शवः त्रिगर्त्ताः अभिजिता इत्यादि अस्त्रियामिति किं लौहध्वज्यः स्त्रियः एवं कौण्डीवृष्यः अजादित्वादाप् दामनीयाः स्त्रियः उक्ताः स्वार्थाः॥ ४३६॥

अकः खः स्यात् कपि परे बहुव्रीहौ तु वा। कन्या एव कन्यका अत्र अपित् कपि कृते अनेन ह्रस्वे स्वार्थप्रत्ययान्तास्तल्लिङ्गा एवेति स्त्रियामत आप्। एवं मृणालिका सेनानिकः यवमूकः वार्मीरुका इति। शोभना कन्या यस्य इति बहुव्रीहौ सुकन्यकः सुकन्याकः अत्र वा ह्रस्वः। अक इति किं नौरेव नौका। अत्र वाशब्दस्य व्यवस्थावाचित्वात् समासे क्वचिद्वसे परेऽपि अकः खः स्याद्वा इति बोध्यम्। तेन कालिदासकविता नवं वय इति रथोद्धतायामुद्भटः। वैदेहिबन्धोर्हृदयं विददे इति रघुः। अङ्गे षपितब्रयमवङ्गविशाखयुक्तमिति दीपिका। विबुधकृतिरभीष्टा नाडीनचवहीने इति च दीपिका। विरहिनिकृन्तन कुन्तमुखाकृतिकेतकिदन्तुरिताशे इति जयदेवश्च सङ्गच्छते। आदि पदस्य उदाहरणमाह शिवो देवता यस्यासौ शैवः अत्र णः एव शाक्तेयः अत्र णेयः एवं शाक्तः वैष्णवः गाणपत्य इत्यादि। एवं शाखा मुख अग्रजघन स्कन्ध तरस शरण चरण शृङ्ग मेघ विरस दुभ्यः साम्ये यः। शाखा इव शाख्यः मुखमिव मुख्यम् इत्यादि एवं कर्म्मणि अलं कर्म्मीणः कर्म्मसमर्थः अलं पौरुषाय अलंपौरुषीणः। अव्ययादधिशब्दादीने अधीनः आयत्तः प्राञ्चतीति प्राचीन इत्यादि। एवं तदस्यां क्रीड़ायां प्रहरणं इत्यर्थेऽपि दण्डः प्रहरणमस्यां दण्डा क्रीड़ा मुष्टिः प्रहरणमस्यां मौष्टा क्रीड़ा इत्यादौ अणित् णः। एवं घजन्तात् सोऽस्यामित्यर्थेऽपि अषिति णे दण्डपातोऽस्यामिति दाण्डपाता फाल्गुनी। श्येनपातोऽस्यामिति श्यैनम्पाता मृगया तिलपातोऽस्यामिति तैलंपाता स्वधा। उभयत्र अषित् णे मकारागमो निपात्यः। न विद्यन्ते षड्चाणि यत्र सोऽषड्चीणो मन्त्रः। अत्र ईनः। अन्यान्यप्युदाहरामि। भिक्षादेः समूहे णः। भिक्षाणां समूहो भैक्षम्। भिक्षादिस्तु। भिक्षा अहन् गर्भिणी युवति सहस्र करीष अथर्वन् चेव अङ्गार पद्धति दक्षिणा खण्डिका श्वन् युग वरत्रा हरिद्रा वड़वा हलबन्ध भिक्षुक शुक उलूक इत्यादि। २२। वाड़वादेः समूहे अणित् ण्यः। वाड़वानां समूहो वाड़व्यम्। वाड़वादिस्तु। वाड़व मानव ब्राह्मण पृष्ठ इत्यादि। ४। राजन्यादेः समूहे कण्। राजन्यानां समूहः राजन्यकम्। राजन्यादिस्तु। राजन्य राजन् शैलूष शालङ्कायन जालन्धरायण अर्ज्जुनायन सम्प्रिय मानव त्रिगर्त्त मट विराट ऊर्णनाभ देवयात औडुम्बर बैल्लवन बाभ्रव आप्रीत आर्थकामेय अम्बरीष पुत्र विल्लवन वैकर्ण वत्स धेनु हस्तिन् लक्षण दाक्ष वसति इत्यादि। २७। दाक्षिवसत्योरिकारस्य च अकारः। दाक्षीणां समूहो दाक्षकं एवं वसतीनां वासतकम्। वृद्धात् समूहभावयोः कण्। वृद्धानां समूहो भावो

वा वार्द्दकम्। पाशादेः समूहेऽर्थेत् ष्यः स्त्री। पाशानां समूहः पाश्या। पाशा-दिस्तु। पाश तृण धूम हलवात वन अङ्गार नड़ पिटक पोट पेट गल खल गन्ध गीरथ इत्यादि। १६। ब्राह्मणादेर्भावकर्म्मणोः ष्यः। ब्राह्मणस्य भावः कर्म्म वा ब्राह्मण्यम्। ब्राह्मणादिस्तु। ब्राह्मण मानव वाड़व चौर धूर्त्त आराधय विराधय उपराधय अपराधय एकभाव द्विभाव त्रिभाव अन्यभाव अचेतज्ञ संवादिन् संवेशिन संभाषिन् बहुभाषिन् शीर्षघातिन् समस्थ विषमस्थ मध्यस्थ अनीश्वर कुशल चपल निपुण पिशुन बालिश अलस दुष्पुरुष कापुरुष गणपति अधिपति दायाद विशस्ति विशाय परमस्थ रविसद्दाय गडुल विज्ञात इत्यादि। ४१। मित्रादेर्भावकर्म्मणोः ष्णः स्त्री वा। मित्रस्य भावः कर्म्म वा मैत्रम्। त्रिलादीपि सूर्य्यागस्त्यस्य इति यलोपे मैत्री। मित्रादिस्तु। मित्र उचित चतुर अनुपूर्व यथाकाम समग्र रुद्र इत्यादि। बणिक्दूताभ्यां भावकर्म्मणोः ष्यो यश्च। बणिजो भावः कर्म्म वा बाणिज्यं बणिज्यम् एवं दौत्यं दूत्यम्। सख्युर्यः। सख्युर्भावः कर्म्म वा सख्यम्। स्तेनाद् यो न लोपश्च। स्तेनस्य भावः कर्म्म वा स्तेयम्। कपिज्ञातिभ्यां ष्णेयः। कपेर्भावः कर्म्म वा कापेयम् एवं ज्ञातेयम्। लघुपूर्वादुदन्ताद्भावे ष्णः। लाघवं गौरवं मार्दवं पाटवं लघुपूर्वात् किं शत्रुत्वम्। युवादिहायनान्ताभ्यां भावे ष्णः। यूनो भावः यौवनम्। युवादिस्तु। युवन् चपल कुशल निपुण पिशुन स्थविर सुहृद कुतूहल सुभ्रातृ दुर्भ्रातृ यजमान धातृ कर्णक कुण्डक श्रवण कमण्डलु कुस्त्री दुस्त्री सुहृदय दुर्हृदय वृषण परिव्राजक सुब्रह्मचारिन् अनुशंस चेतज्ञ इत्यादि। २६। द्वैहायनं वैहायनमित्यादि। अचतुरस्य भावः अचातुर्य्यम् एवम् असङ्गतस्य असा-ङ्गत्यम् अलवणस्य अलावण्यम् एभ्यः ष्यः अपटोर्भावः अपाटवम् अत्र ष्णः। एषु सुपञ्चालादित्वादन्तपदस्य वृद्धिः। दुर्गसिंहस्तु एषु पूर्वपदस्य वृद्धिं कृत्वा आचतुर्य्यम् आसङ्गत्यम् आलवण्यम् आपटव्यम् इत्याह। एवं कूपस्य कौपीनम् अकार्य्ये गुह्ये कौपीनमित्यमरात्। एवं शालायाः शालीनोऽप्रगल्भः उभयत्र णीनः। वत्सेभ्यो हितो वत्सीयः गोभ्यो हितं गव्यं वनमित्यादि। मन एव मानसम् अत्र ष्णः तारा एव तारका अत्र कण्। इवशब्दात् तुल्यार्थेऽपि कः। अश्व इवायम् अश्वकः एवं देवदत्तक इत्यादि। एवं वङ्गस्य राजा वाङ्गः अत्र ष्णः एवं कौरव्यः कौशल्यः पाण्ड्यः एभ्यः ष्यः अत्र पाण्डोरुकारलोपो निपात्यः। कर्णोनेयाश्चेति चकारोऽनुक्त-समुच्चयार्थोऽपि। तेन प्रयोगानुसारादन्येऽपि प्रत्ययाः स्युः। यथा प्रावृषि भवः प्रावृष्येण्यः ष्यः वरेण्यः भ्रातुरपत्यं भ्रातृव्यः। कर्म्मणि शूरः कर्म्मठः। सजातीय-

सहायाभावे एकादाकिन्कौ। एक एव एकाकी एककः। स्नदः स्नौ प्रशंसायाम्। प्रशस्ता स्नत् स्नसा स्नत्स्ना एवम् अवेर्दुग्धम् इत्यर्थे अविटषम् अविसोढ़म् अविसम् अत्र षत्वाभावो निपात्यः। एवम् अवेर्विंसरीऽविपटः। देवात् स्वार्थे तः। देव एव देवता स्त्रीत्वमभिधानात्। वर्णात् स्वार्थे कारतौ। अकारोऽत् आकारः आत् औकारः औत् हसात्तु कार। ककारः चकारः ओङ्कारः वषट्कारः। राद्दफः। र एव रेफः निष्फले तिले तिलपेजः तिलपिञ्ज इत्यादि। अथ निपात्याः वृचवाचिनां फले वाच्ये इदमर्थे क्तस्य तद्धितस्य लुकि क्लीवत्वम्। आम्रस्येदं फलम् आम्रम् एवं नारिकेलं तालमित्यादि। हरीतक्यादेस्तु फले वाच्ये इदमर्थे क्ततद्धितलुकि तल्लिङ्गत्वम्। हरीतक्या इदं फलं हरीतकी हरितक्यादिस्तु। हरीतक्यम्निकी पथ्यास्त्रडीकापिप्पलीकणाः। चिञ्चा कोषातकी द्राचा कर्कटी कण्टकारिका। श्वेतपाकी च कर्कारु रेवा चेलादयः स्मृता इति। रूपत्रयं फले जम्बा जम्बूः स्त्री जम्बु जाम्बवम्। मल्लिकादेः पुष्पे वाच्ये तद्धितलुकि तल्लिङ्गत्वम्। मल्लिकायाः पुष्पं मल्लिका। मल्लिकादिस्तु। मल्लिका सुमती मुस्ता विदारी शालपर्ण्यपि। जाती हरिद्रा गम्भारी वृहती मल्लिकादयः इति। व्रीहिणामपि फले वाच्ये तद्धितलुकि तल्लिङ्गत्वम्। यथा यवस्य फलं यवः एवं मुद्गः तिल इत्यादि। एवं शुक्लादिकषायादिशीतादीनां गुणवाचिनामस्त्यर्थप्रत्ययस्य लुकि विलिङ्गत्वम्। यथा शुक्लः पटः शुक्ला धेनुः शुक्लं पुष्पम् एवं मधुरो गुड़ः मधुरा सिता मधुरं फलम्। एवञ्च शीतो वायुः शीता नदी शीतं जलमित्यादि॥ ४३७॥

श्रीरा-टी—अक् प्रत्याहारः अकः के परे स्वः स्यात् हसे तु वा। कन्यकेति कन्या शब्दात् यवादित्वात् कः अनेन स्वः सुकन्याका इति शोभना कन्या यस्या इति वाक्यं पचे सुकन्यका वा स्वः। णिकोऽस्मै सदा दीयते। प्रथमान्तादस्मै इत्यर्थे णिकः स्यात् यः प्रथमान्तनिर्दिष्टः सदा दीयते चेद्भवति अग्रभोजनं सदा दीयते अस्मै आग्रभोजनिकः प्राथमकल्पिक इत्यादि। प्राणामांसौदनमांसौदनात् षिकः। प्रथमान्तेभ्य एभ्योऽस्मै सदा दीयतेऽर्थे षिकः। प्राणाः सदा दीयतेऽस्मै प्राणिकः मांसिकः औदनिकः स्त्रियां प्राणिकीत्यादि प्राणिकभार्य्य इत्यादौ षिकविधानात्। पुंवद्भाव इत्येके भक्तात् णो वा। भक्तं सदा दीयतेऽस्मै भाक्तः पचे पूर्वेण णिकः भाक्तिकः। अस्य देवता। प्रथमान्तादस्येत्यर्थे वेत्त्यादित्वात् णः स्यात् यत् प्रथमान्तनिर्दिष्टं सा देवता चेद्भवति। मूले शिवो देवतास्येति शैवः शाक्त इति शक्तिर्देवतास्य इति वाक्यं देवताशब्देनेह देयस्य पुरोडाशादेः स्वामीष्यते यथा शैवं हविरित्यादि कथं शैवो मन्त्रः शैवः स्तव इत्यादि

त्वं शिव प्रकाशकत्वेन मन्त्रस्तुत्यादि शिवो देवतेत्युपचार इति। यमादिस्तु याम्यम् आदित्यं प्राजापत्यं पाशुपतं आग्नेयः आग्नेयो ब्राह्मण इत्युपमानात् कालेयं दैवं देवम् श्रौत्रमित्यादि। कस्य ण्ण काय:। कः प्रजापतिः को देवतास्य कायं हविः। शुक्रादियः। प्रान्तात् शुक्रशब्दात् देवतास्येत्यर्थे इयः स्यात् ण्यस्यापवादः। शुक्रो देवतास्य शुक्रियम्। शतरुद्रादेरीयस्य पतेः प्रश्च। प्रान्ताच्छतरुद्रादेर्देवतास्येत्यर्थे इय ईयश्च स्यात् तयोः पतेः प्रादेशः। शतरुद्रो देवतास्य शतरुद्रियं शतरुद्रीयम्। अपोनपात् अपांनपात् शब्दौ देवताविशेषवाचकौ अपोनपाद्देवतास्य अपोनप्त्रियम् अपोनप्त्रीयम् अपांनप्त्रीयम्। शतरुद्रा अपोनपात् अपांनपात् इति त्रयम्॥ ४३७॥ महेन्द्राद्वा तौ। प्रान्तान्महेन्द्रशब्दात्तौ इय ईयौ वा स्यातां देवतास्येत्यर्थे महेन्द्रो देवतास्य महेन्द्रीयं महेन्द्रियं पक्षे माहेन्द्रमिति। वायुपैङ्गाक्षीपुत्रादिभ्यां येयौ। प्रान्ताद्वाय्वादेयः पैङ्गाक्षीपुत्रादेरीयः स्यात् देवतास्येत्यर्थे। वायुर्देवतास्य वायव्यं वायुर्ऋतुरुषः पिता चतुष्कं परिकीर्त्तितम्। पैङ्गाक्षी पुत्रो देवतास्य पैङ्गाक्षी-पुत्रीयं तृणविन्दवीयं पैङ्गाक्षीपुत्रतृणविन्दू द्वौ। मरुत्वतादेश्च। प्रान्तात् मरु-त्वतादेर्देवतास्येत्यर्थे येयौ स्यातां मरुत्वान् देवतास्य मरुत्वत्यं मरुत्वतीयं शुनो वायुः शीर आदित्यः शुनश्च शीरश्च ते देवते अस्य शुनाशीर्य्यं शुनाशीरीयम्। मरुत्वद्-र्हमेध्यग्नीषोम द्यावा पृथिव्यपि। वस्तोपातिः शुनाशीर इह षट् परिकीर्त्तिताः। सोमात् ष्ण्यः। अत्रार्थे ष्ण्यः स्यात् सोमो देवतास्य सौम्यं हविः। अपत्योपलक्षकत्वात् सौमी ऋक् ष्ण्यस्य लोपः। महाराजप्रोष्ठपदाभ्यां ष्णिकः। प्रान्ताभ्यामाभ्यां देव-तास्येत्यर्थे ष्णिकः स्यात् महाराजो देवतास्य माहाराजिकः प्रौष्ठपदिकः। कथं महाराजिक इति महती राजिर्यस्येति हैकः कालेभ्यो भववत्। येभ्यः काल-वाचिभ्यो भवार्थे ये त्या विहितास्तेभ्यः प्रान्तेभ्यस्ते भ्यो देवतास्येत्यर्थे स्युः। मासो देवतास्य मासिकं सांवत्सरिकं वासन्तं हैमन्तं हैमनं प्रावृषेण्यमिति छन्दोभ्यस्त-द्वादि प्रागर्थे प्रान्तेभ्यश्छन्दोवाचिभ्यश्छन्द आदि प्रागर्थे वेत्यादित्वात् ष्णः स्यात्। पङ्क्तिरादिर्यस्य प्रागर्थस्य पाङ्क्तः प्रगाथः आनुष्टुभः प्रगाथः यत्र प्रगन्थनात् प्रगाथ-त्वात् द्वे ऋचौ तिस्रः क्रियेते समस्तप्रगाथः। तदादीति किम् अनुष्टुप् मध्यायास्य प्रगाथस्य प्रगाथ इति किं पङ्क्तिरादिरस्यानुवाकस्य छन्दोभ्य इति किम् उदन्यशब्द आदिरस्य प्रगाथस्य। योद्धृप्रयोजनेभ्यो युद्धस्य। प्रान्तात् युद्धवाचिनः प्रयोजन-वाचिनश्चास्येत्यर्थे वेत्यादित्वात् ष्णः स्यात् यत् सोनिर्दिष्टं तत् युद्धं चेद्भवति। अर्जुनो योद्धास्य संग्रामस्य आर्जुनः संग्रामः पञ्चालो योद्धास्य संग्रामस्य पाञ्चालः

संग्रामः सुभद्रा प्रयोजनमस्य सौभद्रः संग्रामः। संग्राम इति किं सुभद्रा प्रयोजनमस्य दानस्य योङ्प्रयोजनेभ्यः इति किं सुभद्रापिच्छितास्य संग्रामस्य। कालेभ्यः सोढ़े। प्रान्तेभ्यः कालवाचिभ्यः सोढ़ार्थे वर्त्तमानेभ्योऽस्येत्यर्थे भवादित्वात् यथाविहितं त्याः स्युः। सोढं जितमभ्यस्तमित्यर्थः। निशासहचरितमध्ययनं निशा तत् सोढ़मस्य छात्रस्य नैशम्छात्रः नैशिकः प्रादोषः प्रादोषिकः निशासम्बन्ध्यध्ययनमभ्यस्यतीत्यर्थः। निवासे। प्रान्तान्निवासेऽर्थे वर्त्तमानात् यथाविहितं भवादित्याः स्युः। निवसत्यस्मिन्निवासः यत् प्रान्तर्निर्दिष्टं स निवासश्चेद्भवति। सुघ्नो निवासोऽस्य स्रौघ्नः पुरुषः। अभिजने। अभिजनाः पूर्वबान्धवास्ते सन्ति यत्र सोऽभिजनः अर्शादित्वादः तथाच यत्र सम्प्रत्युष्यते स निवासः यत्र वान्धवैः पूर्वमुषितः सोऽभिजन इत्यर्थः। प्रान्तादभिजनार्थे वर्त्तमानात् भवादित्वादस्येत्यर्थे यथाविहितं त्याः स्युः। सुघ्नोऽभिजनोऽस्य स्रौघ्नः पुरुषः माथुरः राष्ट्रियः इत्यादि पृथग्ग्रहणमुत्तरार्थम्। सिन्धुतक्षशिलादिभ्यां ष्णाटौ। प्रान्ताभ्यामाभ्यामभिजनेऽर्थे वर्त्तमानाभ्याम् अस्येत्यर्थे क्रमात् ष्णटौ स्याताम्। सिन्धुरभिजनोऽस्य सैन्धवः। सिन्ध्वादिर्यथा। सिन्धुकश्मीरकिष्किन्ध्यं शवकम्बोजवर्णवः। गन्धार दरदौ शाल्वशब्दिका मधुमत्तथा। उरवा च वयः प्रोक्ताः शब्दा आदश कोविदैः। सिन्धुवर्णमधुकश्मीरशाल्वानां पाठः कच्छादित्वात् न तत्स्थयोर्लुकबाधनार्थः। शेषाणां त्वविषयादिति णकबाधनार्थः। तक्षशिलादेस्तावत् तक्षशिलाभिजनोऽस्य ताक्षशिलः। इह तक्षशिलावन्धौ वत्सोद्धरखर्वटौ। शवलग्रामणीकौत्संवरसङ्कुचिता अपि। कौनेहवार्मायसिंहकोष्ठाश्च काष्ठवारणम्। कंसच्छिन्नौ च कौत्सश्च शब्दाः षोड़श कीर्त्तिताः। कौत्स संवरणग्रामणी काष्ठवारणानां जनपदत्वात् णकबाधनार्थः शेषाणां त्वविषयादिति णकबाधनार्थः। ढ्यो गिरिभ्यः शस्त्रजीविनि। प्रान्तेभ्योऽभिजनेऽर्थे वर्त्तमानेभ्यो गिरिवाचिभ्योऽस्येत्यर्थे शस्त्रजीविनि वाच्ये ढ्यः स्यात्। हृद्गोलो गिरिरभिजनोऽस्य हृद्गोलीयः शस्त्रजीवि कुह्वालीयः शस्त्रजीवी। शस्त्रजीविनीति किम् ऋक्षोदो गिरिरभिजनोऽस्य विप्रस्य आर्क्षोदो ब्राह्मणः गिरिभ्य इति किं साङ्काश्योऽभिजनोऽस्य साङ्काश्यकः शस्त्रजीवी। शण्डिकादिण्यः। प्रान्तादभिजनेऽर्थे वर्त्तमानात् शण्डिकादेरस्येत्यर्थे ण्यः स्यात्। शाण्डिक्योऽभिजनोऽस्य शाण्डिक्यः सार्वसेन्यः। शण्डिका सर्वसेनश्च सर्वकेशी वुधैर्हि षट्। शङ्काबाधः शकवकः क्रचवाचः प्रकीर्त्तितः। तुदीवर्मतीभ्यां ष्णेयः। प्रान्ताभ्यामाभ्यामभिजनेऽर्थे वर्त्तमानाभ्यामस्यार्थे ष्णेयः स्यात्। तुदी अभिजनोऽस्य तौदेयः

चाम्भतेयः। शालातुरान्नीयः। शालीतुरोऽभिजनोऽस्य शालातुरीयम्। सेव्ये। अन्तात् सेव्येऽर्थे वर्त्तमानादस्येत्यर्थे अवादित्वात् यथाविहितं त्याः स्युः। स्रुघ्नः सेव्योऽस्य स्रौघ्नः माथुरः राष्ट्रिय इत्यादि। अकालदेशादचित्तात् णिकः। अन्तात् कालदेशभिन्नादचित्तवाचकात् सेव्येऽर्थे वर्त्तमानात् अस्येत्यर्थे णिकः स्यात्। अपूपः सेव्योऽस्य आपूपिकः शाष्कुलिकः पायसिकः। अचित्तादिति किं देवदत्तः अकालदेशादिति किं ग्रैष्मः स्रौघ्नः। महाराजाच्च। महाराजः सेव्योऽस्य महाराजिकः स चित्तार्थोऽयमारम्भः। गोत्रक्षत्रियाख्येभ्यो णको वासुदेवार्जुनाभ्यान्त्वणित्। अन्तेभ्यः सेव्येऽर्थे वर्त्तमानेभ्योऽपत्यान्तेभ्यः क्षत्रियाख्येभ्यश्च अस्येत्यर्थे णकः स्यात्। वासुदेवार्जुनाभ्यान्तु अकः स्यात्। ग्लुचुकायनिः सेव्योऽस्य ग्लौचुकायनः औपगवकः। क्षत्रियाख्येभ्यस्तावत् नकुलः सेव्योऽस्य नाकुलकः साहदेवकः शाल्वकः आभ्यां ग्रहणं प्रसिद्धक्षत्रियग्रहणार्थं तेन मूढक्षत्रियः सेव्योऽस्य मौढः। वासुदेवशब्दोऽत्र देववाची वासुदेवः सेव्योऽस्य वासुदेवकः एवमर्जुनकः। क्वचिदनभिधानान्न भवति पाणिनीयः पौरवीयः। ब्वे रूढाज्जनपदवत्। अन्तादभिजनेऽर्थे वर्त्तमानाद्वा विषयाद्देशतुल्याख्यक्षत्रियात् जनपदतद्वाचिभ्यामित्यादौ यस्मात् यो विहितः तस्मात् स त्यः स्यात् अस्येत्यर्थे। अङ्गाः क्षत्रियाः सेव्या अस्य आङ्गिकः वाङ्गिकः मद्रकः वृजिकः। ब्व इति किं मद्रस्यापत्यं माद्रः वृजेरपत्यं वार्ज्यः वृद्धेत् कोशलेत्यादिना ञ्यङ्। माद्रौ सेव्यौ अस्य माद्रकः वार्ज्यकः। रूढादिति किं पञ्चाला विप्राः सेव्या अस्य पाञ्चालः। णिकः पण्ये किशरादेस्तु णित् वा शलालुनः। अन्तात् पण्येऽर्थे वर्त्तमानादस्येत्यर्थे णिकः स्यात् किन्तु किशरादेः शलालुशब्दात्तु वा। मोदकः पण्यमस्य मौदकिकः आपूपिकः लावणिकः। किशरादेस्तावत् किशरं पण्यमस्याः किशरिकी नलदिकीत्यादि। किशरं नलदं पर्णी हरिद्रोशीरगुग्गुलु। हारिद्रभगवी चैव स्थगरी नदरी दश। किशरादयो दश शब्दा गन्धविशेषवाचकाः। शलालुपण्यमस्य शलालुकः इकस्य कः स्त्रियां शलालुकी पक्षे णिकः शालालुकी। शिल्पे। णिक इत्यनुवर्त्तते अन्तात् शिल्पेऽर्थे वर्त्तमानात् अस्येत्यर्थे णिकः स्यात् मृदङ्गवादनं शिल्पमस्य मार्दङ्गिकः। पाणविकः शिल्पं कौशलं क्रियाभ्यासपूर्वकज्ञानविशेष इति न्यासकारः। वस्तुतस्तु ज्ञानविशेषजन्याभिघातविशेषः। ननु मृदङ्गवादनं शिल्पमस्येत्यर्थोपादानात् मृदङ्गवादनशब्दात् त्यो भविष्यति कथं मृदङ्गशब्दादिति सत्यं मञ्चाः क्रोशन्तीति वत् मृदङ्गादिशब्दास्तत्तद्वादनेऽप्युपचारा वर्त्तन्त इति। मड्डुकझर्झराभ्यां णो वा। अन्ताभ्यामाभ्यां शिल्पेऽर्थे वर्त्तमानाभ्यां अस्येत्यर्थे

र्भ्भा वा स्यात्। मड्डुकवादनं शिल्पमस्य माड्डुकः। झाझंरः पचे माड्डुकिकः झार्झरिकः।• प्रहरणे। प्रग्रन्तात् प्रहरणेऽर्थे वर्त्तमानादस्येत्यर्थे णिकः स्यात् मण्डूकगत्या णिकोऽनुवर्त्तते। असिः प्रहरणमस्य आसिकः चाक्रिकः प्रासिकः धानुकः उसन्तादिकस्य कः। शक्तियष्टिभ्यां णीकः। प्रग्रन्ताभ्यां प्रहरणार्थे वर्त्तमानाभ्यामाभ्याम् अस्येत्यर्थे णीकः स्यात् णिकस्य बाधकः। शक्तिः प्रहरणमस्य शाक्तीकः याष्टीकः। शीले। प्रग्रन्ताच्छीले अर्थे वर्त्तमानादस्येत्यर्थे णिकः स्यात्। परुषवचनं शीलमस्य पारुषिकः अपूपभक्षणं शीलमस्य आपूपिकः अत्रापि उपचारात् परुषादिशब्दा वचनादौ वर्त्तन्ते। छत्रादेर्णः। प्रग्रन्ताच्छीलार्थे वर्त्तमानाच्छत्रादेर्णः स्यात् अस्येत्यर्थे। छत्रं छादनमावरणं शीलमस्य छात्रः। छत्रं शिक्षा क्षषिर्भिक्षा चुधा सत्यावृतानि च। पुरोदास्योदकस्थानकर्म्माणि विशिखा तथा। आवन्तात् स्थः। प्रग्रन्तादावन्तात् स्थाधोर्निष्पन्नात्ः शीलार्थे वर्त्तमानादस्येत्यर्थे नः स्यात्। संस्था शीलमस्य सांस्थः स्त्रियां सांस्था। तपश्चुराभ्यां णः। तपः शीलमस्याः तापसी चुरा शीलमस्याः चौरी। अध्ययने कर्म्मवृत्तम्। अध्ययनविषये कर्म्मवृत्तमस्येत्यर्थे ;प्रग्रन्तात्ः णिकः स्यात्। एकरूपम् कर्म्मवृत्तं अध्ययनेऽस्य ऐकरूपिकः तार्थे गसः। एकमन्यत् कर्म्मवृत्तमध्ययने अस्य ऐकान्यिकः अध्ययने नियुक्तस्य परीक्षाकाले पाठितस्खलितरूपमेकम् अन्यत् कर्म्मजातमित्यर्थः। अध्ययने ह्यन्यत्वमपपाठरूपमेव सम्भवति। बह्वच्पूर्वादिकः। प्रग्रन्ताद्बह्वच्पूर्वदात् कर्म्मवृत्ताध्ययनेऽस्येत्यर्थे इकः स्यात्। द्वादशरूपाणि कर्म्माणि वृत्तान्यध्ययनेऽस्य द्वादशरूपिकः त्रयोदशान्यिकः। अपपाठ एव वृत्ते त्य इष्यते इति न्यासकारः। अस्तिनास्तिभ्यां मतौ। प्रग्रन्ताभ्यामाभ्यां मतौ वर्त्तमानाभ्याम् अस्येत्यर्थे णिकः स्यात्। विद्यमानः परलोकभावो यस्य स विद्यमानपरलोकः स्वर्गः परलोकोऽस्ति इति ज्ञानं यस्य स आस्तिकः। एवं परलोको नास्ति इति ज्ञानं यस्य स नास्तिकः सदसत्परलोकत्वे अस्तिनास्तिशब्दौ व्यौ। परे तु त्याद्यन्तप्रतिरूपकौ निपातौ वदन्ति अन्ये तु विधिबलात् त्याद्यन्तादेव त्य इत्याहुः। दिष्टात् प्रमाणिकदैवपरयोः। प्रग्रन्तान्मतौ वर्त्तमानाद्दिष्टशब्दादस्येत्यर्थे णिकः स्यात् अनयोरर्थयोः प्रमाणान्तःपातिनी मतिरस्य स दैष्टिकः दैवपरे तु दैष्टिकः। तथाच माघः दैष्टिकतां न निषीदति पौरुष इति। परिमाणे। प्रग्रन्तात् परिमाणे वर्त्तमानादस्येत्यर्थे अर्हादित्वात् यथाविहितं त्याः स्युः। प्रस्थः परिमाणमस्य प्रास्थिकः द्रौणिकः षाष्टजीवितं परिमाणमस्य षाष्टीकः वर्षशतं परिमाणमस्य वार्षशतिकः द्वैषष्टी

जीवितं परिमाणमस्य इति वाक्ये गादलुग्विधानात् द्विसाप्ततिक इति जयादित्यः। शतं परिमाणमस्य शत्यः शतिकः पञ्चकः बहुकः गणकः कतिकः यावत्कः यावतिकः विंशतिकः वंशिकः अर्द्धिकः कार्षापणिकः प्रतिकः शौर्पः पौर्पिकः अध्यर्द्धशूर्पः अध्यर्द्धशौर्पः साहस्रः अध्यर्द्धसहस्रम् अध्यर्द्धसाहस्रम् अध्यर्द्धखारिकः विंशतिकीनः अध्यर्द्धपण्यः द्विशाणः द्वैशाणः द्विनिष्कः द्विनैष्किकः खारीकः इत्यादि। संख्यायाः सूत्राध्ययनसङ्घेषु संज्ञायाम्। सूत्रादित्यार्थविशेषणं प्रान्तात् संख्यावाचिनोऽस्येत्यर्थे अर्हादिवत् त्याः स्युः संज्ञायाम्। अष्टाध्यायाः परिमाणमस्य सूत्रस्य अष्टकं पाणिनीयं दशकं वैयाघ्रपदीयं त्रिकं काशकृत्स्नम् अध्ययनं तावत्. पञ्च परिमाणमस्याधीतस्य पञ्चकोऽधीतः सप्तकः अष्टकः अधीतिरध्ययनं पाठः तस्य संख्या परिमाणं पञ्चावृत्तयः पञ्चवाराः पञ्चरूपाध्ययनमस्य पञ्चकमध्ययनम्। स्तोमे डविधिरिति चान्द्राः। पञ्चदशमन्त्राः परिमाणमस्य पञ्चदशस्तोमः एकविंशः स्तोमः प्राणिसमूहे सङ्घशब्दो रूढः अतएव उक्तं सूत्रमिति। पञ्चदशाभ्यां डत्वर्गे। प्रान्ताभ्यामाभ्यां वर्गाभिधेये तदस्य परिमाणमित्यर्थे डत् स्यात् कस्यापवादः। पञ्चपरिमाणमस्य वर्गस्य पञ्चत् वर्गः दशपरिमाणमस्य वर्गस्य दशत् वर्गः पक्षे पञ्चकः दशकः वर्गः। शतिर्द्विदशतः शत्तु त्र्यादेर्दशतस्तथा। षड़ादेस्तिरेव स्यादेतेषु दशतो हि लुक्। द्वेर्विंत्रेस्त्रिं चतुर्विं पञ्चाष्टोऽशीषषश्चषषस्याद्दशदशतस्त्वे मर्मैवदशदशतः शतम्। द्वौदश तौ परिमाणमस्य विंशतिः। त्रयोदशतः परिमाणस्य त्रिंशत्। चतुर्दशतः परिमाणमस्य चत्वारिंशत्। पञ्चदशतः परिमाणमस्य पञ्चाशत्। षड्दशतः परिमाणमस्य षष्टिः। सप्तदशतः परिमाणमस्य सप्ततिः। अष्टादशतः परिमाणमस्य अशीतिः। नवदशतः परिमाणमस्य नवतिः। दशदशतः परिमाणमस्य शतम्। त्रिचत्वारिंशद्भ्यां डन् ब्राह्मणाख्ये ग्रन्थनामनि। प्रान्ताभ्यामाभ्यां तदस्य परिमाणमित्यर्थे डन् स्यात् ब्राह्मणाख्यग्रन्थनामनि। डनावितौ। त्रिंशदध्यायाः परिमाणमेषां ब्राह्मणानां त्रिंशानि चत्वारिंशानि ब्राह्मणानि। पञ्चतस्तिर्डिच्च। प्रान्तात् पञ्चच्छब्दात् तिः स्यात् स च डित् ड़िति टिलोपः। पञ्चत् परिमाणमस्य पङ्क्तिश्छन्दः टिलोपे कङि नस्य नुत्वे कङः। समयात् प्राप्ते। प्रान्तात् समयशब्दात् प्राप्तेऽर्थे अर्हत्यादित्वात् णिकः स्यात् अस्येत्यर्थे। समयः प्राप्तोऽस्य सामयिकं कार्य्यम्। कालात् यः। प्रान्तात् कालशब्दात् प्राप्तेऽर्थे वर्त्तमानादस्येत्यर्थे यः स्यात्। कालः प्राप्तोऽस्य काल्यं शीतम्। ऋत्वादेः णः। प्रान्तादृत्वादेः प्राप्तेऽर्थे वर्त्तमानादस्येत्यर्थे णः स्यात्।

ऋतुः प्राप्तोऽस्य आर्त्तवं पुष्पं चेत्यादि। ऋतुर्योपरतयैव प्राप्तितोऽपि वर्ण्यन्ता:। प्रयोजने। प्रग्रन्तात् प्रयोजनेऽर्थे वर्त्तमानात् लेरर्हत्यादित्वात् णिकः स्यात् अस्येत्यर्थे। इन्द्रमहः प्रयोजनमस्य ऐन्द्रमहिकः गार्ग्यमहिकः। एकागाराच्चौरे। प्रग्रन्तादेकागारशब्दात् प्रयोजनेऽर्थे वर्त्तमानादस्येत्यर्थे णिकः स्यात् चौरेऽभिधेये। एकागारः प्रयोजनमस्य ऐकागारिकश्चौरः। विशाखाषाढ़ाभ्यां णो मन्थदण्डयोः। प्रग्रन्तात् विशाखाशब्दान्मन्थे वाच्ये आषाढ़ाशब्दाद् दण्डे वाच्ये प्रयोजनेऽर्थे वर्त्तमानादस्येत्यर्थे णः स्यात्। विशाखा प्रयोजनमस्य मन्थस्य वैशाखो मन्थः आषाढ़ो दण्डः। चूड़ादेश्च। प्रग्रन्ताच्चूड़ादेः प्रयोजनेऽर्थे वर्त्तमानादस्येत्यर्थे णः स्यात्। चूड़ा प्रयोजनमस्य चौड़ः। श्रद्धा प्रयोजनमस्य श्राद्धमित्यादि आकृतिगणोऽयम्। अनुप्रवचनादेरीयो लुक् तु स्वस्तिवाचनादेः। प्रग्रन्तात् प्रयोजनार्थे वर्त्तमानादस्येत्यर्थे ईयः स्यात् स्वस्तिवाचनादेस्तु ईयस्य लुक्। अनुप्रवचनं प्रयोजनमस्य अनुप्रवचनीयम्। अनुप्रवचनं दीर्घजीवितोत्थापने अपि। उपस्थानं तथा सम्प्रेषणाभरणमित्यपि। अनुवासनसंयुक्तमनुवादनमीरितम्। स्वस्तिवाचनं प्रयोजनमस्य स्वस्तिवाचनम्। स्वस्तिवाचनपुण्याहवाचने शान्तिवाचनम्। ऋद्धिवाचनमित्यादि बुधैरेव प्रकीर्त्तितम्। सपूर्वदात् प्रवेशनादेः। प्रग्रन्तात् सहपूर्वदात् प्रवेशनादेः प्रयोजनेऽर्थे वर्त्तमानात् अस्येत्यर्थे ईयः स्यात्। गृहे प्रवेशनं प्रयोजनमस्य गृहप्रवेशनीयम् अश्वप्रवेशनीयं प्रपापूरणीयं प्रासादारोहणीयम्। प्रवेशनं प्रपदनं पूरणारोहणे अपि। समापनं चेति पञ्च शब्दा इह समीरिताः। धनादेर्यः। प्रग्रन्ताद्धनादेः प्रयोजनेऽर्थे वर्त्तमानादस्येत्यर्थे यः स्यात्। धनं प्रयोजनमस्य धन्यः। धनमायुर्यशः स्वर्गधर्म्माः पञ्चाऽत्र कीर्त्तिताः। कालात् प्रकृष्टे णिकः। प्रग्रन्तात् प्रकृष्टेऽर्थे वर्त्तमानात् कालशब्दादस्येत्यर्थे णिकः स्यात्। प्रकृष्टः कालोऽस्य कालिकम् ऋणम् कालिकं वैरम्। स्यादीयोऽस्मिंश्च परिखायास्तु ण्येयः। प्रग्रन्तादस्यास्मिन् वार्थे ईयः स्यात् परिखाशब्दात्तु ण्येयः स्यात्। प्रोनिर्दिष्टं तत् स्यात् चेत् भवति। प्राकारः स्यादासां प्राकारीया इष्टकाः प्राकारः स्यादस्मिन् प्राकारीया इष्टकाः प्राकारः स्यादस्मिन् प्राकारीयो देशः। प्रासादीयं दारु प्रासादीया भूमिः क्वचिदनभिधानान्न स्यात् प्राकारो देवदत्तः स्यात्। परिखा स्यादस्यास्मिन् वा पारिखेयः स्यादिति सम्भावने स्त्री। उगवादिभ्यो हितवत्। प्रग्रन्तादुवर्णान्तात् गवादेश्चास्याऽस्मिन् वा स्यादर्थे हितार्थे ये विहितास्ते स्युः। धेनुरस्यास्मिन् वा स्यात् धैनव्यं गव्यम् अपूप्यम् अपूपीयं लक्ष्

कष्टमित्यादि। पौर्णमास्यामस्मिन् संज्ञायाम्। प्रथमान्तात् पौर्णमास्यां वर्त्तमानात् अस्मिन्नित्यर्थे वेत्यादित्वात् णः स्यात् संज्ञायां गम्यमानायाम्। पौषी पौर्णमासी अस्मिन् मासेऽर्द्धमासे संवत्सरे वा पौषो मासोऽर्द्धमासो वत्सरश्च। एवमभिधानान्नेह पौषी पौर्णमासी अस्मिन् दशरात्रे इति एवं भूतकमासेऽपि न स्यात्। अश्वत्थ्याग्रहायणीभ्यां णिको वा तु चैत्री श्रावणी कार्त्तिकी फाल्गुनीभ्यः। प्रथमान्ताभ्यामाभ्यां पौर्णमास्यां वर्त्तमानाभ्यामस्मिन्नित्यर्थे णिकः स्यात्। चैत्रादेस्तु वा। अश्वत्थशब्दोऽश्विनीपर्य्यायः अविशेषे लुप् अश्वत्थात्तु संज्ञायां वा तु चित्रेत्यादिना लुप्। अश्वत्था पौर्णमासी अस्मिन् मासि आश्वत्थिको मासः। आग्रहायणी पौर्णमासी अस्मिन्मासे आग्रहायणिको मासः आग्रहायणशब्दात् प्रज्ञादित्वात् स्वार्थे णः पौर्णमासी विशेषणादाग्रहायणीसंज्ञायां नो णः। चैत्रादेस्तु चैत्री पौर्णमासी अस्मिन् मासे चैत्रिकः चैत्रः श्रावणिकः श्रावणः कार्त्तिकः फाल्गुनिकः फाल्गुनो मासः। पदात् दृश्ये यः। प्रथमान्तात् पदात् दृश्येऽर्थे वर्त्तमानादस्मिन्नित्यर्थे यः स्यात्। पदं दृश्यमस्मिन् पद्यः पन्थाः पद्यः कार्दमः पदं पादचिह्नं दृश्यं दर्शनयोग्यमित्यर्थः। एतेन कर्दमस्यावस्था उच्यते नातिद्रवो नातिशुष्कामित्यर्थः। प्रहरणात् णः क्रीड़ायाम्। अस्मिन्निति वर्त्तते इदम्शब्दस्य क्रीड़ाविशेषणत्वात् लिङ्गव्यत्ययेनास्यामिति। प्रथमान्तात् प्रहरणवाचिनोऽस्यामित्यर्थे णः स्यात् क्रीड़ाविषये। दण्डप्रहरणमस्यां क्रीड़ायां दाण्डा मौष्टी क्रीड़ा प्रहरणादिति किं मनी भूषणमस्यां क्रियायाम्। क्रीड़ायामिति किं खड्गः प्रहरणमस्यां सेनायाम्। भावघञन्तात् वृत्तौ स्त्रियाम्। प्रथमान्ताद्भावविहितघञन्तात् अस्यामित्यर्थे णः स्यात् तदन्तश्च स्त्रियाम्। श्येनपातोऽस्यां क्रियायां श्यैनम्पाता मृगया तैलं पाता पितृक्रिया दाण्डपाता तिथिः मौषलपाता भूमिः। पूर्णमासात् णो वर्त्तते। प्रथमान्तात् पूर्णमासशब्दादस्यां वर्त्तते णः स्यात् पूर्णमासो वर्त्ततेऽस्यां तिथौ पौर्णमासी तिथिः पूर्णमाश्चन्द्र तस्येयं इदमर्थे णः पौर्णमासीति व्युत्पत्त्यन्तरम्। अथ प्रकीर्णकम्। कालात् ब्रह्मचर्य्यमस्येति णिकः। कालवाचिनो ब्रह्मचर्य्यमस्येति णिकः स्यात्। मासं व्याप्य ब्रह्मचर्य्यमस्य मासिको विप्रः आर्द्धमासिकः सांवत्सरिकः। मासो ब्रह्मचर्य्यस्यास्य मासिक इति प्रथमान्तात् त्य इत्यपरे। एकदिशि। एकदिश्यर्थे यत्रादित्वात् यथाविहितं त्याः स्युः। सुदाम्न एकदिक् सौदामनी विद्युत् हैमवती वैककुदी पैलुमूली। तस्। एकदिश्यर्थे तस् स्यात् सुदाम्न एकदिक् सुदामतः मौलुपर्व्वेधाविति नस्य लुप् खरादिपाठादिति व्यं एवं हिमवत्तः पीलुमूलतः। उरसो यश्च। उरः

शब्दादेकदिश्यर्थे तस् यौ स्याताम्। उरसा एकदिक् उरस्तः उरस्यः। नौ वयो विष तुला धर्मेभ्यस्तार्य्य तुल्य वध्य सम प्राप्ये। एभ्यः क्रमादेष्वर्थेषु यः स्यात्। नावा तार्य्यं नाव्यं वयसा तुल्यः वयस्यः विषेण वध्यः विष्यः तुलया समः तुल्य धर्म्मेण प्राप्यं धर्म्म्यम्। हलसीताभ्यां क्रष्टसङ्गतयोस्तदन्ताच्च। आभ्यामनयोरर्थयोः क्रमात् यः स्यात् तदन्ताच्च। हलेन क्रष्टं हल्यः सीतया सङ्गतं सीत्यं द्विहल्यं द्विसीत्यम्। सतजनाभ्यां साधनजल्पयोः। सत्यं जन्यम्। मूलात् समानास्ययोः। मूलशब्दात् समे आनास्ये च यः स्यात्। मूलेन समः मूल्यः पटः यावद्धनं पटोत्पत्तौ लग्नं तावदेव लभत इत्यर्थः। मूलेन आनास्यं अनभिभवनीयं मूल्यम् उत्पाटनव्यतिरेकेणालभ्यपलादीत्यर्थः। स मुख्य एषामिति कः। लेः कः स्यात् मुख्य एषामित्यर्थे। त्वं मुख्य एषां त्वत्काः मत्काः देवदत्तका इत्यादि। अन्नमस्मिन् प्रायेण नाम्नि ट्नं नौ तु कुल्मासवटकाभ्याम्। प्रायेणान्नमस्मिन्नित्यर्थे कः स्यात् नाम्नि गम्यमाने कुल्मासात् ट्नः वटकादिनश्च। गुड़ापूपाः प्रायेणान्नमस्यां गुड़ापूपिका पौर्णमासी स्त्रियां काप्यदिः एवं तिलापूपिका कौल्मासी वटकिनीतिथिः स्वभावात् स्त्रीत्वम्। धातुपारायणे कुल्मासी दन्त्यवान्। शस्यात् परिजाते। शस्यशब्दो गुणवचनस्तस्मात् कः स्यात् परिजातेऽर्थे। शस्येन गुणेन परिजातः सम्पन्नः शस्यको मासः शस्यको वत्सरः शस्यकः शालिः सर्वप्रकारेण गुणसम्पन्न इत्यर्थः। अंशाद्धारिणि। अंशशब्दाद्धारिण्यर्थे कः स्यात्। अंशको दायादः। अनोः कमितर्य्यतेस्तु वार्थश्च। अनुशब्दात् कमितरि वाच्ये कः स्यात्। अभेस्तु केर्घो वा। अनुकामयते अनुकः अभिकामयते अभिकः अभीकः। तन्त्रादचिरापङ्कवे। तन्त्रशब्दात् अचिरापङ्कवेऽर्थे कः स्यात्। तन्त्रको नवकर्पटः। शीघ्रशिथिलार्थाभ्यामुष्णशीताभ्यां कारिणि। उष्णशीताभ्यां शीघ्रशिथिलाभ्यां कारिण्यर्थे कः स्यात्। उष्णं शीघ्रं कारी उष्णको दक्षः शीतं शिथिलं कारी शीतकोऽलसः। ब्राह्मणोष्णाभ्यां देशयवागूविशेषयोः। आभ्यामनयोरर्थयोः क्रमात् कः स्यात्। ब्राह्मणको देशविशेषः यत्र देशे आयुधजीविनो ब्राह्मणा वर्त्तन्ते स देशश्च उच्यते उष्णिका यवागूः। अध्यारूढादधिश्च। अध्यारूढशब्दात् कः स्यात् केऽधिरादेशश्च। अध्याङ्‌ पूर्वरुहधोऽर्थे यदा क्तस्तदेव अधिको द्रोणः खारीं यदा तु टे क्तः तदा टस्योक्तत्वात् अधिका खारी द्रोणेन। पार्श्वादन्विच्छति णिकस्त्वयः शूलदण्डाजिनाभ्याम्। पार्श्वशब्दादन्विच्छतीत्यर्थे कः स्यात् अयःशूलदण्डाजिनाभ्यां णिकः। पार्श्वमनजूपायलक्षणम्। तेनान्विच्छति अनुसरति पार्श्वकः शठः। अयः शूलिकः तीक्ष्णकारी साहसिकः

इत्यर्थः। दण्डाजिनेनान्विच्छति दण्डाजिनकः दाम्भिकस्तपस्वीत्यर्थः। उत्कण्ठाव-त्युदः। उदः कः स्यात् उत्कण्ठावतीत्यर्थे। उत्कः प्रवासी। शृङ्खलादस्य कर-भस्य बन्धने। शृङ्खलशब्दादस्य करभस्य बन्धनमित्यर्थे कः स्यात्। शृङ्खलं बन्धन-मस्य करभस्य शृङ्खलकः बन्धनमिति किं शृङ्खलं वाममस्य करभस्य करभ इति किं शृङ्खलं बन्धनमस्य गोः। धनहिरण्यात् कामे। आभ्यां कामे कः स्यात्। धनस्य कामः धनकः गेहेऽपि निस्पृहस्यास्य मुमुक्षोर्धनकः कुतः। इति शिष्टप्रयोगः। स्वाङ्गेभ्यः प्रसिते णिकस्तूदराद्याद्यूने। स्वाङ्गवाचिभ्यः प्रसितेऽर्थे कः स्यात्। उदरात् णिकः आद्यूने वाच्ये। केशेषु प्रसितं केशकस्तत्पर इत्यर्थः दन्तकः नखक इत्यादि घनिर्देशात् स्वाङ्गसमुदायादपि नखकेशक इत्यादि उदरे प्रसितः औद-रिक आद्यूनः क्षुधया पीड्यमानः स्वस्यैवोदरपूरणमपेक्षत इत्यर्थः। अन्यत्र उदरकः। कालाद्रोगनाम्नि। कालवाचकाद्रोगनामनि वाच्ये कः स्यात्। द्वितीयको ज्वरः द्वितीयदिनोत्पन्नो ज्वरः इत्युच्यते तृतीयकः चतुर्थक इत्यादि। कार्य्यकारणे अस्येति। लेः कार्य्यमस्य कारणमस्येति चार्थे कः स्यात् रोगनामनि वाच्ये। शीतं कार्य्यमस्य ज्वरस्य शीतको ज्वरः विषपुष्पं कारणमस्य ज्वरस्य विषपुष्पको ज्वरः। अल्पह्रस्वकुत्सिताज्ञातावक्षेपणेषु। रोगनाम्नीति नानुवर्त्तते। लेः कः स्यात् एष्वर्थेषु। अल्पं तैलं तैलकं ह्रस्वो वृक्षः वृक्षकः कुत्सितोऽश्वः अश्वक इहाज्ञातशब्देन यः स्वेन रूपेण ज्ञाते विशेषेणाज्ञातः स गृह्यते कस्यायमश्वकः अश्वकः। अवक्षिप्यते न्यक् क्रियते येन तदवक्षेपणं तस्मिन् वैयाकरणकं केन त्वं विकत्थसे व्याकरणत्व गर्वितः। कृपायाम्। कृपाकारुण्येनाभ्युपपत्तिः तस्यां गम्यमानायां लेः कः स्यात्। पुत्रकः बुभुक्षितकः ज्वरितकः। तद्युक्तान्नीतौ। कृपायुक्तात् लेः कः स्यात् नीतौ गम्यमानायाम्। हन्तते गुडकाः। कृपायुक्तो दानेनाश्वासयति दान-रूपानीतिर्गम्यते पूर्वेण प्रत्यासत्तेरनुकम्प्यमानादेव त्यः इह तु व्यवहितादपि यथा स्यादिति वचनम्। इनेयौ च जातेः नृनाम्नः। मनुष्यनामधेयजातिशब्दात् कृपायां नीतौ गम्यमानायां क इनेयौ च स्युः। व्याघ्रनामा कश्चित् सोऽनु-कम्पितः शिक्षितो वा व्याघ्रकः व्याघ्रिणः व्याघ्रियः इत्यादि। अजिनान्ताल्लोपश्चाजि-नस्य। अजिनान्तान्नाम्नस्ते स्युः कृपायां नीतौ गम्यमानायां तेषु अजिनस्य लोपश्च। व्याघ्राजिननामा कश्चित् सोऽनुकम्पितः शिक्षितो वा व्याघ्रकः व्याघ्रिणः व्याघ्रियः एवं कृष्णाजिनात् कृष्णिनः कृष्णिकः कृष्णियः इत्यादि। इकस्य बह्वचोऽचि त्वादितीयाश्चतुर्थाचो लोप्यः पूर्वदस्य पर्य्यायेण उक इनस्य नः। मनुष्यनाम्नो बह्वचः

क इन इय इकश्च एते स्युः कृपायां नीतौ च गम्यमानायाम् आदिद्वितीयाच आदि-चतुर्थाचः परोभागी लोप्यश्च। पूर्वदश्च पर्य्यायेण लोप्यः उगन्तात् परस्य इनस्य नादेशश्च। देवदत्तोऽनुकम्पितः शिक्षितो वा देवदत्तकः अचि तु देविकः देविनः देवियः पचे दत्तकः दत्तिकः दत्तियः शोभनकर्म्मानुकम्पितः शिक्षितो वा शोभन-कर्म्मकः अचि तु शोभिकः शोभिनः शोभियः आदिद्वितीयाचः परो लोप्यः पूर्व-दस्य लोपे कर्म्मकः कर्म्मिकः कर्म्मिणः कर्म्मियः इत्यादि। आदिचतुर्थात् तु वृह-स्पतिदत्तकः वृहस्पतिकः वृहस्पतिनः वृहस्पतियः पूर्वस्य पर्य्यायेण लोपे दत्तिकः दत्तिनः दत्तियः इति मधुसूदनदत्तोऽनुकम्पितः शिक्षितो वा मधुसूदनदत्तकः मधु-सूदिकः मधुसूदिनः मधुसूदिय इत्यादि। पूर्वदस्य लोपः दत्तिकेत्यादि। बह्वच इति किं दत्तकः अचि किं देवदत्तकः उकस्तु वायुदत्तोऽनुकम्पितः शिक्षितो वा वायुदत्तकः अचि द्वितीयाचः परो लोप्यः न्वोर्लोपौ ताविति वायविकः इनस्य नत्वे वायुनः वायवियः एवं भानुदत्तकः भानविकः भानुनः भानवियः पितृदत्तकः पिविकः पितृणः पिवियः। एवं भ्रातृदत्तकः भ्राविकः भ्रातृणः भ्राविय इति पचे दत्तकः इत्यादि। परैकदेशिनस्तु इयस्य यादेशं स्वीकुर्वन्ति तन्मते वायुयः पितृय इति। तदुक्तम्। चतुर्थादनजादौ च लोपः पूर्वपदस्य च। अप्रत्यये तथैवेष्ट उगन्तान्न इनस्य चेति। तन्मते अनजादौ के वृहस्पतिकः। प्रत्ययाभावे-ऽपि देवः पूर्वलोपे दत्तः पचे देवदत्त इत्यादि। उपपूर्वात्तकौ च। मनुष्यनाम्न उपादेः परौ तकौ चकारात् इक इन इय एते स्युः कृपायां नीतौ च गम्यमानायां द्व्यचः परभागी लोप्यश्च अचि। उपदत्तोऽनुकम्पितः शिक्षितो वा उपतः उपकः उपिकः उपिनः उपियः। अचि किम् उपदत्तकः। परलोप्ये द्वितीयैत्त्व। बह्वचो ...ष्यनाम्न एषु परभागी लोप्य एत्त्व लोप्यः अचि परे। कुवेरदत्तोऽनुकम्पितः शिक्षितो वा कुविकः कुविनः कुवियः एवम् उपेन्द्रदत्तोऽनुकम्पितः शिक्षितो वा उपिकः उपिनः उपियः कहो उदत्तोऽनुकम्पितः शिक्षितो वा कहिकः कहिनः कहियः अचि किं कुवेरदत्तकः उपेन्द्रदत्तकः कहोउदत्तक इत्यादि। एकाजद-परश्च। बह्वचो नृनाम्न एकाच्छब्दात् परभागी लोप्यः स्यादचि कृपायां नीतौ च गम्यमानायाम्। वागाशीर्दत्तोऽनुकम्पितः शिक्षितो वा वाचिकः वाचिनः वाचियः। एवं षड़ङ्गुलिदत्तोऽनुकम्पितः शिक्षितो वा षडिकः षड़िनः षड़ियः नञानिर्दिष्ट-त्वादनदमिति भाष्यम् अचि किं वागाशीर्दत्तकः षड़ङ्गुलिदत्तकः। आदितृतीया-दचोऽर्य्यमादेः। बह्वचो नृनाम्नोऽर्य्यमादेरादितृतीयाचः परभागी लोप्यः स्यात्

अचि परे कृपायां नीतौ गम्यमानायाम्। अर्य्यमदत्तोऽनुकम्पित: शिचितो वा आर्य्यमिक: आर्य्यमिण: आर्य्यमिय:। अचि त्विम् अर्य्यमदत्तक:। अर्य्यमा शेवल-श्चैव विशालवरुणौ तथा। विशाखशरणश्चापि अर्य्यमादि: प्रकीर्त्तित:। अर्य्यमादेरिति किं शोभनकर्म्मानुकम्पित: शिचितो वा शोभिक: इत्यादि। क: प्रतिरूपनाम्नो-रिवे। प्रतिरूपं प्रतिकृतिस्तस्यां संज्ञायां च इवार्थे सादृश्ये क: स्यात्। अश्वक: गर्दभक: चित्रक: यया तत्प्रकृतिरुच्यते अथवा तत्सदृशस्यैव संज्ञायाम्। प्रतिरूप इति किं गौरिव गवय:। लुर्मनुष्यविक्रेयजीविकार्थचित्रध्वजार्चासु। मनुष्यवाच्ये विक्रेयवर्जजीविकार्थेषु कस्य लुप् स्यात्। चञ्चेव नर: चञ्चा चञ्चावर्द्धिका जीविका-र्थेषु चित्रध्वजाऽर्चान्नित्याभिधानम्। राम: कृष्णरामादिप्रतिकृतिं गृहीत्वा भ्रमतीत्यर्थ: ध्वजेगरुड़: वृष: अर्चायां वासुदेव: देवनादीनां जीविकार्था: प्रतिकृतय उच्यन्ते। अविक्रेय इति किं वासुदेवकात् विक्रीणीते। अनर्चादिषु तु हस्तिकान् छायादर्शको दर्शयति। देवपथादेश्च। देवपथादे: प्रतिरूपे कस्य लुप् स्यात्। देवपथस्य प्रतिकृति: देवपथ:। देवाजशङ्कुहसेभ्य: पथिन् कङ्कमुख तथा। मत्स्येन्द्रवास-रज्जुश्च काकतुण्डश्च कश्यप:। सिद्धपथो दश प्रोक्ता बुधैर्वा विपथेन च। वस्ते: ण्येय: शिलायास्त्वणिड्वा। वस्तिशब्दादिवार्थे ण्येय: स्यात् शिलाशब्दात्तु ण्येयोऽणिड्वा स्यात्। वस्तिरिव वास्तेय: शिलेव शिलेय: अप्रतिरूपेऽपि वास्तेय इत्यपर:। कुशाग्रादेरीय:। कुशाग्रादिशब्देभ्यो इवार्थे ईय: स्यात् कुशाग्रमिव कुशाग्रीया बुद्धि: सूक्ष्मत्वादतितीक्ष्णत्वाच्च। अध्वजरतीव अध्वजरतीयम् अध्वजरती समाने वर्त्तते तद्वदिष्टानिष्टत्वात्। काकतालीयं काकतालशब्द: काकस्य गमन एव तालस्य पतनेन काकस्य मरणे वर्त्तते तद्वत् आकस्मिकं सङ्गतम् एवं घुणाक्षरीयम् अजापनीयम् अध्वगतीयं खलतिबिल्वीयमित्यादि। काकतालादिशब्दानां अर्थविशेषे स: गणपाठबलात् अथवा मयूरव्यंसकादित्वात्। शर्करादे: ष्ण: सपत्न्यास्त्वणित्। शर्करादेरिवार्थे ष्ण: स्यात् सपत्नीशब्दात्त्वणित् शर्करेव शार्कर:। शर्करा-पुण्डरीकश्च शतपत्रम् कपालिका। गोलोमापि च नाराचं सिकता नकुलं तथा। कृकाटिका च गोपुच्छं कृपा चैव प्रयोमत:। सपत्नीव सपत्नश्च प्रतिपच्च: स उच्यते। अङ्गुल्यादे: णिक एकशालायास्त्वणित्। अङ्गुल्यादेरिवार्थे णिक: स्यात् एकशालायास्तु णिक इट्रहित:। अङ्गुलीव अङ्गुलिक:। अङ्गुलि कुलिशं वल्गु रुदखित् बभ्रुमण्डलम्। योनीचर्म्मणिर्वक्र: कपिलो भरुजो हरि:। खलवर्णौ च विज्ञेयौ शकुलिश्चैरसा सह। एकशालेव एकशालिक: चकारात् णिकश्च ऐकशालिक इत्यन्ये। कर्क-

लोहिताभ्यां णीकः। आभ्यामिवार्थे णीकः स्यात् कर्क इव कार्कीकः लौहितीकः स्वयमलोहितः स्फटिकादिः जवाद्याश्रयवशाल्लोहित इवाभासते यः स एवोच्यते। शाखादेर्यो द्रोस्तु भव्ये च। शाखादेरिवार्थे यः स्यात् द्रुशब्दात्तु भव्यं चेद् यः। शाखेव शाख्यम्। शाखामुखो रोजघानाग्र मेघाः स्कन्धश्च श‍ृङ्गं वचनञ्च तत्र। व्रातेन सार्द्धं शरणेन चाऽपि शाखादिरुक्तो बहुभिः प्रयोगात्। द्रुरिव द्रव्यं स्वभावात् क्लीवलिङ्गं यथा द्रुमः फलादिभिरर्थिनः प्रीणाति तथायमपि स्वविभवै भवति आत्मगुणसम्पन्नोऽपि द्रव्यमुच्यते द्रव्यं हि क्रियां विनयति द्रव्यमिति हिरण्यादिकमपि द्रव्यं पुरुषार्थसाधकत्वात् णीकघणेयाश्चेति व्वनिर्देशात् अन्ये त्याश्च यथा। एकात् काकिनौ सजातीयासहाये। इवेति निवृत्तं सजातीयद्वितीयरहिते एकशब्दात् क आकिन् एतौ स्याताम्। एककः एकाकी शतमेकाकिनो यान्तीति चिन्त्यं अष्टमाणो भागे लुक् वा षष्ठात्तु माने कश्च अष्टमो भाग आष्टमः लुक् वा अष्टमः। षष्ठो भागः षाष्ठः षष्ठः माने तु षष्ठकः षाष्ठः षष्ठः। तत्र सहते हिमादेलुः। हिमशब्दादेलुः स्यात् तत्र सहत इत्यर्थे हिमं न सहते हिमेलुः। शीतोष्णतृप्रादालुः। एभ्यो न सहते इत्यर्थे आलुः स्यात्। शीतं न सहते शीतालुः उष्णालुः तृष्णालुः। बलवातादूलः। आभ्यां न सहते इत्यर्थे ऊलः स्यात्। बलं न सहते बलूलः वातूलः। आभीक्ष्ण्ये संख्यादेरकः पादः पाच्च। संख्यापूर्वात् पादशब्दादाभीक्ष्ण्येऽकः स्यात् पादस्य पच्च। द्वौ द्वौ पादौ ददाति द्विपदिकां ददाति तार्येगसङ्ख्याऽकः काप्यदिः त्ये आभीक्ष्ण्ये द्योतिते सति न द्विः एवं त्रिपदिकां द्वे द्वे शते द्विशतिकां द्विमोदिकां ददाति आभीक्ष्ण्ये इति किं द्वौ पादौ ददाति ददात्यवारोपणार्थः। दानार्थकत्वे तु परसूत्रविषयः। दण्डव्यपसर्गयोश्च। अवोप्सार्थोऽयमारम्भः व्यपसर्गो दानं द्वौ पादौ दण्डितः द्विपदिकां दण्डितः द्वौ पादौ व्यपसृजति द्विपदिकाम् एवं त्रितीयिकां द्विमोदिकामित्यादि। द्वौ द्वौ मासौ ददाति द्वौ मासौ व्यवसृजति इत्यत्र न स्यादनभिधानात्। वेश्च नानाशसङ्कटाः। वेरेते स्युः च इत् चित्त्वाद्द्ये विना विनाशः विसङ्कटः नञ आनाच्। नञ् शब्दादानाच् स्यात् चित्त्वाद्द्ये नाना। नेर्विडविरीषौ। नेरिमौ स्याताम्। निविडं निविरीषम् किल कक पिटाश्चिश्चेषु। नेरित्यनुवर्त्तते नेरेते स्युः तत्सन्नियोगे निश्चिरादेशश्च। चिकिलः चिककः चिपिटः सार्थे के चिपिटकः एते गुणशब्दा यथा कथञ्चिदुन्नेयाः अतएव सूत्रकारेणोपेक्षिताः। क्लिन्नाल्लश्चक्षुषि ले चिल्पिच्चु तः। क्लिन्नशब्दात् चक्षुषि वाच्ये लः स्यात् ले परे क्लिन्नशब्दस्य चित् पित्

चुत् एते आदेशाः स्युः। चिल्लः पिल्लः चुल्लः तीर्णेलः। अवात् कटकुटारौ वैरूप्ये भट टीटलाटास्तु नासिकानमनादौ। अवशब्दात् वैरूप्ये कटकुटारौ स्यातां नासिकानमनादौ तु भट टीट लाटाः स्युः। अवकटः अवकुटारः अवभटः अवटीटः अवलाटः नतनासिक इत्यर्थः। पचात्तिर्मूले स्त्रियान्तु यूनः। पचशब्दात्तिः स्यात् मूलेऽर्थे युवन्शब्दात्तु स्त्रियाम्। पचतिः युवतिः। तिलात् पिञ्जपेजौ निष्फले। तिलशब्दान्निष्फलेऽर्थे एतौ स्तः। तिलपिञ्जः तिलपेजः निष्फल इत्यर्थः। पितृमातृभ्यां डामहस्तत्पितरि तद्भ्रातरि तु व्यडुलौ। सौदत्वात् नञा। आभ्यां तयोः पितरि डामहः स्यात् तयोर्भ्रातरि तु क्रमात् व्यडुलौ स्तः ड इत्। पितामहः मातामहः पितुर्भ्राता पितृव्यः मातुर्भ्राता मातुलः। अवेर्दुग्धे सोढ़दूसमरीसाः। अविशब्दो मेषवाचकः तस्मात् दुग्धेऽर्थे एते स्युः। अविसोढ़म् अविदूसम् अविमरीसं विधानसामर्थ्यान्नष इति जयादित्यः। भर्त्तृहरिस्तु मूर्द्धन्य एव विदध्यात्। विस्तारे पटः। विस्तारेऽर्थे पटः स्यात्। अवीनां विस्तारः अविपटः प्रातिपदिकादिति परे। अध्युपाभ्यां त्यकोऽद्र्यूर्द्धासन्नभागयोः। आभ्यां क्रमादेतयोरर्थयोस्त्यकः स्यात्। अधित्यका अद्रेरूर्द्धभागः उपत्यका अद्रेरासन्ना भूः स्वभावादनयोः स्त्रीत्वम्। कथं समुद्रोपत्यका हैमी पर्वताधित्यका पुरीति चेत् सत्यं समुद्रोपत्यकेत्युपचारात्। ष्णिक उदरात्तदधीनालसे। उदरशब्दात् तदधीनालसे वाच्ये ष्णिकः स्यात्। औदरिकः। इन्द्राद्दियो लिङ्गादौ चेवात्तु परचेत्रे चिकित्स्ये। इन्द्रशब्दादियः लिङ्गदृष्ट सृष्ट जुष्ट दत्तेषु। चेवशब्दात्तु परचेत्रे चिकित्स्ये इत्यर्थः। इन्द्र आत्मा तस्य इदम् अनुमापकं लिङ्गम् इन्द्रियम् आत्मा चचुरादिभिरनुमीयते न खलु कर्त्तृ करणमस्ति अथवा इन्द्रस्यात्मनो विषयोपभोगाय भवति तस्येदम्। परचेत्रं जन्मान्तरं शरीरं तव चिकित्स्य इत्यर्थे चेवियो व्याधिः स इह जन्मन्यसाध्य इत्यर्थः अथवा परचेत्रम् अन्यशरीरं तव संक्रमय्य चिकित्स्यं चेवियम्। अथवा शस्यचेत्रं तृणचेत्रं वा परचेत्रं तव चिकित्स्यं विनाश्यं तृणं चेवियम् अथवा परदाराः परचेत्रं तवानुभहेतुत्वात् तव चिकित्स्यो निग्राह्यः पारदारिकः चेवियः शालीनकौपीनसाप्तपदीनान्यऽधृष्टाकार्य्यसख्येषु। एतान्येतेषु अर्थेषु खीनान्तानि निपात्यन्ते। शालाप्रवेशमर्हति शालीना वधूः अधृष्टेत्यर्थः। कूपप्रवेशमर्हति कौपीनमकार्य्यम्। सप्तभिः पादैः प्राप्यं सख्यं साप्तपदीनं सख्यम्। यथा मुखीनसम्मुखीनौ दर्शने। दर्शनेऽर्थे एतौ निपात्येते दृश्यतेऽत्र दर्शनं मुखस्य सदृशं यथामुखं यथासादृश्ये इति वसः दर्पणादिस्थप्रतिबिम्ब उच्यते

तस्मादीनौ निपात्यते तथाच यथामुखीनः सीतायाः पुप्लुवे बहुलोभगवानिति भट्टिः। समं च तत् मुखञ्चेति सम्मुखीनः निपातनात् समकारस्याकारलोपः अथवा सम्यगर्थेन समशब्देन प्रादिसः ताभ्यां दर्पण उच्यते। सर्वचर्म्मणो णीनेनौ कृते। अस्मात् कृते णीनेनौ स्तः। सर्वेण चर्म्मणा कृतः सार्वचर्म्मीणः सूत्रनिर्देशात् घसः षीसेत सर्वस्य चर्म्मणा कृतमिति वाक्यम्। साचात् द्रष्टरि संज्ञायां डिन्। साचाच्छब्दात् द्रष्टरि वाच्ये डिन् स्यात् नाम्नि। साची साचिणौ साचिण इति। अनुपदादिन्नन्वेष्टरि। अनुपदशब्दादिन् अन्वेष्टरि वाच्ये। मृगस्यादनुपदी रामो जगाम गजविक्रमः। सपूर्व्वपूर्वात्। सपूर्व्वात् पूर्वशब्दात् इन् स्यात्। कृतं पूर्व्वमनेन कृतपूर्व्वी कटः भुक्तपूर्व्वी ओदनः। इष्टादेः। इष्टमनेन इष्टी यागे अधीती व्याकरणे निराकृती गृहीती कृतीयुतीत्यादि। इष्टसङ्कलिताऽधीतं पूर्त्तव्याकुलिताऽटितम्। नियुक्तागदितायुक्तं निगृहीतावकल्पितम्। निराकृतं निपतितं गदितं परिरचितम्। आसेवितावकीर्णावधारितञ्च निसारितम्। युतसंरचिता स्नातोऽपाकृतोपकृतानि च। परिगदितं परिकलितम्। निकथितमुपसादिताऽनुगुणितञ्च। अनुपचितं परिगणितं तथा पचितमुद्गृहीतञ्च। पूर्वात् भुक्ते। केवलपूर्व्वशब्दात् भुक्तेऽर्थे इन् स्यात्। पूर्व्वमनेन आशितं भुक्तं पीतं वा पूर्व्वी। श्राद्धादिकञ्च। श्राद्धशब्दात् भुक्तेऽर्थे इकः स्यात् चकारादिन् च। श्राद्धं वैदिककर्म्मविशेषस्तत्साधनं द्रव्यं श्राद्धम् उपचारात् तस्मिन्नहनि भुक्तं येन स श्राद्धी दिवसान्तरे भुक्ते न श्राद्धीत्युच्यते। नवयज्ञादेर्णिकोऽत्र वर्त्तते। नवयज्ञादेरत्र वर्त्ततेऽर्थे णिकः स्यात्। नवयज्ञो वर्त्ततेऽस्मिन् नावयज्ञिकः पचे याज्ञिक इत्यादिराकृतिगणः। धैर्णौः स्त्री दुग्धे ऋणदत्तायाम्। धेनुशब्दात् दुग्धरूपेण ऋणदत्तायां धेनौ वाच्यायां ण्यः स्यात्। धैनुष्या गौः। अथ चातुरर्थिकः। अस्मिन् देशेऽस्तीति नाम्नि। अस्मिन् देशे अस्तीति वेत्त्यादित्वात् णः स्यात् संज्ञायाम्। उडुम्बरोऽस्मिन् देशेऽस्ति औडुम्बरो देशः एवं वाल्वजः पार्वत इत्यादि मत्वर्थीयापवादोऽयं योगः। निर्वृत्ते। नास्तीति वर्त्तते लेसेन निर्वृत्ते अर्थे वेत्त्यादित्वात् णः नाम्नि। सहस्रेण निर्वृत्ता परिखा साहस्री परिखा कुशाम्बेन निर्वृत्ता कौशाम्बी नगरी। निवासादूरभवयोः लिः परोऽनयोरर्थयोर्वेत्त्यादित्वात् णः स्यात् संज्ञायाम्। निवसन्त्यस्मिन् निवासः शिवीनां निवासो देशः शैवो देशः एव ऋजुनावानां निवासो देश आर्जुनावः आम्बष्ठः विदिशाया अदूरे भवः वैदिशः। ओरसुवास्त्वादेष्ट्रस्तेषु। उवर्णादसुवास्त्वादेस्तेषु अर्थेषु ट्रः स्यात् संज्ञायाम्। अवटवः सन्ति अस्मिन् देशे

आवटवः ककतवः सत्यस्मिन् देशे काकतवः। सुवास्त्वादिस्तु सुवास्तवः सत्यस्मिन् देशे सौवास्तवः टूणयोः सङ्काङ्कघोषलक्षणेषु भेदः। सुवास्तुः शौवलीवर्णः शिखण्डी खण्डुकर्कशौ। कण्डुः कठीकष्टकर्णौ विकर्णश्च भगीरथः। गर्त्त्यं कर्कन्धु मत्यऽवि-र्शा हकपूरिणौ तथा। वौणीवौख्यन्त कौञ्च तथा भौमरथी मतः। अतौवर्णाति-रिक्तानां पाठो विपाशोत्तरकूपे चेति टूबाधनार्थः। वौणीवौख्यन्तरयोः पाठात् वौणानां सङ्कः वौणीयः आजकवौणीयः इत्यादि। कौञ्चावत् कर्णच्छिद्रकेण निर्वृत्ताः कार्णच्छिद्रकाः तेषां सङ्कः कार्णच्छिद्रकीयः एवं कार्कवाकवीयः इत्यादि। बह्वजन्ताभ्यां मतुवतुभ्यां च। बह्वचः परस्मान्मतोर्वतोश्च चतुर्ष्वर्थेषु टूः स्यात्। सुरुचिमता निर्वृत्तः सौरुचिमतः इककटशब्दात् मीञ्मभ्रपादितुरिति वतुः नाम्न्य-स्त्यर्थ इतिर्घः इककटवान् तेन निर्वृत्तः ऐककटवतः बह्वजन्ताभ्यामिति किं माला-वता निर्वृत्तः मालावतः तस्य सङ्कः मालावतीयः। कूपे बह्वचः। बह्वच् लिः कूपे वाच्ये चतुर्ष्वर्थेषु टूः स्यात्। दीर्घवरत्रेण निर्वृत्तः दैर्घवरत्रः कूपः तस्य सङ्क इत्यर्थे दैर्घवरत्र इत्यत्र णः इत्यादि। विपाशोत्तरे च। कूप इत्यनुवर्त्तते विपाशा नाम नदी तस्या उत्तरे यः कूपः तस्मिन्नभिधेये टूः स्यात्। अबह्वजर्थ आरम्भः। दत्तेन निर्वृत्तः दात्तः कूपः गौप्तः तत्सङ्कः दात्तः गौप्तः। उत्तर इति विपाशाया दक्षिणतः कूपे दात्तः गौप्तः णः तस्य सङ्कः दात्तीयः गौप्तीयः। सङ्कलादेश्च। सङ्कलादेश्चतु-र्ष्वर्थेषु टूः स्यात्। सङ्कलेन निर्वृत्तः साङ्कलः तस्य सङ्कः साङ्कल इत्यादि। सङ्कलं पुष्कलं कुम्भलोम गम्भीर मण्डपम्। निधानानीक वेमानः सुभूतोत्पुटमुद्गलम्। उत्पुलेतर गोविन्द निवासाहात्मगोभृतः। अभिशक्तश्च सिकता भल्लपालसुमङ्गलौ। सुदत्तो वरुणो राजभृतो बहुलमित्यपि। पुलोमश्च कृपासश्च सद्यो मदज एव च। सुदक्षश्च सुनेत्रश्च पलाशोऽन्ये प्रयोगतः। स्त्रीषु सौवीर शाल्वप्राचु। सौवीरदेशे शाल्वदेशे प्राग्देशे च स्त्रीलिङ्गे वाच्ये चतुर्ष्वर्थेषु टूः स्यात्। दत्तामित्रेण निर्वृत्ता दात्तमित्री सौवीरनगरी विधूमाग्निना निर्वृत्ता वैधूमाग्नी शाल्वनगरी ककन्देन निर्वृत्ता काकन्दी प्राच्यनगरी। णकोऽरीहरणादेः। अरीहरणादेश्चतुर्षु अर्थेषु णकः स्यात्। अरीस्यात्। अरीहरणेन निर्वृत्तम् आरीहरणकम्। अरी-हरणकाश्च क्रतुस्था भगलो कुन्दवीरणम्। विशाखः शिंशपाविल्वौ विपाशः सात्त्व-रायणः। किरणद्रवणौ चापि श्वास चान्द्रायणावपि। रैवतीदक्षनौ कुण्ड खदिरा वैसतायनम्। क्रौष्टायनश्च वधिर चैगर्त्तायन खाण्डवाः। शिरीषो जाम्बवत् खाडायनाः शौसायनस्तथा। श्वैतायणश्च शाण्डिल्यायनः सोमायनोऽपि च।

सुयज्ञश्च वराहश्च शर्करान्ये प्रयोगतः। ऋष्यादेः कः। ऋष्यादेश्चतुर्षु अर्थेषु कः स्यात्। ऋष्येण निर्वृत्तः ऋष्यकः। ऋष्यन्यग्रोधखदिराः शर्करान्तर खण्डवः। परिवेशः स्थूलबाहुर्वरणं शमधूसरौ। उत्तराश्मा वितानश्च विहीनश्चापि कर्दमम्। विधानश्च विलङ्घश्च परे शिष्टप्रयोगतः। सुतङ्गमादेः णिः। सुतङ्गमादेश्चतुर्षु अर्थेषु णिः स्यात्। सुतङ्गमेन निर्वृत्तः सौतङ्गमिः स्त्रियां सौतङ्गमी सुतङ्गमो महाचित्तो विप्रचित्ताऽर्जुनाऽजिराः। शुन श्वेत महापुत्रास्तथा शुक्रोऽव सम्मतः। मुनिचित्तो विप्रचित्तौ गदिकोऽन्ये प्रयोगतः। सख्यादेः णेयः। सख्यादेश्चतुर्षु अर्थेषु णेयः स्यात्। सख्या निर्वृत्तः सखेयः। सखिशीकरचक्राणि चक्रवाकश्च शोफिनः। क्रगलोऽशोक वाग्दत्ताः सखिदत्तकरस्तथा। सोमवल्लभपालश्च शमनः सुरसोऽप्सराः। ण्यः सङ्काशादेर्बलादेस्तु णित्। सङ्काशादेश्चतुर्षु अर्थेषु ण्यः स्यात् बलादेस्तु यः। सङ्काशेन निर्वृत्तः साङ्काश्यः। सङ्काश यूपकम्पोन कश्मीराशीन नासिकाः। सुगदोसगदीनाशो विवर्णोऽगस्तिरेव च। पुलिनं तीर्थकूटाश्म कोविदारस्तथैव च। अङ्गचूडारमञ्जाराः कबिरः खड़िरस्तथा। प्रगदी मगधः शूरसेनः कर्म्मार इत्यपि। विकारोऽथ सुपन्यश्च सुपथोऽन्यैर्विधीयते। सुपथा निर्वृत्तं सौपन्थ्यं ण्ये सुपथः सुपन्यादिशः बलादेस्तावत् बलेन निर्वृत्तं बल्यम्। बलं पुलमूलञ्चैव कुलं दुलं नलं बलम्। सुरो नदश्च संप्रोक्तो नव चात्र प्रकीर्त्तिताः। पक्षादेर्णायनः। पक्षादेश्चतुर्षु अर्थेषु णायनः स्यात्। पक्षेण निर्वृत्तः पाक्षायणः। पक्ष चैव तुषाराश्च कुम्भशीकर रोमकाः। सुवर्णसरलौ चैव लोमको हंसकोऽण्डकः। अलिकः सरकोहस्त विलश्च समनो मतः। पथः पन्थो णायने स्यात् पक्षोत्तरदश स्मृताः। पथा निर्वृत्तः पान्थायनः। कृशाश्वादेर्णीयः। कृशाश्वादेश्चतुर्षु अर्थेषु णीयः स्यात्। कृशाश्वेन निर्वृत्तः कार्शाश्वीयः। कृशाश्वोऽरिष्टशयनाऽरण्यवेश्माऽजिरं सुखम्। विशाखो वामकः कूटो लोमशो विनतस्तथा। वर्चोरुपूरगा धूमा मौदान्यविनतावपि। अट्टशः वायसश्चैव सगरः सुन्दरस्तथा। शर्कराप्यत्र सा प्रोक्ता द्वाविंशतिर्मनीषिभिः। कुमुदादेः णिकौ गर्त्तादेस्तु णित्। कुमुदादेश्चतुर्षु अर्थेषु णिकः स्यात् गर्त्तादेरिकः। कुमुदेन निर्वृत्तं कौमुदिकम्। कुमुदं गोमठं कर्णं रथकारो सुनिश्चलम्। अश्वत्थः शाल्मली दाम ग्रामश्चैव कुटन्नदम्। शर्करा च शिरीषोऽपि द्वादशैते स्मृता बुधैः। गर्त्तादेस्तावत् गर्त्तेन निर्वृत्तः गर्त्तिकः। गर्त्त न्यग्रोध कुमुदाश्वत्थकूपविकङ्कताः। पलाश शर्करा नीवं कङ्कटेकट बल्वजाः। परिवापः शिरीषश्च सराज्ञः पञ्चभिर्दश।

कर्णादेर्णायनिः। कर्णादेश्चतुर्षु अर्थेषु णायनिः स्यात्। कर्णेन निर्वृत्तः कार्णायनिः। कर्णो वशिः स्फिकः कुम्भीजीवीऽऽण्डवान् शपस्तथा। अर्को वशिष्ठः कुलिशं पञ्चजन्यं तथैव च। द्रुपदश्च समाख्याता द्वादशैव मनीषिभिः। रोऽश्मादेः। अश्मादेश्चतुर्षु अर्थेषु रः स्यात्। अश्मना निर्वृत्तः अश्मरः स्त्रियाम् अश्मरा रोगे तु अश्मरी नदादित्वादीप्। अश्मा यूथं भुषो मीनो दर्भोवृन्दगुड़ौ शिखी। खण्ड-काण्डनखाश्चैकादशाऽश्मादौ समीरिताः। तृणादेः सः। तृणादेश्चतुर्षु अर्थेषु सः स्यात्। तृणेन निर्वृत्ता तृणसा अभिधानात् स्त्रीत्वम्। तृणं जलनभौ पर्णं स्वर्णं वर्णं कुलं वलम्। वरणस्य वराणः सैऽवाष्टावाहुर्मनीषिणः। वरणादुद्भवः वराणसः तत्र भवा पूः णी वाराणसीति। प्रेचादेरिन्। प्रेचादेश्चतर्षु अर्थेषु इन् स्यात्। प्रेचया निर्वृत्तः प्रेची प्रेचिणौ प्रेचिणः। प्रेचा न्यग्रोध फलका बन्धका धुरकैकाटाः। चिपका ध्रुवका चैव सङ्कटप्रङ्कटौ मतौ। काशादेरिनः। काशादेश्चतुर्षु अर्थेषु इनः स्यात्। काशेन निर्वृत्तः काशिनः। काश वास गुहाऽश्वत्थपीयूचा कर्करा तृणम्। कर्वुरकर्दमौ चैव पलाश विषकण्टकाः। नड़ो वनमपि प्रोक्ताश्चतुर्दश मनीषिभिः। मधुविसादिभ्यां मतुवतू। आभ्यां चतुर्षु अर्थेषु क्रमात् मतुवतू स्याताम्। मधुना निर्वृत्तः मधुमान्। मधुरेण शमीस्थानुकर्कन्धुवर्म्मशक्रयः। आहृतिश्चेष्टिवासन्दीचुरैकादश कीर्त्तिताः। विसेन निर्वृत्तः विसवान्। विसपाण्डुासवाश्चैव कवीरशकटेष्टकाः। किशवाषाय्यणश्चैव हिमश्च वरणं दश। यद्यपि चान्द्रेणेदं नोच्यते मतुरस्त्यर्थे मीङ्मक्षपादतुरित्याभ्यां सिद्धे तथापि देशनाम्नि णत्वाधनार्थः। नद्यामस्त्यर्थ वदसुवास्त्वादेश्च। सुवास्त्वादिभिन्नात् चतुर्षु अर्थेषु नद्या मभिधेयायाम् अस्त्यर्थवत् मतुवतू स्याताम्। इक्षुणा निर्वृत्ता इक्षुमती नदी। एवं शरावती उडुम्बरावती वीरणावती पुष्करावती। सुवास्त्वादिस्तु सौवास्तवी भागीरथी नदी सुवास्त्वादिः प्रागुक्तः। नड़कुमुदमहिषवेतसेभ्यो डित्। एभ्यश्चतुर्षु अर्थेषु वतुश्च डित् स्यात् डिति टेर्लोपः। नड़ा अस्मिन् देशे सन्ति नड्वान् कुमुद्वान् महिष्मान् वेतस्वान्। नड़शादाद्वलः। आभ्यां चतुर्षु अर्थेषु वलः स्यात्। नड़ा अस्मिन् देशे सन्ति नड्वलः शाद्वलः डिति टेर्लोपः शष्पवाचिनः शादशब्दादेव त्यो न तु कर्दमवाचिनोऽनभिधानात् इति भागवृत्तिः। शिखाया वलः। शिखाशब्दात् चतुर्ष्वर्थेषु वलः स्यात्। डिन्नानुवर्त्तते शिखाः सन्त्यस्मिन् देशे शिखावलं नगरं मत्वर्थीयो वलः सम्बन्धमात्रे इह तु देशे नाम्न्येव। उत्करादेरीयो नड़ादेः कंश्च। उत्करादेश्चतुर्षु अर्थेषु ईयः स्यात् नड़ादेस्तु ईयः कन् च स्यात्। उत्करेण निर्वृत्तम् उत्करी-

## ४३८। त्वतौ भावे।

त्वतौ १॥, भावे ७।

**साधुत्वं जड़ता, पाचकत्वं ब्राह्मणीत्वम्।**

---

यम्। उत्कर: सङ्कर: पर्ण पिप्पली मूलपिप्पली। अश्मार्कसङ्कलाश्वत्थकुलकाशातपा ऋतु:। भस्त्राग्निकितवा: शाला विशालीत्क्रोशशर्करा:। खण्डाजिनाऽनेकतिका: सुवर्णचिबुकावपि। पलाश: खदिर: शाक नायीनेरौचकस्तथा। आर्द्रवृचेन्द्र वृत्तान्य जनकर्म्म निचाकर:। नितान्त वृच: कश्चित स्त्रियीर्णचिचुर्कीमत:। नड़रेण: कपीतेच्छ विल्ववेतस तचं च। काष्ठवेवमपि प्रच्च कुञ्चाया: खोऽव सम्मत:। नड़ादि: कुञ्चाद्यन्तर्गण ईय: कनी न इत्। नड़ेन निर्वृत्तं नड़कीयम्। कुञ्चकाया निर्वृत्तं कुञ्चकीयं कनि ख:। जनपदे लुप्। देशे तन्नाम्नीति चतुर्थेषु विहितस्य जनपदवाच्ये लुप् स्यात्। ग्रामसमुदायो जनपद: पञ्चालानां जनपद: पञ्चाला: सन्त्यस्मिन् देशे पञ्चाला: कुरव: मत्स्या: अङ्गा: वङ्गा: सुह्मा: पुण्ड्रा इत्यादि। इह कस्मान्न भवति उडुम्बरा अस्मिन् देशे सन्ति औडुम्बरी जनपद: वैदिशो जनपद इति तन्नाम्नीति वर्त्तते न चेत् लुबन्तं तन्नामाभिधेयं भवति। वरणादेश्च। वरणादेश्चतुर्षु अर्थेषु उत्पन्नस्य लुप् स्यात्। अजनपदार्थोऽयमारम्भ:। वरणाया अदूरभवो ग्राम: वरणा एवं शङ्कीशाल्मल इत्यादिराकृतिगणोऽयम्। शर्कराया वा ष्णश्च। शर्कराशब्दाच्चतुर्षु अर्थेषु उत्पन्नस्य लुप् स्यात् वा ष्णश्च वा स्यात्। शर्करा अस्मिन् देशे सन्ति शर्करा पचे ष्ण: शार्कर: उभयत्यक्तपचे अबाधितत्वात् शार्कराकम् ऋष्यादित्वात् शर्कराकं कृशादित्वात् शर्करीयं कुमुदादित्वात् शार्करिकं गर्भादित्वात् शर्करियं काशादित्वात् शार्करिणम् उत्करादित्वात् शार्करीयमिति उक्तश्चातुरर्थिक इति प्रकीर्णकम्॥ ४३७॥

स्याद्यन्तात् त्वतौ स्यातां भावेऽर्थे। भावस्तु प्रवृत्तिनिमित्तं येन धर्म्मेण अयं गौरिति प्रतीति: स्यात् स धर्म्मो गोशब्दस्य भाव इत्यर्थ साध्व्या भाव: साधुत्वं जड़ाया भावी जड़ता उभयत्र पुंवत् स्युक्तेति पुंवद्भाव:। पाचिकाया भाव: पाचकत्वम् अत्र नीपाककोङ इत्यनेन निषिद्धेऽपि कोङादि: पुंवदिति विशेषविधानात् पुंवद्भाव:। एवं षष्ठ्या भाव: षष्ठत्वं मैथिल्या भावो मैथिलत्वम् इत्यादौ पुंवद्भाव: स्यादेव। ब्राह्मण्या भावो ब्राह्मणीत्वं दत्ताया भावो दत्तात्वम् उभयत्र तत्वेत्वजात्याख्य इत्युक्तेर्न

## ४३९। लीकोऽर्घात् सः ष-स्ति।

लि-इकः ५।, अ-र्घात् ५।, सः ६।, षः १।, ति ७।

**अर्घाल्लीकः सः षः स्यात् तद्धिते ते। यजुष्टम्। र्घात्तु गीस्त्वम्।**

---

पुंवद्भावः। अत्र त्वान्तस्य क्लीवत्वं तान्तस्य च स्त्रीत्वमभिधानात्। अत्र उक्तस्य त्वत इत्युभयस्य पूर्वोक्तस्य भावविहितष्णयादेश्च सामान्यविशेषत्वाभावात् बाध्यबाधकत्वाभावे जडस्य भावो जडत्वं जडता। जाड्यम्। एवं गुरोर्भावः गौरवं गुरुत्वं गुरुता इत्यादि स्यादेव ॥ ४३८ ॥

श्री रा-टी—त्वश्च तश्च तौ भावेऽर्थे षन्तात् तौ स्तः। शब्दस्य प्रवृत्तिनिमित्तं भावः स चानेकप्रकारः क्वचिदनेकेषु एकप्रत्ययभिज्ञाजनकः यथा गोत्वाश्वत्वादिजातिः क्वचित् स्वरूपमात्रं यथा चैत्रत्वं नभस्त्वं क्वचित् सम्बन्धित्वं यथा शुक्लस्य पटस्य शुक्लत्वं जडता क्वचित् द्रव्यसम्बन्धित्वं यथा दण्डित्वं विशेषणत्वं क्वचित् कर्म्मसम्बन्धित्वं यथा पाचकत्वं गन्तृत्वम्। साधुत्वमिति साधोर्भाव इति वाक्यं येन कर्म्मणा साधुरयमिति बुद्धिर्जायते तत्कर्म्मसम्बन्धित्वमिह भावः। जडतेत्यत्र जाड्यगुणसम्बन्धित्वं जडाया भाव इति वाक्यम् एवं पाचिकाया भावः पाचकत्वं तत्वे जात्याख्याभिन्नस्य पुंवद्भावः। ब्राह्मणीत्वमिति जातिः स्वाङ्गेयान्न पुंवद्भावः एवं चन्द्रमुखीत्वमित्यादि ॥ ४३८ ॥

लेरिक् लीक् तस्मात् नास्ति र्घो यत्र सोऽर्घः तस्मात्। दीर्घवर्जात् लीकः परस्य सस्य षः स्यात् तकारे परे, तकारस्तु प्रकरणबलात् तद्धित एव। यजुषो भावः यजुष्टम् एवं हविष्टं गिरो भावः गीस्त्वम् अत्र व्यंनच्तयोति दीर्घे विरामे रेफस्य विसर्गे पुनर्विसर्गस्य सकारे षत्वप्राप्तौ दीर्घपरतान्निषेधः। एवं धूस्त्वम्। लीकः किं बभूस्तराम्। तद्धिते तकारे इति किं यजुस्तेन पठितम् ॥ ४३९ ॥

श्री रा टी—लेरिक् लीक् तस्मात् न र्घः अर्घस्तस्मात् तीति सीकान्तं दम्। लेरिकः परस्य सस्य यः स्यात् तसंज्ञतकारे परे न तु परस्य यजुष्टमिति यजुषो भाव इति वाक्यं र्घात् धूस्त्वं लेः किं कुर्य्युस्तरां कुर्य्युस्साम् ॥ ४३९ ॥

## ४४० । चूत् साम्ये ।

चूत् ।१।, साम्ये ७। ।

**उपमानार्थे चूत् स्यात् । कृष्ण इव कृष्णवत् ।**

## ४४१ । मतुरस्त्यर्थे ।

मतुः १।, अस्ति-अर्थे ७। ।

**श्रीरस्ति यस्यासौ श्रीमान्, विदुष्मान् दोष्मान् ।**

---

समस्य भावः साम्यं तस्मिन् स्याद्यन्तात् चूत् स्यात् उपमानेऽर्थे चकारोऽव्ययार्थः । कृष्ण इव कृष्णवत् शिवो भाति एवं कृष्णमिव शिवं मन्ये कृष्णवत् एवं सर्वविभक्त्यन्तात् चूत् प्रत्यये कृते विभक्तेर्लुक् । द्रव्यसाम्ये यथा कुवेर इव धनी कुवेरवत् गुणसाम्ये चन्द्र इव शुक्लः चन्द्रवत् गुणहीनः अन्धवत् क्रियासाम्ये तपस्विवत् ॥ ४४० ॥

श्री·रा टी—समस्य भावः साम्यम् उपमानम् । कृष्णवदिति अभिधानात् उपमानं क्रियाविशेषणीयं तेन पुत्रेण तुल्यः स्थूलः पुत्रेण तुल्य पिङ्गल इत्यादि गुणतुल्ये न स्यात् । एवं शिवमिव विष्णुं पश्यति शिववद्विष्णुं पश्यति ब्राह्मणेन तुल्यं वर्त्तते ब्राह्मणवत् वर्त्तते ब्राह्मणवत् चत्रियाय ददाति व्याघ्रवन्मार्जारादिभिति देवदत्तवत् यज्ञदत्तस्य धनं माथुरवत् स्रुघ्ने प्राकाराः चैत्रगोः क्रियाग्रहणं नानुषज्यते । परे तु वोपीपत्रलेभ्यः चूत् त्यं कुर्वन्ति भाष्यविरोधात् तच्चन्द्रो न मन्यते किन्तु त्यन्तादेव तन्मातनवलब्धा ग्रन्थकृत् सूत्रमिति । अर्हे च । अर्हतीत्यर्हे पचाद्यन् लेरर्हेऽर्थे चूत् स्यात् । राजानमर्हति वृत्तं राजवत् वृत्तं मुनिवत् व्रतम् अनभिधानात् ब्राह्मणमर्हति वृत्तम् इत्यत्र न स्यात् ॥ ४४० ॥

तदस्यास्तीत्यर्थे स्याद्यन्तान्मतुः स्यात् तेन प्रथमान्तादित्यर्थः । मतोरुकारः श्रिद्‌चोऽद्वेरिति नुणर्थः स्त्रियामीवर्थश्च । तेन श्रीमान् श्रीमती । विद्वान् अस्ति यस्य विदुष्मान् अत्र मतौ परे वसोर्वकारस्य उकारविधानसामर्थ्यादेव अकारोऽन्त्वेन प्राप्तव्यं वतुं बाधित्वा मतुः स्यात् । ततश्च मतौ परे वकारस्य उकारे नदं तसावित्यनेन दान्तत्वनिषेधात् विरामाभावे ससध्वसिति दङ्गोऽप्राप्तौ षत्वम् । एवं दोरस्ति अस्य दोष्मान् । मत्वादीनां स्थानमाह दुर्गसिंहः । भूमनिन्दा प्रशंसासु नित्ययोगेऽतिशायने । संसर्गेऽस्ति विवचायां मत्वादयो भवन्त्यमी इति । एष्वर्थेषु यदा

## ४४२ । सोड्म-झपाद्वतुः ।

म-अ-उङ्-म्-झपात् ५।, वतुः १। ।

**मकारोङोऽवर्णोङो मकारान्तादवर्णान्तात् झपान्ताच्च वतुः स्यादस्त्यर्थे। लक्ष्मीवान् यशस्वान् भास्वान् किंवान् ज्ञानवान् विद्यावान् विद्युत्वान् ।**

---

ऽस्तीति विवक्षा क्रियते तदा मत्वादयो भवन्तीत्यर्थः। क्रमेणोदाहरणानि। भूम्नि बहुत्वे गावः सन्त्यस्य गोमान्। निन्दायां पापी। प्रशंसायां रूपवान्। नित्ययोगे क्षीरिणो वृक्षाः अतिशायने उदरवती कन्या। संसर्गे दण्डी पान्थः। अत्र न कर्म्मधारयान्मत्वर्थीयो बहुव्रीहिश्चेदर्थप्रतिपत्तिकर इति प्राञ्चः। तेन शोभना बुद्धिरिति कर्म्मधारये सुबुद्धिमान् जन इति न स्यात्। शोभना बुद्धिर्यस्यासौ सुबुद्धिरिति बहुव्रीहिणैव तदर्थप्रतिपादनात्। ननु वर्जयेत् द्विदलं शूली कुष्ठी मांसं क्षयी स्त्रियम्। द्रवमन्नमतीसारी सर्वञ्च तरुणज्वरी। अत्र कर्म्मधारयात् कथमिनिति चेत् सत्यम्। तरुणोज्वरो यस्येति बहुव्रीहिणा ज्वरस्यास्तित्वमात्रं प्रतिपाद्यते न तु ज्वरस्यातिशयार्थः प्रतिपादयितुं शक्यते तेनात्रातिशयार्थो मत्वर्थीयः स्यादेव। एवं मत्वर्थीयात् सरूपो मत्वर्थीयो न स्यात्। यथा धनमस्यास्तीति धनवान् पुनर्धनवानस्यास्तीत्यर्थे झभान्तादपि वतुर्न स्यात्। असरूपस्तु स्यादेव यथाज्ञानमस्त्यस्य ज्ञानी पुनर्ज्ञानिनः सन्त्यस्य इत्यर्थे ज्ञानिमान् राजा इति ॥ ४४१ ॥

श्री-रा-टी—अस्ति अर्थो यस्य यस्मिन् वा अस्त्यर्थस्तस्मिन् अस्त्यर्थो विद्यमानसम्बन्धः प्रयन्तादस्यास्मिंश्चेत्यर्थे मतुः स्यात् यः प्रयन्तनिर्दिष्टः सोऽस्ति चेद्भवति। श्रीमानिति उदित्त्वादत्वसोऽधोरिति घं: त्रिद च इति नुण् श्रीरस्यास्मिन्निति वाक्येऽपि श्रीमान् विदुष्मानिति वसोर्वस्योत्वात् नदं तसौत्वस्यर्थ इति दान्तत्वनिषेधात् क्विलादिति षः। एवं दोष्मानिति। यवादेश्च। यवादेरस्त्यर्थे मतुः स्यात्। यवोऽस्यास्मिन् वास्ति यवमान् एवं तिमिमान्। यव स्तिमिः क्रमि भूमिर्द्राक्षा क्रुञ्चा हरित् गरुत्। ऊर्म्मि चामि ककुद्रश्मिद्रुम द्रूम धुरन्धराः। कान्तीक्षु वसुसानूनि भानुसिद्धरशुविन्दवः। वस्तु चारु हनु प्रोक्तं शेषं शिष्टप्रयोगतः। इह यवद्राक्षा क्रुञ्चाभ्योऽवर्णान्तात् तिमि क्रमि भूमि ऊर्म्मि चामि रश्मि द्रुमेभ्यो मुङत्वात् हरित्

मरुत् ककुद्मो झपान्तत्वात् इतरेभ्योऽसंज्ञात्वात् प्राप्तो वतुर्बाध्यते दिग्भ्राम् गोधुग्भ्यादित्यादि स्थानिवत्त्वान्न वतुः॥ ४४१॥

मश्च अश्च मौ, मौ उङौ ययोस्तौ मोङौ, मोङौ च मश्च अश्च झपश्चेति तस्मात्। लक्ष्मीरस्त्यस्य लक्ष्मीवान् एवं यशस्वान् भास्वान् इत्युभयत्र दान्तत्वनिषेधात् सस्य न विसर्गः। एवं विद्युत्वान् इत्यत्र तकारस्य न दः। अत्र कुमुदवेतसानामल्लोपो वतौ नड़स्य तु वतु वलयोरिति मनीषादित्वात् कुमुदानि सन्त्यस्य कुमुद्वान्। एवं महिष्मान् नड्वान् नड्वलः। अत्र रज आदित्वाद्वलः एवं वतौ राज्ञः प्रशंसायां न लोपाभावो निपात्यः। शोभनो राजा अस्त्यस्य राजन्वान् देशः अन्यत्र राजवानिति॥ ४४२॥

श्री-रा-टी—म च अश्च मं ममुङ् मोङ् च म च अश्च झपश्च तत्तस्मात् झप्प्रत्याहारः। लक्ष्मीवान् इति लक्ष्मीरस्ति अस्यास्मिन् वा इति वाक्यम्। पूर्ववत् र्घः, गुण् स्यान्तर्लुप् च। अवर्णोङमुदाहरति यशस्वान् भास्वान् इति मान्तमुदाहरति किं व... अवर्णमुदाहरति ज्ञानवान् श्रद्धावानिति झपान्तमुदाहरति विद्युत्वान् इ... आन्तत्वान्न दम्। मतोरपवादः। संज्ञायाञ्च। सर्वस्मात् लिः संज्ञायां विषयेऽस्त्यर्थे वतुः स्यात् अहिरस्त्यस्या अस्यां वा अहीवती कपीवती मनीवती अग्निकीवान् ग्रामः। नाम्नस्त्यर्थे चोर्घ इति र्घः। चक्राष्ठिकक्षासनानां चक्राऽष्टीकक्ष्यसन्द्यो वतौ। एषामेते आदेशा स्युः संज्ञायां वतौ। चक्रमस्त्यस्यास्मिन् वा चक्रीवान् असंज्ञायां चक्रवान् अस्थ्यस्त्यस्यास्मिन् वा अष्टीवान् अन्यत्रास्थिमान् कक्षाऽस्त्यस्यास्मिन् वा कक्षीवान् ऋषिभेदः अन्यत्र कक्षावान्। आसनमस्त्यस्यास्मिन् वा असन्दीवान् ग्रामः अन्यत्र आसनवान्। उदकस्योदन् नृर्य्युदध्योः। उदकशब्दस्य उदन्नादेशः स्यात् अनयोरर्थयोर्वतौ। उदकमस्त्यास्यास्मिन् वा उदन्वान् ऋषिः समुद्रश्च उदकम् आधीयते यस्मिन् स उदधिर्घटादिरपि तेन उदन्वान् घटः उदन्वन् मेघः उदकवान् घट इत्यत्र तु सम्बन्धमात्रविवक्षणात्। प्राण्यङ्गक्षुद्रजन्तुरोगादादन्ताद्वा। प्राण्यङ्गवाचकात् क्षुद्रजन्तुवाचकात् रोगवाचकाच्चाकारान्तात् वतुर्वा स्यात् अस्त्यर्थे। चूड़ास्त्यस्यास्मिन् वा चूड़ावान् पक्षे चूड़ादित्वात् लः चूड़ालः कर्णिकालः शिखाशब्दात्तु इना लो बाध्यते शिखावान् शिखी यूकास्त्यस्यास्मिन् वा यूकावान् यूकालः। विवर्चिकावान् विवर्चिकालः मूर्च्छावान् मूर्च्छालः। एभ्यः किं शिखावान् आदन्तादिति किं हस्तवान् सङ्कुलवान् ज्वरवान्। चूड़ादिपाठात् विकल्पे सिद्धे वा ग्रहणं नियमार्थं तेन वत्वभावपक्षे ल एव॥ ४४२॥

## ४४३। स्रङ्मेधास्मायात् विन् वा।

स्रज् मेधा—अस् मायात् ५।, विन् ।१।, वा ।१।।

**स्रग्वी मेधावी तेजस्वी मायावी। पक्षे स्रग्वान् इत्यादि।**

## ४४४। नैकाजादिन् वा।

नैकाजात् ५।, इन् ।१।, वा ।१।।

**अनेकाचोऽवर्णान्तादिन् वा स्यात् अस्त्यर्थे। ज्ञानी शिखी।**

---

स्रज् च मेधा च अस् च माया चेति यस्मात्। एभ्यो विन् स्याद्वास्त्यर्थे। स्रक् अस्त्यस्य स्रग्वी अत्र दान्तत्वनिषेधाभावादिरामे चुङ्किति कुङादि ॥ ४४३ ॥

श्रीरा-टी—स्रक् च मेधा च अस् च माया च तत्तस्मात्। एभ्योऽस्त्यर्थे विन् वा स्यात्। स्रग्वीति हनपूषेति र्घः नीलुप्फेधाविति न लुप्। एवं मेधावी मेधावान् तेजस्वीति असन्तत्वाद्विन् एवं पयस्वीति ज्योत्स्नादित्वात्तापसः पक्षे तपस्वान्। एवं मायावी मायावान्। वाशब्दस्य व्यवस्थावाचित्वात् आमयावी आमयावान् नाम्नस्त्यर्थेऽचोर्घः इति आमयीति। ऊर्जोऽसंश्च साहङ्कारे। ऊर्जशब्दात् विन् स्यात् तस्मिन्नसंश्च साहङ्कारे। ऊर्क् अस्त्यस्मिन् वा ऊर्जस्वी साहङ्कारः अन्यत्र ऊर्ग्वान् ॥ ४४३ ॥

न एको नैकः नैकोऽच् यस्य स नैकाच् नैकाच्चासौ अश्चेति नैकाजः तस्मात्। ज्ञानमस्त्यस्य ज्ञानी एवं शिखी। एवं माला अस्यास्तीति माली तत्र स्वार्थे कप्रत्यये मालिकः एवं दण्डिक इत्यादि। वाशब्दोऽत्र मत्वादीनां विषयव्यवस्थापकः। तेनेशं विवृणोमि। यवादिरस्त्यर्थे वतुर्न स्यान्मतुरेव। यथा यवमान् इत्यादि। ते च यवी द्राक्षा ककुत्कुक्षा गरुत् भूमि स्तिमिः क्रमिः। हरिदुर्मि दश-भ्यस्तु वतुं नेच्छन्ति पण्डिता इति। क्षुद्रागोत्वाभ्यामपीति कातन्त्राः। द्रुमकर्णबधे-भ्योऽपीति जौमराः। एवं पूरणप्रत्ययान्तात् वयसि इन्नेव। पञ्चानां पूरणः पञ्चमी दिवसो मासो वत्सरो वा सोऽस्यास्तीति पञ्चमी पुत्रः। वयस्तु शतपरमायुः। पर-मायुस्तु प्राणधारणकालः। तेन पञ्चमवान् वृक्षः। तथा अस्वाङ्गात् प्राणिस्थद्वन्द्वात् निन्दितरोगाच्च। कटकवलयी हारकुण्डली कुष्ठी। अस्वाङ्गात् किं स्तनकेशवती। प्राणिस्थात् किं धवखदिरवान् देशः। द्वन्द्वात् किं हारवान्। निन्दितरोगात् किं

ज्वरवान्। सर्वपूर्वात्। सर्वबीजी सर्वकेशी। धर्मशीलवर्णान्तात्। विप्रस्य धर्मो विप्रधर्मः सोऽस्यास्तीति विप्रधर्म्मी पण्डितशीली ब्रह्मवर्णी तदन्तात् किं धर्म्मवान् वर्णात् संज्ञायाम्। वर्णी ब्रह्मचारी। अन्यत्र वर्णवान्। हस्तदन्तकरान्नाम्नि। हस्ती दन्ती करी गजः। नाम्नि किं हस्तवान् योधः। व्रीह्यादेः। व्रीहिरस्यास्तीति व्रीही कर्षकः एवं शाली। रूढ़देशे पुष्करादेः। पुष्करिणी। पुष्करादिस्तु। पुष्कर उत्पल नड़ विस तमाल कपित्थ कुमुद मृणाल कर्दम शालूक करीष हिरण्यादि। रूढ़देशे किं पुष्करवान् हस्ती। मनन्तमान्ताभ्यां नाम्नि। दामिनी सोमिनी। नाम्नि किं दामवान् सोमवान् मकारोऽत्रादन्तः। एवं सुखी दुःखी अलीकी च कारुणी क्षपणी हली। क्षपी कुक्षी प्रतीती च इत्यादेरिन् विधीयते। अथ निपात्याः। पार्णिधमनिभ्यामीनौ वास्त्यर्थे। पार्णीनः पार्णिमान् धमनीनः धमनिमान्। शाकसमूहो महाशाको वा शाकी पलालसमूहो महापलालो वा पलाली। तथाहि शाकी पलाली सरसी शाकाद्योघमहत्त्वयोरिति रत्नाकरः। कद्रूशाकी पलाशीभ्योस्त्यर्थे नः तासां ह्रस्वश्च। कद्रुणः शाकिनः पलाशिनः। कद्रुर्नागमाता गोधा वा। लक्ष्मीशब्दादस्त्यर्थे वा डनः। लक्ष्मण डित्वात् टिलोपः। पक्षे लक्ष्मीवान्। मलादीमसो वा। मलीमसः। पक्षे फलादित्वादिने मलिनः पक्षे मलवान् इति। आमयादाविन्। आमयावी ॥ ४४४ ॥

श्रीरा-टी—नास्त्येकाच् यस्य नैकाच् नैकाच्चासावश्चेति नैकाजस्तस्मात् ज्ञानीति ययोर्लोप इत्यकारलोपः। अभिधानादादन्तात् शिखादावपि शिखीति। शिखादिर्यथा। शिखा वीणा घृणा संज्ञा पताका वड़वाष्टका। मनीषा मेखला दंष्ट्रा शाखा केका गदा यवा। वीणा माला फला माया परे शिष्टप्रयोगतः। पक्षे शिखावान् वीणावानित्यादि। नैकाजतोऽसुखादेरिकः। सुखादिवर्जितादनेकाचोऽकारान्तादिकः स्याद्वा। ज्ञानमस्त्यस्मिन् वा ज्ञानिकः दण्डिकः पक्षे ज्ञानी ज्ञानवान्। असुखादेरिति किम्। सुखी सुखवान्। सुखादिर्यथा। सुख दुःख हलानीक क्षक्षवान व्रतीयमाः। मानोत्साहालकोद्दाम मुकुलं स्तवकं फलम्। परिणाहनयारोहाऽवरोह निचुला अपि। व्यायाम वर्म्मकर्म्माणि तप्त प्रतिप कर्म्म च। कचा प्रणयसीढ़ाऽस्योपयाम करुणापि। क्षपणेन सह प्रोक्ताः परे शिष्टप्रयोगतः। धर्म्मशीलवर्णान्तादिन्। धर्म्मान्तात् शीलान्तात् वर्णान्ताच्चास्त्यर्थे इन् स्यात्। द्विजधर्म्मी भिक्षुशीली विप्रवर्णी। अन्तादिति धर्म्मवान् शीलवान्। करदन्तहस्तादिभ्यः। एभ्यो गजे वाच्येऽस्त्यर्थे इन् स्यात्। करी दन्ती हस्ती

अन्यत्र करवान् दन्तवान् हस्तवान्। मालायाः चेपे। मालाशब्दात् चेपे गम्यमानेऽस्त्यर्थे इन् स्यात्। माली अन्यत्र मालावान् शिखादिपाठात् माली च। पूरणान्तात् वयसि। पूरणप्रत्यान्तात् वयसि गम्यमानेऽस्त्यर्थे इन् स्यात्। पञ्चमी मासो वर्षोऽस्य पञ्चमी उष्ट्रः दशमी वृद्धः अन्यत्र पञ्चमवान्। वर्णात् ब्रह्मचारिणि। वर्णशब्दात् ब्रह्मचारिण्यर्थे इन् स्यात्। वर्णी ब्रह्मचारी अन्यत्र वर्णवान्। अर्थतदन्तादाकाङ्क्षिणि। अर्थशब्दात् अर्थशब्दान्ताच्चाकाङ्क्षिण्यर्थे इन् स्यात् अस्त्यर्थे। अर्थी याचकः धान्येनार्थः धान्यार्थः सोऽस्यास्ति धान्यार्थी यवार्थी अन्यत्रार्थवान्। मन्मान्तान्नाम्नि। मनन्तात् मान्ताच्च संज्ञायामिन् स्यात् अस्त्यर्थे। प्रथिमिनी दामिनी मान्तात्सोमिनी यामिनी स्वभावात् स्त्रीत्वम्। पुष्करादेर्देशे। पुष्करादिभ्यो देशे वाच्येऽस्त्यर्थे इन् स्यात्। पुष्कराणि तीर्थानि अस्मिन् देशे सन्ति पुष्करिणी पद्मिनी उत्पलिनी। पुष्करोत्पल शालूक शिरीष पद्मकर्दमाः। तमाल नलकाम्बील तरङ्गकुसुमानि च। यवसः कैरवं चापि प्रोक्तान्यत्र चतुर्दश। स्वभावादस्यापि स्त्रीत्वम् अन्यत्र पुष्करवान्। प्राणिस्थादतोऽस्वाङ्गाच्चसे। प्राणिनि तिष्ठतीति प्राणिष्ठस्तस्मादकारान्तात् साङ्गवर्जितात् चसे इन् स्यात् अस्त्यर्थे। कटकवलयिनी शङ्खनूपुरिणी स्वाङ्गात्तु स्तनकेशवती अत इत्येव चित्रकमलटिकावती च इति किं शङ्खवती नूपुरवती सिन्दूरवती। रोगगर्ह्याच्च। रोगवाचकात् निन्दावाचकाच्च प्राणिस्थाददन्तादस्त्यर्थे इन् स्यात्। कुष्ठी किलासी शूली गर्ह्यात् ककुदावर्त्ती हयः प्राणिस्थादिति किं पुष्पफलवान् पुष्पवान्। अत इति किं मूर्च्छावान्। सर्वपूर्वाल्लेर्बाहूरुपूर्वात्तु बलात्। सर्वशब्दपूर्वाल्लेरत इन् स्यात् अस्त्यर्थे बलात्तु बाहूरुपूर्वात्। सर्वधनी वार्धुषिकः सर्वकेशी नटः बाहुबली ऊरुबली सर्वबलीति पूर्वेण। नावादेरिकौ वा। नावादेरस्त्यर्थे इकः स्याद्वा। नौरस्ति यस्यासौ नाविकः। नौ कुमारी सभा माया यवखदा करणेन हि। पक्षे नौमान् यवखदावान् मायाशब्दस्य शिखादित्वात् मायी मायावांश्च। व्रीहेस्तौ। व्रीहिशब्दादस्त्यर्थे इनिकौ स्याताम्। व्रीहिरस्ति यस्यासौ व्रीही व्रीहिकः यर्योर्लोप इति इकारलोपः पक्षे व्रीहिमान्। शिरसः शीर्षं च वतौ। शिरःशब्दादस्त्यर्थे इनिकौ स्यातां तयोः शीर्षादेशश्च वतौ च। शिरोऽस्यास्ति शीर्षी शीर्षिकः पक्षे वतौ शीर्षवान्। स्वाङ्गात् वृद्धौ। स्वाङ्गवाचकात् वृद्धौ वर्त्तमानादस्त्यर्थे तौ स्याताम्। कर्णी कर्णिकः पक्षे कर्णवान् फलादित्वात् कर्णिनः। न सप्त्यर्थे। सप्त्या अर्थे तौ न स्याताम्। दण्डोऽस्त्यस्मिन्नित्यर्थे दण्डवान् दण्डोऽस्त्यस्यासौ दण्डी दण्डिकः दण्डवांश्च। अकार्य्यादिक्तः। कार्य्यादि-

**४४५। शं-कं-भ्यां य-यु-त-तु-ति-व-भाः।**

शं कं भ्यां ५॥, य—भाः १॥।

**शंयः शंयुः शन्तः शन्तुः शन्तिः शंवः शम्भः।**

**४४६। गो तृण मेधा दन्त काण्ड द्यु वल वलि पर्व चूड़ा फेन लोम पाम प्रज्ञा मधु केश रजः फलोर्णा शृङ्ग निद्राऽर्शो वातादेर्मिन् सेरो-रेरमोलिभ तलेल श न ण रववलेनयारकाल्व-किन् वा।**

गो-वातादेः ५।, मिन्-किन् ।१।, वा ।१।।

**एभ्य एते क्रमात् स्युरस्त्यर्थे वा। गोमी।**

---

वर्जितात् क्रदन्ताद् तौ न स्याताम्। पाचकवान् कारकवान् स्नेहवान् कुम्भकार-वान् ईश्वरवान् हिंस्रवान्। एकोऽनघण् वरी वस्त्रा धान्यद्रव्यादयः स्मृताः। यथा धान्यवान् द्रव्यवान् पुण्यवान् माल्यवान् सत्यवान् भाग्यवान् अपत्यवान् इत्यादि प्रयोगानुसारेण ज्ञातव्याः। कार्य्यादेस्तु कार्यी कार्य्यिकः कार्य्यवान्। कार्य्यादेव गृहस्थान पीतभोगादयो मताः। जातेरतण्डुलादेः। जातिवाचकात् तण्डुलादि-वर्जितात्तौ न स्याताम्। व्याघ्रवान् गजवान् अश्ववान् इत्यादि। तण्डुलादेस्तु तण्डुली तण्डुलिकः तण्डुलवान्। कर्पटी कर्पटिकः कर्पटवान् इत्यादि। यदुक्तम्। एकाचरात् क्रतो जातेः सप्तम्याश्च न तौ स्मृताविति ॥ ४४४ ॥

शम् कम् इति मान्ताव्ययाभ्याम् एते सप्तप्रत्ययाः स्युरस्त्यर्थे। शम् अस्त्यस्य शंयः अत्र टिलोपाभाववीजं व्यटेर्लोप इत्यत्र द्रष्टव्यम्। एवं नदं तसावित्यत्र नञा निर्दिष्टमनित्यमिति न्यायात् दान्तत्वनिषेधाभावे मस्यानुस्वारः। एवं शंयु-रित्यादि ॥ ४४५ ॥

श्रीरा-टी—शश्च कश्च तौ ताभ्याम्। यश्च युश्च तश्च तुश्च वश्च भश्च ते। शंय इति शमष्टेर्लोपाभावः युसमभिव्याहृतये ॥ ४४५ ॥

उदाहरणे बोध्यम् ॥ ४४६ ॥

## ४४७। नाम्न्यस्त्यर्थेऽचो घं:।

नाम्नि ७, अस्त्यर्थे ७, अचः ६।, घं: १।।

**स्वामी, तृणसः, मेधिरः, रथिरः दन्तुरः, काण्डीरः, अण्डीरः, द्युमः द्रुमः बलूलः, वातूलः बलिभः तुन्दिभः पर्वतः, मरुत्तः, चूड़ालः, मांसलः, फेनिलः, पिच्छिलः, लोमशः, रोमशः, पामनः, अङ्गना, प्राज्ञः, श्राद्धः, मधुरः, कुञ्जरः, केशवः मानवः, रजस्वला, कृषीवलः, फलिनः, वर्हिणः, ऊर्णायुः, अहंयुः, शृङ्गारकः वृन्दारकः, निद्रालुः, दयालुः, अर्शसः, वैजयन्तः, वातकी, अतिसारकी।**

---

श्रीरा·टी—गौश्च तृणञ्च मेधा च दन्तश्च काण्डश्च द्युश्च बलञ्च बलिश्च पर्व च चूड़ा च फेनश्च लोम च प्रज्ञा च मधु च केशश्च रजश्च फलञ्च ऊर्णा च शृङ्गञ्च निद्रा च अर्शश्च वातश्च ते आदयो यस्य तत्तस्मात् मिंश्च सश्च इरश्च उरश्च ईरश्च मश्च ऊलश्च इभश्च तश्च लश्च इलश्च शश्च नश्च णश्च रश्च वश्च बलश्च इनश्च युश्च आरकश्च आलुश्च अश्च किंश्च तत्। गोमीति ह्नपुषेति घं: पूज्य इत्यर्थः। यद्यपि सामान्येनोक्तं तथाप्यभिधानात् अर्थविशेषे ज्ञातव्यः। तेन गोस्वयोः पूज्येश्वरयोरभिधानं पक्षे गोमान्॥ ४४६॥

अचो दीर्घ: स्यादस्त्यर्थप्रत्ययेषु नाम्नि वाच्ये। स्वोऽस्यास्तीति स्वामी ईश्वरः। गवादित्वाभावे अनेन दीर्घः। असंज्ञायां स्वशब्दस्य गवादित्वाभावे स्ववान् इति एवम् अष्ठीवान्। शरादेर्नाम्नि वतौ दीर्घ: शरावती। शरादिस्तु। शर वंश पक्ष धूम अहि कपि मणि मुनि चन्द्र इत्यादि। अत्र येभ्यो वतुर्न सम्भवति तेभ्योऽपि नाम्नि वतुः स्यात् शरादिगणपाठसामर्थ्यात्। नाम्नि किं शरवान् ग्रामः। अजिर खदिर खपुर पुलिन मलय कारण्डव चक्रवाक वर्जबह्वचो वतौ नाम्नि दीर्घः। उडुम्बरावती मशकावती नाम्नि किं मशकवान् ग्रामः। तृणादेः सः दन्त्यः। तृणसः। तृणादिस्तु। तृक्ष पर्ण नड़ वर्ण स्वर्ण दल बल जल। ८। मेधादेरिरः। मेधिरः रथिर इत्यादौ ययोर्लोप इति इवर्णावर्णयोर्लोपः। दन्तादेरुरः। दन्तुरः इति पाददन्तेत्यत्र पादशब्दस्य व्यवस्थावाचित्वात् नददादेशः। काण्डादेरीरः

दीर्घौ काञ्चीरः कञ्जीरः। द्यु आदेर्मः। द्युमः द्रुमः। बलादेरुलः दीर्घौ। बलूलः। बलादिस्तु। बल वात ललाट दन्त गल। बल्यादेरिभः। बलिभः। बल्यादिस्तु। बलि तुन्दि वटि। ३। पर्वादेस्तः। पर्वतः मरुत्तः। चूडादेर्लः। चूडालः। चूडादिस्तु। चूडा शिखन् गडु नाभि बीज प्रज्ञा निष्पाव पांशु हनु कर्ण मणि सक्थि लक्ष्मी मांस स्नेह जटा वत्स पक्ष श्याम उदग्रीव पुष्क पिङ्ग पक्ष्मन् पृथु मञ्जु कण्डु कपि जटु चटु पल पर्ण मृदु कृष्ण पेश फेन श्लेष्मन्। ३७। फेनादेरिलः। फेनिलः। फेनादिस्तु। फेन पिच्छा ध्रुवका भ्रुवका प्रज्ञा पूर्णा कल पादक व्रीहि पार्ष्णि धमनि। ११। लोमादेः शः तालव्यः। लोमशः। लोमादिस्तु। लोम रोम रुरु बभ्रु हरि तरु कपि स्वर्ण कर्क। १०। पामादेर्नः। पामनः। पामादिस्तु। पाम श्याम श्लेष्म दद्रु कृमि वलि वाम अङ्ग। ८। प्रज्ञादेर्णः। णित्वात् वृद्धौ प्राज्ञः। प्रज्ञादिस्तु। प्रज्ञा श्रद्धा अर्चा वृत्ति शर्करा सिकता ज्योत्स्ना। ७। शर्करादिभ्यः स्त्रियामीप् वक्तव्यः। मध्वादेरः। मधुरः। मध्वादिस्तु। मधु कुञ्ज शुषि ऊष पुष्क मुख नख पांशु पाण्डु बन्धु खलता सिन्धु कच्छु। कच्छाः कुरः। कच्छुरः। केशादेर्वः केशवः। केशादिस्तु। केश मणि हिरण्य कुमार बिल विषु राजी इष्टगा गाण्डी अजकः। १०। रज आदेर्बलः। रजस्वला। रज आदिस्तु। रजस् कृषि दन्त पुत्र भ्रातृ उत्साह शिखा परिषत् पर्षत्। ९। कृषीवलः दन्तावलः इत्युभयत्र नाम्नस्त्यर्थे दीर्घः। फलादेरिनः। फलिनः। फलादिस्तु। फल बर्ह शृङ्ग मल। ४। ऊर्णादेर्युः। ऊर्णायुः। ऊर्णादिस्तु। ऊर्णा अहम् शुभम्। ७। अहंयुः शुभंयुः इत्युभयत्र युवर्जनान्त्यटेर्लोपः। शृङ्गादेरारकः। शृङ्गारकः एवं वृन्दारकः। निद्रादेरालुः। निद्रालुः। निद्रादिस्तु। निद्रा दया तन्द्रा श्रद्धा कृपा हृदय। ६। अर्श आदेरः। अर्शसः। अर्श आदिस्तु। अर्शस् वैजयन्ती उरस् उदर चतुर पलित जटा घाटा अभ्र इत्यादि। वातादेः किन्। वातकी। वातादिस्तु। वात अतिसार प्रतिसार। ७। अत्र वाशब्दस्यानुक्तसमुच्चयार्थत्वात् सर्वेभ्यः शालिन् वा स्यादस्त्यर्थे। श्रीशाली धनशाली तेजःशाली गोशाली इत्यादि॥ ४४७॥

श्रीरा-टी—संज्ञायाम् अस्त्यर्थे त्ये परेऽचीर्घः स्यात्। प्रायिकं च तत्। स्वामीश्वरः पक्षे स्ववान्। गोस्वी गवादौ। तृणादेः सः। तृणसः तृणादिश्चातुरर्थिके उक्तः पक्षे तृणवान्। मेधादेरिरः मेधिर इति मेधास्ति यस्य यस्मिन् वा आदिशब्दात् रथिरः रथिकः रथवान्। दन्तादुरः। आदिशब्दोऽत्र न प्रयुज्यते

प्रयोजनाभावात् दन्तुर इति उन्नतेऽभिधानात्। अन्यत्र दन्तवान्। काण्डादेरीरः।
काण्डीर इति पक्षे काण्डिकः काण्डवान् आदिशब्दादण्डीरः पक्षे अण्डवान्। द्यु
आदेर्मः द्युशब्दः दिवसवाचकः द्युम इति द्युमान् आदिशब्दात् द्रुम इति द्रुशब्दः
वृक्षावयववाचकः पक्षे द्रुमान्। बलादेरूलः। बलूल इति पक्षे बलवान् बलवातौ
गलदण्डौ ललाटः पञ्चमो मतः। बल्यादेरिभः बलिभ इति यथोर्लोप इतीकार-
लोपः। पक्षे बलिमान्। बलितुण्डिवलयस्त्रयः। पर्व्वादेस्तः। पर्वत इति पक्षे
पर्ववान् आदिशब्दान्मरुत् नदं तसाविति नदम्। चूडादेर्लः चूडाल इति पक्षे चूडी
चूडावान्। चूडा मणी मांस गडुश्च नाभिः प्रज्ञा कपिः पांशुपटू च कर्णः। सिध्मा
ष निष्पाव मृदूद्र कणा स्नेहश्च पेषः पृथुपत्र पर्णः। बीजस्यामोदकं कर्त्तु बहु फेनैश्च
सक्थि च। जङ्घा पर्शुर्हनुः सूक्ष्म श्रीशते पटुमञ्जरः। घाटाकाल जटाक्षेपे बल-
वत्यंस एव हि। चूडादौ कथिताश्चैते वत्सलः स्नेहवत्यपि। अथ प्राण्यङ्गमाबन्तं तथा
कक क्षुद्रजन्तवः। घाटा अस्ति अस्यास्मिन् वा घाटालः फेनादित्वात् घाटिलः एवं
कालनः कालनिनः अस्माच्चन्द्रादिभिर्नोच्यते। जटालः जटिलः क्षेपे अन्यत्र घाटा-
वान् कालवान् जटावान् बलवति अंसल अन्यत्रांसवान् दुर्बल स्नेहवति स्नेहलः
अन्यत्र स्नेहवती गौः। प्राण्यङ्गावन्तात् कर्णिकालः कर्णिकावान् गजः। शिखायाः
प्राण्यङ्गत्वेऽपि अनभिधानान्नेह शिखीति पूर्वेणैव प्राणिग्रहणं किं शिखावान् शिखा
वेदस्याङ्गं न तु प्राणिनः। रुगावन्तात् मूर्च्छालः विचर्चिकालः। क्षुद्रजन्त्वावन्त-
त्वात् यूकालः मक्षिकाल इत्यादि। आवन्तादिति किं हस्तवान् ज्वरवान् मशक-
वानित्यादि। फेनादेरिलः। फेनिल इति। फेन कर्णोदक प्रज्ञा ध्रुवका ध्रुवका
कलाः। पिचिण्ड यवपिच्छाश्च कोकव्रीहि गुहाग्रहाः। जङ्घा पादोदकं पङ्कः
कर्ण तुण्ड शटा वसाः। शर्करा सिकतादेश्च क्षेपे काल घटा जटाः। पार्ष्णिश्च
धमनिश्चैव फेनादौ परिकीर्त्तिताः। केश्चित् गुहाग्रहशब्दौ न पठ्यते। पार्ष्णि-
धमनिभ्यामीनौ वा। आभ्यामीनौ वा स्यात् अस्त्यर्थे। पार्ष्णीनः पार्ष्णिनः पक्षे
पार्ष्णिवान् धमनीनः धमनिनः पक्षे धमनिवान्। लोमादेः शः। लोमश इति।
लोम रोम तरुर्मानं वरुवर्क्षौ कपिर्हविः। बहुबन्ध दशोद्दिष्टा लोमादौ ग्रन्थकी-
विदैः। पामादेर्नः। पामन इति पाम अस्ति अस्य अस्मिन् वा इति वाक्यम्। पाम
श्लेष्मा क्रमिर्दद्रुर्वलिश्च वामसामनी। अङ्गं तु स्यात् प्रशंसायां निवित्सौ ज्योतिषो
हि लुक्। कद्रुशाकौ पलाशीनां स्त्रौ नेलक्ष्मास्तुङ्स्तथा। विम्बश्च दक्षतेर्लुक् च
गणसूत्रप्रमाणतः। अङ्गनेति प्रशंसायां स्वभावात् स्त्रीत्वम् अन्यत्राङ्गवती नेपरे

ज्योतिष इषौ लुक् ज्योत्स्ना इन्दुयुतावभिधानम् अन्यत्र ज्योतिष्मती कट्टर्नागजननी रटहगोधा च क्रद्रुम: शाकी शाकसमूहे स्यात् महत्शाके वा शाकमस्यास्मिन् वा शाकिन: पलाशी महत्पलाशे पलाशसमूहे वा पलाशिन: वयाणां स्व: लक्ष्माङ्ग: नक्ष्मण: विषु अञ्चते: क्विप् विष्वगस्त्यस्मिन् वा विषुण: अञ्चतेर्लुक् । प्रज्ञादेर्ण: । प्राज्ञ इति । प्रज्ञा श्रद्धा च भल्लूको भालुकभलुकावपि । भल्लूकश्च यवश्चापि रोहिणी रुहदित्यपि । कण्डील वकवत्यर्चा लाङ्गूलवयसावपि । मध्वादेर: । मधुर इति । मधु माधुर्य्यमस्त्यस्यास्मिन् वा मधुरो रस: शब्दशक्तिस्वभावात् विवक्षितार्थ एव त्य. द्रव्याभिधानन्तु तद्योगात् मधुरी गुड़: यथा शुक्लादिगुणयोगात् शुक्ल: पट इत्यादि । मधुपचमुखं पांशु रूष पाण्डु नखं शुषि: । वल्गुरप्यथ संज्ञायां खकुञ्जनगसिन्धव: । स्वस्तु कच्छ्वा: शिखायाश्च तमसस्तु तिमिस्तमि: । खरो गर्दभ: कुञ्जरो हस्ती नगरी जनपद: सिन्धुरोदेश: कच्छुरस्त्यस्यास्मिन् वा कच्छुर: रे स्व: अन्यत्र कच्छुमान् एवं शिखा अस्यास्ति शिखर: तमोऽस्यास्ति तिमिरं तमिस्रं पचे तमस्वितमस्वत् । केशादेर्व: केशव इति । केशिष्टकामानहिरण्यराजी कुमार विम्बाश्च विधुर्विवव्यम् । अर्ण: सलुग्वेजकाजगवौ तु नाम्न्येव गाण्डी च परे प्रयोगात् । अर्णोऽस्यास्त्यस्मिन् वा अर्णव: सकारलुक् रूढ़िशब्दात् अवान्यत्वस्य निवृत्ति: अजो विष्णु: को ब्रह्मा ताव-स्मिन् विद्येते अजकं धनु: अथवा अजो मुख्योऽस्य मुख्ये क: सोऽस्त्यस्यास्मिन् वा अजकवं परैकदेशिनस्तु अजकावमित्याहु: । अजं गच्छति अजग: सोऽस्त्यस्या-स्मिन् वा अजगवमिति चान्द्रा: । गाण्डी ग्रन्थि: सोऽस्त्यस्मिन् वा गाण्डीव: अर्जुन-धनु: । रज आदेर्वल: । रजस्वलेति स्त्रीधर्म्मिण्यभिधानम् । नाम्नि रज: शिखा-दन्त: परिषत् कृषिर्वालति: । भावोत्सङ्गोत्साहपुताश्चलार: स्युर्नामनि । शिखा-बली मयूर: दन्तावली हस्ती परिवद्बली राजा अप्रतिसदेति य: । मूले कृषौ वल-इति नाम्नीति र्घ: आतीवल: शौण्डिक: षट् संज्ञायाम् असंज्ञायान्तु भ्रातृबल: । उत्सङ्गबल: उत्साहबल: । ऊर्ज्जोऽसहनबलेऽहङ्कारे । न इत् ऊर्जस्वल: साहङ्कार: । फलादेरिन: फलिन इति । फलं वर्ह: पणो गर्भो मलं शृङ्गञ्च कथ्यते । मलादीमसो वा । मलशब्दादीमस: स्याद्दा अस्त्यर्थे । मलीमस: मलीन: मलवान् वर्हिण: इति पूर्णं इति ण: पचे वर्होत्यादि । ऊर्णादेर्युः । ऊर्णायुरिति ऊर्णा मेषलोम अयुक्ताविति नाकारलोप: । ऊर्णा शुभमहत्त्वय: । शुभम् अहं शब्दौ शुभाहङ्कारयो-र्वर्त्तेते स्वादिपाठात् य्यौ । निद्रादेरालु: । निद्रालुरिति । निद्रा तन्द्रा दया लज्जा कृपा हृदयमेव च । अर्श आदेर: अर्शस इति वैजयन्त इति वैजयन्ती माला अस्ति

यस्यासौ वैजयन्तः अर्श आदिराकृतिगणः । वातादेः किन् । वातकी । वातातिसारपिशाचा इति वयः । शृङ्गादेरारकः । शृङ्गारक इति पक्षे शृङ्गी शृङ्गिकः शृङ्गिणः शृङ्गवान् वृन्दारकः पक्षे वृन्दी वृन्दवान् । वाशब्दस्य व्यवस्थावाचित्वात् । हिमादेर्यः । हिमादेरस्त्यर्थे यः स्यात् । हिम्यः हिमवान् पर्वतः । हिमं गुणा ब्राह्मणश्च मङ्गलञ्च महस्तपः । रूपादाहतप्रशंसायाम् । रूपादस्त्यर्थे यः स्यात् । निघातिकायास्ताड़नादिना निष्पादितं यत् पुरुषाकृतिरूपं तदाहतपदेनोच्यते । उक्तपदादिघटितव्यवहाराय द्रव्यं दीनारः दक्षिणदेशे आहतं प्रसिद्धं रूपमस्ति यस्यासौ रूप्यो दीनारः प्रशस्तरूपमस्यासौ रूप्यो गौः । हिमादेनुः । वेत्येव हिममस्ति यस्यासौ हिमेनुः पक्षे हिम्यः हिमवान् । नित्यं णिको नैकद्रव्यान्नवैकपूर्वन्निष्कपूर्वात् तु शतसहस्रात् । एकद्रव्यवर्जान्नीपूर्वात् एकपूर्वाच्चास्त्यर्थे णिको नित्यं स्यात् निष्कपूर्वाच्छतात् सहस्राच्च । गौरसिकः गौशतिकः गौसहस्रिकः एकशतिकः एकसाहस्रिकः । संख्या संख्यार्दीत परपदस्य त्रिः नैष्कशतिकः नैष्कसहस्रिकः । एकद्रव्यात् तु एकद्रव्यं हिमादिराकृतिगणत्वाद् यः पक्षे एकद्रव्यवान् । कथमेकादशीति पूर्ववाशब्दस्य व्यवस्थया नदादि । नित्यग्रहणादन्यस्यार्थस्य निवृत्तिः । ज्योत्स्नादेः णः । वेत्यनुवर्त्तते मण्डूकगत्या ज्योत्स्नास्ति यस्यामौ ज्योत्स्नः ज्योत्स्नावान् स्त्रियां ज्योत्स्नी ज्योत्स्नावती । ज्योत्स्ना तमी विसर्पश्च तपः शिखा विपादिका । सुधा सहस्रं कुतपं सिकता शर्करा सिधु । कुण्डलञ्च समाख्याता द्वादशैते मनीषिभिः । शर्करासिकताभ्यां लुक् वा देशे । आभ्यामस्त्यर्थविहितानां लुक् स्यात् वा देशे । शर्करा सिकता देशः पक्षे शर्करिलः सिकतिलः इति शार्करः शर्करावान् सैकतः सिकतावान् । सूक्तसाम्नोरीयः । लेरस्त्यर्थे सूक्ते सामनि चाभिधेये ईयः स्यात् । अच्छावाक् शब्दोऽस्ति यस्मिन् सूक्ते अच्छावाकीयं सूक्तं यज्ञोऽस्ति यस्मिन् सामनि यज्ञीयं साम । अध्यायानुवाकयोर्लुक् वा । अनयोरर्थयोरभिधे यीरस्त्यर्थे ईयः स्यात् वा लुक् च । गर्दभशब्दोऽस्मिन् अध्याये वर्त्ततेऽनुवाके वा [illegible]शब्दोऽस्मिन् अध्याये वर्त्तते गर्दभाण्डीयोऽध्यायः गर्दभाण्डः अनुवाकश्च एवं दीर्घजीवितीयः दीर्घजीवितः पलितस्तम्भीयः पलितस्तम्भ इत्यादि । विमुक्तादेः णः । विमुक्तादेरस्त्यर्थे णः स्यात् अध्यायानुवाकयोरर्थयोः । विमुक्तशब्दोऽस्मिन्नध्याये वर्त्तते अनुवाके वा वैमुक्तः अध्यायः अनुवाकश्च । विमुक्तो वसुमान् पूषा दाशार्हः परिशावकः । देवासुरा दशार्णाश्च हर्षवानपि वृत्रहा । सुवर्णोपसदौ सोमः पतत्रीवोर्वशी वयः । असिहत्यो हविर्दान सग्दाविष च वह-

## ४४८। वाग्मिवाचाटवाचालाः।

वाग्मि—वाचालाः १॥।

वाचोऽस्त्यर्थे एते निपात्यन्ते।

## ४४९। जन-खलादि-गो-रथ-वातात् तेन्त्वक-ड्रोलं सङ्घे।

जन—वातात् ५।, त-इन्-त्व-कड्र-ऊलं १।, सङ्घे ७।।

**जनता बन्धुता, खलिनी हलिनी, गोत्रा, रथकड्रा, वातूलः।**

---

वान्। रक्षोऽसुरश्च पत्नीमान् द्वाविंशतिरुदीरिताः। गोषदादेरकः। गोषदादेरस्त्यर्थेऽध्यायानुवाकयोरभिधेययोरकः स्यात्। गोषच्छब्दोऽस्ति यस्मिन्नध्यायेऽनुवाके वा गोषदकोऽध्यायोऽनुवाकश्च। गोषन्मातरिश्वा च देवो वा पारवेष्टु च। देवस्त्वा च रक्षोहा स्वाहोषिद्धा कृशानवः। प्रहर्षश्च प्रकर्षश्च प्राणश्च द्वादशेरिताः। मत्वर्थीयान्तान्न समानजातीयमत्वर्थीयः। समानजातीयमत्वर्थीयत्यान्तान्न समानजातीयो मत्वर्थीयत्यः स्यात् दण्डोऽस्यास्ति दण्डिकः दण्डिकोऽस्यास्तीत्यर्थे न पुनरिकः, किन्तु विरूपो भवत्येव दण्डिकवान् एवं दण्डी स यस्यास्ति दण्डिमान् देश इत्यादि। गुणवाचि रसादेरिन्नादयः। गुणवाचिनो रसादेरिन्नादयो न स्युः। रसोऽस्यास्तीति रसवान् एवं रूपवान् शब्दवान् गन्धवानित्यादि। गुणवाचीति किं रसिको नटः। भाववाचकोऽत्र रसशब्दः रूपिणी कन्या शोभार्थो रूपशब्दः। रसो रूपञ्च शब्दश्च गन्धस्पर्शौ च सम्मतौ। वर्णस्नेहावपि ज्ञेयौ सप्त संख्या उदीरिताः। तत्राहुः। भूम्नि निन्दा प्रशंसायां नित्ययोगेऽतिशायने। संसर्गेऽस्ति विवक्षायामसौ मत्वादयः स्मृताः। भूम्नि बहुले धनवान् निन्दायां ककुदावर्त्ती हयः ककुदावर्त्तोऽनिष्टदायित्वान्निन्द्यः। प्रशंसायां रूपवती कन्या नित्ययोगे क्षीरिणो वृक्षाः अतिशायने उदरवती कन्या संसर्गे दण्डी न तु यस्य गेहे स्थितो दण्डः स दण्डी प्रायिकञ्चैतत्। पुत्रवान् स्वस्तिमान् इत्यादि॥ ४४७॥

वाच्शब्दस्य स्थाने एते निपात्यन्तेऽस्त्यर्थे। विभाषाद्वयमध्यपातादस्य नित्यत्वम्। अत्र निपातो ह्यर्थविशेषे इति वचनात् प्रशस्ता वाचः सन्त्यस्य इत्यर्थे वाग्मी। कुत्सिता बह्वो वाचः सन्त्यस्य इत्यर्थे वाचाटः वाचालश्च॥ ४४८॥

## ४५० । संख्याया डट् पूरणे ।

संख्यायाः ५।, डट् ।१।, पूरणे ७। ।

**एकादशानां पूरणः एकादशः ।**

---

श्री·रा·टी—वाग्मी च वाचाटश्च वाचालश्च ते। निपातौ ह्यर्थविशेष इति वाग्मीति प्रशंसायां वाचाटवाचालौ निन्दायां बहुभाषित्वात् उक्तोऽस्यार्थः ॥ ४४८ ॥

जनश्च खलश्च जनखलौ तौ आदी ययोस्तौ जनखलादी जनखलादी च गौश्च रथश्च वातश्चेति तस्मात्। तश्च इन् च तश्च कड्यश्च ऊलश्चेति तेन् तकड्योलम्। जनादेस्तः। खलादेरिन् गोशब्दात् तः रथात् कड्यः वातादूलः स्यात् समूहे। जनानां समूहो जनता एवं बन्धुता। जनादिस्तु। जन बन्धु गज ग्राम अरविन्द सहाय सुर इति। खलानां समूहः खलिनी एवं हस्तिनी इत्यादि एवं गवां गोता रथानां रथकड्या वातानां वातूलः अत ऊलप्रत्ययान्तस्य पुंस्त्वम् अन्येषां स्त्रीत्वमभिधानात् ॥ ४४९ ॥

श्रीरा·टी—जनश्च खलश्च तौ तावादी यस्य स जनखलादिः, स च गौश्च रथश्च वातश्च तत्तस्मात्, तश्च इन् च तश्च कड्यश्च ऊलश्च तत्। ष्यन्तेभ्य एते क्रमात् स्युः। जनतेति स्त्रीत्वं स्वभावात्। जनो बन्धुः सहायश्च गजहन्दौ च पञ्च ते। खलिनीति। खलः कुमुदमन्दाको लूकपद्महलं विषम्। नलकुङ्कुमगर्भश्च सरोजमपि पङ्कजम्। गोतेति गवां सङ्घ इति वाक्यम्। रथकड्येति रथानां सङ्घ इति वाक्यम् एतेषामपि स्त्रीत्वं स्वभावात्। वातूल इति वातानां सङ्घ इति ॥ ४४२ ॥

संख्यावाचकेभ्यो डट् स्यात् पूरणे। पूर्य्यतेऽनेनेति पूरणः करणेऽनट्। दश पर्य्यन्तानां विशेषेण बाधितत्वात् तान् विहाय उदाहरति। एकादशानां पूरणः एकादशः येन करणेन एकादश संख्या पूर्णा भवति स एकादशः पुतः दशपुत्रेभ्यः पर इत्यर्थः। एवं द्वादशः चतुर्दशः पञ्चदशः षोड़शः सप्तदशः अष्टादशः डित्वात् टिलोपः टित्वादीप् एकादशी इत्यादि ॥ ४५० ॥

श्रीरा·टी—पूर्य्यते सम्पद्यते संख्या येन स तस्मिन् ष्यन्तात् संख्यावाचिनः पूरणेऽर्थे डट् स्यात्। डटावितौ अकार एव त्यः एकादश इति डिति टिलोपः। येनोपजातेन संख्या सम्पद्यते स इत्यर्थः ॥ ४५० ॥

## ४५१। नोऽसंख्यादेर्मट्।

नः ५।, असंख्यादेः ५।, मट् ।१।।

**असंख्यादेर्नान्तसंख्याया मट् स्यात् पूरणे। पञ्चमः।**

## ४५२। तमट् षष्ट्यादेः।

तमट् ।१।, षष्ट्यादेः ५।।

**असंख्यादेः षष्ट्यादेः पूरणे तमट् स्यात्। षष्टितमः सप्तति-तमः संख्यादेस्तु एकषष्टः।**

## ४५३। शतादि-मास-संवत्सरात्।

शतादिमास संवत्सरात् ५।।

**एभ्यस्तमट् स्यात् पूरणे। शततमः एकशततमः मासतमः संवत्सरतमः।**

संख्या आदिर्यस्याः सा संख्यादिः। न संख्यादिरसंख्यादिः तस्याः। पञ्चानां पूरणः पञ्चमः एवं सप्तमः अष्टमः नवमः दशमः असंख्यादेः किम् एकादशः एषां मुख्यानामेव ग्रहणम्। तेन अतिपञ्चानां पूरण इत्यादौ न स्यात्॥ ४५१॥

श्रीरा टी—संख्या आदिर्यस्य संख्यादिः न संख्यादिरसंख्यादिस्तस्मात् न इत्यस्य विशेषणं पञ्चम इति पञ्चानां पूरण इति वाक्यं नीलुप्फि धाविति नस्य लुप् टित्वात् पञ्चमी एवं सप्तमः नवमः दशम इति। असंख्यादेरिति किं एकादशः द्वादश इत्यादि॥ ४५१॥

षष्टिरादिर्यस्य स षष्ट्यादिस्तस्मात्। असंख्यादेरित्यनुवर्त्तते इत्यत आह असं-ख्यादेरिति। षष्टेः पूरणः षष्टितमः अशीतितमः नवतितमः टित्वादीपि षष्टि-तमी। असंख्यादेः किम् एकषष्टेः पूरणः एकषष्टः अत्र पूर्व्वेण डट्॥ ४५२॥

श्रीरा-टी—षष्टिरादिर्यस्य स तस्मात्। षष्टितम इति एवं सप्ततितमः। एवं ऊनषष्टितमः ऊनसप्ततितमः इत्यादि। एकषष्टितमः एकसप्ततितम इति तु विंशत्यादेरिति विकल्प्यते॥ ४५२॥

शतादिश्च मासश्च संवत्सरश्च शतादिमाससंवत्सरं तस्मात्। पृथक् योगादसंख्या-देरिति नानुवर्त्तते। तेन संख्यादिभ्योऽसंख्यादिभ्यो वा एभ्यस्तमट् स्यात् पूरणे। शतस्य पूरणः शततमः एकशततमः एवं सहस्रतमः मासतमः संवत्सरतमः॥४५३

## ४५४ । विंशत्यादेर्वा ।

विंशत्यादेः ५।, वा ।१। ।

**विंशतितमः विंशः, त्रिंशत्तमः त्रिंशः ।**

## ४५५ । चतुःषड्डतिकतिपयात् थट् ।

चतुः—कतिपयात् ५।, थट् ।१। ।

**चतुर्थः षष्ठः कतिथः कतिपयथः ।**

---

श्रीरा-टी—शतमादिर्यस्य सः, शतादिश्च मासश्च संवत्सरश्च तत्तस्मात् यद्यपि षष्ट्यादिग्रहणेन शतादेरपि ग्रहणं तथापि शतादिग्रहणम् असंख्यादिनिवृत्त्यर्थं तेन एकशततम इत्युक्तम् एवमेकमासतमः एकसंवत्सरतमः । आदिशब्दात् सहस्र तम इति ॥ ४५३ ॥

संख्यादेरसंख्यादेर्वा विंशत्यादेस्तमट् स्वाहा पूरणे । विंशतेः पूरणः विंशतितमः पक्षे विंशः पूर्वेण डटि विंशतेस्तेर्लोपे यचोरित्यकारलोपः एवं त्रिंशत्तमः त्रिंशः चत्वारिंशत्तमः चत्वारिंशः पञ्चाशत्तमः पञ्चाशः । संख्यादेस्तु एकविंशतितमः एकविंश इत्यादि । अत्र वाशब्दस्य व्यवस्थावाचित्वात् पूर्वेण संख्यादिवर्जनेऽपि संख्यादेः षष्ट्यादेः पूरणे तमट् स्वाहा । एकषष्टितमः एकषष्ट इति । भागवृत्तिरप्येवम् ॥४५४॥

श्रीरा-टी—विंशतिरादिर्यस्य सः आदिशब्देन नवतिपर्य्यन्तं व्यवस्थीयते । विंशत्यादेः संख्यायास्तमट् स्वाहा पूरणे । पक्षे डट् । विंशतितम इति विंशतेः पूरण इति वाक्यं संख्यादेस्तु एकविंशतितमः । विंश इति डिति तेस्त्वङ्ाविति तेर्लोपः वाशब्दस्य व्यवस्थायामपि तेनाष्टविंशतिमे युग इति चण्डी ॥ ४५४ ॥

चतुर् च षष् च डतिश्च कतिपयश्च चतुःषड्डतिकतिपयं तस्मात् । डतिरिति प्रत्ययस्तेन तदन्तानां कतियतितत्तीनां ग्रहणम् । एभ्यस्थट् स्यात् पूरणे । चतुर्णां पूरणः चतुर्थः एवं षष्ठः कतिथः यतिथः ततिथः कतिपयथः । ननु चतुर्थः षष्ठः इत्युभयत्र विभक्तेर्लुकि दान्तत्वादिरामे विसर्गडकारौ कथं न स्त इति चेत् सत्यं विद्यमानविभक्तीनां पदत्वं स्वाभाविकं लुप्तविभक्तिकानां पदत्वन्तु आतिदेशिकमेव ततश्च आतिदेशिकमनित्यमिति न्यायात् पदत्वाभावेन विरामाभावात् स्वीर्विःफे इति षीड़ःफे इति च न प्रवर्त्तते टित्वादीपि चतुर्थीत्यादि ॥ ४५५ ॥

श्रीरा-टी—चत्वारश्च षट् च कतिश्च कतिपयश्च तत्तस्मात् एभ्यस्थट् स्यात् ।

## ४५६ । बहु-गणपूग-सङ्घातोस्तिथट् तलोपश्च ।

बहु—अतो: ५।, तिथट् ।१।, तलोप: १।, च ।१। ।

**बहुतिथ: यावतिथ: ।**

## ४५७ । द्वितीय-तृतीय-तुर्य्य-तुरीया: ।

द्वितीयतृतीयतुर्य्य-तुरीया: १॥ ।

**एते निपात्या: ।**

## ४५८ । संख्याया धाच् प्रकारे ।

संख्याया: ५।, धाच् ।१।, प्रकारे ७। ।

**चतु:प्रकारं चतुर्धा ।**

---

डटीपवाद: । कतिरिति कतित्यान्त: डतिरिति लिपिकरप्रमाद: कतिपयशब्द: संख्याभिन्न: विभाषयोर्विधिर्नित्य: । चतुर्थ इत्यादौ कथं नविरित्याद्याक्षेप: मनीषादित्वान्नेति परीहार: । षष्ठ इत्यत्र ष्टुभिष्टिति थस्य ठ: न ड इति नैरुक्तम् ॥४५५॥

बहुश्च गणश्च पूगश्च सङ्घश्च अतुश्चेति तस्मात् । अतुरिति प्रत्यय: तेन तदन्तानां यावत् तावत् एतावत् कियत् इयतां ग्रहणम् । एभ्यस्तिथट् स्यात् पूरणे । तिथटि परे यथासम्भवं तलोपश्च । बहूनां पूरण: बहुतिथ: एवं गणतिथ: पूगतिथ: सङ्घतिथ: यावतिथ: तावतिथ: एतावतिथ: कियतिथ: इयतिथ: । अत्र निमित्ताव्यवहितपूर्वतकारस्यैव लोप इति बोध्यम् ॥ ४५६ ॥

श्रीरा टी—बहवश्च गणश्च पूगश्च सङ्घश्च अतुश्च तत्तस्मात् अतोर्निरर्थकस्य ग्रहणम् । तेन मतुवतो: प्राप्ति: न इति लुप्तषीकृदम् । बह्वादिभ्यस्तिथट् स्यात् पूरणे तस्मिन् बह्वादीनां तकाराभावात् अतोस्तकारलोपश्च । बहुतिथ इति बहूनां पूरण इति वाक्यं तिथटि तलोप: तावथित इति एतावतिथ इति ॥ ४५६ ॥

एते पूरणार्थे निपात्या: । यथा द्वित्रिभ्यां तीय: । चतुरो य ईय इति प्रत्ययद्वयं चकारलोपश्च । तुर्य्य इत्यत्र तद्धितयकारवर्जनात् व्यंनचतयीति दीर्घो न स्यात् ॥ ३५७ ॥

श्रीरा-टी—द्वितीयश्च तृतीयश्च तुर्य्यश्च तुरीयश्च ते । पूरणार्थे एते निपात्यन्ते त्रिशब्दस्य तीयो निश्च । चतुर्शब्दस्य चकारस्य तीयत्यस्य तकारस्य च लोपो नित्य ईकारस्य वा ॥ ४५७ ॥

## ४५९ । द्वैधं द्वेधा त्रैधं त्रेधा षोढ़ैकध्यं वा ।

द्वैधं—एकध्यं ।१।।।, वा ।१। ।

**एते निपात्यन्ते वा प्रकारे। पक्षे द्विधा त्रिधा षड़्धा एकधा ।**

## ४६० । संख्याया अवयवे तयट् ।

संख्यायाः ५।, अवयवे ७।, तयट् ।१। ।

**चतुरवयवं चतुष्टयम् ।**

---

संख्यानुवृत्तावपि संख्याग्रहणं संख्यातुल्यानां डत्यतुबहुगणानां च प्राप्त्यर्थम् । तेन संख्यावाचकेभ्यः डत्यतुबहुगणेभ्यश्च धाच् स्यात् प्रकारे । चकारोऽव्ययार्थः । प्रकारः सादृश्यम् । प्रकारो भेदसादृश्ये इत्यमरात् । चतुःप्रकारं चतुर्धा एवं कतिधा यावद्धा बहुधा गणधा । वारार्थेऽपि धाच् स्यादिति केचित् ॥ ४५८ ॥

श्रीरा·टी—प्रकारः सामान्यभेदको धर्म्मः स च द्रव्याश्रितः पटुत्वादिः । चतुः-प्रकारमिति चत्वारः प्रकारा यस्य सर्वत्स्यर्थे एवायमिष्यते तेन चतुरः प्रकारान् भुङ्क्ते चतुर्भिः प्रकारैर्भुङ्क्ते चतुर्धा भुङ्क्ते एवं नवधा द्रव्यम् एकराशिं पञ्चधा कुरु इत्यादि ॥ ४५८ ॥

एते धाजन्ता निपात्यन्ते वा। द्विप्रकारं द्वैधं द्वेधा त्रिप्रकारं त्रैधं त्रेधा। षट्प्रकारं षोढ़ा एकप्रकारम् एकध्यं पक्षे द्विधा त्रिधा षड्धा एकधा इति ॥४५९॥

श्रीरा·टी—एते निपात्यन्ते। द्विप्रकारं द्वैधं द्वेधा त्रिप्रकारं त्रैधं त्रेधा षट्-प्रकारं षोढ़ा एकप्रकारम् एकध्यं पक्षे द्विधेत्यादि। षड़ेधाति षोड़ःफे इति डे कृते दान्तटुपरत्वान्न धस्य ढः ॥ ४५९ ॥

पुनः संख्याग्रहणं डत्यतुबहुगणानामप्राप्त्यम्। संख्यावाचकेभ्यस्तयट् स्याद-वयवे। चतुष्टयमिति रेफस्य विसर्गे विसर्गस्य सकारे लौकीर्षादिति षत्वे तस्य टत्वम्। एवं पञ्चतयमित्यादि। टित्वादीपि चतुष्टयी इति ॥ ४६० ॥

श्रीरा·टी—अवयवावयवि सम्बन्धे षी। पुनः संख्याग्रहणं बह्वादिनिवृत्त्यर्थं द्वयोर्विभाषयोर्मध्ये विधिर्नित्यः अवयववृत्तेः संख्यायास्तयट् स्यात् ट इत्। चतुर-वयवमिति। चत्वारोऽवयवा अस्य कुलस्य चतुष्टयमिति स्त्रियां चतुष्टयी रज्जुः ॥४६०॥

## ४६१ । द्वित्रेर्वायट् ।

द्वित्रेः ५।, वा ।१।, अयट् ।१। ।

द्वयं द्वितयं त्रयं त्रितयम् ।

## ४६२ । तरतमौ द्वि-बहूनामेकोत्कर्षे ।

तरतमौ १॥, द्वि-बहूनां ६॥, एकोत्कर्षे ७। ।

द्वयोरेकस्यातिशये तरो बहूनां तमः स्यात् । अयमनयो-रतिशयेन विद्वान् विद्वत्तरः, अयमेषामतिशयेन विद्वान् विद्व-त्तमः । शुभ्रतरा शुभ्रतमा ।

---

आभ्यामयट् स्याद्वा अवयवे । द्व्यवयवे इत्यर्थे अयटि यचोर्लोप इतीकारलोपे द्वयम् । पक्षे पूर्वेण तयटि द्वितयम् एवं त्रितयं टित्वात् द्वयी त्रयी ॥ ४६१ ॥

श्रीरा-टी—द्वौ च त्रयश्च तत्तस्मात् पुंस्त्वं सौत्रत्वात् । आभ्यामवयवेऽयट् स्याद्वा । द्वयमिति द्वाववयवावस्य इति वाक्यं पक्षे तयट् द्वितयम् एवं त्रितयं त्रयं वाशब्दस्य व्यवस्थया उभयशब्दान्नित्यमयट् उभाववयवावस्य उभयं ननु कथम् उभये देव-मनुष्या इति देवमनुष्याणां बहुत्वात् इति चेत् सत्यं देवत्वमनुष्यत्वयोर्द्वित्वमादाया-वयवद्वयमिति ॥ ४६१ ॥

तरश्च तमश्च तरतमौ । द्वौ च बहवश्च द्विबहवः तेषाम् । द्विबहूनामिति निर्धा-रणे षष्ठ्या द्वयोर्मध्ये एकस्यैव उत्कर्षः सम्भवतीत्यत आह वृत्तौ एकस्यातिशये इति । एवं द्विबहूनामिति बहुवचनान्तत्वेऽपि शब्दसाम्यात् तरतमाभ्यां यथासंख्यम् । अय-मनयोर्मध्ये अतिशयेन विद्वान् इत्यर्थे तरे वस्ध्वसिति दङि झप् झसेति दस्य तः विद्वत्तरः । एवम् अयमेषां मध्ये अतिशयेन विद्वान् विद्वत्तमः । एतेन उत्कर्षार्थ-प्रत्ययाः प्रथमान्तादेव तदन्ताः पूर्वलिङ्गा इति बोध्यम् । इयमनयोरतिशयेन शुभ्रा शुभ्रतरा एवम् अतिशयेन साध्वी साधुतरा अत्र पुंवत्स्युक्त इति पुंवद्भावः ॥४६२॥

श्रीरा-टी—तरश्च तमश्च तौ द्वौ च बहवश्च ते तेषां निर्द्धारणे षीति उत्कर्षो-ऽत्यर्थ प्रकर्षोऽतिशय इति पर्य्यायः । स च स्वरूप प्रकृत्यर्थतावच्छेदकापेक्ष्य एव भवति न तु जातिः । स्वयं प्रधारणायां स्वमपेक्षते तथाच जातिभिन्नप्रकृत्यर्थताव-च्छेदकप्रकर्षो भवत्येव तेन गौतरो गौतम इति न स्यात् भवति च । गुणे शुक्लतरः

## ४६३। रूपकल्पे चेबूप् ह्रस्वं वा त्रित्तु पुंवच्च।

रूपकल्पे ७, च।१।, ईप् ऊप्।१।, ह्रस्वं १।, वा।१।, त्रित्।१।, तु।१।, पुंवत्।१।, च।१।।

चकारात्तरतमरूपकल्पेषु ईबन्तमूबन्तञ्च ह्रस्वं स्याद्वा उद्दि-दित्तु पुंवच्च। स्त्रितरा स्त्रीतरा, वामोरुतरा वामोरूतरा। विदुषितरा विदुषीतरा विद्वत्तरा, सतितरा सतीतरा सत्तरा।

---

शुक्लतमः क्रियायां पाचकतरः पाचकतमः। ननु कथं गोतरः गोतमः चैत्ररथः चैत्रतम इति न स्यात्। इति चेत् न गोत्वादेरेकमात्रवृत्तित्वे प्रकृत्यर्थतावच्छेदक-विशिष्टान्तरापेक्षत्वाभावात्। यदा तु तत्तत् ह्रस्वुत्कर्षातिप्रकर्षस्तदा स्यादेव तार-तरः तारतमः मन्दतरः मन्दतमः इति। विद्वत्तर इति विद्यागत उत्कर्षो गम्यते। सस्ध्वसेति दङ्। शुक्लतरेति द्वयमनयोरतिशयेन शुक्ला इति वाक्यं शसन्ततरादा-विति पुंवद्भावः। ननु पाटलिपुत्रेभ्यो मथुरा आढ्यतरा द्वयोरुत्कर्षे तरः तर्हि कथं मथुरा विशेषिणाढ्यशब्दात्तर इति चेत् सत्यं राशिद्वयावाचित्वयोरुत्कर्षे तर पाटलि-पुत्रात् वरं तु अवयवापेक्षया॥ ४६२॥

रूपश्च कल्पश्च रूपकल्पं तस्मिन्। ईप् च ऊप् च ईबूप्। उश्च ऋश्च वरौ। वरौ इतौ यस्य स त्रित्। पुमानिव पुंवत्। चकारात् तरतमादयश्च इत्यत आह तरतम रूपकल्पेष्विति। द्वयमनयोरतिशयेन स्त्री स्त्रितरा अनेन ह्रस्वम्। पक्षे स्त्रीतरा एवं वामोरुतरा वाम लक्षणेत्यादिना ऊपि अनेन वा ह्रस्वः। विदुषितरे-त्यादि। वेत्तेः शतुः क्वसुर्वेति क्वसौ उदित्वादीप्। द्वयमनयोरतिशयेन विदुषी इति तरे कृते ह्रस्वे विदुषितरा पुंवद्भावे विद्वत्तरा उभयोरप्राप्तौ स्वरूपेणावस्थानम् एवम् अस्तभावे शतृलोपाल्यसोरिति अकारलोपे ऋदित्वादीपि द्वयमनयोरति-शयेन सती इति तरे कृते ह्रस्वे सतितरा पुंवद्भावे सत्तरा उभयोरप्राप्तौ स्वरूपेणाव-स्थानम्। अत्र वाशब्दस्य व्यवस्थावाचित्वात् अनेकाच् ईबन्तस्य तरादौ ह्रस्वो न स्यात्। तेन यवानीतरा। हिमानीतरा अरण्यानीरूपा। पत्नीकल्पा इत्यादि। एतत्रापि उक्तपुंस्कानामीबन्तानां पुंवत्स्वुग्रक्यपुंस्केत्यनेन पुंवद्भावो नित्यः। यथा अतिशयेन वैष्णवी वैष्णवतरा शाक्ततमा गौररूपा। ईषदूना पट्वी पटुकल्पा इत्यादि। केचित्तु त्रवादौ परे उकारेत ऋकारेतोर्विभाषया पुंवद्भावह्रस्वौ विधाय विदुषित्तुदा

## ४६४। त्यादेश्च रूपः।

त्यादि: ५।, च ।१।, रूप: १। ।

**लेस्त्यादेश्चोत्कर्षे रूपः स्यात्। पटुरूपः पचतिरूपम्।**

---

विद्वद्भुवा इत्युदाहरन्ति। अत्र भुवी दचादिशाभावस्तु अरविहितकार्य्यस्यानित्यत्वात्। अतएव विभुतिः कटके कृता इत्यादि सङ्गच्छते॥ ४६३॥

गोरा-टी—रूपश्च कल्पश्च तत्तस्मिन् ईप् च ऊप् च तत् स्वमिति गीकान्तं दम् उत्र त्रश्च ब, ह इयस्य त्रित्। तरतमावपीति क्विविपरिणामात् तरतमयोश्चकारेण रूपकल्पे इति समुच्चीयते अत आह तरतमरूपकल्पेष्विति पुंवच्चेति पुंवत्स्युरुक्तपुंस्क इति नित्ये प्राप्ते विकल्पः। ननु कथं स्त्रीतरा ब्राह्मणीतरा इत्यादौ द्रव्यजातिवाचित्वे प्रकर्षाभावात् तरतमाविति चेत् न स्त्रीपदेन स्त्रीविशेषावयवसंयोगः ब्राह्मणपदेन ब्राह्मणप्रतिपादकक्रियाविशेषः कथ्यते तस्मात् गुणक्रियागतप्रकर्षात्तरतमाविति। विदुषितरेति विदत्यतौ शट शतुर्वसुः उदीत्त्वादीप् वसोर्वः सेम इति वस्य उः अनेन स्वः पक्षे विदुषीतरा इति पुंवद्भावपक्षे विद्वत्तरेति कोरभावान्न वस्य उः। सतितरेति अस्तभावे शट आद्यकारलोपः ऋदित्त्वादीप् अनेन स्वः पुंवत्त्वे उः। भुव चेल गोत्र मत हतेषु पुंवदिवानेकाचः। भुव चेल गोत्रशब्दाः कुत्सार्थाः एषु मतहतयोश्चानेका जीवन्तः स्त्री वा स्यात् त्रित्तु पुंवद्वा। पतिभुवा पत्नीभुवा ब्रह्मघ्नी पचाद्यनि कित् ब्राह्मणिचेली ब्राह्मणीचेलि तरुणिगोत्रा तरुणीगोत्रा कुमारिमता कुमारीमता गौरिहता गौरीहता विदुषिभुवा विद्वद्भुवा विदुषीभुवा सतिचेली सच्चेली सतीचेली चिलशब्दकौ पचादित्वादन् नदादित्वादीप्। अनेकाजिति किम्। स्त्रीभुवा स्त्रीचेली ईविति किं वामोरूभुवा लक्ष्मीचेलीत्यादि। नानुक्तपुंस्कानेकाच् तरादिषु तौ। नित्यस्त्रीलिङ्गानेका जीवन्तस्य स्वपुंवद्भावौ न स्यातां बदरितरा बदरीतमा बदरीभुवा। अनेकाजिति किं स्त्रितरा अनुक्त इति किं गौरितरा गौरीचेली॥ ४६३॥

द्विबहूनामुत्कर्षे इत्यनुवर्त्तते। साद्यन्तात् त्याद्यन्ताच्च रूपः स्यात्। अत्र एकप्रत्ययस्य अर्थद्वयेन यथासंख्यासम्भवात् द्वयोर्मध्ये एकस्यातिशये बहूनां मध्ये एकस्यातिशयेऽपि स्यादित्यर्थः। अतएव उत्कर्षे इत्येव स्वयं लिखितम्। अयमनयोरेषां वा अतिशयेन पटुः पटुरूपः एवम् अतिशयेन पट्वी पटुरूपा इत्यादौ पुंवद्भावः।

## ४६५ । किमेत्याच्चाद्रव्ये चतरां चतमाम् ।

किम्-ए-त्यात् ५।, च ।१।, अद्रव्ये ७।, चतरां चतमाम् ।१॥ ।

**किम् एदन्तात् त्यात् त्याद्यन्ताच्च द्विबहूनामेकोत्कर्षे चतरां चतमां स्तः न तु द्रव्ये । किन्तरां प्राह्णेतरां उच्चैस्तरां पचतितराम् । एवं चतमाम् । द्रव्ये तु उच्चैस्तरस्तरुः ।**

---

अतिशयेन पचति पचतिरूपम् एवं पचतोरूपं पचन्तिरूपम् । एषु कर्त्तुरेकत्वद्वित्वबहुत्वानुरोधेन तिबादयः प्रयुज्यन्ते न तु क्रियाया एकत्वद्वित्वबहुत्वानि । ततश्च क्रियाया अमूर्त्तत्वात् पुंस्त्वाद्यभावे रूपान्तरक्रियापदस्य लिङ्गनिर्णयाभावे सामान्यत्वान्नपुंसकमिति वचनात् क्लीवत्वम् । एवं क्रियायाः संख्याभावे रूपान्तरक्रियापदस्य लिङ्गसंख्यानुरोधेन जायमानानां स्यादीनामपि एकवचनमेव प्रथमोपस्थितपरित्यागे प्रमाणाभावात् ॥४६४॥

श्री·रा·टी—तिरादिर्यस्य स तस्मात् येन विधिस्तदन्तस्येति न्यायात् आह त्यादेश्चेति उत्कर्षे स्वार्थे पटुरूप इति प्रकृष्टः पटुरिति वाक्यं प्रकृष्टा पट्वी पट्विरूपा पट्वीरूपा इत्यभावपक्षे पटुरूपेति । पचतिरूपं प्रकृष्टं पचतीति वाक्यं क्रियाप्राशस्त्यं रूपत्येन द्योत्यते क्रियाया लिङ्गसंख्याभावात् पचतोरूपं पचन्तिरूपमित्यादि क्यन्तादिति क्यन्यत्वाल्लिङ्गम् ॥४६४॥

किम् च एश्च त्यश्च किमेत्यं तस्मात् न द्रव्यम् अद्रव्यं तस्मिन् । चतरां च चतमां च चतरां चतमां सूत्रत्वादौकारलोपः । चकारात् त्याद्यन्ताच्च । किन्तु चानुकृष्टं नोत्तरत्र इति त्याद्यन्तस्य नानुवृत्तिः । द्रव्याणि यथा पृथिव्यप्तेजोवाय्वाकाशकालदिगात्ममनांसि नवैव द्रव्याणि । रूप रस गन्ध स्पर्श शब्द संख्या परिमाण पृथक्त्व संयोग विभागपरत्वापरत्व बुद्धि सुखदुःखेच्छा द्वेष प्रयत्नादयो गुणाः । उत्क्षेपणावक्षेपणाकुञ्चनप्रसारणगमनानि पञ्चैव कर्म्माणि इति भाष्यम् । इदमनयोरतिशयेन किं किन्तरां किमशब्दोऽत्र कुत्सार्थः अतिकुत्सितं रूपमित्यर्थः । प्राह्णेतरामिति एकारान्तात् प्रत्ययविधानसामर्थ्यात् सप्तम्यन्तात् प्रत्यये विभक्तेरलुक् अभिधानात् । ननु द्रव्यस्य कथमुत्कर्षः सम्भवति क्रियागुणयोरेव उत्कर्षः इति चेत् सत्यं क्रियागुणयोरुत्कर्षेणैव तदाश्रयस्य द्रव्यस्य उत्कर्षः स्यात् उपचारात् यथा मञ्चाः क्रोशन्ति इत्यत्र मञ्चस्थितजनस्य क्रोशनेनैव मञ्चक्रोशनमुच्यते अत्र किमा·

## ४६६। गुणाद्विष्ठेयसू।

गुणात् ५।, वा ।१।, इष्ठ ईयसू १॥।

**गुणवाचिनो द्विबह्वनामेकोत्कर्षे क्रमादिष्ठेयसू ईयस्विष्ठौ वा स्तः।**

---

दीनां मध्ये ये गुणादिवाचिनो द्रव्यवाचिनश्च तेभ्यो गुणादौ प्रत्ययौ स्त. द्रव्ये वाच्ये तु न स्त इत्यर्थः। ये तु द्रव्यमात्रवाचिनो भवन्ति तेभ्यो द्रव्ये वाच्येऽपि प्रत्ययौ स्तः विधानसामर्थ्यात्। अन्यथा अद्रव्ये इति नोक्त्वा अद्रव्यादित्येवावदिष्यत्। अतएव प्रातस्तरां पतत्रिभ्यः प्रबुद्धः प्रणमन् रविमिति भट्टौ। अतिशयेन प्रातःकाल इत्यर्थः। अयमनयोरतिशयेन उच्चैः उच्चैस्तरां शब्दः। एवं नीचैस्तरां गन्धः। इदमनयोरतिशयेन पचति पचतितरां अत्र पचनक्रियाया उत्कर्षः एवं चतमाम्। द्रव्ये तु उच्चैस्तरस्तरुः एवं नीचैस्तरो घटः। किन्तरो राजा ॥४६५॥

श्रीरा·टी—किम् च एश्च व्यश्च तत्तस्मात् न द्रव्यम् अद्रव्यं तस्मिन्, चतराश्च चतमाश्च तौ मण्डूकगत्या द्विबह्वनामेकोत्कर्षे इत्यनुवर्त्तयन्नाह द्विबह्वनामित्यादि किन्तरामिति इदञ्च किम् इदमनयोरतिशयेन किम् इति वाक्यं किन्तमामिति इदञ्च किम् इदमेषामतिशयेन किमिति वाक्यं यद्यपि किं प्रश्ने तथापि न प्रश्नप्रकर्षे त्यः किं तर्हि पृच्छ्यमानगुणस्य क्रियाया वा प्रकर्षे चतरां चतमां त्यः पृच्छ्यमानप्रकर्षस्यैवावगम्यमानत्वात्। प्राह्णेतरामिति कालवाचिनः मप्रास्वेरादौ लुगभावविधानात् कालस्य द्रव्यवाचित्वात् अद्रव्य इति निषेधे प्राप्ते वचनं कालव्यतिरिक्तस्य एतदन्तत्वाभावात् एवं पूर्वाह्णेतराम् अपराह्णेतराम् इत्यादि। उच्चैस्तरामिति गुणप्रकर्षे एवं सुतरां नितरामित्यादि पचतितरामिति क्रियाप्रकर्षे एवं पचन्तितरां पचन्तितमामिति चित्वादाम्। उच्चैस्तर इति यद्यपि द्रव्ये प्रकर्षाभावस्तथापि गुणक्रियाप्रकर्षौ यदा द्रव्ये आरोप्यते तदैवायं प्रतिषेधः पूर्वेण तरतमाविति ॥४६५॥

द्विबह्वनामुत्कर्षे इत्यनुवर्त्तते। वाशब्दोऽत्र व्यवस्थावाची विकल्पवाची च। व्यवस्थया क्रमाभावः। तेन गुणवाचिनो द्वयोर्मध्ये एकोत्कर्षे इष्ठेयसू बहुनां मध्ये एकोत्कर्षेऽपि इष्ठेयसू स्यातां वा ॥४६६॥

श्रीरा·टी—इष्ठश्च ईयसुश्च तौ इह सामान्यगुणशब्दस्य विशेषपरतया गुणमात्र-

## ४६७ । ञीमंश्च डिन्नैकाचः ।

ञि-इमन् ।१।, च ।१।, डित् ।१।, नैकाच: ५। ।

**ञिरिमन् इष्ठ ईयसुश्च अनेकाचो लेः परो डित् स्यात् । लघिष्ठः, लघीयान् ।**

## ४६८ । लुङ्मद्वद्विनाम् ।

लुक् ।१। मत्-वत्-विनाम् ६।।।, ।

**मतिष्ठः, मेधिष्ठः ।**

---

गुणस्य ग्रहणं न तु गुणिवृत्तिगुणस्य तेन घटस्य शुक्लीयान् शुक्लिष्ठो गुण इति न स्यात् गुणादिति किं पाचकतरः पाचकतमः क्रियाप्रकर्षे मा भूत् । यद्यपि द्वयोरेकस्याति-शये ईयसुर्बहूनाम् एकातिशये इष्ठं पाणिनीये यथा अतिशायने तमबिष्ठनौ द्विवचनविभज्योपपदे तरबीयसुनौ तरप् तमप् साहचर्य्यादीयस्विनिष्ठनौ प्रति-पादितौ यथा संक्षिप्तसारेऽपि गुणादीयस्विष्ठाविति तथापि ग्रन्थकृता द्विबहूना-मित्यनुवर्त्त्य क्रमेण इष्ठेयसू ईयस्विष्ठौ भवतः प्रयोगदर्शनादित्युक्तं वृत्तौ ॥ ४६६ ॥

ञिश्च इमन् च ञीमन् । ड इत् यस्य स डित् । न एको नैकः नैकोऽच् यस्य स नैकाच् तस्मात् । चकारादिष्ठेयसू च इमन् इष्ठ ईयसूनां साहचर्य्यात् ञिरत्र लेः पर एव । एतेन जागरयतीत्यादौ न प्रसङ्गः । एवं शसन्ततरादिभिः (सद्दीप-न्यासात् ञिरपि शसन्ततरादिर्बोध्यः । तेन युवतिमाचष्टे इत्यत्र ञौ पुंवद्भावात्ति-प्रत्ययस्य निवृत्तौ कनादेशे कनयति पक्षे यवादेशे यवयति एवं गुर्वीमाचष्टे इत्यत्र ञौ पुंवद्भावादीपो निवृत्तौ तन्निमित्तस्य वकारस्यापि उकारत्वे गरादेशे गरयति । अयमनयोरेषां वा अतिशयेन लघुः लघिष्ठः इष्ठे डित्त्वात् टिलोपः । एवं लघी-यान् । पक्षे लघुतरः लघुतमः एवं लघोर्भावः लघिमा एवम् अतिशयेन लघ्वी लघिष्ठा लघीयसी . लघ्वाभावो लघिमा । एषु शसन्ततरादितया पुंवद्भावादीपो निवृत्तौ डित्त्वात् टिलोपः ॥ ४६७ ॥

श्रीरा-टी—ञिश्च इमंश्च तत् ञीमन्, नास्त्येकोऽच् यस्य स नैकाच् तस्मात् । लघिष्ठ इति अयमनयोरेषां वाऽतिशयेन लघुरिति वाक्यम् एवं लघीयानिति वेत्ति

## ४६९ । त्वन् लोप्यः ।

त्वन् ।१।, लोप्यः १। ।

**करिष्ठः ।**

---

पक्षे लघुतरः लघुतमः इति श्रीमौरुदाहरणं तत्तत् प्रकरणे वक्ष्यति प्रेष्ठ इत्यत्र पृथक् पौनिर्देशात् न यणोर्लोपः ॥ ४६७ ॥

मतुश्च वतुश्च विन् च मद्वविनः तेषाम् । अर्थवशाद्विभक्तिविपरिणाम इति न्यायात् ज्यादेः सप्तम्यन्तत्वेनानुवृत्तिः । तेन ज्ञि इमन् इष्ठ ईयसु एषु परेषु मतुवतुविनां लुक् स्यात् । अतिशयेन मतिमान् मतिष्ठः अत्रानेन मतोर्लुकि डित्वात् टिलोपः । किञ्चात्र असिद्धं बहिरङ्ग इति न्यायात् टिलोपस्य सिद्धत्वाभावे तकारस्य दकारो न स्यादिति अतिशयेन मेधावान् अतिशयेन मेधावी वा इत्युभयत्र इष्ठे वतुविनो- र्लुकि डित्वात् टिलोपे मेधिष्ठः एवं मतीयसी मेधीयसी । मतिमतो भावः मतिमा मेधिमा मतिमन्तमाचष्टे मतयति । अत्र समाहारेणैवेष्टसिद्धौ मद्ववि- नामिति बहुवचनं गणार्थम् । तेन अनट् क्तवतु घञ् अल् आनङ्युक्त ईप् एषां लुक् स्यादाख्याने ञौ परे इति बोध्यम् । उदाहरणं लिः क्रत्याख्याने इत्यत्र द्रष्टव्यम् । मत्वर्थिनामिति पाठे गोमी त्वगस इत्यादीनां मिनादेरपि लोपापत्तिः ॥ ४८८ ॥

श्रीरा-टी—मतुश्च वतुश्च विंश्च तेषां लुक् स्यात् ज्यादिषु । मतिष्ठ इति अयमनयोरेषां वा अतिशयेन मतिमान् इति वाक्यम् अयमनयोरेषां वा मेधावान् मेधावी वा मेधिष्ठः पक्षे मतिमत्तरः मेधावत्तर इत्यादि । एषामिति किं गोमिष्ठः गोमीयान् मतुपक्षेऽपि गविष्ठः गवीयानिति ॥ ४६८ ॥

त्वनो लोपः स्यात् ज्यादिषु । अतिशयेन कर्त्ता करिष्ठः । अत्र त्वनो लोपे त्यलोपे त्यलक्षणमिति न्यायात् गुणे एकाचत्वान्न टिलोपः । एवं करीयान् करिमा कर्त्तारमाचष्टे कारयति अत्र त्वनो लोपे गुणस्य निवृत्तौ ञौ परे पुनः वृद्धिः ॥ ४६९ ॥

श्रीरा-टी—ज्यादिषु त्वन्लोप्यः स्यात् । करिष्ठ इति अयमनयोरेषां वा अति- शयेन कर्त्ता इति वाक्यम् एवमियमनयोरासां वा दोग्ध्री दोहिष्ठा दोहीयसी गौः । अचि दावत्वाभावः अतएव त्वन्नन्तक्रियावाचकात्तौ ॥ ४६९ ॥

४७० । वाढ़ान्तिक स्थूल दूर युव चिप्र चुद्र प्रिय स्थिर स्फिरोरु गुरु बहुल तृप्र दीर्घ ह्रस्व वृद्ध वृन्दारकाः—साध नेद स्थव दव यव चेप चोद प्र स्थ स्फ वर गर वंह त्रप द्राघ ह्रस वर्ष वृन्दाः ।

वाढ़—वृन्दारकाः १॥, साध—वृन्दाः १॥ ।

एषां स्थाने क्रमादेते स्युरिष्ठादिषु ।

साधिष्ठः नेदिष्ठः स्थविष्ठः दविष्ठः यविष्ठः चेपिष्ठः चोदिष्ठः प्रेष्ठः स्थेष्ठः स्फेष्ठः वरिष्ठः गरिष्ठः वंहिष्ठः त्रपिष्ठः द्राघिष्ठः ह्रसिष्ठः वर्षिष्ठः वृन्दिष्ठः ।

---

अयमनयोरेषां वा अतिशयेन वाढ़ः साधिष्ठः । एव सर्वत्र प्रथमान्तेन वाक्यम् अन्तिकः नेदिष्ठः स्थूलः स्थविष्ठः दूरः दविष्ठः युवा यविष्ठः चुद्रः चोदिष्ठः प्रियः प्रेष्ठः स्थिरः स्थेष्ठः स्फिरो बह्वर्थः स्फेष्ठः उरुर्महदर्थः वरिष्ठः गुरुः गरिष्ठः बहुलः वंहिष्ठः तृप्नोतीति तृप्रः औणादिको रेफः इति रमानाथः । तृप्रः त्रपिष्ठः दीर्घो द्राघिष्ठः ह्रस्वो ह्रसिष्ठः वृद्धो वर्षिष्ठः वृन्दारको देवो मुख्यो वा वृन्दिष्ठः । एषु पूर्वेण इष्ठे क्रमादादेशाः एषां मध्ये ये गुणवाचका न भवन्ति तेभ्योऽपि इष्ठादयो भवन्ति इष्ठादिषु परेषु आदेशविधानसामर्थ्यात् । अत्र प्रस्थस्फादीनां यथीर्लोप इत्यकारलोपः कथं न स्यादिति गाढ़ानुपपत्तिः । अत्र रामानन्दस्तु औमंश्चेत्यत्रैकाच्वर्जनसामर्थ्यात् यथीर्लोप इत्यपि न स्यादित्याह तद्वेयं रायमाचष्टे राययति एवं नावयति इत्यादौ एकाच्वर्जनस्य साफल्यात् । काशीश्वरस्तु प्रस्थस्फादीनाम् अदन्तनिर्देशादेव यथीर्लोप इति न स्यादित्याह तदपि हेयं प्रियमाचष्टे प्रापयति इत्यादौ नाप् सत्यार्थे त्वादिनामाप् विधानेनैव अदन्तसाफल्यात् । वस्तुतस्तु यथी लोंप इत्यत्र अश्च इश्च ए इति विग्रहे एर्लोप इत्यनेनैवेष्टसिद्धौ यथीरिति गौरवं ज्ञापयति प्रस्थस्फ इत्यत्र इष्ठ ईयसु इमन् एषु यथीर्लोप इत्यकारलोपो न स्यादिति । तेन प्रेष्ठः प्रेयान् प्रेमा इत्यादि । अतिशयेन वाढ़ः साधीयान् वाढ़स्य भावः साधिमा वाढ़माचष्टे साधयति ॥४७०॥

## ४७१। प्रशस्यः श्रः।

प्रशस्यः। १।, स्रः १।।

श्रेष्ठः।

## ४७२। ज्यो वृद्धश्चेयस्वाः।

ज्यः १।, वृद्धः १। च।१। ईयस्वी।१। आः १।।

वृद्धः प्रशस्यश्च जादौ ज्यः स्यात्, तस्माच्चेयसोरी आः स्यात्। ज्येष्ठः ज्यायान्।

## ४७३। पृथुमृदुकृशभृशदृढ़परिवृढ़स्यर्द्रः।

पृथु—परिवृढ़स्य ६।, ऋत्।१।, रः १।।

एषामृकारस्य जादौ रः स्यात्। प्रथिष्ठः।

---

श्री रा-टी—बाढ़श्च अन्तिकश्च स्थूलश्च दूरश्च युवा च चिप्रश्च चुद्रश्च प्रियश्च स्थिरश्च स्फिरश्च उरुश्च गुरुश्च बहुलश्च टप्रश्च दीर्घश्च ह्रस्वश्च वृद्धश्च वृन्दारकश्च ते, साधश्च नेदश्च स्थवश्च दवश्च यवश्च चेपश्च चोदश्च प्रश्च स्थश्च स्फश्च वरश्च गरश्च बंहश्च त्रपश्च द्राघश्च ह्रसश्च वर्षश्च वृन्दश्च ते। अयमनयोरेषां वा अतिशयेन बाढ़ इत्यादि वाक्यं साधिष्ठः साधीयान् डिति टिलोपः परे प्रस्थस्फान् विना सर्वे हसन्तादेशाः एकाचत्वात् जादीनां न डित्वम् ॥४७०॥

प्रशस्यः श्रः स्यात् जादौ। अयमनयोरेषां वा अतिशयेन प्रशस्यः श्रेष्ठः एवं श्रेयान् श्रेमा आपयति ॥४७१॥

श्रीरा-टी—प्रशस्य इति ष्यर्थे श्रीकान्तं दं प्रशस्यः आदेशः स्यात् जादिषु। श्रेष्ठः श्रेयान् इति अयमनयोरेषां वातिशयेन प्रशस्य इति वाक्यम् ॥४७१॥

ईयसोरी ईयस्वी इति लुप्तप्रथमैकम्। अयमनयोरेषां वा अतिशयेन वृद्धः प्रशस्यो वा ज्येष्ठः। एवं ज्यायान् अत्र ज्यादेशात् परस्य ईयसोरीकारस्य आ। एवं ज्येमा ज्यापयति ॥४७२॥

श्रीरा-टी—ईयस ई ईयसी लुप्तषीकं दम् आलुप्तप्रीकदम्। अयमनयोरेषां वा अतिशयेन वृद्धः प्रशस्यो वा इत्यर्थे ज्येष्ठः ज्यायान् पूर्वेण वर्षिष्ठः वर्षीयान् ॥४७२॥

पृथुश्च मृदुश्च कृशश्च भृशश्च दृढ़श्च परिवृढ़श्चेति तस्य। अयमनयोरेषां वा

## ४७४। युवाल्पौ कन् वा।

युवाल्पौ १॥, कन् ।१।, वा ।१।।

**कनिष्ठः यविष्ठः अल्पिष्ठः। एवमीयसुः।**

## ४७५। गुणादिमन् भावे।

गुणात् ५।, इमन् ।१।, भावे ७।।

**गुणवाचिन इमन् स्याद्भावे। लघिमा।**

---

अतिशयेन पृथुः प्रथिष्ठः अत इष्ठे डित्त्वात् टिलोपः। एवं म्रदिष्ठः क्रशिष्ठः भ्रशिष्ठः द्रढिष्ठः परिव्रढिष्ठः एवञ्च प्रथीयान् प्रथिमान् प्रथयतीत्यादि ॥४७३॥

श्रीरा टी—पृथुश्च मृदुश्च कृशश्च भृशश्च दृढश्च परिवृढश्च तत्तस्य। प्रथिष्टः प्रथीयान् इति एवं म्रदिष्ठः म्रदीयानिति क्रशिष्ठः क्रशीयानिति भ्रशिष्ठः भ्रशीयान् द्रढिष्ठः द्रढीयान् सर्वत्र टेर्लोपः ऋतेद्रश्च ॥४७३॥

युवा अल्पश्च कन् स्याद्वा ज्ञादौ। अयमनयोरेषां वा अतिशयेन युवा कनिष्ठः पक्षे यविष्ठः वाढान्तिकेति यवादेशः। अयमनयोरेषां वा अतिशयेन अल्पः कनिष्ठः पक्षे अल्पिष्ठः एवम् कनीयान् कनिमा कनियति। एवमीयसुरिति पूर्वोक्तसूत्रेषु उदाहर्त्तव्य इत्यर्थः ॥४७४॥

श्रीरा-टी—युवा च अल्पश्च तौ ष्यर्थे श्रीयूनोऽल्पस्य च कन् वा स्यात् ज्ञादिषु। कनिष्ठ इति युवाल्पयोरुदाहरणम् एवम् कनीयान् इति अयमनयोरेषां वा युवाल्पौ वेति वाक्यं पक्षे यविष्ठः अल्पीयान् पूर्वेण यवादेशः ॥ ४७४ ॥

लघोर्भावः लघिमा। पूर्वतो वानुवर्त्तते। तेन पक्षे लघुत्वं लघुता लाघवम्। वाशब्दोऽत्र व्यवस्थावाची च। तेन रूपादिशब्दादिमन् स्यात्। यथा रूपस्य भावः रूपत्वं रसत्वं गन्धत्वं स्पर्शत्वमित्यादि। गुणाद्वेष्ठेयसू इत्यत्रापि एवं व्याख्येयम्। इमनन्तः पुंलिङ्गोऽभिधानात्। किन्तु प्रियस्य भावः प्रेमा इति तु पुंक्लीबयोः प्रेमा ना प्रियता हार्दं प्रेम स्नेह इत्यमरात्। गुणात् किं रुचत्वं रुचता वार्चम् ॥ ४७५ ॥

श्रीरा-टी—लघिमेति लघोर्भावः लघ्व्या भावः लघुनो भावः शसन्ततरादाविति पुंवद्भावः टिलोपश्च सामान्यगुणादेव नीलस्य भावः निलिमा शुक्लिमा कालिमा इत्यादि पक्षे लघुत्वं लघुता लाघवं नैल्यं शौक्ल्यं काल्यमिति यद्यपि सामान्येनोक्तं तथापि पृथ्वादिवर्णविशेषदृढादिभ्यो ज्ञातव्यं तेन प्रथिमेत्यादि पृथु मृदु कृशेत्यादिना

## ४७६। भूयोभूमभूयिष्ठाः।

भूयस्-भूमन् भूयिष्ठाः १॥।

**बहोरीयस्निमन्निष्ठान्तस्य क्रमादेते निपात्यन्ते।**

## ४७७। त्यादेश्चोने कल्पदेश्यदेशीयाः।

त्यादेः ५।, च।१।, ओने, ७।, कल्प-देश्य-देशीयाः १॥।

**लेस्त्याद्यन्ताच्च ईषदूनेऽर्थे एते स्युः।**

**ईषदूनो विद्वान् विद्वत्कल्पः विद्वद्देश्यः विद्वद्देशीयः।**

**तार्किकदेशीया। पचतिकल्पम्।**

---

म्रदः। पृथुमृदुपटुचिप्रबहुलचुद्रसाधवः। बहुकिञ्चन खण्डाश्च लघु स्वादु प्रियं जवः। चण्डो बालो गुरुर्मन्दी वत्सः पाकस्तनुर्महान्। आयु क्रस्वीरु दीर्घश्च होढ़ः सर्वे दृढ़ादयः। पचे पृथुत्वं पृथुता पृथ्वादिः किम् अन्तिकता इत्यादि ॥४७५॥

ईयस्वादिषु बहोर्भूरादेश ईयस्वीम्नोरादिलोपः इष्ठे यकारागमश्च निपात्यते। अतिशयेन बहुः भूयान् बहोर्भावः भूमा अतिशयेन बहुः भूयिष्ठः। पूर्वसूत्रस्थवा शब्दस्य इह नानुवृत्तिः यतो व्यवस्थावाचि वाशब्दस्य इच्छयानुवृत्तिः इच्छया निवृत्तिरिति। अत्र ईयस्वादिषु बहोर्भू आदेशं कृत्वा तत्साहचर्य्यादाख्याने णौ च बहोर्भू आदेशः स्यादिति सूचितम्। तेन बहुमाचष्टे भावयति ॥ ४७६ ॥

श्रीरा-टी—भूयश्च भूमा च भूयिष्ठश्च ते ईयसुना भूयः इम्ना भूमा इष्ठेन भूयिष्ठः बहुशब्दस्य निपात्यन्ते ॥ ४७६ ॥

आ ईषत् ऊनः ओनः तस्मिन्। लोपोऽस्येत्यकारलोपः। ईषदूनो विद्वान् विद्वत्कल्पः। अत्र विरामे स्वसध्वसिति दङ्। एवं विद्वद्देश्यः विद्वद्देशीयः। एषां पूर्वलिङ्गतैव। एवं ईषदूना दीर्घा दीर्घकल्पा दीर्घदेश्या दीर्घदेशीया। एषु शस-न्ततरादित्वात् पुंवद्भावः। ईषदूना तार्किकी तार्किकदेशीया। अत्र कोङादिः पुंवद्भावः। ईषदूनं पचति पचतिकल्पं पचतिदेश्यं पचतिदेशीयम्। एषु एकत्व-क्लीवत्वयोर्विनं त्यादेश्च रूप इत्यत्र लिखितम् ॥ ४७७ ॥

श्रीरा-टी—तिरादिर्यस्य तत्तस्य कल्पश्च देश्यश्च देशीयश्च ते। विद्वत्कल्प इति। विद्वदिति न्यूनत्वमुच्यते एवं गुड़कल्पा द्राक्षा इत्यादौ द्राक्षायामारोपितस्य

## ४७८। लेर्बहुः प्राक्।

लेः ५।, बहुः १।, प्राक् ।१। ।

ईषदूनः पटुः बहुपटुः।

## ४७९। पाशः कुत्सायाम्।

पाशः १।, कुत्सायाम् ७। ।

कुत्सितो भिषक् भिषक्पाशः।

---

गुड़त्वस्य किञ्चित् न्यूनत्वमिति स्वार्थिकता क्वचित् स्वार्थिकाख्याः प्रकृतेर्लिङ्गवचना-न्यतिक्रम्य वर्त्तन्तेऽपीति अतः स्त्रीलिङ्गता एवं पाचककल्प इत्यादि पचतिकल्प' इति ईषदूनं यथा स्यात् तथा पचतीति वाक्यं किञ्चित् न्यूनपाचक क्रियेत्यर्थः। एवं पचतःकल्पं पचन्तिकल्पमित्यादि ॥ ४७७ ॥

लेः पुनरुपादानं त्यादिनिवृत्त्यर्थम्। स्याद्यन्तात्परी बहुः स्यादीषदूनेऽर्थे स च बहुः परत्र जातः सन् पूर्वः स्यादित्यर्थः। ईषदूनः पटुः बहुपटुः अत्र विभक्तेर्लुकि कृतेऽपि पुनर्लिङ्गसंज्ञायां विभक्तिः। ईषदूना विदुषी बहुविदुषी। अत्र बहुप्रत्ययस्य शसन्ततरादित्वेऽपि परस्थायित्वाभावात् न पुंवद्भावः ॥ ४७८ ॥

श्रीरा टी—स्यन्तात् लेरीषदूनेऽर्थे प्राक् बहुः स्यात्। बहुपटुरिति ईषदूनः पटुरित्यर्थः एवं बहुगुड़ा द्राक्षा ननु किञ्चित् न्यूनार्थबहुशब्देन क्रियाविशेषणेन यथा बहु ददाति बहु पचतीति तथात्रापि बहुपटुः बहुद्राक्षा इति सः करणीयः किं लक्षणेनेति तदसत् बहुगर्त्त इत्यादौ गर्त्तोत्तरदत्वादीयः स्यात् न तु णः। एवं बहुक् बहुपन्थाः बहुराजा बहुसखा इत्यादावसाविति स्यात् ॥ ४७८ ॥

स्याद्यन्तात् पाशः स्यात् कुत्सायाम्। कुत्सिता विदुषी विद्वत्पाशा शसन्ततरा-दित्वात् पुंवद्भावः ॥ ४७९ ॥

श्रीरा-टी—लेः पाशः स्यात् स तु कुत्सायाम्। भिषक्पाश इति निन्दितो भिषगित्यर्थः। एवं वैयाकरणपाशः पाचकपाश इत्यादि। तथाच भट्टिः रक्षःपाशा-निति। परे तु येन प्रवृत्तिनिमित्तेन शब्दस्य प्रवृत्तिस्तस्यैव निन्दा गम्यते तस्मात् त्यः। यत्र प्रकारान्तरेण निन्दा गम्यते तत्र न स्यात्। तेन वैयाकरणचौर इति निदर्शन्ति ॥ ४७९ ॥

## ४८० । चरट् भूतपूर्वे ।

चरट् ।१।, भूतपूर्वे ७।।

भूतपूर्वेऽर्थे चरट् स्यात् । भूतपूर्व आढ्यः आढ्यचरः ।

## ४८१ । ष्या रूप्यश्च ।

ष्याः ५।,, रूप्यः १।, च ।१।।

ष्यन्ताद्रूप्यश्चरट् च स्यात् भूतपूर्वेऽर्थे । कृष्णस्य भूतपूर्वो गौः कृष्णरूप्यः कृष्णचरः । शुभ्रारूप्यः शुभ्रचरः ।

## ४८२ । बह्वल्पार्थात् कात्शस् वा ।

बह्वल्पार्थात् ५।, कात् ५।, शस् ।१।, वा ।१।।

बह्वर्थादल्पार्थाच्च कात् परश्शस् स्याद्वा ।

बहुशो देहि भूरिशः अल्पशः स्तोकशः ।

---

स्याद्यन्ताच्चरट् स्यात् भूतपूर्वेऽर्थे । भूतपूर्वा विदुषी विद्वच्चरी अत्र असन्ततरादित्वात् पुंवद्भावः टित्वादीप् ॥ ४८० ॥

गोरा-टी—भूतपूर्वः प्राग्भूतः तस्मिन् चरट् स्यात् । टित्वाद्दीप् । आढ्यचरीति पूर्वग्रहणात् यत्र भूतस्य वर्त्तमानता प्रतीयते तत्र न स्यात् । यथा ईश्वरो भूत इत्यादि । गोष्ठीनः । गोष्ठशब्दात् भूतपूर्वे खीनः स्यात् । गौष्ठीनम् ॥ ४८० ॥

षष्ठ्यन्तात् लिङ्गात् रूप्यश्चरट् च स्यात् भूतपूर्वेऽर्थे । कृष्णस्य भूतपूर्वो गौः कृष्णरूप्यः एवं कृष्णचरः । शुभ्राया भूतभूर्वो गौः शुभ्रारूप्यः अत्र रूप्यवर्जनात् न पुंवद्भावः । शुभ्रचरः अत्र पुंवद्भावः ॥ ४८१ ॥

गोरा टी—शुभ्रारूप्य इति रूप्यवर्जनात् न पुंवद्भावः । चरट् स्यादेव शुभ्रचरीति ॥ ४८१ ॥

बहुश्च अल्पश्च बह्वल्पौ, बह्वल्पौ अर्थौ यस्य तत् बह्वल्पार्थं तस्मात् । पृथग्योगात् भूतपूर्वे त्यस्य ष्यास्य नानुवृत्तिः । बह्वीर्भूमीर्देहि बहुशः अत्र कर्मणश्च शसि पुंवद्भावः । सित्त्वादव्ययम् एवं बहुभिर्नेत्रैः पश्यति बहुशः । बहुभिर्गम्यते बहुशः अत्र वाशब्दस्य व्यवस्थावाचित्वात् मङ्गले गम्ये एव । बहुषु तीर्थेषु स्नातः बहुशः पचे तद्रूपेण स्थितिः । कारकात् किं बहूनां स्वामी इत्यादौ न स्यात् एवं भूरिशः अल्पार्थेभ्य

## ४८३ । संख्यैकार्थाद्वीप्सायाम् ।

संख्या-एकार्थात् ५।, वीप्सायां ७। ।

**कति कति कतिशः गणशः यावच्छः तावच्छः द्विशः पादशः ।**

## ४८४ । चक्कत्वस् वारे ।

चक्कत्वस् ।१।, वारे ७। ।

**कति वारान् भुङ्क्ते कतिकृत्वः गणकृत्वः पञ्चकृत्वः ।**

---

तु अल्पशः स्तोकशः अत्र वाशब्दस्य व्यवस्थावाचित्वादिति बोध्यम् । तेन बहूनि दुःखानि देहि अल्पमभ्युदयं देहीत्यादौ न स्यात् एवं क्रमादेरपि चशस् स्यात् वीप्सायां नित्यम् । क्रमशः सङ्घशः पूगशः द्वन्द्वशः ॥ ४८२ ॥

श्रीरा-टी—बहुश्च अल्पश्च तावर्थौ यस्य स तस्मात् चित्त्वादव्ययम् । बहुश इति बहून् बह्वीः बहूनि वा देहीत्यर्थे बहुशः भूरिश इति भूरि व्यं बह्वर्थः अल्पश इति अल्पं मात्रा बिन्दु स्तोकमिति पर्य्यायः । एवं बहुभ्यो देहि इत्यर्थेऽपि बहुशः स्तोकश इति पक्षे बहूनि देहि बहुभ्यो देहि कादिति किम् । बहूनां स्वामी ॥४८२॥

एकः एकभागः एकोऽर्थो यस्य स एकार्थः संख्या च एकार्थश्च संख्यैकार्थं तस्मात् । संख्यावाचककारकादेकभागार्थकारकाच्च परश्चशस् स्याद्वीप्सायाम् । कति कति देहि कतिशः एवं गणं गणं देहि गणशः । तावन्तं तावन्तं तावच्छः इत्येषां संख्या वड्डत्यतु इत्यादिना संख्यातुल्यत्वे चशस् । संख्यायान्तु द्वौ द्वौ द्विशः एवं त्रि इत्यादि । एकभागार्थात्तु पादं पादं पादशः कुड़वं कुड़वं कुड़वशः कार्षापणं कार्षापणं कार्षापणशः । कुड़वादीनां परिमाणवाचित्वेऽपि संख्यावाचकत्वम् ॥ ४८३ ॥

श्रीरा-टी—संख्या च एकार्थश्च तत्तस्मात् संख्याया एकार्थाच्चाभीक्ष्ण्येऽर्थे चशस् स्याद्वा । कति कति कतिशः त्येनाभीक्ष्ण्यं द्योत्यते तेन न द्विः तावच्छ इति डत्यतु-बहुगणा इति संख्यातिदेशात् एवं गणशः पादश इत्यादि । एकार्थशब्देनेह परिमाणं गृह्यते तेन पणशः कादित्येव द्वयोर्द्वयोः स्वामीत्यादौ न स्यात् ॥ ४८३ ॥

संख्याभिन्नस्य वारोऽर्थो न सम्भवतीत्याह संख्याया इति । कति वारान् भुङ्क्ते कतिकृत्वः चित्त्वादव्ययम् । एवं गणकृत्व इति संख्यातुल्यत्वात् । संख्यायास्तु पञ्चकृत्वः दशकृत्व इत्यादि ॥ ४८४ ॥

## ४८५। सुच्चतुर्द्विचेः।

सुच्।१।, चतुर्-द्वि: वे: ५।।

एभ्य: सुच् स्यादावृत्तौ। चतु: द्वि: त्रि:।

## ४८६। मयट् तद्रूपे।

मयट्।१।, तद्रूपे ७।।

तदात्मकेऽर्थे मयट् स्यात्। विष्ण्वात्मकं विष्णुमयम्। वाङ्मयम्।

---

गौरा टी—क्रियाया अभ्यावृत्तिर्वार: तस्मिन्। कतिकृत्व इति चित्वाद्यत्र स्यादि-लुकि नात्वलोपीरिति षं: एवं गणकृत्व: पञ्चकृत्व: अभ्यावृत्तिभिन्नकालायामेव क्रियायां सम्भवति तेन पञ्चपाका इत्यादौ न स्यात् एकरूपक्रियाया एककालीनत्व-प्रतीते:। यत्र तु कृदभिहितभावप्रयोगे कालभेद: प्रतीयते तत्र स्यादेव। यथा द्विवचनं त्रिष्कार इत्यादि। वार इति किं पञ्च भुङ्क्ते। संख्याया इति किं प्रभूतान् वारान् भुङ्क्ते न हि प्रभूतशब्द: संख्यात्वेन प्रसिद्ध:॥ ४८४॥

उकार उच्चारणार्थ: चकारोऽव्ययार्थ:। चतुरो वारान् इत्यर्थे चतुर्शब्दात् सुचि कृते रेफस्य विसर्गे शसि शस् इत्यत्र वाशब्दस्य व्यवस्थावाचित्वात् सुचि परे नित्यं विसर्गस्य सकारे स्यादे: सोलोप इति सस्य लोपे सुच: सस्य विसर्गे चतु:। एवं द्वौ वारौ द्वि: त्रीन् वारान् त्रि:॥ ४८५॥

गौरा-टी—चतुश्च द्विश्च त्रिश्च तत्तस्मात् पुंस्त्वं सौत्रत्वात् सुचा चकृत्वसिति बाध्यते। चतुरिति चतुर्शब्दात् सुच् उचावितौ चतुर्स् इति स्थिते सोर्वि. फे इति द्विवचननिर्देशात् एकशेषाद्वा रेफसकारयो: स्थाने एक एव वि: सुज् विकल्प-मिति चान्द्रा: तन्मते चतुष्कृत्व: द्विकृत्व: त्रिकृत्व: इति च भवति। सकृत्। एक-शब्दस्य सुचा सकृदिति निपात्यते सकृत् भुङ्क्ते भावे तु एकवारार्थ: सकृत् शब्दो-ऽस्ति तेन सकृत भुङ्क्ते सकृत् करोतीत्यादि प्रयोग: लक्षणन्तु प्रपञ्चार्थम् एक-स्याभ्यावृत्त्यभावात तन्मतमालम्ब्य ग्रन्थकृतोपेक्षितम्। बहोर्धाज्वाऽविप्रकृष्टकाले। बहुशब्दादप्रकृष्टकाले वारेऽर्थे धाच् स्याद्वा। बहुधा भुङ्क्ते पक्षे बहुकृत्वो भुङ्क्ते अविप्रकृष्टकाले किं बहुकृत्वो मासस्य भुङ्क्ते॥ ४८५॥

तदेव रूपम् आत्मा स तद्रूप: तस्मिन्। पृथक् योगात् पूर्वात् किमपि नानु-

# ४८७। प्रकारे जातीयः।

प्रकारे ७।, जातीयः १। ।

तार्किकजातीया।

---

वर्त्तते प्रकरणबलात् स्वार्थादेव। विष्ण्वात्मकं विष्णुमयं जगत्। एवं वाङ्मयं शास्त्रं हिरण्मयम्। अत्र यकारलोपो मनीषादित्वात्। टित्त्वादीपि तेजोमयी देवी। विकारावयवप्राधान्येऽपि तद्रूपविशेष एव। तेन अश्मनां विकारः अश्ममयो देशः एवं हैममयं कुण्डलं यवमयश्चरुः भस्ममयी भूमिः। भक्ष्याच्छादनयोस्तु अनभिधानात् न स्यात् तेन मौद्गः सूपः कार्पसं वस्त्रम् इत्यादौ ष्ण एव। गोः पुरीषे इदमर्थेऽपि मयट्। गोमयम्। पुरीषे किं गोविट् गव्यं दुग्धादि। पयसस्तु विकारे न स्यात्। तेन पयसो विकारः पायसं दध्यादि अवाणित् ष्णः। पायसं परमान्नम् अत्र ष्णः॥ ४८६॥

श्रीरा·टी—तद्रूपं यस्मिन् तत्तस्मिन्। विष्ण्वात्मकमित्यादि विष्णुरात्मा यस्मिन् जगति तत्, वाङ्मयमिति वागात्मकं शास्त्रमित्यर्थः एवं चीरमयी यवागूः अन्नमयो यज्ञः। बह्वर्थात् सङ्घवत् त्यात्र। बह्वर्थे वर्त्तमानात् लिः सङ्घवत् त्याः स्युः चकारात् मयट् च। अपूपा आत्मानो यस्मिन् पर्वणि अचित्तत्वात् ष्णिकः आपूपिकम् अपूपमयं पर्व वाटकिकी वटकमयी पात्री लिङ्गस्य लोकाश्रयत्वात्। परे तु बाहुल्येन प्रकृतमित्यर्थे प्रकृतं प्रस्तुतम् अन्नम् अन्नमयम् आपूपिकम् अपूपमयम् इति वदन्ति। अनेकाच् संख्यायाश्च मूल्यक्रेतव्ययोरंशे क्रेतव्यमूल्ययोः। मूल्यांशे वर्त्तमानायाः संख्यायाः क्रेतव्येऽर्थे क्रेतव्यांशे वर्त्तमानायाः संख्याया मूल्येऽर्थे मयट् स्यात्। यवानां द्वावंशौ मूल्यं यस्योदश्वितः द्विमयमुदश्वित् यवानां तिलानां द्वावंशौ मूल्यमस्याः शर्करायाः द्विमयी शर्करा तिलानां क्रेतव्येऽपि द्वावंशौ उदश्वितः क्रेतव्यौ एकां यवानां त्रिमया यवाः उदश्वितः सर्वत्र मूल्यक्रेतव्यसम्बन्धे षीत्यव्याचक्षांशस्थानकल्पयो नेष्यते अनभिधानात् द्वौ यवानां उदश्वितः। अत्र हि त्रयाणां अंशानां मूल्ये त्रिशब्दो वर्त्तते इति न त्यः अनेकेति किं यवानामेकोऽंशो मूल्यमस्य उदश्वितः। अंश इति किं द्वौ व्रीहि यवौ मूलमस्योदश्वितः मूलक्रेतव्ययोरिति किं द्विगुणं तैलं पच्यते चीरेणेत्यत्र न स्यात्। तैलभागात् चीरेण हेतुना द्वौ भागौ यत्र तत्तैलं पच्यते इत्यर्थः॥ ४८६॥

### ४८८। वित्ते चुञ्चुचणौ।

वित्ते ७।, चुञ्चुचणौ १॥।

**विद्याचुञ्चुः विद्याचणः।**

### ४८९। निर्वृत्ते भावादिमः।

निर्वृत्ते ७।, भावात् ५।, इमः १।।

**पाकिमः।**

---

स्याद्यन्ताज्जातीयः स्यात् प्रकारे। प्रकारशब्दः सादृश्यवाची पुंलिङ्गः। तार्किक्याः प्रकारः तार्किकजातीया तार्किकतुल्या स्त्री इत्यर्थः। कोङादिः पुंवदिति पुंवद्भावः। एवं पटजातीयो जनः मृदुजातीयं फलम्। किञ्च विदुष्याः प्रकारः विदुषीजातीया स्त्री अत्र जातीयस्य शसन्ततरादिभिन्नत्वान्न पुंवद्भावः ॥४८७॥

श्रीरा·टी—प्रकारः सादृश्यं तदस्यास्ति अर्श आदित्वादस्यः तस्मिन् लिं जातीयः स्यात्। तार्किकजातीय इति तार्किकप्रकार इत्यर्थः। महाजातीय इति महतीप्रकारः महत्त्वकार्थ इति अयन्तु प्रकारवति व्याचः। प्रकारे अनयोर्विषयभेदः तेन तथा जातीय इति भवति। स्थूलादेः कः। स्थूलादेः प्रकारेऽर्थे कः स्यात् जातीयस्य बाधकः स्थूलको मणिः यः स्फुरत्कान्तिः। अचलन्नपि चलन्निव लक्ष्यते स चलत्कः चञ्चत्कः एवं प्रभामण्डलयोगादबृहन्नपि बृहन्निव दृश्यते बृहत्कः इति सादृश्यमेव प्रकारार्थं व्याचष्टे। स्थूलमाषचुचञ्चाऽश्वाश्वलञ्चञ्चदृहत्तथा। वाद्याकालः कुमारी च पुत्रः श्वशुर इत्यपि। पुत्रटूलोऽथ गोमूत्रं छादनेऽथमुवाप्यहौ। कृष्णस्तिलै वरे ब्रीहौ तथा जीर्णस्तु शालिषु। अवदातः सुरायाञ्च स्थूलादौ परिकीर्त्तिताः ॥४८७॥

स्याद्यन्ताच्चुञ्चुचणौ स्यातां तेन ख्यातेऽर्थे। चुञ्चुः पञ्चमस्वरद्वयो चणौ मूर्द्धन्यणवान्। विद्यया ख्यातः विद्याचुञ्चुः विद्याचणः ॥४८८॥

श्री·रा·टी—चुञ्चुश्च चणश्च तौ णष्टवर्गीयः वित्तं ख्यातं येन वित्तं तस्मात् चुञ्चुचणौ स्याताम्। विद्याचुञ्चुः इति विद्यया वित्त इति वाक्यम् ॥४८८॥

भावे कृदन्तादिमः स्यात् तेन निष्पन्नेऽर्थे। पाकेन निष्पन्नः पाकिमः यवोरित्यकारलोपः ॥४८९॥

## ४९० । पशुभ्यः स्थानद्विषट्के गोष्ठ-गोयुग-षड्गवम् ।

पशुभ्यः ५।॥, स्थान द्वि-षट्के ७।, गोष्ठ-गोयुग षड्गवम् १। ।

**गोगोष्ठं गोगोयुगं गोषड्गवम् ।**

## ४९१ । शुण्डोच्चभ्योऽपकर्षे रष्टरौ ।

शुण्डोच्चभ्यः ५।॥, अपकर्षे ७।, र-ष्टरौ १॥ ।

**अपकृष्टा शुण्डा शुण्डारः शमीरः कुटीरः उच्चतरी ।**

---

पशुवाचकेभ्यः स्थाने वाच्ये गोष्ठं द्विकमित्यर्थे गोयुगः, षट्कमित्यर्थे षड्गवः स्यात् । गवां स्थानं गोगोष्ठम् एवं महिषगोष्ठं गोद्विकं गोगोयुगम् एवं हरिणगोयुगं गवां षट्कं गोषड्गवम् एवं हस्तिषड्गवम् एषां क्लीवत्वं स्वभावात् ॥ ४९० ॥

श्रीरा-टी—स्थानञ्च द्वौ च षट्कञ्च तत्तस्मिन् । गोष्ठञ्च गोयुगञ्च षड्गवञ्च तत् । पशुवाचिभ्य एष्वर्थेषु एते क्रमात् स्युः । गोगोष्ठमिति गोस्थानमित्यर्थः । गोगोयुगमिति गोद्वित्वमिति वाक्यं गोषड्गवमिति गोषट्त्वम् एवं महिषगोयुगं महिषषड्गवमित्यादि क्लीवत्वं स्वभावात् ॥ ४९० ॥

शुण्डाश्च उच्चाणश्च शुण्डोच्चाणः तेभ्यः । उभयत्र बहुवचनं गणार्थम् । शुण्डादेरः उच्चादेः ष्टरः स्यात् अपकर्षेऽर्थे । शुण्डापानं मदस्थानमित्यमरः । अपकृष्टा शुण्डा शुण्डारः एवम् अल्पा शमी शमीरः अल्पा कुटी कुटीरः । अत्र शुण्डाशमीकुटीनां स्त्रीत्वेऽपि रान्तानां पुंस्त्वमभिधानात् एवम् उच्चतरी वत्सतरी इत्यादौ षित्त्वादीप् ॥ ४९१ ॥

श्रीरा-टी—शुण्डाश्च उच्चाश्च ते तेभ्यः रश्च ष्टरश्च तौ । अपकर्षश्चात्र प्रकृत्यर्थतावच्छेदकगुणक्रियाह्रत्तिः त्वनिर्देशात् । शुण्डादिभ्योऽपकर्षे रः उच्चादिभ्योऽपकर्षे ष्टरः स्यात् । शुण्डार इति करभस्याल्पकुटीत्यर्थः मृगशरीरमित्यन्यः । ह्रस्वा शमी शमीरः ह्रस्वा कुटी कुटीरः उच्चतरीति त्यक्तयौवनेत्यर्थः यद्यपि अपकर्षसामान्ये त्वस्तथापि विशेषपरतया तारुण्यापकर्षोऽवगम्यत इति एवं वत्सतरीति अत्र बाल्यापकर्षः ऋषभतरीत्यत्र भारवाहनापकर्षः अश्वतरीत्यत्र अश्वगर्दभत्वक्रियापकर्षः कासूतरीत्यत्र महत्त्वापकर्षः कासूरस्त्रविशेषः गोणीतरीत्यत्र महत्त्वापकर्ष-

**४९२। पीलुतिलोमाकर्णादिः कुणतैलकटजाहं पाकस्नेहरजोमूले।**

पीलु—कर्णादिः ५।, कुण-जाहं १।, पाक-मूले ७।

**पीलुकुणः, तिलतैलं, उमाकटः, कर्णजाहम्।**

---

क्वथः गुण्डा शमी कुट्यः गुण्डादौ परिकीर्त्तिताः। उच्चावचमर्षभाकम्बकासूगोण्यस्तथालः पट्। डुपः कुत्वाः। कुतुशब्दादपकर्षे डुपः स्यात्। कुतुपः ङित्वात् टिलोपः। चर्म्ममयं स्नेहभाजनम् ॥ ४९१ ॥

पीलुश्च तिलश्च उमा च कर्णश्च ते, आदयो यस्य स पीलुतिलोमाकर्णादिस्तस्मात्। पील्वादेः कुणः पाके। तिलादेस्तैलः स्नेहे। उमादेः कटो रजसि। कर्णादेर्जाहो मूले स्यात्। पीलोः पाकः पीलुकुणः मूर्द्धन्यान्तः। तिलस्य स्नेहः तिलतैलम्। उमाया रजः उमाकटः। कर्णस्य मूलम् कर्णजाहम्। अत्र कुणकटान्तयोः पुंस्त्वं तैलजाहान्तयोः क्लीवत्वाभिधानात्। पील्वादिस्तु। पीलु कर्कन्धु शमी करवीर वकुल वदरी अश्वत्थ खदिर इत्यादि। तिलादिस्तु। तिल इङ्गुदी इत्यादि। उमादिस्तु। उमा अलावू भङ्ग तिल इत्यादि। कर्णादिस्तु। कर्ण पचति प्रतिपत् दक्षिणा पलमूलेत्यादि ॥ ४९२ ॥

गौरा टी—पीलुश्च तिलश्च उमा च कर्णश्च ते आदयो यस्य तत्तस्मात्। कुणश्च तैलश्च कटश्च जाहश्च तत्। पाकश्च स्नेहश्च रजश्च मूलञ्च तत्तस्मिन्। एष्वर्थेषु क्रमादेतेभ्यः क्रमादेते स्युः। पीलुकुण इति पीलूनां पाक इति वाक्यम्। पीलुः शमी करीषश्च कर्कन्धुवकुलावपि। अश्वत्थखदिरामाश्च वदरश्च नवात्मकः। अन्ये आम्रस्थाने करवीरं पठन्ति वदरस्थाने वदरीमपि। तिलतैलमिति तिलानां स्नेह इति वाक्यम्। तिलसर्षप इङ्गुदीत्यादिराकृतिगणः। उमाकट इति उमाया रज इति वाक्यम्। उमा भङ्गा तिलोऽलावूः सङ्घाते तु अविर्मतः। संन्युद्विप्रारजो भिन्नेऽयावो वैरूप्य ईरितः। अवीनां सङ्घातः अविकटः समादेस्तु सङ्कटः निकटः उत्कटः विकटः प्रकटः अवकटो वैरूप्यः। कर्णजाहमिति कर्णस्य मूलमिति वाक्यम्। कर्णाक्षिदन्तगुल्फभ्रूकेशपुच्छनखं मुखम्। शृङ्गोष्ठपृष्ठपादश्च कर्णादौ परिकीर्त्तिताः ॥ ४९२ ॥

## ४९३। चेत्रे शाकटशाकिनौ।

चेत्रे ७।, शाकट-शाकिनौ १॥।

इक्षुशाकटं इक्षुशाकिनम्।

## ४९४। इतोऽस्य जाते।

इतः १।, अस्य ६।, ७।।

फलितम्।

---

स्याद्यन्तादितौ स्यातां तस्य चेत्रमित्यर्थे। इक्षोः चेत्रम् इक्षुशाकटम् एवं इक्षुशाकिनं द्वौ क्लीवेऽभिधानात्। समाहारेऽपीष्टसिद्धौ शाकटशाकिनाविति द्विवचनं गणार्थं तेन चेत्रे वाच्येऽन्येऽपि प्रत्ययाः स्युः। तानहं विवृणोमि। यथा धान्यादेः चेत्रे खीनः। धान्यस्य चेत्रं धानीनम् एवं मौद्गीनं कौद्रवीणम्। तिलादेर्यखीनौ। तिलस्य चेत्रं तिल्यं तैलीनम् एवं माषस्य माष्यं माषीणम् उमायाः उम्यं औमीनम्। अणोः अणव्यम् आणव्यम्। भङ्गस्य भङ्ग्यं भाङ्गीनम्। अतस्याः अतस्यम् आतसीनम्। व्रीहिशालिभ्यां ढेयः। व्रीहेः चेत्रं व्रैहेयम् एवं शालेयं स्त्रियां व्रैहेयी भूमिः। यवयवकषष्टिकेभ्यो यः। यवस्य चेत्रं यव्यम् एवं यवकस्य यवक्यं षष्टिकस्य षष्टिक्यं यवकषष्टिकौ धान्यविशेषौ। द्रोणाढकाभ्यामिकण् तद्वाप्ये। स उप्यतेऽस्मिन्निति तद्वाप्यं तद्वाप्ये चेत्रे वाच्ये इत्यर्थः। द्रोण उप्यतेऽस्मिन्निति द्रौणिकं चेत्रम् एवं आढकिकम्। खार्य्याः कः। खारी उप्यतेऽस्मिन्निति खारीकं चेत्रम् ॥४९३॥

श्रीरा टी—शाकटश्च शाकिनश्च तौ। ते; चेत्रेऽर्थे शाकटशाकिनौ स्याताम्। इक्षुशाकटमिति इक्षूणां चेत्रमिति वाक्यम्। एवं इक्षुशाकिनमिति यद्यपि सामान्येनोक्तं तथापि इक्ष्वादावेवेति परे। इक्षुमूलकाभ्यामित्यन्ये ॥४९३॥

स्याद्यन्तादितः स्यादस्य जातमित्यर्थे। फलमस्य जातं फलितं वनं फलितो वृक्षः फलिता लता तारकादेरेवायं विधिरिति जौमराः। तारकादिस्तु। तारका पुष्प कल्लोल तरङ्ग शर पल्लवाः। ऋजीष कण्टकाङ्गार शृङ्गार ज्वर कन्दराः। विचार गर्व रोमाञ्च हर्षोत्कर्ष कुतूहलाः गर्भनिष्क्रमणोत्कण्ठा ग्राहदाहाभ्रचन्द्रकाः। निद्रा कुवलयः श्रद्धा राग कोरक कुड्मलाः। कुसुमस्तवकोच्चार प्रवालपुलकव्रणाः। कर्दम व्याधि सीमन्त मुख कञ्चुक हस्तकाः। पिपासा मञ्जरी पिण्ड

**४९५। च्विः कृभ्वस्स्वभूततद्भावेऽस्यावीर्घौ-वव्यस्य।**

च्विः १।, कृभू अस्सु ७।।।, अभूततद्भावे ७।, अ-स्वौ १।।, ईर्घौ १।।, अव्यस्य ६।।

**अभूततद्भावेऽर्थे कृभ्वस्तिषु परेषु च्विः स्यात्, तस्मिंश्चावर्ण-स्वयोरीकारघौ स्तः न व्यस्य।**

---

बुभुक्षा दुःख कज्जलाः। वेगः विकसलयस्तन्द्रा मुद्रा तिलक शैवलाः। मूत्रं पुरीषं रोगश्च सूत्रञ्च मुकुटस्तथा। राग केशादयश्चान्ये तारकाद्याः प्रयोगतः इति। इत्युक्ततारकादेरन्यतोऽपि इतः स्यादिति ज्ञापनाय सामान्येनोक्तम्। अतएव सा चोरकण्ठकं वत्सं लज्जयन्ती न लज्जिता। मूर्च्छाले मूत्तं मूर्च्छितौ। निर्घोषैर्भवति दिगन्तरानित्यादौ लज्जा मूर्च्छा भवादिभ्योऽपि दृश्यते ॥४९४॥

श्रीरा टी—अस्य सञ्जातेऽर्थे इतः स्यात्। यद्यपि सामान्येनोक्तं तथापि विशेषपरतया फलादेरेव। फलितमिति फलमस्य सञ्जातमिति वाक्यम्। फल-पुष्पाङ्कुर पल्लव गर्व कण्टक सुन्दर शर कल्लोलं हर्ष कुतूहल किसलय गर्भं स्तबक कञ्चुक मुख सीमन्तम्। तन्द्रा तिलकं शैवल रोगं कज्जल कुड्मल कोरक वेगम्। निद्रा मुद्रा मदगल रोषं कर्दम कन्दर कुसुम तरङ्गम्। संज्ञा तारक मूत्रपुरीषं पुलक विचारं व्रण शृङ्गारम्। स्तवक पिपासा लज्जा-दोहं निष्क्रमण ज्वर दुःख द्रोहम्। ऋजीषाङ्गार रोमाञ्च प्रवाल व्याधि चन्द्रकाः। पिण्डोत्कर्षं बुभुक्षा च स्वरोत्कण्ठे च मञ्जरी। आकृतिगणोऽयम्। ननु बुभुक्षापिपासाशब्दौ किमर्थमिह पठ्येते सन्नन्तात् क्तेऽपि सिद्ध्यति नैवं तयोः सढ़त्वात् घेक्त एव नास्ति ढे क्तेऽपि बुभुक्षितः पिपासितः पुरुष इति न स्यात्। गर्भादन्नप्राणिनि। गर्भितो व्रीहिः गर्भोऽस्य सञ्जात इति वाक्यम् ॥४९४॥

अभूतस्य अजातस्य तद्रूपेण भावोऽभूततद्भावः। भूतस्य पुनर्भावासम्भवात् अभूतस्यैव भावे सिद्धे अभूतशब्दोपादानं कथम्। अत्र रामानन्दकाशीश्वरौ तु अवस्थितधर्म्मिणः पूर्वधर्म्मनिवृत्तौ धर्म्मान्तरापत्तिरभूततद्भावः इति विशेषज्ञापनार्थम् अभूतशब्दोपादानमित्याहतुस्तद्वेयं काष्ठं भस्मकरोति इत्यादेरपि च्विप्रत्ययापत्तेः। वस्तुतस्तु अभस्म भस्म करोति इति यदा विवक्ष्यते तदैव च्विः स्यादिति ज्ञापनार्थम्

## ४९६ । त्यो वमावो लोप्यः ।

त्यः १।, वमावः १।, लोप्यः १। ।

**वकारमावस्त्यो लोप्यः स्यात् ।**

**अकृष्टं कृष्णं करोति कृष्णीकरोति, कृष्णीभवति कृष्णीस्यात् ।**

---

अभूतशब्दोपादानम् । कृभ्वस्तिषु परेषु स्याद्यन्तात् अभूततद्भावे च्विः स्यात् च्वौ परे प्रकृतेरन्तस्थितयोरवर्णऋस्वयोरीकारदीर्घौ स्तः । अव्ययस्येति अव्ययवर्जनम् अवर्णऋस्वयोरीकारदीर्घनिषेधार्थम् अव्ययात् च्विस्तु स्यादेव इत्यर्थः । अन्यथा षष्ठ्यन्तमनुक्त्वा अव्ययादिति पञ्चम्यन्तमेवावदिष्यत् ॥ ४९५ ॥

श्रीरा॰टी—कृश्च भूश्च अस् च ते तेषु प्रागवस्थातोऽवस्थान्तरं याभूतस्याजातस्यानन्तरं तदात्मनातोऽवस्थान्तरेण जन्म अभूततद्भावः तस्मिन् अश्च स्वश्च तौ, ईश्च घश्च तौ, न व्ययमव्यं तस्य ॥ ४९५ ॥

वकारमावावशिष्टप्रत्ययो लोपः स्यात् तेन च्वि विट् विन् क्विप् विच् इति पञ्चानां लोपः । अकृष्णं कृष्णं करोतीति वाक्ये च्विः अस्य चकारोऽव्ययार्थः । अवशिष्टस्य वकारस्य अनेन लोपे पूर्वाकारस्य ईकारः एवं कृष्णीभवति कृष्णीस्यात् इति अत्र प्रथमोपस्थितम् अस्तीति पदं हित्वा स्यादिति स्त्री विभक्त्यन्तेऽस्धातौ परे च्विः स्यादिति सूचितम् । अतएव अस्तेर्लिङन्तस्यैव प्रयोगेऽभूततद्भावप्रतीतिः शब्दशक्तिस्वभावात् इति गोयीचन्द्रः । वक्ष्यमाणसूत्रेष्वपि अस्तेः प्रयोगे एवं व्याख्येयम् । एवं गङ्गीभवति कवीभवति पटूभवतीत्यादि । अकर्म्म कर्म्म करोति कर्म्मीकरोति अज्ञानिनं ज्ञानिनं करोति इत्यादौ नोलुप्फिधाविति नस्य लुपि लुपि न सन्धेत्यत्र नञोऽल्पार्थत्वात् तदादिविधेर्निषेधाभावे अकारऋस्वयोरीकारघौ स्याताम् । अव्ययस्य तु अन्यथा कृत्वा अन्यथाकृत्य असपदि सपदि कृत्वा सपदिकृत्य इत्यादौ च्विप्रत्ययान्तस्य व्यस्य ग्यनुकारेत्यादिना समासे क्त्वो यवादेशः । अवावर्णऋस्वयोरीकारदीर्घौ स्तः । निनाय साचीकृतचारुवक्त्र इति रघौ । नञा निर्दिष्टमनित्यमिति न्यायात् दीर्घः । साचिरिति अनव्ययशब्दोऽप्यस्ति इति केचित् ॥४९६॥

श्रीरा॰टी—व चासौ मावश्चेति सः । तथाच वकारातिरिक्तावयवशून्यत्यस्य ग्रहणं तेन विट् विन् विच् क्विपामपि ग्रहणं स्यात् । कृष्णीकरोतीति अवस्थान्तरापत्तेरेव वाच्यत्वे मुख्यत्वात्तदायकादेव लेख्यः । एवम् अमालां मालां करोति

## ४९७। यङ्-ञ्यक्ये चर्द्रीं।

यङ्-ञ्य क्ये ७।, च।१।, ऋत्।१।, री।१।।

**ऋकारो री स्यात् यङि ञ्ये क्ये च्वौ च। मात्रीकरोति।**

## ४९८। मनश्चक्षुश्चेतोऽरूरजोरहोऽन्तलोपश्च्वौ।

मनः—रहः ६।, अन्तलोपः च्वौ ७।।

**मनीकरोति।**

---

मालीकरोति इत्यादि तथा अशान्तिं शान्तिं करोति शान्तिकरोति अमहान्तं महान्तं करोति महत्करोति इत्यादि। अभूततद्भाव इति किं शुक्लं करोति पूर्वावस्थातोऽविवक्षितत्वात् नास्त्यभूततद्भावः कृभ्वस्तिष्विति किम् अकृष्णः कृष्णो जायते। अव्ययेति किम् अदिवा दिवा करोति दिवाकरोति तत्र करोति कारणात् कार्य्यस्य भेदविवक्षायाम् अभूततद्भावेऽपि न स्यात्। अनभिधानात् यथा तन्तुभ्यः पटं करोति मृद्भ्यो घटो भवति। ननु कथं वितानभूतं विततं पृथिव्यां यशः समूहन्निव दिग्विकीर्णमिति इवार्थे भूतशब्दः वितानमिवेति क्वचिदन्यत्रापीति सः नात्र च्विः॥ ४९६॥

यथा यङि चेक्रीयते ञ्ये मातेवाचरति मात्रीयते क्ये पितरमिवाचरति पित्रीयति च्वौ अमातरं मातरं करोति मात्रीकरोति॥ ४९७॥

श्रीरा टी—यङ् च ञ्यश्च क्यश्च तत्तस्मिन्। ऋदिति षष्ठ्यर्थे प्रो। मात्रीकरोतीति अमातरं मातरं करोतीति वाक्यम् एवम् कर्त्रीकरोतीत्यादि॥ ४९७॥

मनस् च चक्षुस् च चेतस् च अरुस् च रजस् च रहस् चेति तस्य। सूत्रत्वात् षष्ठ्या लुक्। एषामन्तस्य लोपः स्यात् च्वौ परे। अमनो मनः करोति मनीकरोति एवं चक्षूकरोति अरूकरोति रजीकरोति रहीकरोति। एषामन्तलोपे अवर्णऋस्वयोरीकारदीर्घौ स्तः॥ ४९८॥

श्रीरा टी—मनश्च चक्षुश्च चेतश्च अरुश्च रजश्च रहश्च तत्तस्य। लुप्तषीकार्दं अन्तस्य लोपः। एषामन्तलोपः स्यात्। मनीकरोतीति नलोपे अवर्णस्य ईः एवं चक्षूकरोति रजीकरोति रहीकरोति॥ ४९८॥

४९९। कार्त्स्न्यायत्त्योः सम्पद्यक्रादौ चसाद्वा।

कार्त्स्न्यायत्त्योः ७॥, सम्पद्यक्रादौ ७। चसात् ।१।, वा ।१। ।

साकल्येऽधीनत्वे च सम्पद्यति कृभ्वस्तिषु परेषु चसात् स्याद्वा। कृत्स्नं लवणं जलं सम्पद्यते जलसात् सम्पद्यते राजायत्तं सम्पद्यते राजसात् सम्पद्यते।

५००। देये त्राच्च।

देये ७, त्राच् ।१।, च ।१। ।

देयेऽर्थे त्राच्च साध्ये स्यात् सम्पाद्यादौ। देवाय देयं करोति देवत्रा करोति देवसात् करोति।

---

कृत्स्नं सकलं तस्य भावः कार्त्स्न्यम् आयत्तिरधीनत्वम्। कार्त्स्न्यञ्च आयत्तिश्च कार्त्स्न्यायत्ती तयोः सम्पद्यः सम्पूर्वदेवादिकपदधातुः। सम्पद्यश्च क्रादिश्च सम्पद्यक्रादि तस्मिन्। सम्पद्ये च इत्यनेनैवेष्टसिद्धौ सम्पद्यक्रादिरिति गौरवं कथमिति चेन्न चानुकृष्टं नोत्तरत्र इति न्यायेन परसूत्रे क्रादीनामनुवृत्त्यभावात्। साकल्येऽधीनत्वे च अर्थे सम्पद्यति कृभ्वस्तिषु स्यादन्तात् चसात् स्याद्वा। चकारोऽव्ययार्थः। कृत्स्नं लवणं जलं सम्पद्यते जलसात् सम्पद्यते एवं कृत्स्नं लवणं जलं करोतीत्यादि वाक्ये जलसात् करोति जलसाद्भवति जलसात् स्यात्। एवं राजसात् सम्पद्यते राजसात् करोति राजसाद्भवति राजसात् स्यात्: पक्षे तद्रूपेण स्थितिरिति ॥४९९॥

श्रीरा-टी—कार्त्स्न्यञ्च आयत्तिश्च ते तयोः सम्पद्यश्च क्रादिश्च तत्तस्मिन्। सम्पूर्वपद्यौङ् गतौ विकरणनिर्देशात्रभ्वादिकस्य ग्रहणम्। अभूततद्भाव इत्यनुवर्त्तते क्रादिदर्शनात् चित्वाद्याम्। क्रादौ तु। कृत्स्नं लवणं जलं करोति जलसात्करोति जलसाद्भवति जलसात् स्यात् पक्षे जलीकरोतीत्यादि जलसात् सम्पद्यते इत्यत्रालिप्तत्वात् अभूततद्भावस्य निवृत्तिः। एव कृत्स्नं काष्ठं भस्म सम्पद्यते भस्मसात् सम्पद्यते। नलोपश्चौ भस्मीकरोति राजीकरोति लुङ् राध्यते ॥४९९॥

## ५०१। नैकाचोऽव्यक्तानुकरणात् डाच् वानितौ द्विश्च।

नैकाचः ५।, अव्यक्तानुकरणात् ५।, डाच् ।१।, वा ।१।, अनितौ ७।, द्विः १।, च ।१।।

**अनेकाचोऽव्यक्तानुकरणात् सम्पद्यादौ डाच् स्याद्वा नत्वितौ, तस्मिंश्च द्विर्भावः।**

---

सम्पद्यादौ परे स्यायन्तात् वाच् चसाच स्यात् देयेऽर्थे। चकारोऽव्ययार्थः। देवाय देयं करोति देवत्रा करोति देवसात् करोति एवं देवाय देयं सम्पद्यते इत्यादि वाक्ये देवत्रा सम्पद्यते देवसात् सम्पद्यते इत्यादि बोध्यम्। परसूत्रे इतौ परे डाच् निषेधज्ञापकात् अत्र सम्पद्यादौ परे विहितोऽपि चसात् सम्पद्यादीनां परत्वाभावे तेषामन्वयेऽपि स्यादिति बोध्यम्। तेन अकरोदचिरेश्वरः चितौ विषदारम्भफलानि भस्मसादिति। भस्मसात् कृतवतः पितृद्विषः पात्रसाच्च वसुधां ससागरामिति ॥४५०॥

श्रीरा टी—डुदाञ् दाने तव्यानीयया इति यः खनात्ते देये इत्येकारः। क्वचिदेकदेशोऽप्यनुवर्त्ततेऽधीनत्व एव देवत्रा करोति इति चिन्त्यादरम्। चकाराच्चसाच्च देवसात् करोतीति देवाधीनं दातव्यं करोतीत्यर्थः ॥४५०॥

यस्य ध्वन्यात्मकशब्दस्य वर्णविशेषरूपेण ज्ञानं न सम्भवति सोऽव्यक्तः। तस्यानुकरणम् अव्यक्तानुकरणम्। अनेकाचोऽव्यक्तानुकरणं शब्दात् सम्पद्यादौ परे डाच् स्याद्वा न तु इतौ परे, डाचि सति पूर्वस्य द्वित्वञ्च स्यात्। वाशब्दश्च व्यवस्थावाचित्वादितौ परेऽपि तस्य द्विर्भावो वा स्यादित्यर्थः। सम्पद्यादौ डाचो विधाने इतौ परे निषेधो ज्ञापयति सम्पद्यादौ परे विहितः कश्चित् प्रत्ययः सम्पद्यादेः परत्वाभावे तेषामन्वयेऽपि स्यादिति पूर्वसूत्रे उदाहृतम् ॥५०१॥

श्रीरा टी—एकोऽज् यस्य सः, न एकाच् नैकाच् तस्मात्। यत्राकारादयो वर्णाः स्पष्टाः प्रतीयन्ते ते व्यक्ताः न व्यक्ताः न अव्यक्ताः अव्यक्तानामनुकरणं तत् तस्मात् न इति अनिति तस्मिन् तस्मिंश्चेति डाचि इत्यर्थः ॥५०१॥

## ५०२। त लोप्योऽतष्टिस्त्वितौ द्विस्त्वन्तो वा।

त ।१।, लोप्यः १।, अतः ६।, टिः १।, तु ।१।, इतौ ७।, द्वेः ६।, तु ।१।, अन्तः १।, वा ।१। ।

**तस्यादन्तस्य त लोप्यो डाचि, इतौ तु टिर्लोप्यः, द्विस्त्वन्तो लोप्यो वा। पटपटाकरोति। एकाचस्तु स्त्करोति। इतौ तु पटदिति करोति, पटिति, पटत्पटेति पटत्पटदिति।**

---

तस्य अनेकाचोऽव्यक्तानुकरणस्य अकारोऽन्तान्तशब्दस्य पटत् झनत् इत्यादेस्तकारो लोप्यः स्यात् डाचि परे इतौ परे तु तस्यैव शब्दस्य टिलोप्यः स्यात्। एवं इतौ द्विर्भूतस्य तस्यैव शब्दस्यान्तवर्णो लोप्यो वा स्यादित्यर्थः। पटत्शब्दात् डाचि अनेन तकारलोपे पट इति अकारान्तस्य द्वित्वे पटपटाकरोति एवं झनझनाकरोति इत्यादि। स्त्करोतीत्यत्र एकाच्त्वान्न डाच्। इतौ तु टिलोपाभावपक्षे पटदिति। टिलोपपक्षे पटिति करोति। असिद्धं बहिरङ्गमन्तरङ्गेति न्यायात् टिलोपस्यासिद्धत्वे दान्तत्वाभावात् टकारस्य डकारो न स्यात् इतौ परे द्विर्भूतस्यान्तवर्णलोपे पटत्पटेति करोति अन्तलोपाभावपक्षे पटत्पटदिति करोति वाशब्दस्य व्यवस्थावाचित्वात् सम्पद्यादेरभावे क्वचिदितौ परेऽपि टिलोपादिः स्यात्। झनझनेति ध्वनिस्तं किमङ्गैरित्यादि सिद्धम् ॥५०२॥

श्रीरा टी—त इति लुप्तप्रथमैकं दम् अत इति षष्ठ्यन्तं दं तस्येत्यादि डाचि डाजन्ते परे अतस्तकारलोपः स्यादित्यर्थः। तेन पटपटाकरोतीत्यत्र द्विरुक्ते डाचि टिलोपः पटाशब्दे परे प्राक्पटत्शब्दस्यावस्तकारो लोप्य इति पटदिति करोतीति इतौ डाचोऽभावे विकल्पेन टिलोपं दर्शयति पटितीति करोति शेषः स्थानिवत्त्वान्न चपोऽवे जब्। तथाच घटिति घटदिति गम्भीरमम्बुदैर्नदितमिति। नन्वितौ डाजभावे द्वित्वाभावात् कथं पटत्पटेत्युदाहृतमिति चेत् सत्यं द्विस्त्वन्तो वेति सामर्थ्यादितौ परेऽपि द्विः पक्षे पटत्पटदिति उभयत्यक्तपक्षे पटत्पटिति करोति च अव्यक्तानुकरणादिति किं झटिज्झटा करोति डाजन्तझटाशब्दे परे झटित् शब्दस्य न तकारलोपः ॥५०२॥

५०३। तीयसम्बवीजसंख्यादिगुणात् कृञि कृषौ।

तीय गुणात् ५।, कृञि ७।, कृषौ ७।,।

एभ्यः करोतौ डाच् स्यात् कृषौ। द्वितीयं कर्षणं करोति द्वितीयाकरोति सम्बाकरोति, वीजेन सह कर्षणं करोति वीजाकरोति, द्विगुणाकरोति।

५०४। समय निष्कुल दुःख शूल सत्याद् यापन निष्कोष प्रातिकूल्य पाकाशपथे।

समय—सत्यात् ५।, यापन—अशपथे ७।।

एभ्यः क्रमादेतेष्वर्थेषु डाच् स्यात् कृञि परे। समयाकरोति निष्कुलाकरोति दुःखाकरोति शूलाकरोति सत्याकरोति।

---

तीयप्रत्ययः। तेन द्वितीयतृतीययोर्ग्रहणम्। संख्या आदिर्यस्य स संख्यादिः स चासौ गुणश्चेति संख्यादिगुणः तीयश्च संवश्च संख्यादिगुणश्चेति तस्मात्। कृञि परे एभ्यो डाच् स्यात् कर्षणेऽर्थे। कृञो ग्रहणं सत्ययभ्वस्तीनां निवृत्त्यर्थम्। द्वितीयकर्षणं करोति द्वितीयाकरोति पुनर्वकर्षणं करोति संवाकरोति। द्वावेकार्थौ। वीजेन सह कर्षति वीजाकरोति द्विगुणं कर्षणं करोति द्विगुणाकरोति एवं त्रिगुणाकरोतीत्यादि ॥५०३॥

श्रीरा·टी—संख्या आदिर्यस्य स संख्यादिश्चासौ गुणश्चेति संख्यादिगुणः गुणः स्वरूपः पश्चात्तीयश्च संवश्च वीजश्च संख्यादिगुणश्च तत्तस्मात् कृञं दृष्ट्वा भ्वस्तोर्निवृत्तिः डाजनुवर्त्तते अनितौ द्विश्च नानुवर्त्तते अनिर्दिष्टत्वात् द्वितीयाकरोतीति द्विवारं कर्षति क्षेत्रमित्यर्थः। तीयमिति तीयत्यान्तत्वेन तृतीया करोति इति द्विगुणाकरोति यस्य क्षेत्रस्य द्विगुणं विलिखनं करोतीत्यर्थः ॥५०३॥

समयात् यापने निष्कुलान्निष्कोषे दुःखात् प्रातिकूल्ये शूलात् पाके सत्यादशपथेऽर्थे डाच स्यात् कृञि परे। समयाकरोति समयं यापयतीत्यर्थः। अन्यत्र

## ५०५। सपत्र-निष्पत्रात् प्रियसुखात् मद्र-भद्रात् पीड़ानुकूल्यवपने।

सपत्र-निष्पत्रात् ५।, प्रियसुखात् ५।, मद्रभद्रात् ५।, पीड़ानुकूल्यवपने ७।।

**एभ्यः क्रमादेतेष्वर्थेषु डाच् स्यात् कृञि। सपत्राकरोति निष्पत्राकरोति मृगम्। प्रियाकरोति सुखाकरोति मद्राकरोति भद्राकरोति।**

---

समयं . रोति निष्कोषोऽन्तरवयवस्य वहिष्कारः। निष्कुलाकरोति दाड़िमम् अन्यत्र निष्कुलं करोति शत्रुं दुःखाकरोति शत्रुं पीड़यतीत्यर्थः। अन्यत्र दुःखं करोति। शूलाकरोति मांसं शूलेन सह पचतीत्यर्थः। अन्यत्र शूलं करोति। शपथो दिव्यं न शपथोऽशपथः। सत्याकरोति मुनिः सत्यं कथयतीत्यर्थः। शपथे तु सत्यं करोति परिवादवान् दिव्यं करोतीत्यर्थः ॥५०४॥

गोरा टी—समयश्च निष्कुलञ्च दुःखञ्च सत्यञ्च तस्मात् यापनं कालहरणं तस्मिन्निष्कोषः अन्तर्वहिष्कारः तस्मिन् प्रातिकूल्यं चित्तव्यथनं तस्मिन् पाकः पचनं तस्मिन् न शपथमशपथं तस्मिन् क्रमेणोदाहरति समयाकरोतीत्यादि ॥५०४॥

सपत्रनिष्पत्राभ्यां पीड़ायां, प्रियसुखाभ्यां आनुकूल्ये, मद्रभद्राभ्यां वपने डाच् स्यात् कृञि। सपत्राकरोति मृगं सपत्रं शरं मृगस्य शरीरे प्रवेशयतीत्यर्थः। निष्पत्राकरोति मृगं मृगस्य पार्श्वद्वयं भित्वा निष्पत्रं शरं वहिष्करोतीत्यर्थः। आनुकूल्यं चित्ताराधनं प्रिया करोति सुखा करोति सखायं मद्रभद्रशब्दौ मङ्गलार्थौ मद्रा करोति भद्रा करोति मानवकं पिता मङ्गलपूर्वकं मुण्डयतीत्यर्थः ॥५०५॥

गरा-टी—सपत्रञ्च निष्पत्रञ्च तत्तस्मात् प्रियञ्च सुखञ्च तत्तस्मात् मद्रञ्च भद्रञ्च तत्तस्मात् पीड़ा च आनुकूल्यञ्च वपनञ्च तत्तस्मिन् पीड़ाशब्देन वेधनादि पीड़ोच्यते सह पत्रेण वर्त्तते सपत्रा करोति मृगं व्याधः सपत्रं शरं मृगशरीरे प्रवेशयतीत्यर्थः। निष्पत्राकरोति शरीरादपरपार्श्वे शरं निष्क्रामयतीत्यर्थः अन्यत्र सपत्रं करोति वृक्षं प्रावृट्, निष्पत्रं करोतिः ग्रीष्मः। आनुकूल्यम् आनुलोम्यं चित्ताराधनमिति यावत् प्रिया करोति सुखा करोति तथाच सीतामूचे सुखाकर्त्तुं प्रियाकर्त्तुं प्रियंवदा इति। मद्रा करोति भद्रा करोति बालं नापितः। मद्रभद्रशब्दौ मङ्गल-

## ५०६ । दघ्नमात्रद्वयसट् माने ।

दघ्न-मात्र-द्वयसट् ।१।, माने ७। ।

**परिमाणार्थे एते स्युः ।**

**गजपरिमाणो गजदघ्नः गजमात्रः गजद्वयसः ।**

## ५०७ । संख्या-शन्-शतो डिन् ।

संख्या शन्-शतः ५।, डिन् ।१। ।

**दशी त्रिंशी ।**

---

वाचकौ डाचा वपनमुच्यते । प्रकृतित्याभ्यां मङ्गलपूर्वं वपतीत्यर्थः । अन्यत्र मद्रं करोति इत्यादि ॥५०५॥

दघ्नश्च मात्रश्च द्वयसश्चेति समाहारे टकारस्य प्रत्येकेन सम्बन्धः । स्याद्यन्तादेते स्युः परिमाणेऽर्थे । परिमाणमिह ऊर्द्धपरिमाणं गज ऊर्द्धपरिमाणमस्य इत्यर्थे गजदघ्नः गजमात्रः गजद्वयसो ह्रदः । टित्वादीपि गजदघ्नी गजमात्री गजद्वयसी भित्तिः । ऊर्द्धपरिमाणे किं विल्वपरिमाणम् आम्रम् इत्यादौ न स्यात् ॥५०६॥

श्रीरा·टी—दघ्नश्च मात्रश्च द्वयसश्च तत्तस्मात् टमितं करोति दघ्नमात्र द्वयसट् द्वन्द्वात्परः श्रूयमाणः शब्दः प्रत्येकं सम्बध्नाति तेन स्त्रियां गजदघ्नी गजमात्री गजद्वयसी यद्यपि मानमिति सामान्येनोक्तं तथापि दघ्नद्वयसावर्द्धमाने स्याताम् । हस्तिपुरुषाभ्यां णो वा । आभ्यां परिमाणे णो वा स्यात् । हस्ती परिमाणमस्य हास्तिनं पौरुषं पचे हस्तिदघ्नमित्यादि । प्रमाणार्थात् लुक् गात्तु नित्यम् । मानवाचकात् दघ्ना दीनां लुक् स्याद्वा । हस्तं परिमाणमस्य हस्तः वितस्तिः सम्नः हस्तमात्रं वितस्तिमात्रं समश्चतुर्द्दशाङ्गुलः । गात्तु द्वौ हस्तौ परिमाणमस्य द्विहस्तः द्विवितस्तिः नित्यग्रहणात् भाविनोऽपि संशये मात्रटो लुग्विधानार्थम् । संख्या-प्रमाणपरिमाणार्थेभ्यो मात्रट् संशये । एभ्यः संशये मात्रट् स्यात् । पञ्च न वा पञ्चमात्रं सप्त न वा सप्तमात्रं वत्वान्तात् स्वार्थे यावन्मात्रं तावन्मात्रं कियन्मात्रं गणमात्रं बहुमात्रं प्रमाणात् समं स्यात् न वा सममात्रं हस्तमात्रं परिमाणात् प्रस्थं स्यात् न वा प्रस्थमात्रं द्रोणमात्रं गात्तु द्विसमं स्यान्न वा द्विसममित्यादि ॥५०६॥

शन् च शत् चेति शन्शत् संख्या चासौ शन्शच्चेति संख्याशन् शत् तस्मात् ।

## ५०८ । कति-यति-तति-यावत्तावदेतावत् कियदियन्तः ।

कति—इयन्तः १॥ ।

किं यत्तदां डत्यन्तानां यत्तदेतत्किमिदमां वत्वन्तानामेते क्रमात् निपात्यन्ते माने ।

## ५०९ । दशादेर्डो युते शतादौ ।

दशादेः ५।, डः १।, युते ७।, शतादौ ७। ।

एकादशं शतं विंशं शतम् ।

---

शन्शतोः केवलयोरसम्भवात् तदन्तयोर्ग्रहणम् । तेन संख्यावाचकशन्नन्ताद्दशादेः संख्यावाचकशदन्तात् विंशतादेश्च डिन् स्यात् परिमाणेऽर्थे । दशपरिमाणमस्य इत्यर्थे डिनि डित्वात् टिलोपे दशी । एवम् अष्टादशीति पर्य्यन्तं बोध्यम् । त्रिंशत्परिमाणमस्य इति डिनि टिलोपे त्रिंशी । एवं चत्वारिंशी ॥५०७॥

श्रीरा टी—शंश्च शश्च तत् संख्या च तत् शन्शश्चेति तत्तस्मात् संख्याशन्नन्तात् संख्या शदन्ताच्च डिन् स्यात् दशादेरपवादः । दशपरिमाणमस्य दशी एवं पञ्चदशिनोऽर्द्धमासा एवं त्रिंशत्परिमाणमस्य त्रिंशी मासः । विंशतेश्च । विंशतिशब्दान्माने डिन् स्यात् । विंशतिः परिमाणमेषां विंशिनोऽङ्गिरसः ॥५०७॥

किं परिमाणमेषां यत् परिमाणमेषामित्यर्थे किं यत्तद्भ्यो डतिप्रत्यये कति यति तति एते निपात्यन्ते । यत् परिमाणमस्य यावान् तत् परिमाणमस्य तावान् एतत् परिमाणमस्य एतावान् किं परिमाणमस्य कियान् इदं परिमाणमस्य इयान् एते वत्वन्ता निपात्यन्ते । वतो ऋदित्वादीपि यावतीत्यादि ॥५०८॥

श्रीरा टी—निपातनादिष्टसिद्धिः ॥५०८॥

दश आदिर्यस्य स दशादिः तस्मात् । दशादिः अत्र अतद्गुणसंविज्ञानबहुव्रीहिणा दश हित्वा एकादशादीनां ग्रहणम् । एवम् उभयत्र आदिशब्दयोर्व्यवस्थावाचित्वाद्दशादेरिति षष्टिपर्य्यन्तानामेव ग्रहणं शतादाविति शतसहस्रयोरेव ग्रहणमिति । एकादशादेः षष्टिपर्य्यन्तात् डः स्यात् युतेऽर्थे शते सहस्रे च वाच्ये इत्यर्थः । एकादशभिर्युतम् एकादशं शतं डित्वात् टिलोपः । एवं विंशत्या युतं विंशं शतम् अत्र

## ५१०। किं यत्तदेकान्यात् द्विबहूनामेकनिर्द्धारे डतरडतमौ।

किं—अन्यात् ५।, द्वि-बहूनां ६।।।, एकनिर्द्धारे ७।, डतरडतमौ १।।।

**अनयोः कतरो वैष्णवः एषां कतमः शैवः।**

---

विंशतेस्तिलोपे ययोरित्यकारलोपः। एवं त्रिंशं चत्वारिंशं पञ्चाशं षष्टं शतं सहस्रं वा। एकादशादेरिति किं दशभियुतम् अत्र न स्यात् शतसहस्रयोरेवेति किम् एकादशभियुतं लक्षम् अत्र न स्यात्॥५०९॥

श्रीरा-टी—दश आदिर्यस्य दशादिः अतद्गुणसंविज्ञानात् एकादशादीनां ग्रहणं शतशब्दोऽधिकार्थः शतमादिर्यस्य तद्गुणसंविज्ञानेन शतसहस्रयोरेव ग्रहणम्। दशादेरधिके शते सहस्रे च वाच्ये डः स्यात्। विंशं शतं पञ्चाशं शतम् एकादशं सहस्रम्। एकादशाधिकाः पुराणशते पुराणसहस्रे वा एकादशं पुराणशतम् एकादशं पुराणसहस्रमित्यादौ शतसहस्रमेव वाच्यं सजातीयेनाधिक्यं प्रतीतिः यत्र विजातीयेनाधिक्यं प्रतीयते तत्र न स्यात्। यथा विंशतिपणाः अस्मिन् कार्षापणशते कार्षापणसहस्रे वा तत्र न स्यात् विजातीयानामाधिक्यं प्रतीयते॥५०९॥

एभ्यो द्वयोर्मध्ये एकस्य निर्द्धारणे डतरो बहूनां मध्ये एकस्य निर्द्धारणे डतमः स्यात् डित्वात् टिलोपः। अनयोर्मध्ये कः कतरः एषां मध्ये कतमः एवं यतरः यतमः ततरः ततमः एकतरः एकतमः अन्यतरः अन्यतमः इति॥५१०॥

श्रीरा-टी—कश्च यश्च स च एकश्च अन्यश्च तत्तस्मात् द्वौ च बहवश्च द्विबहवस्तेषां गुणक्रियासंज्ञाभिर्व्यवच्छेदो निर्द्धारणम् एकस्य निर्द्धारणम् एकनिर्द्धारणं तस्मिन् डतरश्च डतमश्च तौ। एभ्यो द्वयोरेकस्य निर्द्धारणे डतरः बहूनां डतमः स्यात् डिति टिलोपः। वैष्णव इति विष्णुर्देवतास्य ज्ञानक्रियाभ्यां निर्द्धारणं ज्ञायते। परे तु बहूनां जातिपरितमड़िति ज्ञात्वा निर्द्धारण एव विधिः। कतमो भवतां कट इत्युदाहरन्ति तथापि प्रयोगप्राचुर्य्यात् ग्रन्थकृता सामान्येनोक्तम् एवं यतरः यतमः ततरः ततमः एकतरः एकतमः अन्यतरः अन्यतम इति। ननु कथं पूर्वतरस्मिन् वर्षे परुदिति चेत् सत्यं अस्य सूत्रस्य योगविभागः कर्त्तव्यः। डतरडतमावपि तेन पूर्वादेरपि पूर्वतरस्मिन् परतरस्मिन् इति मण्डूकगत्या तेनानुवर्त्तते तेन कतरो वैष्णवः को वैष्णवः कतमः शैवः कः शैव इत्यादि। अन्येदमोऽन्यार्थे डतरौ

## ५११। तस् ङेः।

तस् ।१।, ङेः ६। ।

**ङेः स्थाने तस् स्यात्। कृष्णतः सर्वतः अमुतः।**

---

दादिलोपश्च। अन्यस्मादिदमशब्दाच्च अन्येऽर्थे डतरः स्यात् इदमो दमो लोपश्च। अन्यतरः इतरः अन्येनान्यतरयोरन्येन सह समानार्थता सूचिता ॥५१०॥

पृथग्योगात् पूर्ववत् किमपि नानुवर्त्तते। तेन सर्वस्मात् लिङ्गात् सर्वविभक्तेः स्थाने तसादेशः स्यादित्यर्थः। यद्यपि पूर्वैः सर्वनाम्न एव पञ्चम्या एव तस् विधीयते तथापि सर्वनामभिन्नादपि प्रयोगतः प्रमाणतः नभस्तः पयस्तः इत्यादि दर्शनात् एवमपञ्चम्या अपि प्रथमं प्रथमतः आदि आदितः मन्त्रेण मन्त्रतः स्वरेण स्वरतः प्रथमे प्रथमतः मुखे मुखतः आदौ आदितः पृष्ठे पृष्ठत इत्यादि दर्शनात् आचार्य्येण सामान्यतोऽभिहितः। वार्त्तिकस्यापि मतमेतत् किञ्च अव्ययेषु अभिपरिभ्यामेव अभितः परितः एवं स्यादिप्रकरणोक्तैर्विशेषविधिभिः सामान्योऽप्ययं न बाध्यते। स्यादिप्रकरणं हित्वा तद्धितप्रकरणे एतद्विधानसामर्थ्यात्। तेन कृष्णेन कृष्णतः कृष्णात् कृष्णतः सर्वे सर्वतः सर्वस्मात् सर्वतः सर्वस्मिन् सर्वतः इत्यादयः स्युरेव। अमुत इति तसो विभक्तिस्थानजातत्वेन सर्वं सामान्यविभक्तिनिमित्तकार्य्यं स्यादेव। तेन त्यदां टेरः दोमोऽदसश्चेत्यादि स्यात्। विभक्तिविशेषविहितन्तु साचादिभक्तावेव। तेन जसादेः स्थाने तसि कृते हरित इत्यादौ गुणादिर्न स्यात् तद्धितप्रकरणोक्तानामादेशानां ङेर्लुक् त्ये चेत्यनेन लोपो न स्यात्। तेन सार्वविकं पारविकं तवत्यम् इत्यादि सिद्धम्। एवञ्च विभक्तेः स्थाने तसादयो ये आदेशास्तदन्तानामव्ययत्वमिति प्राञ्चः। तेन कुतः कुत आयातं कौतस्कुतम् इत्यत्राव्ययत्वात् टेर्लोपः। वाजन्तयाजन्ताभ्यामन्यस्य तद्धितोक्तादेशान्तस्याव्ययत्वं नास्तीत्येके। एतन्मतज्ञापनार्थं वाच्याचोश्चकारोऽनुबन्ध एतन्मते कौतस्कुतमित्यादौ मनीषादित्वात् टिलोपादिः ॥५११॥

श्रीरा-टी—यद्यपि सामान्यङिस्थाने तस्विधानात् सर्वस्मात् ङेः सर्वस्याः ङेस्तस् प्रसज्येत तथापि शिष्टप्रयोगानुसारेण प्रयोक्तव्यमिति। कृष्णत इति कृष्ण एव कृष्णतः प्रग्रासस् वेत्यनुवर्त्तमानात् कृष्ण इति च। एवं कर्म्मसहितो गुणः कर्म्मगुणतः स्मरणतः स्मरणं ततो भवान् स भवान्। द्याद्यास्तस् यथा ततो दीर्घाः

युषं ब्रवीमि तं दीर्घायुषं ब्रवीमि। त्रा: स्वरतो हीन: स्वरेण हीन: ततो देवानां प्रियेण कृतम् आक्रोशने ष्या न लुक्। एवं मन्त्रतो मन्त्रेण वा वर्णतो वर्णेन वा शरीरत: शरीरेण वा। च्या: तत आयुष्मते तस्मा आयुष्मते। प्या: तथाच भट्टि: केन संविभ्रते नान्य: ततो ब्राह्मणवत्सल:। मा दर्शतान्यं भरतस्र मत्त इति च। प्या:। देवार्जतोऽभवन् आदित्या: कर्णतोऽभवन् विविध-पचाश्रये ष्या अभिधानां हिक्कात: कुरु चिकित्सां हिक्काया: कुरु चिकित्सां प्रवाहिकात: कुरु चिकित्सां प्रवाहिकाया: कुरु चिकित्सां रोगार्थष्या अपनयनेऽभिधानम्। प्त्रा:। आदित: आदौ पृष्ठत: पृष्ठे पार्श्वत: पार्श्वे मध्यत: मध्ये अन्तत: अन्ते मुखत: मुखे प्रथमत: प्रथमे अग्रत: अग्रे इत्यादि। अन्ये आद्या-दिगणमाहु: तदुक्तं तथाहि आद्यादिभ्यश्चेति पाणिनिसूत्रं तद्भगवता फणिना आद्या प्रथमा तदादिविभक्त्युल्लेखो यथा दर्शनं तसि वा भवतीति व्याख्यातं तथा वामनेनापीति। चेपातिग्रहाचलेष्वघत्रा:। चेपेऽतिग्रहे अचले च वभिन्नत्रास्तस् वा स्यात्। व्यवहारतो निन्दित: व्यवहारेण निन्दित: वृत्ततोऽतिगृह्यते वृत्तेनाति-गृह्यते अतिक्रम्य गृह्यते इत्यर्थ:। चरित्रतो न चलति चरित्रेण न चलति। अघ इति किं विप्रेण चिप्त इत्यादि:। हीयमानपापयोगाच्च। आभ्यामघत्रास्तस् वा स्यात्। वृत्ततो हीयते वृत्तेन हीयते हीयमाना भवतीत्यर्थ:। वृत्तत: पाप: वृत्तेन पाप: पापयुक्त: इत्यर्थ:। सर्वहोरभवत् द्व्रादे: प्या:। सोर्वहोश्च प्यास्तस् वा स्यात्। न तु भवतो द्वेर्युष्मदोऽस्मदश्च। सर्वतो हीन: सर्वस्माद्धीन: विश्वतोऽन्य: विश्वादन्य: वहुतो भिन्न: बहुभ्यो भिन्न: भवदादेस्तु, भवत: द्वाभ्यां त्वत् मत् युष्मत् अस्मत् त्वत्तोऽन्य: मत्तोऽन्य: उत्सर्गत्वात् पूर्वेण नञ्निर्दिष्टत्वाद्वा। जे चाहागहि। जे विहिताया: प्यास्तस् वा स्यात् न तु हाको रुह: प्रयोगे सति। पुरुषोत्तमत: पुरुषोत्तमाद्वा याति काशीत: काश्या वा याति पापत: पापाद्वा भीत: तथा मत्तो विभ्यद्यम: स्वयमिति भट्टि:। अहागहीति किं सार्थाद्धीयते पर्वतादवरोहति जे किं हरेरन्य: शिवात् पृथक्। प्रतियोगे च। प्रतियोगप्यास्तस् वा स्यात्। भक्तित: प्रत्यस्त्वं भक्ते: प्रत्यस्तं केशवत: प्रति केशवात् प्रति प्रद्युम्न इत्यादि पर्य्यभिभ्यामुभ-यार्थेऽभिमुख्य सर्वार्थे तोर्नित्यम्। परेरुभयार्थे अभेरभिमुख्यार्थे सर्वार्थे च तोस्तस् स्यान्नित्यम्। तस्विधानसामर्थ्यात् न व्यात् लुक् तोरिति लुक् परितो हरिम् उभयत इत्यर्थ:। अभित ईशम् ईशस्याभिमुखम् इति कर्जट: ईशस्य सर्वत इत्यन्ये। प्रकरण-तसादि इत्योक्त्वा आदिप्रकरणे तसंज्ञार्थमुज्जहार तथाच यस्मिन् स्थाने य आदेश

## ५१२। देवादेर्द्वीम्भ्योस्त्राच्।

देवादेः ५।, द्वीम्भ्रोः ६॥, त्राच् ।१। ।

देवत्रा वन्दे रमे वा ।

## ५१३। स्त्रिबह्वोस्त्रोऽद्व्यादेः म्भ्राः ।

स्त्रिबह्वोः ५।, त्रः १।, अद्व्यादेः ५।, म्भ्राः ६। ।

**स्त्रेर्बह्वोश्च परस्याः स्यास्त्रः स्यात् न तु द्व्यस्मद् युष्मदः। सर्व-स्मिन् सर्वत्र तत्र बहुत्र।**

---

त्तदग्रहणेन गृह्यते इति न्यायात् तस्मिन् तदादिकार्य्यं भवत्येव। तसादीनां पृथक् स्वरादिपाठात् व्यत्वं त्यान्तरप्रकृतत्वञ्च तेभ्यस्त्यान्तरे तसंज्ञाविधानान्न लुक् ॥ ५११ ॥

देवादेः परयोर्द्वितीयासप्तम्योस्त्राच् स्यात्। चकारोऽव्ययार्थः। देवं देवौ देवान् वा वन्दे देवत्रा वन्दे। देवे देवयोः देवेषु वा रमे देवत्रा रमे देवादिस्तु देव मनुष्य पुरुपुरुषोमर्त्यो बहु इत्यादि ॥ ५१२ ॥

श्रीरा टी—देव आदिर्यस्य तत्तस्मात् द्वी च म्भी च ते तयोः त्राजिति म्भीक्रान्तं दम्। देवादेरनयोः स्थाने त्राच् स्यात् च इत्। देवत्रा इति क्रियाद्वयेन उदा-हरणद्वयम्। देवादिर्यथा। देवो बहु पुरु मर्त्त्यो मनुष्यः पुरुषश्च षट् ॥ ५१२ ॥

द्विरादिर्यस्य स द्व्यादिः न द्व्यादिरद्व्यादिः तस्मात्। द्व्यादिश्च त्यदादिगण-समाप्तिपर्य्यन्त इत्यत आह द्व्यस्मद् युष्मद् इति। सर्वस्मिन् सर्वयोः सर्वेषु वा सर्वत्र। एवं सर्वस्यां सर्वयोः सर्वासु इत्यत्रापि सर्वत्र इति विभक्तिस्थानजातत्वेन त्राद्यादेश्च-स्यापि प्रत्ययत्वे पुंवत् स्रेरिति पुंवद्भावः एवं सर्वस्य दिशः सर्वतः इत्यादि। भवती न स्यादिति वक्तव्यं तेन भवति भवतो भवत्सु इत्येव। जौमरास्तु सभवान् तत्र भवान् ततो भवान् इत्यादयोऽपि कल्याणवति वाच्ये निपात्यन्ते इत्याहुः ॥ ५१३ ॥

श्रीरा·टी—स्त्रिश्च बहवश्च तत्तस्मात् बहुशब्दस्य संख्यार्थग्रहणं न तु प्रचुरार्थस्य द्विरादिर्यस्य स न द्व्यादिः अद्व्यादिः तस्मात् स्त्रिरिति किं समे संख्यार्थस्येति किं बहौ सूपे अभिधानादितरयोः अपि तत्र भवान् तत्र दीर्घायुषं ब्रवीमि तं दीर्घायुषं ब्रवीमि तत्र देवानां प्रियेण कृतम् इत्यादि। अद्व्यादेः किम्। अयोः त्वयि मयि आदिशब्दाद्भवति ॥ ५१३ ॥

## ५१४ । सर्वैकात् काले दा ।

सर्वैकात् ५।, काले ७।, दा ।१। ।

सर्वस्मिन् काले सर्वदा ।

## ५१५ । किमन्ययत्तदोर्हिश्च ।

किमन्ययत्तदः ५।, र्हिः १।, च ।१। ।

एभ्यः स्या र्हि दा च स्यात् । कस्मिन् काले कर्हि कदा ।

## ५१६ । तदो दानीं वा ।

तदः ५।, दानीं ।१।, वा ।१। ।

तदानीं तर्हि तदा ।

## ५१७ । पूर्वान्यान्यतरेतरापराधरोत्तरोभयादेद्युसह्नि ।

पूर्व—उभयात् ५।, एद्युस् ।१।, अह्नि ७। ।

पूर्वस्मिन्नहनि पूर्वेद्युः ।

---

काले वर्त्तमानाभ्यामाभ्यां परस्याः सप्तम्या दा स्यात् । सर्वस्मिन् काले सर्वदा एवम् एकदा ॥ ५१४ ॥

श्रीरा-टी—सर्वश्च एकश्च तत्तस्मात् । सर्वादिकाच्च काले दा स्यात् । सर्वदा एकदा ॥ ५१४ ॥

कस्मिन् काले कर्हि कदा एवम् अन्यर्हि अन्यदा यर्हि यदा तर्हि तदा ॥५१५॥

श्रीरा-टी—कश्च अन्यश्च यश्च स च तत्तस्मात् । तर्हीति एवम् अन्यर्हि अन्यदा यर्हि यदा तर्हि तदा अन्यर्हीति जयादित्येनोदाहृतम् अन्यर्हीति कश्चित् ॥ ५१५ ॥

काले वर्त्तमानात्तदः परस्याः सप्तम्या दानीं स्याद्वा । तस्मिन् काले तदानीं पक्षे तर्हि तदा ॥ ५१६ ॥

श्रीरा-टी—तदशब्दाद् दानीं वा स्यात् । तदानीमिति पक्षे र्हि दा च ॥ ५१६ ॥

एभ्योऽष्टभ्यः परस्याः सप्तम्या एद्युस् स्यात् अह्नि वाच्ये । पूर्वस्मिन्नह्नि पूर्वेद्युः अव्यादिस्त्व इत्यनेन तद्धितादेशानामपि तद्धितसंज्ञाविधानात् यस्योरित्यकारलोपः ।

## ५१८। दिक्शब्दाद्दिग्देशकाले स्तात् प्रीपीम्नयाऽचो लुक् ।

दिक्-शब्दात् ५।, दिग्-देश-काले ७।, स्तात् ।१।, प्री-पी-म्नः १।।।, अचः ५।, लुक् ।१। ।

**परस्तात् प्राक् ।**

---

एव अन्येद्युः इतरेद्युः अन्यतरेद्युः अपरेद्युः अधरेद्युः उत्तरेद्युः उभयेद्युः । उभयाद् द्युस् च वक्तव्यः उभयस्मिन्नहनि उभयेद्युः ॥ ५१७ ॥

श्रीरा-टी—पूर्वश्च अन्यश्च अन्यतरश्च इतरश्च अपरश्च अधरश्च उत्तरश्च उभयश्च तत्तस्मात् । एभ्योऽहनि वाच्ये एद्युस् स्यात् । पूर्वेद्युरिति एवमन्येद्युः अन्यतरेद्युः इतरेद्युः अपरेद्युः अधरेद्युः उत्तरेद्युः उभयेद्युः पक्षे पूर्वत्र पूर्वस्मिन् इत्यादि ॥ ५१७ ॥

दिशि वर्त्तमानः शब्दो दिक्शब्दः स च पूर्वादिः प्रागादिश्च । दिशि देशे काले वर्त्तमानात् दिक्शब्दात् परासां प्रथमापञ्चमीसप्तमीनां स्थाने स्तात् स्यात् अचः स्वरूपात् परस्य तस्यैव स्तादादेशस्य लुक् स्यात् । परा दिक् परो देशः परः कालो वा इत्यर्थे प्रथमायाः स्तादादेशे परस्तात् । एवं परस्या दिशः परस्मात् देशात् परस्मात् कालाद्वा इत्यर्थे पञ्चम्याः स्तादादेशे परस्तात् । प्राक् इति प्राची दिक् प्राग्देशः प्राक्कालो वा इत्यर्थं प्रथमायाः स्थाने जातस्य स्तादादेशस्य लुक् । लुकि न तवेति निषेधात् ञ्चिदचोऽड्रेरिति नुन् न स्यात् विरामे च चस्य कः । प्राची दिक् इत्यर्थे प्राक् इत्यत्र अन्येषां मते स्तातो लुकि तदन्तत्वेन अव्ययत्वाल्लिङ्गकार्य्याभावे ईपो निवृत्तिः । स्वमते तु मनीषादित्वात् । एवं पञ्चमीसप्तम्योरपि बोध्यम् । दक्षिणोत्तराभ्यां पञ्चम्या न स्तादिति वक्तव्यम् । दक्षिणतः उत्तरतः ॥५१८॥

श्रीरा-टी—दिगिति स्वरूपत्वे उपचारात् तद्वाचके वर्त्तते ते च ते शब्दाश्चेति दिक्शब्दास्तेभ्यः बहुब्राह्मणीवत् व्यत्ययो ऽत्र कृतं दिक्शब्दादिति । दिक् च देशश्च कालश्च तत्तस्मिन् स्तादिति लुप्तप्रकृदम् अनच् गतिपूजनयोरित्यस्यैव ग्रहणं तस्य दिग्वाचकत्वात् न त्वच्प्रत्याहारस्य । दिग्वाचकेभ्यो दिग्देशकाले वर्त्तमानेभ्यः प्री पी म्नी स्थाने स्तात् इत्यर्थः अचः परस्य स्तातो लुक् । ग्रन्थकारैः संक्षेपेण वयाणामेकमुदाहृतम् । पुरस्तादिति पुरस्तात् रम्या दिक् पुरस्ताद्दिश आगतः पुरस्ताद्दिशि स्थितम् एवं पुरस्ताद्देशः कालो वेत्यादि । प्रागिति प्राचीशब्दात् स्तातिलुकि ङ्यौत्यस्य लुक् प्राक् रमणीयं प्रागागतः एवं प्रत्यगित्यादि ॥५१८॥

## ५१९। वैनोऽपी।

वा।१।, एनः १।, अ-पी।१।।

पूर्वेण।

## ५२०। दक्षिणोत्तरादाही।

दक्षिणोत्तरात् ५।, आ-आही।१॥।

दक्षिणा दक्षिणाहि, उत्तरा उत्तराहि।

## ५२१। वाधराच्चात्ताः।

वा।१।, अधरात् ५।, च।१। आत्।१।, ताः १॥।

अधरात् अधरस्मात्, दक्षिणस्मात्।

---

वाशब्दोऽत्र विकल्पवाची व्यवस्थावाची च। तेन दिक्शब्दाददूरे दिग्देशकाले प्रथमसप्तम्योरेनः स्याद्वा। अदूरे पूर्वा दिक्, पूर्वो देशः पूर्वः कालो वा इति प्रथमाया एनः ययोरित्यकारलोपे पूर्वेण। एवम् अदूरे पूर्वस्यां दिशि पूर्वस्मिन् काले वा पूर्वेण दक्षिणोत्तराधरेभ्य इति पाणिनीयाः॥५१९॥

श्रीरा-टी—न पी अपी दिक्शब्देभ्यो दिग्देशकाले वर्त्तमानेभ्यः श्रीप्सोरेनः स्यात्। पूर्वेणेति पूर्वः पूर्वस्यां वा इत्यर्थः। अपीति किं पूर्वस्याः पुरस्तात्॥५१९॥

आश्च आहिश्च आही इति द्विवचनं यथासंख्यनिरासार्थम्। दिग्देशकाले दक्षिणोत्तराभ्यां प्रथमासप्तम्योः स्थाने आ आहिश्च स्यात् विशेषत्वात् स्तातो बाधकावेतौ। दक्षिणा दिक्, दक्षिणो देशः दक्षिणः काल इत्यादि वाक्ये दक्षिणा एवं दक्षिणाहि। अत्र दूरादूरयोर्वा स्यात् दूरे आहिरिति केचित् सप्तम्यामप्येवम्॥५२०॥

श्रीरा-टी—दक्षिणश्च उत्तरश्च तत्तस्मात् आश्च आहिश्च तौ श्रीप्सं दम् अतो न यथासंख्यम् अदूरदूरयोरभिधानम्। आभ्यां अदूरे आ दूरे आहिः स्यात् श्रीप्सोरेव अदूरे दक्षिणा उत्तरा दूरे दक्षिणाहि उत्तराहि तथाच उत्तराहि वसन् रामः समुद्राद्रक्षसां पुरमिति भट्टिः॥५२०॥

दिग्देशकाले दक्षिणोत्तराधरेभ्यस्ताः प्रथमापञ्चमीसप्तम्या आत् स्युर्वा। अधरा दिक अधरो देशः अधरः काल इत्यर्थे प्रथमाया आत् अधरात् एवम्

## ५२२। पूर्वाधरावराः पुराधावाः स्तादसोः।

पूर्वाधरावराः १।॥, पुराधावाः १।॥, स्तादसोः ७।॥।

**पुरस्तात् पुरः, अधस्तात् अधः, अवस्तात् अवः। अतएव अस्।**

## ५२३। त्वत्थाच् प्रकारे।

त्वत् ।१।, थाच् ।१।, प्रकारे ७। ।

**येभ्यस्त्व उक्तस्तेभ्यः प्रकारे थाच् स्यात्, स च तद्वत्। सर्व-प्रकारं सर्वथा।**

---

अधरस्या दिशः अधरस्मात् देशात् अधरस्मात् कालादित्यर्थे पञ्चम्या आत् अधरात् एवञ्च अधरस्यां दिशि अधरस्मिन् देशे अधरस्मिन् काले इत्यर्थे सप्तम्या आत् अध-रात्। सर्वत्र पक्षे तद्रूपेण दक्षिणस्यामिति आवन्तादपि आदादेशः स्यादिति ज्ञापनार्थम् एवं दक्षिणोत्तरयोरपि ॥ ५२१ ॥

गोरा-टी—ताः प्रीपीम्रः अधरशब्दाच्चकाराद्द दक्षिणोत्तरशब्दयोरनुवृत्तिः। तथा चाधरदक्षिणोत्तरशब्देभ्यः प्री पी म्री स्थाने आत् स्यात्। अधरः अधरस्मात् अधरस्मिन् वा अधरात्। एवं दक्षिणः दक्षिणस्मात् दक्षिणस्मिन् वा दक्षिणात्, उत्तरः उत्तरस्मात् उत्तरस्मिन् वा उत्तरात् ॥ ५२१ ॥

पूर्वस्य पुरः अधरस्य अधः अवरस्य अवः स्यात् स्तादसोः परयोः। पुरस्तादिति दिक्शब्दादित्यनेन पूर्वशब्दात् प्रथमादेः स्तादादेशे अनेन पूर्वस्य पुरादेशः एवम् असि परे पुरादेशे ययोरित्यकारलोपः एवम् अधस्तात् अधः अवस्तात् अवः। अतएवेति। असि परे आदेशविधानादेव पूर्वाधरावरेभ्यः प्रथमादेरसादेशः स्यादिति ॥ ५२२ ॥

गोरा-टी—पूर्वश्च अधरश्च अवरश्च ते ष्यर्थे प्री व्यत्ययात् पुरश्च अधश्च अवश्च ते, स्ताच्च अस् च तौ तयोः प्रीद्वान्तं दम्। तयोः परयोरेषां क्रमादेते स्युः निर्देशसाम-र्थ्यादेतेभ्यः परोऽसेव ॥ ५२२ ॥

चन्द्रवन्मुखम् इत्युक्तौ यथा चन्द्रस्य आह्लादकत्वेन गृह्यते न तु धावल्यादिना तथात्रापि त्ववदित्युक्तौ विभक्तिस्थानजातत्वेनैव साम्यं गृह्यते न तु सप्तमीस्थानजात-त्वेन। तेन त्रिवहुभ्यां सर्वासां विभक्तीनां स्थाने थाच् स्यात् प्रकारे। प्रकारः सादृश्यं यथा सर्वप्रकारं सर्वेण प्रकारेण सर्वस्मै प्रकाराय सर्वस्मात् प्रकारात् सर्वस्य

**५२४। कुतः क्व कुह कुत्रेतोऽतोऽत्रेह सदैतर्ह्यधुनेदानीं पश्चादुपर्य्युपरिष्टात् परेद्यवि सद्योऽद्यैषमः परुत् परारीत्थं कथम्।**

कुतः—कथम्।१॥।

एते निपात्यन्ते। कस्मात्——कुतः, कस्मिन्——क्व कुह कुत्र, अस्मात्——इतः, एतस्मात्——अतः, एतस्मिन्——अत्र, अस्मिन्——इह, सर्वदा——सदा, अस्मिन् काले——एतर्हि अधुना इदानीं, पश्चिमं——पश्चात्, ऊर्द्ध्वम्——उपरि उपरिष्टात्, परस्मिन् अहनि——परेद्यवि, समानेऽह्नि——सद्यः, अस्मिन्नहनि——अद्य, अस्मिन् वर्षे——ऐषमः, पूर्वस्मिन् वर्षे——परुत्, पूर्वतरस्मिन् वर्षे——परारि, इदं प्रकारम्—इत्थं किं प्रकारं——कथम्।

---

प्रकारस्य सर्वस्मिन् प्रकारे सर्वथा इति। तृतीयाया एव थाजादेश इति केचित्। चकारोऽव्ययार्थः॥ ५२३॥

श्रीरा टी—अतिदेशबलात् अद्र्यादिस्विर्वहोरेव प्रकारः सादृश्येऽप्यस्ति यथायं चैवप्रकार इति तथाच द्र्यादिभिन्नात् सर्वहोश्च थाजित्यर्थः। अत्र तु द्र्यादित्यर्थस्य ग्रहणं तेन सर्वान् प्रकारान् करोति सर्वेण प्रकारेण गच्छति सर्वथा गच्छति सर्वस्मै प्रकाराय ददाति सर्वस्मात् प्रकारादागच्छति सर्वथा आगच्छति सर्वस्मिन् प्रकारे तिष्ठति सर्वथा तिष्ठति। एतत् शब्दस्यापि इत्थम् इत्येके अन्येषां मते एतथेति एवमन्यथा इतरथा यथातथा अमुथा अपरथा इत्यादि प्रयोगदर्शनादप्यूह्यम् तद्वदित्यनेन त्यदां टेर इतिचिह्नाद्र्यं जातीयस्य न समानर्थता। तस्य प्रकारवति विधानात् तथा जातीयः। इत्थं जातीयः इति तत्प्रकारप्रकारीत्यर्थः॥ ५२३॥

कस्मादिति कुतः। कस्मिन्निति क्व कुह कुत्र। अस्मादिति इतः। एतस्मादिति अतः। एतस्मि[illegible]ति अत्र अस्मिन्निति इह। सर्वदेति सदा। अस्मिन् काले इति एतर्हि अ[illegible]ना इदानीम्। पश्चिममिति पश्चात्। दिक्शब्दादित्यादिना पश्चिमशब्दात् [illegible]दादेशे पुनस्तातोऽपि आदादेशे पश्चिमस्य पश्च आदेशः। ऊर्द्ध्वमिति उपरि [illegible]परिष्ट[illegible] अत्र उपशब्दात् रिप्रत्यये उपरि पुनस्तस्मात् स्तात् प्रत्यये

## ५२५। त्यत्राद्य चिर दक्षिणाद्यादे स्त्य-ट्टन-न्न-त्यण-मा भवादौ।

त्यत्र-आद्यादेः ५।, त्य—माः १।।।, भवादौ ७।।

**एभ्यः एते क्रमात् स्युर्भवाद्यर्थे। त्यत्रत्यः तत्रत्यः अद्यतनो ह्यस्तनो, चिरन्तः परुत्नः। दाक्षिणात्यः पाश्चात्यः, आदिमः मध्यमः।**

---

उपरिष्टात् परेऽह्नि इति परेद्यवि समानेऽह्नि इति सद्यः अस्मिन्नह्नीति अद्य अस्मिन् वर्षे इति ऐषमः पूर्वे वर्षे इति परुत्। पूर्वतरस्मिन् वर्षे इति परारि। इदं प्रकारमिति इत्थं किं प्रकारमिति कथम्॥ ५२४॥

श्रीरा-टी—पूर्वतरस्मिन् इति योगविभागात्॥ ५२४॥

त्यत्रश्च अद्यश्च चिरश्च दक्षिणा च आदिश्च ते आदयो यस्य स त्यत्राद्यचिरदक्षिणाद्यादिस्तस्मात्। त्यश्च ट्टनश्च न्नश्च त्यण् च मश्च ते। अत्र विभक्तिमनादृत्य शब्देरेव यथासंख्यग्रहणं शिष्याणां नानाप्रकारज्ञानार्थम्। केचित्तु समाहारे त्यट्टन न्न त्यण् मम् इत्येव पठन्ति। तत्रादिभ्यः अद्यादेः ट्टनः चिरादेस्तुः दक्षिणादेस्त्यण् आद्यादेर्मः स्यात् तत्र भव इत्याद्यर्थे त्यत्रेति त्यत्रादिः सप्तम्यास्त्रादेशे तदन्तस्य ग्रहणम्। त्यत्र भवः त्यत्र वसति वा इत्यर्थे त्यत्रत्यः। त्ये परे तद्धितादेशस्य न लोपः। एवं तत्रत्यः यत्रत्य इत्यादि। अद्य भवः अद्यतनः एवं ह्यस्तनः श्वस्तनः चिरन्तनः सनातनः सदातनः पुरातन इत्यादि। अत्र पुरातनस्य स्थाने पुराण प्रत्न प्रतना वा निपात्यन्ते। पुराणः प्रत्नः प्रतनः पक्षे पुरातनः एवं नवीनस्य नूतननूत्नौ वा निपात्येते। चिरे भवः चिरत्नः एवं परुत्नः। दक्षिणा इति। दक्षिणोत्तरादाहीति आः। दक्षिणा भवः दाक्षिणात्यः णित्वात् वृद्धिः तद्धितादेशस्य न लोपः। पश्चाद्भवः पाश्चात्यः पौरस्त्य इत्यादि। आदौ भवः आदिमः मध्यम इत्यादि। अत्र रामानन्दकाशीश्वरौ किमः क्यत्ताच्चिन्नो इति वक्तव्यमाहतुः। वस्तुतस्तु अस्मात्कल्पे तु चिच्चन इत्यमरोक्तयोः चिच्चनेत्यव्ययशब्दयोरनुप्रयोगादेव कश्चित् कौचित् केचित् काचित् किञ्चित् कस्यचिदित्यादि सिद्धम्। न च तयोरनुप्रयोगे एकपदत्वाभावे कदाचिद्भवं कादाचित्कम् इत्यत्र कथं पूर्वपदस्य वृद्धिरिति वाच्यं कदाचिज्ज्ञातु इत्यमरोक्तस्य कदाचिदित्यव्ययशब्दस्य तत्सिद्धेः॥५२५॥

## ५२६ । किमः त्यन्तात् चि-च्चनौ ।

किमः ५।, त्यन्तात् ५।, चित् चनौ १॥ ।

**कस्यचित्, कदाचित्, कस्यचन कदाचन ।**

## ५२७ । आदिस्तः ।

आदिः १।, तः १। ।

**( ३२३ ) चेक्याचुदषह्रोऽरित्यकारमारभ्य यस्य उक्तः स तसंज्ञः स्यात् ।**

इति तपादः ।

### इति स्याद्यन्ताध्यायः ।

स्याद्यन्ताधिकारः समाप्तः ।

---

श्रीरा-टी—त्यदस्त्व त्यवः त्यवश्च । अद्यश्च चिरश्च दक्षिणश्च आदिश्च ते आदयो येषां ते तेभ्यः त्यश्च ष्टनश्च तश्च त्यण् च मश्च ते. भवादिकत्तस्मिन् । त्यवादिर्यथा । अद्वतस् :इह अविस् ऐषमस् ह्यस् श्वस् निर्भूश्च । निस्वर्णाश्रमवहिष्कृते । चिरादिर्यथा । चिर परुत् परारि । अद्यादिर्यथा । अद्य दिवा दोषा सायं चिरं प्राह्णे प्रगे प्राच् ह्यस् श्वस् ऐषमस् पूर्वाह्णे अपराह्णे पुरातनस्य त लुक् वा । आद्यादिर्यथा । आदि मध्य अग्र पश्चादन्ताड्डिमः । अग्रिमः पश्चिमः अन्तिमः दक्षिणादिर्यथा । दक्षिणा पश्चात् ॥ ५२५ ॥

सुगमम् ॥ ५२६ ॥

सुगमम् ॥ ५२६ ॥

अ इति आदिर्यस्य स आदिः । अत्र प्रधानेन व्यपदेशा भवन्तीति न्यायात् यस्यः उक्तः स तसंज्ञः स्यात् इत्युक्तवतापि तद्धितोक्तविभक्तिकादेशानामपि तसंज्ञा सूचिता । तेन पूर्वेद्युरित्यादौ पूर्वेण इत्यादौ तु एद्युस् एनादेस्तद्धितत्वे यद्योरित्यकारलोप. स्यादिति । इति त पादः ॥ ५२७ ॥

स्यादिरन्तो येषां तानि स्याद्यन्तानि पदानि तेषामध्यायः स्याद्यन्ताध्यायः सुबन्ताध्याय इति परे ।

इति श्रीदुर्गादासविद्यावागीशविरचितायां मुग्धबोधटीकायां स्याद्यन्ताध्यायः ।

श्रीरा-टी—सुगमम् ।

इति श्रीरामतर्कवागीशविरचितायां मुग्धबोधटीकायां स्याद्यन्ताध्यायः ।

ततः प्रसङ्गतः पदार्थनिरूपणमाहुः श्रीरामतर्कवागीशपादाः।

## पदार्थनिरूपणम्।

पदार्थमात्रे शक्तौ पदार्थो निरूप्यते। तत्र बहुभिः स्वार्थादिपञ्चकमुक्तं कश्चित् तत् प्रतिसंस्कृत्य पठति। जातिर्व्यक्त्याकृती संख्या तथा कर्म्मादयश्च षट्। अमी-पञ्चैव लिङ्गार्थः केषां त्रिस्त्रोऽग्रिमाश्च सः। इत्यत्र लिङ्गार्थ इति एकवचननिर्देश-एकैव शक्तिरेकवृत्तिवेद्यत्वसूचनाय अतएव परामर्षसूत्रे व्यक्त्याकृतिजातयः पदार्थं इति। यथा जात्याख्यायामेकस्मिन् बहुवचनमन्यतरस्यामित्याद्यनुशासनात् सम्पन्नो यवः सम्पन्ना यवा इत्यादौ जातौ। गौश्चलतीत्यादौ व्यक्तौ। अवयवसंयोगादि-रूपाकृतिविशिष्टा गौरित्यादावाकृतौ पिष्टकमय्यो गाव इत्यादौ तु गवाकृतिसदृशा-कृतौ लक्षणा पिष्टकसंयोगस्याशक्यत्वात् एको द्वौ बहव इत्यादौ संख्यायाम्। ग्रामानय पयसा सिञ्चति सूदेन पच्यते विप्राय ददाति ग्रामादागच्छति स्थाल्यां पचतीत्यादौ कर्म्मादिषु शक्तिं स्वीकरोति च। अत्रान्ये प्राहुः त्र्यन्तं यत्तत् पदं शक्तं बोधयत्यर्थपञ्चकं विशेष्यत्वेन शक्त्यैकं विशेषणतयेतरान् इति। लाघवाज्जाता-वेव शक्तिग्रहः न तु व्यक्त्यादौ तासामनन्तत्वात् अशक्यव्यक्तावनध्यवसायाच्च। न च व्यक्तेरशक्यत्वे ग्रामानयेत्यादौ कथं कर्म्मत्वाद्यन्वय इति वाच्यं जातिशक्तिपदस्य शब्दशक्तिस्वभावात् जात्याश्रयतया व्यक्त्यादेर्जातिवृत्तिवेद्यत्वनियामकत्वात् न हि जातिव्यक्तिभ्यां विना व्यक्तिजात्योः पृथगुपस्थितिः सम्भवति तथाच नागृहीत-विशेषणा बुद्धिर्विशेष्ये उपजायत इति न्यायात्। यद्वा जातिशक्तिज्ञानाज्जाति-र्भवन्ती व्यक्तिमपि बोधयति व्यक्तिं विना जातेरज्ञानात् येन विना यो न भासते तद्धि हेतुत्समपि बोधयति अन्यथा पदं जातिमपि न बोधयेत् केवलाया अप्र-तीतेः। तस्मादेकबुद्धिवेद्यत्वनियमात् जातिशक्तिज्ञानार्थः क्लृप्ता शक्तिव्यक्तेरपि बोधिकेति न चापदार्थस्य व्यक्त्यादेः कथमानयनादावन्वय इति वाच्यम् अस्रग्वी भवेयमित्यादिवत् सविशेषेण विधिनिषेधौ विशेषणमुपसंक्रामतः सति विशेष्ये बाधे इति न्यायात् व्यक्त्यादावन्वय इति। ननु जातौ शक्यायां कर्म्माद्यन्वयानुप-पत्त्या व्यक्त्यादौ लक्षणेति चेत् न युगपत् वृत्तिद्वयविरोधात् न हि सूक्ष्मकालस्य भेदाग्रहणात् जातिव्यक्त्योर्युगपत्प्रतीतेः। न च पदार्थः पदार्थेनान्वेति न तु अपदा-र्थेन इति व्युत्पत्त्या कथमपदार्थे पदार्थान्वय इति वाच्यं व्यभिचारान्नियमाभावः। यथा घटादन्यः पटात् पृथगित्यादावपदार्थभेदान्वय इति। अन[illegible]ो हि शब्दार्थः

स्ते नान्यतीलभ्यस्यापदार्थत्वादपदार्थेऽपि व्यक्त्यादौ कर्म्मत्वाद्यन्वय इति। कुतः शक्तिग्रहः शक्तिग्रहं व्याकरणोपमानकोषाप्तवाक्याद्व्यवहारतश्च। वाक्यस्य शेषाद्विहते-र्वदन्ति सान्निध्यतः सिद्धपदस्य वृद्धा इति। तथाहि कृञ् कृतौ कर्त्तरि टणकादि कर्त्ता कारक इत्यादाववयवशक्त्या समुदितयौगिकी शक्तिः कल्प्यते। गोपदादौ तु प्रकृतिप्रत्यययोः पृथक्शक्त्यभावात् समुदिते रूढ़िरेव। पङ्कात् पङ्के वा जातः ड्प्रत्ययान्तात् पङ्कजपदात् पङ्कजनिकर्त्तृपद्मं नियमतः प्रतीयते। पद्मं पङ्कज-पदशक्यं तत्रावयवानाममामर्थ्यात् न चावयवार्थयोगात् कुमुदादिधीः कथं न स्यादिति वाच्यं पद्मातिरिक्ते रूढ़िशक्त्याऽवयवशक्तेः प्रतिबन्धात् पद्मे रूढ्या अवयवा-र्थादपि अतएव पद्मे पङ्कजशब्दो योगरूढ़िरिति। एवं षसन्तरथकारशब्दो रूढ्या जातिमन्तं बोधयति लाघवाच्छक्त्या जात्युपस्थापकत्वम्। यौगिकरूढ़ौ तु मण्डपपदस्य ड्प्रत्ययान्तस्य मण्डपानकर्त्तृत्वं मण्डेरपप्रत्ययान्तस्य विशेषबोधकत्वं एकस्मिन्नुभयार्थे रूढ़िशक्त्याऽवयवशक्तिः प्रतिबध्यते। उपमानात् यथा। गौरिव गवय इत्यादौ प्राक्शब्दश्रवणानन्तरं चैत्रो वनं गच्छन् गोसदृशव्यक्तिं दृष्ट्वा गोसदृश इत्यतिदेशवाक्यार्थस्मरणात् प्रत्यक्षव्यक्तौ चक्षुषा सादृश्यज्ञानमुपमानं तस्मादयं गवयपदवाच्य इति शक्तिग्रहः। कोषात्तावत् हरिश्चन्द्रार्कवाताश्वशुक-भेकयमाहिषु इत्यादौ प्रत्येकं शक्तिग्रहः। आप्तवाक्यात्तावत्। अत्रेन्द्रनीलपद्म-रागादौ आप्तोक्तत्वादिन्द्रनीलपद्मरागपदवाच्यत्वग्रहः व्यवहारात्तावत् प्रयोज्य प्रयोजकवाक्योच्चारणानन्तरं प्रयोज्यप्रवृत्तिमुपलभमानो बालः प्रयोज्यप्रवृत्ति-प्रयोजनमनवधार्य्यावापोद्धारणक्रियाकारकपदानां तत्तदर्थेषु प्रत्येकं शक्तिं गृह्णाति। वाक्यस्य शेषात् तावत्। यथा यवमयश्चरुर्भवति वाराही चोपानहौ वेतसे कटे प्राजा-पत्यं धिनोति अत्र यववराहवेतसशब्दाः किं कङ्गुवायसजम्बूनां वाचका उत दीर्घशूकशूकरवञ्जुलानामिति? म्लेच्छार्य्यव्यवहारदर्शनात् विप्रतिपत्तौ मुख्यार्था-नध्यवसायात्तत्तत्पदवद्वेदप्रामाण्यानिश्चये वायसवञ्जुले वेदविरोधिनी म्लेच्छप्रसिद्धिः स्मृतिवेदविरुद्धा हेया निरस्तायां निष्प्रतिपक्षम्लेच्छार्य्यव्यवहारात् शक्तिग्रहः। सिद्धपदसान्निध्यात्तावत् सहकारतरौ मधुरं पिको रौति इत्यादौ प्रयोजकवाक्यो-च्चारणानन्तरं पिकपदागृहीतशक्तिः सहकारतरुमूलं गच्छन् रावकर्त्तारं दृष्ट्वा अयं पिकपदवाच्य इति शक्तिग्रहः। लक्षणा च वृत्त्यन्तरं यत्र वाच्यार्थान्वया-नुपपत्त्या वाच्यसम्बन्धोपस्थापिते वाक्यार्थान्वयः यथा गङ्गायां घोषः प्रतिवसति इत्यत्र गङ्गापदस्य तीरे। तदुच्यते वाच्यस्यार्थस्य वाक्यार्थे सम्बन्धानुपपत्तितः।

तत्सम्बन्धवशप्राप्तस्यान्वयात् लक्षणोच्यते इति। न च तीरे लक्षणशक्तिः कल्प्यतां किमलक्षणलक्षणयेति वाच्यं लक्ष्यतीराद्यनन्तेषु गङ्गादिपदस्य प्रत्येकशक्तिकल्पने गौरवात्। :किन्तु शक्यसम्बन्धरूपा लक्षणा लक्षणीयविषयकत्वद्व्यवहारानपेक्षा चेति सैव युक्ता लाघवात्। अत्राहुः। रूढिश्च योगरूढिश्च यौगिकी रूढिरेव च। यौगिकी वृत्तयः सिद्धाः पृथक् वृत्तिस्तु लक्षणा इति। तथाच पदार्थबोधे साकाङ्क्षादिशक्तिमत्पदज्ञानव्यापारेण स्याद्यन्तपदं साधनं तेन वस्त्रेण द्वारमिति शब्दप्रयोगात् पिधेहीति पदाध्याहारात् वस्त्रेण द्वारं पिधेहीत्यन्वयबोधः शब्दो ह्याकाङ्क्षा शब्देनैव प्रपूर्य्यत इति न तु पिधेह्यर्थाध्याहारेणेति। आकाङ्क्षा तु यस्माच्छब्दाद्विना यस्य शब्दस्यानुभवो न हि। तेन शब्देन तच्छब्दः साकाङ्क्षः परिचेष्यते॥ इति प्रघट्टार्थः।

इति श्रीरामतर्कवागीशभट्टाचार्य्यकृतं पदार्थनिरूपणं समाप्तम्।

---

## त्याद्यन्ताधिकारः।

# भ्वाद्यध्यायः।

---

### प्रथम पादः—संज्ञा।

अथ त्यादिरुच्यते।

आदिमध्यान्तमङ्गलानि शास्त्राणि झटिति प्रसिद्धानि भवन्तीति स्मरणादथशब्देन मध्यममङ्गलं कुर्वन् शिष्याणामवधानाय प्रतिजानीते अथेति।

५२८। धोः—

तिप् तस् अन्ति, सिप् थस् थ, मिप् वस् मस्—
ते आते अन्ते, से आथे ध्वे, ए वहे महे [ की ]
यात् याताम् युस्, यास् यातम् यात, याम् याव याम—
ईत ईयाताम् ईरन्, ईथास् ईयाथाम् ईध्वम्, ईय ईवहि ईमहि [ खी ]
तुप् ताम् अन्तु, हि तम् त, आनिप् आवप् आमप्—
ताम् आताम् अन्ताम्, स्व आथाम् ध्वम्, ऐप् आवहैप् आमहैप् [ गी ]
दिप् ताम् अन्, सिप् तम् त, अम्प् व म—
त आताम् अन्त, थास् आथाम् ध्वम्, इ वहि महि [ घी ]
दि ताम् अन्, सि तम् त, अम् व म—
तन् आताम् अन्त, थास् आथाम् ध्वम्, इ वहि महि [ टी ]

णप् अतुस् उस्, थप् अथुस् अ, णप् व म—

ए आते इरे, से आथे ध्वे, ए वहे महे [ ठी ]

ता तारौ तारस्, तासि तास्थस् तास्थ, तास्मि तास्वस् तास्मस्—

ता तारौ तारस्, तासे तासाथे ताध्वे, ताहे तास्वहे तास्महे [ डी ]

यात् यास्ताम् यासुस्, यास् यास्तम् यास्त, यासं यास्व यास्म—

सीष्ट सीयास्ताम् सीरन्, सीष्ठास् सीयास्थाम् सीध्वम्, सीय सीवहि सीमहि [ ढी ]

स्यति स्यतस् स्यन्ति, स्यसि स्यथस् स्यथ, स्यामि स्यावस् स्यामस्—

स्यते स्येते स्यन्ते, स्यसे स्येथे स्यध्वे, स्ये स्यावहे स्यामहे [ ती ]

स्यत् स्यताम् स्यन्, स्यस् स्यतम् स्यत, स्यम् स्याव स्याम—

स्यत स्येतां स्यन्त, स्यथास् सेथाम् स्यध्वम् स्ये स्यावहि स्यामहि [ थी ]।

धी: ५१, तिप्-स्यामहि ।१॥।

एतानि साशीतिशतसंख्यकानि धो: पराणि प्रयुज्यन्ते ।

**५२९। क्यो ख्यो ग्यो घ्यो ट्यो ठ्यो ड्यो ढ्यो त्यो थ्योऽष्टादशशः।**

क्यो—थ्यः १॥, अष्टादशशः।१॥।

**तान्यष्टादशाष्टादश क्रमादेतत्संज्ञानि स्युः।**

**५३०। पञ्च रः शिच्च।**

पञ्चः १॥, रः १।, शित्।१।, च।१।।

**ताः पञ्च रसंज्ञाः स्युः शिच्च।**

**५३१। नवशः पमे ञितोऽन्यङिद्भ्यां घे।**

नवशः।१॥, पमे १॥, ञितः ५।, अन्यङिद्भ्यां ५॥, घे ७।।

**तानि नव नव क्रमात् प-म-संज्ञानि स्युः, ते च ञितो धोः परे स्तः, तदन्यङिद्भ्यान्तु क्रमेण स्तो घे।**

---

तिपादिस्यामन्त्यन्तं लुप्तप्रथमैकम्। धोरिति पञ्चम्यन्तं तिबादीनां प्रत्यय त्वज्ञापनार्थम्। सह अशीत्या वर्त्तते यत्तत् साशीति साशीति च तत् शतञ्चेति साशीतिशतं, तत् संख्या येषां तानि साशीतिशतसंख्यानि वचनानि ॥५२८॥

अष्टादश अष्टादश अष्टादशशः इति वीप्सायां चशस्। तानि तिबादीनि अष्टादश अष्टादश भूत्वा क्रमात् क्यादिदशसंज्ञकानि भवन्ति ॥५२९॥

पञ्च प्रथमोपस्थितपरित्यागे प्रमाणाभावात् क्यादयः। य्या रसंज्ञाफलन्तु अभूदित्यादौ [५५४] वसोरस्येति नेम् अपिद्रत्वेन ङित्वात् [५३२] न गुणश्च [५४२]। सेलुंक् तथा सीरिति सेलुंकि अतत अतथा इत्यादौ वनतनाद्यनिमामिति ञमलोपश्चेत्यादि। ननु असल भावे इत्यादीनामभूदित्यादौ कथमादेश इति चेत् सत्यं भूररे इत्यादौ अरे इति विषयसप्तम्यन्तत्वेन व्यामरप्रत्ययस्य सेः सम्भावनायां भूरित्याद्यादेशः। शितश्च रसंज्ञया दीव्यति सुनोति तुदति क्रीणाति इत्यादौ न गुणः। भवन् दीव्यन्नित्यादिषु शतृप्रत्यये परे शप् श्नादिश्च ॥५३०॥

नव नव नवशः इति वीप्सायाञ्चशस् सन्निहितालाभे विप्रकृष्टो विधिरपेक्ष्यते इति न्यायात् नवश इति तिबादीन्येव। ञ इत् यस्य स ञित् तस्मात् अन्यश्च ङिच्च अन्यङितौ ताभ्यां ते पमे आनुमन्याङ्गातीघें वाच्ये स्तः तदन्यात् घे वाच्ये पं

## ५३२ । ङिदपिद्रः ।

ङित् ।१।, अपित् ।१।, र: १। ।

**अपिद्रो ङित् स्यात् ।**

## ५३३ । कित् ठीढीपम् ।

कित् ।१।, ठी ।१।, ढीपं १। ।

**अपित् ठी क्या: पञ्च कित्संज्ञं स्यात् ।**

## ५३४ । दा-धा दा ।

दा धा ।१।, दा ।१। ।

**अपिद्दा धा च दासंज्ञ: स्यात् ।**

## ५३५ । यलोऽचेक् जि: ।

यल: ६।, अचा ३।, इक् ।१।, जि: १। ।

**अचा युक्तस्य यलस्य स्थाने इक् क्रमात् जिसंज्ञ: स्यात् ।**

---

ङानुबन्धात् घे वाच्ये मं स्यादित्यर्थ:। ङानुबन्धात् ममिति विशेषाभिधानात् अन्य इह ञानुबन्धङानुबन्धाभ्याम् अन्यो बोध्य:। यथा डुकृञ् करोति कुरुते चेती चेतति एधङ एधते ॥५३१॥

ङ इत् यस्य स ङित् प इत् यस्य स पित् न पिदपिदिति भिन्नं पदं परत्वानुवृत्त्यर्थं यथा जुहुत: सुनुत इत्यादौ न गुण: ॥५३२॥

ठीति लुप्तप्रथमैकम् । क्या: पं ढीपम् । यथा सुषुपतु: जगृहे सुप्यात् एषु कित्वात् जि: ॥५३३॥

दा धा इत्युभयं स्वरूपं तेन दाललूनौ दातुदाने डुदाञलिच डुदा ञलिच इति चतुर्णां ग्रहणम् । एवं देङपालने दोषच्छेदे धेटपाने इति त्रयाणाम् एचोऽम्लित्वेति आकारे कृते दासंज्ञा इति शिति आकाराभावात् दासंज्ञा नास्तीति । फलन्तु मूस्थापिबेति सेर्लुकि अदात् अधात् । प्राग्वन्न इति प्रणिददाति प्रणिदधाति। दामागै इति देयात् धेयात् दीयते धीयते । मिमीमादेति दित्सति धित्सति । अपित् किं दैपशोधने इत्यस्य प्रणिदायति अदासीत् दायात् दिदासतीत्यादि । केचित्तु दाललूनौ इत्यत्र दापलवणे इति पठित्वा पित्त्वाद्दासंज्ञाभावे प्रणिदाति अदासीदित्युदाहरन्ति ॥५३४॥

## ५३६। सकृत् द्विस्तु वा।

सकृत् ।१।, द्वि: १।, तु ।१।, वा ।१।।

**जि: पुनर्न्न स्यात्, द्विस्तु वा स्यात्।**

## ५३७। प्रागच्कार्य्यादचि द्विः।

प्राक् १।, अच्कार्य्यात् ५।, अचि ७।, द्वि: १।।

**अचि परे अच्-कार्य्यात् प्राक् द्विः स्यात्।**

---

अचा युक्तानां यवरलानां स्थाने क्रमात् इ उ ऋ ऌ इत्यादेशा जिसंज्ञा: स्यु:। यथा ग्रहस्वपाद्योरिति ई जु: ऊ षु: जगृहु: लकारस्य जिन सम्भवति ॥५३५॥

यावत् सम्भवस्तावद्विधिरिति न्यायात् पुन: सामग्र्यामपि जि: पुनर्न्न स्यात् सकृते कृते कृत: शास्त्रार्थ: इति न्यायादित्यर्थ:। तेन व्यथषङ्व्यधौ व्यचश्चि व्येञ एषाम् उव्याथ उव्याध उवाच उव्याय इत्याद्यनिष्टं न स्यात् द्विस्तु वेति वाशब्दोऽत्र समुच्चयार्थ: द्विर्भावस्तु य: स च पुनर्न्न स्यादित्यर्थ:। यथा चिकित्सितुमिच्छति इति सनि चिकित्सिषति इत्यादौ स्वार्थसनन्तात् पुनरिच्छार्थे सनि कृते प्रति-निमित्त: नैमित्तिकमावर्त्तत इति न्यायात् प्राप्तं द्वित्वं न स्यात् एवं चेक्रीयिष्यते इत्यादावपि पुनर्न्न द्वि: एवं सति सकृत् द्विश्चेत्यनेनैवेष्टसिद्धौ द्विस्तु वेति कृतं शिष्याणां नानाप्रकारज्ञानार्थम् ॥ ५३६ ॥

पूर्व्वतो वानुवर्त्तते, स चेह व्यवस्थावाची; व्यवस्था चेयम् अचि परे अच्कार्य्यात् प्राक् द्वि: स्यात्। यथा निनाय जुहाव इत्यादौ आदौ द्वित्वं पश्चात् वृद्धिसन्धी। कदाचिदच्कार्य्यात् पश्चाच्च द्वि:, तेन ऋगतौ अरिरिषति इत्यत्र आदौ गुणे सन्धौ च पश्चात् द्वित्वम्। हसि परे तु क्ष्मा बुभूर्षति इत्यादौ घोऽञ्झनिङ्क्मामिति दीर्घे ऋदिरणावित्युरि पश्चात् द्वित्वम्। एवं दिव्यु जिगीषादौ सनि दुद्यूषति क्तौ दुद्यूवान् इत्यादौ आदावूट् पश्चात् द्वि:। यत्रैकदा अचि अच्कार्य्यद्वित्वयो: प्रसक्तिस्तत्रैवेयं परिभाषा। तेन दिव्यु यङ्लुकि देद्योति इत्यादौ आदौ यङ्लुकि निमित्तकं द्वित्वं ततस्तिबाद्युत्पत्तौ असन्निमित्तक ऊट् स्यात् ॥ ५३७ ॥

## ५३८ । ङिः पूर्वः खिः ।

ङिः ५।, पूर्वः १।, खिः १। ।

ङेर्धोः पूर्वो भागः खिसंज्ञः स्यात् ।

## ५३९ । स्वर्घौ घुरू ।

स्वर्घौ १॥, घु-रू १॥ ।

स्वो घुसंज्ञो र्घो रूसंज्ञः स्यात् ।

## ५४० । स्वः स्ये रुः ।

स्वः १।, स्ये ७।, रुः १। ।

स्ये परे स्वो रुसंज्ञः स्यात् ।

इति संज्ञापादः ।

---

धोरित्यधिकारप्राप्तमित्याह धोरिति । यथा बुभीज इत्यत्र खेरादचः परवर्णस्य लोपः भकारस्य बकारः । धोः किं स्मारं स्मारं नमतीत्यादौ पूर्वभागस्य खित्वा-भावात् खिकार्य्याभावः ॥५३८॥

ननु लघुसंज्ञया किं फलं स्वर्घाभ्यामेव तत्कार्य्यसिद्धेरिति चेन्न - खिः सन्वद्याविन्यत्र खेः सन्वत् खे इति कृते अतस्तन्त इत्यादौ सन्वत्कार्य्यापत्तिः । न च स्वःस्येर्वः इति संज्ञायां कृतायां संयोगपूर्वस्य ह्रस्वस्यापि दीर्घसंज्ञत्वान्नात्र सन्वद्भाव इति वाच्यम् तथोक्तौ यजुष्टमित्यादौ नीकौ र्घादित्यादिना षत्वानुपपत्तेः ततश्च संज्ञान्तरे कर्त्तव्ये स्वः स्येरुरित्येव कर्त्तव्यम् । लाघवाभावे प्रचीनमतस्यैव न्याय्यत्वात् एवं रुसंज्ञायां वक्तव्यायामेकयोगनिर्दिष्टाया घुसंज्ञाया अपि शिष्यज्ञानार्थं वक्तुमुचितत्वात् ॥५३९॥

स्येरुरित्यनेनैवेष्टसिद्धौ स्वग्रहणं ज्ञापयति कदाचिल्लाघवात् छन्दसि संयोगे परे ह्रस्वो गुरुर्न स्यादिति । अतएव प्रहे वा इति पाणिनिसूत्रम् । यथा गृहीत-प्रत्युद्गमनीयवस्त्रा इति कालिदासः । एवं त्वया पुण्येऽप्येयं मधुरमुदकं कालीयह्रदे इति हंसदूतम् । इति संज्ञापादः ॥५४०॥

---

## द्वितीयपादः-पवत् ।

(१) भू सत्तायाम् ।

भू-तिप् इति स्थिते ।

### ५४१ । घे शप् रे ।

घे ७।, शप् ।१।, रे ७।।

**रे परे धोः शप् स्यात् घे अर्थे ।**

---

शित्वात् तिष्ठतीत्यादौ स्थादानेत्यादिना तिष्ठाद्यादेशः । ढभावयोर्यकार-बाधित्वादवशिष्टे कर्त्तर्य्येव शप् स्यात् तेनात्र घे इति व्यर्थमिति गरीयसी अनुपपत्तिः अत्र रामानन्दकाशीश्वरौ न किमप्याहतुः । रामतर्कवागीशस्तु शाब्दी-ह्याकाङ्क्षा शब्देरेव प्रपूर्य्यत इति न्यायात् शाब्दबोधं प्रति प्रतिशब्दजन्यशब्दार्थज्ञानस्य हेतुत्वात् इत्युक्तमित्याह । तन्मते क्लीवात् स्वमोऽधेरिति विशेषविधौ सत्यपि स्यमोर्लुगिति सामान्ये विधौ अनत इति वक्तुमुचितं स्यात् । विद्यानिवासस्तु अधिकं घग्रहणं ज्ञापयति कस्यचिद्विधेर्यक् न बाधक इति तेन ञ्यां सिरेव । अन्यथा कर्म्मणि ञ्यां यक्स्यादित्यन्तमाह तच्चिन्त्यम् । अत्रार्थगतविशेषतो निमित्तगतविशे-षस्य बलवत्त्वात् ञ्यां सिरित्यनेन शप्यकौ बाध्येते अन्यथा ञ्यां कर्त्तरि शबापत्तौ कर्म्मणि च यगापत्तौ ञ्यां सिरिति सूत्रमेव व्यर्थं स्यात् वस्तुतस्तु अधिकं घग्रहणं ज्ञापयति क्वचित् शपादेर्बाधकस्य यकोऽप्राप्तौ आंशिककर्त्तृत्वात् शपादयः स्युरिति । तेन कर्म्मकर्त्तरि ढवत् ढघ इत्यनेन कर्म्मविहितयगाद्यतिदेशेन शबादेर्बाधे चिकि-र्षते सन ग्रन्थग्रन्थ इत्यादिना पुनर्यगादिनिषेधे आंशिककर्त्तृत्वाच्छबादयः स्युरिति न च शब्दादेर्बाधकस्य यगादेर्निषेधे सुतरां शबादिना भाव्यमिति वाच्यम् । सकृद्गतौ विप्रतिषेधौ यद्बाधितं तद्बाधितमेव इति न्यायात् यको निषेधे पुनः शपप्रसङ्गाभावात् । अतएव अगूढ़ इत्यत्र यकोऽप्राप्तिपक्षे सेर्निषेधे शबपि न स्यात् ॥५४१॥

## ५४२। णुर्घूङश्चाकङिति।

णुः १।, घूङः ६।, च ।१।, अ-कङिति ७।।

अन्त्यस्य घुसंज्ञोङश्च णुः स्यान्न तु किति ङिति।

भवति भवतः।

## ५४३। लोपोऽतोऽदेचोः।

लोपः १।, अतः ६।, अत्-एचोः ७॥।

अकारस्य लोपः स्यादकारे एचि च परे।

भवन्ति भवसि भवथः भवथ। (१०८) आत्मिमभवि।

भवामि भवावः भवामः।

## ५४४। भुवः प्राप्तौ वा मम्।

भुवः ५।, प्राप्तौ ७।, वा ।१।, मम् १।।

प्राप्तौ भुवो मं स्याद्वा घे। भवते।

---

घुश्चासौ उङ्चेति घूङ् तस्य। यथा सेधति बोधति वर्त्तते कल्पते। चकारादन्त्यस्य इङः। यथा जयति नयति द्रवति भवति गरति तरति। कच ङच कङौ कङावितौ यस्य स कङित् तस्मिन्। यादृग्जातीयस्य प्रतिषेधो विधिरपि तादृग् जातीयस्येति न्यायात् कित्ङिद्भ्यां प्रत्ययाभ्यामन्यस्मिन् प्रत्यये परे इत्यर्थः। एवं निमित्ताव्यवहितपूर्ववर्त्तिधातूनां धातूत्तरजातयोः अणुपोश्च गुणः स्यादिति बोध्यम्। यथा सुनोति तनोति काम्यकः कित्वकरणं ज्ञापयति कदाचित् लेरपि गुणः स्यादिति तेन विश्वं पृच्छतीति णौ वेशयति मुदमाचष्टे मोदयति ऋचमाचष्टे अर्चयति॥ ५४२॥

तत्र अदेचोरिति प्रकरणबलात् धोः परत्र जातयोरेव ग्रहणम्। यथा भवन्ति भवे भवन् बुभूर्षतीत्यादि अन्यत्र मुरारिः कृष्णैकत्वमित्यादौ न प्रसङ्गः एवं एतो ग्रहणेनैवेष्टसिद्धौ एचो ग्रहणं ज्ञापयति प्रत्याहारस्य अनेकवर्णानां कार्य्यासम्भवेऽपि न दोष इति। तेन वसोऽरस्येत्यत्र व स त थ ध य इति षड्भिन्नवर्णानां कार्य्यासम्भवेऽपि संक्षेपार्थं वस इत्येव वक्ष्यति। भवन्ते एधन्ते इत्यादावनेन अकारलोपेऽपि तस्य स्थानिवत्त्वात् मान्तोऽदनत इति न स्यात्॥ ५४३॥

## ५४५ । याथातोऽतः ।

ई ।१।, आ ।१।, आथ-आत: ६।, अत: ५। ।

अकारात् परयोराथातोराकार: ई: स्यात् ।

भवेते भवन्ते, भवसे भवेथे भवध्वे,

भवे भवावहे भवामहे ।

## ५४६ । ख्या या-युस्-यामामीयुसीयम् ।

ख्या: ६।, या-युस्-यामाम् ६।।।, ई-ईयुस्-ईयम् ।१।।। ।

अकारात् परेषां ख्या: या युस् याम् एषां स्थाने——ई ईयुस् ईयम् एते क्रमात् स्यु: ।

भवेत् भवेतां भवेयु:, भवे: भवेतं भवेत, भवेयं भवेव भवेम । भवेत भवेयातां भवेरन्, भवेथा: भवेयाथां भवेध्वं, भवेय भवेवहि भवेमहि । भवतु भवतां भवन्तु ।

## ५४७ । हेर्लोपोऽस्योप्नोश्च ।

हे: ६।, लोप: १।, अस्योप्नो: ५।, च ।१। ।

अकारादस्याभ्यामुप्नुभ्याञ्च हेर्लोप: स्यात् । भव भवतं भवत, भवानि ।

---

मण्डूकप्लुताधिकारात् घे इत्यस्यानुवृत्तौ भुव: प्राप्तावर्थे घे मं स्याद्वा । यथा भवति भवते धनं धीर: । प्राप्तावात्मनेपदमेवेति केचित् ॥ ५४४ ॥

ई इति आ इति च लुप्तप्रथमैकम् । आथच आतचेति तस्य । आथातो: केवलयोरसम्भवात् तदाद्योर्विभक्त्योर्ग्रहणेन आते आथे आतां आथामित्येतेषां ग्रहणम् ॥ ५४५ ॥

ख्याग्रहणं न्यवतञ्चान्ताविव्यदन्तभौवादिकात् ख्या अप्राप्तार्थमिति केचित् । वस्तुतस्तु अकारो विष्णु: अ इवाचरति इति क्वौ ख्या अप्राप्तार्थमिति ॥ ५४६ ॥

स्य: संयोग: नास्ति स्यो यत्र सोऽस्य उप्च नुश्चेति उप्नु, अस्यश्चासावुप्नुश्चेति अस्योप्नुस्तस्मात् । चकारादकाराच्च । यथा भव तुद तनु छिनु । अस्योप्नो: किं दृणदुजभचे तर्णुहि आप्नुहि ॥ ५४७ ॥

**५४८। व्यस्य ग्यनुकारडाच्वि कणेऽलं सन्मनोऽदोऽन्तःपुरोऽस्तन्तिरःकारिकोर्य्यादिर्धौ सः।**

व्यस्य ६।, गि—उर्य्यादेः ६।, धौ ७।, सः १।।

एषां व्यानां धौ परदे सः स्यात्।

**५४९। प्राग्वन्नो णोऽन्तरदुर्गे णादि हन मीना हिन्वानिप् शान्तनशो-गद नद पत पद दा मा सो हन वा या द्रा प्सा वप वह शम चि दिहान्तने-र्वा त्वन निंस निन्द निच्त मवान्त-हनोऽकखाद्यषान्ताान्त-नेः।**

प्राग्वत् ।१।, नः ६।, णः १।, अन्तर्-अदुर्गेः ५।, णादि नशः ६।, गद—नेः ६।, वा ।१।, तु ।१।, अन—हनः ६।, अक—नेः ६।।

णादेर्धोर्हन्तेर्मीनातेर्हिनोतेरानिपः शान्त-नशो गदाद्यन्त-नेश्च नस्य अन्तरो दुर्वर्जगेश्च परस्य णविधिहेतौ सति णः स्यात्। अनादेर्मवान्त-हन्तेः कादिखादि-षान्तवर्जध्वन्त नेश्च वा स्यात्। अन्तर्भवाणि प्रभवाणि। दुरस्तु दुर्भवानि। भवाव भवाम। भवतां भवेतां भवन्तां, भवस्व भवेथां भवध्वं, भवै भवावहै भवामहै।

---

अनुकारोऽव्यक्तानुकरणशब्दः। गिश्च अनुकारश्च डाच्च च्विश्च कणेश्च अलम् च सच्च मनस् च अदस् च अन्तर् च पुरस् च अस्तम् च तिरस् च कारिका च उर्य्यादिश्चेति तस्य। यथा प्रणम्य खटत्कृत्य अङ्गुल्यग्रनखेन वास्पसलिलं विचिप्य विचिप्य किं तूष्णीं रोदिषि कोपने बहुतरं फुत्कृत्य रोदिष्यसि। इत्यमरुः। पटपटाकृत्य एवं द्वितीयाकृत्य समयाकृत्य सपत्राकृत्य कृष्णीभूयः कणेमनःशब्दौ तृप्त्यर्थौ; कणेहत्य पयः पिबति मनोहत्य पयः पिबति तावत् पिबति यावत् तृप्तिः इत्यर्थः। अलं भूषणे अलङ्कृत्य। आदरे सत् सत्कृत्य असतोऽपि असत्कृत्य

नञ् पूर्वत्वेऽप्यभिन्नत्वात्। अदः स्वबुद्ध्यापरामर्षे। अदःकृत्य चिन्तयति। अग्रहणेऽन्तः अन्तःकृत्य। ग्रहणे तु अन्तर्हत्वागतः। पुरोऽग्रार्थे पुरस्कृत्य। अस्तमित्युपलब्धौ अस्तङ्कृत्य। तिरोऽन्तर्द्धौ तिरोभूय:। कारिकामर्य्यादायत्नपीडासु। कारिकाकृत्य। उरी उररी एते विस्ताराङ्गीकारयोः उरीकृत्य उररीकृत्य अङ्गीकृत्य इत्यादयः। एषु समासात् पूर्वनिपातः क्वाचो यप्च। अत्र समासः एकपदीभावमात्रं द्वन्द्वादिसंज्ञास्तु स्याद्यन्तानामेव एवं णत्वविधेः पूर्वं समासकरणात् समासाभावे णत्वं न स्यादिति बोध्यम् ॥५४८॥

नास्ति दुर्यत्र सोऽदुः अदुश्चासौ गिश्चेति अदुर्गिः अन्तर् च अदुर्गिश्चेति तस्मात्। मूर्द्धन्यणादिश्च हन्च मीनाश्च हिनुश्च आनिप् च तालव्य शान्तनश्च चेति तस्य। गदश्च नदश्च पतश्च पदश्च दाश्च माश्च सोश्च हन्च वाश्च याश्च द्राश्च प्साच वपश्च वहश्च शमश्च दिश्च दिह च ते तेऽन्ते यस्य स गदादिदिहान्तः स चासौ निश्चेति गदादिदिहान्तनिः तस्य। मवौ अन्ते यस्य स मवान्तः स चासौ हन्चेति मवान्तहन अनच निंस च निन्द च निच च मवान्तहन चेति तस्य। कखावाद्यौ येषां ते कखाद्याः। मूर्द्धन्यषोऽन्ते येषां ते षान्ताः। कखाद्याश्च षान्ताश्च कखाद्यषान्ताः न कखाद्यषान्ताः अकखाद्यषान्ताः तेऽन्ते यस्य स अकखाद्यषान्तान्तः स चासौ निश्चेति अकखाद्यषान्तान्तनिः तस्य। यथा प्रणयति नादेर्धोरित्युक्तेः प्रकृष्टो नयः प्रनय इत्यादौ लिङ्गत्वान्न स्यात्। प्रहणिष्यति। मीना इति मी ञ ग बधे श्नायुक्तस्य ग्रहणं प्रमीणाति। हिनु इति हिनवर्द्धने श्नु युक्तस्य ग्रहणं प्रहिणोति आनिविति विभक्तेः प्रभवाणि। प्रणश्यति। शान्तः किं प्रनष्टः। प्रणिगदति प्रणिनदति प्रणिपतति। पदौङगतौ प्रणिपद्यते। दा इति दासंज्ञा तेन प्रणियच्छति प्रणिददाति प्रणिदधाति देङ्पालने दोयच्छेदे धेट पाने इति त्रयाणां एचोऽशित्येति आकारे प्रणिदास्यते प्रणिदास्यति प्रणिधास्यति इत्यादौ णत्वं स्यात् शिति परे तु आकाराभावात् दासंज्ञाभावे प्रनिदयते प्रनिद्यति प्रनिधयति इत्यादौ न स्यादेव। एवं षो दोङ य चये दोङश्छामित्यादिना ङादेशे प्रनिदास्यते अत्र णत्वं न स्यात्। मा इति स्वरूपग्रहणात् माङलिशब्दे प्रणिमिमीते कालचमाने प्रणिमाति माङ्थच प्रणिमायते एवं डुमो ञूचेपे मोङ्यतु मोङगबधे इत्येतेषां मिप्योर्यत्वौ इति ङादेशे मात्वरूपलाभात् प्रणमात्व एवं मेङ प्रीतिदाने इत्यस्य अशिति आकारे प्रणिमास्यते इत्यादौ णत्वं स्यादेव। षोयनाशे प्रणिष्यति प्रणिघ्नन्ति प्रणिवाति प्रणियाति प्रणिद्राति प्रणिप्साति प्रणिवपति

## ५५० । घोटीथोष्वम् धोरमा ।

घो टी-घोषु ७।।।, अम् ।१।, धो: ६।, अमा ३। ।

**आसु परासु धोरम् स्यात् न तु मायोगे ।**

**अभवत् अभवताम् अभवन्, अभवः अभवतम् अभवत, अभवम् अभवाव अभवाम । अभवत अभवेताम् अभवन्त, अभवथाः अभवेथाम् अभवध्वं, अभवे अभवावहि अभवामहि ।**

## ५५१ । ष्यां सिः ।

ष्यां ७।, सि: १। ।

**धो: सि: स्यात् ष्याम् ।**

---

प्रणिवहति प्रणिशाम्यति प्रणिचिनोति प्रणिदेग्धि । प्राणिति प्रानिति प्रणिंस्ते प्रनिंस्ते प्रणिन्दति प्रनिन्दति प्रणिचति प्रनिचति । वाशब्दस्य व्यवस्थावाचित्वात् अनितेः क्विपि दान्तस्यापि नस्य णत्वं वा तेन हे प्राण् हे प्रान् हे पराण् हे परान् खेर्मूलस्यापि णत्वे प्राणिणत् प्राणिणिषति आदौ णत्वे पश्चात् द्वित्वमिति चेत् तर्हि प्राणिनाय प्रणिनीषति इत्यादावपि णत्वद्वयापत्तिः । निंशनिन्दनिचां विशेषविधानेनैवेष्टसिद्धौ णोपदेशपाठसाफल्यार्थं त्यादौ नित्यं क्ते विकल्प इति श्रीपतिदत्तः । प्रणिंस्ते प्रणिंसकः प्रनिंसकः इत्यादि । प्रहण्मः प्रहन्मः प्रहण्वः प्रहन्वः प्रणिपचति प्रनिपचति । वादिखादिषान्तानान्तु प्रनिकरोति प्रनिखादति प्रनिचखाद उपदेशे खादित्वात् । प्रणिपिषति प्रणिपष्टा इति उपदेशेऽषान्तत्वात् स्यादेव ॥५४९॥

णादिहनमीनादीनामनुवृत्तिः स्यादित्याशङ्काह धोरिति । अमेति लुप्ततृतीयैकम् । मा इत्यनेन माम्शब्दस्यापि ग्रहणम् । अधिकान्तु प्रविष्टं न तु तद्धानिरिति न्यायात् योगोऽप्यर्थेन योगः नत्वव्यवहितपूर्वापरैकतरवर्त्तित्वम् । तेन मा पापं कार्षीः कार्षीः पापं मा इत्यादि । माम्म भवद्दुःखं समये तिष्ठ सुग्रीव मा वालिपथमन्वगा इत्यत्र अनु इति सम्बोधनार्थमव्ययम् । केचित्तु माङ् इति ङानुबन्धः शब्दोऽप्यस्ति तेन योगे अमागमः स्यादेव । तेन मा निषाद प्रतिष्ठान्त्वमगमः शाश्वतीः समा इत्यादि सिद्धमित्याहुः ॥५५०॥

अर्थगताविशेषान्निमित्तगतविशेषस्य बलवत्वादयं शपृश्नादीनां यकोऽपि

## ५५२। भू स्था पिवदेनो लुक् पे।

भू-स्था पिव-दा-इन: ५।, लुक् ।१।, पे ७।।

एभ्य: सेर्लुक् स्यात् पे। अभूत् अभूताम्।

## ५५३। भुवो वन् टीव्यचि।

भुव: ६।, वन् ।१।, टीव्यचि ७।।

भुवो वन् स्यात् टीव्योरचि परे। अभूवन्। अभू: अभूतम् अभूत, अभूवम् अभूव अभूम।

## ५५४। वसोऽरस्येमनौदित:।

वस: ६।, अरस्य ६।, इम् ।१।, अनौदित: ५।।

अनौदितो धो: परस्य अरमा वसस्य इम् स्यात्।

अभविष्ट अभविषाताम्।

---

बाधक:। तेन कर्त्तरि अभविष्ट असविष्ट। कर्म्मणि अभाविषाताम् असाविषाताम् ॥५५१॥

भूश्च स्थाश्च पिवश्च दाश्च इन् चेति तस्मात् पिव इति निर्द्देशात् पाल रक्षणे पैशोषे इत्येतयो: अपासीत्। दाइति दा संज्ञा तेन दैपशोधने इत्यस्य अदासीत्। अभूदिति व्या रत्वादसीरस्येति नेम्। ङित्वान्न गुण:। लुक्करणात् त्यलोपे त्यलक्षणमिति न्यायात् प्राप्तव्यकार्य्यस्य लुकि न तवेति निषेधात् व्रनवदित्यनेन वृद्धिर्न स्यात् ॥५५२॥

टीव्योरच् टीव्यच तस्मिन्। भुव इति पञ्चम्यन्ताद्द इति कृते भुवो गुणापत्तिरिति षष्ठ्यन्तात् वन् विधानं इदानीन्तु स्वावयवत्वेन वनो निमित्तत्वाभावान्न गुण: वकारे अकार उच्चारणार्थ: ॥ ५५३ ॥

न रोऽरस्तस्य। नास्ति औत् इत् यस्य सोऽनौदित् तस्मात्। वस इति पूर्ववकारादि: प्रत्याहार:। इमो वसस्थानजातत्वेन तत्तुल्यत्वात् विवरिथ इत्यादौ गुण: दुदुविव इत्यादौ न गुण:। औदितस्तु। पचतिर्मुञ्चतिविचिविचिसिचयो णिजिवक्तिभजिप्रच्छिमज्जतय:। भुजिरञ्जिरुजित्यजिभ्रज्यतयो यजतिर्युजिभन्जिसृजिक्षिदय: ॥ यन्जिष्वन्जिच्चुदिपद्यतयश्छिदिरत्तिखिदिक्रुधियुध्यतय:। नुदतिस्तु

## ५५५। मान्तोऽदनतः।

मान्तः ६।, अत् ।१।, अनतः ५।।

**मस्यान्त् इत्यस्य अत् स्यात् नत्वकारात् परस्य।**

**अभविषत, अभविष्ठाः अभविषाथाम्।**

## ५५६। धे स-लोपो वा।

धे ७।, स-लोपः १।, वा ।१।।

**धे परे सस्य लोपो वा स्यात्।**

## ५५७। टीठीढीधो ढिचः सेमस्तु हलो वा।

टी-ठी ढी धः ६।, ढ ।१।, इचः ५।, सेमः ५।, तु ।१।, हलः ५।, वा ।१।।

**इचः परस्यासां धस्य ढः स्यात्, सेम्हलात् परस्य तु वा स्यात्।**

**अभविढ्वं अभविध्वं [ ६४ ] झप्झसोरिति सस्य दः।**

**अभविड्वं अभविषि अभविष्वहि अभविष्महि।**

---

दतिचुदिमन्यतरो भिदि विद्यतिविन्दतिसीदतयः॥ सविनत्तिरुधिचिपिसिध्यतयो रभिश्रीयतिराध्यतिसाध्यतयः। तुदिबन्धिबधिस्वपितप्यतयश्छपिहन्तियतिश्लिषिपुष्यतयः। लिपिलुम्पतिविध्यतिचुध्यतयो नमिदंशियमिसृश्मिनद्यतयः। वपतिर्विजलिज्ज-दिश्मिपश्यतयो लभिगच्छतिवेशतिरोशतयः। रमुङ्क्रुशजौनिशतित्विषयो द्विषि-तुष्यतिदुष्यतिशुष्यतयः॥ विषलिर्विषगौपिसंधीशिषयो घषतिवर्षतिदुंहिलिहयः॥ आपिर्मृशिविश्चिक्रशिदहिरुहयो लेढ़िर्वहिनह्शपतिशपयः। तपतिः स्कन्दतिरौदित् गदितः श्रीमद्द्वीपदेवमतविदितः॥ ५५४॥

मस्यात्मनेपदस्य अन्त् मान्त् तस्य। अन्तावयवमचं हित्वा पूर्वभागस्य ग्रहणं तेन कुर्वते कुर्वताम् अकुर्वत इत्यादावपि। अनतः किं एधन्ते लोपोऽतो इत्यनेन कृतस्याकारलोपस्य स्थानिवत्त्वाङ्गीकारात्॥ ५५५॥

धे परे सस्य लोपः स्याद्वा। ङिलासङ् धे शपो लुकि आध्वे सस्य दकारे आद्वे॥ ५५६॥

टीठीढीनां ध टीठीढीध तस्य सह इमा वर्त्ततेऽसौ सेम् तस्मात्। यथा अक्राढ्वं आनढ्वं अस्तोढ्वं अध्यैढ्वं उङ्शब्दे ओढ्वं तुष्टुढ्वे चक्राढ्वे कृषीढ्वं नेषीढ्वं

५५८। धुर्द्विष्ठाङि।

धुः १।, द्विः १।, व्यङि ७।।

व्यामङि च धुर्द्विः स्यात्।

५५९। झभखथहघंकॄणां जब्चप् जखचुाः खेः।

झभ्-कु-ऋृणां ६।॥, जब्-चु-आः १।॥, खेः ६।।

खेर्झभ खथ हकार घं कवर्ग ऋवर्णानां क्रमात् जब् चप् जकार ख चवर्गाकाराः स्युः।

---

स्तोषीढ्वं अभविढ्वमिति सलोपपक्षे धस्य ढः पक्षे अभविध्वं सलोपाभावपक्षे झप्झसोरित्यनेन सस्य दः अभविद्ध्वम् ॥ ५५७ ॥

टौ च अङ् च व्यङ् तस्मिन्। प्रकरणादेव धोः प्राप्तौ पुनरुपादानं ज्ञापयति द्व्या अव्यवहितपूर्वधातोरेव द्वित्वं स्यात्। तेन इन्दामास इत्यादौ इन्दादेर्न द्वित्वम्। एवं वीप्सायां पदं द्विः। यथा गृहे गृहे गीतं स्मारं स्मारं मनसि। गुणसादृश्य पीड़ानुपूर्व्येषु समासवच्च। एष्वर्थेषु द्विरुक्तं समासवच्च स्यात्। गुणे सुखसुखेन प्रियप्रियेण। सादृश्ये गुणवाचकस्यैव पटु पट्वी मृदु मृद्वी पूर्वस्य पुंवद्भावः मन्दमन्दमुदितः प्रययौ खं भीतभीत इव शीतमयूखः। कदाचित् समासो न स्यात् च। यथा मन्दं मन्दं नुदति पवनः। पीड़ायां गतगता नष्ट-नष्टाः। आनुपूर्व्ये ज्येष्ठज्येष्ठं प्रवेशय एकैकमक्षरं जपति। त्वरायां यावत् बोधम्। गच्छ गच्छ गच्छ अहिरहिरहिः। सामीप्येऽध्युपर्य्यधसाम्। अध्यधि ग्रामम् उपर्य्युपरि ग्रामम् अधोऽधो ग्रामम्। सामीप्ये किं सर्वस्योपरि चन्द्रमाः। वाक्यञ्च यावदिच्छयाधिक्ये। अहो दर्शनीया अहो दर्शनीया अत्र दर्शनीयत्वस्याधिक्यं मह्यं मह्यं रोचते अत्र रुचेराधिक्यम्। नमस्तस्यै नमस्तस्यै नमो नम इत्यादौ भक्तेराधिक्यमिति ॥ ५५८ ॥

झभ् च खथ् च हश्च घंश्च कुश्च ऋश्च ते तेषाम्। जब् च जप् च जश्च खश्च चुश्च अश्च ते। यथा जझाष डुढौके दधार जघास बभौ। चखाद पुष्फोर चिच्छेद टिष्ठेव तुथोद जहौ पपौ चुकोप जगाद। पपार ततार ऋकारेण वर्णस्य लृकारस्य ग्रहणात् चकल्पे ॥ ५५९ ॥

## ५६०। भुवोऽङ् ठ्यां ढ-भावे तु वा।

भुव: ६।, अङ् ।१। ठ्यां ७, ढ भावे ७, तु ।१।, वा ।१।।

भुव: खेरङ् स्यात् ठ्यां ढ-भावयोस्तु वा।

बभूव बभूवतु: बभूवु:, बभूविथ बभूवथु: बभूव, बभूव बभूविव बभूविम। बभूवे बभूवाते बभूविरे, बभूविषे बभूवाथे बभूविढ्वे बभूविध्वे बभूवे बभूविवहे बभूविमहे। ढे भावे च। बभूवे बुभूवे इति प्रयोगौ।

भविता भवितारौ भवितार:, भवितासि भवितास्थ: भवितास्थ, भवितास्मि भवितास्व: भवितास्म:। भविता भवितारौ भवितार:, भवितासे भवितासाथे भविताध्वे, भविताहे भवितास्वहे भवितास्महे।

भूयात् भूयास्तां भूयासु:, भूया: भूयास्तं भूयास्त, भूयासं भूयास्व भूयास्म। भविषीष्ट भविषीयास्तां भविषीरन्, भविषीष्ठा: भविषीयास्थां भविषीढ्वं भविषीध्वं, भविषीय भविषीवहि भविषीमहि।

भविष्यति भविष्यत: भविष्यन्ति, भविष्यसि भविष्यथ: भविष्यथ, भविष्यामि भविष्याव: भविष्याम:। भविष्यते भविष्येते भविष्यन्ते, भविष्यसे भविष्येथे भविष्यध्वे, भविष्ये भविष्यावहे भविष्यामहे।

अभविष्यत् अभविष्यताम् अभविष्यन्, अभविष्य: अभविष्यतम् अभविष्यत, अभविष्यम् अभविष्याव अभविष्याम। अभविष्यत अभविष्येताम् अभविष्यन्त, अभविष्यथा: अभविष्येथाम् अभविष्यध्वम्, अभविष्ये अभविष्यावहि अभविष्यामहि।

भवतकि भवतक:। प्रणिभवति प्रनिभवति। एवं चेतति इत्यादय:।

---

ङित्वादन्त्यस्य स्थाने। ढश्च भावश्च ढभावं तस्मिन्। ढभावयोरपि नित्य-

[ २ ] चिती संज्ञाने । *

## ५६१ । रुदाद्यस्तिसेर्दिस्योरीम् ।

रुदादि अस्ति-सेः ५।, दि स्योः ६॥, ईम् ।१। ।

**एभ्यो दिस्योरीम् स्यात् ।**

---

मिति केचित् । भूयादित्यादिषु कित्त्वान्न गुणः । भविषीढ्वमिति धकारस्य ढकारविधानसामर्थ्यात् व्यवधानेऽपि ढकारः । भविष्यतीत्यादीनि सुगमानि भवतकीत्यादौ त्यादिर्य्यत्यादिनाऽक् । प्रणिभवतीत्यादि अकखाद्यषान्तान्तेनेव णत्वम् । एवं चेततीत्यादयः इति । येषु विशेषकार्य्यं नास्ति ते प्रयोगा एवेत्यर्थं विशेषकार्य्यार्थं सूत्राण्याह ॥५६०॥

रुदादिश्च "रोदिति: स्वपितिश्चैव श्वसितिः प्राणितिस्तथा । जक्षति श्चैव विज्ञेयो रुदादिः पञ्चको गणः" इति । अस्तिरिति असल्भावे स्वरूपकथने तिप

---

* प्रसङ्गात् बालबोधार्थं गणपाठोक्ता अनुबन्धास्तत्प्रयोजनानि अकारादि-क्रमेण चोच्यन्ते । (४)

अ—मुखोच्चारणार्थः ।

आ—निष्ठाभावादिकर्म्म वेट् । ( १०७७ भावे क्रियारम्भे च वाच्ये क्त—क्तवतु स्थाने वा इट् )

इ—नुण्वान् । [५६८]

इर्—वा अङ्वान् । ( ५६५, ङ इति स्मर्त्ते )

ई—अनिड् निष्ठः । ( १०७१, क्त-क्तवतु-स्थाने न इट् )

उ—क्त्वा वेट् । ( ११७२ )

ऊ—वेट् । ( ५७३ ) वेम् ।

ऋ—चङि अह्रस्वः । ( ६३८ )

ॠ—चङि वा ह्रस्वः । ( ३३९ )

ऌ—अङ्वान् ( ५६५ ) ङ ।

ए—सिचि अवृद्धिः । ( ५७६ )

ऐ—यजादिः ( ६५१ )

ओ—निष्ठात न ( १०५२ ) क्त-क्तवत्त्वो तस्थाने न )

औ—अनिट् । ( ५५४ ) अनिम्

क—चुरादिः । ( ७७३)

कि—वा चुरादिः ( ७७३ )

ग—क्र्यादिः । ( ७३८ )

गि—प्वादिः । (७६९) पूधातुभिन्नश्चेत् स्वादिश्च (१०५२)

घ—रुदादिः ( ५६१,५९५ )

ङ—तङ्वान् । ( ५३१, कर्त्तरि वाच्ये आत्मनेपदी )

ञ—ज्वलादिः । [१०००]

ञ—उभयपदी । ( ५३१ )

## ५६२। झस् स्वात् झसीम ईमि सेर्लोपः।

झस स्वात् ५।, झसि ७।, इमः ५।, ईमि ७।, सेः ६।, लोपः १।।

**झसात् स्वाच्च परस्य झसि, इमः परस्य ईमि, सेर्लोपः स्यात्। अचेतीत् अचेतिष्टाम्।**

---

वक्तव्यः। रुदादिश्च अस्तिश्च सिश्चेति रुदाद्यस्तिसिः तस्मात्। दिश्च सिश्च दिसौ तयोः। रुदाद्यस्तिभ्यां ध्यादिसोरेव रुदादेश्यां सिव्यवधानेन अस्तेर्भू आदेशे न च ध्या दिसोरसम्भवात्। एवं सिरिति ध्यां सिः तस्मात् परयोर्ध्या दिसोरेव ध्या असम्भवात् एवञ्च दिसाहचर्य्यात् सिस्तु विभक्तेरेव। अन्यथा रुदादेः परस्य ध्यां क्तस्य सेरपि इम् प्रसज्जेत्। यथा अरोदीत् अरोदीः आसीत् आसीः। सेस्तु अनैषीत् अनैषीः॥ ५६१॥

झस् च स्वश्चेति झसस्वं तस्मात् यथा असैद्धां अक्षत अव्राजीत्। ईमः परस्य ईम्येवेति नियमात् अचेतिष्टामित्यादौ क्रसात् परस्यापि सेर्न लोपः। अचेष्ट अर्त्तोष्ट इत्यादौ लोपस्वरादेशयोस्तु स्वरादेशो विधिर्बलवानिति न्यायात् आदौ गुणे सेर्लोपो न स्यात्॥ ५६२॥

---

ञि—अद्य क्तः। (१०९५ वर्त्तमाने क्तः)
टु—साधुः। ( ११४२ )
डु—विमक्-युतः। ( ११४३ )
ण—फणादिः। ( ५७९ )
त—अदन्तः। अत्-अन्तः। ( ७७५ )
द—तनादिः। ( ६८८ )
ध—रुधादिः। ( ७३८ )
न—स्वादिः। ( ७३८ )
प—मुचादिः। ( ७४१ )
भ—शमादिः। ( ७४० )
म—घटादिः। ( ७९८ )
मि—णिचि इण्-णमोः वा क्रसः। (७९९)
य—दिवादिः। ( ७३८ )
र—वैदिकः। ( वेदोक्तधातुः )।
ल—अदादिः। ( ६७० )
लि—ह्लादिः। ( ७२६ )
लु—स्वपादिः। ( ६६१ )
व—वृतादिः। ( ६४८ )
श—तुदादिः। ( ७३८ )
शि—कुटादिः। ( ७५५ )
ष—क्तदङ् वान्। ( ११५६, क्तदन्ते ङ )
च—जचादिः। १७३ )

## ५६३। अनुस् सिद्देरभुवः।

अन् ।१।, उस् ।१।, सि-द्देः ५।, अभुवः ५।।

सेर्द्देश्च परस्य अन उस् स्यात् न तु भुवः। अचैतिषुः अचेतोः।

## ५६४। खेराद्यचो लोप्योऽनुशस्खपाद्यन्ता-न्यस्याद्यन्तौ।

खेः ६।, आद्यचः ५।, लोप्यः १।, अनु ।१।, शस्-अन्तौ १॥।

खेराद्यचः परो भागो लोप्यः स्यात्, पश्चात् शसादि-खपान्तो यदि स्योऽवशिष्टस्तस्यादिर्लोप्यः, यदन्यादृशस्तस्यान्तो लोप्यः। चिचेत चिचिततुः चिचितुः।

---

सिश्च द्दिश्च सिद्दि: तस्मात्। सेः परस्य स्या अन् उस् द्देस्तु स्या एव। यथा अचेतिषुः अस्थुः अपुः अदुः अगुः एषु भूस्थापिवेति सेर्लुकि त्यलोपे त्यलक्षणमिति आद्यात् सेः परत्वादन् उस्। द्देस्तु अजक्षुः। अभुवः किम् अभूवन् यङ्लुकि अबोभुवन् ॥ ५६३ ॥

आदिश्चासावच् चेति आद्यच् तस्मात्। आदिरत्र अचां मध्य एव न तु सर्ववर्णानामिति बोध्यम् अन्यथा ददरिद्र इत्यादौ हसादेः परभागलोपानुपपत्तेः। शस् च खप् च शस्खपौ। आदिश्च अन्तश्च आद्यन्तौ शस्खपौ आद्यन्तौ यस्य स शस्खपाद्यन्तः शस्खपाद्यन्तश्च अन्यश्च शस्खपाद्यन्तान्यौ शस्खपाद्यन्तान्यौ च तौ स्यौ चेति शस्खपाद्यन्तान्यस्यौ तयोराद्यन्तौ शस्खपाद्यन्तान्यस्याद्यन्तौ। अनुरिह परभागार्थस्य इत्यत आह आद्यचः परो भाग इति। पश्चादिति आद्यचः परभागाभावे इत्यर्थः। तेन यस्य आद्यचः परभागो वर्त्तते तस्य तल्लोपानन्तरं यस्य तु परभागो न वर्त्तते तस्य प्रथमत एव शस्खपाद्यन्तसंयोगस्य आदिर्लोप्यः अन्यसंयोगस्य अन्तो लोप्यः स्यादिति निष्कर्षः। यथा चखाद पुस्फोर टिष्ठेव तस्थौ चुश्चोत तुष्टुप तत्सार चस्कन्द पस्पर्श। अन्यसंयोगस्य तु सस्याम दध्वान तत्रास चक्राम। परभागाभावे तु तुष्टाव तस्थौ चुष्काव पस्पार दध्यौ दध्माव जघ्रौ जग्लौ सस्नौ इति ॥ ५६४ ॥

(३) च्युतिर् क्षरणे।

५६५। शासुलिद्द्युत्पुषादेर्ङष्टीपे जॄश्विस्तन्भुविषु म्रुचुम्लुचुग्रुचुग्लुञ्चिरितस्तु वा।

शासु-पुषादेः ५।, ङः १।, टीपे ७।, जॄ-इरितः ५।, तु।१।, वा।१।।

शासोऌकारितो द्युतादेः पुषादेश्च ङः स्यात् टीपे, ज्रादेस्तु वा। अच्युतत् अच्योतीत् चुच्योत।

---

ऌ इत् यस्य स ऌित्। द्युत् च पुष् च द्युत्पुषौ तावादी ययोस्तौ द्युत्पुषादी शासुश्च ऌिच्च द्युत्पुषादी चेति तस्मात्। स्वमते ऌिदित्त्वेनैव सिद्धे द्युत्पुषाद्यो-र्विधानं प्राचामनुरोधात्। इर् इत् यस्य स इरित्। जॄश्च श्विश्च स्तन्भुश्च विषुश्च म्रुचुश्च म्लुचुश्च ग्रुचुश्च ग्लुञ्चुश्च इरिच्चेति तस्मात्। यथा अशिषत् अघसत्। द्युता-दयो ह्लादादेरात्मनेपदिनः सर्वे टीपे ङ विधानसामर्थ्यात् टग्रासुभयपदिनः यथा द्युत ङ ऌ द्युत्याम् अद्युतत् अद्योतिष्ट। द्युतादिश्च द्युतिः शुचिः स्मयः रुचिष्विता-चञ्जि दाञ्जिदा भ्रस्सुभिदा द्युटिश्च। रुचिर्लुटिध्वन्स लुठि चुभिश्चतुर्भिः स्त्रन्त्र तृतुवृधुश्च। स्यन्दुः शृधुश्चापि कृपुर्द्युताविति वयोविंशतिरेव याता इति। पुषादयो दिवादौ परस्मैपदिनः सर्वे। पुष्यति शुध्यति ष्विदयः श्लिष्यति तुष्यति वध्य-चुधयः। क्लुष्यति तप्यति मुह्यति द्रुह्यः ष्णुह्य ष्णिह्य क्रुधि लुठिणश्चयः। सप्त-दशेति पुषादावुदिताः श्रीमद्बोपदेवमतविदिताः। एवं पुष्यन्त्यश्शमुदमुन्मदयः श्राम्य एमु जसु सुदसयः। असु चास्यति वस्य क्रुमयः पुष्य विध्य कुसि वुमष्यति सुषयः। उच्यति ऋषि मसि हृषि क्रुश दृशयः कुप्यति भृश्य भन्सु चिदयः। क्षुपिह षिडिपिगुपियुपयः क्लिद्यति रुपि लुपि लुभि मृदि गृधयः। दुर्गसिंह इति चाह पुषादिं तेनोभयोः प्रामाणिकत्वादेते इरनुबन्धाः पठिताः किञ्च सिध्यति क्षुभ्यति लभ्यति तुभ्यतीनां चतुर्णां दुर्गसिंहसम्मतानामपि बहुवाद्यसम्मतत्वादिरनु-बन्धोऽपि नोक्तः। ज्रादेस्तु अजरत् अजारीत् अश्वत् अश्वयीत् अस्तभत् अस्तम्भीत्। विष इति विष निजौ व्याप्तौ इत्यस्य ग्रहणम् अविषत् अविचत् अम्रुचत् अम्रो-चीत् अम्लुचत् अम्लोचीत् अग्रुचत् अग्रोचीत् अग्लुचत् अग्लोचीत्। इरितस्तु अच्युतत् अच्योतीदित्यादि॥ ५६५॥

(४) मन्थ विलोड़ने ।

## ५६६ । स्यात् ठ्यपित् किद्वा ।

स्यात् ५।, ठी ।१।, अपित् ।१।, कित् ।१।, वा ।१। ।

## ५६७ । हसुङ्नो लोपोऽणौ ।

हसुङ्नः ६।, लोपः १।, अणौ ७। ।

धोर्हस उङो नस्य लोपः स्यादणौ । ममथतुः ममन्थतुः । मथ्यात् ।

(५) कुथि हिंसा-संक्लेशयोः ।

## ५६८ । नेदित्पूजार्थाञ्चोः ।

न ।१।, इदित् पूजार्थाञ्चोः ६॥ ।

इदितो धोः पूजार्थस्याञ्चतेश्च नलोपो न स्यादणौ । अत एवेदितो नुण् । प्रनिकुन्थ्यात् । (५४९) कादित्वान्न णः ।

(५) षिधु गत्याम् ।

## ५६९ । भाद्यादिषाः स्नोऽष्ट्यै ष्वक्कष्ठिवाम् ।

भ्वाद्यादिषः ६।, स्नः १।, अष्ट्यै ष्वक्क-ष्ठिवाम् ६॥। ।

भ्वादेरादौ स्थितयोः ष-णयोः स-नौ स्तः, न तु ष्ट्यै ष्वक्क ष्ठिवाम् ।

---

संयोगात् परा अपित् ठी कित् स्याद्वा । यथा ।भजतुः बभञ्जतुः । हसुङ्नोलोपोऽणौ ठ्यान्तु वा इति कृते ठ्यपिति न लोपविकल्पे सिद्धे स्यात् ठ्यपित् कित् वेति विधानन्तु भ्रस्ज जौ श पाके इत्यस्य ठ्यपिति भ्रस्जोऽरेऽणौ भर्जवेत्यनेन भर्जादेशे बभर्जे बभ्रज्जे इत्याद्यर्थम् ॥ ५६६ ॥

उङ् चासौ न चेति उङ् न । हसो हसन्तधातोरुङ् न हसुङ्न तस्य हसुङ्नः इति षष्ठ्येकम् । नास्ति णुर्यस्मिन् परे सोऽणुस्तस्मिन् । यथा भन्जधो भज्यते भक्तः । हसन्तधातोः किम् । नीयते नीर्णः अत्र न प्रसङ्गः ॥ ५६७ ॥

इदनुबन्धानां नकार एव नास्ति कथं लोपो निषिध्यते इत्यत आह अतएवेत्यादि । अतएव न लोपनिषेधादित्यर्थः ॥ ५६८ ॥

**५७०। सेक सीक स्टप स्ट स्टज स्तृ स्त्या-न्ये दन्त्याजन्तसादयः। षोपदेशा धवः स्वक्क स्वित् स्वत् स्वञ्ज स्वप स्मिङश्च। णोपदेशास्त्व-नृन्नर्द नाथ नाध नन्द नक्क नृ नटः।**

सेक अन्ये १।॥, दन्त्याजन्तसादयः १।॥, षोपदेशाः १।॥, धवः १।॥, स्वक्क-स्मिङः १।॥, च ।१।, णोपदेशाः १।॥, तु ।१।, अ-नृत्—नटः १।॥ ।

सेधति।

---

भ्वादिरिति भूसत्तायामित्यादिर्दशगणात्मकः। तथाच। भ्वाद्यदादी जुहो-त्यादिर्दिवादिः स्वादिरेव च। तुदादिश्च रुधादिश्च तनक्र्यादि चुरादय इति भ्वादेरादिः भ्वाद्यादिः ष च ण च ण भ्वाद्यादौ ण भ्वाद्यादि ण तस्य। धोरधि-कारेऽपि भ्वादिग्रहणं लिङ्गधातोर्निरासार्थम्। तेन षष्ठमिच्छति षष्ठीयति एवं णकारीयतीत्यादौ न प्रसङ्गः। षाट्टवर्गस्तवर्गज इति वोपदेवस्वरसात् अत्र षकारस्या-धष्टवर्गस्य तवर्गप्रकृतिकत्वे ध्यायते द्विर्भावे निमित्तस्याभावे नैमित्तिकस्याप्यभाव इति न्यायात् टकारस्य तकारत्वे णपि तष्ठौ सनि तिष्ठासति यङि त्याष्टायते इति। एव सर्वत्र। षोपदेशणोपदेशौ दर्शयति सार्द्धश्लोकेन ॥५६९॥

सेक च सीक च स्टप च स्टश्च स्टज च स्तृश्च स्त्याश्च ते तेभ्योऽन्ये। दन्त्यश्च अच्च दन्त्याचौ तावन्तौ यस्य स दन्त्याजन्तः दन्त्याजन्तश्चासौ स चेति दन्त्याजन्तसः दन्त्या-जन्तस आदिर्येषां ते दन्त्याजन्तसादयः दन्त्यवर्णान्ता अजन्ता वा ये सकारास्तदा-दिका धातवः षोपदेशाः धातुसंज्ञाकाले मूर्द्धन्यादित्वेन पठिता इत्यर्थः सेका-दीनामजन्तसादित्वात् स्तृस्त्या इत्येतयोर्दन्त्यान्तसादित्वात् प्राप्तो निषेधः। स्वक्कादयो दन्त्यान्तसादयोऽजन्तसादयोऽपि न भवन्तीति पृथगुक्ताः। किञ्च उद्रूटौ यत्र विद्येते यो वः प्रत्ययसन्निजः। अन्तःस्थं त विजानीयात् तदन्यो वर्ग्य उच्यते। इति स्वरसात् स्वपेर्वकारस्य दन्त्यत्वेऽपि पृथक् ग्रहणं ज्ञापयति दन्त्यान्तसादीनामजन्तसादीनाञ्च क्वचित् षोपदेशता नास्तीति। तेन स्तका प्रतीघाते सान्त्वक सान्त्वने इत्यादीनां दन्त्यादित्वं सिद्धं षोपदेशफलन्तु कृतसकारवत्त्वात् तुष्टाव तोष्टूयते सुषुव सोषूयते इत्यादिषु षत्वम्। नृच्च नर्द च नाथ च नाध च नन्द च नक्कश्च नृश्च नट श्च ते नृन्नर्दनाथनाधनन्दनक्क नृ नटः न विद्यन्ते ते येषु धातुषु मध्ये ते तथा। नृतादि-

## ५७१ । व्याच्छस्य गत्यर्थवदे सः ।

व्याच्छस्य ६।, गत्यर्थवदे ७।, सः १।।

गत्यर्थे वदे च धौ परदे व्यस्याच्छस्य सः स्यात् । अच्छसेधति ।

## ५७२ । गीकः स्तु स्तुभ सो सुवास्यान्तसुञ्जां स्था सेनि सन्ज स्वन्जाऽगतिसेधाऽप्रतिसदाऽयङ्सिचाऽनङ्स्तम्भाऽन्नव्यवस्वन परि नि वि सेव सुमऽनङ्सिवाऽनोऽङ्सहां सः षोऽम्यपि दशस्यादेस्तु द्वेश्च ।

गि इकः ५।, स्तु-सुञ्जां ६।।।, स्था-सहां ६।।।, सः १।, षः १।, अमि ७।, अपि ।१।, दश-स्यादेः ६।, तु ।१।, द्वेः ६।, च ।१।।

स्वादेरस्यान्तसुञः स्यादेरगत्यर्थ-सेधोऽप्रतिपूर्व-सदो यङ्वर्जसिचोऽङ्वर्जस्तम्भोऽन्नार्थव्यवपूर्व-स्वनः पर्य्यादिपूर्व-सेव सुमऽङ्वर्ज सिव ओऽङ्वर्जसहाञ्च गेरिकः परः सः षः स्यात् अम्यन्तरेऽपि दशानां स्यादीनान्तु द्विरुक्तानाञ्च । निषेधति न्यषेधत् गतौ तु गङ्गां व्यसेधत् ।

---

वर्जिता नादयो धातवः षोपदेशा धातुसंज्ञाकाले मूर्द्धन्यादित्वेन उच्चारिता इत्यर्थः । षोपदेशफलन्तु प्रणयति प्रीणाति इत्यादिषु नादित्वात् प्राग्वन्नो इति णत्वम् । नृत नर्त्तने इत्यादीनां दन्त्यादित्वन्तु अन्येषामनुरोधात् ॥५७०॥

व्यश्च तत् अच्छश्चेति व्याच्छः तस्य । गत्यर्थश्च वदश्च गत्यर्थवदः तस्मिन् । अच्छं ति अभिशब्दसमानार्थो निपातः । यथा अच्छगत्य अभिमुखं गत्वेत्यर्थः अच्छोद्य अभिमुखमुदित्वेत्यर्थः ॥ ५७१ ॥

स्यः स्वरूपः स्योऽन्ते यस्य स स्यान्तः न स्यान्तोऽस्यान्तः अस्यान्तश्चासौ सुञ् चेति अस्यान्तसुञ् । स्तुश्च स्तुभश्च सोश्च सुवश्च अस्यान्त सुञ् च तेषाम् अगतौ सेधः अगतिसेधः नास्ति प्रति यस्मिन् सोऽप्रति स चासौ सद चेति अप्रतिसदः । नास्ति

यङ् यस्मात् सोऽयङ् स चासौ सिचश्चेति अयङ्सिचः नास्ति अङ् यस्मात् सोऽनङ् स चासौ स्तम्भश्चेति अनङ्स्तम्भः। व्यवाभ्यां स्वनः व्यवस्वनः अन्ने ऽदने व्यवस्वनः अन्नव्यवस्वनः नास्ति अङ् यस्मात् सोऽनङ् स चासौ सिवश्चेति अनङ्सिवः। ओश्च अङ् च ओऽङौ न विद्येते ओऽङौ यस्य सोऽनोङ् स चासौ सहश्चेति अनोङ्सह। सेवश्च सुम् च अनङ् सिवश्च अनोङ्सहश्च ते सेवसुमनङ् सिवानोऽङ्सहः। परिश्च निश्च विश्च परिनिवयः तेभ्यः सेवसुमनङ्सिवानोऽङ्सहः परिनिविसेवसुमऽनङ् सिवाऽनोङ्सहः पश्चात् स्थाश्च सेनिश्च सन्जश्च स्वन्जश्च अगतिसेधश्च अप्रतिसदश्च अयङ् सिचश्च अनङ् स्तम्भश्च अन्नव्यवस्वनश्च परिनिविसेवसुमऽनङ् सिवाऽनोऽङ्सहाश्च ते स्थादिसहः तेषां स्थादिसहाम्। दशानां स्थादीनां समाहारः दशस्थादिः तस्य। यथा अभिष्टौति विष्टोभते विष्यति विषुवति सुव इति तौदादिकस्य षूञ् चेपे इत्यस्य ग्रहणात् षू ङ् षू योङ इत्येतयोर्विसूते विसूयते इत्यादौ षत्वं न स्यात्। विषुणोति स्यान्तस्य तु विसोष्यति विससिष्यति इत्यादौ न षत्वम्। स्यः स्वरूप इति किं व्यषीढ्वमित्यादौ षत्वं स्यादेव। निष्ठास्यति सेनिरिति लिङ्गधातुः सेनया अभियाति अभिषेणयति। निषजति निष्वजते निषेधति। गतौ तु गङ्गां विसेधति किञ्च सेध इति निर्देशात् दैवादिकस्य निसिध्यतीत्यादौ न षत्वम्। निषीदति प्रतौ तु प्रतिसीदति निषिञ्चति यङि तु विसेसिच्यते इत्युभयत्र न षत्वमिति श्रीपतिदत्तः। विष्टभ्नाति विष्टभ्नोति अङि तु व्यतस्तम्भत् विष्वणति अवष्वणति चौरं शिशुः अन्यत्र विस्वनति वीणा शब्दं करोतीत्यर्थः। व्यवेत्युक्तेर्वकारादपि षत्वं व्यवात् किं परिस्वनति इत्यादौ न स्यात्। परिसेवते निषेवते विषेवते। सुमिति सुमागमः परिष्करोति। परिषीव्यति अङि तु पर्य्यसीषिवत् पर्य्यादिनिमित्तकं खेः षत्वं निषिध्यते खिनिमित्तकं मूलधातोः षत्वं क्रिलादित्यनेन स्यादेवेति श्रीपतिदत्तः। परिषहते। ओकारे निसोढ़ा अङि तु पर्य्यसीषहत्। अम्व्यवधाने तु प्रत्यष्टावीत् निविपरिस्वन्जस्तु सुमसिवसहाम् अम् व्यवधाने वा षत्वमिति वक्ष्यति। न्यष्टावीत् न्यस्तावीत् इत्यादि। दशस्थादेस्तु द्वे चेति विधानात् खिव्यवधानेऽपि षत्वं खेः सकारे सति तस्यापि षत्वमिति बोध्यं नितष्ठौ अभिषिषेणयिषति निषषञ्ज विषाष्वज्यते। ध्यान्तु सत् स्वञ्जोष्ठ्रां नाखेरिति वक्ष्यमाणात् मूलधातोर्न षत्वम्। तेन विषस्वाज विषस्वाद इति। निषिषेध विषाषद्यते निषिषेच वितष्टम्भ विषष्वान विषिषेवे। एषामेव किं षोषनाश्रे विससौ विसुषाव इत्यादि दशस्थादेरिति नियमात् अन्येषां सोसुवादीनां खेः

## (७) षिधू शास्त्रे माङ्गल्ये च ।

**५७३ । वेमूदित् स्वर चाय स्फाय प्याय सूति सूय धूञ रधादि निष्कुषोऽरवसो रु दु सुनोस्त्वठ्याः ।**

वा ।१।, इम् ।१।, ऊदित्—निष्कुषः ५।, अरवसः ६।, रुदुसुनोः ५।, तु ।१।, अठ्याः ६। ।

**एभ्यो वसस्यारस्येम् स्याद्वा, रौत्यादेस्तु ठोवर्जम् । असेधीत् ।**

---

षत्वं न स्यात् । क्विलादित्यनेन प्राप्तम् उपसर्गनिमित्तकं षत्वमनेन नियम्यते । तेन ष्णुल प्रस्तुत्यां विस्नौति ष्णालशोधने प्रतिस्नाति इत्यादौ न षत्वं किन्तु उपसर्गनिमित्तकं षत्वमेव नियम्यते । तेन तीष्णयते तीष्णूयते इत्यादौ खिनिमित्तकं षत्वं स्यादेव । क्विलादित्यत्र विसर्गव्यवधानेऽपि षत्वविधानादिहापि विसर्गव्यवधानेऽपि षत्वमिति बोध्यम् । निःष्णौति दुःष्णौति ॥५७२॥

ऊदिद् यस्य स ऊदित् रध आदिर्यस्य रधादिः । निसः कुषः निस्कुषः । पश्चात् ऊदिच्च स्वरश्च चायश्च स्फायश्च प्यायश्च सूतिश्च सूयश्च धूञ च रधादिश्च निष्कुष चेति तस्मात् । स्वर इति स्वृञ शब्दोपतापयोः स्वजातीयधात्वन्तराभावात् स्वृग्रहणेनैवेष्टसिद्धौ स्वरग्रहणं ज्ञापयति क्वचिन्निषेधं बाधित्वा विकल्पोऽयं प्रवर्त्तते इति । अतएव नेमृतस्थप इत्यनेन व ऋ स्वृ भिन्नात् ऋदन्तात् थप इम् निषेधेऽपि सस्वरिथ सस्वर्थ इति स्वयमुदाहरिष्यति । रधादिस्तु रध्यतिस्तृप्यद्दृप्यौ च मुह्यतिद्रुह्यतिस्नुया । ष्णुह्यणिह्यौ नशत्तृयू च रधादावष्ट धातवः । क्षमते ऊदित्त्वेनैव सिद्धौ स्वरते रधादेश्च इह पाठः प्राचीनमतानुवादार्थम् । रुश्च दुश्च सुश्च नुश्च तस्मात् । यथा असेधीत् असैत्सीत् अस्वारीत् अस्वार्षीत् अचायीत् अचासीत् अस्फायिष्ट अस्फास्त अप्यायिष्ट अप्यास्त असविष्ट असोष्ट । सूति सूय इति अदादिदिवाद्योर्ग्रहणात् षूश चेपे इत्यस्य असावीदिति नित्यम् । अधावीत् अधौषीत् । रधिता रद्धा निष्कोषिता निष्कोष्टा रविता रोता दविता दोता सविता सोता नविता नोता । ठ्यास्तु रुरुविव दुदुविव सुसुविव नुनुविव इति अन्यस्मादनिमोऽपि स्यादिति नियमात् नित्यमिम् ॥५७३॥

## ५७४। व्रजवदरलजनिमोऽञिश्विजागु-र्व्रिः सौ पे।

व्रज-वद-अर्-अल्-अच्-अनिमः ६।, अञिश्विजागुः ६।, व्रिः १।, सौ ७।, पे ७।।

**व्रजेर्वदेररन्तस्यालन्तस्याजन्तस्यानिमश्च सौ पे व्रिः स्यात् नतु ञि श्वि-जागॄणाम्।**

**असैत्सीत् असेधिष्टाम्।**

## ५७५। ढभात्तथोर्धोऽधः।

ढभात् ५।, तथोः ६॥, धः १।, अधः ५।।

**ढभात् परयोस्तथयोर्धः स्यान्न तु धाञः। असैद्धाम्।**

---

नास्ति इम् यस्मात् सोऽनिम् व्रजश्च वदश्च अर् च अल् च अच् च अनिम् चेति तस्य। ञिश्च श्विश्च जागश्चेति तत्। न ञिश्विजागृ अञिश्विजागृ तस्य। अरलौ स्वरूपौ तेन तदन्तौ ग्राह्यौ। अच आरालैजित्यादिना अच एव व्रद्धि-स्थानिवत्त्वेन निर्देशात् अच एवेत्यर्थः। धातोः स्वरूपकथने इप्रत्ययो वक्तव्यः। तेन व्रजेर्वदेरित्युक्तम्। यथा अव्राजीत् अवादीत्। व्रजसाहचर्य्यात् वद इति दन्त्यवकारादिरेव तेन वद स्थैर्य्ये इत्यस्य अवादीत् असारीत् अफालीत् अजैषीत् अनैषीत् अहौषीत् अधौषीत् अकार्षीत् अद्राचीत् असैत्सीत् अतौचीत् अमा-चीत्। ञ्यादेस्तु अध्वनयीत् अश्वयीत् अजागरीत्। ननु जाग्रोऽनव्वीति गुण-स्यैव प्राप्तौ जागुरिह वर्जनं कथमिति चेन्न निमित्तगतविशेषस्य बलवत्त्वात् व्रद्धेः प्राप्तौ निषेधार्थम्। अतएव दीधीवेव्योर्गुणक्तता नित्यत्वात् परस्मैपदे अनुस्सिद्धे-रिति उसि दीधीवेव्योर्न गुरिति सूत्रं वाधित्वा गुरुस्य ठ्यामित्यनेन गुणे अदीधयुः अवेवयुरिति वोपदेवः॥ ५७४॥

तश्च थश्च तथौ तयोस्तथोः। असैद्धामित्यनिमपचे इमि तु असेधिष्टामिति। अधः किं धत्तो॥ ५७५॥

[ ८ ] खद स्थैर्य्ये वधे च ।

**५७६ । हसादेः सेमोऽह्मयेदित् चणश्वसवधो वोङन्तः सौ पे व्रिः ।**

हसादेः ६।, सेमः ६।, अ-ह-म-य एदित् चणश्वसवधः ६।, वा ।१।, उङन्तः ६। सौ ७।, पे ७।, व्रिः १। ।

**हमयान्तादेकारेतः चणादेश्चान्यस्य सेमो हसादेरुङोऽकारस्य व्रिः स्याद्वा सौ पे । प्रन्यखादीत् [ ५४९ ] खादित्वान्न णः, अखदीत् ।**

**५७७ । ञ्णित्यन्त्येजुङन्तोः ।**

ञ्णिति ७।, अन्त्येजुङन्तोः ६॥ ।

**धोरन्त्यस्येच उङोऽकारस्य च व्रिः स्यात् ञिति णिति च । चखाद ।**

---

सह इमा वर्त्तते यः स सेम् तस्य । एत् इत् यस्य स एदित् । ह च म च य च एदिच्च चणश्च श्वसश्च वध चेति तत् । न ह्मयेदित्चणश्वसवध अह्मयेदित्चण-श्वसवध तस्य । उङ् चासौ अच्चेति उङत् तस्य । ह्मान्तादेस्तु अचहीत् अकमीत् अह्मयीत् अकटीत् अचणीत् अश्वसीत् अवधीत् ॥ ५७६ ॥

ञ च ण च ञ्णौ ञ्णावितौ यस्य स ञ्णित् तस्मिन् । अन्त्यश्चासाविच् चेति अन्त्येच् उङ् चासावच्चेति उङत् अन्त्येच्च उङच्च तौ अन्त्येजुङन्तौ तयोः । हसादे-रिति नानुवर्त्तते उङन्तो ग्रहणात् । तेन धातुमात्रस्य अन्त्ये च उङतश्च व्रिः स्यात् ञिति णिति च परे । यथा जिगाय निनाय जुहाव पुपाव चकार ततार पपाठ उङत इति येन केनापि उङन्तो ग्रहणम् । तेन भन्जगिलम्भोर्वेसमोर्नलोपे इति नलोपे अजाजि अलाभि इत्यादि सिद्धम् । अतएव रन्जधातोर्नलोपे उङन्तो व्रिद्धौ घटादि-जनीत्यनेन ह्रस्वं विधाय रजयसि मृगानिति स्वयं वक्ष्यति । व्रत्तौ धोरिति व्याख्यानात् त्वचयतीत्यत्र जिसमेतस्य धातुसंज्ञायां त्वचो धातुत्वाभावादुङन्तो न व्रिद्धिः । ननु निनाय नुनाव इत्यादिषु आदौ गुणे कृते पश्चादुङन्तो व्रिद्धौ इष्टसिद्धौ अन्त्येचो ग्रहणं व्रथेति चेन्न एकनिमित्तके गुणे कृते व्रिद्धेरकर्त्तव्यत्वात् । अन्यथा

५७८। णप्यन्त्ये वा।

अपि ७।, अन्त्ये ७।, वा ।१।।

चखाद चखद।

[ ९ ] गद भाषे।

प्रणिगदति।

[ १० ] [ वर्ग्यबकारादिः ] बद स्थैर्य्ये।

५७९। तॄ फल भज त्रप श्रथ ग्रथ दभा-द्यन्तास्थहसां ठ्याः कित्-सेमथप्यदेः खिलोप-श्च-शश दद वाद्यन्यथा-खि णु नलोपिनां जॄ वम भ्रम त्रस फणादिवधार्थ राधान्तु वा।

तॄ-हसां ६।।।, ठ्याः ६।, कित्-सेमथपि ७।, अत् ।१।, एः १।, खिलोपः १।, च ।१।, अ-शश—नलोपिनां ६।।।, जॄ-राधां ६।।।, तु १।, वा ।१।।

तादीनामाद्यन्तस्थितास्थहसानाञ्च अकारः ठ्याः किति सेमथपि च एः स्यात् खिलोपश्च, नतु शशेर्ददेर्वकारादेरन्यथा-भूतखेर्णुमतो नलोपिनश्च, जॄवमभ्रमत्रसफणादीनां हिंसार्थस्य राधेश्च वा स्यात्।

बेदतुः बेदुः बेदिथ। अन्यथाभूतखेस्तु चबदतुः।

[ ११ ] णद शब्दे।

[ ५६९ ] ष्वाद्यादीति णो नः। नदति। प्रणिनदति।

---

जो नागरयतीत्यादौ जागीऽयम्बीति गुणे कृते ङन्ती वृद्ध्यापत्तेः। एकनिमित्तके इति किं दिव्यतीति देवः अत्र पचादित्वादनि गुणे देवस्येदं देवम् अत्र णो वृद्धिः स्यादेव। न च तथापि अन्त्यमेव गृह्यतां किमिचो ग्रहणेनेति वाच्यम्। व्येजै-त्ताविन्त्यस्य णपि विव्याय इत्यनुपपत्तेः। रामतर्कवागीशस्तु अन्त्याजुङन्तीरिति

पठित्वा अल्लोपित्वं स्थानिवत्त्वञ्चादन्तत्वप्रयोजनम्। यत्र त्वेते न विद्यन्ते तत्राल्लोपो विकल्पनम्। तद्बलादन्त्यदीर्घस्य पुकचेत्यङ्गापयत्यत इति स्वरसादकारस्य स्थितिपक्षे वृद्धिमादन्तत्वात् पनञ्च विधाय अङ्गापयति। अवलमिति साधयति तद्वियम् अच एव वृद्धिः स्थानित्वेन निर्देशात्। व्रजवदेत्यादौ यथा अचो ग्रहणं विनाप्यचः प्राप्तिस्तथात्रापि ञ्णित्यन्तोऽन्तोरित्यनेनैवेष्टसिद्धौ अचो ग्रहणस्यैव वैयर्थ्यात्। स्वमाचष्टे स्वापयति इत्यादौ अनेन वृद्धौ पनागमेनैवेष्टसिद्धौ एकाजकारान्तानां नापविधानवैयर्थ्याच्च। एवं नित्यस्य अल्लोपस्य तद्वचनबलाद्विकल्पे अन्त्यदीर्घस्यापि तद्वचनादेव सिद्धौ अकारस्य इह वृद्धिविधानवैयर्थ्याच्च अङ्गापयतीत्यादौ तु अल्लोपो विकल्पनम् अन्त्यदीर्घश्चेत्युभयमेव मनीषादित्वात् साध्यमिति ॥५७८॥

सुगमं प्रणिगदतीति गदनदेति णत्वम् ॥५७८॥

स्यः संयोगः न स्योऽस्यः अस्यश्चासौ हस् चेति-अस्य हस् आद्यन्तयोरस्य हस् येषां ते आद्यन्तास्यहसः। तृश्च फलश्च भजश्च त्रपश्च श्रथश्च ग्रथश्च दम्भश्च आद्यन्तास्य हसश्च तेषाम्। सह इना वर्त्तते यः स सेम् सेम् चासौ थप् चेति सेमथप्। किच्च सेमथप् चेति कित्सेमथप् तस्मिन्। अन्तस्थवकार आदिर्यस्य स वादिः। अन्यथा अन्यप्रकारः खिर्यस्य सोऽन्यथाखिः। णश्च नलोपश्च णनलोपौ तौ विद्येते ययोस्तौ णनलोपिनौ। शश्च ददश्च वादिश्च अन्यथाखिश्च णनलोपिनौ च ते। पश्चात् नञ्समासः तेषाम्। वधार्थश्चासौ राध चेति वधार्थराध। जॄश्च वमश्च भ्रमश्च त्रसश्च फणादिश्च वधार्थराध च ते ज्रादिराधः तेषां तॄ इत्यस्य गुणत्वात् फलभजोरन्यथाखित्वात् त्रपसंयोगादित्वात् श्रथग्रथोः संयोगादित्वात् न लोपित्वाच्च दम्भेर्नलोपित्वादप्राप्तौ पृथगुक्तिः। ननु उपदेशकाले आद्यन्तास्यहसः ये धातवस्तेषामेव ग्रहणात् णमन्नलोपिनोरप्राप्तौ येन केनापि प्रकारेण आद्यन्तास्यहसां ग्रहणात् णमन्नलोपिवर्जनं कथमिति चेन्न टुनदिसमृधि इत्यादीनामुपदेशे आद्यन्तास्य हसत्वात् ननन्दतुरित्यादावपि खिलोपाद्युत्पत्तेः। फणादिश्च फणति राजतिश्चैव भ्राजतिर्भ्राशतिस्तथा। भ्लाशतिः स्यमतिश्चैव समतिश्च फणादयः। अत्र फणादिपाठसामर्थ्यादाकारस्याप्येत्वम्। एवं वधार्थराधोऽपि रेधतुरिति वद स्थैर्ये वर्ग्यबकारादित्वान्निषेधः। दन्त्यादेस्तु वनसम्भोक्तौ ववनतुः एवं वज मतौ ववजतुः वसिरस्तम्भे ववसतुः। अन्यथा खिणनलोपिनामिति एषां मध्ये चखदतुरित्युदाहृतम् अन्यत् यथास्थानमुदाहर्त्तव्यमित्यभिप्रायः ॥ ५७९ ॥

[ १२ ] अर्द्द पीड़ायाम्।

## ५८०। स्यान्तादादृदादश्नोः खेरान् ठ्यां वा त्वाञ्छेः।

स्यान्तादादि-ऋदादि—अश्नोः ६।, खेः ६।, आन् ।१।, ठ्यां ७, वा ।१।, तु ।१।, आञ्छेः ६। ।

**स्यान्तो योऽकारादिस्तस्य ऋकारादेरश्नोतेश्च खेरान् स्यात् ठ्याम् आञ्छतेस्तु वा।**

आनर्द्द।

[ १३ ] इदि परमैश्वर्य्ये।

## ५८१। भूयोऽमजादेः।

भूयः ।१।, अम् ।१।, अजादेः ६। ।

**अजादेरमि कृते पुनरम् स्यात्। ऐन्दत्।**

## ५८२। विजादि-दयायासत्यानेकाचोऽनृच्छूर्णोंष्ठ्यामाम्।

विजादि—अनेकाचः ५।, अनृच्छूर्णोः ५।, ठ्यां ७, आम् ।१। ।

**समङ्गेजादेर्दय अय आस एभ्यस्त्यान्तादनेकाचश्च आम् स्यात् न तु ऋच्छूर्णोः।**

---

स्यः संयोगोऽन्ते यस्य स स्यान्तः। अत् अकार आदिर्यस्य सोऽदादिः स्यन्तश्चासौ अदादिश्चेति स्यन्तादादिः। ऋत् आदिर्यस्य स ऋदादिः। अत्र तद्गुणसंविज्ञानबहुव्रीहिणा अन्तावयवदवर्णान्तरसहितऋकारादिरेवोच्यते। तेन ऋगताविन्यादेर्न ग्रहणम्। पश्चात् स्यन्तादादिश्च अश्नुश्चेति। अश्नु इति सौवादिकस्य निर्देशात् क्रियादिकस्य आश इत्येव। अश्नोः पृथक्ग्रहणादेव अदादिशब्देन स्यन्तादादौ लब्धव्ये स्यान्तकरणं कथमिति चेन्न अश्नातेरप्राप्तये अश्नुग्रहणस्य सार्थकत्वे अदादिपदेन स्यान्तानामस्यान्तानाञ्च अकारादीनां प्राप्तव्यत्वात्॥ ५८०॥

पूर्वक्तेन अमा धातोः सन्धौ पश्चादनेन पुनरम्। अमोः सन्धौ पुनरम् करणस्य वैफल्यात्। ननु घीटीघीष्वम् धीरमाऽजादेर्व्रिश्च इत्यनेनैवेष्टसिद्धौ एतद्विधानन्तु आदिष्टस्याप्यजादेः पुनरम् विधानार्थम्। तेन यजेजौ ऐज्यत वश्लुग्वृद्धि औष्टामित्यादि सिद्धम्॥ ५८१॥

## ५८३ । भ्वसृक्रान्वामः ।

भू-अस्-कृ ।१॥, अनु ।१।, आमः ५। ।

**भू अस् कृ एते आमन्तादनु प्रयुज्यन्ते । इन्दाम्बभूव इन्दामास इन्दाञ्चकार ।**

## ५८४ । नेमसुम् कृ स्टृ वृ भृ स्तु द्रु स्नु स्रोरेव ठ्याः ।

न ।१।, इम् ।१।, असुम् कृ-स्रोः ५।, एव ।१।, ठ्याः ६। ।

**एभ्यष्ठ्या एव इम् न स्यात् अन्यस्मादनिमोऽपि स्यात् । इन्दाञ्चकर्थ ।**

---

ऋगुरुः ऋश्चासौ इच् चेति विच्, विच् आदिर्यस्य स विजादिः विजादिश्च दयश्च अयश्च आसश्च त्यश्च अनेकाच् चेति तस्मात् । ऋच्छ च ऊर्णुश्चेति ऋच्छूर्णुः न ऋच्छूर्णुः अनृच्छूर्णुः तस्मात् । त्यः प्रत्ययः । यथा ऋतीयाञ्चक्रे पणायाञ्चक्रे कारयामास चिकीर्षामास इत्यादि । त्यान्तानामनेकाच्त्वेनैव प्राप्तौ पृथक् ग्रहणं स्वापामास इत्याद्यर्थम् ॥ ५८२ ॥

भूश्च अस् च कृश्चेति भ्वसृकृ । आम इति पञ्चम्यैव परतः प्रयोगे सिद्धे अनुग्रहणं क्रियाविशेषणोपसर्गैर्व्यवधानेऽपि प्रयोगार्थम् । तेन तं पातयाम्प्रथममास पपात पश्चादिति रघुः । उच्चाम् प्रचक्रुर्नगरस्य मार्गानिति भट्टिः । पूर्वतोऽनुवृत्तावपि पुनरामो ग्रहणं सामान्याम् प्राप्त्यर्थम् । तेन दरिद्राञ्चकारेत्यादि पश्चाम् वाभीत्यादिभिर्विहितादामोऽपि भ्वादेरनुप्रयोगः । एवमात्मनेपदिधातुभ्योऽस् भुवोरनुप्रयोगे कर्त्तरि कृतस्यात्मनेपदस्य स्थाने परस्मैपदादेशो वक्तव्यः । ईहामास ईहाम्बभूव । भावकर्मणोः कृतस्य तु न स्यात् । ईहामासे ईहाम्बभूवे चन्द्रो जनेन । व्यतीहारे कर्त्तरि कृतस्यापि न स्यात् । ईहाम् व्यतिबभूवे काव: । करोतेरनुप्रयोगे तु मूलधातोरिव परस्मैपदात्मनेपदे तिष्ठतः । इन्दाञ्चकार ईहाञ्चक्रे । ननु पूर्वसूत्रे ठ्यामिति विषयसप्तम्या ठ्या उत्पत्तेः प्रागेव आमि कृते भ्वादीनामनुप्रयोगे तदनुसारेणैव विभक्तिः स्यात् । किमात्मनेपदस्य परस्मैपदादेशेन इति चेत् न । कृञोऽनुप्रयोगे आत्मनेपदिधातोः ईहाञ्चकार इति परस्मैपदापत्तेः । एवं परस्मैपदिधातोः इन्दाञ्चक्रे इत्यात्मनेपदापत्तेश्च । इन्दामासेति अस्तेरनुप्रयोगविधानसामर्थ्यात् भूरादेशो न स्यात् ॥ ५८३ ॥

[ १४ ] णिदि कुत्सायाम्।

प्रणिन्दति प्रनिन्दति।

[ १५ ] उख गतौ।

५८५। खियौरियुवर्णे।

खेः ६।, यो: ६।, इयुव् ।१।, अर्णे ७।।

खेरिवर्णोवर्णयो: क्रमादियुवौ स्याताम् अर्णे परे। उवोख।

अर्णे किम्? ऊखतुः।

[ १६ ] अन्चु गतिपूजनयोः।

[५६८] नेदित् पूजार्थाञ्चोरिति अञ्चगात्। गतौ तु अच्यात्

[ १७ ] स्नुचु दुर्गत्याम्।

[५६५] शासुलिदुद्युदिति ङो वा अस्नुचत् अस्नोचीत्।

एवं [ १८ ] ग्लुचुग्रुचुग्लुञ्चु।

[ १९ ] आक्कि आयामे।

आनाङ्क्के आङ्क्क।

---

नास्ति सुम् यस्यासौऽसुम् असुम् चासौ क्रश्चेति असुमक्रः असुमक्रश्च स्तृश्च द्रुश्च भृश्च स्तुश्च द्रुश्च श्रुश्च स्रुश्चेति तस्मात्। नेमिकाजादित्यत्र इवर्जनात् प्राप्तस्य इमो निषेधार्थमिह इग्रहणम्। अन्येषां सप्तानां एकाचत्वेन अनिमामपि इह ग्रहणं नियमार्थम्। ननु एवशब्दं विनापि नियमसम्भवादत्र एवशब्दो व्यर्थेति चेत् न। रङो विः सुपीत्यत्र निमित्ते कार्य्यिणोरङो नियमात् यथा रङभिन्नरेफस्य विसर्गो न स्यात्। तथात्रापि असुमक्रादेर्निमित्तात् कार्य्यसंज्ञायाम् थ्या एव इम् न स्यात्। असुमक्रादेरनियमोऽपि थ्या अन्यत्र इमापत्तेः। ततश्च असुमक्रादिसम्बन्धिना एवशब्देन असुमक्रादिभिन्नादिनियमोऽपि थ्या इम् स्यादेवेति बोध्यते इत्यत आह अन्यस्मादनिमोऽपि स्यादिति। यथा चकृव सस्तृव दद्रुव बभृव तुष्टुव दुद्रुव शुश्रुव सुस्रुव। असुमक्रस्तु सञ्चस्करिव अन्यस्मादनिमोऽपि स्यादिति नियमेन जग्मिव ददिव पिश गतौ पिपिशिव नीञ् निन्ये तु ल तुतुविव दभ्रिव। किञ्चिन्मात्रनियमेन विभाषा न बाध्यते बबन्धिव बध्वे ॥ ५८४ ॥

[ २० ] वज गतौ।

ववजतुः ववजिथ [ ५७९ ] वादित्वान्न एः।

[ २१ ] व्रज गतौ।

[ ५७४ ] व्रजवदेति वि: अव्राजीत्।

[ २२ ] अज गतौ क्षेपणे च।

५८६। व्यजोऽरे वा त्वनवस्यघञल्क्यपि।

वि ।१।, अज: ६।, अरे ७।, वा ।१।, तु ।१।, अन-वसि ७।, अ-घञ्-अल्-
क्यपि ७।।

अजतेररे वि: स्यात्, अन त्ये वसे च वा स्यात्, न तु घञादौ।

५८७। नेमेकाजाद्युदृतोऽश्वि श्रि डी शी यु रु णु स्नु क्षु क्ष्णु वुः।

न ।१।, इम् ।१।, एकाच-आत्-इ-उत्-ऋत: ५।, अश्वि—वु: ५।।

श्व्यादेरन्येभ्य एकाज्भ्य आदन्तेवर्णान्तोदन्त ऋदन्तेभ्य इम् न स्यात्।

अवैषीत् आजीत्। विवाय।

---

इश्च उश्च यु तस्य इय् च उव् च इयुव्। इयेष उवोख। अर्णे किं ईषतुः ऊखतुः॥ ५८५॥

न रोऽरस्तस्मिन्नरे अनश्च वस् च तस्मिन्। घञ् च अल् च क्यप् चेति घञल्-क्यप् न घञल्क्यप् अघञल्क्यप् तस्मिन्। अल्प्रत्यय: वस् प्रत्याहार:। यथा अरे याके वायक:। अनटि वयनम् अजनं वसे टणि वेता अजिता घञादौ समाज: समज: समज्या॥५८६॥

एकोऽच् यस्य स एकाच् आत् च इश्च उत् च ऋत् चेति आद्युदृत् एकाच्चासौ आद्युदृच्चेति एकाजाद्युदृत् तस्मात्। श्विश्च श्रिश्च डीश्च शीश्च युश्च रुश्च नुश्च स्नुश्च क्षुश्च क्ष्णुश्च वृश्च ते,न विद्यन्ते ते यत्र तत् अश्विश्रिडीशीयुरुनुस्नुक्षुक्ष्णुवृ तस्मात्। यथा

## ५८८। अभ्ध्वोरणवचौयुवयोर्व्यौ त्वस्यान्नैकाचोर्व्यौः।

अ्-ध्वोः ६॥, अणवचि ७, इयुव् ।१।, यौः ६।, व्यौ १॥, तु ।१।, अस्यात् ५।, नैकाचोः ६॥, व्यौः ६॥।

**अोर्धोश्च इवर्णोवर्णयोरणावचि इयुवौ स्तोऽनैकाचस्तु अस्यात् परयोः क्रमादुवर्णे वर्णयोर्व यौ स्तः। विव्यतुः विव्युः।**

---

पाता जेता नेता श्रोता कर्त्ता। एकाचः किं दरिद्रिता चिरयिता दिधिता उर्ण-विता जागरिता सामान्यविधानात् प्राप्तेम् एव निषेधकोऽयं विशेषविधिना तु स्यादेव। यथा यमरमेति अपासिष्टां सुस्तुधीरिति अस्तावीत्। स्यस्ईन इति करिष्यति। अग्रादिस्तु अथिता अयिता उयिता शयिता यविता रविता रीता नविता नीता वेमुदितौ वा स्नविता च्यविता च्युविता वरिता। कविकल्पद्रुमे अङ इञ विवर्जिता इत्युभयग्रहणज्ञापकादत्र सूत्रे युलसिश्रणे इत्यत्रैव वर्जने गुञग बन्धे इत्यस्मादिम् न स्यात्। तेन योता। यद्यपि स्नुनते रु तु इति इयो-रिहानुक्तावपि एकाजुदन्ततया अनिमत्वे नेमसुनिति ठा। नित्येमत्वं ठा। अन्यत्र वेमूदिदित्यनेन वेमत्वं तथापीह पाठः केषाञ्चिन्मते द्वावेतौ नित्येमाविति ज्ञाप-नार्थम्। अतएव कविकल्पद्रुमे श्विश्रिडीशीयुरुनुस्नुक्ष्णु वृङ्वृञ विवर्जिता इति नित्येमां मध्ये अनयोः पाठः। अवैषीदिति अजन्तोपि पूर्वेण वसे परे वि आदेशे एकाजिवर्णान्तत्वादनेन इमनिषेधः॥ ५८७॥

अुश्च धुश्च अ्धू तयोः। नास्ति णुर्यस्मिन् सोऽणुः अणुश्चासावच् चेति अणवच् तस्मिन्। इय् च उव् च इयुव्। इश्च उश्च यु तस्य व च य च व्यौ। न सोऽस्यः तस्मात्। न एको नैकः। नैकोऽच् ययोस्तौ नैकाचौ तयोर्नैकाचोरिति अ्ध्वो-रित्यस्य विशेषणम्। उश्च इश्च वी तयोर्व्योः। योरित्येकवचनान्तस्य इयुव इत्यनेनैव यथासंख्यं न तु अ्ध्वोरिति द्विवचनान्तेन अोरिवर्णस्य असम्भवात्। तेन अयं नियमः। अणावचि परे अोरुवर्णस्य उव् स्यात् धातोरिवर्णोवर्णयोः क्रमादियुवौ स्त इति। एवं व्योरिति द्विवचनान्तस्य अ्ध्वोरित्यनेन च यथासंख्यम्। तेन अनेकाचः अोरसंयोगात् परस्य उवर्णस्य वकारः। श्रयितेत्यादौ गुणेन बाधितत्वादेव इयुवो-रप्राप्तौ अणाविति सुखार्थमिति काशीश्वरः। तद्ध्येयम्। अ्धूसम्बन्धीवर्णो वर्ण-

**५८९। सृजदृशच् पाठात्वतो नित्यानिम्तु-थपो वेमनृव्येऽदः।**

सृज्-दृश-अच्-पाठ-अत्वतः ५।, नित्य-अनिम्तुः ५।, थपः ६।, वा ।१।, इम् ।१।, अन्-ऋ-व्येऽदः ५।।

**सृजेर्दृशेरजन्तात् भ्वादिपाठेऽकारवतो नित्यमिम्रहित-टत्यात् थप इम् वा स्यात्, न तु ऋ व्येञ अद एभ्यः। विव-यिथ विवेथ।**

---

स्थानिकत्वादन्भावनिमित्तकत्वाच्च विशेषेण अ ध्वोरित्यनेन इङस्थानिकत्वादन्भाव-निमित्तकत्वाच्च सामान्यस्य णर्घूङ्घेत्यस्य बाधितत्वात् श्रयिता इत्यादावपि इया-पत्तेः। अत धोरिवर्णस्य विकृतस्यापि ग्रहणं तेन आद्रियते इत्यादि सिद्धम् ॥५८८॥

अत् अस्त्यस्य अत्वान् पाठे दशविधगणपाठे अत्वान् पाठात्वान्। सृजश्च दृशश्च अच्च पाठात्वांश्चेति तस्मात्। नित्यमनिम् ट प्रत्ययो यस्मात् स नित्यानिम्ता तस्मात्। नित्यानिम्तुरिति अजन्तस्य पाठात्वतश्च विशेषणम्। ऋश्च व्येञ्च अद चेति ऋव्येऽद न ऋव्येऽद अनृव्येऽद तस्मात्। यथा ससर्जिथ ससृष्ठ ददर्शिथ दद्रष्ठ। अजन्तात् यथा पपिथ पपाथ चिचयिथ चिचेथ निनयिथ निनेथ जुहविथ जुहोथ। नित्यानिम्तुः किं शिश्रयिथ युयविथ पुपविथ ववरिथ तेरिथ। पाठात्वतो यथा डुऔशफ्च पाके पेचिथ पपक्थ, वचौ वाचि उवचिथ उवक्थ व्यधौ ताडे विव्यधिथ विव्यद्ध, षदॢजौश विषादे सेदिथ ससत्थ। भन्जधौ मोटने बभञ्जिथ बभङ्क्थ। नित्यानिम्तुः किं पठ वाचि पेठिथ इत्यादि। न च अत्वतोग्रहणे-नैवेष्टसिद्धौ पाठात्वतो ग्रहणं वृथेति वाच्यं गटक्लानेर्यङि जौ कृते नरीनृत्यत इति निर्देशात् यथा जरी गटघ्यते इति स्यात्। तथात्वापि कृषादीनां थपि वट्रोऽकि-र्टिति ऋकारस्य रेफेऽकारवत्त्वात् चकर्विथ चकर्ष्ठ इत्याद्यनिष्टापत्तेः। ऋव्येऽद इत्यत ऋप्रत्ययस्य ऋवर्णान्तवाचित्वेऽपि दीर्घऋदन्तानां ह इत्यस्य च सेम् कृत्वात् प्रसङ्गाभावे वृऋस्कृभिन्न ऋदन्तात् नेम्तस्थप इत्यनेन थप इम् निषेधे ऋस्कृ इति सर्वत्र नित्यानिम्टत्वात् वेम्प्राप्तावनेन निषेधे नेमसुम्कृ इति नियमादसोरस्ये-तीमि आरिथ सञ्चस्करिथ इति। व्येऽदीस्तु विव्ययिथ आदिथ ॥ ५८९ ॥

[ २३ ] चि चये ।

५९० । घीँऽज्य्यरे ।

घँः १।, अच् ।१।, यि ७।, अरे ७। ।

अजन्तस्य घँः स्यादरे ये परे । चीयात् ।

[ २४ ] कटे वर्षावरणयोः ।

अकटीत् एदित्त्वान्न त्रिः [ ५७६ ] ।

[ २५ ] गुपू रक्षणे ।

५९१ । कम ऋतो गुपू धूप पण पनो जिङीयङाया धुः ।

कमः ५।, ऋतः ५।, गुपू-धूप पण-पनः ५।, जिङ्-ईयङ्—आया. १।॥, धुः१। ।

कमो जिङ् ऋतेरीयङ् गुपादेराय: स्यात् स्वार्थे, तदन्तस्य धुसंज्ञः । गोपायति ।

५९२ । वारे ।

वा ।१।, अरे ७। ।

एष्य एते वा स्युररे विषये । अगोपायीत् अगोपीत् अगौप्सीत् । गोपायामास जुगोप ।

एवं [ २६ ] धूप तापे ।

[ २७ ] तपौ सन्तापे ।

[ ५५४ ] औदित्त्वान्नेम्, अताप्सीत् ।

---

न रः अरः तस्मिन् यि इत्यस्य विशेषणम् । यथा चीयात् । शिव इवाचरति शिवायते एवं हरीयते विष्णूयते । धोरन्तस्थितस्य प्रकृतेर्विकृतेरप्यचो दीर्घः स्यात् ह्वेञ ह्वयात् टुओश्वि शूयात् इत्यादौ जौ कृतेऽपि दीर्घः । स्त्रविगतौ स्त्रियात् डुकृञ क्रियात् इत्यादौ तु ऋद्रिः शयक्ढीपे इत्यत्र ऋस्यान्तादेशसामर्थ्यात् न दीर्घः ॥५९०॥

क्रमः ऋत इति द्वयं पञ्चम्यन्तम् । गुपूश्च धूपश्च पणश्च पन् चेति तस्मात् ।

[ २८ ] चमु अदने।

५९३। ष्ठिवुक्लमाचमोऽपि घः।

ष्ठिवु क्लम आचमः ६।, अपि ७।, घः १।।

एषां घः स्यादपि। आचामति। आङः किं, चमति विचमति।

[ ५७६ ] मान्तत्वान्न ञिः। अचमीत्।

[ २९ ] क्रमु पादविक्षेपे।

५९४। क्रम क्लम भ्रम भ्राश भ्लाश त्रस त्रुट लष यस संयसः श्यन् वा रे घे।

क्रम-संयसः ५।, श्यन् ।१।, वा ।१।, रे ७।, घे ७।।

एभ्यो घेऽर्थे श्यन् वा स्यात् रे परे। क्रम्यति।

---

ञिङ् च ईयङ् च आयश्च ते ञिङीञकारौ वृद्ध्यर्थः ङकार आत्मनेपदार्थः। ईय-ङीङकार आत्मनेपदार्थोऽगुणार्थश्च। अर्थाविशेषेण विधानात् स्वार्थे स्युः। यथा कामयते ऋतीयते गोपायति गोपायते धूपायति धूपायते पणायति पणायते पनायति पनायते आयान्तत्वादुभयपदं वक्ष्यति॥५९१॥

विषयसप्तमीयं तेन ध्यामेव सिप्रभृति प्रत्ययः सम्भाव्यते इति टीविभक्त्युत्पत्तेः प्रागेव आदेशास्ततो धातुसंज्ञायां टीप्रभृति विभक्त्युत्पत्तिः। अगोपायीदिति आयान्तत्वेन धातुसंज्ञायां धात्वन्तरत्वान्नित्यमिम्। पक्षे अगोपीत् अगौप्सीदिति ऊदित्वान्नेम्। अनिम्पक्षे वृद्धिः। गोपायामासेति प्रत्ययान्तत्वादाम्। एवं गोपाय्यते गुप्यते गोपायति गोपययति इत्यादि॥५९२॥

ष्ठीवति क्लामति आचामति॥५९३॥

क्रमश्च क्लमश्च भ्रमश्च भ्राशश्च भ्लाशश्च त्रसश्च त्रुटश्च लषश्च यसश्च संयस् चेति तस्मात् क्रम्यति श्यनि परेऽपि दीर्घः इति गोविन्दभट्टः। तन्मते। क्राम्यति अतएव पठन्ति च इष्यते श्यनि दीर्घत्वं दाक्षिणात्यलक्षणवेदिभिः। तेन क्राम्यति कौमारे चानित्यस्योपलक्षणादिति। क्लाम्यति शमादित्वात् दीर्घं वक्ष्यति भ्रम्यति भ्रमति भ्राश्यते भ्राशते भ्लाश्यते भ्लाशते भ्राशभ्लाशौ तालव्यान्तौ दन्त्यादौ च त्रस्यति त्रसति

५६५। क्रमः पेऽपि र्घः।

क्रमः ६।, पे ७।, अपि ७।, र्घः १।।

क्रामति।

५६६। स्नु-क्रमोऽमेऽरवस्य इम्।

स्नु क्रमः ५।, अमे ७।, अरवसः ६।, इम् ।१।।

आभ्यां वसस्थारस्य इम् स्यान्न तु मे। अक्रमीत्।

[ ३० ] ओ यमु उपरमे।

५६७। स्था दान पा घ्रा घ्रा ध्मा म्ना र्त्ति दृश शत् सद्गमिष् यम जनां तिष्ठ यच्छ पिब जा जिघ्र धम मनर्च्छ पश्य शीय सीद गच्छेच्छ यच्छ जाः शिति।

स्था—जनां ६।।।, तिष्ठ—जाः १।।।, शिति ७।।

एषामेते क्रमात् स्युः शिति परे। यच्छति।

---

तुभ्यति तुटति पचौ तुदादित्वात् शः। लष्यति लषति यस्यति यसति अस्यादि संयस्यति अन्यत्र प्रयस्यति। श्नमः शित्त्वात्संज्ञायां ङिदपिद् इति ङित्वे तुभ्यती त्यत्र न गुणः नकारस्तु तुभ्यन्तीत्यादौ अप्यनी नित्यमिति गुणार्थः ॥५६४॥

क्रामति। पे किं प्रक्रमते ॥५६५॥

स्नुक्रमोर्नेममे इत्यनेनापीष्टसिद्धौ अमेऽरवस इति गौरवं ज्ञापयति क्रमधातो रनात्मनेपदे अरवसमात्रस्य नित्यमविधानात् क्वचिदिमो विकल्पेऽपि नित्यमिम् इति। तेनानुपसर्गस्य क्रमधातोर्वा गेरित्यात्मनेपदयोग्यत्वेमर्हात् क्रमोनेम त्ण इति इम्निषेधे नित्यानिमत्त्वात् प्राप्तव्यं सृजदृशीति विकल्पं बाधित्वा थपि चक्रमिथ इत्यत्र नित्यमिम्। अस्नावीत् अक्रमीत् स्नविष्यति क्रमिष्यति स्नवितव्यं क्रमितव्यं मे तु स्नोष्यते क्रंस्यते पचिक्रंसते सुस्नूषतीति तु नेमुगुड्ग्रहेति इम् निषेधात् क्रमः परस्य भावकर्मणोः क्तस्य आत्मनेपदस्य इम् स्यादिति दुर्गसिंह क्रमदीश्वरौ। यथा सनन्तस्य चिक्रमिष्यते ॥५६६॥

क्रमी यथा स्था तिष्ठति दान यच्छति दा इत्युक्तौ दासंज्ञाग्रहणेन डुदाञि

**५९८। यम रम नमातः पे सेरिम् सन् चैषाम्।**

यम—आतः ५।, पे ७।, सेः ६।, इम् ।१।, सन् ।१।, च ।१।, एषाम् ६।॥।

यमादेरादन्ताच्च सेरिम् स्यात् पे तेषाञ्च सन्। अयंसीत् अयंसिष्टाम्। [ ५८८ ] सृजदृशेति वेम्। येमिथ ययन्थ।

एवं [ ३१ ] णमौ शब्दनत्योः।

[ ३२ ] हय गतौ।

अहयीत् [ ५७६ ] यान्तत्वान्न व्रिः।

[ ३३ ] दल मि भेदे।

[ ५७४ ] व्रजवदेति व्रिः। अदालीत्।

[ ३४ ] ञि फला विसरणे।

फेलतुः फेलुः फेलिथ।

[ ३५ ] त्सर छद्मगतौ।

अत्सारीत्।

[ ३६ ] ष्ठिवु निरसने।

[ ५९३ ] ष्ठिवुक्लमेति घं। ष्ठीवति।

---

डुधाञ्जलि इत्येततयोः शपोलुक् करणात् अन्येषाञ्च असम्भवात् दान इत्यत्र नकारः सुखार्थ इति काशीश्वरः। वस्तुतस्तु डुदाञ्जलि दाने द ललूनावित्याभ्यां शपो लुकि कृतेऽपि शतृशानयोर्यच्छादेशनिवृत्त्यर्थः। पा पाने पिबति दानसाहचर्य्यात् पा इत्यपि भौवादिक एव। अन्यथा पाल रक्षणे इत्यस्य शतृशानयोः पिबादेशापत्तेः। ज्ञा जानाति घ्रा जिघ्रति ध्मा धमति म्ना मनति अर्त्तिरिति भौवादिकजुहोत्यादीर्योर्ग्रहणम्। तेन ऋ प्रापे ऋच्छति। ऋ लिंगत्यामित्यस्य तु तिबादौ शपो लुक् करणात् शतृशानयोर्ऋच्छादेशे इयृच्छन् इयृच्छानः। दृश पश्यति। शदॢजौशाते तालव्यादिः शीयते। षदॢजौशविषादे शरणे गतौ सीदति। गम गच्छति इषुशवाञ्छे इच्छति। भौवादिकयोर्गमयमयोर्मध्यवर्त्तित्वात् इषधातोः अकारमात्रावशिष्टे शिति इच्छादेशः तेन इषगाभीक्ष्ण्ये इष्णाति इष्य सर्पणे इष्यति। यम यच्छति।

## ५९९ । ष्ठिवजाद्यो: खेष्ठक्कोस्त वा ।

ष्ठि-व अजाद्यो: ६॥, खे: ६।, ठक्को: ६॥, त ।१।, वा ।१। ।

तिष्ठेव टिष्ठेव ष्ठीव्यात् ।

[ ३७ ] जि जये ।

## ६०० । जेर्गि: सन्-ठ्यो: ।

जे: ६।, गि: १।, सन् ठ्यो: ७॥ ।

जिगाय ।

[ ३८ ] रक्ष पालने ।

प्रनिरक्षति । षान्तत्वान्न [ ५४९ ] ण: ।

[ ३९ ] अक्षू व्याप्तौ ।

## ६०१ । वाक्ष-क्रशार्थतक्ष: श्नुर्घे रे ।

वा ।१।, अक्ष क्रशार्थ तक्ष: ५।, श्नु १।, घे ७।, रे ७। ।

आभ्यां रे परे श्नु: स्याद्वा घेऽर्थे। अक्ष्णोति अक्षति। [ ५८८ ] श्नुध्वोरित्युव अक्ष्णुवन्ति। [ ५७३ ] उदित्त्वादिम् वा आक्षीत्। [ २१३ ] स्यादेः सो लोप: ।

---

जनीभ्यङ्जनौ जायते। गमादिसाहचर्य्यात् रे परे जायमानो य: श्नित् तस्मिन्नेव जनो जादेश: तेन जन्मलिच इति जौहोत्यादिकस्य शतशानयोर्जादेशाभावे जज्ञत् व्यतिजज्ञान इति। ननु रे इत्यनेनैवेष्टसिद्धौ गतीति कथमिति चेत् न ऋर्लिंगत्या-मित्यस्य इयर्त्तीत्यादौ गपौ लुकि तिबादौ ऋच्छादेशापत्तेः ॥५९७॥

यथा अयंसीत् अयंसिष्टां व्यरंसीत् अनंसीत् अयासीत् गै अगासीत् ॥५९८॥

ष्ठिव् च अजादिश्च ष्ठिवजादी तयो:। ठ च क च ठक्कौ तयो: ष्ठिवधातो: खेष्ठकारस्य अजादिधातो: खेस्ककारस्य च तकार: स्याद्वा। यथा तिष्ठेव टिष्ठेव उक्कीशबन्धसमापने उतिक्कीषति। उचिक्कीषति ष्ठीव्यादिति व्यंनचतयीति दीर्घ: ॥५९९॥

जिगीषति जिगाय। जेस्तुवन्वीस्त्रिवन्तीति वक्तव्यम्। जयति रघुवंशतिलक: ।

## ६०२ । षढोः कः सि ।

ष-ढोः ६॥, कः १।, सि ७। ।

**षस्य ढस्य च कः स्यात् सकारे परे । आक्षीत् आचिष्टाम् आष्टाम्, आचिषुः आक्षुः ।**

एवं [ ४० ] तक्षू कार्श्ये ।

कृशार्थः किं, निर्भर्त्सने सन्तक्षति ।

[ ४१ ] णिक्ष चुम्बने ।

[ ४४९ ] प्रणिक्षति प्रनिक्षति ।

[ ४२ ] कृषी विलेखने ।

## ६०३ । कृष मृश स्पृश तृप दृप सृप सिर्घ्यां वा ।

कृष—सृपः ५।, सिः १।, घ्यां ७।, वा ।१। ।

**एभ्यः सिर्वा स्यात् घ्याम् ।**

---

जयन्ति यमुनाकूले रहः केलयः । तुपस्थाने तातङ् दृश्यते भावगम्यमनाः कोऽपि जयताद्वागगोचर इति हलायुधः ॥६००॥

कृशार्थशाखौ तच्च चेति कृशार्थतच्च । अचश्च कृशार्थतच्च चेति तस्मात् । तक्ष्णोति तक्षति काष्ठं तक्षा तनूकरोतीत्यर्थः । सन्तक्षति चौरं साधुर्निर्भर्त्सयतीत्यर्थः । धातूनामनेकार्थत्वात् सन्तक्षतिरिह निर्भर्त्सनार्थः ॥६०१॥

आक्षीदिति अनिम्पक्षेऽपि घ्यां सिः रुदाद्यस्तीति ईम् स्यादेः सीलोप इति कलोपे अनेन यस्य कौ क्षिलादिति षः । आष्टामिति अनिम्पक्षे झस्खादिति सिलोपे संयोगादेः कस्य लोपे ष्टुभिरिति तस्य टः । आक्षुरिति अनिम्पक्षे सेर्लोपे त्यलोपे त्यलक्षणमिति न्यायात् अन् उस् । प्रणिक्षतीति वालननिंसेत्यादिना णत्वं वा ॥६०२॥

कृषौ त्वाकृषि कृषञौ चेत्युभयं मृशशौ मृशि स्पृशशौ स्पृशि जिसृतृप्यू प्रीणने दृप्यूड्हर्षगर्वयोः सृसृपौ गत्याम् इत्येतेभ्यः सिर्वा स्यात् घ्याम् ऋकारस्य वृद्धौ अकार्षीत् सक्रि अकृक्षत् ॥६०३॥

## ६०४। वर्द्धोऽकिज्झसे दृशसृजोस्तु नित्यम्।

वा ।१।, ऋत् ।१।, र: १।, अकित् झसे ७।, दृश सृजो: ६॥, तु ।१।, नित्यम् १।

कृषादीनाम् ऋकारो र: स्याद्वा अकिज्झसे दृशसृजोस्तु नित्यम्। अक्राक्षीत्, अकार्क्षीत्।

## ६०५। हशषोऽनिमिजुङोऽदृश: सक् स्यां श्लिषस्त्वालिङ्गने।

ह-श-ष: ५।, अनिम् इजुङ: ५।, अ-दृश: ५।, सक् ।१।, स्यां ७।, श्लिष: ५।, तु ।१।, आलिङ्गने ७।।

अनिमिजुङो ह श षान्तात् दृशवर्जात् सक् स्यात् स्यां, श्लिषतेस्त्वालिङ्गनेऽर्थे। अकृक्षत्।

[ ४३ ] कृष हिंसायाम्।

## ६०६। वेम् सह लुभ भृ स्तु शुच वस त्वश कृष रिषिषो स्तोऽरस्य।

वा ।१।, इम् ।१।, सह—इषो: ५।, त: ६।, अरस्य ६।।

एभ्यस्तस्यारस्य इम् स्याद्वा। रोषिता रोष्टा।

एवं [ ४४ ] रिष हिंसायाम्।

---

वाशब्दस्य व्यवस्थावाचित्वात् सनि सृजदृशोर्ऋकारस्य रेफो न स्यादिति बोध्यम्। यथा दिदृक्षते सिसृक्षति। वा ग्रहणमुत्तरत्र निवृत्त्यर्थम् ॥ ६०४ ॥

हश्च-तालव्य-शश्च मूर्द्धन्यष चेति तस्मात्। नास्ति इम् यस्मात् सोऽनिम् इच् उङ् यस्य स इजुङ् अनिम् चासौ इजुङ् चेति अनिमिजुङ् तस्मात्। अनिमिजुङ इति हशषो विशेषणम्। नास्ति दृश् यत्र सोऽदृश् तस्मात्। अनिमिजुङ्-हान्तात्तालव्यशान्तान्मूर्द्धन्यषान्ताच्च दृश्‌वर्जात् सक् स्यात् स्याम्। श्लिष्यतेस्तु आलिङ्गनेऽर्थे इत्यर्थ:। यथा मिहो सिचि अमिक्षत् रुहो अरुक्षत् दिशशौच अदिक्षत् क्रुशजो अक्रुक्षत् स्पृशशो अस्पृक्षत् लिषौच भासि अलिक्षत् द्विषौ अद्विक्षत् कृषी अकृक्षत्। अत्र शस् प्रत्याहारो लिपिकरप्रमादकृत: अनिम्इजुङ् दन्त्यसान्तधातोरसम्भवात् आलिङ्गनन्तु प्रीतिपूर्वकवक्षोद्वयसंयोग:। अश्लिक्षत् युवतीं युवा ॥६०५॥

[ ४५ ] उष दाहे।

६०८। दरिद्राकासकाशजागुषो वाम् ठ्याम्।

दरिद्रा—ष: ५।, वा ।१।, आम् ।१।, ठ्याम् ७। ।

एभ्य आम् वा स्यात् ठ्याम्।

[ ५८३ ] भ्वस् कन्चाम इति ओषाम्बभूव उवोष।

[ ४६ ] शश प्लुतगतौ।

शशाश शशशतु: शशशिथ।

[ ४७ ] मिहौ सेचने।

[ ६०५ ] हशषोऽनिमिति सक्। ( १७५ ) ह्रोढ़ोभी अमिचत्।

[ ७७ ] ढ़ोढि घंयानुरिति, मेढ़ा।

[ ४८ ] दहौ भस्मीकरणे।

[ १७६ ] दादेर्घ:। [ १७७ ] भभान्तस्येति दस्य ध:। अधाक्षीत्।

[ ४९ ] चह कल्कने।

अचहीत [ ५७६ ] हान्तत्वान्न वि:।

[ ५० ] शुच शोके।

[ ६०६ ] शोचिता शोक्ता।

---

यथा सहिता सोढ़ा लोभिता लोब्धा भरिता भर्त्ता सविता सोता शोचिता शोक्ता वसलङ्स्तृतौ वसिता वस्ता तुलहत्यादौ तविता तोता अशग भोजने अशिता अष्टा रोषिता रोष्टा इषु शवाञ्छ एषिता एष्टा इषु गहणान् इषुगाभीक्ष्णा इष्यस्पर्णो इत्यनयोर्नित्यमेव ॥ ६०६ ॥

यथा दरिद्रामास ददरिद्र कास कुत्से कासाञ्चक्रे चकासे कासृङ् कुशब्दे काशामास चकाशे जागरामास जजागार ओषाम्बभूव उवोष। मेढ़ेति मिहौ सेचने अन्तरङ्गतरत्वादादौ गुणे होढोभाविति हस्य ढे ढभात्तयोरिति तकारस्य धे ष्टुभिरिति धस्य ढे ढ्रोढ्रीति ढस्य लोपे पूर्वह्रस्वाभावान्न दीर्घ: ॥ ६०७ ॥

[ ५१ ] ग्लै हर्षक्षये ।

### ६०८ । एचोऽशित्याः ।

एच: ६।, अशिति ७।, आ: १। ।

धोरेच आ: स्यादशिति । [ ५९८ ] यमरमेतोम् सनौ । अग्लासीत् ।

### ६०९ । णबातो डौः ।

णप् ।१।, आत: ५।, डौ: १। ।

आदन्तात् परो णप् डौः स्यात् । जग्लौ ।

### ६१० । उस्येचीम्यखराचि लोपः ।

उसि ७।, एचि ७।, इमि ७।, अखराचि ७।, लोप: १। ।

उसि एचि इमि अणोररस्याचि धोरातो लोपः स्यात् । जग्लतु: जग्लु: । जग्लिथ जग्लाथ ।

### ६११ । स्यादेर्ङऽस्थो वाव्यणौ ।

स्यादे: ६।, ङे ।१।, अस्थ: ६।, वा ।१।, व्यणौ ७। ।

स्यादेरादन्तस्य स्थावर्जस्य ङे स्याद्वा व्यणौ । ग्लेयात् ग्लायात् ।

अशितीति विषयसप्तमी तेनादौ आ: स्यात् । तत: प्रत्ययोत्पत्ति: । अतएव साम गायतीति सामग: इत्यत्र आदौ एचोऽशित्या: तत आदन्तात् हनजनाद्दमादेरिति ड: । अरे इत्यनेनैवेष्टसिद्धौ अशितीति कथम् इति चेन्न ग्लै कर्म इत्यस्य यङ्लुकि ख्यां जाग्लायात् इत्यादौ ऐकारस्य आकारानुपपत्ते: ॥ ६०८ ॥

ददरिद्रौ इति सिद्ध्यर्थं डौकरणमिति रामतर्कवागीश: । इदमतीव हास्यास्पदं बहुव्याकरणविरुद्धत्वात् ग्रन्थकारेण दरिद्र आलोप इति सूत्रं कृत्वा णपि ददरिद्र इति स्वयमुदाहृतत्वाच्च । वस्तुतस्तु डौकरणं क्वचिदेकपदेऽपि सन्धिर्न स्यादिति सूचनार्थं तेन चालनी तितउ: पुमानित्यमर: ॥ ६०९ ॥

नास्ति णर्यस्मिन् सोऽण: अणश्चासावरश्चेति अणर: तस्याच् अखराच् तस्मिन् । यथा अपमु: गार्लिसुतौ व्यतिजगे जग्लिथ अनडि: अणो: किं स्थानम् अरस्य किं आन्ति अचि किं ख्यात: ॥ ६१० ॥

[ ५२ ] गै शब्दे ।

**६१२ । दा मा गै हाक पिव सो स्थोऽरहसे त्वयपि ङी ।**

दा—स्थ: ६।, अरहसे ७।, तु ।१।, अयपि ७।, ङी ।१।।

एषां व्यणी ङे स्यात् अरहसे त्वणी यप् वर्जे ङी स्यात् । गेयात् ।

[ ५३ ध्यै संहतौ ध्वनौ ।

ध्यायति ।

[ ५४ ] दैप शोधने ।

[ ५३४ ] पित्वान्न दासंज्ञा । अदासीत् । दायात् ।

[ ५५ ] धेट पाने ।

[ २५७ ] ट ईवर्थः ।

---

न च परसूत्रे स्थाग्रहणेनैव इह तस्याप्राप्तौ स्थावर्जनं कथमिति वाच्यम् । परसूत्रे स्थाग्रहणस्य अरहसे त्वयपिङीति शेषरीतिसम्बन्धेनैव सार्थकत्वे संयोगाद्यादन्तत्वेन स्थाधातोरनेन व्यणौ ङे विकल्पापत्तेः । ध्येयात् ध्यायात् प्रेयात् प्रायात् स्येयात् स्नायात् ॥ ६११ ॥

समस्तस्यासमस्तेन नित्याकाङ्‌क्ष्य सङ्गतिरिति न्यायादणावित्यस्य ङीसम्बन्धस्यापि अरहसे इत्यनेन सम्बन्धः । अथवा यादृग्‌जातीयस्य प्रतिषेधो विधिरपि तादृग्‌ जातीयस्येति न्यायात् यप्-वर्जनेनैव अणाविति लभ्यते दा इति संज्ञा देयात् धेयात् दीयते धीयते दैप शोधने इत्यस्य दायात् दायते मास्वरूपं तेन माङ्माने मेयात् मीयते माङ्लिशब्दे माङ्यच मेङ प्रतिदाने एषां मीयते । गेयात् गीयते हेयात् हीयते हाकग्रहणात् हाङ्लि हायते पेयात् पीयते पिवग्रहणात् पाल पै इत्येतयोः पायात् पायते सो इति सोय नाशे । मेयात् मीयते स्थेयात् स्थीयते । यपि तु प्रदाय प्रमाय इत्यादि । अत्र अयप्रेहसे तु ङी इति कृतेऽपीष्टसिद्धौ अरहसे त्वयपीङीति कृतं तस्य क्वचिन्नित्यत्वज्ञापनार्थं तेन हानिरित्यत्र न ङी । ट ईवर्थः इति । तेन स्तनन्धयीत्यादि ॥ ६१२ ॥

**६१३। ञि श्रि स्रु द्रु कमोऽङ् घे ण्यां श्वि धेट ध्वन्येल्यर्द्दिजनेस्तु वा।**

ञि—कम: ५।, अङ्।१।, घे ७।, ण्यां ७।, श्वि-धेट-ध्वनि-एलि-अर्द्दि-जनेः ५।, तु।१।, वा।१।।

अन्तादिभ्यश्चामङ् स्यात् घेऽर्थे श्वादेस्तु वा। (५५८) धुर्द्दिष्ठरङीति, अदधत्।

**६१४। धेशाच्छासाघ्रः सेः पे लुग्वा।**

धे—घ्रः ५।, सेः ६।, पे ७।, लुक्।१।, वा।१।

अधात् अधासीत्।

[५६] पा पाने।

[५९७] स्थादानेति पिव। पिवति। [५५२] भूस्था पिवेति सेर्लुक्। अपात् पेयात्।

[५७] घ्रा गन्धोपादाने।

जिघ्रति। अघ्रात् अघ्रासीत्।

[५८] ध्मा शब्दाग्निसंयोगयोः।

धमति। अध्मासीत्।

[५९] ष्ठा गतिनिवृत्तौ।

तिष्ठति। अष्ठात्। नितष्ठौ। स्थेयात्।

[६०] म्ना अभ्यासे।

मनति।

[६१] दा-न दाने।

प्रणियच्छति। प्रण्यदात्। देयात्।

---

ञिश्च श्रिश्च स्रुश्च द्रुश्च कमः चेति तस्मात्। श्विश्च धेटश्च ध्वनिश्च एलिश्च अर्द्दिश्च जनिश्चेति तस्मात्। यथा अबीभवत् अशिश्रियत् असुस्रुवत् इत्यादिः। अदुद्रुवत्

[ ६२ ] ह्वृ कौटिल्ये।

## ६१५। स्याद्यर्त्यृतो गुर्यङ्यक् ठीढाणौ स्कुस्तु ठाम्।

स्यादि-अर्त्ति-ऋतः ६।, गुः १।, यङ्-यक्-ठीढ्यणौ ७।, स्कुः ६।, तु ।१।, ठाम् ७।।

स्यादेरर्त्तेॠकारस्य गुः स्यात् यङि यकि ठीढ्योरणौ च, स्कुस्तु ठामेव। जह्वरतुः।

## ६१६। नेम्ऋतस्थपोऽवृस्कुः।

न ।१।, इम् ।१।, ऋतः ५।, थपः ६।, अ-वृ-ऋ-स्कुः ५।।

वृ ऋ स्कु वर्जात् ऋकारान्तात् थप इम् न स्यात्। जह्वर्थ।

---

अचकमत् अशिश्वियत् अश्वयीत् व्रजवदेत्यत्र ञिश्वि वर्जनात् न त्रिः। अदधत् अधासीत्। ध्वनिरिति मि ध्वन रवे इत्यस्य घटादिपचे कृतङ्खस्य ध्वनत् क तु शब्दे इत्यदन्तस्य च ग्रहणम्। अदिध्वनत् अध्वनयीत्। इल ऐलयीत् ऐलिलत् अर्द आर्दयीत् आर्दिदत् ऊनिरित्यदन्तचुरादिः औनिनत् औनयीत् ॥ ६१३ ॥

धेट पाने शोय निशाने छोय लूनौ सोय नाशे घ्रा गन्धग्रहणे एभ्यः सेर्लुक् स्याद्वा परस्मैपदे। अधात् अधासीत् अशात् अशासीत् अच्छात् अच्छासीत् असात् असासीत् अघ्रात् अघ्रासीत्। पिबतीति पिबादेशस्य अदन्तत्वात् न गुः लोपोऽतो इत्यकारलोपः। न्यहादिति भूस्था पिबेति सिलुक् गीकः स्तुस्तुभेत्यत्र अस्यपीति षत्वम्। नितष्ठाविति दशस्यादेरिति खिव्यवधानेऽपि षत्वम् ॥ ६१४ ॥

स्यादिश्च अर्त्तिश्च स्याद्यर्त्तौ तयोॠत् स्याद्यर्त्यृत् तस्य। नास्ति णो यस्मिन् सोऽणः ठीढ्योरणः ठीढ्यणः। यङ् च यक् च ठीढ्यणश्चेति तस्मिन्। अत्र ठाणाविति ठीसाहचर्य्यात् कित्ठीढीषमित्यनेन कित्संज्ञस्य ढीपरस्मैपदस्यैव ग्रहणम्। तेन स्तृनञ्स्तृतावित्यस्य स्याद्यृद्वृदुरिति वेमत्वे स्तृषीष्ट इत्यादौ इगुङ्ढीति आत्मनेपदस्य कित्त्वेऽपि अनेन गुणो न स्यात् स्कुरिति ससुम्कृञ इत्यर्थः। यथा सास्मर्य्यते स्मर्य्यते सस्मरतुः स्मर्य्यात्। अर्त्तेस्तु अरार्य्यते अर्य्यते आरतुः अर्य्यात्। स्कुस्तु सञ्चस्करिव। अत्र अर्त्तेः साहचर्य्यात् स्यादेरिति ऋदन्तस्यैव ग्रहणम्। तेन स्पृशभौ परीस्पृश्यते स्पृश्यते पस्पृशतुः स्पृश्यात् एषु न गुणः ॥ ६१५॥

६१७। स्यस्यर्द्धनः।

स्यस्य ६।, ऋत्-हनः ५।।

ऋदन्त हन्तिभ्यां स्यस्य इम् स्यात्। स्वरिष्यति।

[६३] स्वृ ऊ शब्दोपतापयोः।

[५७२] वेमूदितोम् वा अस्वारीत् अस्वार्षीत् सस्वरिथ सस्वर्थ।

[६४] स्तृ गतौ।

६१८। वक्तयस्य ख्या लिप सिच ह्वो ङो घे स्यां सस्तु वा लिब्भ्यस्तु मे।

वक्ति-ह्वः ५।, ङः १।, घे ७।, स्यां ७।, सः ५।, तु ।१।, वा ।१।, लिब्भ्यः ५।॥, तु ।१।, मे ७।।

वक्त्यादेर्घेऽर्थे ङः स्यात् स्यां, सृऋभ्यान्तु वा लिपादेस्तु मे वा स्यात्।

---

स्वश्च ऋश्च स्वश्च ते, न विद्यन्ते स्वऋस्वरो यत्र सोऽस्वस्वः तस्मात्। यथा गम्ल-सेके जगर्थ जघर्थ स्वादेस्तु ववरिथ नेमसुमित्यादिना स्वधातौ छीमावस्य इम् निषेधेऽपि अत्र स्वग्रहणात् थप इम्। ववरिथ सञ्जस्वारिथ वेमूदिदित्यत्र स्वरग्रहणज्ञापकात् स्वृऊशब्दोपतापयोरित्यस्य सस्वरिथ सस्वर्थ इति स्यादेव॥ ६१६॥

करोतीत्यादीनां नेमिकाजिति निषेधादप्राप्तौ स्वृऊशब्दोपतापयोरित्यस्य वेमोऽपि नित्यार्थं विधानम्। करिष्यति स्वरिष्यति हनिष्यति॥ ६१७॥

वक्तिरिति वच्लौ वाचि। अस इति असु इर् क्षेपे। वक्तिश्च एसश्च ख्याश्च लिपश्च सिचश्च ह्वाश्च तस्मात्। सृश्च ऋश्च स तस्मात्। लिब्भ्य इति बहुवचनं गणार्थम्। तेन लिपसिचह्वाभ्य इत्यर्थः। यथा अवोचत् आस्थत् अस्यतेः परस्मैपदे ङः सिद्ध एव इहोपन्यासस्तु आत्मनेपदप्राप्त्यर्थः। तेन गोर्वास्योहोढे चेत्यात्मनेपदे निरास्थत आख्यत् अलिपत् असिचत् अह्वत् असरत् आरत् हृश्रोर्णुरिति णः पक्षे असार्षीत् आर्षीत् लिपादेस्तु अलिपत अलिप्त असिचत असिक्त अह्वत अह्वास्त॥ ६१८॥

## ६१९ । ह्रस्वोर्गुः ।

ह्रस्वोः ६॥, गुः १। ।

ह्रस्वेकर्वर्णान्तस्य च गुः स्यात् ङे । असरत् असार्षीत् ।

## ६२० । ऋद्रिः शयकङीपे ।

ऋत् ।१।, रिः १।, श-यक्-ढी-पे ७। ।

स्त्रियात् ।

[ ६५ ] ऋ गतौ ।

ऋच्छति । आरत् आर्षीत् । आर, आरतुः, आरिथ । अर्य्यात् ।

[ ६६ ] श्रु श्रवणे ।

## ६२१ । श्रोः श्नुर्घे रे जिश्च ।

श्रोः ५।, श्नः १।, घे ७।, रे ७।, जिः १।, च ।१। ।

श्रुवो घेऽर्थे श्नुः स्यात् रे, श्रुवश्च जिः । शृणोति शृणुतः शृण्वन्ति ।

## ६२२ । नूपोऽस्यस्योल्लोपो म्मि वा ।

नूपः ६।, अस्यस्य ६।, उल्लोपः १।, म्मि ७।, वा ।१। ।

अस्यस्य नोरुपश्च उकारस्य वा लोपः स्यात् वमयोः परयोः । शृण्वः शृणुवः शृण्मः शृणुमः ।

[ ५४७ ] हेर्लोपोऽस्योति, शृणु शुश्रुव ।

---

अदर्शत् आरत् अजरत् ॥ ६१९ ॥

शश्च यक् च ढीपश्च तस्मिन् । आद्रियते क्रियते क्रियात् । आरतुरिति स्याद्यर्च्छृत इति गुः । आरिथेति सृजदृशीत्यत्र ऋवर्जनात् न वेम् । अर्य्यादिति स्याद्यर्च्छृत इति गुः ॥ ६२० ॥

शृण्वन्तीति ष्टुर्ण इति णत्वं श्नुध्वोरिति वः ॥ ६२१ ॥

नुश्च उप् चेति तस्य । न स्योऽस्यः तस्य । उत लोपः उल्लोपः । व च म च ग्म तस्मिन् शृण्वः शृणुवः शृण्मः शृणुमः तन्वः तनुवः तन्मः तनुमः शृणोमि तनोमीत्यादौ लोपस्वरादेशयोः स्वरादेशविधिर्बलवानिति न्यायात् गुण एव । संयुक्तनुपोस्तु आप्नुवः आप्नुमः तणदुञ भचे नोम्युङोर्णवेति गुणे तर्णुवः तर्णुमः शुश्रुवेति नेमसुमिति नियमात् न इम् ॥ ६२२ ॥

[ ६७ ] सु गतौ।

## ६२३। सुस्तुधोः सेरिम् पे।

सु स्तु-धोः ५।, से: ६।, इम् ।१।, पे ७।।

असावीत्। सुषविथ सुषुविव। सविता सोता।

[ ६८ ] स्रु गतौ।

[ ६१३ ] श्रिश्रीत्यङ्। असुस्रुवत्। सुस्रोथ सुस्रुव।

[ ६९ ] दु गतौ।

अदावीत्, अदौषीत् दुदुविव।

[ ७० ] द्रु गतौ।

अदुद्रुवत्। दुद्रुव।

[ ७१ ] गम्लृ गतौ।

गच्छति [ ५६५ ] लिदित्त्वात् ङः, अगमत्। जगाम।

(२३०) हनगमेत्युङ्लोपः, जग्मतुः जग्मुः। जगमिथ जगन्थ।

## ६२४। गमोऽमे स इम् मार्हात्तु वा।

गमः ५।, अमे ७।, सः ६।, इम् ।१।, मार्हात् ५।, तु ।१।, वा ।१।।

**गमः परस्य सस्य इम् स्यात् न तु मे, मयोग्यात्तु वा। गमिष्यति।**

---

वेमूदित्यनेन वेमत्वे नित्यार्थं सुग्रहणम्। एकाजुदन्तत्वेन निषिधे स्तु धोर्ग्रहणम्। असावीत् अस्तावीत् अधावीत् पे किम्? असोष्ट असविष्ट अस्तोष्ट अधोषाता रुदसुनीस्त्वव्या इत्युक्तेः सुषुविव सुषविथ उभयत्र नित्येम् सोता सविता इति वेम्। श्रुश्रोथेति नेममुमिति नियमेन सृजदृशेत्यस्य बाधितत्वात् नेम्। रुदसुनीस्त्वव्या इत्युक्तेः अदावीत् अदौषीत् दुदुविव दुद्रुव इति नेमस्तुमिति नियमात् नेम्। जगमिथ जगन्थेति सृजदृशेति वेम्॥ ६२३॥

गमिष्यति जिगमिषति जिगमिषुः मे तु गंस्यते ग्रामस्तेन। मम् आत्मनेपद-मर्हतीति मार्हः। समो गम्यृच्छेत्यादिना आत्मनेपदविधानात् सञ्जिगमिषुः सञ्जिगंसुः। मार्हात् सेपं वा इत्येके सङ्गंस्यते सङ्गमिष्यति असृपदिति लृदित्त्वात् ङः। क्षमम्रशेति सौ वर्द्धोऽकिदिति वृद्धी वा असासींत् असासीत्॥ ६२४॥

[ ७२ ] स्यम्ॢ गतौ ।

असाषीत् असार्षीत् असृपत् ।

[ ७३ ] स्कन्दिरौ गति-शोषणयोः ।

**६२५ । विस्कभ्ना-निर्व-वि-सु-निर्दुः स्वपः सः षो, निनिर्वि स्फुर स्फुल परिविस्कन्दाऽप्राणि-घ-निपरिनिर्व्यभ्यनु-स्यन्दस्तु वा ।**

विस्कभ्ना—स्वपः ६।, सः १।, षः १।, नि-निर्-स्यन्दः ६।, तु ।१।, वा ।१। ।

विस्कभ्नातेर्व-वर्ज-व्यादिपूर्वस्य स्वपश्च सः षः स्यात् न्यादि-पूर्व-स्फुर-स्फुलोः परि-वि-स्कन्दतेः अप्राणिघ-न्यादिपूर्वस्य स्यन्दतेश्च स्याद्वा । परिष्कन्दति परिस्कन्दति ।

[ ७४ ] तॄ प्लवन-तरणयोः ।

**६२६ । ऋतो णुः कित् ठ्याम् ।**

ऋतः ६।, णुः १।, कित्-ठ्याम् ७। ।

तेरतुः ।

---

वेःस्कभ्ना विश्च सुश्च निर् च दुर् च तेभ्यः स्वप् निर्गतौ वौ यस्य स निर्व निर्वश्चासौ विसुनिर्दुः स्वप् चेति निर्वविसुनिर्दुः स्वप्विस्कभ्नाश्च निर्वविसुनिर्दुः स्वप् च तयोः । निश्च निर् च विश्च ते तेभ्यः स्फुरस्फुलौ निनिर्विस्फुरस्फुलौ परि-विभ्यां स्कन्द परिविस्कन्दः निश्च परिश्च निर् च विश्च अभिश्च अनुश्च ते तेभ्यः स्यन्द निःपरिनिर्व्यभ्यनुस्यन्द अप्राणी घो यस्य सोऽप्राणिघः स चासौ निपरि-निर्व्यभ्यनुस्यन्द चेति अप्राणिघनिपरिनिर्व्यभ्यनुस्यन्द निनिर्विस्फुरस्फुलौ च परि-विस्कन्दश्च अप्राणिघनिपरिनिर्व्यभ्यनुस्यन्द चेति । तस्य । यथा विष्कभ्नाति । निस्फुलति निष्फुलति, एवं निर्विभ्याम् । परिस्कन्दति परिष्कन्दति विष्कन्दति विस्कन्दति निष्यन्दते निस्यन्दते घृतं क्षरतीत्यर्थः । एवं परि निर् वि अभि अनुभ्यः । अप्राणिघः किं निस्यन्दते हस्ती मदं मुञ्चतीत्यर्थः ॥ ६२५ ॥

किच्चासौ ठी चेति कित् ठी तस्याम् । तेरतुरिति अनेन गुणे तॄफलेति अकारस्य एकारः खिलोपश्च । दीर्घ ऋतः इति किम् ? चक्रतुः ॥ ६२६ ॥

## ६२७। वृतो वेमो घींऽठीढीपसि:।

वृ-ऋत: ५।, वा ।१।, इम: ५।, घं: १।, अ-ठी-ढी-प-सि ६।।

वृङो वृञ ऋदन्ताच्च इमो घं: स्याद्वा, न तु ठ्या: ढ्या: पसेश्च।
तरीता तरिता। ठीढीपसिस्तु तेरिथ। तरिषीष्ट, अतारिष्टाम्।

## ६२८। ऋदिरणावुर्वोष्ठ्यात्।

ऋत् ।१।, इर् ।१।, अणौ ७।, उर् ।१।, तु ।२।, ओष्ठ्यात् ५।।

ऋकार इर् स्यादणौ, ओष्ठ्यात् परस्तु उर्। तीर्य्यात्।

[ ७५ षन्जौ ञि सङ्गे।

## ६२९। षन्जदन्शष्वन्जोऽपि न लोप:।

षन्ज-दन्श-ष्वन्ज ६।, अपि ७।, न लोप: १।।

निषजति। न्यषाङ्क्षीत् निषषञ्ज ससजतु: ससञ्जतु:।

[ ७६ ] दृशिरी प्रेक्षणे।

पश्यति। अदर्शत्। [ ६०४ ] वद्रोऽकिदिति। अद्राक्षीत्।

[ ५८९ ] सृजदृशोऽलोम् वा, ददर्शिथ दद्रष्ठ।

[ ७७ ] दन्शौ दंशने।

अदाङ्क्षीत्।

---

वृश्च ऋच वृत् तस्मात्। पे सि: पास: ठी च ढी पसिश्चेति न ठीढीपसि: अठीढीपसि: तस्य। वृ इति वृञोर्ग्रहणं वरिता वरीता वरिष्यते वरीष्यते तरीता तरिता। ठीढीपसिस्तु ववरिथ वरिषीष्ट अवारिष्टातां तेरिथ तरिषीष्ट अतारिष्टाम् ॥ ६२७ ॥

णौरित्यनेनैवेष्टसिद्धौ ओष्ठ्यादिति कृतं दन्त्यवकारस्यापि प्राप्त्यर्थम्। तेन वृणोते: सनि वुवूर्षतीत्यत्र घींऽज् झनिङ् गमामिति दीर्घे ओष्ठ्यपरत्वादुर्। तीर्य्यादिति व्यन्यचतयीति दीर्घ:। एवं तीर्य्यते तितीर्य्यति तेतीर्य्यते निस्तीर्य्य ओष्ठ्यात्तु पॄ पूर्य्यात् वृगि वूर्य्यात् भृगि भूर्य्यात् मृगि मूर्य्यात्। दन्त्यवात्तु वृगिञ वूर्य्यात्। ओष्ठ्यादिति धात्ववयवादेव। तेन सम्पूर्वस्य ऋगि गत्यामित्यस्य समीर्य्यादित्येव ॥ ६२८ ॥

[ ৭৮ ] কিত নিবাসে রোগাপনয়নে সংশয়ে চ।

৬৩০। কিত্তিজ্‌গুপঃ সন্নেম্ মান শান দান বধস্তু খের্ভী চ।

কিত্-গুপঃ ৫।, সন্ ।১।, ন ।১।, ইম্ ।১।, মান—বধঃ ৫।, তু ।১।, খেঃ ৬।, ভী ।১।, চ ।১।।

কিতাদেঃ সন্ স্যাৎ ইম্ ন স্যাৎ, মানাদেস্তু খের্ভী চ।
ক্রমাদ্বেতেঽস্ব সন্দেহে ক্ষান্তিনিন্দাবিচারণে।
নিশানার্জবনিন্দাসু রুগ্‌জয়েঽপি কিতো মতঃ॥

---

সন্‌জৌক্নি সঙ্গে দন্‌শস্বরূপং ষ্বন্‌জৌঞিঙালিঙ্গে এষাং নস্য লোপঃ স্যাদপি পরে। এথ্যোঽপ্কিদিত্যনেনৈবেষ্টসিদ্ধৌ শপ্যেষাং নলোপবিধানং কথমিতি চেৎ ন। দশিকঙ্‌ দর্শে ইতি ইদনুবন্ধাত্মনেপদিচুরাদের্ণেরানিত্য ... দশতে ইত্যাদৌ শপঃ কিত্ত্বেঽপি ইদিৎ ধাতোর্নলোপনিষেধে নলোপানুপপত্তেঃ। চুরাদের্ণেরনিত্যত্ববীজং ধাতুদীপিকায়াম্ অকিক্‌লক্ষণীত্যত্র দ্রষ্টব্যম্। স্বজতি দশতি স্বজতে নিষজতি গৌক ইতি ষত্বং ন্যষাঙ্‌ক্ষীদিতি অনিমত্বাৎ বৃদ্ধিঃ অভ্যপীতি ষত্বং নিষষঞ্জ ইতি দশস্যাদেরিতি দ্বয়োঃ ষত্বম্। সসজতুঃ সসঞ্জতুরিতি স্যাৎ ঠাপিদিতি কিৎ পক্ষে ন লোপঃ। অদর্শাদিতি ইরিত্বাৎ ঙ ইয়োরিতি গুঃ। অদাঙ্‌ক্ষীদিতি অনিমত্বাৎ বৃদ্ধিঃ অভ্যপীতি ষত্বম্॥ ৬২৯॥

কিত্ সংশয়েচ্ছাবাসারোগ্যেষু তিজঙ্ ক্ষান্তৌ নিশানে গুপঙ্ গোপনকুৎসয়োঃ মানঙ্ বিচারেঽর্থে শানঙ্ ক্ষান্তৌ নিশানে দান পার্জবে ছিদি বধঙ্ নিন্দে বন্ধে। ক্রমাদ্বেতেঽবেতি। অত্র সন্ বিধানে এতে কিতাদয়ঃ সপ্ত ক্রমাৎ সন্দেহাদিসপ্তস্বর্থেষু মতাঃ। কিতো রুগ্ জয়েঽপি মতঃ। কিত সন্দেহরুগ্‌জয়য়োঃ। তিজঙ্ ক্ষান্তৌ গুপঙ্ নিন্দায়াং মানঙ্ বিচারণে শান অনিশানে দানঙ্ আর্জবে বধঙ্ নিন্দায়ামিত্যর্থঃ। সন্দেহো বিরুদ্ধানেককোটিবিষয়জ্ঞানং তত্রাকর্ম্মকঃ শাস্ত্রে চিকিৎসতি কাবঃ রুগ্‌জয়ো রোগপ্রতীকারঃ। চিকিৎসত্যাতুরং বৈদ্যম্। ক্ষান্তিঃসহনং তিতিক্ষতে দুঃখং তপস্বী। নিন্দাদোষবত্তয়াখ্যানং জুগুপ্সতে ব্যাধং সাধুঃ। বিচারণম্ ইদমিত্থং ন বেতি প্রমাণানুসন্ধানম্। মীমাংসতে ধর্ম্মং ধীরঃ। নিশানং তীক্ষ্ণকরণং শীশাংসতি খড়্গং কর্ম্মকারঃ। আর্জবমকুটিলীভাবঃ দীদাংসতি সাধুরকুটিলো স্যাৎ

## ६३१। सन्-ञ्रादिर्धुः।

सन्-ञ्रादिः १।, धुः १।।

**सनन्तो ञ्राद्यन्तश्च धुसंज्ञः स्यात्।**

## ६३२। सन्यङन्तो द्विः।

सन्-यङ्-अन्तः १।, द्विः १।।

**चिकित्सति। अचिकित्सीत् चिकित्सामास।**

**इति पवत्-पादः।**

---

इत्यर्थः। निन्दा उक्ता वीभत्सते व्याधं साधुः। सन्देहादिभ्योऽन्येष्वर्थेषु केतति इत्यादि स्यादिति वोपदेवः। तेषु तिबादयो न प्रयुज्यन्ते क्तप्रत्यया एवेति केचित्। कङ्कणझनत्कारञ्च किं गोपसे इत्यादयोऽपि दृश्यन्ते ॥ ६३० ॥

ञ्रादिश्च ञि सन् यङ् काम्यक् क्य ड्य क्ति इति सप्त। यथा रोचयति बुभूषति बोभूयते पुत्रकाम्यति ज्ञानीयति कृष्णायते कृष्णाति ॥ ६३१ ॥

सन् च यङ् च सन्यङौ तावन्ते यस्य स सन्यङन्त इति तद्गुणसंविज्ञानबहुव्रीहौ सन्यङ्समेतो द्विः स्यात्। यथा बुभूषति बोभूयते। अजादेस्तु आदिवर्णं हित्वा द्वित्वे अटिटिषति अटाट्यते एवं इष गतौ इषिषिषति उषङ् शब्दे उषिषिषते। कदाचित्तद्गुणसंविज्ञानबहुव्रीहौ केवलो धातुरपि द्विः। तेन मोचते इत्यत्र सनं हित्वा मुचधातोर्द्वित्वे मुचोऽदेर्मोच् वेति मोचादेशः। चिकित्सतीति कित् सन् अनेन इम् निषेधे गुर्नानिमीति वक्ष्यमाणात् गुणनिषेधे चिकित्स इति भागस्य धातुसंज्ञायां द्वित्वादि तिप्शपौ च चिकित्सानारीति त्यान्तत्वादाम् ॥ ६३२ ॥

पवतां परस्मैपदिनां पादः प्रकरणमित्यर्थः।

इति पवत्-पादः।

---

[ ७९ ] एधङ वृद्धौ।

एधते। ऐधिष्ट। एधाञ्चक्रे।

[ ८० ] ददङ दाने।

[ ५७९ ] अग्रथददेत्युक्तेः, दददे।

[ ८१ ] ष्वक्क ङ सर्पणे।

[ ५६९ ] अ-ष्ठ्यै ष्वक्केत्युक्तेः, ष्वक्कते। षष्वक्के।

[ ८२ ] ऋज ङ आर्ज्जवे। आनृजे।

[ ८३ ] तिजङ क्षमा-निशानयोः।

तितिक्षते।

[ ८४ ] ष्वन्जौ ङ सङ्गे।

निष्वजते।

६३३। निविपरिस्वन्जस्तु सुमादेः सः षोऽमि वा।

नि सुमादेः ६।, सः ६।, षः १।, अमि ७।, वा।१।।

न्यष्वङ्क्त। न्यस्वङ्क्त। सस्वजे सस्वञ्जे।

---

ष्वक्कङ। अष्ठ्यै ष्वक्केत्युक्तेर्न दन्त्यादेशः। ष्वक्कते षष्वक्के पिष्वक्किषते षाष्वक्क्यते। चतुर्भुजस्तु इमं पञ्चमस्वरिणं मत्वा षुक्कते षुषुक्के षुषुक्किषते षुषुक्क्यते इत्युदाहरति। निष्वजते इति स्वन्जदन्शेति नलोपे गौक इति षत्वम्॥ ६३२॥

सुम् आदिर्यस्य स सुमादिः। स्वन्जश्च स्तुश्च सुमादिश्चेति। निविपरिभ्यः स्वन्जस्तु सुमादिः निविपरिस्वन्जस्तु सुमादिः सुमादिश्च गौक इति सूत्रे पठिताः सुमागम् सिवसहः निविपरिभ्यः परेषामेषां सस्य षः स्यात् वा अम् व्यवधाने। न्यष्वङ्क्त न्यस्वङ्क्त व्यष्टावीत् व्यस्तावीत् पर्य्यष्कार्षीत् पर्य्यस्कार्षीत् न्यषेवीत् न्यसेवीत् व्यषहत व्यसहत। सस्वजे इत्यादि स्यात् व्यपिदिति कित् पक्षे न लोपः॥६३३॥

## ६३४ । सत्स्वञ्जोष्ट्यां नाखेः ।

सद्-स्वञ्जोः ६॥, ष्यां ७, न ।१।, अखेः ६। ।

खिवर्जस्यानयोः सः षो न स्यात् ष्यम्। विषस्वजे विषस्वञ्जे ।

[ ८५ ] त्रपूषङ् लज्जायाम् ।

अत्रपिष्ट अत्रप्त । त्रेपे ।

[ ८६ ] जभङ् जम्भने ।

## ६३५ । नुण् जभोऽचि ।

नुण् ।१।, जभः ६।, अचि ७। ।

अजम्भिष्ट ।

[ ८७ ] ष्टुभङ् स्तम्भे ।

विष्टोभते व्यष्टोभिष्ट ।

[ ८८ ] पणङ् व्यवहारे स्तुतौ च ।

[ ५९१ ] कम ऋतेत्यायः । पणायते ।

## ६३६ । सनः षमे धोर्वा त्वायात् ।

सनः ५।, षमे १॥, धोः, ६।, वा ।१।, तु ।१।, आयात् ५। ।

पणायति पणायते । अपणायिष्ट अपणिष्ट । पणायाञ्चक्रे पेणे ।

---

सद् च स्वन्ज च सद्स्वन्जौ तयोः न खिरखिः तस्य अखेः । विषसाद विषस्वजे ।
ष्यामिति किं विषाष्वज्यते इत्यादौ दशस्यादेरित्युक्तेरुभयोः षत्वम् ॥६३४॥

जभो नुण् स्यात् अचि परे प्रकरणबलात् जभङ् जम्भ इत्यस्यात्मनेपद एवेति बोध्यम् । जम्भते अजम्भिष्ट जम्भनं जम्भः जभि जभ जभने इत्यस्य परस्मैपदिनस्तु जभति जभिष्यति जभनम् । विष्टोभते मीक इति षत्वं व्यष्टोभिष्टेति अस्यपीति षत्वम् ॥६३५॥

सनः सनन्तात् मूलधातोः सम्बन्धिनौ षमे स्याताम् । यथा बुभूषति पिस्पर्द्धिषते चिकीर्षति चिकीर्षते आयात्तु वा पणायति पणायते आयस्यजानुबन्धेनैवेष्टसिद्धौ

## ६३७। विच्छास्तुतिपणो वायः।

विच्छ—अस्तुतिपण: ५।, वा।१।, आय: १।।

**पणायते पणते।**

**एवं [ ८९ ] पन ङीड़े।**

**[ ९० ] कमुङ कान्तौ।**

**कामयते। [ ६१३ ] ञन्तत्वादङ्।**

## ६३८। ञ्यङुङः स्वोऽनग्लोपि शास्वृदितः।

ञ्यङि ७।, उङ: ६।, स्व: १।, अनग्लोपि—शासु ऋदित: ६।।

**अनग्लोपिनः शासोऋकारेतश्चान्यस्य उङः स्वः स्यात् ञेः परे अङि परे।**

---

आयात् तु वेति कृतं वृद्धेरप्राप्त्यर्थं फलवत् कर्त्तरि परस्मैपदार्थमफलवत् कर्त्तर्य्यात्मनेपदार्थञ्च ॥६३६॥

न स्तुतिरस्तुतिः अस्तुतौ पण् अस्तुति पण् विच्छश्च अस्तुति पण् चेति तस्मात्। विच्छश्च गतावित्यस्मादस्तुत्यर्थमूर्द्धन्यान्तपणश्चाय: स्याद्वा। स्तुतिवर्जनात् व्यवहारार्थे इत्यर्थः। व्यवहारश्च क्रयविक्रयस्वरूपः। विच्छायति विच्छायते विच्छति पणायते पणायति पणते। एवं पन इति पनङीड़ इति दन्त्यान्तस्यापि काम ऋत इत्याद्ये पनायति पनायते इत्यादिकं बोध्यमित्यर्थः ॥६३७॥

ञेः परोऽङ् ञ्यङ् तस्मिन्। अकी लोपः अग्लोपः सोऽस्यास्तीति अग्लोपी। ऋत् इत् यस्य स ऋदित्। अग्लोपी च शासुश्च ऋदिच्चेति न अग्लोपिशास्वृदित् अनग्लोपिशास्वृदित् तस्य। यथा अपीपठत् अदीदवत् अबूबुधत्। अग्लोप्यादेस्तु। कूटल्कदाहे मन्त्रे इत्यदन्तात् चुर्य्याञिरिति ञौ हसाल्लोप इत्यकारलोपे अग्लोपित्वात् न ह्रस्वः अचुकूटत् अशशासत् अडुढौकत्। ओणृ अपसारणे इत्यस्य ऋदनुबन्धो ज्ञापयति ञ्यङि आदौ ह्रस्वः पश्चात् द्वित्वमिति। अन्यथा आदौ द्वित्वे दीर्घोङीऽभावादेव ह्रस्वासम्भवे ऋदनुबन्धो व्यर्थः स्यादिति। मा भवान् ओणिणत् अतएव मा भवान् अटिटत् इट मा भवान् इटिटत् उष मा भवान् उषिषत् इत्यादीनां ञौ आदौ वृद्धौ गुणे वा कृते अनेन ह्रस्वे पश्चात् द्वित्वे मायोगादमागमाभावे तद्रूपेण स्थितिरिति। अत्र केवलेऽङि दीर्घोङीऽभावादेव ञेः परेऽङीति लब्धव्ये ञिग्रहणं

## ६३९। खेः सन्वद्धौ घोर्हसादेर्घश्च, ल्यनेकाचोस्त्वकलिहलेर्वा।

खेः ६।, सन्वत् ।१।, घौ ७।, घोः ६।, हसादेः ६।, घः १।, च ।१।, ल्यनेकाचोः ६॥, तु ।१।, अकलिहलेः ६।, वा ।१। ।

**अनग्लोपिनः खेर्घौ ध्वचरे परे सन्वत् कार्य्यं स्यात् अग्डि, घोश्च खेर्हसादेः घः स्यात्, कलि-हलि-वर्जस्य लेः अनेकाचश्च सन्वत् वा स्यात्।**

---

सामान्यार्थम्। तेन वादितवन्तं प्रयोजितवान् अवीवददीणां गायनेन राजा इत्यत्र पुनर्ञौ कृते पूर्वञेर्लोपेऽपि अनग्लोपित्वात् ह्रस्वः स्यादेव इति काशीश्वरः। वस्तुतस्तु केवलेऽङि उक्तौ परत्वानुवृत्तौ अचकमत इत्यत्रापि सन्वत् भावाद्यापत्तिः॥६३८॥

सन् इव सन्वत् लिश्च अनेकाच्च तौ तयोः कलिश्च हलिश्चेति कलिहलि न कलिहलि अकलिहलि तस्य। अनग्लोपि शास्वृदितो अनुवृत्तावपि खेः परस्य शास्वृदितोर्लघोरसम्भवात् चकास्तृङ् दीप्तावित्यस्य ऋदितोऽपि अनेकाच्त्वात् विशेषेण विकल्पेन बाधितत्वात् अनग्लोपिन इत्येव व्याख्यातम्। ञेः परेऽङ्परे सति अनग्लोपिधातोः खेः सन्वत् कार्य्यं स्यात् खेः परे लघुधात्वचरे सति। तत्रैव यदि हसादेर्धातोः खिर्लघुर्भवति तदा तस्य दीर्घश्च स्यात्। कलिहलिवर्जस्य लेरनेकाच्धातोश्च खेर्लघुधात्वचरे परे सन्वत् कार्य्यं स्याद्वा। सन्वद्भावपक्षे हसादिसम्बन्धी खिर्यदि लघुर्भवति तदा घः स्यादित्यर्थः। अत्र केवलस्य लघोरसम्भवात् लघुयुक्तस्य हसो ग्रहणम्। यथा अपीपचत् असीषिचत् अमुमूहत् अचीकरत्। अग्लोपिनस्तु कलत्कगतिसंख्ययोः। अचकलत्। घौ ध्वचरे किं अररम्भत्। हसादेः किं औन्दिदत्। लघोः खेः किं ध्वन अदिध्वनत्। लेस्तु कृतयति अचीकृतत् अचकृतत्। कविमाख्यातवान् अचीकवत् अचकवत् पटुमाख्यातवान् अपीपटत् अपपटत् कलिहलिवर्जनात् लेरग्लोपित्वेऽपि स्यात्। इवर्णो वर्णाभ्यामन्यस्य लिङ्गस्य सन्वद्भावो नास्तीति कौमराः। कलिहल्योस्तु अचकलत् अजहलत्। अनेकाचस्तु अचीचकासत् अचचकासत्॥६३९॥

६४० । ख्यस्येत् सनि ।

ख्यस्य ६।, इत् ।१।, सनि ७। ।

खेरवर्णस्य इत् स्यात् सनि परे ।

६४१ । ञेर्लोपोऽनाल्विष्णाय्यान्तेत्वामिम्शिति ।

ञे: ६।, लोप: १।, अनालु—शिति ७। ।

आलु इष्णु आय्य अन्त इत्नु आम् इम् शित् एभ्योऽन्यत्र ञेर्लोप: स्यात् ।

अचीकमत अचकमत । कामयाञ्चक्रे चकमे ।

[ ६१ ] अयङ गतौ ।

आयिढ्वम् आयिध्वम् आयिद्वम् । अयाञ्चक्रे ।

एवं [ ६२ ] दयङ् गतौ ।

[ ६३ ] स्फायीङ् वृद्धौ ।

अस्फायिष्ट ।

---

खेर: ख्य: तस्य ॥६४०॥

आलुश्च इष्णुश्च आय्यश्च अन्तश्च इत्नुश्च आम् च इम् च शिच्च ते। न विद्यन्ते ते यत्र स: तस्मिन् यथा भाव्यते बोध्यते इत्यादिषु यकि ञेर्लोपे त्यलोपे त्यलक्षण-मिति न्यायात् वृद्धिगुणौ स्त एव। आल्वादौ तु स्पृहयालु: कारयिष्णु: स्पृहयाय्य: मण्डयन्त: स्तनयित्नु: कारयामास कारयिष्यति कारयति अचीकमतेति कम ञिङ् वृद्धि: कामि इत्यस्य धातुसंज्ञा तन् अङ् ञ्यङुङ् इति ह्रस्वे कमि इत्यस्य द्वित्वे मि इत्यस्य लोपे कस्य च खे: सन्वदिति सन्वत्त्वात् ख्यस्येत् सनीति अकारस्य इकारे घोश्च खेर्हसादेर्घश्चेति तस्य दीर्घेऽनेन ञेर्लोप: अचकमतेति वारे इति ञिङोऽप्राप्तिपक्षे ञिश्रीत्यङ्। अयङ् गतौ अयधातौ परे निर्दु: प्रतिवर्जस्य उपसर्गस्य रेफो ल स्यादिति वक्तव्यम्। प्लायते पलायते पल्ययते निर्दु: प्रतीनान्तु निरयते दुरयते प्रत्ययते। आयिढ्वमिति अयध्वं ध्यां सि: इम् धे: स लोपो वा टीठीढीध इति धस्य ढो वा पक्षे तद्रूपस्थिति:। सस्य स्थितिपक्षे झप्झसोरिति सस्य द:। अयाञ्चक्रे विंजादीत्याम्। अस्फायिष्टेति वेमूदितीम् वा ॥६४१॥

६४२। य्वोर्लोपो हस्यये।

य्वोः ६॥, लोपः १।, हसि ७।, अये ७।।

अस्फास्त।

[ ८४ ] ओ प्यायी ङ् वृद्धौ।

६४३। पदस्तनीण् घे प्याय ताय दीप पूर जन बुधस्तु वा।

पदः ५।, तनि ७।, इण्।१।, घे ७।, प्याय—बुधः ५।, तु ।१।, वा ।१।।

पदो घेऽर्थे इण् स्यात् तनि, प्यायादेस्तु वा।

६४४। इणस्तन् लोप्यः।

इणः ५।, तन्।१।, लोप्यः १।।

अप्यायि अप्यायिष्ट अप्यास्त।

६४५। प्यायः पीर्यङ् ठ्योः।

प्यायः ६।, पीः १।, यङ्-ठ्योः ७॥।

पिप्ये।

[ ८५ ] तायृङ् सन्तानपालनयोगतौ च।

अतायि अतायिष्ट।

---

य च व च य्वौ तयोः। वकारो दन्त्यः। अस्फास्तेति अनिम् पचे यलोपः। एवं स्फाता प्याता। दिव्यु यङ्लुकि ऊटो अप्राप्तिपचे देदेति देदितः हसि किं स्फायते सेवते अये किं पलाय्यते दीव्यति॥ ६४२॥

णित्वात् वृद्धिः। अपादि अप्यायि अप्यायिष्ट अतायि अतायिष्ट अदीपि अदीपिष्ट अपूरि अपूरिष्ट अजनि अजनिष्ट अबोधि अबुद्ध॥ ६४३॥

इण इति सामान्यार्थं तेन रतनोर्यगिणावित्यनेन कृतादिणोऽपि तनो लोपः। ननु तन्स्थाने इण् करणेनैवेष्टसिद्धौ तनि परे इणं कृत्वा तल्लोपविधानगौरवं कथमिति चेत् सत्यं तत्स्थाने इणि कृते स्यां सेरापत्तिः तनस्थाने जातत्वेन ङित्त्वात् अबोधीत्यादौ गुणाभावश्च॥ ६४४॥

[ ९६ ] शलङ चलने।

अशालिढ्वम् अशालिध्वम् अशालिड्ढम्।

[ ९७ ] षेवृङ सेवने।

परिषेवते, न्यषेविष्ट, विषिषेवे। प्रतिसेवते।

[ ९८ ] काशृङ दीप्तौ।

काशामास चकाशे।

एवं [ ९९ ] काशृङ कुशब्दे।

[ १०० ] ईहङ चेष्टायाम्।

ऐहिढ्वम् ऐहिध्वम् ऐहिड्ढम्।

[ १०१ ] रुङ वधे गत्याम्।

अरविष्ट अरोष्ट। रुरुविषे।

[ १०२ ] टेङ पालने।

६४६। द्वे टेङो टिगिष्ठ्याम्।

द्वेः ६।, टेङः ६।, टिगिः १।, ठ्याम् ७।

द्विरुक्तस्य टेङो टिगिः स्यात् ठ्याम्। टिग्ये।

[ १०३ ] ओडीङ नभोगतौ।

अडयिष्ट।

---

पिप्से ग्रुध्वोरिति यः। यङि पेपीयते यङ्लुकि पेपेति पेपीतः अशालिढ्वमित्यादि धे सलोपपक्षे ढो वा पक्षे ससः दः। परिषेवते परिनिविसेविति षत्वम्। न्यषेविष्टेति अस्यपीति षत्वम्। विषिषेवे इति दशस्यादेरिति षत्वम्। पष्यः किं प्रतिसेवते काशामासेति दरिद्राकाशेत्यामि असोऽनुप्रयोगे वक्तव्यात् आत्मनेपदस्य परस्मैपदादेशः। ऐहिढ्वमित्यादि सुगमम् अरोष्टेति रुदुसुनोस्त्वठ्या इति इमोऽभावपक्षे लोपस्वरादेशयोस्तु स्वरादेशो विधिर्बलवानिति न्यायादादौ गुणे ह्रस्वपरत्वाभावान्न सिलोपः। रुरुविषे इति रुङ् ठ्याः से द्वित्वं रुदुसुनोरिति ठीवर्जनात् नेमसुमिति नियमेन नित्यमिम् ग्रु ध्वोरित्युव्॥ ६४५॥

[ १०४ ] गुपङ गोपन-कुत्सनयोः। जुगुप्सते।

[ १०५ ] मानङ विचारे। मीमांसते।

[ १०६ ] बधङ निन्दायाम्। बीभत्सते।

[ १०७ ] द्युतङ ल्ट दीप्तौ।

[ ५६५ ] द्यासुलिद्युदिति ङः तेनैव पम्। अद्युतत् अद्योतिष्ट।

## ६४७। द्युत्स्वाप्योः खेर्जिः।

द्युत्-स्वाप्योः ६॥, खेः ६।, जिः १।।

दिद्युते। [ १०८ ] वृतङ व्ल्ट वर्त्तने।

## ६४८। वृद्भ्यो नेम् पे स्यसनोर्वा त्वमे।

वृद्भ्यः ५॥, न ।१।, इम् ।१।, पे ७।, स्य-सनोः ६॥, वा ।१।, तु ।१।, अमे ७।।

वृतादेः स्य-सनोः इम् न स्यात् पे, मादन्यत्र तु वा। अतएव पम्। वर्त्स्यति। मे तु, वर्त्तिष्यते।

[ १०९ ] स्यन्दूङ व्ल्ट चरणे।

निष्यन्दते निस्यन्दते घृतम्। निस्यन्दते हस्तीति प्राणिघत्वान्न षः।

---

सुगमम्। जुगुप्सत इति कित्तिजेति सन्। बीभत्सत इति बधस्तेनैव सनि खेर्डौं च झभान्तस्येति बस्य भः। द्युतङ् तेनैव पमिति द्युतादेष्टीपेङ्विधानसामर्थ्यात् ङ्यामुभयपदमित्यर्थः॥ ६८६ ॥

द्युतो ञ्यन्तस्वपश्च खेर्जिः स्यात्। दिद्युते दिद्योतिषते देद्युत्यते सुष्वापयिषति असूषुपत्॥ ६४७ ॥

बहुवचनं गणार्थम्। अतएव पमिति वृतादेरात्मनेपदिनः परस्मैपदे स्यसनोः इम् निषेधादेव स्यसनोरुभयपदित्वमित्यर्थः। यथा वर्त्स्यति विवृत्सति। मे तु वर्त्तिष्यते विवर्त्तिष्यते। मादन्यत्र तु विवर्त्तिषा विवृत्सा विवर्त्तिषुः विवृत्सुः विवर्त्तिषितव्यं विवृत्सितव्यम्। वृतादिश्च वृतुर्विधुः शृधुः स्यन्दूः कृपूः पञ्च वृतादयः। निष्यन्दते घृतमिति अप्राणिघत्वात् षत्वं वा। निस्यन्दते हस्तीति प्राणिघत्वान्न षः॥ ६४८ ॥

[ ११० ] क्रपूङ ल्ङ कल्पने ।

**९४९ । क्रपः क्लृपोऽक्रपादौ ।**

क्रपः ६।, क्लृपः १।, अक्रपादौ ७।।

क्रपः स्थाने क्लृपः स्यात् न तु क्रपादौ । कल्पते ।

**९५० । नेम् पे डत्राः ।**

न ।१।, इम् ।१।, पे ७।, त्राः ६।।

क्रपो त्रा इम् न स्यात् पे । अतएव पम् । कल्प्ता ।
किं कल्पिता कल्प्ता, कल्प्स्यति, मे तु कल्पिष्यते कल्प्स्यते ।

[ १११ ] व्यथ षङ् पीड़ायाम् ।

**९५१ । व्यथ-ग्रह-ज्या-वय-व्यध-वश-व्यच-प्रच्छ-व्रश्च-भ्रस्ज स्वप-वच-यजादेः खेर्जिंठ्याम् ।**

व्यथ-यजादेः ६।, खेः ठ्याम् ७।।

एषां खेर्जिः स्यात् ठ्याम् । विव्यथे ।

[ ११२ ] जि त्वरा षङ् स्वरे ।

अत्वरिढ्वम् अत्वरिध्वम् अत्वरिद्वम् ।

इति सवत् पादः ।

---

क्रपः स्थाने क्लृपः स्यात् न तु क्रपादौ पदे साध्ये । क्रपादिर्यथा क्रपा क्रपाश्च क्रपश्च कर्पटश्च क्रपः क्रपी ॥ ९४९ ॥

अत्रापि अतएव परस्मैपदमिति बोध्यम् । ततश्च द्युतादेष्यामुभयपदित्वं वृतादेर्द्युताद्यन्तर्गणत्वात् ठ्यां स्यसनोश्च उभयपदित्वम् । क्रपस्तु द्युतादित्वात् ठ्यां वृतादित्वात् स्यसनोः नेम् पे डत्रा इत्यनेन डत्राश्च उभयपदित्वम् । अन्यत्र सर्वं एवात्मनेपदिनः ॥ ९५० ॥

व्यथश्च ग्रहश्च ज्याश्च वयश्च व्यधश्च वशश्च व्यचश्च प्रच्छश्च व्रश्चश्च भ्रस्जश्च स्वपश्च वचश्च यजादिश्चेति तस्य । एषां खेर्जिः स्यात् ठ्याम् । विव्यथे जग्राह जिज्यौ उवाय वय इह वेञ स्थाने वयादेशः । तस्य च वेञ स्थाने जातत्वेनैव जौ

# चतुर्थपादः—मिश्रः ।

[ ११३ ] पतॣ जग गत्यैश्वर्य्ययोः ।

६५२ । वच्यस्य-श्वि-पतां वोचस्थ-श्व पप्ता ङे ।

वचि-अस्य-श्वि-पतां ६।॥, वोच अस्थ-श्व-पप्ताः १।॥, ङे ७। ।

एषामेते क्रमात् स्युर्ङे । अपप्तत् ।

[ ११४ ] णजटु वम उद्गिरणे । वेमतुः ववमतुः वेमिथ ववमिथ ।

[ ११५ ] भ्रमु जण चलने ।

( ५८४ ) क्रमक्लमेति श्यन् वा । भ्राम्यति भ्रमति । भ्रेमतुः बभ्रमतुः ।

[ ११६ ] षह जङ शक्तौ ।

व्यषहत व्यसहत । [६०६] वेमसहेतोम् वा । परिषहिता ।

---

सिद्धे इह ग्रहणं ठ्यां नते प्रच्छामिति जि निषेधस्य बाधनार्थम् । विव्याध उवाश विव्याच पप्रच्छ वव्रश्च बभ्रज्ज । ग्रहप्रच्छव्रश्चभ्रस्जां खिजौ क्ते भ्रमखथेति ऋकारस्याकारे जेः फलाभावेऽपीह ग्रहणं ग्रहादिगणार्थम् । तेन गृह्यते पृच्छ्यते वृश्च्यते भृज्ज्यते इत्यादिषु ग्रहस्वपाद्योरिति जिः । सुष्वाप उवाच स्वप साहचर्य्यात् वच इह अदादिको ग्राह्य इति जौमराः । इयाज । ठ्यां किं वा व्यथ्यते । यजादिस्तु 'यजिर्वपिर्वहिश्चैव वेञ्व्येञौ ह्वयतिस्तथा । वदिर्वश्चि श्वयतिश्चैते नव यजादयः । अलरिद्धमित्यादि धे सत्रोपपचे ढौ वा पचे शस्य दः ॥ ६५१ ॥

इति भवत्पादः ।

---

वचिश्च अस्यश्च श्विश्च पत् च ते तेषां वोच च अस्थश्च श्वश्च पप्तश्च ते । वचिरिति अदादिक एव भौवादिकात् ङप्राप्त्यभावात् अस इति दिवादिक एव अन्यस्मात् ङप्राप्त्यभावात् । अपप्तदिति लृदित्वात् ङे अनेन पप्तादेशः गदनदेति णत्वम् । एवम् अवोचत् आस्थत् अश्वत् । वेमतुरित्यादि जॄवमभ्रमेति एत्वं खिलोपश्च वा व्यषहत इत्यादि निविपरिस्यन्जेति वा षत्वम् ॥ ६५२ ॥

## ६५३। सहवहोऽदो ढि।

सह-वहः ६।, अत् ।१।, श्रो ।१।, ढि ७।।

सहवहोः अकार श्रो स्यात् ढे परे। निसोढ़ा। [ ५७२ ] श्रोत्वान्न षः।

[ ११७ ] षद लृ जौ विषादे गतौ।

निषीदति। न्यषदत्। निषसाद। प्रतिस्तु। प्रतिसीदति।

[ ११८ ] शद लृ जौ शाते।

## ६५४। शदोऽपि मम्।

शदः ५।, अपि ७।, मम् १।।

शीयते। अशदत्। [ ११६ ] फण मिण गतौ।

फेणतुः पफणतुः, फेणिथ पफणिथ।

[ १२० राजृ ञ ण दीप्तौ।

रेजतुः रराजतुः, रेजे रराजे। [ ५७६ ] विधिबलाद्रातोऽप्येत्वम्।

एवं [ १२१ ] टुभ्राशृ ङ ण दीप्तौ।

भ्राश्यते भ्राशते। भ्रेशे बभ्राशे।

एवं [ १२२ ] टुभ्लाशृ ङ ण भासि।

[ १२३ ] ष्वन ण शब्दे।

विष्वणति अवष्वणति मांसम्। व्यष्वणत् विष्वेणतुः विषष्वणतुः। विस्वनति वीणा निस्वनति अन्नम्। [ ५७२ ] अन्नव्यवेत्युक्तेर्न षः।

[ १२४ ] खनु अविदारे।

[ २३० ] हनगमेत्युङ् लोपः, चख्नतुः चख्ने।

---

सुगमम्। निसोढेति केमसहेत्यनिम पक्षे होढोभाविति हस्य ढेऽनेनाकारस्य श्रोत्वं ढभात्तथोरिति तस्य धे ष्टुयिरिति धस्य ढे ढोढ़ीति ढस्य लोपे श्रोत्वान्न षत्वम्। एवं सोढव्यः। वोढा वोढव्या। ६५३॥

## ६५५। खन-सन-जनां ङा झसे, ये तु वा।

खन-सन-जनां ६।॥, ङा ।१।, झसे ७।, ये ७।, तु ।१।, वा ।१।।

खायात् खन्यात्। [१२५] चायृ ञ निशाने अर्च्चे।

अचायीत् [६४२] यूो लीप इति। अचासीत्।

[१२६] लषञ स्पृहायाम्। लष्यति लषति।

[१२७] गुहू ञ संवरणे।

## ६६५। गुहो णोरूः।

गुहः ६।, णोः ६।, ऊः १।।

गुहो णोरूः स्यात्। गूहति गूहते। अगूहीत् अघुक्षत्।

---

शदृलजौ शाते इत्यस्मादव्विषये मं स्यात् यस्यां विभक्तौ शप् सम्भवति तवा त्मनेपदमित्यर्थः। शीयते शीयेत अशीयत। अपि किम्? अशदत् शशाद शत्ता शद्यात् शत्स्यति अशत्स्यत्। फेणतुरित्यादि फणादित्वात् एत्वं खिलोपश्च वा। विधिबलादित्यादि राजृञ् ण प्रभृतीनां फणादिपाठबलादाकारस्यापि एत्वं खिलोपश्च इत्यर्थः। भाश्यत इति क्रमक्रमेति श्यन् वा। भेशे इति फणादित्वात् खिलोपादि र्वा। अवभ्रणतीति विधानबलादकारात् परस्यापि षत्वम्॥ ६५४॥

खनश्च सनश्च जन श्च ते तेषाम्। एषां ङा स्यात् झसे ये तु वा। खातः सातः जातः। खायते खन्यते सायते सन्यते जायते जन्यते। अत्र वाशब्दस्य व्यवस्थावाचित्वात् पिति झसे परे न स्यादिति बोध्यम्। तेन यङ्लुकि चङ्कन्ति चङ्कंसि संसन्ति संसंसि जञ्जन्ति जञ्जंसि एवं वाशब्दस्यानुक्तसमुच्चयार्थत्वात् तनोतेर्ङा स्यात् वा यकि इति बोध्यम्। तायते तन्यते। तथा च तदूरीकृत्य कृतिभि र्वाचस्पत्यं प्रतायते इति माघः। अचायीदिति वेमूदिदितीम् वा पचे यूो- र्लोप इति यलोपः। लष्यतीति क्रमक्रमेति श्यन् वा॥ ६५५॥

कृति गुह्यं गोह्यमित्युदाहरता अचि परे एवायं विधिरिति ज्ञापितम्। गूहति गूहिता गोढा गूहिष्यति घोक्ष्यति अतएव गुहो ङ्दिचीति जौमराः। अघुचदिति वेमूदिदित्यत्र वाशब्दस्य गुहः सेरिमोविलचणविकल्पार्थत्वात् से: अनिम् पचे सिरेव न स्यात् अनिमत्वात् सगेव॥ ६५६॥

## ६५७। गुह-दुह-दिह-लिहां टीमदन्त्ये न सिः सक् वा।

गुह-दुह-दिह-लिहां ६।॥, टीमदन्त्ये ७, न।१।, सिः १।, सक्।१।, वा।१।।

एषां टीमदन्त्ये परे सिर्न स्यात्, सक् च वा स्यात्। अगूढ़ अघुक्षत।

## ६५८। सकोऽल्लोपोऽच्यव्वे।

सकः ६।, अत्-लोपः १।, अचि ७, अव्वे ७।

सकोऽकारस्य लोपः स्यात् अव्वे अचि परे।

अगूहिषि अघुक्षि। अगुह्वहि अघुक्षावहि। दन्त्ये किम्, अगूहिष्महि अघुक्षामहि। अव्वे किम्। अगूहिषत अघुक्षन्त।

---

ट्या सं टीसं टीमि दन्त्यष्टीमदन्त्यः तस्मिन्। लिहामिति परत्र जनिष्यमाणत्वेन सम्बन्धौ यः सिः स न स्यात् एतेन सेर्जाततुल्यत्वाभिधानात् इपौ न प्रसङ्गः अकृद्दतौ विप्रतिषेधौ यद्वाधितं तद्बाधितमेवेति न्यायादित्यर्थः। अन्यथा पञ्चम्यैव सिद्धे षष्ठ्या वैयर्थ्यं स्यात्। सिर्नित्यं निषिध्यते हशश्वेति विहितः सक् च विभाष्यते इत्यर्थः। अगूढ इति इम् पक्षे सेर्निषेधे अरवसाभावादिमोऽभावे होढ़ौभाविति ढभात्तथोरिति ढ्रौढ्रि घ्रेति। अघुक्षतेति तनि अनिम् पक्षे सकि हस्य ढे झभान्त-स्येति गस्य घे षढोः कः से इति ढस्य के किलादिति षत्वम्। एवम् अदुग्ध अधुक्षत अदिग्ध अधिक्षत। अलीढ़ अलिक्षत। एवञ्च थास् ध्वम् वहिष्वपि यथा-योग्यमुदाहर्त्तव्यम्। किञ्च प्रत्ययत्वेन दन्त्यवकारादेर्वहेः प्राप्त्यर्थमेव दन्त्योपादानं कृतम् अन्यथा टीमतौ इत्युक्तावपीष्टसिद्धेः॥ ६५७॥

अतो लोपः अल्लोपः न ध्वम् अध्वं तस्मिन्। अघुक्षि इति गुह इ सक् होढ़ौभौ झभान्तस्येति गस्य घः षढोः कः से षत्वम् अनेन सकोऽल्लोपः इम् पक्षे अगूहिषीति बोध्यम्। अगुह्वहीति गुह वहि सेर्निषेधे सकोऽप्यप्राप्तिपक्षे वकारस्य दन्त्यत्वेन झसत्वाभावात् होढ़ौभाविति न ढः। पक्षे सकि आत्तिमभवीति आत्वे अघुक्षावहीति दन्त्यः किम् अघुक्षामहीति दन्त्यपरत्वाभावात् गुहदुहदिहलिहां इत्यस्याप्राप्तौ वेमत्वादनिम् पक्षे हशषोऽनिमिजुङ इत्यनेन सकि आत्तिमभवीति आत्वम्। इम् पक्षे तु अगुहिष्महि इति बोध्यम्। अध्वे किं गुह अन्त हशष इति

[१२८] ह्वञ ह्वत्याम् ।

## ६५६ । इगुङ्मंढीस्यनिम् किद्गमस्तु वा ।

इगुङ: ५।, म-ढीसि ।१।, अनिम् ।१।, कित् ।१।, गम: ५।, तु ।१।, वा ।१।।

इगुङ ऋवर्णान्ताच्च परा मे स्थिता अनिम् ढी सिश्च कित् स्यात्, गमस्तु वा । अह्वत अह्वषाताम् । ह्वषीष्ट ।

[१२९] टुडु भृञ भरणे । बभृव ।

[१३०] दान ञ आर्जवे छिदि । दीदांसति दीदांसते ।

एवं [१३१] शान ञ तेजे । शीशांसति शीशांसते ।

[१३२] भजी ञ भागसेवयो: । भजते । भेजे भेजिथ बभक्थ ।

[ १३३ ] श्रि ञ सेवायाम् ।

[ ६१३ ] ञिश्रीत्यङ् अशिश्रियत् श्रयिता ।

[ १३४ ] रनुजौ ञ रागे ।

## ६६० । रनुजोऽपषकानासघ्णिनौ नलोपो ञौ तु मृगरमणे ।

रनुज:६।, अप् षक-अन-अस्-घ्णिनौ ७।, न-लोप: १।, ञौ ७।, तु ।१।, मृगरमणे७। ।

रजति रजते । ररजतु: ररञ्जतु: ।

---

यकि लोपोऽतोऽद्वेचोरित्यकारलोपे अघुचन्त इति । अकारेऽवश्यलोपस्येऽपि अत्वे इति क्रुतं ज्ञापयति । लोपोऽस्योमाङ्गोरिति लोपोऽतोऽद्वेचोरिति हसाल्लोपोऽशित्ययोरित्येतेभ्योऽन्यसूत्रेण अकारलोपस्य स्थानिवत्त्वं नास्तीति तेन लुगङ्गोऽप-इत्यादिना अकारलोपे स्थानिवत्त्वानङ्गीकारात् मास्नोऽदनत इत्यव प्रवृत्तौ दुह्वते दिह्वते लिह्वते इत्यादि सिद्धमिति ॥६५८॥

इक् उङ्-यस्य स इगुङ् । इगुङ् च ऋश्च इगुङृ: तस्मात् । ढी च सिश्चेति मे ढीसि मढीसि । नास्ति इम् यस्य सोऽनिम् इति मढीसेर्विशेषणम् । यथा ञधौ भिदिर् भित्सीष्ट अभित्त बुध्यौङ भुत्सीष्ट अबुद्ध सृज्यौङ् सृक्षीष्ट असृष्ट डुकृञ् कृषीष्ट अकृत । कृञगि हिंसे स्यात् गृदृह्वुरित्यनिम् पचे कीर्षीष्ट अकीर्ष्ट । गमस्तु सङ्गसीष्ट सङ्गंसीष्ट समगत समगंस्त । बभूवेति नेमस्वमिति इम् निषेध: । दीदां-

[ १३५ ] त्विषीञ कान्तौ। अत्विक्षत् त्विक्षोष्ट।

[ १३६ ] यजै ञौ देवार्च्चा दान-सङ्गतौ।

[ ६५१ ] व्यथग्रहेति जिः, इयाज।

६६१। ग्रहस्वपाद्योः कङिक्कितोर्जिः।

ग्रह-स्वपाद्योः ६॥, कङित्-कितोः ७॥, जिः १।।

ग्रहादेः किति ङिति, स्वपादेः, किति, जिः स्यात्।

ईजतुः ईजुः इयजिथ इयष्ठ।

[ १३७ ] डु वपौ ञे मुण्ड बीजोप्त्योः। प्रणुवाप।

( १३८ ) वहैञौ प्रापणे।

प्रण्यवाक्षीत्, अवोढ़। उवाह ऊहे।

---

सतीति क्तिजेति सन् खेर्ङ्गे च। भेजियेति स्तनटशेति वेम् अयितेति नेमे का-जेत्यत्र अिवर्ज्जनादिम्॥६५८॥

अप् च यकश्च अस् च ष्णिनिश्चेति तस्मिन्। यथा रजति रजको रजनं रजः रागी। ष्णिनिरिति क्तत्प्रत्ययो वक्तव्यः। अस्य घकारो जस्य गकारार्थः पूर्व-णकारो वृद्ध्यर्थः। शेष इकार उच्चारणार्थः। रञ्जनमिति ञग्न्तस्यैव। ररजतुरिति स्यात् ठापिदिति कित् पचे न लोपः। अत्विक्षदिति त्विषो ञभासे इग्रशेति सक्। त्विक्षोष्टेति इगुङ्रिति कित्त्वान्न गुणः॥५६०॥

ग्रहश्च स्वपश्च ग्रहस्वपौ तावादी ययोस्तौ ग्रहस्वपादी तयोः। कङावितौ यस्य स कङित् कङिच्च किच्च कङिक्कितौ तयोः। स्वपग्रहाद्योः किदखोर्जिरिति कृतेऽपीष्टसिद्धौ कङिक्कितोरिति गौरवम् कथमिति चेन्न। अनिम्सनोऽगुणत्वे ज्याप्रभृतीनाम् अनिमां सनि जेरापत्तेः। वस्तुतस्तु सनोऽगुणत्वे ग्रहस्वपप्रच्छामिति नियमादन्येषामनिमि सनि जेः प्रसङ्गाभावः। गौरवं स्पष्टार्थम्। व्यथग्रहेति सूत्रे पठिता ग्रहादयः स्वपादयश्च। यथा गृह्यते गृह्णाति जीनः जीनाति विध्यते विध्यति उश्यते उशन्ति। व्यचस्तु तत्रोपादानं ज्यां खेर्जिप्राप्त्यर्थमेव। व्यचोजिर-ञिणदसीति अनेन ञित् णित् अस् एभ्योऽन्यत्र जेः कर्त्तव्यत्वात्। पृच्छ्यते पृच्छति वृश्च्यते वृश्चति भृज्ज्यते भृज्जति सुप्यते उच्यते इज्यते इत्यादि ईजतुरिति व्यथग्रहेति खेर्जिः अनेन मूलधातोर्जिः। इयजिथ सृजदृशेति वेम् अनिम् पचे ग्रच्छाजेति

[१३८] वेञ् स्यूतौ ।

## ६६२ । ल्यां न वे-प्रच्छाम् ।

ल्यां ७।, न ।१।, वे प्रच्छाम् ६॥ ।

वेञ् प्रच्छि व्रश्चि भ्रस्जीनां जिर्न स्यात् ल्याम् । ववौ ववतुः ।

## ६६३ । वेञो वय् वा ।

वेञः ६।, वय् ।१।, वा ।१। ।

वेञो वय् स्याद्वा ल्याम् । उवाय ऊयतुः ।

## ६६४ । य वः किति ।

य ।१।, वः १।, किति ७। ।

वेञो यस्य वः स्याद्वा ल्यां किति । ऊवतुः ।

[१४०] व्येञ् वृतौ ।

## ६६५ । ना व्येश्याम् ।

न ।१।, आ ।१।, व्येः ६।, ल्याम् ७। ।

व्येञ आ न स्यात् ल्याम् । विव्याय ।

---

अङ् । प्रणु वाप इति गदनदेति णत्वम् । प्रण्यवाचीदिति ह्लोढौ भ्रौ व्रजवदेति व्रिः गदनदेति णत्वम् । अवीढ़ेति वह तन् सिः औदित्वान्नेम् भसखादिति सेर्लोप: हस्य ढत्वे सहवह इति ओत्वे ढभात्तथोरिति तस्य धत्वे ष्टुभिरिति धस्य ढत्वे ढ्रौढ्रौ ति ढलोपः ॥६६१॥

वेश्च प्रच्छश्च वेप्रच्छः । प्रच्छ इति बहुवचनं गणार्थम् । तेन व्यथग्रहेति सूत्रे प्रच्छादयो ग्रहादिगणसमाप्तिपर्यन्ता इत्यर्थः । अत आह । प्रच्छि व्रश्चि भ्रस्जीनामिति । वेञ् निषेधेऽपि तदादेशस्य वयोर्जिर्न निषेधः । अन्यथा तत्र वयोग्रहणस्य वैयर्थ्यं स्यात् । ववौ इति वेञ एचोऽश्वित्या णप् व्यथग्रहेति प्राप्तव्यः खेर्जिर्न स्यात् नवातो डौ । ववतुरिति व्यथग्रहेति खेर्ग्रहस्वपाद्योरिति मूलधातो र्जिर्नाभूत् ॥६६२॥

उवाय व्यथग्रहेति खेर्जिः ऊयतुरिति व्यथग्रहेति खेर्ग्रहस्वपाद्योरिति मूलधातोश्च जिः ॥ ६६३ ॥

वेञो यस्यासम्भवात् तदादेशस्य वय एव यकारस्येत्यर्थः ॥ ६६४ ॥

६६६। जिं वान्त्यः किति।

जिं २, वा।१।, अन्त्यः १।, किति ७।

ह्वेर्व्येञोऽन्त्यो भागो जिं वा प्राप्नोति ठ्याम् किति।
विव्यतुः विव्ययतुः विव्ययिथ।

[१४१] ह्वेञ् स्पर्द्धायां शब्दे च। अह्वत् अह्वत अह्वास्त।

६६७। ह्वो द्वे जिः।

ह्वः ६।, द्वे ६।, जिः १।।

द्वे ह्वेञो जिः स्यात्। जुहाव जुहुवतुः। [१४२] ऐ वसौ निवासे।

६६८। स त् स्यरे।

स।६।, त्।१।, सि ७।, अरे ७।।

सस्य त स्यात् अरे से परे। अवात्सीत् अवात्ताम्, उवास ऊषतुः।
[१४३] वदे वाचि। अच्छवदति। [५७४] व्रजवदेति ञिः।
अवादीत् उवाद ऊदतुः।

[१४४] टु ओश्वि इर् गतिवृद्ध्योः।

[५६५] शासुलिदद्युदिति ङः वा। अश्वत्।

[६१३] श्विश्वोत्यङ् वा। अशिश्वियत् अश्वयीत्।

---

व्येञैवतावित्यस्य ठ्यां एचोऽसित्येति आकारो न स्यात्। ठ्यामित्युपादानं कितीत्यस्य आशब्दस्य च निवृत्त्यर्थम्। विव्याय ञ्णित्यन्ते जुङतोरिति वृद्धिः॥ ६६५॥

विव्यतुरिति मूलधातोर्जौ कृते अनुध्वोरिति यः। पक्षे विव्ययतुरिति यलायेति अयादेशः। उभयत्र खेर्नित्यं जिः। विव्ययिथेति सृजदृशीत्यत्र व्येवर्जनान्नित्यमिम्। अह्वदिति वक्तव्यस्यख्येति ङः उस्येचीत्याकारलोपः। अह्वत अह्वास्तेति लिप्स्यस्तु मे इति ङी वा॥ ६६६॥

जेः पुनरुपादानात् ठ्यां किति वा इति त्रयाणां नानुवृत्तिः। ह्वयतेर्यत्र द्वित्वं तत्र खेर्मूलधातोश्च द्विर्निमित्तको जिः स्यात् इत्यर्थः। यथा जुहाव अजूहवत् जुहूयति जोहूयते॥ ६६७॥

स इति लुप्तषष्ठ्येकं त इति लुप्तप्रथमैकम्। अरे किं आससे। अवात्तामिति

## ६६९ । श्वेर्जिर्वा यङ्ठ्योर्ञेरङ्सनोः ।

श्वेः ६।, जिः १।, वा ।१।, यङ्ठ्योः ७॥, ञरङ्-सनोः ७॥ ।

**श्वेर्जिर्वा स्यात् यङि ठ्याम् ञेः परे अङि सनि च ।**

**शुशाव शिश्वाय शुशुवतुः शिश्वियतुः । श्वयिता । शूयात् ।**

**इति मिश्रपादः ।**

**इति श्वाद्यध्यायः ।**

---

अन्तरङ्गत्वान्निरवकाशत्वाच्च आदौ सस्य तकारे पश्चात् सेर्लोपः जौमरा अप्येवम् । न च आदौ सेर्लोपेऽपि त्यलोपे त्यलक्षणमिति न्यायात् वृद्धिवत् सस्य तकारेण भाव्यमिति वाच्यम् । तस्य लोपे सति त्यस्वरूपेण विहितं यत् कार्य्यं तदेव स्यात् न तु त्यस्य वर्णविहितमिति । तेन सौ विहितत्वात् वृद्धिः सकारे विहितत्वात् सस्य तकारो न स्यात् इति । अन्यथा अबुद्ध इत्यादौ सेर्लोपे त्यलोपे त्यलक्षणमिति न्यायात् सकारे परे झभान्तस्येत्यादिना बकारस्य भकारापत्तिः । रामानन्दकाशीश्वरौ तु प्रत्ययलोपस्य बलवत्वादादौ सेर्लोपे सकारपरत्वाभावात् सस्य तकाराभावे आवात्तामित्याहतुः । तन्नेयम् । एकन्यायादबलवता सिलोपेन न्यायादबलवत्तरस्य तकारादेशस्य बाधितुमशक्यत्वात् अच्छवदनीति व्याच्छस्येति समासः । अवादीदिति व्रजवदेति व्रिः । अश्वदिति टुओश्वि शासलिदद्युदिति ङे वचस्यश्वि पतामिति श्वः । अश्वयीदिति पक्षे ठ्यां सौ नेमेकाजेत्यत्र श्विवर्जनादिमि सेर्लोपे व्रजवदेत्यत्र श्विवर्जनात् न व्रिः ॥ ६६८ ॥

यङ् च ठी च यङ्ठ्यौ तयोः । अङ् च सन् च अङ्सनौ । ञेः परावङ्सनौ तयोः । अत्र वाशब्दस्य व्यवस्थावाचित्वात् श्वेर्यङादौ द्वयोरेव जिः स्यात् पक्षे द्वयोरेव जिर्न स्यात् इत्यर्थः । अन्यथा अशूशवदित्यादौ प्रागच्कार्य्यादिति नियमादादौ द्वित्वे खेर्जिर्न स्यात् । यथा शुशाव शिश्वाय इत्यादि एवं शोशूयते शेश्वीयते अशूशवत् अशिश्वयत् शुशावयिषति श्वयितेति नेमेकाजेत्यत्र श्विवर्जनादिम् । शूयादिति यहस्वपाद्योरिति जिः घ्रोऽज्ञ्यरे इति दीर्घः ॥ ६६९ ॥

इति मिश्रपादः । इति श्वाद्यध्यायः ।

---

# प्रथमः पादः—अदादिः ।

---

[ १४५ ] अदॢ भक्षणे ।

## ६७० । लुगद्भ्योऽपः ।

लुक् ।१।, अद्भ्यः ५।।।, अपः ६। ।

अदादेः परस्य अपो लुक् स्यात् । अत्ति ।

## ६७१ । हुझसो हेर्धिः ।

हु-झसः ५।, हेः ६।, धिः १। ।

होर्झसाच्च परस्य हेर्धिः स्यात् । अद्धि ।

## ६७२ । हसादद्भ्यां दिसेर्लोपामौ ।

हस्-अद्भ्यां ५।।, दि-सेः ६।, लोपामौ १।। ।

हसात् परयोर्दिस्योर्लोपः स्यात् अदः परयोः अम् स्यात् । आदत् आदः ।

---

बहुवचनं गणार्थम् । घे श्रपे इत्यत्र अदादिवर्जनेनैवेष्टसिद्धौ अदादेः शप विधाय तत् लुक् करणं कदाचित् अदादेः शपः स्थित्यर्थं तेन सर्वा एवाहनत् पृथगिति चण्डीत्यादि सिद्ध्यति । वस्तुतस्तु लघिर् रुद रोदने तुर्जि वेगे इत्येताभ्यां क्ते भावादि ढे वीदुङीऽब्वत इत्यनेन गुणविकल्पे रोदितं रुदितं तेन तोरितं तुरितं तेन इत्यादि सिद्ध्यर्थम् । लुक् करणात् युतः युवन्ति इत्यादौ न गुणः ॥ ६७० ॥

यथा जुहुधि रुधिर्धौ ञ रुन्धि अदॢ अद्धि । वशलु उड्ढि च अत्र शच्छ्राजेति अङ् झपझसोरिति षस्य डः । धौ पिषॢ पिण्ढि चकास्ृ चकाद्धि इत्यादि । परत्वाद्विशेषत्वाच्च तातयादेशेनायं बाध्यते । तेन त्वम् अम्तमत्तादित्यादि ॥ ६७१ ॥

दिसेवित्येकवचनं यथासंख्या निरासार्थं दिसेरिति घ्या एव टग्रास्तु सिव्यवधानादसम्भवः । यथा अलेट् अहन् अभुनक् अवट् अपिनट् इत्यादि ॥ ६७२ ॥

## ६७३ । घस्लृदः सन् घ्यल् घञि ।

घस् लृ ।१।, अदः ६।, सन् टी-अल्-घञि ७।।

अदो घस्लृ स्यात् सनि घ्याम् अलि घञि च । (५६५) लित्वात् ङः । अघसत् ।

## ६७४ । ठ्यां वा ।

ठ्यां ७।, वा ।१।।

जघास आद । [ २३० ] हनगमेत्युङ् लोपः । जक्षतुः, आदतुः जघसिथ आदिथ । [१४६ प्सा ल भक्षणे । प्रणिप्साति ।

## ६७५ । द्विषविदातोऽनुस् वा ।

द्विष विद आतः ५।, अन् ।१।, उस् ।१।, वा ।१।।

द्विष्टेर्वेत्तेरादन्ताच्च परोऽन् उस् स्याद्वा । अप्सुः अप्सान् । [ १४७ ] वश ल कान्तौ । वष्टि । [ ६६१ ] ग्रहस्वपाद्योरिति जिः । उष्टः उशन्ति । अवट् । उवाश ।

---

सन् च टी च अल् च घञ् चेति तस्मिन् । जिघत्सति अघसत् हनगमेत्यत्र ङवर्जनात् न उङ् लोपः । प्रघसः घासः ॥ ६७३ ॥

अदो घस्लृ स्यात् वा ठ्याम् । जक्षतुरिति हनगमेत्युङ् लोपे झप्झसोरिति घस्य कत्वे शासवसघसेति षत्वम् । अत्र अद्लौ भक्षे लघसौ पचे इति द्वाभ्यामेव आद जघास इत्यादि सिद्धावपि ठ्यां वेति सूत्रविधानं ज्ञापयति घसतेस्थपि अदतुल्यत्वं स्यादिति । तेन सृजदृशीत्यत्र अदो वर्जनादेव घसो वर्जने सिद्धे जघसिथेत्यत्र इमि विकल्पाभावे नेमसुमिति नियमात् वसोऽरस्येति नित्यमिम् । न च स्थानिवत्त्वादेव अदतुल्यत्वमिति वाच्यम् । धात्वादेशानां स्थानिवत्त्वानङ्गीकारात् । अन्यथा अजधातोः स्थाने जातस्य वीधातोः सेमत्वापत्तेः । हनस्थाने जातस्य बधधातोरनिमत्वापत्तेश्च । प्रणिप्सातीति गदनदेति णत्वम् ॥ ६७४ ॥

अद्विषुः अद्विषन् अविदुः अविदन् उस्येचीत्याकारलोपे अप्सुः अप्सान् अन् इति घ्या एव ट्यान्तु द्विषः सकारव्यवधानान्न प्रसङ्गः । अद्विषन् । विदधातोस्तु

[ १४८ ] हन् लौ हिंसागत्योः ।

६७६ । वनतनाद्यनिमां ञम्लोपो झस्-यप्यतिक्यणौ ।

वन-तनाद्यनिमां ६॥, ञम्लोपः १।, झस्-यपि ७।, अतिकि ७।, अणौ ७। ।

एषां ञम्लोपः स्यात् अणौ झसे यपि च, न तु तिकि । प्रणिहतः । [ १८९ ] हनो ङ्गो घ्नः । घ्नन्ति । प्रहणनः प्रहन्वः प्रहण्मः प्रहन्मः ।

६७७। जह्येधि-शाधि हन्यस्ति-शास्ति हिना ।

जहि-एधि शाधि ।१।, हनि अस्ति शास्ति ।६।, हिना ७। ।

एषां हियुक्तानां क्रमादेते स्युः । जहि ।

६७८ । हनो बधष्टीव्यलि टीमे तु वा ।

हनः ६।, बधः १।, टीव्यलि ७।, टीमे ७।, तु ।१।, वा ।१। ।

हनो बधः स्यात् व्याम् व्यामलि च, टी-मे तु वा । अबधीत् ।

---

अनुस्सिद्धेरिति नित्यमुसि अवेदिषुः अशासिषुः । वष्टीति वशलुस्हि शङ्का-जेति षङ् । अवट् इति हसाद्यामिति दिस्योर्लोपे शङ्काजेति षङ् षोड़ः फे ॥७५॥

नास्ति इम् यस्मात् सोऽनिम् । वनश्च तनादिश्च अनिम् चेति ते तेषाम् । ञमो लोपः ञम्लोपः । झसश्च यप् च झसयप् तस्मिन् । न तिक् अतिक् तस्मिन् । नास्ति णुर्यस्मिन् सोऽणुः तस्मिन् । वनव्याप्तौ । वतः वतिः प्रवत्य । ततः ततिः प्रतत्य । चतः चतिः प्रचत्य । हतः हतिः प्रहत्य । गतः गतिः प्रगत्य । झसि किं वन्यते इत्यादि । अणौ किं वंवन्ति इत्यादि । अतिकि किं वन्तिरित्यादि । प्रहणनः इत्यादि वस्य प्रत्ययत्वात् दन्त्यत्वे झसत्वाभावात् ञमो लोपाभावे मवान्तहन इति वा णत्वम् ॥ ६७६ ॥

जहिश्च एधिश्च शाधिश्चेति । हनिश्च अस्तिश्च शास्तिश्चेति जहीति पचे तातङ्ङ्ऽपि हतात् ॥ ६७७ ॥

टी च ढी च अल् चेति तस्मिन् । ट्यादौ हन्तेः प्रयोगं निषिध्य बधहताविति

## ६७९ । खेर्हो घो ञ्णिति च ।

खिः ५।, हः ६।, घः १।, ञ्णिति ७।, च ।१।,

**खेः परस्य हनो हस्य घः स्यात् ञिति णिति च ।**

जघान, जघ्नतुः । हन्ता । बध्यात् । प्रहणिष्यति ।

[१४९] यु ल भिसर्पणे ।

## ६८० । रपिद्धस्युतोऽद्वेर्व्रिः ।

र-पित्-हसि ७।, उतः ६।, अद्वेः ६।, व्रिः १। ।

**अद्वेर्धोरुकारस्य व्रिः स्यात् पिति हसे रे । यौति युतः युवन्ति ।**

[१५०] यु ल मिश्रणे अमिश्रणे च । यौति यविता । [१५१] नु ल स्तुतौ । अनावीत् अनौषीत् । नुनुविव । [ १५२ ] क्ष्णु ल तेजने । क्ष्णविता । [ १५३ ] ष्णु ल प्रस्नुत्याम् ।

[५७९] स्नुक्रमोऽमि इतीम् । अस्नावीत् । [१५४] इन ल गतौ ।

## ६८१ । यिनोऽच्यणौ ।

य ।१।, इनः ६।, अचि ७।, अणौ ७। ।

**इनो यः स्यात् अणौ अचि । यन्ति ।**

---

भौवादिकः प्रयुज्यत इत्यर्थः । तेन अवधीदित्यादौ वधधातोरौदित्वाभावादस्सेऽस्सेतीम् हसादेः सेम इत्यत्र बधवर्जनान्न व्रिः । एवं बध्यात् बध्यास्तां बधः टीमे तु आवधिष्ट आहत ॥ ६७८ ॥

चकारादर्थद्वयम् । खेः परस्य हनो हस्य घः स्यादित्येकोऽर्थः । हनो हस्य घः स्यात् ञिति णिति च परे इत्यपरोऽर्थः । खेः परस्य यथा जघनिथ जिघांसति जङ्घन्यते । ञिति घातयति णिति अघानि घातकः घातं घातं प्रहणिष्यतीति स्वस्वर्ण इति इम् नादिहन्मीनेति णत्वम् ॥ ६७९ ॥

रश्चासौ पिच्चासौ हस् चेति रपिद्धस् तस्मिन् । न द्विः अ द्विः तस्य । यौति रौति । अ द्विः किं जुहोति । यवितेति नेमेकाजेत्यत्र युवर्जनादिम् । अनावीदित्यादि वेमूदितीम् नुनुविवेति अठ्या इत्युक्तेर्नित्यमिम् । क्ष्णवितेति नेमेकाजेत्यत्र क्ष्णुवर्जनादिम् ॥ ६८० ॥

## ६८२ । गा ञ्याम् ।

गा ।१।, ञ्याम् ७। ।

इनो गा स्यात् ञ्याम् । अगात् इयाय ।

## ६८३ । खेः क्तितिर्घः ।

खेः ६।, क्तिति ७।, घंः १। ।

इनः खेः घंः स्यात् क्तिति ञ्याम् । ईयतुः ।

## ६८४ । अगेर्ढ्याम् ।

अगेः ६।, ञ्याम् ७। ।

अगेरिनो घंः स्यात् क्तिति ञ्याम् । ईयात् । अगेः किम् ? अन्वियात् । [१५५] अधीक ल स्मरणे ।

## ६८५ । इन्वदिकः ।

इन् वत् ।१।, इकः ६। ।

इल् इव इकः कार्य्यं स्यात् रूपञ्च तद्वत् ।

[ १५६ ] या ल गतौ । प्रणियाति ।

एवं [ १५७ ] वा ल गमनहिंसयोः ।

[ १५८ ] द्रा ल स्वप्ने पलायने च ।

[ १५९ ] ख्या ल ख्यातौ कथने च । अख्यत् । [ १६० ] मा ल माने । प्रणिमाति । मेयात् ।

---

मुध्वोरिति प्राप्तत्यस्य इयो बाधकः अस्य नकारो भूस्थापिवेत्यादिषु विशेषज्ञापनार्थः ॥ ६८१ ॥

अगादिति भूस्थापिवेति सि लुक् ॥ ६८२ ॥

इभूतादिनधातोः ढ्याः अन्यत्र क्तितोऽसम्भवादेव ठ्यामिति व्याख्यातं ईयतुरिति यिनोच्चणाविति यकारेऽनेन खेर्घ. ॥ ६८३ ॥

नियमोऽयं ढ्यां क्तिति अगेरिन एव दीर्घः न तु समेरिति । ईयात् । अगेः किम् अन्वियात् समियादित्यादौ घोंऽच्य्यरे इत्यनेनापि न दीर्घः ॥ ६८४ ॥

अधील् स्मृत्यामिति अयं धातुः कातन्त्राद्यैरिकस्मरणे इति पठ्यते तन्मतमवलम्ब्य

[१६१] विद ल ज्ञाने।

## ६८६। वेत्तेः कौपं ठीपं वा।

वेत्तेः ५।, कौपं १।, ठीपं १।, वा ।१।।

विदः परस्य क्याः पस्य ठ्याः पं स्याद्वा।

वेद विदतुः विदुः, वेत्थ विदथुः विद, वेद विद्व विद्म। पक्षे सुगमम्।

## ६८७। ङाम् वा स्यां ग्यान्तु क्रानु।

ङाम् ।१।, वा ।१।, ठ्यां ७।, ग्यां ७।, तु १।, क्र ।१।, अनु ।१।।

वेत्तेः ठ्यां ङाम् वा स्यात् ग्यान्तु कृञ एवानुप्रयोगः।

## ६८८। तनुभ्यः शुप् रे घे।

तनुभ्यः ५।।।, शुप् ।१।, रे ७।, घे ७।।

विदाङ्करोतु वेत्तु।

## ६८९। कृञोऽद्दणौ रे।

कृञः ६।, अत् ।१।, अणौ ७।, रे ७।।

कृञोऽकार उः स्यात् अणौ रे। विदाङ्कुरुताम्। वित्ताम् अविदुः अविदन्।

---

इक् इत्युक्तम्। अधिकग्रहणमन्यपूर्वस्य केवलस्य च प्रयोगनिरासार्थम्। यथा अध्येति अधीतः अधियन्ति अध्यगात् अधीयाय अधीयतुरित्यादि। अधीयादित्यादौ तु सह र्णं र्घ इत्यनेनैव दीर्घः। एवं गमिनिङोरित्यादावपि अधिजिगमिषति इति बोध्यम्। समीतयोः राघवयोरधीयन्निति भट्टौ। अधीयन्निति तु आतिदेशिकमनित्यमिति न्यायात् इन्वदिक् इत्यस्यानित्यत्वात् यिणोऽच्यणावित्यस्याप्राप्तौ शुध्वोरिति इयि कृते सिद्धम्। प्रणियातीति सोहनवायेति णत्वम्। अख्यदिति वक्ष्यस्येति ङे उसेचीत्यालोपः। प्रणिमाति पतपददामेति णत्वम्। मेयादिति दामागे इति ङे ॥ ६८५ ॥

स्थानिवदादेश इति न्यायात् ठीपस्य कौपतुल्यत्वान्न द्वित्वम्। न ङाम् न वा वेत्थेत्यादाविम् ॥ ६८६ ॥

ङित्वान्न गुणः क्रानु इत्यनेन असभुवोरनुप्रयोगो निषिद्धः ॥ ६८७ ॥

तनोति सनोति ॥ ६८८ ॥

### ६९०। घ्यां सौ र वा दधोः।

घ्यां ७, सौ ७, र ।१।, वा ।१।, द-धोः ६॥।

दधोः रेफः स्यात् वा सौ घ्याम्। अवेः अवेत्, अवित्तम् अवित्त। विदाम्बभूव विवेद। [१६२] अस ल भुवि।

### ६९१। लोपोऽस्त्यसोर्ङिद्रसो रघ्याम्।

लोपः १।, अस्ति-अ-सोः ६॥, ङित् र सोः ७॥, अघ्याम् ७।।

अस्तेरकारस्य ङिति रे, सस्य च से, लोपः स्यात्, न तु घ्याम्। स्तः सन्ति, असि, एधि, आसीत् आस्ताम्।

---

अत् उ इत्युभयं लुप्तप्रथमैकम्। विदाङ्कुरुतामिति विद तां ङामि कृञोऽनुप्रयोगे गुपि गुणे अकारस्य उः। रामानन्दवागीश्वरौ तु कृञोऽकारस्य गुपाव्यवहितस्यैव सम्भवादव्यवहितेऽपि स्यादित्याहतुः। रामतर्कवागीशो न किमप्याह। केचित्तु अणौ परे रे परे यस्मात् परोऽणुर्भवति तस्मिन् रे परे कृञोऽकार उः स्यादित्याहुः। वस्तुतस्तु तथा वक्तव्ये पुंसः सन् खप्यम्परे इतिवत् कृञोऽणपरे रे इत्येवावददिष्यत्। किञ्च नास्ति णर्यस्य स्थाने सोऽणुः तस्मिन् अणाविति रे इत्यस्य विशेषणम्। गुपी गुणाभावादव गुबेव अगुणो र इत्यर्थः। अविदन्नित्यादि ङिद्रविर्द्ति उस् वा ॥ ६८९ ॥

अवेरिति ग्रपी लुकि हसाङ्ग्रामिति सेर्लोपे त्यलोपे त्यलक्षणमिति दकारस्य रेफपक्षे विसर्गः। एवं रुधिधौञ अरुणरित्यादि एवञ्च गृधिर्यु इत्यस्य यङ् लुकि व्या सौ जरीगृध इत्यस्मात् हसाङ्ग्रामिति सेर्लोपे विराममाश्रित्य भभान्तस्येति गस्य घत्वे त्यलोपे त्यलक्षणमिति न्यायात् गुणे अजरीघर्ध इत्यस्य धकारस्यानेन रेफे ढ्रोढ्रौति पूर्वरेफस्य लोपे तत्पूर्वस्य दीर्घे रेफस्य विसर्गे अजरीधाः रीणो रिणिरयि च कृते अजरिघाः अजर्घाः। एवं हृधु अवरीवाः अवरिवाः अवर्वाः घौऽनित इति दीर्घे तर्द अताताः नर्द अनानाः स्पर्द्धङ् अपास्पाः पक्षे दधोरेफाभावे तु अवेत् अरुणत् अजरीघत् अवरीवत् अतातत् अपास्तत् इत्यादि ॥ ६९० ॥

अश्च स च असौ अस्तेरसौ अस्त्यसौ तयोः। ङिच्चासौ रश्चेति ङिद्रः ङिद्रश्च स च ङिद्रसौ तयोः स इत्यनुकारान्तग्रहणात् सि से ख इति त्रयाणां ग्रहणं तेन आस व्यतिसे व्यतिस्व इत्युभयत ङिद्रपरत्वादकारस्य सकारपरत्वात् सस्य च

## ६९२। भूरते।

भूः १।, अते ७।।

अस्तेर्भूः स्यात् अते। अभूत्।

## ६९३। प्रादुर्गीकः सः षोऽच्ये।

प्रादुर् गि इकः ५।, सः ६।, षः १।, अच्-ये ७।।

प्रादुःषन्ति प्रादुःष्यात् निषन्ति। [१६३] मृजू ल ष शुद्धौ।

## ६९४। मृजोऽकङिति त्रि र्वा त्वच्यणौ।

मृजः ६।, अकङिति ७।, त्रिः १।, वा।१।, तु।१।, अचि ७।, अणौ ७।।

अकङिति मृजो त्रिः स्यात् अणौ अचि तु वा। मार्ष्टि मृष्टः, मार्जन्ति मृजन्ति। [१६४] वचौ वाचि।

[६५२] वचस्य ख्विपतामिति वोच। अवोचत्। उवाच ऊचतुः।

---

लोपः। ङिद्रस्योरिति लिपिकरप्रमादपाठः। किञ्च अतेर्भूः आदेशेनैव बाधितत्वात् ङित्ग्रहणेनैवेष्टसिद्धौ रग्रहणं ज्ञापयति कदाचित् अतेर्भूः आदेशो न स्यादिति। तेन लावण्य उत्पाद्य इवास यत्न इति कालिदासः। एधीति जह्येधीति एधिरादेश अध्यां किं आसीत् आस्तां आसन्॥ ६९१॥

विषयसप्तम्यां सेः सम्भावनायां भूरादेशः। ठ्यामनुप्रयोगादन्यत्राप्यस्ते भूभावं केचित् नेच्छन्तीति धातुप्रदीपः। अतएव लावण्य उत्पाद्य इवास यत्न इति कालिदासः। केचित्तु असजदीप्ताविल्यस्य रूपम्। आस दिदीपे इत्यर्थ इत्याहुः। अभूदिति भूस्थापिवेति सेर्लुक्॥ ६९२॥

गेरिक् गीक्। प्रादुश्च गीक् च प्रादुर्गीक् तस्मात्। प्रादुरो गेरिकश्च परस्य अस्तेः सस्य यः स्यादचि ये च परे। अच्ये किं प्रादुःस्थः निस्थः॥ ६९३॥

कङावितौ यस्य स कङित् न कङित् अकङित् तस्मिन्। मृज इति मृजन्ष शुद्धौ मृजुषकितु भूये चेति द्वयोर्ग्रहणम्। मार्ष्टि मार्जयति मार्जति किति मृज्यते ङिति मृष्टः। मृजोऽणौ त्रिरित्युक्तेऽपीष्टसिद्धौ अकङितीति कथमिति चेत् न सनि अनिम्पचे णुर्नानिमीति गुणनिषेधे मिमार्चतीत्यादौ वृद्धेरप्रसङ्गात् वचौ

[१६५] रुदिर् ल घ रोदने।

## ६९५। रुद्भ्योऽयो हस्रस्येम्।

रुद्भ्यः ५।॥, अयः ६।, हस्-रस्य ६।, इम् ।१।।

रुदादेः परस्य अयस्य हसस्य रस्य इम् स्यात्।
रोदिति रुदितः। अयः किं? रुद्यात्।

## ६९६। दिस्योरम् वा।

दि स्योः ६॥, अम् ।१।, वा ।१।।

रुदादेः परयोः दिस्योः अम् स्यात् वा। अरोदत् अरोदीत्, अरोदः अरोदीः। [१६६] जि ष्वपी घ लु स्वप्ने।
विस्वपिति। [६२५] सवत्वात् न षः विसुष्वाप दुःषुषुपतुः। [६२५] निर्वत्त्वात् षः [१६७] अन,घ लु स्वप्ने।
प्राणिति प्रानिति [१६८] श्वस घ लु प्राणने।
श्वसिति अश्वसीत्। [५७६] चणादित्वात् न त्रिः।
[१६९] जच्च च लु घभक्षहासयोः। जक्षिति।

---

इति वच्लौ वाचीत्यस्मादन्यस्त्वोर्न प्रयोग इति वक्तव्यम्। अवीचत् इति वक्तव्यस्येति ङ वच्यस्यश्चीति वीच्॥ ६९४॥

बहुवचनं गणार्थं गणस्तु रुदाद्यस्तीत्यत्रोक्तः। न य अय तस्य अयः। हस् चासौ रश्चेति हसः तस्य। अयः किं रुद्यात्। हसः किं रुदन्ति। अप्राप्तौ विधिरयं रोदिष्यतीत्यादौ वसोऽरस्येति इम् स्यादेव॥ ६९५॥

रुदादेः परौ दिरिति घ्या एव ध्यान्तु सिव्यवधानादसम्भवः। दिसाहचर्य्यात् सिरपि घ्या एव। अन्यथा घ्यां कृतस्य सिप्रत्ययस्यापि प्रसजेत्। अरोददित्यादि। पक्षे रुदाद्यस्तीत्यनेन ईम्। ध्यान्तु इरित्त्वात् वा ङ अरुदत् अरोदीत् अरुदः अरोदीः। विसुष्वापेत्यत्र दग्नस्यादेरिति नियमात् खेर्न षत्वम्। खिनिमित्तकं मूलधातोः षत्वं क्विलादित्यनेन स्यादेवेति गोयीचन्द्रादयः। दुःषुपुपतुरित्यत्र बलवत्वादादौ जौ कृते षत्वे च कृते द्वित्वमिति। प्राणिति इत्यत्र वाऽननिंसेति णत्वं वा॥ ६९६॥

## ६९७। अन्तोऽद्वेः।

अन्तः ६।, अत् ।१।, द्वेः ५। ।

द्वेः परस्यान्तोऽत्स्यात्। जक्षति। [५६३] अनुस्सिद्वेरिति, अजक्षुः। [१७०] जागृ क्ष लु जागरणे।

## ६९८। णुरुस्यठ्याम्।

णु १।, उसि ७।, अठ्याम् ७। ।

द्वेरुसि परे णुः स्यात् न तु ठ्याम्। अजागरुः अजागः। अजागरीत्। जागरामास जजागार।

## ६९९। जागोऽणब्वीण्ङिति क्सुकाने तु वा।

जागः ६। अ-णप्-वि इण् ङिति ७।, क्सु-काने ७।, तु ।१।, वा ।१। ।

जागर्त्तेर्णुः स्यात् न तु णपि वौ इणि ङिति च, क्सौ काने तु वा। जजागरतुः। १७१ दरिद्रा क्ष लु दुर्गत्याम्।

## ७००। दरिद्रो ङिर्ह्रसे ऽणौ हाग्भ्योस्तु वा।

दरिद्रः ६।, ङिः १।, ह्रस्रे ७।, अणौ ७।, हाग्भ्योः ६॥, तु ।१।, वा ।१। ।

दरिद्रातेर्ङिः स्यात् अणौ ह्रसे रे परे, हाग्भ्योस्तु वा। दरिद्रितः।

---

अन्त इति षष्ठ्येकं हसन्तनिर्देशाददन्ति अन्तु इत्यादीनामपि। जक्षति जक्षतु ददति ददतु। चिकीर्षन्तीत्यादौ शपो लोपे स्थानिवत्वान्नान्तोऽत् ॥ ६९७ ॥

अजागरुरिति जक्षादित्वात् द्विसंज्ञायां अनुस्सिद्वेरिति अन उसि अनेन गुणः। ठ्यान्तु जुहुवुः। अजागः इत्यादौ गुणे सिलोपे रेफस्य विसर्गः। अजागरीदित्यत्र ष्वजिश्विजागुरित्युक्तेर्न त्रिः ॥ ६९८ ॥

जाग्र इत्यत्र सूत्रत्वात् ऋतो ङो डुर्न स्यात्। णप् च विश्च इण् च ङिच्चेति णब्वीण्ङित् न णब् वीण्ङित् अणब्वीण्ङित् तस्मिन्। ञौ जागरयति घञि जागरः णमि जागरं जागरं यकि जागर्य्यते यपि प्रजागर्य्य ढौपे जागर्य्यात्। णबादौ तु जजागार जागर्विः अजागारि अजागारिषीष्ट जाग्रतः जाग्रति। क्सौ जजागर्वान् जजागृवान्। काने जजागराणः जजाग्राणः ॥ ६९९ ॥

## ७०१। आद्वयोरालोप्योऽणौ हसि त्वादः।

आ-द्वयोः ६॥, आ ।१।, लोप्यः १।, अणौ ७।, हसि ७।, तु ।१।, ई ।१।, अदः ६।।

आ इत्यस्य द्वेश्च आ लोप्यः स्यात् अणौ हसे तु दावर्जमी स्यात्। दरिद्रति।

## ७०२। दरिद्र आलोपोऽसनकानेऽरे स्यान्तु वा।

दरिद्रः ६।, आलोपः १।, अ-सन्-अक-अने ७।, अरे ७।, स्यां ७।, तु ।१।, वा ।१।।

दरिद्र आलोपः स्यात् अरे, न तु सनि अके अने च, स्यान्तु वा। अदरिद्रीत् अदरिद्रासीत् दरिद्रामास ददरिद्र। ददरिद्रौ इति केचित्। दरिद्रयात्। [१७२] चकास्ट च लु दीप्तौ। [६७१] हुझसोर्हेर्धिः चकाधि। [६४] झपझसोरिति सस्य दः। चकाद्धि।

## ७०३। ध्यां दौ त सः।

ध्यां ७।, दौ ७।, त ।१।, सः ६।।

ध्यां दौ परे सस्य त स्यात्। अचकात्।

---

दरिद्रितः दरिद्रिथः। हसि किं दरिद्रति। अणौ किं दरिद्राति। हाग्भ्योस्तु जहितः जहीतः त्रिभितः विभीतः॥ ७००॥

दे इत्यनुवर्त्तते तेन यङि आख्यायते इत्यादौ न प्रसङ्गः। यथा क्रीणन्ति क्रीणते जहति मिमते ददति ददते दधति दधते दरिद्रति। हसे तु क्रीणीते जिहीते मिमीते अणौ किं क्रीणाति जहाति। दावर्जनात् दत्ते धत्ते॥ ७०१॥

सन् च अकश्च अनश्चेति सनकान न सनकानम् असनकान तस्मिन्। न ओऽरः तस्मिन्। दरिद्रात् दरिद्रणीयम् अदरिद्रीत् पक्षे यमरमेति इम्सनौ। एवम् अदरिद्रि अदरिद्रायि। ददरिद्र इति णपि अन्तरङ्गत्वादादौ आकारलोपे आदन्तत्वाभावात् न डौ। जौमरास्तु डौ आदेशं बलवन्तं मत्वा ददरिद्रौ इत्युदाहरन्ति। दरिद्रामासेति दरिद्राकाशेति वाम्। सनादौ तु दिदरिद्रासति दरिद्रायकः दरिद्राणम्। चकाद्धीति हेर्धौ झपझसोरिति सस्य दः पक्षे धे सलोपो दः चकाधि॥ ७०२॥

सुगमम्॥ ७०३॥

## ७०४। सौ वा।

सौ ७।, वा।१।।

अचकात् अचकाः। [१७३ शास च लु शासने।

## ७०५। शासुङिद्दसङेऽणौ क्वौ त्वाशासश्च।

शास उङ्।१।, इत्।१।, हसङे ७।, अणौ ७।, क्वौ ७।, तु।१।, आशासः ६।, च।१।।

**शास्तेरुङ इत्यादणौ हसे ङे च, क्वौ तु शास आशासश्च। शिष्टः शाधि अशिषत्।**

[१७४] चक्ष ङ ल वदे। चष्टे।

---

सस्य त स्याद्वा घ्यां सौ परे। अचकात् अचकाः॥७०४॥

शास उङ्, शासुङ्, हस् च ङश्चेति हसुङ तस्मिन्। क्वौ त्वाशासश्चेति ग्रहणात् शासु इति शासच्लु, शासने इत्यस्यैव ग्रहणं तेन आशासु लङ इत्यस्य आशास्ते। शासु यथा शिष्टः शिष्यते शेशिष्यते। क्वौ तु मित्रशीः आशीः। शिष्टः इति आकारस्य इकारः शासवसघसेति षत्वम्। शाधीति हिसहितस्य शाध्यादेशः। अशिषदिति शासलिद्द्युदिति ङः॥ ७०५॥

चचिङ् तृतीयस्वरानुबन्धोऽयमिति प्राञ्चः। अस्य इकार उच्चारणार्थ इति केचित् छन्दसि नुणागमार्थ इति केचित्। वेदेषूच्चारणभेदार्थ इति केचित्। वह-वस्तु तृतीयस्वरानुबन्धो लिपिकरभ्रमकारित एव किन्तु चतुर्थस्वरानुबन्धोऽयं निष्ठाया इम् निषेधार्थः। तेन वर्जनार्थे ख्याज् क्साजादेशयोरप्राप्तौ आचष्ट वर्जनमित्याहुः। वस्तुतस्तु अस्येदनुबन्धो गणकृता नित्यत्वज्ञापनार्थः। तेन वचोऽपि परुषाचरं न च पदेषु संसज्जते इति शाकुन्तले। पथि यदि विपथे वा यत्र यामः कदाचिन्न हि तरुणि रुदीते धिक् पराधीनवृत्तिरिति नैषधे। सन्तः शृणुध्वं हृदये कुरुध्व-मुत्क्षिप्य बाहू परिवारयामीति कण्ठाभरणे। इत्यादौ परस्मैपदिन आत्मनेपदम्। तालैः शिञ्जद्वलयसुभगैर्नर्त्तितः कान्तया मे इति मेघदूते इत्यादावात्मनेपदिनः शतृप्रत्ययः। न विश्वसेत् पूर्वविरोधितस्येति पञ्चतन्त्रे। आश्वसेयुर्निशाचरा इति भट्टौ। अदादेः शपुश्लितिरित्यादि। चष्टे इति स्यादेः सौ लोपः इति कलोपः।

७०६ । चन्नः क्शाञ् ख्याञ्ऽरेऽत्यागोससने ।

चन्नः ६।, क्शाञ्-ख्याञ् ।१।, अरे ७।, अत्यागोससने ७। ।

चन्नः क्शाञ् ख्याञ् स्यादरे न तु वर्जने उसि असि अने च । अक्शासीत् अक्शास्त, अख्यत् अख्यत । त्यागे तु समचक्षिष्ट ।

७०७ । ठ्यां वा ।

ठ्यां ७।, वा ।१। ।

चक्शौ चक्शे, चख्यौ चख्ये चचक्षे ।

[१७५] ईड़ ङ ल स्तुतौ । ईट्टे ।

७०८ । सध्वो रस्येम् जनोड़ीशः ।

स-ध्वः ६।, रस्य ६।, इम् ।१।, जन-ईड़ ईशः ५। ।

एभ्यः परस्य सस्य ध्वस्य च रस्य इम् स्यात् । ईड़िषे ईड़िध्वे । [१७६] आस ङ ल उपवेशने ।

आस्ते । [५८२ विंजादौत्याम् आसाञ्चक्रे ।

[१७७ वस ङ ल आच्छादने । वसिता वस्ता ।

[१७८] निंसि ङ ल चुम्बने । प्रणिंस्ते प्रनिंस्ते ।

---

चन्नः क्शाञ् । क्शाञ् च ख्याञ् च तत् न रीऽरः तस्मिन् । त्यागश्च उस् च अम् च अनश्चेति त्यागोससनं न त्यागोससनम् अत्यागोससनं तस्मिन् । वर्जनेऽर्थे उसादौ प्रत्यये विषये च न स्यादित्यर्थः । अरे इति विषयसप्तमी । तेन विभक्त्युत्पत्तेः पूर्वं क्शाञ् ख्याञौ । तयोर्ञानुबन्धत्वादुभयपदमिति क्शाञ् इति तालव्यमध्य इति पाणिनिक्रमदीश्वरौ । दन्त्यमध्य इति केचित् । तत्र षत्वाभावस्तु दन्त्यवदादेशविधानसामर्थ्यात् । अक्शासीत् इति यमरमेति इम्सनौ । अक्शास्तेति एकाजादन्तत्वात् नेम् । अख्यदिति वत्यस्येति ङ उस्येचीत्यालोपः उसादौ तु अचक्षुः नृचक्षाः विचक्षणः ॥ ७०६ ॥

चन्नः क्शाञ् ख्याञ् च स्याद्वा ठ्याम् । विषयसप्तमीयम् । तेन आदावादेशे ञानुबन्धत्वादुभयपदम् । चक्शौ चक्शे चख्यौ चख्ये चचक्षे । ईट्टे इति झपो लुक् झप्भाद्धोरिति डस्य टत्वे ष्टुभिरिति तस्य टत्वम् ॥ ७०७ ॥

[१७९] षू ङ ल प्रसवे। सूते।

## ७०९। सूतेर्न गु ग्याम्।

सूतेः ६।, न ।१।, गुः १।, ग्याम् ७।।

सुवै। [१७३] वेमूदितीम् वा। असविष्ट असोष्ट।

[१८०] शी ङ ल शयने।

## ७१०। शीङो रे गुः।

शीङः ६।, रे ७।, गुः १।।

शेते शयाते।

## ७११। मान्तो रम् विदस्तु वा।

मान्तः ६।, रम् ।१।, विदः ५।, तु ।१।, वा ।१।।

शीङः परस्य मस्यान्तो रम् स्यात्, वेत्तेस्तु वा।

शेरते। अशयिष्ट। [१८१] अधी ङ ल अध्ययने। अधीते।

## ७१२। गीङ ष्टीध्योर्वा।

गी ।१।, इङः ६।, ठीध्योः ७॥, वा ।१।।

इङो गी स्यात् वा टीध्योः परयोः। घत्वात् नं गुः। अध्यगीष्ट अध्यैष्ट।

---

जन इति जन्मलि चेत्यस्य ग्रहणम्। जनीत्यस्य श्नना व्यवधानात्। व्यति-जज्ञिध्व व्यतिजज्ञिध्वम् ईड़िषे ईड़िध्वे ईशिषे ईशिध्वे। अप्राप्तौ विधिरयं न तु नियमः। तेन जनिता ईड़िता ईशिता इत्यादौ वसोरसेतीम् स्यादेव वस्ता वसितेति वेमसहेतीम् वा। प्रशिंसे इति वात्वननिंसनिन्देति वा णत्वम् ॥७०८॥

सूङ्ल धातोर्गुर्न स्यात् ग्याम्। सुवै इति भ्रुध्वोरिलुव् ॥ ७०९ ॥

अगुणनिमित्ते गुणनिमित्ते च रे इत्यर्थः ॥ ७१० ॥

मस्यान्त मान्त तस्य। शेरते संविद्रते संविदते। समोगमृच्छेत्यादिना आत्मने-पदम्। शीङ् साहचर्य्यात् विद इति अदादिक एव। तेन धौ विदङ् मीमांसे इत्यस्य विन्दते इत्यस्य न स्यात्। अशयिष्टेति नेमेकाजेत्यत्र शीवर्जनादिम् ॥७११॥

## ७१३। ठ्यां गा आङ्सनोस्तु वा।

ठ्यां ७।, गा ।१। आङ्-सनो: ७॥, तु ।१।, वा ।१। ।

इङो गा स्यात् ठ्यां, ञे: परे अङि सनि च वा।

अधिगजे अध्यगीष्यत अध्यैष्यत।

[१८२] दीधी ङ चलु देवने दीप्तौ।

## ७१४। दीधीवेव्योर्न गु:।

दीधी-वेव्य: ६।, न ।१।, गु: १। ।

दीध्यै।

## ७१५। लोप्योऽन्तो य्यो:।

लोप्य: १।, अन्त: १।, य्यो: ७॥ ।

दीधीवेव्योरन्तो लोप्य: स्यात् यकारिवर्णनो:। अदीधिष्ट एवं [१८३] वेवी ङ चलु ई ल-वत्। [१८४] द्विषौ ञ ल वैरे।

[६७५] द्विषविदातोऽनुस् वा अद्विषु: अद्विषन्। अद्विष्ट अद्विक्षत्। [१८५] दुहौ ञल दोहने।

अधुक्षत् अधुक्षत अदुग्ध। एवं [१८६] दिहौ ञल लेपने। प्रणिदेग्धि अधिक्षत।

---

घत्वान्न गु: प्रथमोपस्थितङ्गत्वं परित्यज्य दीर्घकरणादित्यर्थ:। अध्यैष्टेति भूयोऽमिति पुनरम् ॥ ७१२ ॥

अङ् च सन् च अङ्सनौ ञेरङ्सनौ आङ्सनौ तयो:। आङ्सनोस्तु अध्यजीगपत् अध्यापिपत् अधिजिगापयिषति अध्यापिपयिषति ॥ ७१३ ॥

दीधी च वेवी चेति समाहारे दीधीवेवी तस्य। दीधीवेव्य इति षष्ठ्येक अन्यथा परसूत्रे यथासंख्यं स्यात्। एतयोर्गुर्न स्यात् सर्वत्र दीध्यै एवं दीध्यनीय-मित्यादि। वेव्यै इत्यादि ॥ ७१४ ॥

य च इश्च यी तयो:। दीध्यते अधीधिष्ट दीर्वे तु दीधीत इत्यादौ अन्तलोपा-भावे गुध्योरिति यकारापत्ति: स्यात्। एवं वेवीङ्। ईलुग्य्योरित्यनेनैवेष्टसिद्धौ

[ १८७ ] ऊर्णुं जल आच्छादने।

७१६। वोर्णोः पिद्धसे णुः।

वा ।१।, ऊर्णोः ६।, पित् हस्-रे ७।, णुः १।।

ऊर्णोर्णुः स्यात् वा पिति हसे रे। ऊर्णोति ऊर्णौति (६८०) रपिद्धस्युत इति व्रिः।

७१७। घ्याम्।

घ्याम् ७।।

ऊर्णोर्णुः स्यात् पिति हसे घ्याम्। और्णोत्।

७१८। णूव्व्रिष्घ्याम्।

णु उव्-व्रिः १।, घ्याम् ७।।

ऊर्णोर्णुः उव् व्रिः एते स्युः घ्याम्।

और्णवीत् और्णुवीत् और्णावीत्।

७१९। नाजन्तादेरादिर्द्विः।

न ।१।, अजन्तादेः ६।, आदिः १।, द्विः १।।

अन्तादिस्थिताचो धो-रादिर्द्विर्न स्यात्।

---

लीप्योऽन्ती व्योरिति क्तं ज्ञापयति दीधीवेव्योर्न कुत्रापि वृद्धिरिति तेन णके आदीध्यकः आवेव्यकः इति। एतयोर्वैदिकयोरपि पदसाधनं सर्ववर्मानुरोधात्। अविष्टेति लविषौ ज वेरे ञित्वात् आत्मनेपदं स्यात् अविचदिति हग्रष इति सक् अधुचत अदुग्धेति गुहदुहदिहेति न खिः सक् वा ॥७१५॥

ऊर्णोतेर्णुः स्यात् पिति हसे रे। पिति किं ऊर्णुतः। यङ्लुकि। प्रोर्णोनोति प्रोर्णोनौति ॥७१६॥

नित्यार्थं विधानम् ॥७१७॥

णुश्च उव् च व्रिश्च णूव्व्रिः। सूत्रत्वात् पुंस्त्वम् ॥७१८॥

अचो अन्तादौ यस्य सोऽजन्तादिः तस्य। यथा अटिटिषति इटिटिषति उचिखिषति इत्यादौ ॥७१९॥

## ७२० । स्यादौ नवद्रोऽये ।

स्यादौ ७।, न-व-द्-र: ७।।।, अये ७। ।

**स्यादौ स्थिता न व दरा द्विर्न स्यु र्न तु ये । ऊर्णुनाव ।**

## ७२१ । ङिदिम् वोर्णो: ।

ङि-त् ।१।, इम् ।१।, वा ।१।, ऊर्णो: ५।।

**ऊर्णो: पर इम् ङित् स्यात् वा । ऊर्णुविता ऊर्णविता ।**

**[१८८] ष्टु ञल स्तुतौ ।**

## ७२२ । पिद्धस्स्येम् ब्रुवो यङ्लुग्रुतुस्तो स्तु वा ।

पित्-हस्-रस्य ६।, ईम् ।१।, ब्रुव: ५।, यङ्-लुक्-रु-तु-स्तो: ५।, तु ।१।, वा ।१। ।

**ब्रुव: परस्य पितो हसो रस्य ईम् स्यात् यङ्लु ःस्तु वा । स्तवीति स्तौति, अभिष्टौति न्यष्टावीत् न्यस्तावीत् । अस्तोष्ट तुष्टुव । स्तविता स्तोता ।**

**[ १८९ ] टु क्षु ल क्षुते । क्षविता ।**

**[ १९० ] रु ल ध्वनौ । रवीति रौति । रविता रोता ।**

---

स्य: संयोग: तस्यादि: संयोगादि: तस्मिन् नश्च वश्च दश्च रश्च ते। न य: अय: तस्मिन्। संयोगादौ स्थिता नवदरा द्विर्नस्यु:। यथा उन्दिदिषति उब्जिजिषति अड्डिडिषति अर्चिचिषति। अये इति यकारे परे ये नवदरा: ते यकारेण योगे संयोगादिस्थिता अपि द्वि: स्युरेवेत्यर्थ:। यथा ऋ अरार्य्यते अर्य्यमाख्यातवान् आरिर्य्यत् इत्यादौ रेफस्यापि द्वित्वम्। अत्रापि अजन्तादेरित्यनुवर्त्तते। तेन अन्तादिस्थिताची धी: सस्यादौ स्थिता ये नवदरास्ते र्न स्युरित्यर्थ:। अन्यथा द्राल दद्रौ दिद्रासति इत्यादावपि दकारस्य द्वित्वनिषेध: स्यात्। ऊर्णुनावेति ऊर्णुञादीनां नकार आदौ दन्त्य आसीत् पश्चात् रेफयोगात् मूर्द्धन्य:। तेन रेफं हित्वा णु इत्यस्य द्वित्वे पूर्वनकारस्य तथैव स्थिति: परनकारस्य तु निमित्ताभावे नैमित्तिकस्याप्यभाव इति न्यायात् पुनर्दन्त्यत्वमिति॥ ७२०॥

ऊर्णुवितेति इमो ङित्वपक्षे अ्वुध्वीरित्युव्॥ ७२१॥

[१९१] तु ल वृत्ति-हिंसापूर्त्तिषु।

तौति तवीति। तोता तविता।

[१९२ ब्रू ञल उक्तौ। ब्रवीति।

७२३। पञ्चतिप्पञ्चणब्वाहश्च।

पञ्च ।१।।।, तिप् ।१।।।, पञ्च ।१।।।, णप् ।१।।।, वा ।१। आह: १।, च ।१। ।

ब्रुव: परेषां पञ्चानां तिबादीनां पञ्च णबादयो वा स्यु:,

ब्रुवश्चाह: स्यात्। आह आहतु: आहु:।

७२४। हस्त थि।

ह: ६।, त ।१।, थि ७।

आहो हस्य त: स्यात् थे परे। आत्थ आहथु:। पञ्चे सुगमम्।

७२५। वचोऽरे।

वच: १।, अरे ७।

ब्रुवो वच: स्यात् अरे। अवोचत् उवाच ऊचे।

---

पिच्चासौ हस् चासौ रश्चेति पिद्धस: तस्य। यङ् लुक् यस्मात् स यङ् लुक् यङ् लुक् च रुश्च तुश्च स्तुश्चेति तस्मात्। वीभवीति वीभोति रवीति रौति तवीति तौति स्तवीति स्तौति। रुतुस्तूनां छन्दस्येवेत्येके। अभिष्टौतीति गीक इति षत्वम्। न्यष्टावीदित्यादि सुस्तुधोरितीमि निविपरिस्वन्ज़ेति वा षत्वम्। पे किं अस्तोष्ट इत्यत्र आदौ गुणे ऋस्वपरत्वाभावात् न सिलोप:। तुष्टुवेति नेमसुमिति न इम्। स्तोतेत्यादि वेम्सहेतीम् वा चवितेति नेमेकाजेत्यत्र चुवर्जनादिम्। रौतेत्यादि रुदुसुनीस्त्वव्या इति वेम्। तोतेत्यादि वेम् सहेतीम् वा ॥७२३॥

पञ्चानां तिपां समाहार: पञ्चतिप् पञ्चानां णपां समाहार: पञ्चणप् आहादेशो णबाद्यादेश पञ्च एव। स्थानिवदादेश इति न्यायात् णबादौ न द्वित्वं थपश्च नेम् नाप्यतीतकालप्रतीति:। तथाच प्राह स्म रामं भरतोऽपि धर्म्मज्ञमिति भट्टि: ॥७२३॥

पिद्धसेस्येमित्यत्र ब्रुव: स्वरूपग्रहणात् आत्थ इत्यत्र न इम् ॥७२४॥

अरे इति विषयसप्तमी। तेन न्यां वचादेशे सति वक्त्यंस्य ख्येति ङप्रत्ययो

# ह्वादिः ।

---

[१८३] हुलि होमे ।

## ७२६ । ह्वादिः रे द्विः ।

ह्वादिः १।, रे ७।, द्विः १। ।

**ह्वादिर्द्विः स्यात् रे परे । जुहोति ।**

## ७२७ । ह्वो वच्यणौ ।

ह्वः ६।, व् ।१।, अचि ७। अणौ ७ ।, ।

**ह्वोरुकारस्य व् स्यात् अणौ अचि रे । जुह्वति जुहुधि ।**

---

भविष्यतीति सम्भाव्य ङप्रत्ययप्राप्तेः पूर्वमेव वचादेशः । अन्यत्र अरप्रत्ययोत्पत्ति-सम्भाव्ये वचादेशः । ततः सर्वत्र ब्रूञोञानुबन्धत्वात् उभयपदमिति । यथा अवोचत् अवोचत उवाच ऊचे उच्यात् वचीष्ट इत्यादि । विब्रूतिः कटके क्रताजनैरिति तु अरविहितकार्य्यस्यानित्यत्वात् । एवं क्रड्डीः कभाव इत्यनेन कप्रत्यये ब्राह्मणं ब्रूते ब्राह्मण ब्रुवः । अतएव समब्राह्मणे दानं द्विगुणं ब्राह्मणब्रुवे । अधीते शत-साहस्रमसंख्यं वेदपारगे इति पठन्ति ॥७२५॥

---

ह्वादिर्द्विः स्यात् रे परे । जुहोतीति रपिद्रस्तुत इत्यत्र द्विवर्जनात् न त्रिः । ह्वादिस्तु । हुलि होमे ञिलिभी तु भये स्यात् ह्रीलि तु लज्जे पृलि रक्षणे स्यात् । ओकहालि त्यजने ऋटलि गत्यां घृलि तु सेके दीपनकत्याम् । हृलि बलात्करणे लिन्ह गत्यां भस लि भर्त्सनकरणे द्युत्याम् । कित लि किर्लि ज्ञाने कथितस्तु लिर्धावनकर्म्मणि विदितः । धन लि धान्ये धिष लि ध्वनने जन्मलि च तु विदितो जनने । निजिरलिञौ शौचे पोषे स्यात् विजिरलिञौ तु पृथग्भावे स्यात् । विषिग्लिञौ तु ख्यातौ व्याप्त्यां दाञ लि दाने धाञ लि धृत्याम् । भृञ लि तु पोषणकर्म्मणि धृत्यां माङलि शब्दे हाङलि गत्याम् । गार्लि स्तुत्यां ह्वादौ पठिता विंशतिरिति पञ्च च बुधविदिता इति ॥७२६॥

होरुः ह्वः तस्य । उवो बाधकोऽयम् । जुह्वति । अणौ किं जुह्वानि रे किं

७२८। पशाम् वा भी ह्री भृ ह्वो श्याम्।

पशाम् ।१।, वा ।१।, भी ह्री-भृ ह्वो: ५।, श्याम् ७।।

एभ्यः पशाम् वा स्यात् श्याम्। जुहवामास जुहाव।

[१९४] ञि भी ह्रि भीत्याम्। बिभेति।

[७००] दरिद्रो ङिरित्यादि, बिभीतः बिभितः बिभ्यति बिभयामास बिभाय। [१९५] ह्री लि लज्जायाम्।

जिह्रयामास जिह्राय। [१९६] पृ लि पूर्त्तौ।

७२९। पृभ्रादे ङिः खि रे।

पृ-ऋ-भृ-आदेः ६।, ङिः १।, खेः ६।, रे ७।।

पृ-ऋ-भृ माङ-हाङां खेङिः स्यात् रे। पिपर्त्तिः।

७३०। पुर्घो वा।

पुः ६।, घंः १।, वा ।१।।

पिपूर्त्तः पिपृतः। पपरतुः पप्रतुः।

[५७९] गुणत्वात् न एः। [१९७] ओहा कलि त्यागे।

जहाति जहितः जहीतः, जहति।

---

जुहुवुः। ननु ह्वो वचीति कृतेऽपि गुणविधेर्विशेषत्वेन बलवत्वात् जुहवानीत्यादौ गुणस्यैव प्राप्तौ अणाविति सुखार्थमिति काशीश्वरः। वस्तुतस्तु हुधातुसम्बन्ध्युकार-स्थानिकत्वादज्भावनिमित्तकत्वाच्च विशेषविधिना ह्वोवचीत्यनेन इङ्स्थानिक-त्वादज्भसनिमित्तकत्वाच्च सामान्यस्य गुर्घूङ्श्वेत्यस्य बाधित्वात् जुहवानि इत्यादौ वकारस्यैवापत्तिरिति अणाविलुक्तम्॥ ७२७॥

श्त्वाद्रसंज्ञायां द्वित्वं पित्वाद्गुणः। बिभयामास बिभाय जिह्रयामास जिह्राय बिभरामास बभार जुहवामास जुहाव। बिभ्यतीति अन्तोऽद् दे:॥ ७२८॥

पृश्च ऋश्च भादिश्च तत्तस्य। भादिस्तु भृप्रभृतिह्वादिगणसमाप्तिपर्य्यन्त इत्यत आह भृ माङ् हाङामिति। पिपर्त्ति इयर्त्ति बिभर्त्ति मिमीते जिहीते। रे किं पपार इत्यादि॥ ७२९॥

पुरिति षष्ठ्येकम्। खे रे इति च नानुवर्त्ततेऽनिष्टत्वात् पृलि पालने इति

### ७३१ । हाकोऽन्तलोपः ख्याम् ।

हाकः ६।, अन्तलोपः १।, ख्याम् ७। ।

जह्यात् ।

### ७३२ । हौ ङा वा ।

हौ ७, ङा ।१।, वा ।१। ।

**हाको ङा स्याद्वा हौ । जहाहि जहिहि जहीहि । हेयात् ।**

**[१९८] ऋ लिं गत्याम् । इयर्त्ति ।**

**[१९९] जन मलि ङ जनने । जज्ञिषे जज्ञिध्वे ।**

**[२००] निजिरी ञ लि पोषणे शोधने च ।**

### ७३३ । निजां खे रे गुः ।

निजां ६।।।, खेः ६।, रे ७।, गुः १। ।

**निजविजविषां खेर्गुः स्यात् रे । नेनेक्ति नेनिक्तः ।**

---

ऋस्वान्तस्य दीर्घः स्याद्वा एवं सर्वत्र । ख्मते ञिपॄलि तु पालने इति दीर्घान्ते स्थितेऽपि दीर्घविधानस्य सर्वसम्मतत्वात् । पिपूर्त्त इति दीर्घे कृते ऋदिरणा-वित्युरिर्व्यञ्जच् तयोीति दीर्घः । ऋस्वान्तमेव केचित् दीर्घान्तं पठन्ति तेन पृथग् धातु-र्नायम् । अतएव ऋस्वान्तग्रहणेनैवास्य ग्रहणात् पृभादेरिति खेर्ङिः । पपरतुरिति दीर्घपचे ऋतो णः । जहित इति दरिद्री ङिरिति ङिः । जहीतः इति आद्वो-रिति ईः । जहतीति अन्तोऽद् हेः ॥ ७३० ॥

हाको ह् ख्यामिति कृतेऽपीष्टसिद्धौ अन्तलोपगौरवं ज्ञापयति हाको हसे रे परे आदौ द्वित्वं पश्चात् कार्य्यान्तरमिति । तेन जह्यादित्यत्र आदौ द्वित्वे झभख-येति खेराकारस्य अकारः । अन्यथा प्रागच्कार्य्यादचि द्विरिति नियमेन पश्चात् द्वित्वे खेरदन्तत्वं न सम्भवतीति । एवं जहितः जहीतः इत्यादावपि आदौ द्वित्वे पश्चात् दरिद्री ङिरिति ङिः आद्वोरिति ईश्च इति ॥ ७३१ ॥

जहाहीत्यादि आदौ द्विः पश्चात् ङा ङिः ईश्च । इयर्त्तीति ऋलिं गत्यां पृभादेरिति खेर्ङिः खेर्य्वोरिति इय् मूलधातोर्गुणः । एवं इयृतः इयृति । दिपि ऐयः ऐयृताम् ऐयरुः । जज्ञिषे इत्यादि वैदिकत्वेन व्यत्ययादात्मनेपदे सध्वोरस्ये-तीम् ॥ ७३२ ॥

## ७३४। न ह्रुङोऽचि।

न।१।, ह्रुङः ६।, अचि ७।

ह्वेरङो गुर्न स्यादचि रे। नेनिजानि। रे किम्। निनेज।

एवं [२०१] विजिरौ ञ लि विवेके।

[२०२] विषि लिं व्याप्तौ। अविषत् अविक्षत्।

[२०३] डु दा ञ लि दाने।

प्रणिददाति। अद इत्यत्ताेरालोपः। दत्ते।

## ७३५। ह्रो र्दा-धोर्दे-धे ह्रौ।

ह्रोः ६॥, दा-धीः ६॥, दे-धे।१॥, ह्रौ ७।

ह्वेर्दाञो ह्वेर्धाञो दे धे च स्यात् ह्रौ। देहि।

## ७३६। स्था-दोर्ङिष्टीमे नगुः।

स्थादोः ६॥, ङिः, १।, टीमे ७, न।१। गुः, १।।

स्था-दो र्ङिः स्यात् टीमि, तस्य च न गुः। अदित अदिषाताम्।

[२०४] डु धा ञ लि धारणे पुष्टौ। प्रणिदधाति।

---

बहुवचनं गणार्थं गणश्च ह्वाद्युभयपदिसमापकपर्य्यन्त इत्यत आह निजविजविषामिति। किन्तु विजिर्लि ञौ इति जात्तौ यो धातुः स विचिर्लिञौ इति चान्तः कैश्चित् पठ्यते। तेन विजग्रहणेनैव विचः प्राप्तौ विचोऽपि खेर्गुरिति बोध्यम्। नेनेक्ति वेवेक्ति वेवेष्टि। रे किं निनेज विवेज विवेच विवेष ॥७३३॥

नेनिजानि वेविजानि वेविचानि वेविषाणि। एवं यङ् लुकि लेलिहीति लोलुपीति नर्नर्तीति। ङः किं जिह्रयाणि जुहवानि पिपवानि यङ् लुकि नेनयीति बीभवीति चर्करीति। रे किं निनेज इत्यादि। अचि किं नेनेक्तीत्यादि। अविषदिति विषिर्लिञौ शासलिदृ द्युदिति ङः। पक्षे हशष इति सक् अविक्षत्। प्रणिददातीति गदनदेति णत्वम् ॥७३४॥

दाधीरिति डुदाञलि डुधाञलि इति द्वयोर्ग्रहणम् अन्येषां ह्रौ परे दित्वा-

## ७३७। धो द धोऽन्तलोपे तथि ।

धः ६।, द ।१।, धः १।, अन्तलोपे ७।, त-थि ७। ।

धाञो दस्य धः स्यात् तथयोः परयोः, अन्तलोपे सति। धत्ते। धेहि। अधित। [२०५] टु डु भृ ञ लि भृतिपुष्ट्योः। बिभृतः बिभ्रति। बिभरामास बभार। [२०६] मा ङ लि शब्दे। प्रणिमिमीते मिमाते मिमते।

एवं [२०७] ओ हा ङ लि गतौ।

अदादि-पादः।

---

सम्भवात्। देश धेश देधे इति लुप्त प्रथमाद्विवचनान्तं यथासंख्यार्थम्। देहि धेहि ॥७३५॥

अत्र दासंज्ञैव। प्रास्थित प्रास्थिषाताम् अदित अदिषाताम् अधित अधिषातां प्रणिदधातीति गदनदेति णत्वम् ॥७३६॥

धत्ते इति श्नाद्व्योरित्याकारलोपे खेर्दस्य धः। एवं धत्तः धत्थः इत्यादि धत्से धद्ध्वे इत्यादौ तु झभान्तस्येत्यादिना दस्य धः। धो द धोऽणौ तथि इति कृतेऽपीष्टसिद्धौ अन्तलोपे इति गौरवं कथमिति चेन्न यङ् लुकि दाधीतः दाधीतवान् इत्यत्र दा मा गै इत्यनेन ङी आदेशे कृतेऽपि दस्य धकारापत्तेः। बिभरामासेति पश्चामि खेङिः। प्रणिमिमीते इति श्नाद्व्योरिति ईः खेङिः पतपददामेति णत्वम्। एवम् आते—, मिमाते अते—, मिमते। एवं हाङ लि जिहीते जिहाते जिहते ॥७३७॥

इति अदादिपादः।

---

## द्वितीयः पादः—दिवादिः ।

---

[२०८] दिव्‌ु क्रीड़ायाम्

### ७३८। दिव सु तुद रुध क्रादे र्यन् न्वनण्नाः शित्ते रे ।

दिव—क्रादेः ५।, यन्—नाः १।।।, शित् ।१।।।, घे ७।, रे ७। ।

एभ्यो घेऽर्थे यन् नु श्न नण् ना एते रे परे क्रमात् स्युः, ते च शितः। दीव्यति। [२०९] षिव्‌ु तन्तुसन्ततौ। निषीव्यति। न्यषेवीत् न्यसेवीत्। [२१०] नृतौ य नर्त्तने।

### ७३९। नृत् क्रत् चृत् छृत् तृदोऽरसोऽसेरिम् वा।

नृत्—तृदः ५।, अरसः ६।, असेः ६।, इम् ।१।, वा ।१। ।

एभ्यः परस्यारस्य सिवर्जस्य सस्य इम् स्यात् वा। नर्त्तिष्यति नर्त्स्यति। सौ तु अनर्त्तीत्। [२११] त्रसौ य भये।

---

दिवश्च सुश्च तुदश्च रुधश्च क्रीश्चेति ते आदयो यस्य तस्मात्। यन् च नुश्च श्नश्च नण् च नाश्च ते। शित्करणात् रसंज्ञायां अपिद्‌त्वात् ङित्त्वे श्यनादौ परे न गुणः। एते शपो बाधकाः। श्नमिति मूर्द्धन्यणकारानुबन्धो रुधादेरन्त्यादचः परो भवन्नपि शपं बाधते। अत्र प्रकृतिप्रत्यययोरर्थाभिधाने साहचर्य्यस्य अनेनैव सिद्धत्वात् शपबाधकानां श्यनादीनां साहचर्य्याच्च श्नोऽनुरोधात् क्रादेरित्यस्य षष्ठ्यन्तत्वेन वक्तुमुचितत्वेऽपि श्यनादीनामनुरोधात् पञ्चम्यन्तत्वं विरुद्धधर्म्मसमवाये भूयसां स्यात् सधर्म्मकत्वमिति जैमिनिसूत्रात्। दीव्यति श्यनोङित्वात् गुणाभावे व्यनच्तयोरिति दीर्घः। निषीव्यतीति गौरु इति षत्वम्। न्यषेवीदित्यादि निविपरिस्वनृजेत्यादिना षत्वं वा॥ ७३८॥

[५९४] क्रमक्लमेति श्यन् वा, त्रस्यति त्रसति। तत्रास त्रेसतुः तत्रसतुः। [२१२] जॄ इय्यं जरायाम्।

जीर्य्यति। अजरत् अजारीत्। जेरतुः जजरतुः। जरीता जरिता।

[२१३] शो य निशाने।

## ७४०। यन्योशमादिमिदो लोपघंणु।

यनि ७, ओ-शमादि-मिदः ६।, लोप-घं-णु १।।

ओकारस्य लोपः शमादेर्घो मिदेर्णुः स्यात् यनि। श्यति। अशात् अशासीत्। एवं [२१४] एवं छो य लूनौ।
[२१५] षो य नाशे। प्रणिष्यति। न्यषात् न्यषासीत्। सेयात्

[२१६] दो य छेदने। प्रण्यदात् देयात्।

[२१७] राध्यौ ण हिंसे।

रेधतुः रराधतुः। वधार्थः किम्, आरराधतुः।

[२१८] व्यध्यौ ताड़े। विध्यति। विव्याध, विविधतुः।

[२१९] पुष्यौल्ट पोषणे।

[५६५] शासुलिद्युत् पुषादेर्ङ्ल्टोपि इति ङः। अपुषत्।
[२२०] श्लिष्यौ ञिल्ट श्लेषे। अश्लिषत्। आलिङ्गने तु अश्लिक्षत्।

---

नृत् कृत्। नृतीय नर्त्तने कृती ध वेष्टे कृतीशप छिदि इति त्रयम्। चृत् श हिंसे ग्रन्थे चृत् कि सन्दीपने इति त्रयम्। छृदृञधि दीप्तिदेवने छृद कि सन्दीपने इति त्रयम्। तदृञधिर्नादरे च। नर्त्तिष्यति नर्त्स्यति कर्त्तिस्यति कर्त्स्यति चर्त्तिष्यति चर्त्स्यति छर्दिस्यति छर्त्स्यति तर्दिष्यति तर्त्स्यति सौतु अनर्त्तीदित्यादि। जीर्य्यतीति ऋदिरणाविति इर् व्यंनच्तयीति दीर्घः। अजरदित्यादि शासुलिद्युदिति ङ ङ्योरिति गुणः। पचे सौ पे वृद्धिः। जजरतुरित्यादि ऋतोगुः पचे खिलोपादि। जरीतेति वृतो वेम इति दीर्घः॥ ७३९॥

ओश्च शमादिश्च मिद च तत्तस्य। लोपश्च घंश्च णुश्चेति। श्यति द्यति स्यति

[२२१] रध्यू ल्ट पाकहिंसयो:।

## ७४१। नुण् रधो मुचां नश्मस्जो रभलभोऽनठीमच्ये झस्यरठ्यचि।

नुण् ।१।, रध: ६।, मुचां ६।।।, नश्-मस्ज: ६।, रभ: लभ: ६।, अनठीमचि ७।, ए ७।, झसि ७।, अरठ्यचि ७।।

रधष्ठीवर्जे म्वर्जेऽचि। मुचादेरल्ये, नश-मस्जोर्झसे, रभलभोरठोवर्जेऽचि, नुण् स्यात्। अरन्धत्। रधिता रद्धा। ठ्यान्तु ररन्धिव रेध्व, ररन्धिम रेध्म। [२२२] तृप्यू जिल्ट प्रीणने। अतर्पीत् अत्राप्सीत् अताप्सीत् अतृपत्। एवं [२२३] दृप्यु इजि हर्षाहङ्कारयो:। [२२४] मुह्यू जिल्ट वैचित्त्ये।

मोहिता [१७८] मुहां घङ् वाभौ। मोग्धा मोढ़ा।

---

स्यति शमादिश्च। शमु श्रमू दमुश्चापि चमु तमु भ्रमुश्च क्लमुमदीति च मनीषिभिर्निगदित: शमादिर्गण:। शाम्यति श्राम्यति दाम्यति चाम्यति :ताम्यति भ्राम्यति क्लाम्यति माद्यति। मिदस्तु मेद्यतीति। अशादित्यादि षेशाक्षासाघेति सेलु्क्। पचे यमरमेति इम् सनौ। प्रणिष्यति इति दामासीहन इति णत्वात् गीक इति षत्वम्। न्यषादित्यादि षेशाच्क्षासाघेति से: पेलु्क् वा अस्यपीति षत्वं सेयादिति दामा गे इति ङे प्रख्यदादिति भूस्थापिवेति सेलु्क् पतपददामेति णत्वम्। देयादिति दामागे इति ङे। रेधतुरिति अनेकार्थत्वादिह राधेर्वधार्थत्वे विधिबलादातोऽप्येत्वम्। अरराधतुरिति। आराध्यते: सेवार्थत्वात्। विध्यतीति ग्रहस्वपाद्योरिति जि:। विव्याधेति व्यथग्रहेति जि:। विविधतुरिति व्यथग्रहेति खेर्जि: ग्रहस्वपाद्योरिति मूलस्य जि:। अश्लिषत् इति पुषादित्वात् ङ:। अश्लिचदिति ह्मष इति सक्॥७४०॥

न ठी अठी अठ्या इम् अठीम् नास्ति अठीम् यत्र अनठीम् अनठीम् चासौ अच्चेति अनठीमच् तस्मिन्। अनठीमचि रश्च ठी च रठ्यौ न रठ्यौ अरठ्यौ तयीरच् अरठ्यच् तस्मिन्। अनठीमचीति रध्यते ष्ठीमि सामान्ये अचि च नुण् स्यादित्यर्थ:। यथा ररन्धिव ·ररन्धिम ठ्या अचि ररन्ध अन्याचि रन्धयति अरन्धि रन्धनम्। अठीमिति तु रधादित्वादिमि रधिष्यति रधिता रधितव्यम्। किञ्च ठीमचि

[२२५] नशल्ट य् नाशे ।

## ७४२ । नश नेश वा ङे ।

नश ।१।, नेश ।१।, वा ।१।, ङे ७। ।

प्राणेशत् प्राणशत् । नशिता प्रनंष्टा प्रनंष्टा । [५४८] अशान्तत्वात् न णः । [२२६] शम् श्य इर् उपशमे । प्रणिशाम्यति । [२२७ क्लम्य् भिर् ग्लानौ । क्लाम्यति क्लामति । [२२८] असु इर् क्षेपे । आस्यत् । [२२९] यसु इर् यत्ने ।

यस्यति यसति, संयस्यति संयसति । अन्यत्र । प्रयस्यति । [२३०] लुभ्य इर् गार्द्ध्ये । लोभिता लोब्धा । [२३१] ञीर् य मिदा स्नेहे । [मिद्यति । [मिदेर्गुणः ] [२३२] सू यो ङ सूतौ । असविष्ट असोष्ट । [२३३] ओ दीङ य क्षये ।

---

इत्युक्तोऽपीष्टसिद्धौ अचत्वादेव ठीमः प्राप्तौ ठीमो ग्रहणादेव अनिमौ वर्जने च तु गौरवं ज्ञापयति रध्यतेः पुषादित्वात् ङे नुणि कृते हसुङ न इत्यनेन नस्य लोपो न स्यादिति । तेन अरन्धदित्येव न च नुण्करणसामर्थ्यात् नलोपो न स्यात् इति वाच्यं रन्धयतीत्यादौ नुणः सामर्थ्यकत्वात् मुचामिति बहुवचनं गणार्थम् । गणश्च मुञ्चति लुम्पि लिम्पौ च विन्दिः सिञ्चति कृन्तती । खिन्दतिः पुंसतिश्चैव मुचादावष्टधातव इति । मुचादेरत्ये इति तुदादित्वात् जाते शप्प्रत्यये परे इत्यर्थः तेन मुञ्चति इत्यादि । अन्यत्र घञि मोकः । नशमसज्जीर्भसे नंष्टा नङ्क्ष्यति मङ्क्ता मङ्क्तुं मङ्क्ष्यति । रभलभोस्तु रम्भयति अरम्भि आरम्भः लम्भयति अलम्भि आलम्भः रठग्री रठौतु रभते रेभे लभते लेभे । अताप्सींदित्यादि ञ्णि तृप्यू प्रीणने दि कृषन्तृपेति सिपचे ऋकारस्य वृद्धिः । वद्रोऽकिदिन्ति रेफपचे अत्राप्सीत् रधादित्वात् इम् गुणपचे अतर्पीत् पुषादित्वात् ङे अतृपत् । मोहितेति रधादित्वादिम् वा । पचे मुहादित्वात् घङि मोग्धाघङोऽप्राप्तिपचेऽन्तरङ्गत्वात् परत्वाच्चादौ गुणे होढ़ोभाविति हस्य ढे ढभात्तथोर्धो ध इति तकारस्य धे ष्टुभिरिति धस्य ढे ढ्रोढ्रि इति ढलोपे पूर्वक्रस्वाभावान्न दीर्घः मोढ़ा ॥ ७४१ ॥

नश । नश् ल्ट नाशे इत्यस्य नेश् स्याद्वा ङे । प्राणेशत् इत्यादि शान्तनशेति णत्वम् । नशितेति रधादित्वात् इम वा । पचे नशमसज इति नुणि शक्काजेति

## ७४३ । दीङ्श्यां यन् यब्णौ ङा सनि तु वा ।

दीङः ६।, श्यां ७, यन् ।१।, यप्णौ ७, ङा ।१।, सनि ७, तु ।१।, वा ।१।।

दीङः श्यां यन्, यपि णौ च ङा, सनि तु वा स्यात्। अदास्त दिदीये। [ २३४ ] जनी श्य ङ प्रादुर्भावे। जायते।

## ७४४ । जनबधः सिममोऽकम्मवमाचमो-ञ्णित्कृदिणि स्वोऽमयम विश्रमस्तु वा ।

जनबधः ६।, सिमम: ६।, अकमवमाचमः ६।, ञ्णित् कृदिणि ७।, स्वः ६।, अम-यम-विश्रमः ६।, तु ।१।, वा ।१। ।

जनो बधः सिमोऽमन्तस्य च कमवमाचम-वर्जस्य स्वः स्यात् ञ्णिति कृति इणि च, अम यम विश्रमस्तु वा। अजनि अजनिष्ट जज्ञे। [ २३५ ] दी पी श्य ऋट दीपने।

अदीपि अदीपिष्ट। एवं [ २३६ ] पूरी श्य प्यायने।

[ २३७ ] पद्यौ ङ गतौ।

[ ६४२ ] पदस्तनोण् घे इति। प्रपद्यपादि अपत्सातात्।

[ २३८ ] बुध्यौ ङ अवगमने। अबोधि अबुद्ध।

[२३९] नह्यौ ञ्य बन्धे। [२३७ नह्यौ धङ्भौ। अनात्सीत् अनद्ध।

इति दिवादिपादः।

---

षङ् तस्य टत्वे प्रनंष्टा। पचे नुणि मुहादित्वात् घङि ढभादिति तस्य धे झप्-झसोरिति घस्य गे नस्यानुस्वारे तस्य च ङकारे प्रनङ्ग्धा अशान्तत्वात् न णः। प्रणिश्राम्यति इति वपवहग्रमचीति णत्वं शमादित्वात् दीर्घः। क्राम्यतीति क्रमक्लमेति श्यनि शमादित्वात् दीर्घः। आस्यदिति असु इर चेपे वक्ष्यस्येति ङे वच्यस्श्विपतामिति अस्थः। लीक्षा इत्यादि वेमसहेतीम् वा। मेद्यति इति यन्यौ शमादीति गुणः। असविष्टेति वेमूदितीम् वा ॥ ७४२ ॥

यप् च णश्च यब्णु सूत्रत्वादेकत्वं तस्मिन्। दिदीये दिदीयाते। यपि प्रदाय गुरिति गुणसाधनयोग्यः। अदास्त दास्यते दापयति दाता। सनि दिदासते दिदीषते। जायते इति स्यादानेति जा ॥ ७४३ ॥

# तृतीयः पादः—स्वादिः ।

---

[२४०] षु ञ न बन्धे ।

सुनोति अभिषुणोति सुनुतः सुन्वन्ति । [ ६३२ ] सुस्तुधोरितीम् । व्यषावीत् । असविष्ट असोष्ट । सुषुविव । विसविष्यति विसोष्यति । ५७२ स्यान्तस्वात् न षः ।

[ २४१ डु मि ञ न क्षेपे ।

## ७४५ । मिस्योर्यण्णौ ङाऽखलति लियस्तु वा ।

मिस्योः ६॥, यण्णौ ७।, ङा ।१।, अ खल-अलि ७।, लियः ६।, तु ।१।, वा ।१। ।

अमासीत् प्रख्यमास्त ।

---

जनस्य वध् च जनवध् तस्य कमस्य वमस्य आचम् च ते, न विद्यन्ते ते यत्र स तस्य । सेम् चासौ अम् चेति सेमम् तस्य । ञ च णच ञणौ ञणावितौ यस्य स ञणित् ञणिच्चासौ कच्चेति ञणित्कत् ञणित्कच्च इण् च ञणित्कदिन् तस्मिन् । यथा ञणि जन्यं वध्यं घञि जनः वधः णकि जनकः इणि अजनि अवधि । सेमोऽमन्तस्य तु । घञादौ शमः शमकः अशमि । सेमः किं गामुकः अगामि । कामादेस्तु कामः वामः आचामः । आचमः किं चमः विचमः । अमादेस्तु अमः आमः यमः यामः वियमः वियामः विश्रमग्रहणात् श्रमः प्रश्रम इत्यादिषु नित्यम् । अजनीति पदस्तनीण् घे इति इण् । पचे ञ्यां सिः अजनिष्ट जज्ञे इति हनगमेत्युङ् लोपः । अदीपीति पदस्तनीण् घे इतीण् वा प्रख्यपादीति गदनदपतपदेति णत्वम् । ननु अबुद्धेत्यादौ सेर्लोपे त्यलक्षणमिति न्यायात् झभान्तस्येत्यादिना वकारस्य भकारः कथं न स्यादिति चेत् सत्यं त्यलोपे सति त्यस्वरूपेण विहितं कार्य्यं तदेव स्यात् न तु प्रत्ययस्य वर्णविहितम् इति । अनात्सीदिति अनिमत्वात् वृद्धिः अनद्ध इति नह्यो धङ् भौ इति धङ् ॥ ७४४ ॥

इति दिवादिपादः ।

---

अभिषुणोति इति णीक इति षत्वे षृर्णु इति णत्वम् । सुन्वन्ति अ्नुध्वोरिति व । व्यषावीदिति सुस्तुधोरितीम् अस्यपीति षत्वम् । असोष्ट इत्यादि वेमृदितीम्

[ २४२ ] चि ञ न चित्याम्।

## ७४६। चेः किर्वा सन्ठ्योः।

चेः ६।, किः १।, वा ।१।, सन्-ठ्योः ७॥।

चिकाय चिचाय। चिक्ये चिच्ये। [२४३] स्तृ ञ न स्तृतौ।

## ७४७। स्याद्यृ-द्दृ-द्वु-रस्कु वेम् सन्मढ़ीसिः।

स्यादि-ऋत्-ऋत्-वृः ५।, अस्कुः ५।, वा ।१।, इम् ।१।, सन्-मढ़ीसेः ६।।

स्कृवर्जं स्याद्यृदन्तात् ऋदन्ताच्च वृञो वृङश्च सनो मे स्थितयोर्ढीस्योश्च इम स्यात् वा। अस्तरिष्ट अस्तृत। स्तरिषीष्ट स्तृषीष्ट। [२४४] वृञ न वृतौ। अवारीत्। अवरीष्ट अवरिष्ट अवृत। ववरिथ ववृव। वरिषीष्ट वृषीष्ट। [२४५] धु ञ न कम्पे। [६२३] सुस्तुधोरितीम्। अधावीत् [२४६] हि न वर्द्धने गतौ। प्रहिणोति।

---

सुषुविव इति क्रदुसुनीस्तव्या इति इम्निषेधात् नेमसुमिति नियमेन नित्यमिम् क्लिलादिति षत्वे अ्ध्वीरित्युव् ॥ ७४५ ॥

डुमिञ् न चेपे मीङ्यतु मीञग् बधे मी कि गत्यां विशेषानभिधानात्। एषां यपि गुणसाधनयोग्यप्रत्यये च ङा स्यात्। न तु खलि अलि च। लियस्तु यपि गुणसाधनयोग्ये च ङा स्याद्वा। यथा प्रमाय माता मानं मास्यति मापयति। खललोस्तु दुर्मयः मयः लियस्तु प्रलाय प्रलीय लाता लेता इत्यादि ॥ ७४५ ॥

चेः किर्वा स्यात् सनि ठ्याञ्च। चिकाय चिचाय चिकीषति चिचीषति ॥७४६॥

स्य आदिर्यस्य स स्यादिः स्यादिश्चासावृच्चेति स्याद्यृत् स्याद्यृच्च ऋच्च वृश्चेति स्याद्यृद्दृ तस्मात्। नास्ति स्कुर्यत्र सोऽस्कुः तस्मात्। ढी च सिश्चेति ढीसिः मे ढीसिः मढ़ीसिः। सन् च मढीसिश्चेति तस्य सर्वत्र पुंस्त्वं सूत्रत्वात्। यथा तिस्तरिषति तिस्तीर्षति स्तरिषीष्ट स्तृषीष्ट अस्तरिष्ट अस्तृत। इगुङ्रिति कित्त्वान्न गुणः। तितरिषति तितीर्षति तरिषीष्ट तृषीष्ट अतरिष्ट अतीर्ष्ट। विवरिषति वुवूर्षति विवरिषते वुवूर्षते वरिषीष्ट वृषीष्ट अवरिष्ट अवृत। अस्कुः किं सञ्चिकीर्षति संस्कृषीष्ट समस्कृत। अवारीदिति नेमेकाजा इत्यत्र वृवर्जनात् इम्। अवरीष्ट इति वृतो वें मी घं इति दीर्घः। ववरिथ इति नेमृत स्थप इत्यत्र वृवर्जनात् इम्।

७४८। ह्वेः खेरनङि घिः।

ह्वेः ६।, खेः ५।, अनङि ७, घिः १।।

खेः परस्य ह्वेर्घिः स्यात् न तु अङि। जिघाय।

[ २४७ ] क्षवि न क्षतौ हिंसे।

७४९। क्षविधिव्योः क्षधी श्नौ।

क्षवि-धिव्योः ६॥, क्ष-धीः १॥, श्नौ ७।।

क्षणोति अक्षखीत् [५६८] अतएवेदितो नुण्। चक्षख। क्षखिता क्षख्यात्। [२४८] दन्भु न दम्भे। देभतुः ददम्भतुः।

७५०। श्रन्थ-ग्रन्थ-दन्भां थपि न-लोपो वा।

श्रन्थ-ग्रन्थ-दन्भां ६॥, थपि ७, नलोपः १।, वा ।१।।

देभिथ ददम्भिथ। [२४९] धिवि न प्रीतौ। धिनोति। [२५०] अशू ङ न व्याप्ति संहत्योः। [५८०] स्यान्तादादिति खेरान्। आनशे।

इति स्वादिपादः।

---

वव्रेति नेमसुम इति नित्य इमो निषेधः। अधावीदिति सुस्तुधीरिति इम्। प्रहिणोति इति मीनाहिन्वानिति णत्वम्॥ ७४७॥

जिघाय जिघीषति जेघीयते। अङि तु अजीहयत्॥ ७४८॥

क्षविधिव्योर्विभक्त्युत्पत्तेः पूर्वम् इदनुबन्धत्वात् नुणि कृते तस्यापि धात्ववयवत्वात् श्नौ परे तत्सहितयोरादेशः। क्षणोति इति षृ्र्ण इति णत्वम्। अक्षखीदित्यादौ बकारस्य दन्त्यत्वेन भसत्वाभावात् तस्मिन् म्नोर्नुरित्यनेनानुस्वारो न स्यात् षृ्र्ण इति णत्वम्। देभतुरिति स्यात् ठापिदिति किच्चपचे नलोपे दभभागलाभात् खिलोपादि॥ ७४९॥

एभ्यस्थप् कित् वेति कृतेऽपीष्टसिद्धौ थपि नलोप इति गौरवम् कथमिति चेन्न दभिकनोदे इति इदनुबन्धचुरादेर्ञेरनित्यपचे देभिथ इत्यत्र थपः किद्वेति पचे इदिज्ञातीर्नलोपनिषेधात् हसुङ न इत्यस्याप्राप्तौ चुरादेर्ञेरनित्यत्वबीजं चुर्थो जिरित्यत्र द्रष्टव्य स्पष्टार्थम्। श्रेथिथ शश्रन्थिथ ग्रेथिथ जग्रन्थिथ देभिथ ददम्भिथ॥ ७५०॥

इति स्वादिपादः।

# चतुर्थः पादः—तुदादिः ।

[२५१] तुदौ ञ श व्यथे । तुदति तुदते ।

[२५२] भ्रस्जौ ञ श पाके । भृज्जति अभ्राक्षीत् ।

## ७५१ । भ्रस्जोऽरे णौ भर्ज वा ।

भ्रस्जः ६।, अरे ७।, णौ ७।, भर्ज ।१।, वा ।१। ।

बभर्ज बभ्रज्ज बभर्ज्जे बभ्रज्जे ।

[२५३] मुच ऌौ ञ श प मोक्षे ।

[७४१] नुण् रध इति नुण् । मुञ्चति । अमुचत्, अमुक्त ।

[२५४] ञि लिपौ ञ श प लेपने ।

अलिपत् । अलिपत अलिप्त । [२५५] षिचौ ञ श प उक्षणे ।

निषिञ्चति । न्यषिचत्, न्यषिचत न्यषिक्त । निषिषेच ।

[२५६] कृतौ शप छिदि ।

[७३८] नृत्कृदितीम् वा, कर्त्तिष्यति कर्त्स्यति ।

[२५७] यू श क्षेपे । विक्षुवति व्यक्षावीत् ।

[२५८] व्रश्चू श च्छेदे ।

वृश्चति । अव्रश्चीत् अव्राक्षीत् । वव्रश्च वव्रश्चतुः ।

---

तुदतीत्यादि शप्रत्ययस्य ङित्त्वात् न गुणः । भृज्जतीति ग्रहस्वपाद्योरिति जिः अभ्राक्षीदिति स्यादेः सलोपे भ्रज्जाजेति षङि षढोः कः से अनिमत्वाद् वृद्धिः ॥७५०॥

भ्रस्जो भर्ज वा स्यात् अरे गुणसाधनयोग्ये । भ्रस्जधातोः परेऽप्रत्यये जाते गुणिनी रस्यासम्भवात् एव णौ इत्युक्तेऽपि अरप्राप्तौ अरे इत्युक्तं ज्ञापयति क्वचित् अरे गुणिन्यपि भर्जादेशो न स्यादिति तेन ट्याम् अभ्राक्षीदित्यादिकमेव । बभर्ज इति ठ्या एकारस्य स्यात् व्यपित् किद्वेति कित्त्वाभावपक्षे गुणसाधनयोग्यत्वे सति भर्जादेशः पक्षे बभ्रज्जे कित्त्वेऽपि ठ्यां नवे प्रच्छामिति जेर्निषेधः । मुञ्चतीति मुचादित्वात् नुण् । अमुचदिति ऌदित्त्वात् ङः । अमुक्तेति आत्मनेपदे ङस्याप्राप्तौ सिः । औदित्वादिमोऽभावे इगुङ्कुरिति सेः कित्त्वान्न गुणः ततः सेर्लोपः ।

[ २५९ ] ऋच्छश गमनमोहकाठिन्येषु ।

## ७५२ । ऋच्छो णुठ्राम् ।

ऋच्छः ६।, णः १।, ठ्राम् ७।।

आनर्च्छ । [ २६० ] कॄश विक्षेपे । [ ६२८ ] ऋदिरणाविति इर् । किरति । चकरतुः । करीता करिता ।

## ७५३ । प्रत्युपोपात्कः सुम् हिंसाच्छेदे ।

प्रति उप उपात् ५।, कः ६।, सुम् ।१।, हिंसा-च्छेदे ७।।

प्रत्युपाद्धिंसायाम् उपाच्छेदे किरतेः सुम् स्यात् । प्रतिस्किरति उपस्किरति ।

---

अलिपदिति वक्तव्यस्येति ङः । अलिपत अलिप्तेति लिव्भ्यम्तु मे इति वा ङः । निषिञ्चति इति मुचादित्वात् नुण् गीक इति षत्वम् । न्यषिचतेति लिव्भ्यम्तु मे इति ङी वा निषिषेच दशस्यादेरिति षत्वम् । विषुवति इति गीक इति षत्वं श्रुध्वोरित्युव् । व्यषावीदिति वेमूदित्यत्र सूतिसूयग्रहणात् अस्मान्नित्यमिम् । व्रश्चतीति ग्रहस्वपाद्योरिति जिः । अव्राचीदिति इमोऽभावपक्षे शच्छाजेति षङि निमित्तापाये नैमित्तिकस्याप्यपाय इति न्यायात् चकारनिमित्तकस्य शस्य पुनर्दन्त्यत्वे स्यादेः सोलोपः षढोः कः से इति के क्वित्वादिति षत्वे अनिमत्वात् वृद्धिः । वव्रश्चतुरिति ठ्रां नवेप्रच्छाम् इति जेर्निषेधः ॥ ७५१ ॥

ऋच्छो णः स्यात् ठ्राम् । सर्वत्र णपादौ बलवत्त्वादादौ छोऽच इति द्विर्भावे लघूङीऽभावात् अतुसादेश्च क्वित्वादप्राप्तौ ठीमात्रविधिरयम् । न च प्रकृतेः पूर्वं पूर्वं स्यात् अन्तरङ्गतरं तथा इति न्यायात् गुणस्यैव बलवत्त्वमिति वाच्यम् । विच्छायति इत्यत्र गुणादपि विशेषत्वेन द्विर्भावस्य बलवत्त्वदर्शनात् । आनर्च्छ आनर्च्छतुः आनर्च्छुरित्यादि । चकरतुरिति ऋतो णः कित् ठ्राम् इति गुणः । करीतेति वॄतोवेमीर्घोऽठीति वा दीर्घः ॥ ७५२ ॥

प्रतिश्च उपश्च प्रत्युपं प्रत्युपञ्च उपश्च प्रत्युपोपं तस्मात् । हिंसा च छेदश्च हिंसाच्छेदं तस्मिन् । प्रतिस्किरति हिनस्तीत्यर्थः । परि नि वि सेवसुमेति उक्तेर्न षः उपस्किरति हिनस्ति छिनत्ति वेत्यर्थः ॥ ७५३ ॥

[२६१] तृन्प श प्रीणने।

७५४। तृन्पां न-लुक् वा श-णौ।

तृन्पां ६।॥, न ।१। लुक् ।१।, वा ।१।, श-णौ ७।।

तृन्प तुन्प तृन्फ तुन्फ रिन्फ गुन्फ दृन्भ उन्भ शुन्भां नकारस्य लुक् वा स्यात् शे णौ च। तृपति तृम्पति

[२६२] चृती श प हिंसे। चर्त्तिष्यति चर्त्स्यति। [२६३] प्रच्छी श ज्ञीप्से। पृच्छति। अप्राचीत्। पप्रच्छ पप्रच्छतुः।

[२६४] सृजी श विसर्गे।

अस्राचीत्। ससर्जिथ सस्रष्ठ। [२६५] टु मस्जी श स्नाने। मज्जति अमाङ्क्षीत्। [२६६] स्पृशी श स्पृशि। अस्प्राचीत् अस्पार्क्षीत् अस्पृक्षत्। [२६७] विच्छ श गतौ। विच्छायति विच्छति। अविच्छायीत् अविच्छीत्।

[२६८] मृशी श स्पृशि। अम्राक्षीत् अमार्क्षीत् अमृक्षत्।

[२६९] इषु श वाञ्छे।

इच्छति [६०६] वेमसहेतीस् वा, एषिता एष्टा।

---

बहुवचनं गणार्थं गणश्च। तृन्पतिस्तृन्फतिश्चैव तुन्फतिस्तुम्फतिस्तथा। गुम्फति-दृन्फतिश्चैव रिन्फतिः शुन्भतिस्तथा। उन्भतिश्चैव विज्ञेयस्तृन्पादिर्नवभिर्गणः। एषां नस्य लुक् स्याद्वा शप्रत्यये परे गुणसाधनयोग्यप्रत्यये परे च इत्यर्थः। शे यथा तृपति तृम्पति तृफति तृम्फति तुपति तुम्पति तुफति तुम्फति गुफति गुम्फति दृफति दृम्फति रिफति रिम्फति शुभति शुम्भति उभति उम्भति। णौ यथा तर्पयति तृम्पयति तर्फयति तृम्फयति तोपयति तुम्पयति गोफयति गुम्फयति दर्फयति दृम्फयति रेफयति रिम्फयति शोभयति शुम्भयति ओभयति उम्भयति। गवि कर्त्तरि प्रात्तुन्पतेः सुम्वक्तव्यः। प्रस्तुम्पति गौः। अन्यत्र प्रतुम्पति अश्वः। पृच्छतीति ग्रहस्वपाद्योरिति जिः। अप्राक्षीदिति शक्रार्जेति षडि षढोः कः सि के अनिमत्वात् वृद्धिः। पप्रच्छतुरिति ठ्यां नवेप्रच्छाम् इति जेर्निषेधः। अस्राक्षीदिति सृजदृशोर्मु नित्यमिति ऋद्रः। ततो वृद्धिः। ससर्जिथ इत्यादि सृजदृशेति वेम्। अमाङ्क्षीदिति नुण रध

[ २७० ] कुट शि कौटिल्ये ।

## ७५५ । कुटां णुञ्णौ ञ्णिति ।

कुटां ६।।।, णु-ञ्णौ १।।, ञ्णिति ७। ।

कुटादेर्णुञ्णिश्च स्यात् ञिति णिति च, नान्यत्र । अकुटीत् चुकोट । [ २७१ ] व्यच शि व्याजे ।

विचति । विव्याच, विविचतुः ।

---

इति नुण् स्यादेः सोलोपः चुङ्ङिति कुङि नस्यानुस्वारे अपे अमोः । असाचो-दित्यादि कषमषसृशेति सिर्वा वद्रोऽकिदिति ऋद्री वा सेरप्राप्तौ सक् । विच्छा-यतीत्यादि विच्छास्तुतिपण इति वायः । आयान्तत्वात् सनञ्प्रादिर्धुः पुनर्धातु-संज्ञायां तिप्शपौ आयस्याप्राप्तिपचे श एव । तेन विच्छायन्तो कुले स्त्री वा इत्यत्र अपयन इति नुण् । विच्छती विच्छन्ती कुले स्त्री वेत्यत्र आदीनोरिति नुण् वा । असाचीदित्यादि पूर्ववत् इच्छतीति स्यादानेति इच्छादेशः ॥ ७५४ ॥

ञ च ण च ञ्णौ ञ्णावितौ यस्य ञ्णित् तस्मिन् । ञित्णितोः परयोः गुणवृद्ध्योः सिद्धौ पुनर्विधानं नियमार्थम् । तेन कुटादीनां ञित्णिद्भ्याम् अन्यत्र गुणवृद्धी न स्तः इति नियमः । ञित्णितोस्तु गुणसामग्र्यां गुणः वृद्धिसामग्र्यां वृद्धिः स्यादित्यर्थः । यथा कुट शि कौटिल्ये इत्यादीनां अकुटीत् कुटिष्यति कुटन-मित्यादौ न गुणः । नू शि स्तवने इत्यादोनाम् अनुवोदित्यादौ न वृद्धिर्न च गुणः । अगुणत्वादुव् च । एवं नुविष्यति नुवनमित्यादौ च बोध्यम् । ञित्णितोस्तु कोटयति चुकोट इत्यादौ गुण एव । नावयति नुनाव इत्यादौ वृद्धिरेव । कुटा-दिश्च कुटि घुटि चुटि तुटि पुटति च्छुटयस्तुटि मुटि लुठि कुड़ति गुड़यः घुड़ि जुड़ि तुड़ि थुड़ भ्रुड़ति द्रुड़यः स्फुड़ि वुड़ि लुड़ति स्थुड़ति स्फुड़यः । व्यचशि-व्याजे कुचि गुजि हुड़यः चुलि गुरति च्छुरति पुड़ि मृड़यः । स्फुरति स्फुलती क्रड़ क्रड़ि रुफयः । कूगूनूदीर्घाः सकलाः कुवतिर्गुवतिधु वतिश्चेते ऋखान्ता इति धीरो-ऽभूते । द्वाचत्वारिंशत्संख्याता धातव एव कुटादावुदिताः । लिखतिर्मिलति-र्द्वाविह कश्चित् व्यस्यातामिति वदति विपश्चित् । तेन लिखितुं विश्वसृजोऽपि शक्तिर्हानिरित्यादि एवं लिखनं लेखनं लिखितव्यं लेखितव्यम् इत्यादयः प्रयोगाः । एवं मिलिष्यति । महापातकिनः पञ्चमिलितव्यं न तैः सह इत्यादि । एवञ्च

## ७५६ । व्यचो जिरञ्णि दसि ।

व्यचः ६।, जिः १।, अञ्णिदसि ७। ।

विचिता । [ २७२ ] त्रुट श्नि च्छेदे । त्रुट्यति त्रुटति ।
[ २७३ ] स्फुर श्नि स्फूर्त्तौ । निष्फुरति निस्फुरति ।
एवं [ २७४ ] स्फुल श्नि स्फूर्त्ति चलनयोः ।
[ १७५ ] नू श्नि स्तवने । अनुवीत् । नुनाव ।
[ २७६ ] मृ ङ श्न मृतौ ।

## ७५७ । मृङष्टीढ्ये मम् ।

मृङः ५।, टीढ्ये ७।, मम् १। ।

य्यां ढ्यामत्ये च मृङा मं स्यात् । [ ६२० ] ऋद्भिः श्यक् ढी-पे । म्रियते, अमृत, मृषीष्ट । एषु किम् । ममार, मरिष्यति ।

---

व्यालनिलयमिलनेन गरलमिव कलयति मलयसमीर इति जयदेवः । विचतीति ग्रहस्वपाद्योरिति जिः विविचतुरिति व्यथग्रहेति खेर्जिः ग्रहस्वपाद्योरिति मूलस्य जिः ॥७५५॥

ञ च ण च ञ्णौ ञ्णावितौ यस्य स ञ्णित् । जिणश्च अस् च ञ्णिदस् तस्मिन् । व्यचो जिः स्यात् न तु ञिति णिति असि च । विचिता विचिष्यति विच्यते विव्याच विविचतुः । ञ्णिदसि तु व्याचयति व्याचकः उरुव्यचाः त्रुट्यतीति क्रमक्लमेति श्यन् वा । निष्फुरति विष्कुभ्नेति षत्वं वा । अनुवीदिति कुटादित्वात् गुणहृद्धीनिषेधेम्रुध्वोरित्युव् ॥७५६॥

टी च ढी च अस्य टीढ्यं तस्मिन् विषयसप्तमीयम् । मृङो ङित्त्वेऽपि य्यां ढ्याम् अत्ये च विषये मं स्यादिति नियमः । म्रियते म्रियेत अमृत मृषीष्ट अन्यत्र ममार मर्त्ता मरिष्यति अमरिष्यत् केचित्तु मृङो ङानुबन्धाभावेऽपि टीढ्ये मविधाना-दन्यत्र परस्मैपदे सिद्धे ङित्करणादात्मनेपदस्य प्राप्तौ परस्मैपदं कुत्रचिद्भवति । आत्मनेपदमिच्छन्ति परस्मैपदिनां क्वचिदिति न्यायो लभ्यते तेन स एवायं नागः सहति कलभेभ्यः परिभवमिति । विद्या धनं मनुष्याणां मृतेऽप्यनुगच्छते इत्यादि सिद्धमित्याहुः ॥७५७॥

[ २७७ ] ओ विजी ङ श भी-कम्पे।

## ७५८। विजेर्गुर्नेमि।

विजे: ६।, गु: १।, न ।१।, इमि ७।।

विजेर्गु: न स्यात् इमि। अविजिष्ट।

इति तुदादिपाद:।

इति प्रथम चतुर्गणाध्याय:।

---

अथ द्वितीय चतुर्गणाध्याय:।

## प्रथम: पाद:—रुधादि:।

[ २७८ ] रुधिरी ध ञि आवरणे। रुणद्धि।

## ७५९। नणो न्रेऽणौ।

नण: ६।, न् ।१।, रे ७।, अणौ ७।।

नणो नकार: स्यात् अणौ रे। रुन्ध: रुन्धन्ति। अरुणत्, अरुण: अरुणत्। अरुधत् अरौत्सीत्। [ २७९ ] क्षुदु ञ धिर् देवने। [ ७७९ ] क्षुद्दि ष्यति क्षत्स्यति। एवं [ २८० ] त्टदु ञ धिर्नादरे।

---

इति प्रथम चतुर्गणाध्याय:।

विजे: किदिनित्यनेनैवेष्टसिद्धौ गुर्नेमीति गौरवं स्पष्टार्थम्। अविजिष्ट विजिष्यते विजिता ॥७५८॥

इति तुदादिपाद:।

---

रुणद्धीति रुध तिप् नण् ढभात्तथोरिति तस्य धे झपभ्झसोरिति धस्य द: षृ्र्णं इति णत्वम्।

अरे नणोऽसम्भवात् रे इति स्पष्टार्थम्। रुन्ध इत्यादौ दकारस्य वा लोप:। इति पूर्वमुक्तं वयाणामेकवर्गाणां मध्यमस्तव लुप्यते इति प्रमाणात्। णत्वाभाव-बीजन्तु षृ्र्णं इत्यव लिखितम्। अरुणदित्या्रि हसाङ्ग्रामिति सेर्लोपे झपभ्झसो-रिति धस्य तौ दौ वा। पक्षे ध्यां सौ रवादधोरिति धस्य रेफे रेफस्य विसर्ग:। उभयव षृ्र्णं इति णत्वम्। अरुधदित्यादि इरित्त्वात् ङौ वा। पक्षे ध्यां सौ औदित्त्वान्नेम् अनिमत्त्वात् वृद्धि:। क्षर्दिष्यतीति वृन्क्रदितीम् वा ॥७५९॥

[ २८१ ] तृ ह्‌ ध हिंसे।

## ७६०। तृहः इण् पिद्धसे।

तृहः ६।, इण् ।१।, पित् हस् रे ७।

तृहो नण इण् स्यात् पिति हसे रे। तृणेढ़ि तृण्ढः तृंहन्ति। अतर्हीत् अतृक्षत्।

[ २८२ ] हिसि ध कि हिंसे।

## ७६१। नणो न लोप्यः।

नणः ५।, न ।१।, लोप्यः १।।

हिनस्ति [२८३] अन्जूध जि व्यक्ति गति-म्रक्षणे। अनक्ति।

## ७६२। अञ्जः सेरिम्पे।

अन्जः ५।, सेः ६।, इम् ।१।, पे ७।।

अन्जः परस्य सेः इम् स्यात् पे। आञ्जीत् आनञ्ज।

[ २८४ ] जि इन्धी ङ ध दीप्तौ। इन्धाञ्चक्रे।

इति रुधादिपादः।

---

पिच्चासौ हस् चासौ रश्चेति पिद्धसः तस्मिन्। अत्राप्यरे नणोऽसम्भवात् रे इति स्पष्टार्थम्। तृणेढीति तृह हिंसे तिप् नण् अनेन नणोऽन्त्याचः पर इण् तृणेहि इति स्थिते हो ढ़ो भो ढभात्‌थोः ष्टुभिरिति ढ्रोढ्रोंति। तृण्ढ इति नणोर्न्नेऽणो इति नकारे ष्टुभिरिति णत्वम्। अतर्हीदिति नित्यमिम्। अस्योदित्त्वं तुदादिपक्ष एव न रुधादिपक्षे अतएव कातन्त्रगणे रुधादौ तृहहिंसि हिंसायां इति तुदादौ तु तृ ह ङ् तृह तृनह्‌ हिंसार्थी इति। कविकल्पद्रुमे तृहध् तृणह्‌ ध हिंसे इति रुधादिपक्षेऽप्युदनुबन्धः केषाञ्चिदनुरोधात् ॥७६०॥

नणो नः परो नकारो लोप्यः स्यात्। हिसि ध कि हिंसे हिनस्ति एवं भञ्जधो भनक्ति उन्दधो उनत्ति अञ्जूधजि अनक्ति ॥७६१॥

ऊदित्त्वादिमत्वे नित्यार्थं विधानम् आञ्जीत् सेः अन्यत्र अञ्जिष्यति अङ्‌क्ष्यति अञ्जिता अङ्‌क्ता आनञ्जेति स्वात्वादादीति खेरान्। इन्धीजिधङ इन्धे इन्धाञ्चक्रे इति विजादीत्याम् ॥७६२॥

## द्वितीयः पादः—तनादिः ।

[ २८५ ] तनु ञ द विस्तृतौ ।

तनोति तनुतः तन्वन्ति, तन्वः तनुवः तन्मः तनुमः ।

### ७६३ । सेर्लुक् त-थासो स्तन्भ्योऽकुर्वा ।

सेः ६।, लुक् ।१।, त-थासोः ७।, तन्भ्यः ५।॥, अकुः ५।, वा ।१। ।

कृवर्जात् तनादेः सेर्लुक् स्यात् वा त-थासोः परयोः । अतत अतनिष्ट, अतथाः अतनिष्ठाः । [ २८६ ] षनु ञ द दाने ।

सनोति । असात असनिष्ट, असाथाः असनिष्ठाः । सायात् सन्यात् ।

[ २८७ ] क्षणु ञ द बधे । अक्षणीत् ।

[ २८८ ] क्षिणु ञ द हिंसायाम् ।

### ७६४ । नोप्युङो णुर्वात्वृतः ।

न ।१।, उपि ७।, उङः ६।, णुः १।, वा ।१।, तु ।१।, ऋतः ६। ।

क्षिणोति । [२८९] ऋणु ञ द गतौ । ऋणोति अर्णोति ।

[ २९० ] डु कृ ञ द करणे । करोति ।

---

तनोति इति तन्भ्यः शुप्रे घे इति शुप् तन्व इत्यादौ नुपोऽस्यस्येति उकार-लोपो वा ।

तश्च थास् च तथासौ तयोः । थास् साहचर्य्यात् तकार आत्मनेपदस्यैव ग्राह्यः । अन्यथा तकारमात्रप्राप्तौ परस्मैपदस्य तां तं त एषु अतानिष्टाम् अतानिष्टम् अतानिष्ट एष्वपि प्रसक्तिः । किञ्च तयोरित्युक्तावपि थकारसाहचर्य्यात् आत्मनेपदीयत-कारस्यैव प्राप्तौ थास् ग्रहणं स्पष्टार्थम् । अतत इत्यादि सेलुंकि वनतनाद्यनिमां ञम् लोपः । लुक् करणात् त्यलोपे त्यलक्षणमिति न्यायात् गुणि सौ परे विहितस्य कार्य्यस्य निषेधेऽगुणिनोस्तथासोः परयोः ञम्लोपः । अकुः किम् । अकृत अकृथाः उभयत्र इगुङुमंढीसेः कित्त्वात् गुणाभावे ह्रस्वादिति सेर्लोपः । असा-तेत्यादि सेलुंकि खनसनजनामिति ङा । पचे सेरिम् । अक्षणीदिति हसादेः सेम इत्यत्र क्षण-वर्जनात् न त्रिः ॥७६३॥

## ७६५। कुरुवलोपो म्वेः।

कुः ५।, उव्-लोपः १।, म्वेः ७।।

कुर्वः कुर्मः, कुर्य्यात्। चकृव।

## ७६६। सम्परेः सुमुपात्तु भूषा-सङ्घ-प्रतियत्नविकृताध्याहारे।

सम्-परेः ५।, सुम्।१।, उपात् ५।, तु।१।, भूषा-सङ्घ-प्रतियत्न-विकृताध्याहारे ७।।

आभ्यां कृञः सुम् स्यात् उपात्तु भूषादावर्थे। संस्करोति, समस्कृषातां, सञ्चस्करिथ, सञ्चस्करिव, संस्क्रियात् संस्कृषीष्ट। परिष्करोति पर्य्यष्कार्षीत् पर्य्यस्कार्षीत् उपस्करोति।

---

उपि परे उङो गुर्न स्यात् उङ ऋकारस्य तु वा। यथा चिण दु ञ वधे चिणोति ऋतस्तु ऋणदु ञ गतौ ऋणोति अर्णोति घृणदु ञ दीप्तौ घृणोति घर्णोति तृण दु ञ भक्षे तृणोति तर्णोति। उङः किं करोति॥ ७६४॥

म च व च य च म्वय् तस्मिन्। कृञः परस्य उपो लोपः स्यात् मे वे ये च। कुर्व इत्यादि वमयेषु उपो लोपः। र्व्यनच् तयोक इत्यत्र कुर्वर्जनात् न दीर्घः। करोमीत्यत्र स्वरादेशस्य बलवत्त्वात् गुण एव। चकृवेति नेमसुमिति निषेधात् नेम्॥ ७६५॥

सम् परिभ्यां कृञः सुम् स्यात्। अर्थानभिधानेऽपि भूषण एव कातन्त्रसंक्षिप्तसारैकवाक्यत्वात्। भूषणादन्यत्र संकरोति परिकरोति। उपात् तु भूषणादौ भूषणमङ्गलकरणं सङ्घः समूहः। प्रतियत्नो गुणान्तराधानं विकृतं स्वरूपस्यान्यथात्वम् अध्याहारो वाक्यस्य अश्रुताकाङ्क्षितशब्दोपादानम्। समस्कृषाताम् इति स्याद्यृदृद्-रित्यत्र स्कृवर्जनान्न वेम्। इगुङ्र्मढ़ोति सेः कित्त्वान्न गुणः। सञ्चस्करिथेति नेम्तस्थप इत्यत्र स्कृवर्जनादिम्। संस्क्रियादिति स्याद्यृर्त्तुग्रत इत्यत्र स्कृ स्तुभ्यामेवेति उक्तो गुणनिषेधः ऋद्रिः श यक्ढोपे इति रिः। संस्कृषीष्टेति इगुङ्र्मढ़ोति सेः कित्त्वात् न गुणः। परिष्करोति इति परिनिविसेवेति षत्वम्। पर्य्यष्कार्षीदित्यादि निविप्परिस्वन्जेति वा षत्वम्॥ ७६६॥

**७६७। हस्ते पाणौ प्राध्वं जीविकोपनिषदौ व्यस्य कृञि स-स्तिरो मध्ये पदे निवचने मनस्यु रस्युपाजेऽन्वाजे साक्षादादेस्तु वा।**

हस्ते उपनिषदः ६।, व्यस्य ६।, कृञि ७, सः १।, तिरस्—साक्षादादेः ६।, तु ।१।, वा ।१। ।

हस्तेकरोति, तिरस्करोति करोति-तिरः।

इति तनादि पादः।

---

## तृतीयः पादः—क्र्यादिः।

---

[ २९१ ] ड् क्रौ ञ ग द्रव्यविपर्य्यये।

क्रीणाति। [ ७९१ ] श्नाद्यरोरिति क्रीणन्ति।

[ २९२ ] स्कु, ञ ग न उद्धृतौ।

---

हस्ते इत्यादेरुपनिषदन्तस्याऽव्ययस्य कृञ्धातौ परदे नित्यं समासः स्यात् तिरः-प्रभृतेस्तु वा। समासोऽप्येकपदीभावमात्रम्। न तु द्वन्द्वादिरेकतमः। समास-करणञ्च पूर्वनिपातनियमार्थं क्वाचो यवर्थञ्च। हस्ते पाणौ स्वीकारे। हस्तेकृत्य स्वीकृत्य इत्यर्थः। तां हस्तेकृत्यमायमीरिति भट्टिः। प्राध्वं बन्धनानुकूल्ये प्राध्वं कृत्य। जीविकोपनिषदौ उपमायाम्। जीविकाकृत्य जीविकामिव कृत्वा इत्यर्थः। तिरोऽन्तर्द्धाने तिरस्कृत्य। उरसि मनसि मध्ये पदे निवचने इति पञ्चानुपश्लेषे उरसिकृत्य उरसिकृत्वा। अनुपश्लेष इति किम्। उरसिकृत्वा हस्तं शेते पदे कृत्वा शिरः शेते श्वा। उपाजे अन्वाजे दुर्बलस्य बलाधानार्थे साक्षादादिरभूत-तद्भावे। साक्षात्कृत्वा साक्षात्कृत्य। साक्षादादिस्तु साक्षात् मिथ्या आस्था श्रद्धा अन्तर्द्धा प्रभाऽचला चिन्ता प्रमा प्रजा विजा रुजा रुहा संख्या नमस् आविस् प्रादुस् बहिस् इत्यष्टादश। अग्नौ वशे विकल्पने विहसने प्रपतनेऽर्थे इत्या-दीनामपि वा समासमिच्छन्ति जौमराः। वशेकृत्य दशग्रीवं मोदस्व वरमन्दिरे इति भट्टिः॥ ७६७॥

**७६८। स्कु स्कन्भु स्कुन्भु स्तन्भु स्तुन्भुभ्यः श्नुश्नौ घे रे।**

स्कु—स्तुन्भुभ्यः ५॥, श्नु श्नौ १॥, घे ७।, रे।।

एभ्यो घेऽर्थे श्नुः श्ना च स्यात् रे परे। स्कुनोति स्कुनाति, विस्कभ्नोति [६२५] विस्कभ्नाति षः विष्कभ्नाति। एवं विस्कुभ्नाति विस्कुभ्नोति, विष्टभ्नाति विष्टभ्नोति, व्यष्टभत् व्यष्टभ्नोत् वितष्टम्भ। स्तुभ्नोति स्तुभ्नाति। [२९३] मी ञ ग बधे।

[७४५] मिम्योरिति ङा, अमासीत् अमास्त।

[२९४] पू ञ गि शोधने।

**७६९। प्वादेः स्वो ने व्र्यादेस्तु वा।**

पू आदेः ६।, स्वः १।, ने ७।, व्री आदेः ६।, तु ।१।, वा ।१।।

प्वादीनां स्वः स्यात् ना त्ये परे व्र्यादेस्तु वा। पुनाति।

[२९५] कॄ ञ गि हिंसे।

अकरीष्ट अकरिष्ट अकीर्ष्ट। करिषीष्ट कीर्षीष्ट।

[२९६] धू ञ गि कम्पे। धुनाति। अधावीत् अधौषीत्।

[२९७] ग्रह ञ ग आदाने। गृह्णाति।

---

स्कु ञ अवृतौ स्तन्भु स्कन्भु स्कुन्भु म रोधने इति चत्वारः सौत्राः। यः पूर्वधातुपाठे न दृश्यते सूत्रे दृश्यते स सौत्रः। विस्कभ्नातीत्यादि विस्कभ्नानिर्वेति सूत्रे श्नाप्रत्ययस्य ग्रहणात् विस्कुभ्नोतीत्यत्र न षत्वम्। विष्टभ्नातीत्यादि उभयत्र मौक इति षत्वम्। व्यष्टभदित्यादि। श्वासलिदद्युदिति ङीवा उभयत्रास्यपीति षत्वम्। वितष्टम्भेति दशस्यादेरिति खिव्यवधाने षत्वम्। प्रमीणातीति णादि-हन्मीनेति णत्वम् ॥७६८॥

ने श्नाप्रत्यये परे इत्यर्थः। प्वादिषु पूञगि शोधे लूञगि छेदे कॄञगि हिंसे, स्तॄञाच्छादे, धूञगि कम्पे, वॄगिञ वरणे, शॄगि स्तॄगि ख्यातौ हनने। जॄगितु धातुः कथितो हत्यां पॄगितु रचे पूरणकृत्याम्। वॄगि व्रीगितु विदितौ वृत्यां दॄगि विदारे

## ७७०। हसान्नानो हौ।

हसात् ५।, ना ।१।, आन: १।, हौ ७।।

हसात् परो ना आन: स्यात् हौ परे। गृहाण। अग्रहीत्। जग्राह जगृहतु: जग्रहिथ।

## ७७१। ग्रहेरिमो घोऽथ्याम्।

ग्रहे: ५।, इम: ६।, घ: १।, अथ्याम् ७।।

ग्रहे: परस्य इमो घ: स्यात् न तु थ्याम्। ग्रहीता।

[२९८] शॄ ञ गि हिंसे।

## ७७२। शॄ पॄ द्रां स्वो वा कित् थ्याम्।

शॄ-पॄ-द्रां ६।।।, स्व: १।, वा ।१।, कित् थ्याम् ७।।

एषां स्व: स्यात् किति थ्यां वा। शश्रतु: शशरतु:।

---

नॄगितु नीत्यां भॄगितु भर्त्से नॄ द्वत्वे गॄगितु शब्दे ज्यागि जीर्णत्वे रीगि रेषणगतयो-र्ऋगि गत्यां लीगि व्लीगि श्लेषणकत्यां व्रीगगि वरणे ल्वीगगि गत्यां भीगगि धातु: कथितो भत्याम्। पञ्चाधिकविंशतिरिति गदिता: प्वादिगणे धातव इह विदिता:। इति। शेषास्त्रयो न प्वादय इति दुर्गसिंह:। प्वादय इति जैनेन्द्रा:। उभयानुरोधात् व्रादेर्विकल्प:। ज्यागि जरायां इत्यस्य प्वादिफलन्तु जीन: जीनवानित्यत्र ल्वादि-त्वात् तस्य न:। क्वचिन्नाप्रत्ययस्यापि ह्रस्व इति वररुचि:। स्मरणात् पुनते पाप-धारणात् पूर्वसञ्चितम्। दर्शनात् लभते मोक्षमेतद्योगस्य लक्षणमिति प्रयोग:। अकरीष्टेत्यादि स्यादयॄदॄद्वॄरिति इम् पक्षे वॄतोवेम इति वा दीर्घ:। इग् ऊर्गिति से: कित्त्वे ऋकारस्य द्वारव्यंनच्तयोरिति दीर्घ:। अधावीदित्यादि वेमूदिदितीम् वा ॥७६९॥

ना आन इति चोभयं लुप्तप्रथमैकं सूत्रत्वात् सिलुक्। गृहाणेति ग्रहस्वपाद्यो-रिति जि:। आने क्ने अकाराद्वे लोप:। एवं पुषाण मुषाण इत्यादि। हसात् किं जानीहि। अग्रहीदिति ह्रान्तत्वात् न त्रि:। जगृहतुरिति ग्रहस्वपाद्योरिति जि: ॥७७०॥

ग्रहीता ग्रहीतुम्। थ्यान्तु जग्रहिथ जगृहिम ॥७७१॥

एवं ( २९९-३०० ) ञि पॄ गि पालने, दॄ गि विदारे।

( ३०१ ) ज्या गि जरायाम्। जिनाति जिज्यौ।

( ३०२ ) व्री गि वृत्याम्। व्रिणाति व्रीणाति।

( ३०३ ) ज्ञा ग बोधे। जानाति। ( ३०४ ) श्रन्थ ग मोक्षे।

श्रथ्नाति। श्रेथतुः शश्रन्थतुः श्रेथिथ शश्रन्थिथ।

एवं ( ३०५ ) ग्रन्थ ग गर्भे। ( ३०६ ) कुष ग निष्कोषे।

( ५७३ ) वेमूदितीम् वा, निरकोषीत् निरकुक्षत्।

( ३०७ ) अश ग भोजने। अशिता अष्टा।

( ३०८ ) वृङ ञ ग वरणे।

अवरीष्ट अवरिष्ट अवृत। ववृषे। वरिषीष्ट वृषीष्ट।

इति क्र्यादिपादः।

---

शॄगि हिंसने, ञिपॄगि पालने, दॄषगि विदारे एषां स्वः स्याद्वा किति स्थाम्। शशरतुरिति ह्रस्वाभावपक्षे ऋतो णः कित् ठ्रामिति गुणः एवं पप्रतुः पपरतुः दद्रतुः ददरतुः। व्रिणातीत्यादि प्र्यादेस्तु वेति वा ह्रस्वः। जानातीति ज्ञादानेति जादेशः। श्रथ्नातीति ह्रस्वुङ्न इति न लोपः। श्रेथतुरिति स्यात् ठ्रपिदिति कित् पक्षे न लोपः खिलोपादिश्च। श्रेथिथेति श्रन्थग्रन्थदन्भामिति न लोपपक्षे खिलोपादिः। निरकुक्षदिति वेमत्वादनिम् पक्षे ह्शष इति सक्। अष्टेत्यादि वेमूसहेतीम् वा। अवरीष्टेत्यादि स्याद्वृदृदु रिति इम् पक्षे वृतोवेम इति वा दीर्घः। अनिम् पक्षे इगुङूरिति सेः कित्त्वात् न गुणः। ववृषे इति नेमसुमिति नेम्। वरिषीष्ट इत्यादि स्याद्वृदृदुरिति वेम् इगुङुरिति कित्त्वात् न गुणः॥ ७७२॥

इति क्र्यादिपादः।

# चतुर्थः पादः—चुरादिः ।

---

( ३०९ ) चुर कि स्तेये ।

## ७७३ । चुर्य्यो ञि र्वा ।

चुर्य्यः ५।।।, ञिः १।, वा ।१। ।

**चुरादे ञिः स्यात् वा स्वार्थे । चोरयति चोरयते । अचूचुरत् । चोरयामास । चोर्य्यात् । पक्षे चोरति इत्यादि ।**

---

वाशब्दस्य व्यवस्थावाचित्वात् चुरादिभ्यो ञिर्नित्यश्चुराद्यन्तर्गणाद् युजादेर्ञि र्वा स्यादित्यर्थः । यत्तु चुरधातोरपि पक्षे चोरतीत्याद्युदाहरणं तच्चुरादेर्ञेः कदाचिदनित्यत्वज्ञापनार्थम् । एतदेव काव्यकामधेनौ अकिक् लक्षणीत्यत्र स्फुटीचकार वोपदेवः । यथा सिद्धे नित्यणिजन्तत्वान्नित्यमुम्त्वे कितामिदित् । निजनित्यत्वबोधार्थं न दृष्टोऽनुम् विधिः क्वचिदिति । अस्यार्थः—कितां कानुबन्धधातूनां नित्यणिजन्तत्वान्नित्यनुमत्वेऽगुणपरत्वाभावान्नलोपाभावे नित्यनकारवत्त्वे सिद्धे इदित् इदनुबन्धकरणं णिचो ञेरनित्यत्वबोधार्थम् । किन्तु अनुम् विधिर्नाकाराभावः क्वचिदपि न दृष्ट इति । अनिर्दिष्टार्थाः प्रत्ययाः स्वार्थे भवन्तीति न्यायात् चुरादेः स्वार्थे ञिः । चुरादिभ्यो ञेर्ञित्त्वेऽपि उभयपदं न स्यात् अन्यथा श्यमञक् वितर्के इत्यादेर्ञानुबन्धो व्यर्थः स्यात् । तेन ञितश्चुरादेरात्मनेपदं ञितश्चुरादेरुभयपदम् उभयभिन्नचुरादेः परस्मैपदमिति । एवमेव धातुप्रदीपादयः । यत्तु चोरयति चोरयते इत्युभयपदोदाहरणं तद्धातुपारायणानुरोधार्थं कदाचित् प्रयुक्तस्यात्मनेपदस्य समाधानार्थञ्च यथा नालोकते यथेदानीं मामियं तेन तर्कये इति नैषधे । चोरयतीति चुर ञिः गुणः धातुसंज्ञायां तिप् शप् गुणाः । अचूचुरदिति चोरिभागात् टोविभक्तेर्दौ ञिश्रीत्यङ् चोरीत्यस्य द्वित्वे रेर्लोपः झभखथेति खेरोकारस्य उकारे ञ्राद्य्ङः स्व इति मूलधातोरोकारस्य ह्रस्वे खेः सन्वदिति खेरुकारस्य दीर्घे ञेर्लोपः । चोरयामासेति विंजादीत्याम् । चोर्य्यादिति क्यां ञेर्लोपे त्यलोपे त्यलक्षणमिति न्यायात् गुणः ॥ ७७३ ॥

[ ३१० ] कृत क संशब्दे ।

## ७७४ । कीर्त्तः कृतः ।

कीर्त्तः १।, कृतः ६।।

**कृतः कीर्त्तः स्यात् ञौ । कीर्त्तयति ।**

[ ३११ ] गणत् क संख्याने ।

## ७७५ । हसाल्लोपोऽशित्यद् योः ।

हसात् ५।, लोपः १।, अशिति ७।, अत्-योः ६॥ ।

**हसात् परयोः अकार-यकारयोर्लोपः स्यादशिति । गणयति ।**

---

कृत क संशब्दे इति धातुः कीर्त्तिः स्यात् सर्वत्र । कीर्त्तादेशस्य सार्वत्रिकत्वे कीर्त्तधातुपाठे नैवेष्टसिद्धौ कृतधातुं पठित्वा कीर्त्तादेशविधानं ज्ञापयति क्वचित् कीर्त्तादेशो न स्यात् इति । तेन अचीकृतदिति । क्रमदीश्वरोऽप्येवम् ॥७७४॥

अत् च य च अद्‌यौ तयोः । अयोरिति लिपिकरप्रमादपाठः । अन्यथा इत् रहितेन अका सवर्णस्यावश्यग्राह्यत्वात् दास्यतीत्यादावाकारस्यापि लोपापत्तिः स्यात् । प्रकरणबलाद्धातुसंज्ञकस्यैव अकार-यकारयोर्लोपः तेन हसतीत्यादौ न स्यात् । हसात् किं ? बीभूयिता अशिति किं ईर्ष्यति । अदे इत्यनेनैवेष्टसिद्धौ अशितीति गौरवं कथमिति चेन्न मव्यबन्धे इत्यस्य यङ् लुकि ख्या याति परे संमव्यात् इत्यत्र यकारलोपानुपपत्तेः । गणयतीति अकारलोपे लोपोऽप्यादेश उच्यते इति न्यायेन स्थानिवत्त्वात् न वृद्धिः । एवं कुणल्काभाषमन्त्रयोरित्यादीनां कुणयतीत्यादौ न गुणः । अतएव अग्लोऽपित्वं स्थानिवत्त्वं चादन्तत्वप्रयोजनम् । यत्र त्वेते न विद्येते तत्राल्लोपविकल्पनम् । तद्बलादन्त्यदीर्घश्च पुक्चेत्यङ्गापयत्यत इति वोपदेवः । अस्यार्थः अग्लोपित्वं स्थानिवत्त्वञ्चेति उभयमदन्तत्वप्रयोजनम् । यथा अग्लोपित्वेन अजगवेषदित्यादौ न ह्रस्वः सन्वद्भावौ स्थानिवत्त्वान्न गणवृद्धी कुणयति गणयतीत्यादि यत्र तु एते न विद्येते अग्लोपित्वस्थानिवत्त्वयोः प्रयोजनं न सम्भवतीति तत्र धातौ तद्बलात् अदन्तत्वस्वीकारबलात् अल्लोपविकल्पनम् अकारस्य स्थितिपक्षे दीर्घश्च पुक् च आदन्तत्वात् पण् च स्यादतोऽङ्गापयतीति सिद्धमिति केचित् । स्वमते तु अग्लोपित्वस्थानिवत्त्वयोः कार्य्यं येषु न स्यात् ते

## ७७६। वेङ्गणकथः खे ञाडि।

वा।१।, ईङ्।१।, गण कथः ६।, खेः ६।, ञाडि ७।।

**गणकथयोः खेरीङ् स्यात् वा ञाडि। अजीगणत् अजगणत्।**

**[६३९] अग्लोपित्वात् न इः।**

**[३१२] कथत् क वाक्यप्रबन्धे अचीकथत् अचकथत्।**

**इति चुरादिपादः।**

**इति द्वितीयचतुर्गणाध्यायः।**

---

धातवो हसन्ता एव मन्तव्याः। तेन अङ्कापयतीति प्रयोगः स्वमतविरुद्ध इति बोध्यम्। न च स्वमतविरुद्धानां कामधेनौ उपन्यासोऽपि विरुद्ध इति वाच्यम्। अष्टानां मतान्यालोक्य कर्त्तव्ये परमतोपन्यासेऽपि दोषाभावात्। अन्यथा केश्चिदमन्यमानस्य क्नञ् क्नताविति भौवादिकस्यापि पाठो विरुद्धः स्यात्। किञ्च यदि तन्मतैकवाक्यता क्रियते तदा अग्लोपविकल्पोऽन्त्यदीर्घश्च मनीषादित्वात् साध्यः। यथा अङ्क ञिः अकारलोपे अङ्कि टौविभक्तेर्दिं अङ् नकारजावनुस्वारपञ्चमौ झलि धातुषु इति ङस्य न प्रकृतिकत्वे स्यादौ नवद्र इति ङकारं हित्वा कि इत्यस्य द्वित्वे कस्य चत्वे निमित्ताभावे नैमित्तिकस्याप्यभाव इति ङस्य नत्वे नस्यानुस्वारत्वे तस्य च ञत्वे आञ्चिकदिति अत्र क्रस्वसन्वद्भावयोरसम्भवात् नाग्लोपित्वं गुणवृद्ध्योरसम्भवान्न स्थानिवत्त्वमिति। केचित्तु द्वित्वेऽप्यकारलोपस्य स्थानिवत्त्वं मन्वानाः क इत्यस्य द्वित्वे अग्लोपित्वान्न सन्वत्कार्य्यमिति आञ्चकदित्युदाहरन्ति। अन्ये तु ङप्रकृतिं मन्वानाः ङ्कि इत्यस्य द्वित्वे कस्य लोपे आङ्किङ्कदित्याहुः। यकारलोपो यथा पापठ्य वावद्यादि यङन्तेभ्यः ग्रंस्याद इति अप्रत्यये आदौ हसाल्लोप इत्यकारलोपे पुनस्तेनैव यकारलोपे पापचा वावदा इत्यादि॥ ७७५॥

गणकथयोः खिः गणकथखिः तस्य ईङ् स्याद्वा ञेः परेऽडि ङित्त्वा दन्त्यस्य स्थाने॥ ७७६॥

इति चुरादिपादः।

---

तृतीय चतुर्गणाध्याय:।

## प्रथम: पाद:—ञान्त:।

## ७७७। ञि: प्रेरणे।

ञि: १।, प्रेरणे ७।।

धो ञि: स्यात् प्रेरणेऽर्थे। कुर्वन्तं प्रेरयति कारयति। अचीकरत्। अग्रग्रासत्, अडुढौकत्। अशूश्रवत् अशिश्वयत्। व्यतस्तम्भत्, पर्य्यसोसिवत्। [ ५७२ साङ्त्वात् न ष:। अचीचकासत् अचचकासत्। औन्दिदत् औजिजत् आड्डिडत् आर्च्चिचत् अररम्भत् अललम्भत्। अजोहयत्, [७४८] अनङौत्युक्तेर्न घि:। अदिध्वनत् अध्वनयीत्, ऐलयीत् ऐलिलत्, आर्द्दयीत् आर्द्दिदत् औनयीत् औनिनत्।

---

प्रेरणं त्वयैतत् क्रियतामिति क्रियासु नियोजनम्। यथा गुरुरन्नं भोजयति भृत्यं ग्रामं गमयति शिशुं शाययति। अचेतने तूपचार:। यथा भोजनाभावो वायुं वर्द्धयतीत्यादि। धोरिति व्याख्यानं सर्वधातुप्राप्त्यर्थम्। तेन भवन्तं प्रेरयति भावयति कामयमानं प्रेरयति कामयति चिकित्सयति चोरयति चिकीर्षयतीत्यादि। प्रेरण ञे: परोऽपि ञि:। यथा पिता पुत्रेण शिष्यं वेदं पाठयति अत्र पुत्र: पाठयतेरेव कर्त्ता न तु पठते: तेन पुत्रस्य कर्म्मत्वं न स्यात् ञित्वादुभयपदं कारयति कारयते पूर्वसूत्रोक्तान्युदाहरति अचीकरदित्यादि। कुर्वन्तं प्रेरित् इति ञौ अतएव ञौ द्वित्वे ञिरिति वक्ष्यमाणनियमात् द्विर्भावात् पूर्वं न वृद्धि:। कृइ इति स्थिते धातुसंज्ञायां घि: अमागम: ञिश्रीत्यङि कृइ इति वर्णद्वयस्य द्वित्वे खेराद्यच इति इकारस्य लोपे भभखयेति ऋकारस्य अकारे ककारस्य चकारे ञ् णित्यन्ते शुङ्तोरिति वृद्धौ आरत्युङ: स्व इति आकारस्य ह्रस्वे: खे: सन्वद्वौ इति सन्वत्त्वे ख्यसेत्सनीति अकारस्य इकारे घोश्च खेर्ङ्सादेर्घश्चेति दीर्घे

## ७७८। स्मृदॄत्वरप्रथम्रदस्तॄस्पशोऽङ्खेर्ञाङि चेष्टवेष्टो स्तु वा।

स्मृ—स्पशः ६।, अङ् ।१।, खेः ६।, ञाङि ७।, चेष्टवेष्टोः ६॥, तु ।१।, वा ।१।।

एषां खेरङ् स्यात् ञाङि चेष्टवेष्टोस्तु वा। असस्मरत् अददरत् अतत्वरत् अपप्रथत् अमम्रदत् अतस्तरत् अपस्पशत् अचिचेष्टत् अचचेष्टत् अविवेष्टत् अववेष्टत्।

---

ञेर्लोपे दस्य तकारो वा। एवं सर्वत्र। अशशासदिति ञाङुराङः स्व इत्यत्र शासवर्जनान्न ह्रस्वः। अडुढौकदिति ऋदिद्वर्जनात् न ह्रस्वः। अशूशवदिति प्रागच्कार्य्यादिति नियमादादौ द्वित्वे श्वेर्जिर्वेत्यत्र वाशब्दस्य व्यवस्थया खेर्मूलस्य च जिः ततो वृद्ध्यादि पक्षे न जिः। व्यतस्तम्भदिति गुरुधात्वक्षरपरत्वान्न सन्वद्भावादि साङ्त्वात् न षः। पर्य्यसीषिवदिति साङ्त्वात्पर्य्यादिनिमित्तकं खेः षत्वं न स्यात् खिनिमित्तकं मूलधातोः षत्वं क्विलादित्यनेन स्यादेवेति श्रीपतिदत्तः। एवं पर्य्यसीषहदित्यत्रापि बोध्यम्। अचचकासदित्यादि ऋदित्त्वादुङो ह्रस्वाभावे अनेकाच्त्वात् सन्वद्भावादि विकल्पः। औन्दिददित्यादि उन्दधो क्लेदे उब्ज शार्ज्जवे अड्ड अभियोगे अर्च्च पूजे इति ञान्तानां चतुर्णाम् उन्दि उब्जि अड्डि अर्चि इति स्थिते नाजन्तादेरिति आद्यक्षरं हित्वा स्यादौ नवद्र इति न ब द रांश्च हित्वा दि जि डि चि एषां द्वित्वम्। अररम्भदित्यादि तुण् रध इति तुणि गुरुधात्वक्षरपरत्वात् न सन्वद्भावादि। अजोहयदिति ह्वेः खेरनङीत्यत्र अनङीत्युक्तेर्न घिः। अध्वनयीदित्यादि ञिध्वन रवे इलश शये गतौ अर्दञ बधे ऊनत्क परिहाणे एभ्यो ञान्तेभ्यः श्वि धेट ध्वन्येल्यर्दूनेस्तु वेति अङ् वा। पक्षे ष्यां सौ ञिङि श्विजागृञिरिति निषेधात् न ञिः ॥७७७॥

स्मृ स्मृतौ स्मृ म औत्के इति द्वयम्। दॄयगि विदारे। ञित्वर षमङ स्यदे। प्रथमयङ् चौदे स्तॄङगि छादने स्पशञ ग्रन्थबाधयोः। एषां सप्तानां खेरङ्विधानसामर्थ्यात् स्मृस्येत्सनीति इ र्न स्यात्। घौश्च खेर्ह्रस्वादे घंश्चेत्यपि न स्यात्। चेष्टवेष्टोस्तु खेरङोऽप्राप्तिपक्षे गुर्वक्षरपरत्वात् सन्वद्भावस्याप्राप्तौ तदेकयोगनिर्दिष्टत्वात् खेर्दीर्घोऽपि न स्यात् ॥७७८॥

**७७९। भ्राज भ्रास भास भाष दीप जीव मील पीड़ कण वण भण श्रण लप लुप लुट हेठां वोङः स्वः।**

भ्राज हेठां ६।।।, वा ।१।, उङः ६।, स्वः १।।

**एषाम् उङः स्वः स्यात् वा ञङि। अबिभ्रजत् अबभ्राजत्।**

**७८०। वर्द्धुङो धुः।**

वा ।१।, ऋदुङः ६।, धुः १।।

**ऋदुङो धोर्धुरेव स्यात् वा ञङि। अवीवृतत् अववर्त्तत्।**

**७८१। स्वपो जिः।**

स्वपः ६।, जिः १।।

**स्वपो जिः स्यात् ञङि। असूषुपत्।**

---

भ्राज ङ णॄ टु भासि। भ्रास ङृएॖ भासि दन्त्यान्तस्तालव्यान्तोऽपि। भासृ ङ दीप्तौ भाषङ्ऋ वाचि। दीपीङ्यृ दीपने। जीव ऋ प्राणे। मीलृ निमेषे। पीड़ृक बाधगाहे। कणृ आर्त्तस्वरे। ऋवण शब्दे ऋभण शब्दे। श्रण क दाने। लप भावे। लुपॄ शप लृ औ छेदे। ऋलुठ्य विलोटविलोड़योः। हेठॄ ञ बाधे पीड़ने ते। अबिभ्रजत् अबभ्राजत् अबिभ्रसत् अबभासत् अबीभसत् अबभसत् अबीभषत् अबभाषत् अदीदिपत् अदिदीपत् अजीजिवत् अजिजीवत् अमीमिलत् अमिमीलत् अपीपिड़त् अपिपीड़त् अचीकणत् अचकाणत् अवीवणत् अववाणत् अबीभणत् अबभाणत् अशिश्रणत् अशश्राणत् अलीलपत् अललापत् अलूलुपत् अलुलोपत् अलूलुटत् अलुलोटत् अजीहिठत् अजिहेठत्। कविकल्पद्रुमे भ्रास-ङृएॖ इत्यस्य सप्तमस्वरानुबन्धः श्रणक दाने इत्यस्य च अष्टमस्वरानुबन्धाभावः कस्यचिदनुरोधात्! ह्वेञे इत्यस्येह सूत्रे पाठः प्रमाणशून्य एव ॥७७९॥

ऋत् उङ् यस्य स ऋदुङ् तस्य। तस्य स्थाने तद्वात्वादेशो ञङि वा स्यादित्यर्थः। अवीवृतत् अववर्त्तत्। एवं अवीवृधत् अववर्द्धत् अमीमृजत् अममार्जत् अचीकॢपत् अचकल्पत् इति तु ऋदुङ प्रकृतिकत्वात्। वा ग्रहणात् परत्र वाधिकारनिवृत्त्यर्थम् ॥७८०॥

## ७८२। शा च्छा सा ह्वा व्ये वे पां णौ यन्।

शा—पां ६॥, णौ ७।, यन् ।१। ।

एषां णौ परे यन् स्यात्। शाययति पाययति।

## ७८३। ह्रेः पिबः पीप्यो ञ्राङि।

ह्रे: ६।, पिबः ६।, पीप्यः १।, ञ्राङि ७। ।

अपीप्यत्।

## ७८४। क्री व्ली री क्नू य्यृ क्ष्माय्यातां पण् गुणश्च णौ।

क्री—आतां ६॥, पण् ।१।, गुः १।, णौ ७। ।

क्रेपयति व्लेपयति रेपयति क्नोपयति अर्पयति क्ष्मापयति स्थापयति।

---

असुषुपदिति तु आदौ जिः पश्चात् द्वित्वे घौश्च खेर्हसादेरिति दीर्घः क्विला-दिति षः॥७८१॥

शोय निशाने छोय लूनौ षोय नाशे ह्वेञ् स्पर्द्धे व्येञ वृतौ ऐञवे स्यूतौ पा पाने पै शोषे इति द्वयम्। एषां सप्तानां णौ यन् स्यात् निस्त्वादन्ते। शाययति छाययति साययति ह्वाययति व्याययति वाययति पाययति॥७८२॥

द्विभूंतस्य पा पाने इत्यस्य पीप्यः स्यात् ञ्राङि। पिबः किम्? पै अपीपयत्। पाल रक्षणे अपीपलत्॥७८३॥

क्रीलि लज्जे व्लीगि गत्यां भीरीङष चरणे रीगि वधे गतौ इत्युभयम्। क्नूयीङ दुर्गन्धे ऋण हिंसे ऋलिं गत्याम् ऋ प्रापे च इति त्रयम्। क्ष्मायीङ विधूनने इति षसामादन्तानाञ्च णौ पण् स्यात् यथासम्भवं गुणश्च। क्रेपयतीत्यादौ णित्त्वा-दन्त्याचः परे पणि कृते पस्यापि धात्ववयवलात् लघूङोऽभावात् अप्राप्तौ गुण-विधानम्। क्नोपयतीत्यत्र पकारात् परतया हसाल्लोप इति यलोपः। एवं क्ष्मापयतीत्यत्रापि। स्थापयति। आदिष्टादन्तानाञ्च ग्रहणात् देङ पालने दापयति डुक्रीञ क्रापयतीत्यादि॥७८४॥

## ७८५। स्थोङो ञाङौः।

स्थोङः ६।, ञाङि ७।, इः १।।

तिष्ठतेः उङ इः स्यात् ञाङि। अतिष्ठिपत्।

## ७८६। घ्रो वा।

घ्रः ६।, वा।१।।

अजिघ्रिपत् अजिघ्रपत्।

## ७८७। पाति-स्फायोर्लन्वङौ ञौ।

पाति-स्फायोः ६॥, लन्-वङौ १॥, ञौ ७।।

पालयति स्फावयति।

## ७८८। प्री-धूञोर्नन् वा।

प्री-धूञोः ६॥, नन्।१।, वा।१।।

प्रीणयति प्राययति, धूनयति धावयति।

---

स्था इत्यस्य उङ् स्थोङ् तस्य पणि कृते स्थाप इत्यस्य उङ इत्यर्थः। अतिष्ठिपदिति पणि कृते आकारस्य इकारे क्विलादिति षः॥ ७८५॥

घ्राधातोः पणि कृते घ्रापभागस्य उङ इः स्याद्वा ञाङि। इकारे अजिघ्रिपदिति। इकाराभावपक्षे ञाङ्युङः ख इति ह्रस्वे सन्वद्भावे खेरित्वे खेर्गुरुत्वात् दीर्घाभावे अजिघ्रिपदिति॥ ७८६॥

पाल रक्षणे इत्यस्य लन् स्फायी ङ वृद्धावित्यस्य वङ् स्यात् ञौ॥ ७८७॥

प्रीश्च धूश्च प्रीधुवौ। प्रीधुवौ च तौ ञौ ञानुबन्धौ चेति तयोः। प्रीञ तर्पणे प्रीगश्च कान्तौ च इति द्वयोः प्रीणयति प्राययति ञानुबन्धग्रहणात् प्रीक तर्पणे इत्यस्य तु यं प्राययन्ति कविमूक्तिरसायनानीति हलायुधः। प्रीङ्य प्रीतौ चेत्यस्यापि प्राययति। धूञिक कम्पे इत्यस्य तु वायुर्विधूनयति केशरपुष्परेणूनिति हलायुधः। अत स्वार्थविहितञेर्ञकारेण सम्बन्धात् नन्। अन्यथा कम्प प्रेरणे धूनयतीत्यादि प्रयोगा न स्युः। धूनीत्यादीनां साध्या इति चेत् तर्हि स्वभावात् कम्पप्रेरणार्थानां तेषां ञौ कृते कम्पप्रेरणस्य प्रेरणमेवार्थः स्यात्। किन्तु कम्पनायां धूनयतीत्यादीनामवश्यम्भावे अत वै सूत्रकारः प्राचीनमतानुरोधार्थः॥ ७८८॥

७८९। रुहः पङ् वा।

रुहः ६।, पङ् ।१।, वा ।१।।

रोपयति रोहयति।

७९०। शदोऽगतौ तङ्।

शदः ६।, अ-गतौ ७।, तङ् ।१।।

शातयति। गतौ तु गाः शादयति गोपः।

७९१। लाल्योर्लन् ननौ स्नेहद्रवे वा।

ला-ल्योः ६॥, लन्-ननौ १॥, स्नेहद्रवे ७।, वा ।१।।

लातेर्लन् लियो नन् स्यात् स्नेहद्रवेऽर्थे ञौ वा। विलालयति विलापयति। विलीनयति। [ ७४५ ] मिम्योरिति ङा वा, विलापयति विलाययति घृतम्। स्नेहद्रवे किं ? लौहं विलाययति विलापयति।

७९२। वो जन् धूतौ।

वः ६।, जन् ।१।, धूतौ ७।।

वार्तेर्जन् स्यात् कम्पने ञौ। वाजयति। धूतौ किं ? केशान् वापयति।

---

त्रिजरुहौ जन्यामित्यस्य पङ् स्याद्वा ञौ। वा ग्रहणं परत्र बाधिकारनिवृत्त्यर्थम्। ननु रोहते रुप्य इर्विमोहे इति हयोः रोहयति रोपयतीति सिद्धौ रुहः पङ् विधानं कथमिति चेन्न। रोपयतीति पदेन जननप्रेरणस्य बोधयितुमशक्यत्वात्॥ ७८९॥

शद्लृञौ शाते इत्यस्य तङ् स्यात् ञौ न तु गतौ। शातयति इत्यात् फलं लोकः पातयतीत्यर्थः। गतौ तु गाः शादयति गोपः अनेकार्थत्वाद्गत्यर्थोऽपि॥७९०॥

स्नेहस्य घृतादेर्द्रवो द्रवीकरणं स्नेहद्रवः। ला लच ग्रहे लीङि द्रावणे इत्येतयोर्ग्रहणम्॥ ७९१॥

वाजयति लतां वायुः कम्पयतीत्यर्थः। धूतौ किं केशान् वापयति परिष्करोतीत्यर्थः॥ ७९२॥

## ७९३। क्रीजीङोऽजा चि स्फुर प्रजनार्थवीनान्तु वा।

क्री·जि इङः ६।, अच् ।१।, आ ।१।, चि-स्फुर-प्रजनार्थवी-नां ६।।।, तु ।१।, वा ।१।।

एषाम् अच आ स्यात्, औ च्यादेस्तु वा। क्रापयति जापयति अध्यापयति। अध्यजीगपत् अध्यापिपत्। चापयति चाययति। चपयति चययति। [ ७९८ ] मित्त्वात् ह्रस्व इति प्रक्रियारत्ने दृष्टम्। स्फारयति स्फोरयति। वापयति वाययति गाः पुरोवातो गर्भं ग्राहयति इत्यर्थः।

## ७९४। स्मिभ्यो घात् ध्वर्थे मञ्च।

स्मिभ्योः ६।।, घात् ५।, ध्वर्थे ७।, मं १।, च ।१।।

अनयोरच आ स्यात् घात् ध्वर्थे औ मञ्च। विस्मापयते भापयते मुण्डः। घात् किम्। कुञ्चिकयेनं विस्माययति भाययति।

---

प्रजनो गर्भग्रहणम् अर्थो यस्य स प्रजनार्थः प्रजनार्थश्चासौ वीश्चेति प्रजनार्थवीः। चिश्च स्फुरश्च प्रजनार्थवीश्च ते तेषां वीनामिति नुमागमः सूत्रत्वात्। डुक्रीञ्ग द्रव्यविपर्य्यये जि जये अधीङ्ध्ययने। एषामच आ स्यात् औ। च्यादेस्तु वा। अध्यजीगपदिति ण्यां गा आङ् सनीस्तु वेति गादेशे पणि गापेर्द्वित्वे उङ्ह्रस्वादिः। पचे इकारस्य आकारे आपि इति स्थिते नाजन्तादेरिति निषेधात् पि इत्यस्य द्वित्वे अध्यापिपदिति चापयतीत्यादि सुगमम्। स्फारयति स्फरतिनैवेष्टसिद्धौ स्फुरतेरुकारस्याकारविधानं स्फरतेः कातन्त्राद्यसम्मतत्वात्। अत्र वाशब्दस्य व्यवस्थावाचित्वात् सिद्ध्यते रिकारस्य औ परे आकारः स्यात् अपारलौकिके। घटं साधयति पदं साधयति। अपारलौकिके किं? यज्ञं सेधयति। यावद् यते साधयितुं तदर्थमिति रघौ। अपारलौकिकविवक्षया सिद्धम्। जौमरास्तु लिखि वण्टि लस्जीना लिखाप वण्टाप लज्जाप औ वा। इत्यादिभ्यः लिखापयति लेखयति वण्टापयति वण्टयति लज्जापयति लज्जायति इत्याहुः॥ ७९३॥

विस्मयी भयस्य यदि आन्तकर्त्तुर्हेतोः प्रतीयते तदा अनयोरच आ स्यात् औ मञ्च। मुण्ड इति मुण्डो मुण्डितमस्तको जनः। एवं विस्मापयते भापयते व्याघ्रः। कुञ्चिकया एवं जनं विस्माययति भाययति कुञ्चिका मत्स्यभेदः एवं रूपेण तं विस्माययति खड्गेन मां भाययति। विस्माययन् विस्मितमात्मवृत्तौ

७९५। भीर्भीष् वा।

भी: १।, भीष् ।१।, वा ।१।।

भियो घ-भये भीष् स्यात् वा ञौ मश्च। भीषयते मुग्ध:।

७९६। दुषेरोदूः।

दुषे: ६।, ओत् ।१।, ऊ: १।।

दुषेरोकार ऊ: स्यात् ञौ। दूषयति।

७९७। चिद्विकारे वा।

चिद्विकारे ७।, वा ।१।।

दूषयति दोषयति चित्तम्।

७९८। घटादि ज्ञनी जूष क्रस रञ्जाम मारतोषनिशाननिशामार्थं ञ्जां स्वोऽकमामचमो जौक्षमोस्तु घंश्च जागुश्च।

घटादि—ज्ञां ६।।।, स्व: १।, अकमामचम: ६।, जौक्षमो: ७।।, तु ।१।, घं: १।। च ।१।, जागु: ६।, च ।१।।

घटाद्यादेरमन्तस्य माराद्यर्थं घस्य ञौ स्व: स्यात् न तु कमा-

---

निर्दोरुसत्त्वं निजगाद सिंह इति रघौ।---विस्मापयन्निति विस्मापनं विस्माय: विस्मापनं करोतीति ञौ साध्यम् ॥ ७९४ ॥

भीषयते भापयते व्याघ्र:। घात् किं? खड्गेन तं भाययति ॥ ७९५ ॥

इर्दुष्यौ वैकृते इत्यस्य ञिनिमित्तके गुणे कृते ओकारस्य ऊ: स्यादित्यर्थ:। अन्यथा दुषेर्व इत्यनेनैवेष्टसिद्धौ दुषेरोदूरिति गौरवं व्यर्थं स्यात्। यथा अधर्म्मात् जनं दूषयति दूषयामास दूषयिष्यति ञिनिमित्तके गुणे किं दोषणं दोष: घञ्, दोषं करोति दोषयति अत्र घञ्निमित्तकस्य ओकारस्य ऊर्न्न स्यात्। दूषणमित्यादिकन्तु ज्ञान्तस्यैव ॥ ७९६ ॥

चेततीति चित् मन: तस्य विकारश्चिद्विकार:। तच्चिन्नर्थे दुषेर्ञौ कृते ओकार ऊ: स्याद्वा। दूषयति दोषयति चित्तं क्रोध इति शेष: ॥ ७९७ ॥

मचमां, ञेः परयोरिणमोस्तु वंश्च जागुश्च स्नौ घैः।
घटयति व्यथयति प्रथयति, जनयति जरयति क्नसयति, रज-
यति मृगान् रमयति, ज्ञपयति। कमादेस्तु कामयति
आमयति चामयति।

---

मारश्च तोषश्च निशानञ्च निशामश्च ते। तेऽर्था यस्य स मारतोषनिशान-
निशामार्थः। स चासौ ज्ञाश्चेति मारतोषनिशाननिशामार्थज्ञाः। घटादिश्च
जनीश्च जृषश्च क्नसश्च रजश्च अमश्च मारतोषनिशाननिशामार्थज्ञाश्च ते तेषाम्।
कम च अम च चम चेति कमामचम् न कमामचम् अकमामचम् तस्य इश्च च
णम् च इणमौ। ञेः परौ इणमौ ञेणमौ तयोः। घटषङ्म चेष्टे घटयति।
घटक हिंसासङ्घातद्युतिषु इत्यस्य तु घाटयति कुलचन्द्राद्यनुरोधात् जनमलिचेत्य-
स्यापि मानुबन्धत्वे जनीति ग्रहणं प्राचीनमतानुवादार्थम्। जरयति जृषग्रहणात्
जृगिकि ज्याने इत्यस्य जारयति क्नसुस्य्वृतौ क्नसयति। रजयति मृगानिति
रन्जमीज रागे ञौ तु मृगरमणे इति नलोपे ञ्णित्यन्ते जुङ्तोरिति ह्रस्वो ह्रस्वः।
रमयति एवं गमयतीत्यादि संक्रामयतीत्यादिकन्तु क्रमः शतप्रत्यये शपि क्रमः
येऽपीति दीर्घे संक्रामन्तं करोतीति ञौ टेर्लोपे साध्यम्। ज्ञपयति शत्रुं शूरः
मारयतीत्यर्थः। ज्ञपयति पुत्रं पिता तोषयतीत्यर्थः। निशानं तीक्ष्णीकरणं
ज्ञपयति खड्गं कर्मकारः शोशांसतीत्यर्थः। निशामो दर्शनप्रेरणं ज्ञपयति रूपं
कामिनी स्त्रीयगावाक्षि दर्शयतीत्यर्थः। निशामो ज्ञानप्रेरणम् इति न्यासरक्षितौ।
अतएव क्रमदीश्वरोऽपि जानातेर्घटादित्वं विभाषया मन्यते तेन ज्ञापयितुं बोध-
यितुमिच्छमाणो ज्ञीप्समान इति पाणिनीयवृत्तौ ज्ञानप्रेरणेऽपि ह्रस्वे सनि
ज्ञीप्समान इति सिद्धम्। एवं विज्ञप्तिरेषा मम जीवबन्धो इत्यादिषु च विज्ञापन-
मेवार्थः। ञेणमोस्तु अघटि अघाटि घटं घटं घाटं घाटमित्यादि कमादेस्तु
कामयते इति णिङि रूपम्। प्रेरणञौ तु कामयति कामयते। जागुश्चेति
जागर्त्तेर्ह्रस्वः स्यात् पुनर्ह्रस्वस्यैव दीर्घः स्यात् ञेः परयोरिणमोरित्यर्थः। यथा
गुरुणा शिष्योऽजागरि अजागारि गुरुः शिष्यं जागरं जागरं जागारं जागारं
शेते। घटादिस्तु। घट यमङ चेष्टने नट् म नृतौ भट म भाषणे। वद्धीक्तौ
गड़म सेकेऽथ स्त्रभोन्मन्यनविह्वयोः। यपत्क चेपणे ज्ञाक्म मारणादौ श्रथम् बधे
जृडर्षस्यतु ह्रस्वत्वे दृगि दृम भये मतौ। श्राम पाके खृमीत्कोऽथ व्यथस्राङ भयादिषु।

## ७९९ । ज्वल ह्वल ह्मल ग्ला स्ना वन रम नमोऽगेर्वा ।

ज्वल—नम: ६।, अ-गे: ६।, वा ।१। ।

एषामगोनां ह्र: स्यात् वा ञौ । ज्वलयति ज्वालयति, ग्लपयति ग्लापयति । अगे: किम् ? प्रज्वलयति प्रग्लापयति ।

## ८०० । वा शम यम फण गिस्खदाम् ।

वा ।१।, शम-यम-फण-गि-स्खदाम् ६।॥ ।

एषां ह्र: स्यात् वा ञौ । शमयति शामयति यमयति यामयति, फणयति फाणयति, परिस्खदयति परिस्खादयति ।

---

नृमि नृम् नयने श्रेम पाके कम्प्रे क्रियासु तु । श्वक्राग्म वक्रगत्यान्तु कखम हासे वनम् गतौ । चकअङ् मष्टकस्तक्म प्रतीघाते कणम् गतौ । रग्म शङ्के लगे सङ्गे यग ष्टगसग स्थग । क्रग ह्लग्मे तु संहत्यां चनि चजङ् गतौ त्यजि । रन्जरन्जौ च रागेऽथ चणम् दाने श्रणम् तथा । हेड् मवेष्टे प्रथङ् ख्यातौ क्रथ क्लथ क्नथम् वधे । कदक्रदक्लदश्मङ वैक्लव्यविकलत्वयोः । मदीभिर्यमदे ग्लेपे छदकिञ तूर्जने मतः । म्रदयङ् चोदने स्खदङ विदारे चर्म्म हिंसने । जनीमङ् जनने जम्मलिरुत्पत्तौ क्रपश्वङ । कृपायां चप कम कल्क ज्ञपक्ज्ञप्तौ त्वरङ् त्वरे । ज्वर्म्म रोगे च तज् कम्पे ज्वलजम् चलनत्विषोः । कलकजोवेह्वलह्मल्म चलने तु क्ष्मङ भये । जचिञ दाने दचमषङ हत्यर्थे क्रस्युमुद्धृतौ । प्रसङ प्रसवे तत्यां वनुम् व्यापृतौ तथा । चहक्म शठतायां स्यात् घटादिस्तु विसप्तति: । चन्मि हिंसे गतौ चिक्मि चयने फणमिण् गतौ । ध्वन्मि शब्दे ष्टनस्तन्मि रवे स्वनमि तंसने । तपूषमिङ लज्जायां यत्तक्मि परिवेशने । तदभावे दक्मिमेदे स्खक्मि स्यात् चलने चये । मिल्टषस्य निवासस्य दयोर्वलमिङ स्मृतौ । इति त्रयोदश ख्याता धातवो वा घटादय: ॥७९८॥

ज्वलजम चलत्विषो: ह्वलह्मल चाले ग्लै क्षमे ष्णाल शोधने वनुमव्यापृतौ । षणटुवमीद्गारे । नमौ शब्दनत्यो: । ग्लास्नोरप्राप्तौ अन्येषां नित्याप्राप्तौ विकल्प: । अगे: किं प्रज्वलयतीत्यादौ नित्यं ह्रस्व: । प्रग्लापयति प्रस्नापयतीत्युभयत्र न ह्रस्व: ॥७९९॥

## ८०१। हनस्तङ्ऽणबिणि ञ्णिति।

हनः ६।, तङ् ।१।, अ णप्-इणि ७।, ञ्णिति ७।

ञिति णिति च परे हन्तेस्तङ् स्यात् न तु णपि इणि च।
घातयति।

## ८०२। यिः सन् वेर्ष्यो द्विः।

यिः १।, सन् ।१।, वा ।१।, ईर्ष्यः ६।, द्विः १।

ऐर्ष्यियत्।

इति ञ्यन्तपादः।

---

वाशब्दस्य व्यवस्थावाचित्वात् समुभिर्यश्मे इत्यस्य नित्यं ह्रस्वः। शमयति रोगं वैद्यः। शलङ्कालोचे इत्यस्य नित्यं ह्रस्वाभावः। निशामयति कार्य्यं सुधीः प्रणिदधातीत्यर्थः। निशामय तदुत्पत्तिं विस्तराद्गदतो मम इति। यमकमि परिवेशने तदभावे यमयति यामयत्यन्नं गृहिणी। यमौ उ विरतौ इत्यस्य तु नित्यं ह्रस्वः। नियनयसि विमार्गप्रस्थितानात्तदण्ड इति शाकुन्तले। फणमिणगतौ फणयति फाणयति फणणनि स्नेहे इत्यस्य फाणयतीत्येव। खदमषङ विदारे परिखदयति परिखादयति अवखदयति अवखादयति अवपरिभ्यां परस्यैव वा ह्रस्वः इति कातन्त्रायाः अत्रापि अवस्थाने इति इति भीमः। अन्य पूर्वस्य केवलस्य च ह्रस्वदयति खदयतीत्युभयत्र घटादित्वात् नित्यं ह्रस्वः॥ ८००॥

णप् च इण् च णबिण् न नबिण् अणबिण् तस्मिन्। ञ च ण च ञ्णौ ञ्णावितौ यस्य स ञ्णित् तस्मिन्। ञौ घातयति घञि घातः णमि घातं घातम्। णबिणोस्तु जघान अघानि॥ ८०१॥

ईर्ष्यो यिरेव द्विः स्यात् द्वित्वहेतौ सतीत्येकोऽर्थः। सनि कृते तु यिर्वा द्विः स्यात् सनि वा द्विः स्यादित्यपरोऽर्थः। यथा ईर्ष्यो ञौ कृते यलोपस्य नित्यत्वेऽपि येर्द्वित्वविधानज्ञापकत्वात् हसाल्लोप इत्यनेन यलोपाभावे इर्ष्यि इत्यस्य धातुसंज्ञायां स्यामङ् नाजन्तादेरिति आदिं हित्वा स्यादौ नवद्र इति रेफं हित्वा अनेन षकारञ्च हित्वा यि इत्यस्य द्वित्वे ञेर्लोपे ऐर्ष्यियदिति। सनि तु वसोरस्येतीमि द्वित्वे ईर्ष्यियिषति सनो द्वित्वे इर्ष्यिषिषति॥ ८०२॥

इति ञ्यन्तपादः।

## द्वितीयः पादः—सनन्तः ।

### ८०३ । सन्निच्छायाम् ।

सन् ।१।, इच्छायाम् ७। ।

**धोः परः सन् स्यात् इच्छार्थे । अत्तुमिच्छति जिघत्सति । दिदासते दिदीषते, दिद्योतिषते, उतिच्छिषति उचिच्छिषति अधिजिगापयिषति अध्यापिपयिषति, शुशावयिषति शिश्वाय-यिषति जुहावयिषति ।**

---

यस्य धातोर्योऽर्थस्तद्विषयायामिच्छायां तद्धातोः सन्नित्यर्थः । इच्छायामिति सामान्योक्तावपि तुमर्थगर्भायामेव । इत्यत आह अत्तुमिच्छतीति तुमर्थगर्भायामिच्छायां सन्निति जौमराः । इच्छासमन्तात् न सन् । इच्छायामिच्छान्तरासम्भवात् । स्वार्थसनन्तात्तु स्यादेव । चिकित्सिषतीत्यादि । अचेतनस्य इच्छाया असम्भवेऽपि नदीकूलं[1] पिपतिषतीत्यादौ विवक्षायां सन् एवं श्वा मुमूर्षतीत्यादावपि विवक्षयैव सन् । पूर्वतो वाशब्दानुवृत्तौ पक्षे वाक्यस्यापि स्थितिः । सन्निति अकारान्तः । तेन अटगतौ अटिटिषतीत्यादौ नाजन्तादेरिति अकारादेर्न द्विः । जिघत्सतीति अद्लौ सन् घस्लृद इति घस्लादेशे सत् स्यरे इति सस्य त द्वित्वादि तिप् शप् लोपोऽत इति सनो अकारलोपः । दिदासते इत्यादि दौङ्‌ध्रां यन्निति ङा वा । दिद्योति-षते इति द्युत्स्वाप्योरिति खेर्जिः । उतिच्छिषतीत्यादि उच्छीशबन्धसमापने सन् इति उच्छिष इति स्थिते उकारं हित्वा छिष इत्यस्य द्वित्वे यस्य लोपे छिवजादौरिति खेम्छकारस्य तकारो वा । अधिजिगापयिषतीत्यादि अधीङ्ल अध्ययने ञन्तात् सनि ण्यां गा अग्ङ् सनोस्तु वेति गादेशे आदन्तत्वात् पण् । पक्षे क्रीजीङ इति आकारे पण सन् इमि आपयिष इति स्थिते पयिष इत्यस्य द्वित्वम् । शुशावयिष-तीत्यादि टुश्वीश्वि ञन्तात् सनि औ द्विले त्रिरति नियमात् श्वेर्जिर्वेति जौ कृते द्वित्वं ततो त्रिः । जुहावयिषतीति ह्वयतेर्ञन्तात् सनि औ द्विले त्रिरिति नियमात् द्विले सति ह्वीर्द्जिरिति जौ कृते ह्राभागस्य अलाभात् शाच्छासाह्वेति यलोऽभावे वृद्धिः ॥ ८०३ ॥

## ८०४ । गुणोऽनिमि ।

गुः १।, न ।१।, अनिमि ७। ।

अनिमि सनि गुणं स्यात् । विवृत्सति विवर्त्तिषते, निनृत्सति निनर्त्तिषति, तितरीषति तितरिषति तितीर्षति ।

## ८०५ । घोऽज्झनिङ्गमाम् ।

घं: १।, अज्झनिङ्-गमाम् ६॥ ।

अजन्तस्य हन्तेः इङः स्थाने जातस्य गमस्य घं: स्यात् अनिमि सनि । दुध्वूर्षति दिध्वरिषति । वुवूर्षति विवरीषति विवरिषति, सञ्चिस्कीर्षति, जिगीषति, चिकीषति चिचीषति जिघांसति ।

## ८०६ । गमीनिङोः ।

गमि ।१।, इन् इङो: ६॥ ।

इनिङोः स्थाने गमिः स्यात् सनि । जिगमिषति, अधिजिगांसते ।

---

विवृत्सतीति वृद्भ्यो नेम् इति इम् निषेधे गुणनिषेधः । अनिमि किं? विवर्त्तिषते । निनृत्सतीति नृत्क्षादित्यनेन इमोऽभावपक्षे गुणाभावः । तितरीषतीत्यादि स्वादृद्दुरिति वेमि वृतो वेम इति वा दीर्घः । अनिम् पक्षे गुणोऽनिमि अगुणत्वादि व्यंनच्तयीति दीर्घः ॥ ८०४ ॥

इङो गम् इङ् गम् । अच् हन् च इङ्गम् च ते तेषाम् । दुध्वूर्षतीत्यादि । ध्वृ कौटिल्ये स्वादृद्दुरित्यनेन अनिम् पक्षेऽनेन दीर्घः । ऋदिरणावित्युरि हसि परेऽच् कार्य्यात् परं द्वित्वमिति नियमात् ध्वूर्ष इत्यस्य द्वित्वमिति । वुवूर्षतीत्यादि वृञ् स्वादृद्दुरित्यनिम् पक्षे दीर्घं ऋदिरणावित्युरि द्वित्वम् । इम् पक्षे वृतो वेम इति इमो वा दीर्घः । सञ्चिस्कीर्षतीति स्वादृद्दुरित्यत्र स्कृवर्जनात् न वेम् नेमेकाजेति इमो निषेधे दीर्घोऽगुणत्वादिर् । जिगीषतीति जेर्गिः सनठ्योरिति जेर्गिः घोऽज् झनिङ्गमामिति दीर्घः चिकीषतीति चेः किर्वा । जिघांसतीति हनसौ हिंसने खेर्हीघोज्णितीति च इति हस्य घः अनेन दीर्घः । अनिम् सनोऽगुणत्वेऽपि वनतनेति न लोपाभावबीजं इमीया वित्यत्र चेस्यम् ॥ ८०५ ॥

## ८०७ । नेमुगुहग्रहः ।

न ।१।, इम् ।१।, उ-गुह-ग्रहः ५। ।

उवर्णान्तात् गुहो ग्रहश्च सन इम् न स्यात् । जुहूषति बुभूषति जुघुक्षति ।

## ८०८ । ग्रहस्वपप्रच्छां जिः ।

ग्रहः-स्वप प्रच्छां ६।॥, जिः १। ।

एषां जिः स्यात् सनि । जिघृक्षति सुषुप्सति ।

## ८०९ । स्मिङ पूङ रन्जशू किर गिर द्रिय ध्रिय प्रच्छ इम् ।

स्मिङ-पूङ ऋ अन्ज् अशू—प्रच्छ : ५।, इम् ।१। ।

एभ्यः परस्य सन इम् स्यात् । सिस्मयिषते पिपविषते अरिरिषति अञ्जिजिषति अशिशिषते चिकरिषति पिपृच्छिषति ।

---

गमधातुरादिश्यते जिगमिषतीत्यादि इण गतौ सनि गमादेशे गमोऽसे इति इम् । अधिजिगांसते इति अधीङ्ध्ययने सनि गमादेशे धौंज्झनिङ्गमामिति दीर्घः । गमधातुनैवेष्टसिद्धौ इणो गमादेशविधानं विफलमिति इण गतावित्यस्य सनन्तस्य प्रयोगनिषेधार्थमिति चेत् । इगत्यामिति भौवादिकस्य प्रतियिषति इत्यादेरवश्यम्भावे तन्निषेधेनाप्यलम् । ततश्च इणगमादेशो ज्ञापयति ये गत्यर्थास्ते ज्ञानार्था इति न्यायेन बोधार्थस्येणधातोर्गमादेशो न स्यादिति । तेन इणधातोर्गमनार्थे जिगमिषति बोधार्थे प्रतियिषति इति सिद्धम् । उपास्तौ श्रवणेच्छायां शृणोतेः सन् विधीयते । गुरुं शुश्रूषते शिष्यः श्लोकं शुश्रूषते गुणी ॥ ८०६ ॥

ह्रस्वोदन्तस्य सुः सुसूषति च्युः चुच्यूषति च्युः चुच्यूषति । दीर्घोदन्तस्य बुभूषति जुहूषतीति ह्वेञः सनि द्वित्वे ह्वोर्वेरिति जौ कृते धौंऽज्झनिङ्गमामिति दीर्घः । जुघुक्षतीति गुहः सन् हो ढो भाविति हस्य ढत्वे झभान्तस्येति गस्य घत्वे षढोः कः से इति ढस्य कत्वम् ॥ ८०७ ॥

जिघृक्षतीति ग्रहः सन् पूर्वेण इम् निषेधे अनेन जिः हस्य ढे झभान्तस्येति गस्य घः । सुषुप्सतीति औदित्वात् नेम् जौ कृते द्विः क्तिलादिति षः ॥ ८०८ ॥

स्मिङ् च पूङ् च ऋश्च अन्ज च अशूश्च किरश्च गिरश्च द्रियश्च ध्रियश्च प्रच्छ

## ८१० । भ्रस्ज श्रि स्वृ यूर्णु भर दरिद्रा सन तन पत ज्ञपर्द्धिदन्भिवो वा ।

भ्रस्ज—इवः ५।, वा ।१। ।

एभ्यः सन इम् स्यात् वा । बिभर्जिषति बिभ्रज्जिषति बिभ्रक्षति, शिश्रयिषति शिश्रीषति सिस्वरिषति सुस्वूर्षति, यियविषति युयूषति, ऊर्णुनुविषति ऊर्णुनविषति ऊर्णुनूषति, बिभरिषति बुभूर्षति दिदरिद्रिषति दिदरिद्रासति, सिसनिषति सिषासति तितनिषति तितंसति, तितांसति इत्येके । पिपतिषति ।

---

चेति तस्मात् । स्मिङो ङकारः सुखार्थः स्मिङ ऋ दृ धृ एषां नेमिकाजेत्यनेन पूङो नेमुगुहग्रहेति प्रच्छ औदितादप्राप्तौ । अनुज अशू एतयोरूदित्वात् । कॄगॄ एतयोः स्याद्वृदॄदुरित्यनेन वेमत्वे नित्यार्थमिम् विधीयते । सिस्मयिषते इति स्मिलोः खेरिति नियमान्मूलधातोः षत्वं न । पूङ शोधे पिपविषते इति सनि अनेन इमि प्रागच्कार्य्यादिति नियमादादौ द्वित्वे गुणे सन्धौ च जयल्पोरिति वक्ष्यमाणात् खेरुकार इः । ऋ गतौ अरिरिषतीति सनि इमि प्रागच्कार्य्यादित्यत्र पूर्व वाशब्दीयव्यवस्थया आदौ गुणे नाजन्तादेरिति अकारं हित्वा रिष इत्यस्य द्वित्वम् । अञ्जिजिषतीति अनुज सन् इम् स्यादौ न वद्र इति अनभागं हित्वा जिष इत्यस्य द्वित्वम् । अशिशिषते इति अशूङ् सन् इम् अकारं हित्वा शिष इत्यस्य द्वित्वम् । चिकरिषतीति कॄश विक्षेपे । जिगरिषतीति गॄश निगरणे दिदरिषते दृङ सादरे दिधरिषते इति धृञङ स्थितौ । कॄङगि हिंसे गॄगि शब्दे दॄयगि विदारे दॄगि दॄमर्भिषि एषां स्याद्वृदॄदुरिति वेम् चिकरिषति चिकीर्षतीत्यादि । पिपृच्छिषतीति अनेन इमि पूर्वेण जिः ॥८०९॥

भ्रस्ज औश पाके श्रिञ सेवने स्वृज शब्दोपतापयोः वेमोऽप्यस्यात्र ग्रहणं ज्ञापयति रुदुसुनूनां वेमामपि सनि वेमत्वं नास्तीति । अतएव रुदुसूनीत्वश्च्या इत्यनेन एषां वेमत्वेऽपि नेमुगुहग्रह इत्यनेन इम् निषेधपक्षे रुरूषति दुदूषति सुसूषति नुनूषतीत्येव । युञ मिश्रणे ऊर्णुञ्वाच्छादने । भर इति ग्रहणात् पूरणार्थस्य भौवादिकभृञो बिभरिषति बुभूर्षति इति धारणार्थस्य जुहोत्यादि भृञो बुभूर्षतीति । दरिद्रा

**८११ । मि मी मा दा रभ लभ शक पत पद हिंसार्थराधोऽचोऽनिम् सनोरिस्खलोपश्च ।**

मि—राधः ६।, अचः ६।, अनिम् सनि ७', इस् ।१।, खिलोपः १।, च ।१। ।

एषामच इस् स्यात् खिलोपश्चानिमि सनि । [२१३] स्यादेः सोलोपः । पित्सति । जिज्ञापयिषति ।

**८१२ । ज्ञपर्धापामीर्य्यः ।**

ज्ञप-ऋध—आपां ६।।।, ईर्य्यः १।।। ।

एषामच ई ईर् ई एते क्रमात् स्युः खिलोपश्चानिमि सनि । ज्ञीप्सति । अर्हिधिषति ईत् सति । दिदम्भिषति ।

---

चलु दुर्गत्याम् । यनदुञ दाने तनदुञ विस्तृतौ पतल्लज पत्याश्च ज्ञाक्ष मारणादौ । ऋध्यु इड्ढौ । दनभू न दम्भे इव इति इवन्तः। यथा चिव्यु निवासे दिव्यु जिगीषादौ । षिव्यु तन्तुसन्ततौ ष्ठिव्यु निवासे स्रिव्यु शोषे गतौ । विभ्रज्जिषतीति अनेन इमि झप्भसोरिति सस्य दत्वे स्तुश्चुभिरिति दस्य जः । अनिम् पक्षे तु स्यादेः सोलोपे शच्छ्राजेति षङि षढोः कः से । शिश्रीषतीत्यादौ र्घोज्झनिङ्क्रमामिति दीर्घः । यियविषतीति यु सन् इमि प्रागच्कार्य्यादिति नियमादादौ द्वित्वे ततो गुणे सन्धौ च जयल्पोरिति खेरुकारस्य इः ऊर्णुनविषतीत्यादि नाजन्तादेरिति ऊकारः स्यादौ नवद्र इति रेफं हित्वा द्वित्वं ङिदिम् वोर्णोरिति ङित् पक्षे श्रुध्वोरित्युव् दिदरिद्रिषतीति उस्येचीति आकारलोपः । अनिम् पक्षे दरिद्र आलोप इत्यत्र सन्वर्जनान्नाकारलोपः । सिषासतीति खनसनजनामिति ङा, तितंसतीति अनिम्सनोऽगुणत्वेऽपि वनतनेति नलोपाभावबीजं दम्भोयावित्यत्र लेख्यम् । एके इति पाणिनीयजौमरास्तनोतेरनिम् सनि वा दीर्घमिच्छन्तीत्यर्थः ॥८१०॥

अस्य व्याख्या मित्सतीत्यादि पदसाधनकाले लेख्या । पीत्सतीति पतितुमिच्छतीति सन् अनिम् पक्षे अनेन खिलोपे अकारस्य इसि कृते स्यादेः सोलोपः जिज्ञापयिषतीति ज्ञाक्ष मारणादौ ञ्यन्तात् सन् भस्ज श्रीति वेम् ॥८११॥

ज्ञपश्च ऋधश्च आप् च ते तेषाम् ईश्च ईर् च ईश्च ईर्य्यः। ज्ञीप्सतीति अनिम् पक्षे अकारस्य ईः खिलोपश्च ञेर्लोपः । अर्हिधिषति ऋध्यु वृद्धौ भस्जश्रीति

## ८१३ । दम्भो धी ।

दम्भः ६।, धी १॥ ।

दम्भेरच इ ई च स्यात् अनिमि सनि खिलोपश्च । धिप्सति धीप्सति । अनकारनिर्देशात् । दिदम्भिषति ।

## ८१४ । छ्वोः शूटावग्नौ असक्वौ यङ्लुक् वौस्तुवा ।

छ्वोः ६॥, शूटौ १॥, अग्नौ ७।, अस्—क्वौ ७।, यङ्-लुक्-वौः ७॥, तु १। वा १। ।

छकारवकारयोः शकारोटौ स्याताम् अग्नौ असे क्वौ च, यङ्लुकि वे च वा स्तः । दुद्यूषति । मित्सति दित्सति धित्सति रिप्सते लिप्सते शिक्षति पित्सते, प्रतिरित्सति । हिंसार्थः किम् ? आरिरात्सति । ईप्सति ।

---

सनौ वेम् गुणे अधिं य इति स्थिते अरभागं हित्वा धिय इत्यस्य द्वित्वम् । अनिम्-पक्षे ऋकारस्य ईर् खिलोपश्च झप्झसोरिति धस्य त । दिदम्भिषतीति दन्भु धस्जश्रीति सनौ वेम् ॥८१२॥

धिप्सतीत्यादि दन्भु दम्भे सन् दभ इत्यनकारनिर्देशात् नलोपे अनेन खेर्लोपे अकारस्य इकारे च झभान्तस्येति दस्य धे झप्झसोरिति भस्य पः । अत्र गुर्नानिमीत्यनेनानिम् सनोऽगुणत्वे इमुङ्गीलोप इत्यनेनैव नकारलोपे सिद्धेऽनकारनिर्देशो ज्ञापयति अनिम् सनि दन्भ एव नकारलोपो नान्यस्य इति । तेन भन्ज्धौ मोटने विभङ्क्षति रन्जभौञ् रागे रिरङ्क्षतीत्यादौ न लोपः । एवं जिघांसवि अधिजिगांसते तितंसतीत्यतेषामपि वनतनाद्यनिमामिति अनेन अम्लोपो न स्यादिति । दन्भ्श हिंसे इत्यस्यापि अनिम् सनि नकारलोप इति जौमराः तिदृचवि । स्वमते तु ज्ञापकसिद्धमनित्यमिति न्यायात् न लोपः । दिदेविषतीति इबन्तत्वादिम् ॥८१३॥

छ च व च छ्वौ तयोः श च ऊट् च शूटौ अस् च क्विश्च असक्वि तस्मिन् । यङ्-लुक् च व च यङ्लुग्वौ तयोः । यथा प्रच्छौ प्रश्नः विच्छश विश्नः । दिव्यु द्यूतम् । दुद्यूषति । क्वौ अक्षद्यूः । अग्नाविति पृथक्पदकरणाद्यङ्लुकि तत्सम्बन्धाभावे गुणनिमित्ते अगुणे च असे वा स्तः । वकारे तु यङ्लुकि अन्यत्र च सर्वस्मिन्

## ८१५। मुचोऽढ़े इर्मोच् वा सनि।

मुचः ६।, अढ़े ७।, इः ६।, मोच् ।१।, वा ।१।, सनि ७।।

अढ़स्य मुचो इः स्थाने मोच् वा स्यात् सनि।

मोचते मुमुचते।

## ८१६। जयल्पोः ख्योर्ये।

ज-यल्-पोः ५।, ख्योः ६।, इ ।१।, ए ७।।

खेरुवर्णस्य जकार-यल-पवर्गात् परे अवर्णे परे इः स्यात् सनि। जु गतौ। जिजावयिषति। रु रिरावयिषति।

---

वकारे वा स्त इत्यर्थः। गुणनिमित्ते यथा वेवेश्मि वेवेच्मि देद्योमि देदेमि। अगुणे यथा वेविश्मः वेविच्मः देद्यूमः देदिमः। वकारे तु वेविश्वः वेविच्वः देद्यूवः देदिवः विविश्वान् विविच्वान् दुद्यूवान् देदिवान्। मिमीमादेत्यस्योदाहरति। मित्सतीत्यादि डु मिञन क्षेपे मीञगवधे मीकि गत्याम् एषामचः इसि कृते खेश्च लोपे मत्स्यरे इति सस्य तकारे मित्सतीति मा इति स्वरूपग्रहणात् मालच माने इत्यस्यापि मित्सतीति माङलिशब्दे माङयच मेङ प्रतिदाने मीङयतु च इति चतुर्णां मित्सते इति। ङित्वादात्मनेपदं दा इति दासंज्ञा। तेन दाल लूनौ दा तु दाने डु दाञखि दोषच्छेदे एषां दित्सतीति डु धाञखि धेट धित्सतीति देङ पालने दित्सते रभीङ रिप्सते लभीङ लिप्सते। शकयङ शक्निरु शिक्षति। अस्य स्वमते वेमत्वेऽपि बहुवादिनां मतेऽनिमत्वादिम् पक्षे उदाहरणं न दत्तं पतॢज गत्यां पित्सति पत्यङ ऐश्वर्ये पदीङ गतौ द्वयोः पित्सते। प्रतिपूर्वराध्नोतिः हिंसार्थः। प्रतिरित्सति। आङ्पूर्वः सेवार्थः आरिरात्सति ईप्सति आप ल्टनौकि अपर्धापामीर्ष्यः ॥८१४॥

ढस्याभावोऽढं तस्मिन्। मोचते मुमुचते मुनिः पापात् स्वयं मुक्तो भवितुमिच्छतीत्यर्थः। कर्म्मकर्त्तृत्वादात्मनेपदं मोचते इति क्वचित् केवलो इः स्यादिति व्याख्यानात् सनं हित्वा मुचधातोर्द्वित्वे मोचादेशे चूङ्गिति कुङम्। अढे किम्? वत्सं मुमुक्षति गोपः ॥८१५॥

खेरु: ख्युः तस्य इ इति लुप्तप्रथमैकम्। ए इति सप्तम्येकम् खेरुवर्णस्य जकारयलपवर्गात् परेऽवर्णे इः स्यात्। अव्यवहितसनोऽसम्भवात् व्यवहिते सनीत्यर्थः।

पू पिपावयिषति भू बिभावयिषति। जयल्पोः किं ? नुनावयिषति। अतएव ञौ द्वित्त्वे ञ्रिः।

## ८१७। श्रु स्रु स्नु द्रु प्रु प्लु च्युङां वा।

श्रु—चुङां ६॥, वा।१।

शिश्रावयिषति, शुश्रावयिषति।

## ८१८। व्युङोऽवो हसादेः सेमः क्त्वाच्च किद्वा रुदविदमुषस्तु नित्यम्।

व्युङः ५।, अ वः ५।, हसादेः ५।, सेमः ५।, क्त्वाच् ।१।, च ।१।, कित् ।१।, वा, ।१।, रुद-विद-मुषः ५।, तु ।१।, नित्यम् १।।

**हसादेः सेम उकारोङ इकारोङश्च वान्तवर्जात् सन् क्त्वाच्च कित् वा स्यात् रुदादेस्तु नित्यम्।**

---

यथा जुङ् गतौ जिजावयिषति अत्र ञेः सनि आदौ द्वित्वे पश्चात् वृद्धौ अनेन खेरुकारस्य इकारः। एवं यु यियावयिषति। रु रिरावयिषति। लु लिलावयिषति। पू पिपावयिषति। भू बिभावयिषति। मु मिमावयिषति। एवम् एषां ञेः परेऽङि आदौ द्वित्वे पश्चात् वृद्धौ जावि इति स्थिते अज्व्युङः स इति ङखे खिः सन्वद् घौ इत्यादिना खिः सन्वत्कार्य्यातिदेशेऽनेन खेरुकारस्य इकारे घोश्च खेर्हसादेर्घश्चेति दीर्घे अजीजवत् इत्यादि जयल्पोः किम् ? कुङ्शब्दे चुकावयिषति। नु नुनावयिषति। सु सुषावयिषति हु जुहावयिषति इत्यादि। अतएवेत्यादि। ञौ द्वितीयचरणे वृद्धेः कर्त्तव्यत्वेऽपि ञेः परे भविष्यत् सन् विषये द्वित्वे सति वृद्धिः स्यादित्यर्थः॥ ८१६॥

पृथग्योगात् जयल्पाविति नानुवर्त्तते। श्रु श्रवणे स्रु गतौ ष्णुल प्रस्रुत्यां द्रु गतौ प्रुङ्प्लुङ गतौ च्युङ गतौ। एषां सप्तानां खेरुवर्णस्य अव्यवहितावर्णस्यासम्भवात् वर्णद्वयव्यवहितेऽवर्णं इः स्यात् वा व्यवहिते सनीत्यर्थः। यथा शिश्रावयिषति शुश्रावयिषतीत्यादि। एवम् एषां ञेः परेऽङि आदौ द्वित्वे पश्चात् वृद्धौ अज्व्युङः स इति ङखे खिः सन्वद् घाविति सन्वत्कार्य्यातिदेशे अनेन खेरुवर्णस्य इकारे संयोगपूर्वत्वेन खेर्गुरुत्वात् दीर्घाभावे अशिश्रवत् अशुश्रवदित्यादि॥ ८१७॥

उश्च इश्च वौ। तावुङौ यस्य स व्युङ् तस्मात् उकारोङ् इकारोङ वर्ज्यं वका-

रुरुचिषते रुरोचिषते लिलिखिषति लिलेखिषति। रुदादेस्तु रुरुदिषति विविदिषति मुमुषिषति। वान्तः किं? दिदेविषति।

**८१९। जिस्त्वोः खेः सः षः षण्यऽस्वित्स्वत्सहः।**

जि-स्त्वोः ६॥, खेः ५।, सः १।, षः १।, षणि ७, अ-स्विद्-स्वत्-सहः ६।।

खेः परस्य अन्त-स्तौत्योः सस्य षत्वभूते षणि षः स्यात् न तु स्विद्स्वत्सहाम्। सुष्वापयिषति तुष्टूषति। जिस्त्वोः किं? सिसिक्षति। षणीति किं? तिष्ठासति। खेः किं? प्रतीषिषति।

इति सनन्तपादः।

---

रान्ताभावात् नास्ति दन्त्यवकारान्तो यत्र सोऽव् तस्मात् आकाङ्क्षाभावादत्र पूर्वस्थितानामनुवृत्त्यभावे चकारेण प्रकरणोपस्थितः सन् एव आकृष्यते। यथा रुरुचिषते इत्यादि वसोऽरस्येति इमि कित् पक्षे न गुणः। एवं रुचित्वा रोचित्वा लिखित्वा लेखित्वा। रुदादेस्तु रुरुदिषति विवदिषति मुमुषिषति रुदित्वा विदित्वा मुषित्वा। अवः किं? दिदेविषति देवित्वा॥ ८१८॥

नियमोऽयम्। षभूते सनि खिनिमित्तकं मूलधातोः षत्वं अन्तस्तौत्योरेव स्यात् नान्यस्येत्यर्थः। सुष्वापयिषतीति ञुत्स्वाप्योः खेर्जिः। क्रिलादित्यनेन सनः सस्य मूलधातोश्च षत्वम्। तुष्टूषतिस्तु सन् घोंज्ञ्भनिङ्गमामिति दीर्घं द्वित्वे क्रिलादित्युभयत्र षत्वम्। सिसिक्षतीति षिचपशौ अ सन् चुडिति कुडि क्रिलादिति सनः षत्वं अन्तस्तौति भिन्नत्वात् मूलधातोर्न षत्वम्। एवं सुसुषतीत्यादि। तिष्ठासतीति सनः षत्वाभावात् नियमाभावे षत्वम्। प्रतीषिषति प्रत्येतुमिच्छतीति प्रतिपूर्वं इङ्गतावित्ति भौवादिकात् सनि नाजन्तादेरिति इकारं हित्वा सन एव द्वित्वे व्यस्येत्सनीतीत्वे सनः षत्वे मूलधातुनिमित्तकं खेः षत्वं स्यादेव। अन्तत्वात् प्राप्तौ स्विद्स्वदसहां निषेधः। सिस्वेदयिषति सिसाहयिषति॥ ८१९॥

इति श्रीदुर्गादासविद्यावागीशविरचितायां मुग्धबोधस्य टीकायां

सनन्तपादः।

## तृतीयः पादः—यङन्तः।

---

### ८२०। मूत्र सूत्र सूचाटशर्त्यूर्णु हसाद्ये-काचोऽशुभरुचो मुहुर्भृशार्थे यङ्।

मूत्र—एकाचः ५।, अशुभरुचः ५।, मुहुर्भृशार्थे ७, यङ् ।१। ।

एभ्यः शुभरुचवर्जेभ्यो यङ् स्यात् पौनःपुन्ये अतिशये चार्थे।

### ८२१। गत्यर्थाद्गॄलुप सद चर जप जभ दन्श दहो वक्रगर्हे।

गत्यर्थात् ५। गॄ दहः ५।, वक्रगर्हे ७। ।

गत्यर्थात् वक्रे, गॄादेर्गर्हायां यङ् स्यात् न तु पूर्वोक्ते, तद्युक्ते तु स्यात्।

---

हसादिश्चासावेकाच्चेति हसाद्येकाच्। मूत्रश्च सूत्रश्च सूचश्च अट च अश च अर्त्तिश्च ऊर्णुश्च हसाद्येकाच्चेति तस्मात्। न विद्येते शुभरुचौ यत्र सोऽशुभरुच् तस्मात्। मुहुश्च भृशश्च मुहुर्भृशौ तयोरर्थः मुहुर्भृशार्थः तस्मिन्। मूत्रसूत्रसूचानामदन्तत्वेन अनेकाच्त्वात् अट अश अर्त्ति ऊर्णूनामजादित्वादप्राप्तौ पृथगुक्तिः। यङ् अदन्तः तेन अटाट्यते इत्यादौ नाजन्तादेरिति आद्यच्चरं हित्वा द्वित्वम् ॥८२०॥

गॄश्च लुपश्च मूर्द्धन्यादि सद च चर च जप च जभ च दन्श च दह चेति तस्मात्। लुपसाहचर्य्यात् गॄ इति तौदादिक एव ग्राह्यः। तेन पुनः पुनरतिशयेन वा गृणाति जेगीर्य्यते। वक्रश्च गर्हा च वक्रगर्हं तस्मिन्। पृथक्पदकरणं वक्रगर्हाभ्यां यथासंख्यार्थम्। न पूर्वोक्ते मुहुर्भृशार्थयुक्ते वक्रगर्हे तु स्यादेवेति। यथा वक्रं गच्छति जंगम्यते जेगिल्यते पुनःपुनरतिशयेन वा गच्छति पुनः-पुनरतिशयेन वा गिरति इत्यत्र न स्यात्। किञ्च पुनः पुनरतिशयेन वक्रं गच्छति जंगम्यते पुनःपुनरतिशयेम वा गर्हितं गिरति जेगिल्यते अत्र तु स्यादेव ॥ ८२१ ॥

## ८२२ । खेर्णुः ।

खेः ६।, णुः १।।

यङि परे खेर्णुः स्यात् ।

'पुनःपुनरतिशयेन वा मूत्रयति मोमूत्र्यते, सोसूत्र्यते सोसूच्यते ।

## ८२३ । घोंऽनितः ।

घः १।, अ नितः ६।।

अ-नकारितः खेः घः स्यात् यङि । अटाट्यते अशाश्यते अरार्य्यते ऊर्णोनूयते । देदीयते मेमीयते जेगीयते जेहीयते पेपीयते सेषीयते तेष्ठीयते । शोशूयते शेश्वीयते, मास्मर्य्यते, वेक्रीयते सञ्चेष्क्रीयते विसेसिच्यते, यङन्तत्वात् न षः । वक्रं व्रजति वाव्रज्यते ।

---

सुगमम् । मोमूत्र्यते इति मूत्रत्क प्रस्रावे चुर्य्यो ञिः ञसात्लोपे मूत्रीति धातो-र्यङ् ञेर्लोपे द्वित्वं खेराद्यचः परभागलोपे गुणः धातुसंज्ञायां यङो ङित्त्वादात्मने-पदं शपि लोपीऽतोऽदेचोरिति यङोऽकारलोपः एवं सर्व्वत्र ॥ ८२२ ॥

नकार इत् येषां ते नितः ( नीन् नुन् रीन् ) न विद्यन्ते नितो यस्य खेः सोऽनित् तस्य । अटाट्यत इति वक्रम् अटति पुनः पुनरतिशयेन वा वक्रम् अटति इत्यर्थे यङ् नाजन्तादेरिति अकारं हित्वा ट्य इत्यस्य द्वित्वे खेराद्यच इति यकार-लोपेऽनेन दीर्घः । एवम् अशाश्यते अरार्य्यते इति ऋर्लिंगत्यां यङि स्याद्यर्त्तृत इति गुणे अर्य इति स्थिते स्यादौ नवद्र इत्यत्र अये इत्युक्ते रेफसहितयकारस्य द्वित्वे खेराद्यच इति यलोपे घोंऽनित इति दीर्घः । अनितः किं ? वनीवच्यते जंजप्यते नरीनृत्यते ऊर्णोनूयत इति यङि घोंऽज्यरे इति दीर्घे नाजन्तादेरिति उकारं हित्वा स्यादौ नवद्र इति रेफं हित्वा नूय इत्यस्य द्वित्वे आद्यचः परभागलोपे खेर्गुणे रेफसम्बन्धाभावात् मूलधातोर्नकारस्य पुनर्दन्त्यत्वम् । देदीयते इति दास्व-रूपाद् यङि आदौ दामागै इति ङी ततो द्वित्वे खेर्णुः । मेमीयत इति मास्वरूपाद् यङि दामागै इति ङी ततो द्वित्वादि । एवं जेगीयत इत्यादि पञ्च । शोशूयत

## ८२४ । ग्रो र लः ।

ग्रः ६।, र ।१।, लः १। ।

गिरते रो लः स्यात् यङि । गर्हितं गिरति जेगिल्यते । लोलुप्यते सासद्यते ।

## ८२५ । कोश्चुर्वा ।

कोः ६।, चुः १।, वा ।१। ।

कोः खेश्चुः स्यात् वा यङि । चोकूयते कोकूयते ।

## ८२६ । नीन् वन्च स्रन्म ध्वन्स भ्रन्श कस पत पद स्कन्दाम् ।

नीन् ।१।, वन्च—स्कन्दाम् ६॥ ।

एषां खेर्नीन् स्यात् यङि । वनीवच्यते ।

---

श्वेर्जिर्वा यङठयोरिति जिर्वा । सास्मर्य्यत इति स्यात्त्मृत इति गुणः । चेक्रीयत इति करोतेर्यङि यङ्ध्यक्ये चर्द्रीं । सचेष्वीयत इति संपरे सुमि कुम्गुठग्रान्निति नियमात् न गुणः । क्षिलादिति षः । विसिसिच्यते इति गिनिमित्तकं खिनिमित्तकमपि षत्वं न स्यादिति श्रीपतिदत्तः । वा व्रज्यते इति र्घोऽगित इति दीर्घः ॥८२३॥

जेगिल्यते इति स्फदिरणावितीरि अनेन रेफस्य लः । ग्रो गिरतेरिति निर्देशात् गृणातेर्जेगीर्य्यते इत्येव । पर्य्यङ्कादेः रेफस्य चूड़ादेर्डस्य च लो वेति वक्तव्यम् । पर्य्यङ्कः पल्यङ्कः निरयः निलयः दुरयणं दुलयनं गिरति गिलति निगरणं निगलनं परिघः पलिघः परियोगः पलियोग. प्रत्ययः प्लत्ययः वारः वालः मूरं मूलं रघुः लघुः अङ्गुरिः अङ्गुलिः अरिः अलिः अरम् अलम् कपिरिका कपिलिका वपुरीकं वपुलीकं रोम लोम पांशुरं पांशुलं कर्म्म कल्म असुरिः असुलिः शुक्रः शुक्लः चूड़ा चूला वड़भी वलभी जड़ं जलम् । त्वं समुद्रश्च दुर्वारौ महासत्वौ सतेजसौ । अयन्तु युयवोर्भेदः स जड़ात्मा पटुर्भवानिति दण्डी । लोलुप्यते इति गर्हितं लुम्पतीति सासद्यत इति गर्हितं सीदतीति वाक्यम ॥ ८२४ ॥

मण्डूकप्लुत्या खेरित्यस्यानुवृत्तिः । केचित्तु कुङशब्दे इत्यस्यैवायं विधिरित्याहुः ॥ ८२५ ॥

**८२८। जम जप जभ दह दन्श भन्ज पश शपोऽतो नुन् लवयस्तु वा।**

जम—शप: ६।, अत: ६।, नुन् ।१।, ल-व-य: ६।, तु: ।१।, वा ।१।।

जमन्तानां जपादीनां च अदन्तस्य खेर्नुन् स्यात् यङि, लवयान्तस्य तु वा। जञ्जन्यते जाजायते।

**८२८। हनो वा घ्नी।**

हन: ६।, वा ।१।, घ्नी ।१।।

जेघ्नीयते जङ्घन्यते। जञ्जप्यते। चञ्चल्यते चाचल्यते, मम्मव्यते मामव्यते, दन्दव्यते दादव्यते।

---

वन्चु गत्यां स्नन्सु लङ भ्रंशे ध्वन्सु लङ गतौ भ्रंशे भ्रन्शु यङ् अध:पाते तालव्यान्त:। कस ज गतौ पतल्ज गत्यां पद स्थैर्य्ये पद्यौ ङगतौ इति द्वयम्। स्कन्दिरौ शोषणे कसज गताविल्यस्य साहचर्य्यात् पतल्ज गत्यामित्यस्यैव ग्रहणम्। तेन पत्यङ्‌ श्ये इत्यस्य पापत्यत इत्येव अतएव यङन्तचलपतस्हवह: कीत्यस्य पापतिरिति स्वयमुदाहरिष्यति। वनीवच्यते इति हस्तुङ् इति न लोप: एवं सनीस्रस्यते दनीध्वस्यते बनीभ्रश्यते चनीकस्यते पनीपद्यते चनीस्कन्यते ॥ ८२६ ॥

जमश्च जपश्च जभश्च दहश्च दन्शश्च भन्जश्च पशश्च शप चेति तस्य। नुरित्यनुस्वार:। अन्यथा यंयम्यते रंरम्यते इत्यादावनुस्वारो न स्यात् निरवादन्ते। जंजन्यते इति वाल्वरयपे इत्यनेनानुस्वारस्य यम् वा पक्षेऽनुस्वारस्थिति:। एवं सर्वत्र पक्षे जाजायत इति खनसन जनामिति ङादेशे द्वित्वे घौंऽनित इति दीर्घ:। एवं कणृ आर्त्तस्वरे चंकण्यते शमुभिर्य्य शमे शंशम्यते। अदन्तस्य खेरिति किं तिम्स क्लेदने तेतिम्यते। गर्हितं जपति जंजप्यते एवं जंजभ्यते दंदह्यते दंदश्यते पुन: पुनरतिशयेन वा भनक्ति बंभज्यते एवं पंपश्यते शंशप्यते जंघन्यते इति खे ह्रोघ इति हस्य घ: ॥ ८२७ ॥

हनधातुर्घ्नी स्याद्वा यङि। जेघ्नीयते चंचल्यते इत्यादि चलजगतौ मव बन्धने ङिदयङ एषां खेर्नुम् वा। लययोरन्त: पाटात् वकारोऽव दन्त्य:। तेन कर्व गतौ इत्यस्य चाकर्व्यत इत्येव ॥ ८२८ ॥

## ८२९ । चरफलोरुच्चोङो न गुः ।

चर फलोः ६॥, उत् ।१।, च ।१।, उङः ६।, न ।१।, गुः १। ।

चरफलोः खेर्नुन् स्यात् डङ उकारस्य यङि, तस्य च न गुः । चञ्चूर्य्यते पम्फुल्यते ।

## ८३० । रीनृत्वतः ।

रीन् ।१।, ऋत्वतः ६। ।

ऋकारवतो धोः खेरीन् स्यात् यङि । नरीनृत्यते ।

## ८३१ । व्ये-स्वप-स्यमो जिः ।

व्ये स्वप-स्यमः ६।, जिः १। ।

एषां जिः स्यात् यङि । वेवीयते सोषुप्यते सेसिम्यते ।

## ८३२ । न वशः ।

न ।१।, वशः ६। ।

वष्टेर्जिर्न स्यात् यङि । वावश्यते ।

## ८३३ । चायः कीः ।

चायः ६।, की ।१। ।

चायतेः की स्यात् यङि । चेकीयते ।

---

खेरित्यनुवर्त्तते । यङ्‌ लुकि चंचूर्त्ति पंफुलति इत्यादौ प्रसक्तस्य गुणस्य निषेधार्थं न गुरिति वचनम् । चंचूर्य्यत इति व्यंनच तयोरिति दीर्घः ॥ ८२९ ॥

ऋत् अस्यस्त ऋत्वान् तस्य ऋत्वतः । ऋकारान्तस्य तु यङ् व्यक्ये चेत्यनेन ऋकारस्य रीभावे ततो द्विले खेरीन्न स्यात् । यङ्लुकि तु चरीकर्त्तीत्यादौ स्यादेव । नरीनृत्यते इत्यादौ गलाभावः प्रागुक्तः । जरीगृह्यते परीपृच्छते वरीवृश्च्यते वरीभृज्ज्यते एषु ग्रहस्वपाद्योरिति जौ कृते ऋकारवत्त्वात् खेरीन् ॥ ८३० ॥

ग्रहस्वपाद्योरिति सूत्रे स्वपादेः किति जिरिति नियमादप्राप्तौ विधिरयम् इष्टतो ह्यधिकाराणां प्रवृत्तिनिवृत्ती स्यातामिति खेरित्यस्यानुवृत्तिर्नास्ति । व्येञ् इतौ जि स्वपौष्लुशये स्यमुध्वनने एषां जिः स्याद् यङि ॥ ८३१ ॥

ग्रहादित्वात् प्राप्तौ निषेधः ॥ ८३२ ॥

८३४। घ्रा-ध्मोर्ङी।

घ्रा ध्मोः ६॥, ङी ।१।

जेघ्रीयते देध्मीयते।

८३५। शीङो ङय्येऽणौ।

शीङः ६।, ङय् ।१।, ये ७।, अणौ ७।।

शाशय्यते।

८३६। यङो लुक् वापो लुक् पं द्विखर्वादि च धूक्तन्तु वाऽनि तु नित्यं नोतः।

यङः ६।, लुक् ।१।, वा ।१।, अपः ६।, लुक् ।१।, पं १।, द्विः १।, खादि ।१। च ।१।, धूक्तं १।, तु ।१।, वा ।१।, अनि ७।, तु ।१।, नित्यं १।, न ।१।, उतः ५।।

यङो लुक् स्यात् वा, लुकि सति अपो लुक् पं द्वित्व खेर्गु-रित्यादि कार्य्यञ्च स्यात्, धुग्रहणोक्तन्तु वा स्यात्, अनि तु नित्यं लुक् स्यात् उदन्तास्त्वनि न स्यात्।

---

सुगमम् ॥ ८३३ ॥

ई इति लुप्तप्रथमैकम्। रामानन्दरामतर्कवागीशौ तु घ्राध्मोर्ङीति पाठं कल्प-यतः। वस्तुतस्तु, घ्राध्मोरी इत्येव पाठः। अज्मात्रादेशो येन विधिस्तदन्तस्येति न्यायादन्त्यस्य स्थाने इत्यर्थः। अथवा आघ्र आध्र औ घ्राध्मोरौ घ्राध्मौ तयोर्घ्राध्मोरिति समासः॥ ८३४ ॥

शाशय्यते इति यङि कृते द्विः। एवं यकि शय्यते यपि संशय्य क्यपि शय्या। अणौ किं? शेयम्॥ ८३५ ॥

यङ्लुक् करणात् त्यलोपे त्यलक्षणमिति न्यायेन प्राप्तत्यकार्य्यस्य लुकि न तदेति निषेधात् यङ् ङकये चर्क्रीति स्याद्यस्त्यृतो गुरित्यादि हसुङ्नोलोप इत्यादीनि न स्युः। तदन्तत्वेन विहितं कार्य्यं स्यादेव। तेन धातुसंज्ञा ठ्यामाम् च स्यात्। ततश्च यङन्तत्वेनैव द्वित्वे सिद्धे द्विरित्युपादानं ज्ञापयति यङो लुक्यपि तस्मिन् परे विहितं किमपि कार्य्यं स्यादिति। तेन यङ्लुकि ग्रहादेर्जिः स्यात्। ग्रहज्जरीगर्द्धिज्या जेजेति व्यध वेवेद्धीत्यादि। खादीनां यङि परे

बोभवीति बोभोति, बोभूतः बोभुवति। अबोभवीत् अबोभोत् अबोभूताम् अबोभुवन् अबोभूत् अबोभुवीत् बोभुवाञ्चकार।

वनीवञ्चीति वनीवङ्क्ति, वनीवक्तः, वनीवचति। जङ्गमीति जङ्गन्ति, जङ्गतः, जङ्ग्मति, जङ्गमति। जङ्गमीमि जङ्गन्मि जङ्गन्वः जङ्गन्मः। जङ्घनीति जङ्घन्ति, जङ्घतः, जङ्घ्नति जङ्घनति। चञ्चुरीति चञ्चूर्त्ति। चाखातः चङ्खन्तः चङ्खनति चङ्खनति। जञ्जनीति जञ्जन्ति जाजातः जञ्जन्तः जंज्ञति जञ्जनति। देदिवीति देदेति देद्योति, देद्यूतः देदितः देद्यूवः देदिवः। वेविच्छीति वेवेष्टि, वेविश्वः वेविच्छः।

---

विहितानां लुकि न तत्रेति निषेधादप्राप्तौ वचनम्। अनि तु इति पचादित्वात् कृतेऽनि परे नित्यं लुक् स्यात्। यथा नेनीयते नेन्यः लोलूयते लोलुवः। नीत इति कृस्रीदन्तात्तु पचादित्वादनि परे लुक् न स्यात्। यथा रोरूयते रोरूयः। बोभवीतीति मूलधातोर्जातमात्रस्य यङो लुकि द्विर्भावे खेर्गुणे बोभू इत्यस्य धातुसञ्ज्ञायां तिपि जातस्य शपो लुकि पिद्वस्येति ईमि गुणः। ईमोऽभावपक्षे गुण एव। बोभूत इति तसो ङित्त्वात् न गुणः। बोभुवतीति अन्तोऽद्व हेश्नुर्ध्वोरित्युव्। अबोभवीदित्यादि घ्या दीप् ईम् वा। अबोभुवन्निति अनुस्सिद्वेरित्यत्र भूवर्जनात् न उस्। बोभूवाञ्चकार इति यङ्लुक्य लोपे इति वक्ष्यमाणात् गुणनिषेधे श्नुध्वोरित्युव्। वनीवञ्चीतीत्यादि नीन् वन्चेत्यादिना खेर्नीन् पिद्वस्येति ईम्। ईमोऽभावपक्षे चुङिति कुङ् नस्यानुस्वारे तस्य ङः। वनीवक्त इति हसुङो लोप इति नलोपः। जङ्गमीति इत्यादि जमजपजभेत्यादिना खेर्नुन्। ईमोऽभावपक्षे मस्यानुस्वारे तस्य नः। जङ्गत इति वनतनाद्यनिमामिति मलोपः। जंग्मतीत्यादि धूक्तत्वात् हनगमित्युङ् लोपो वा। जंगन्मीत्यादि धोर्मोनः फम् वि इति मस्य नः। जंघन्तीत्यादि खेर्होग्रोर्घ्निति चेति हस्य घः पक्षे ईम्। जंघत इति वनतनेति न लोपः। जंघ्नतीत्यादि हनगमित्युङ् लोपो वा अन्तोऽद्व हेः। चंचरीति इत्यादि चरफलोरिति खेर्नुन् उङ उकारे तेनैव गुणनिषेधे पक्षे ईमोऽभावः। चाखात इत्यादि धूक्तत्वात् खनसनजनामिति ङादेशे जमन्तत्वाभावात् खेर्न नुन् घोऽनित इत्येव। पक्षे जमन्तत्वात् खेर्नुन्। आगमादेशयोरागमो विधिर्बलवानिति न्यायादादौ पिद्वस्येति ईमि खनसनजनामिति ङादेशाभावे चंखनीति

## ८३७ । ह्लाकः खेर्नं घं: ।

ह्लाकः ६।, खेः ६।, न ।१।, घं: १। ।

जह्लाति जह्रेति ।

## ८३८ । दन्शो नलोपो वा ।

दन्शः ६।, नलोपः १।, वा ।१। ।

दन्दष्टि दन्दंष्टि दन्दशीति दन्दंशीति ।

## ८३९ । जिर्नं वा ।

जिः १।, न ।१।, वा ।१। ।

सास्वपीति सास्वप्ति सोषोप्ति सोषुपीति ।

---

चंखनीषि चंखनीमि इति बोध्यम् । पक्षे चंखन्ति चंखंसीत्यादौ तु खनसनजनामित्यत्र वाशब्दस्य व्यवस्थावाचितया पिति झसे ङा न स्यादिति तत्रैव व्याख्यातम् । चंखनतीत्यादि अन्तोऽद् द्वे: हनगमित्युङ्लोपौ वा । जाजात इत्यादि खनसनेति ङा वा जंघ्नतीत्यादि अन्तोऽद्द द्वे: हनगमित्युङ्लोपौ वा । देद्योतीत्यादि आदौ द्वित्वे तिबाद्युत्पत्तौ च्छ्वोःशूटाविति ऊट् । खेर्गुः ऊटौ गुणः ऊटोऽप्राप्तिपक्षे य्वोर्लोप इति वलोपः गुणश्च । पक्षे ईमि नद्युऽङोऽचौति गुणनिषेधः । देद्यूतः इत्यादि सुगमम् । वेविच्छीति इत्यादि छोऽच इति द्वित्वे झप्झसोरिति छस्य चः पक्षे च्छ्वोः शूटाविति छस्य शे शक्राजेति षङ् ॥ ८३६ ॥

घोंऽनित इति प्राप्ते दीर्घस्य निषेधः । जह्रेति इति ईम् सन्धिः ॥८३७॥

दन्शो नलोपः स्याद्वा यङ्लुकि । अनीम् पक्षे दंदष्टि दंदष्टि दंदष्टि । ईमि तु दंदशीति दंदंशीति ॥ ८३८ ॥

केवलयङ्निमित्तको व्येखपस्यमौ जिः स यङ्लुकि पक्षे निषिध्यते । सकलङिन्निमित्तको ग्रह्लादेर्यौ जिः स तु यङो लुग्वेत्यत्र द्विरिति ज्ञापकात् नित्य एव स्यात् । सोषोप्तीति जौ कृते द्वित्वे षत्वम् । एवं सास्वपीति सोषुपीति व्येञ् वेवेति वाव्याति स्यमु सेसेन्ति सास्यन्ति ॥८३९ ॥

## ८४०। रीनो रिन्रनौ वा।

रीनः ६।, रिन्रनौ १॥, वा।१।।

रीनः स्थाने रिन्रनौ वा स्तो यङ्लुकि।

चरिकरीति चर्करीति चरीकरीति चरिकर्त्ति चर्कर्त्ति चरीकर्त्ति।

## ८४१। यङ्-लुक्-क्यलोपेऽरे न णु-वृ्ी।

यङ्-लुक्क्यलोपे ७, अरे ७, न।१।, णु-वृ्ी १॥।

बेभिदिता मर्मृजिता। अरे किं? बेभेत्ति मर्मार्ष्टि।

इति यङन्त पादः।

---

## चतुर्थः पादः—लिधुः।

## ८४२। लेः काम्यक् स्वेच्छायाम्।

लेः ५।, काम्यक्।१।, स्वेच्छायाम् ७।

लेः परः काम्यक् स्यात् आत्मेच्छायाम्। आत्मनः पुत्र-मिच्छति पुत्रकाम्यति।

---

रीनः स्थाने रीन उत्पत्तिस्थले। तेन ऋकारवती धीः खेरन्ते रिन्रनौ वा स्त इत्यर्थः। अन्यथा नित्वात् रीनोऽन्ते रिनरन् प्रसक्तिः स्यात्। ईम् पचे रिनि चरिकरीति रनि चर्करीति। अनिम् पचे रिनि चरिकर्त्ति रीनि चरीकर्त्ति। एवं वृत वरिवर्त्ति वृधू वरिवर्द्धीत्यादि॥ ८४०॥

यङो लुकि क्यस्य लोपे च णुवृ्ी न स्यातामेव। पुनः पुनरतिशयेन वा भेत्ता वेभिदिता अत्र न गुणः। पुनः पुनरतिशयेन वा मार्जिता मर्मृजिता अत्र मृजो-ऽकङिति इति न वृद्धिः। क्यलोपे तु समिधिता समिधक इत्यादौ न गुणः। दृष-दक इत्यादौ न वृद्धिः। जौमरास्तु यङ्लुगन्तानां जौ परे वृद्धेर्विकल्पं कृत्वा नेनाय-यति नेन्ययति बोभावयति बोभुवयति पापाचयति पापचयति इत्युदाहरन्ति॥८४१॥

इति यङन्तपादः।

---

मुक्तिमिच्छति मुक्तिकाम्यति इत्यादौ कित्वान्न गुणः। अन्यस्य अमुत्वादेव स्वस्य इच्छायाः प्राप्तौ स्वग्रहणं ज्ञापयति। कर्त्तुरिच्छायाः कर्म्मः पुत्रादिर्यदि अत्र-

## ८४३। क्योऽम्व्याद्यश्च।

क्यः १।, अम्व्यात् ५।, ई ।१।, षः १।, च।१।।

मान्त-व्य वर्जात् लेः क्यः स्यात् स्वेच्छायां तस्मिन्नवर्णं ई स्यात्।

ज्ञानीयति। [४२३] ओदौतोऽव्वदिति। गव्यति नाव्यति। [४२७] यङ् ड्यक्ये इति कर्त्रीयति [२५८] क्यङ्ख्यचौ च। गार्गीयति।

## ८४४। नलोपः क्य-ड्ये।

नलोपः १,। क्य ड्ये ७।।

राजीयति।

---

महदादिविशेषणात् सम्बन्धिपदाद्वा परो न स्यात्तदा तस्मात् काम्यक् स्यादित्यर्थः इति तेन महान्तं पुत्रमिच्छति गुरोः पुत्रमिच्छतीत्यादौ न स्यात्। समासे तु महापुत्र-काम्यति गुरुपुत्रकाम्यतीत्यादौ स्यादेवेति। दुर्गसिंहोऽप्येवं पुत्रकाम्यतीति पुत्र-मिति द्वितीयान्तात् काम्यक् ङेर्लुक् त्ये चेति त्ये परे ङेर्लुकि धातुसंज्ञायां तिप्-शपौ॥ ८४२॥

म च व्यश्च म्व्यं नास्ति म्व्यं यत्र सोऽम्व्यः तस्मात्। ई इति लुप्तप्रथमैकम्। मान्तव्यवर्जात् लेः क्यश्चकारात् काम्यक् च स्यात् स्वेच्छायाम्। क्ये सति अवर्णः ईः स्यादित्यर्थः। ज्ञानीयति एवं ज्ञानकाम्यति कन्यामिच्छति कन्यीयति कन्याका-म्यति। गामिच्छति गव्यति। ओदौतोऽव्वदिति क्यस्याव्वत्वे यत्वायवेत्यव्। क्ये परे दान्तत्वाभावाद्दावगोरिति नावः एवं नावमिच्छति नाव्यति। कर्त्रीयति कर्त्तारमिच्छति इति क्ये यङ्ड्यक्ये चद्रौ। गार्गीयति गार्ग्यमिच्छति इति क्ये क्यङ्ख्यचौ चेति ण्यस्य लोपः॥ ८४३॥

ननु ङेर्लुक् त्ये चेत्यनेन ङेर्लुकि दान्तत्वे नोलुप्फेधावित्यनेनैवेष्टसिद्धौ कथ-मिदं लुपि कृते तदाद्यविधिर्निषेधात् राजीयतीत्यादौ अवर्णस्य ईकारो न स्यादिति लोपविधानमिति चेत् तदा नोलुप्फेऽधौ क्यड्ये तु लोप् इति तत्रैवावदिष्यत्। ततश्च न लोपविधानं ज्ञापयति। विधूनां क्यड्ययोर्विरामविहितं किमपि कार्य्यं न स्यादिति। तेन विद्वांसमिच्छति विद्वस्यति अत्र स्रस्ध्वसेति न दङ्। सिद्ध

## ८४५। हसात्तयोर्वारि।

हसात् ५।, तयोः ६॥, वा ।१।, आरे ७।।

हसात् परयोः क्यङयोर्लोपः स्यात् वा आरे। समिधिता समिध्यिता। अब्यात् किम्? किंकाम्यति स्वःकाम्यति।

## ८४६। धनोदकाशन-वृशाश्वलेर्ग्रहपाना-न्न-जाभार्थ ङा डनङ् ङा सन् सनसनौक्ये न षः।

धन—लेः ६।, ग्रह—अर्थे ७।, ङा।१।, डनङ्।१।, ङा।१।, सन्।१।, सन्-असनौ १॥, क्ये ७।, न।१।, षः १।।

धनस्य ग्रहणे ङा, उदकस्य पाने डनङ् अशनस्य अन्ने ङा, वृशाश्वयोर्जाभे सन्, लेरर्थे काम्ये सन् असन् च स्यात् क्ये-सः षो न स्यात्।

धनायति उदन्यति अशनायति वृषस्यति अश्वस्यति दधिस्यति दध्यस्यति। ग्रहादौ किम्? धनीयति।

---

मिच्छति लिह्यति अत्र न हस्य ढः। दुहमिच्छति दुह्यति अत्र न हस्य घः। वाचमिच्छति वाच्यति अत्र न कुङ्। पुमांसमिच्छति पुंस्यति अत्र न संयोगान्तलुप्। नमः करोति नमस्यति अत्र न विसर्गः। सर्पिष्यति धनुष्यति इत्यादौ रङोऽभावे षत्वं स्यात्। गीर्य्यति धूर्य्यतीत्यादौ व्यंनच्तयोति दीर्घः स्यादेव। राजीयतीति राजानमिच्छतीति क्यः। एवं दण्डिनमिच्छति दण्डीयतीत्यादि॥ ८४४॥

समिधितेत्यादि समिधमैष्टा इति वाक्यम् एवं दृशदिता दृशद्यिता। हसात् किम्? ग्रानीयिता। आरे किम्? समिध्यति। द्वितीयसूत्रस्य प्रत्युदाहरणमाह। किंकाम्यति स्वःकाम्यति एवम् उच्चैःकाम्यति क्षणवत्काम्यतीत्यादिः॥ ८४५॥

वृषश्च अश्वश्च वृषाश्वम्। धनञ्च उदकञ्च अशनञ्च वृषाश्वञ्च लिश्चेति तस्य। ग्रहश्च पानञ्च अन्नञ्च जाभश्च अर्थश्च तत् तस्मिन्। ङा इति डनङ् इति ङा इति सन् इति चतुष्टयं लुप्तप्रथमैकम्। सन् च असन् च सनसनौ। धनस्य ग्रहणे काम्ये ङा उदकस्य पाने काम्ये डनङ्। अशनस्य अन्ने भक्षणे काम्ये ङा। वृषाश्वयोर्जाभे मैथुने काम्ये सन्। लेरर्थे काम्ये सन् असन् च स्यात् क्ये परे इति सर्वत्र

## ८४७। ढ डोपमानादाचारे क्यः।

ढ डोपमानात् ५।, आचारे ७, क्यः १।।

**ढात् डाच्चोपमानात् क्यः स्यात् आचारेऽर्थे।**

**शिवमिवाचरति शिवीयति विष्णुं, विष्णाविवाचरति विष्णूयति शिवे।**

## ८४८। घान्ङ्य-क्वौ स-लोपश्च वा गल्भ-क्लीव-होढात्तु मम्।

घात् ५।, ङ्य क्वौ १॥, स लोपः १।, च ।१।, वा ।१।, गल्भ-क्लीव-होढात् ५।, तु ।१।, मम् १।।

**घादुपमानादाचारेऽर्थे ङ्य क्वौ स्तः, सस्य च वा लोपः, गल्भादेस्तु क्वावपि मम्। कृष्ण इवाचरति कृष्णायते कृष्णति, स्वायते स्वति, स्वामास।**

---

शीज्यम्। धनं ग्रहीतुमिच्छति धनायति उदकं पातुमिच्छति उदन्यति अश्नाते एतत् अशनमन्नादि कर्म्मस्थनट्। अशनं भोक्तुमिच्छति अशनायति। वृषोऽव शुक्लः पुरुषः। तथाच शुक्ले मूषिके श्रेष्ठे सुकृते वृषभे वृषः इत्यमरः। वृषेण जम्भुमिच्छति वृषस्यति कामुकी अश्वेन जम्भुमिच्छति अश्वस्यति अश्वा। दधि इच्छति दधिस्यति दध्यस्यति क्ये परे इत्यनेनैव इच्छाप्राप्तौ पुनर्लरर्थे काम्ये इति वचनात् अतितृष्णायामित्यर्थः। एवं चीरस्यति लवणस्यति इति। अवर्णान्तस्य क्ये परे असनादेशो नेष्यते। अतितृष्णायामेवेति किम्? सामान्येच्छायां दधीयतीति। ग्रहादौ किम्? धनमिच्छति धनीयति उदकीयति अशनीयति वृषीयति अश्वीयति। क्य सः षो न स्यादिति लेः कृतस्य सनादेशस्य सः षो न स्यादित्यर्थः। तेन दधिस्यति मधुस्यतीत्यादौ न षत्वम् सर्पिष्यति धनुष्यतीत्यादौ षत्वं स्यादेव॥ ८४६॥

ढश्च डश्च ढडम्। ढडश्च तत् उपमानश्चेति। ढडोपमानं तस्मात्। शिवीयति विष्णुं शैवः। विष्णूयति शिवे वैष्णवः। घौऽजप्यरे इति दीर्घः। अधिकरणोपमानस्य क्ये न लोपो न स्यादिहि वक्तव्यम्। राजनीवाचरति राजन्यति गुरौ एवं चक्रिण्यति। अधिकरणोपमानस्य किम्? राजानमिवाचरति राजीयति गुरुम्।

[ ५८२ ] त्यान्तत्वात् ष्याम् पयायते पयस्यते। गल्भायते गल्भते।

## ८४९। भृशादेश्च्व्यर्थे वा त-स-लोपश्च।

भृशादेः ५।, च्व्यर्थे ७।, वा ।१।, त-स-लोपः १।, च ।१।।

**भृशादेश्च्व्यर्थे ड्यक्कौ वा स्तः, तस्मिन् त-स-लोपश्च। भृशायते भृशति भृशीभवति। चेतायते शश्वायते वेहायते।**

---

चीरोदीयन्ति सद्यः सकलजलधरा वासुकीयन्ति नागाः। कैलासीयन्ति शैलादिवि च दिविषदः शङ्करीयन्ति सर्वे। यौषाकीर्णे समन्तात् प्रसरति भुवने शुद्धकीर्त्तिप्रताने, मद्योषायाश्च भूषा न तदपि सहसा मौक्तिकीयन्ति तस्मात्। अत्र चीरोदीयन्तीत्यादयोऽपप्रयोगा इति केचित्। वस्तुतस्तु आत्मानं चीरोदमिवाचरन्तीति कर्म्मोपमानात् क्ये साध्याः। दर्शयते भवो अक्तानित्यादिवदेकस्य कर्तृकर्म्मत्वयोर्विरोधाभावात्॥ ८४७॥

समस्तस्यासमस्तेन नित्याकाङ्क्षेण सङ्गतिरिति न्यायादुपमानादित्यस्य घादित्यनेन सम्बन्धः। ड्ये कृते ङित्त्वादात्मनेपदं सिद्धमेव। क्कौ कृते तु गल्भादेरप्राप्तमात्मनेपदं विधीयते। कृष्णायत इति घोंऽज् य्यरे इति दीर्घः। एवं हरीयते विष्णूयते। यङ् ड्यक्ये चर्द्रौ पित्रीयते। ओदौतोऽज्वत् गव्यते नाव्यते। क्यङ् ङ्यच्चौचेति गार्गायते। नलोपः क्यड्ये राजायते दण्डीयते। पुंवत् स्त्र्युक्तपुंस्क इति विदुषीवाचरति विद्वस्यते सतीवाचरति सत्यते सुन्दरीवाचरति सुन्दरायते इत्यादि। कृष्णतीति कृष्ण इवाचरतीति क्विः. क इत् इकार उच्चारणार्थः। त्योवमावो लोप्यः। तदन्तत्वेन धातुसंज्ञायां तिप्शप्लोपोऽतोऽदेचोरिति कृष्णस्य अकारलोपः। एवं हरिरिवाचरति हरयति विष्णवति पितरतीत्यादि। अत्र वाशब्दस्य व्यवस्थावाचित्वादोजोऽप्सरो दुर्मनसां नित्यं सलोपः। ओजायते अप्सरायते दुर्मनायते। गल्भ इवाचति गल्भायते गल्भते क्लीवायते क्लीवते होड़ायते होड़ते। क्विप्रयोगो यथा, वादी मूकति रङ्कति क्षितिपति वैश्वानरः शीतति, क्रोधी शाम्यति दुर्जनः सुजनति चिप्रानुगः खञ्जति। गर्वी खर्वति सर्वविच्च जड़ति त्वन्मन्त्रणायन्त्रितः, श्रीनित्ये वगलामुखि प्रतिदिनं कल्याणि तुभ्यं नमः। इति॥ ८४८॥

च्व्यर्थेऽभूततद्भावे। तस्मिन्निति ङ्य क्कौ च परे तसोर्लोपो नित्य इत्यर्थः। अभृशो

## ८५०। डाज्-लोहितादेः पञ्च।

डाच् लोहितादेः ५।, पं १।, च।१।।

डाजन्तात् लोहितादेश्च च्व्यर्थे ञ्यक्वौ वा स्तः पञ्च। पटपटायते पटपटायति पटपटाति पटपटास्यात्। लोहितायते लोहितायति लोहितति लोहितोस्यात्। धर्म्मायते धर्म्मायति धर्म्मति धर्म्मीस्यात्।

## ८५१। शब्द-सुख-कष्टादेः कृति-वेद-पापे ञ्यः।

शब्द सुख कष्टादेः ५।, कृति वेद पापे ७।, ञ्यः १।।

शब्दादेः कृतौ सुखादेरनुभवे कष्टादेः पापार्थे प्रवृत्तिरित्य-

---

भृशी भवतीति ञ्ये भृशायते क्वौ भृशति पक्षे च्वौ भृशीभवति। एवं चेतायते चेतति उभयत्रानेन सलोपः। पक्षे चेतीभवति मनःश्चक्षुश्चेत इति सलोपः। शश्वायते शश्वति उभयत्रानेन तलोपः। पक्षे च्वौ शश्वद्भवति। वेहायते। वेहति उभयत्रानेन तलोपः पक्षे च्वौ वेहद्भवति। भृशादिश्च भृशशीघ्रौ चपलोन्मनसौ च उत्कः सुमनो दुर्मनसौ च। ओजोवर्चश्चातिमनश्च हृदय तेजः शुचि वेहच। पण्डित शश्वत् प्रतीप डाची लोहित धर्म्मावथ निद्रा च। वर्म्म च नीलस्तदनुरूपः च मन्दः फेनोऽव्यय करुणा च। हरितो भद्रोऽपि च मल्लादिस्त्रिंशद्गिर्गदितो हि भृशादिः। अत्र ये निद्रादयः शब्दास्ते यद्यपि धर्म्मवचनास्तथापि शब्दशक्तिस्वभावात् धर्म्मिवचना एव। तेन निद्रायते जनः अनिद्रावान् निद्रावान् भवतीत्यर्थः॥८४९॥

यद्यपि सम्पद्यति कृभ्वस्तिषु परेष्वेव डाच् विहितस्तथापि डाजन्तात् ञ्यक्विविधानसामर्थ्यात् ञ्यक्विविषयेऽपि डाच् स्यात् इति। पञ्चेति चकारेण ङित्त्वात् आत्ममात्मनेपदमनुकृष्यते। अपटत् पटत् भवतीति वाक्ये ञ्यविषये डाचि द्विर्भावादौ पटपटा इति स्वरूपात् ञ्यः पटपटायते पटपटायति। क्वौ तु पटपटाति। पटपटा स्यादिति ञ्यक्वोरप्राप्तिपक्षे च्विः डाजन्तस्याव्ययत्वात् च्वौ परे अकारस्य न ईकारः। एवम् अलोहितो लोहितो भवतीति इत्यादि वाक्यम्। लोहितादिश्च। भृशादिशेषा लोहितप्रभृतयो द्वादश॥ ८५०॥

आदिशब्दस्य त्रिभिः सम्बन्धः। वेद इति विदलमताविव्यस्य घञि रूपम्।

स्मिन्नर्थे ङ्यः स्यात्। शब्दं करोति शब्दायते, वैरायते। सुख-मनुभवति सुखायते, दुःखायते। कष्टं कर्म करोति कष्टायते।

८५२। वाष्पोष्मफेनधूमादुद्वान्तौ।

बाष्प—धूमात् ५।, उद्वान्तौ ७।।

वाष्पायते उष्मायते फेनायते धूमायते।

८५३। रोमन्थाच्चर्वणे।

रोमन्थात् ५।, चर्वणे ७।।

रोमन्थायते गौः।

८५४। नमस्तपोवरिवःकण्ड्वादिभ्यः क्यः कृतौ।

नमस्-कण्ड्वादिभ्यः ५॥, क्यः १।, कृतौ ७।।

नमस्करोति नमस्यति, तपस्यति वरिवस्यति, कण्डूयति कण्डूयते, चित्रीयते, महीयते, ह्रीणीयते।

---

कष्टं कर्म करोतीति कर्त्तुं प्रवर्त्तत इत्यर्थः। शब्दादिषु शब्द वैर प्रीतिपाव कन्दनीहारदुर्दिनाः। कलहः सुदिनं मेघः कोटा अट्टा शटा तथा। सोटा मोटा च पोटा च प्रुष्टा शब्दादिरीरितः। सुखं दुःखञ्च तृप्तञ्च कृपणः करुणस्तथा। प्रतीपालीकसोढ़ाम्रकृच्छ्रांशाद्याः सुखादयः। कष्टञ्च सत्त्रो गहनञ्च कक्षः कृच्छ्रञ्च कष्टादिषु पञ्च शब्दाः ॥८५१॥

एभ्योः ङ्यः स्यादुद्वान्तौ। उद्वान्तिरूर्द्ध्वनिःसारणम्। वाष्पमुद्वमति वाष्पायते केचिदिह धूमं न पठन्ति। किन्तु दिशो धूमायन्ते इति महानाटकम् ॥८५२॥

रोमन्थात् ङ्यः स्यादुद्गीर्य्य चर्वणेऽर्थे। रोमन्थायते गौः उद्गीर्य्य चर्वयतीत्यर्थः। हनुचलन एवेति दुर्गसिंहः तेन कीटो रोमन्थं वर्त्तयतीत्यत्र न स्यात् ॥८५३॥

नमस् च तपस् च वरिवस् च कण्ड्वादिश्च ते तेभ्यः। एभ्यः क्यः स्यात् कृतौ अर्थे। वरिवस्यतीति उपास्त इत्यर्थः। कण्ड्वादिश्च कण्डूञ् मन्तूञ असु वल्गु, महीङ चितीङ ह्रीणीङ घेट लोप तिरस् उरस् उषस् इषस् तपस् विवस् कुसुम मगध मेधा सुख दुःख चरण भरण दूषण अधर चरम सपर भिषज् भिषाक् इष्टुप् ईष ऊष अहम्भ एला मेला वेला केला खेला उत्तम पस्पश इत्यादिराकृतिगणः।

### ८५५। लेः कृत्याख्याने ञिः।

लेः ५।, कृति आख्याने ७।, ञिः १।।

**लेः परो ञिः स्यात् कृतावाख्याने च।**

**प्रश्नं करोति आचष्टे वा प्रश्नयति, ऊढ़यति औडिढ़त्। औजिढ़दित्येके। [ ४६८ ] लुङ् मद्वद्विनामिति। ईशन्तमाचष्टे ईशयति। स्रुग्वन्तमाचष्टे स्रुचयति। स्रग्विनं वा स्रग्वन्तमाचष्टे स्रजयति।**

---

कण्डूयति कण्डूयते मन्तूयति मन्तूयते। असु वल्गु, एतावपि उभयपदिनाविति केचित्। महीयते चिरीयते क्षीणीयते। अन्ये परस्मैपदिनः॥८५४॥

पृथग्योगात् कृताविल्यस्योपादानाच्च नमस्तपो वरिव इत्यादेरनुवृत्त्यभावे प्रकरणबलादेव लेः प्राप्तौ लेरिति ग्रहणं ज्ञापयति ञौ विरामविहितकार्य्यं न स्यादिति। तेन त्वचं गृह्णाति त्वचयतीत्यादौ न कुङादिः। प्रश्नयतीति ञौसंश्डिदिति डित्वात् टिलोपे प्रश्नि इत्यस्य धातुसंज्ञायां तिबादिः ऊढ़यतीति वहधातोः क्तिः ऊढ़िः ऊढ़िमाचष्टे इति ञौ डित्वात् टिलोपः। ऊढ़िमाख्यातवानिति ञौ टिलोपे ऊढ़ि इति स्थिते दि अमागमद्वयम् अङ् नाजन्तादेरिति ऊकारं हित्वा ढि इत्यस्य द्वित्वे झभखथ इति ढस्य डत्वे ञेर्लोपे औडिढ़दिति। एके पण्डिता असिद्धं वहिरङ्गमन्तरङ्गे इति न्यायादन्तरङ्गे द्वित्वे कर्त्तव्ये वहधातोः क्तिप्रत्यये हस्य ढत्वादिकं सर्वमसिद्धं मत्वा क्तेरिकारेण सहितस्य हि इत्यस्य द्वित्वे झभखथेति हस्य जत्वे औजिढ़दित्युदाहरन्तीत्यर्थः। एवं वहधातोः क्तः ऊढ़ः तमाख्यातवान् इत्यत्र स्वमते औडिढ़त् तन्मते क्तस्य अकारेण सहितस्य द्वित्वे औजढ़दिति तन्मन्दं भाष्यकारविरुद्धत्वादनेनोपेक्षितमिति ईशन्तमिति ईशलङ् ऐश्वर्य्ये ईष्टे इति क्विप् ईट्। ईट् अस्त्यस्येति मतौ शक्राजेति षङि षोड़ः फे झप् झसोरिति डस्य टत्वे त्ये इत्यनेन टस्य णः। ततो ञौ मतोर्लुकि या यस्य लिङ्गस्य पूर्वपूर्वा प्रकृतिः सैव तस्येति पुनस्तालव्यशकारोऽवस्थितः। एवं स्रुग्वन्तमाचष्टे स्रुचयति स्रग्विनमाचष्टे स्रजयति। किञ्च लुङ्मद्वद्विनामिति बहुवचनस्य गणार्थत्वादनट् क्तवतु घञ् घल् आनङ्युक्तोप् एषां लुक् स्यादाख्याने ञौ। यथा राजागमनमाचष्टे राजानमागमयति सीताहरणमाचष्टे सीतां हारयति पचनमाचष्टे पाचयति। गतवन्तमाचष्टे

## ८५६। श्वेताश्वाश्वतरगालोड़िताह्वरकस्याश्वतरेतक-लोपः।

श्वेताश्व—आह्वरकस्य ६।, अश्व—कलोपः १।।

श्वेताश्वमाचष्टे श्वेतयति, अश्वयति। गालोड़यति आह्वरयति।

## ८५७। नाप्सत्यार्थ-वेदैकाजतः।

नाप्‌ ।१।, सत्यार्थ वेदैकाजातः ६।।

सत्यादेरेकाचोऽकारान्तस्य च णौ नाप्‌ स्यात्‌, न इत्‌। सत्यापयति अर्थापयति वेदापयति स्वापयति। [४७०] वाढ़ान्तिकेति साधादयः, साधयति। प्रशस्यमाचष्टे श्रापयति।

---

गमयति वादितवन्तं प्रयोजितवान्‌ अवीवदत्‌। बलिबन्धमाचष्टे बलिं बन्धयति। कंसबधमाचष्टे कंसं घातयति। ब्रह्माणीमाचष्टे ब्रह्मयति केचित्तु श्येन्यादेर्णौ पुंवद्भावं विधाय श्येनीमाचष्टे श्वेतयति एवम्‌ एणीम्‌ एतयति हरिणीं हरितयति भरिणीं भरितयति इत्याहुः। एवं आशिषं ददात्याचष्टे वा आशिषयति सम्यक्‌ करोति-सम्यचयतीत्यादयः साध्याः ॥८५५॥

श्वेताश्वमाचष्टे श्वेतयति, अश्वतरमाचष्टे अश्वयति गालोड़ितमाचष्टे गालोड़यति आह्वरकमाचष्टे आह्वरयति ॥८५६॥

एकाचासौ अच्चेति एकाजत्‌। सत्यश्च अर्थश्च वेदश्च एकाजच्च तत्‌ तस्य। सत्यमाचष्टे इत्यादि साध्यम्‌। साधादय इति वाढ़माचष्टे साधयति। एवं अन्तिकं नेदयति स्थूलं स्थवयति दूरं दवयति दूरयतीत्यपि केचित्‌। युवानं यवयति युवाल्पौ कन्‌ वेति पक्षे कनयति। क्षिप्रं क्षेपयति क्षुद्रं क्षोदयति प्रियं प्रापयति स्थिरं स्थापयति स्फिरं स्फापयति उरुं वरयति गुरुं गरयति बहुलं वंहयति तृप्रं त्रपयति दीर्घं द्राघयति ह्रस्वं ह्रसयति वृद्धं वर्षयति ज्यौवृद्धश्चेति पक्षे ज्यापयति। वृन्दावकं वृन्दयति। तृन्लोप्यः कर्त्तारं कारयति प्रशस्यं श्रापयति पक्षेज्यौवृद्धश्चेति ज्यापयति। पृथुम्रदित्यादि पृथुं प्रथयति मृदुं म्रदयति कृशं क्रशयति भृशं भ्रशयति दृढं द्रढ़यति परिवृढ़ं परिव्रढ़यति। युवाल्पौ कन्‌ वेति अल्पं कनयति अल्पयति बहोर्णौ भूरिति वक्तव्यं बहुमाचष्टे भावयति ॥८५७॥

## ८५८ । ञि: कल्यादे: ।

ञि: १।, कल्यादे: ५। ।

कल्यादेरर्थविशेषे ञि: स्यात् । कलिं गृह्णाति कलयति, अचकलत् । हलयति, अजहलत् । कृतयति अचीकृतत् अचकृतत् । वर्णयति, त्वचयति तूस्तानि विनिहन्ति वितूस्तयति । वस्त्रं संच्छादयति संवस्त्रयति । वर्मणा संनह्यति संवर्मयति । चूर्णैरवध्वंसते अवचूर्णयति । हस्तिना अतिक्रामति अतिहस्तयति वीणया उपगायति उपवीणयति । तूलैरवकुष्णाति अवतूलयति । श्लोकैरुपस्तौति उपश्लोकयति । सेनया अभिमुखं याति अभिषेणयति, अभिषिषेणयिषति । रूपं पश्यति रूपयति । लोमान्यनुमार्ष्टि अनुलोमयति । हस्तौ निरस्यति अतिहस्तयति पुच्छमुत्क्षिपति उत्पुच्छयते । भाण्डानि संचिनोति संभाण्डयते । चीवरं संमार्जयति परिदधाति वा सञ्चीवरयते भिक्षु:

---

कलिहलौ कामधेनू सर्वार्थवाचकत्वादिति प्राञ्च: । निपातो ह्यर्थविशेषे तदेव विवृणोमि । कलिं गृह्णातीत्यादि । अचकलदिति अकालिहलेरिति निषेधान्न सन्वद्भाव: । अचीकृतदित्यादि लाघेकाचीरिति संन्वद्वा त्वचयतीति पर्य्यन्तं गृह्णातीति वाक्यम् । वितूस्तयतीति केशान् विजटीकरोतीत्यर्थ इति विलोचन: । तूस्तं पापमिति केचित् । वस्त्रं परिदधातीत्यर्थेऽपि संवस्त्रयति । वर्म्मणा कवचेनेत्यर्थ: । अवध्वंसते आक्षिपतीत्यर्थ: । अतिहस्तयतीति हस्तिनेत्युपलक्षणम् अर्वतातिक्रामति अत्यर्वयतीत्यपि स्यात् । सेनया अभिसम्मुखं याति अभिषेणयतीति णीक इति षत्वे षृर्णं इति णत्वम् । अभिषिषेणयिषतीति अभिषेणयितुमिच्छतीति सन् वसोऽस्येतीमि द्वित्वादौ दशस्यादेरिति द्वयो: षत्वम् । हस्तौ निरस्यति अतिहस्तयति नि:क्षिपतीत्यर्थ: पुच्छभाण्डचीवरेभ्य आत्मनेपदं वक्तव्यम् । एवं व्रताद्भोजनाभोजनयो: परयो: । पय: व्रतयति भुङ्क्त इत्यर्थ: । वृषलान्नं व्रतयति न भुङ्क्त इत्यर्थ: । एवं वाष्पेण छिनत्ति संवाष्पयति । पाशाद्विमोचयति विपाशयतीत्यादि ॥ ८५८ ॥

## ८५९। लिधोर्यथेष्टं द्विः कण्ड्वाद्यजाद्योस्तु तृतीयानाद्योः।

लिधोः ६।, यथेष्टं २।, द्विः १।, कण्ड्वादि अजाद्योः ६॥, तु ।१।, तृतीयानाद्योः ६॥।

पुपुत्रीयिषति पुतित्रीयिषति पुत्रीयियिषति पुत्रीयिषिषति पुपुतित्रीयियिषिषति। कण्डूयियिषति, अशिश्वीयिषति।

इति लिधुपादः।

इति तृतीयः चतुर्गणाध्यायः।

अथ त्याद्यन्ताध्यायः।

## प्रथमः पादः—पम्।

## ८६०। घे पं परानु कृ—प्रत्यभ्यति·चिप·प्रवह परिमृषव्यापरिरमो वा तूपरमः।

घे ७।, पं १।, परा-अनु-कृ, प्रति-अभि अति चिप, प्र वह, परि-मृष वि आ-परिरमः ५।, वा ।१।, तु ।१।, उप रमः ५।।

एभ्यः पं स्यात् घे, उप रमस्तु वा

---

लिधुरिति आदौ लिः पश्चात् धुरित्यर्थः, नाम धातुरिति यावत् यथेष्टमिति कदाचित् प्रथमस्य कदाचित् द्वितीयस्य कदाचित् तृतीयस्य कदाचित् सर्व्ववर्णानां युगपदित्यर्थः। कण्ड्वादेस्तु तृतीयस्यैव। अजादेस्तु आदिवर्णं हित्वा द्वितीयस्य तृतीयादेर्वेत्यर्थः। पुत्रमिवाचरति शिष्यमिति क्यः ततः पुत्रीयितुमिच्छतीति सन् वसोऽरस्येतीमि पुत्रीयिष इत्यस्य पुकारादेर्द्विले पुपुत्रीयिषतीत्यादि। कण्डूं करोतीति नमोऽस्त्वपीवरिव इत्यादिना क्यः ततः कण्डूयितुमिच्छतीति सनि इमि कण्डूयिष इति स्थिते यि इत्यस्य द्विलम्। एवं मस्तूयियिषति असूयियिषतीत्यादि। अश्वमिवाचरति गामिति क्यः ततोऽश्वीयितुमिच्छतीति सनि इमि अश्वीयिष इति स्थिते द्वितीयस्य तृतीयस्य वा॥ ८५९॥

इति लिधुपादः।

---

परानुभ्यां कृः परानुकृः। प्रत्यभ्यतिभ्यः चिपः प्रत्यभ्यतिचिपः प्रादवहः प्रवहः।

पराकरोति, अनुकरोति, प्रतिक्षिपति प्रवहति, परिमृष्यति, विरमति आरमति परिरमति, उपरमति उपरमते विष्णुः ।

८९१ । कम्पान्नार्थेङ्बुधयुधप्रुद्रुस्रुजननशोऽञिप्राणिघाढाच्च ञेः ।

कम्प—नशः ५।, अञि-प्राणिघाढात् ५।, च ।१।, ञेः ५।।

चलयति भोजयति अध्यापयति बोधयति योधयति प्रावयति द्रावयति स्रावयति जनयति नाशयति, शाययति कृष्णं यशोदा। प्राणिघात् किम्? शोषयते शालिम्। अढ़ात् किम्? भक्तिं कारयते। अञौ किम्? रूपयते हरिः।

इति पपादः ।

---

परेर्मृषः परिमृषः। व्यापरिभ्यो रम् व्यापरिरम्। ततः परानुकृञ्च प्रत्यतिक्षिपश्च प्रवहश्च परिमृषश्च व्यापरिरम् चेति तस्मात्। कृ अदङु कृतौ क्षिप शञौ नुदि वहे ञौ प्रापणे मृषञ चान्तौ चतुर्णां ञित्वात् ञिञ्ञान्तपिवेत्यादिना फलवत्कर्त्तरि प्राप्तव्यात्मनेपद न स्यात्। अन्यथा एतद्विधानमनर्थकं स्यात्। एवं रमूङञौ क्रीड़े इत्यस्य ङित्त्वेऽप्यात्मनेपदं न स्यादिति। यैर्योगे द्वितीया विहिता तेषामन्वादीनामिह न ग्रहणमिति कुलचन्द्रः। तेन हचमनुकरोति अनुकुरुते। हचमभिक्षिपति अभिक्षिपते इत्यादावुभयपदमेव। तुदञौ श व्यथे इत्यस्याज्ञाषायां परस्मैपदमेवेति केचित् ॥ ८९० ॥

कम्पश्च अन्नश्च कम्पान्ने तेऽर्थौ ययोस्तौ कम्पान्नार्थौ कम्पान्नार्थौ च इङ् च बुधश्च युश्च द्रुश्च स्रुश्च जनश्च नश च तस्मात्। प्राणी घो यस्य स प्राणिघः। नास्ति ढं यस्य सोऽढ़ः।, प्राणिघश्चासौ अढ़श्चेति प्राणिघाढ़ः। अञौ प्राणिघाढ़ः अञिप्राणिघाढः तस्मात्। एभ्यो ञ्यन्तेभ्यः पं स्यात् घे वाच्ये। किञ्च फलवत्कर्त्तर्य्यपि आत्मनेपदं न स्यादिति बोध्यम्। चलयति जनयतीति घटादित्वात् ह्रस्वः। शाययति कृष्णमिति कृष्णः शेते अत्र प्राणिकर्तृकोऽकर्म्मकः। ततो ञ्यन्तात् परस्मैपदम्। शोषयते शालिमिति शालिः शुष्यतीति अप्राणिकर्तृकोऽकर्म्मकः। तेन ञ्यन्तात् परस्मैपदनियमाभावे उभयपदम्। भक्तिं कारयत इति जनो भक्तिं करोतीति सञ्यन्त-

## द्वितीयः पादः—मम् ।

**८६२ । वि-परा-जि परि-व्यव-क्री नि-वि-शानुप्रच्छो मम् ।**

वि—प्रच्छः ५।, मम् १। ।

एभ्यो मं स्यात् घे । विजयते पराजयते, परिक्रीणीते विक्रीणीते अवक्रीणीते निविशते, आनुते आपृच्छते ।

**८६३ । आ दाञोऽस्वप्रसारे ।**

आ दाञः ५।, अस्वप्रसारे ७। ।

आदत्ते । स्वप्रसारे तु, व्याददाति मुखं कृष्णः ।

---

दशायां सकर्म्मकत्वात् ञान्तात् परस्मैपदनियमाभावे उभयपदम् । रूपयते हरिरिति रूपत् क तत्कृतौ नित्यचुरादित्वादञान्तदशाया असम्भवात् विवचावशादकर्म्मकत्वे प्रेरणञान्तत्वेऽपि परस्मैपदनियमाभावादुभयपदम् ॥ ८६१ ॥

इति प-पादः ।

---

विपराभ्यां जिः विपराजिः । परिव्यवेभ्यः क्रीः परिव्यवक्रीः । नेर्विंशः निविशः । आङो नुप्रच्छौ आनुप्रच्छौ । ततो विपराजिश्च परिव्यव क्रीश्च निविशश्च आनुप्रच्छौ चेति तस्मात् । घे पमित्यतो घे इत्यनुवर्त्तते परिक्रीणीते इति डुक्रीञग द्रव्यविपर्य्यये इत्यादि ञानुबन्धानामात्मनेपदविधानमफलवत्कर्त्तर्य्यात्मनेपदप्राप्त्यर्थम् । एवं सर्वत्र । निविशते इति शौ विशप्रवेशे तुदादित्वात् शः । अनुत इति णुल स्तुतौ प्रणौ लुक् । आपृच्छत इति प्रच्छौ श ज्ञीप्से ग्रहादित्वात् जिः । केवलस्य नेर्ग्रहणात् प्रणिविशतीत्यादौ न स्यात् ॥ ८६२ ॥

स्वं स्वाङ्गं स्वस्य प्रसारो विस्तारणं स्वप्रसारः । न स्वप्रसारोऽस्वप्रसारः । आङ्पूर्वाद्दाञो मं स्यात् घे नतु स्वप्रसारे । आदत्ते गृह्णातीत्यर्थः । स्वप्रसारे तु व्याददाति मुखं कृष्णः विस्तारयतीत्यर्थः ॥ ८६२ ॥

## ८६४। आ-गमेः चान्तौ।

आ-गमेः ५।, चान्तौ ७।

आगमयते कालम्।

## ८६५। पर्य्यन्ववाङः क्रीड़ः।

परि-अनु-अव आङः ५।, क्रीड़ः ५।

परिक्रीड़ते अनुक्रीड़ते अवक्रीड़ते आक्रीड़ते।

## ८६६। समोऽकूजने।

समः ५।, अकूजने ७।

संक्रीड़ते। कूजने तु, संक्रीड़ति चक्रम्।

## ८६७। क्रोऽपाद्धर्षान्नवासेच्छे चतुष्पाद्वौ सुम् च।

क्रः ५।, अपात् ५।, हर्षान्नवासेच्छे ७।, चतुष्पाद्वौ ७।, सुम् ।१।, च ।१।

अपास्किरते मत्तः कुक्कुटः श्वा वा। अन्यत्र मल्लोऽपकिरति गजोऽपकिरत्यम्भः।

---

गमिर्ज्यन्तः आङ्पूर्वाद्गमयतेर्वे मं स्यात् चान्तौ। चान्तिः प्रतीक्षणम्। आगमयते कालं प्रतीक्षते इत्यर्थः। चान्तौ किम्? गामागमयति आनयतीत्यर्थः ॥८६५॥

पर्य्यादिपूर्वात् क्रीड़तेर्घे मं स्यात्। पर्य्यादीनामुपसर्गाणामेव ग्रहणात् माणवकमनुक्रीड़तीत्यत्र न स्यात्। अनुरिह सहार्थः ॥८६५॥

सम्पूर्वात् क्रीड़तेर्मं स्यात् घे, नतु कूजने। कूजनमव्यक्तशब्दः ॥ ८६६ ॥

अन्नञ्च वासश्च अन्नवासौ अन्नवासयोरिच्छा अन्नवासेच्छा हर्षेण अन्नवासेच्छा यस्य स हर्षान्नवासेच्छः तस्मिन्। चतुष्पाच्च विः पक्षी च चतुष्पाद्वि: तस्मिन् हर्षहेतुकभक्षणेच्छावति चतुष्पदि पक्षिणि वा कर्त्तरि। हर्षहेतुकवासेच्छावति चतुष्पदि पक्षिणि वा कर्त्तरि सति अपात्किरतेर्मं स्यात् तस्य सुम् चेत्यर्थः। अपस्किरते मत्तः कुक्कुटो भक्षार्थी हर्षाद्भूमिमालिखतीत्यर्थः। अपस्किरते मत्तः श्वा वासार्थी हर्षाद्भूमिमालिखतीत्यर्थः। अत्रालिखनार्थ एवेति बोध्यम्। चतुष्पाद्वौ घे किम्? मल्लोऽपकिरति। हर्षान्नवासेच्छे इति किम्? गजोऽपकिरत्यम्भः। चकारस्यान्वाचयशिष्टत्वादात्मनेपदाभावेऽपि अनड्वादौ सुम् स्यात्। अपस्करणम् अपस्कारः ॥ ८६७॥

## ८६८। शपथाशी-र्गत्यनुकारे शप-नाथ-हृञः।

शपथ आशी-र्गत्यनुकारे ७।, शप-नाथ हृञः ५।।

कृष्णाय शपते गोपी। मोक्षाय नाथते मुनिः। पैतृक-मनुहरते अश्वः।

## ८६९। प्रतिज्ञानिर्णयप्रकाशे सं-प्रव्यवाच्च स्थः।

प्रतिज्ञानिर्णय-प्रकाशे ७।, सं प्र-वि-अवात् ५।, च।१।, स्थः ५।।

नित्यं शब्दमातिष्ठते। त्वयि तिष्ठते विवादः। रामाय तिष्ठते सीता। संतिष्ठते प्रतिष्ठते वितिष्ठते अवतिष्ठते। समस्थित।

---

शपौ आक्रोशे इत्यस्मात् शपथे नाथृङ्तापाशिषोः ऐश्वर्येऽर्थने इत्यस्मादाशिषि हृञ हृत्यामित्यस्माद्गत्यनुकारे मं स्यात् घे वाच्ये। शपथः पुत्रादिशरीरस्पर्शनादिना मिथ्यानिरसनम्। कृष्णाय शपते कृष्णस्य शरीरं स्पृष्ट्वा मया एतत् न कृतमिति दिव्यं करोतीत्यर्थः। इति केचित्। वस्तुतस्तु जौमरादेकवाक्यतार्थं गोपी कस्यचित् शरीरं स्पृष्ट्वा मया एतत् न कृतमिति दिव्येन कृष्णं तोषयितुमिच्छति स्वाभिप्रायं विज्ञापयितुमिच्छति वा इत्येवं व्याख्येयम्। सख्यः शपामि यदि किञ्चिदपि स्मरामि इति वाचा शरीरस्पर्शनाभावान्नात्मनेपदम्। प्रतिवाचमदत्त केशवः शपमानाय न चेदिभूभृते इति माघे। शपमानायेति शपथादन्यत्र नियमाभावादुभयपदप्राप्तौ शानः। आशीरिष्टार्थाविष्करणं मोक्षाय नाथते मोक्षो मे भूयादित्याशास्ते इत्यर्थः। अस्य ङित्वेऽपि आशिषोऽन्यत्र परस्मैपदमेव माणवकमुपनाथति याचयतीत्यर्थः। गत्यनुकारो गतिसदृशीकरणं पैतृकमनुहरतेऽश्वः पितृवद्गच्छतीत्यर्थः। पैतृकमिति पितुरागतमिति कालवृद्धिः। गतिग्रहणाद्रूपाद्यनुकारे तु न स्यात् पितरमनुहरति रूपेण पुत्रः ॥८६८॥

प्रतिज्ञादावर्थे तिष्ठतेर्मं स्यात् घे। सम्प्रव्यवेभ्यः परात्तिष्ठतेर्यस्मिन् कस्मिन्नपि अर्थे मं स्यात् घे। इत्यर्थद्वयं चकारात्। प्रतिज्ञा अङ्गीकारः। निर्णयो निश्चयः। प्रकाशः स्वाभिप्रायप्रकटनम्। नित्यं शब्दमातिष्ठत इति नित्यमिति शब्दस्य विशेषणं शब्दो नित्य इति प्रतिज्ञां करोतीत्यर्थः। त्वयि तिष्ठते विवाद इति निर्णयः। त्वयि न स्तिष्ठते प्रीतिस्तुभ्यं तिष्ठामहे वयमिति भट्टिः। अस्माकं प्रीतिस्त्वयि

## ८७०। उद्दोऽनूर्द्धेहे।

उदः ५।, अनूर्द्धेहे ७।।

मुक्तावुत्तिष्ठते। अन्यत्र आसनादुत्तिष्ठति। ग्रामाच्छत-मुत्तिष्ठति।

## ८७१। मन्त्रेणोपात्।

मन्त्रेण ३।, उपात् ५।।

गायत्र्या उपतिष्ठते अर्कम्।

## ८७२। मैत्राध्वसङ्गाराधे।

मैत्री-अध्व-सङ्ग-आराधे ७।।

सन्तमुपतिष्ठते साधुः। गङ्गामुपतिष्ठते पन्थाः। पति-मुपतिष्ठते नारी। विष्णुमुपतिष्ठते वैष्णवः।

---

तावन्यत्रेति निर्णयः अतएव तव सम्बन्धे स्वाभिप्रायप्रकाशं कुर्म्म इत्यर्थः। रामाय तिष्ठते सीतेति स्थित्या रामं तोषयितुमिच्छति स्वाभिप्रायं विज्ञापयितुमिच्छति इत्यर्थः इति जौमराः। रामायेति यस्मै दित्सेति चतुर्थी। समस्थितेति स्थादी-ङरिति ङिः ॥८६९॥

न ऊर्द्धम् अनूर्द्धम् अनूर्द्धे ईहा चेष्टा यस्य सोऽनूर्द्धेहः तस्मिन्ननूर्द्धेहे इति घस्य विशेषणम्। अनूर्द्धविषये चेष्टमाने कर्त्तरि वाच्ये उदः परात् स्थो मं स्यादि-त्यर्थः। मुक्तावुत्तिष्ठत इति मुक्तौ मुक्तिविषये चेष्टत इत्यर्थः। आसनादुत्तिष्ठतीति कर्त्तुरूर्द्धचेष्टमानत्वान्न मम्। ग्रामात् शतमुत्तिष्ठति शतम् उत्पद्यते इत्यर्थः। शतस्य कर्त्तुश्चेष्टाया अभावान्नात्मनेपदम् ॥८७०॥

मन्त्रकरणके धात्वर्थे उपात् परात् स्थो मं स्यात् घे। ये सूर्य्यमुपतिष्ठन्ते मन्त्रैः सन्ध्यात्रयं द्विजा इति भट्टिः। मन्त्रेण किम्? युवती यौवनेन भर्त्तारमुपतिष्ठति। तृतीयया किम्? गायत्रीमुपतिष्ठति ॥८७१॥

मित्रस्य भावो मैत्री। मैत्री मित्रकरणम् अध्वा पन्थाः सङ्ग उपश्लेषः मित्रकरणं विनापि सङ्गो भवतीति भेदः। आराध आराधनम्। उपात् परात् स्थो-मैत्रीसङ्गाराधेष्वर्थेषु घे मं स्यात्। अध्वनि कर्त्तरि च मं स्यादित्यर्थः। सन्तमुप-

## ८७३। लिप्सायाम् वा।

लिप्सायां ७, वा ।१।।

भिक्षुर्धार्मिकमुपतिष्ठते उपतिष्ठति वा।

## ८७४। अढ़ात्।

अढ़ात् ५।।

ज्ञानं उपतिष्ठते।

## ८७५। समो गमृच्छ-प्रच्छ-स्वृ-श्रु-वेत्त्यर्त्तिदृशः।

समः ५।, गम-ऋच्छ प्रच्छ-स्वृ-श्रु वेत्ति-अर्त्ति दृशः ५।।

**संगच्छते, समगत समगंस्त, सङ्गसीष्ट सङ्गंसीष्ट। समृच्छते संपृच्छते संस्वरते संशृणुते, संविद्रते, संविदते समियृते संपश्यते। अढ़ात् किम्? गङ्गां सङ्गच्छति।**

---

तिष्ठते सन्तं मित्रं करोतीत्यर्थः। पतिमुपतिष्ठते पत्या सह सङ्गं करोतीत्यर्थः। विष्णुमुपतिष्ठते आराधनां करोतीत्यर्थः। एष्वर्थेषु किम्? स्नानार्थी नदीमुपतिष्ठति। गङ्गामुपतिष्ठते पन्थाः। पथि कर्त्तरि किम्? पन्थानमुपतिष्ठति ॥८७२॥

लब्धुमिच्छा लिप्सा। उपात् परात् स्थो मं स्याद्वा लिप्सायाम्। धार्म्मिकमुपतिष्ठति धार्म्मिकं लब्धुमिच्छतीत्यर्थः ॥८७३॥

उपात् परादकर्म्मकात् स्थो मं स्यात् घे। विभाषाद्वयमध्यवर्त्तित्वान्नित्यत्वम्। ज्ञानमुपतिष्ठते उपस्थितं भवतीत्यर्थः। अढ़ात् किं राजानमुपतिष्ठति ॥८७४॥

गम् च ऋच्छश्च प्रच्छश्च स्वृश्च श्रुश्च वेत्तिश्च अर्त्तिश्च दृश् चेति तस्मात्। समः परेभ्योऽकर्म्मकेभ्य एभ्यो घे मं स्यात्। समगतेत्यादि इगुङुरिति कित् पक्षे वनतनेति मलोपे झसस्वादिति सिलोपः। कित्त्वाभावपक्षे मस्यानुस्वारः सङ्गसीष्टेत्यादि कित् पक्षे मस्य लोपः। अकित् पक्षेऽनुस्वारः। समृच्छत इति ऋच्छश्मूर्त्तौ गमनमोहयोः तुदादित्वात् शः संपृच्छत इति प्रच्छोश ज्ञीप्से तुदादित्वात् शे ग्रहादित्वात् जिः। संस्वरते इति स्वृ ऊ शब्दोपतापयोः। संशृणुत इति श्रु न गतौ श्रुतौ श्नुः जिः णत्वम्। संविद्रते इत्यादि विदलमतौ अन्ते शपो लुक् मान्तोऽदमतः मान्तो रमिति रम् वा पक्षे संविदते। समियृते इति ऋखिं गत्यां ते

## ८७६। गेर्वास्योहो ढे च।

गेः ५।, वा ।१।, अस्यीहः ५।, ढे ७।, च ।१।।

**निरस्यते निरस्यति, समूहते समूहति।**

## ८७७। गेरूहः स्वो येऽणौ।

गेः ५।, ऊहः ६।, स्वः १।, ये ७।, अणौ ७।

**ब्रह्म समुह्यात्।**

## ८७८। आत्माङ्गढ़ादढ़ाच्चाहनयमः।

आत्माङ्गढ़ात् ५।, अढ़ात् ५।, च ।१।, आ हन यमः ५। ।

**उर आहते पादमायच्छते। आहते आयच्छते।**

**अन्यत्र शत्रुमाहन्ति, परशिर आयच्छति।**

---

श्पो लुक्, ह्वादौ रेदिः प्रभादेङिः खे रे खेर्य्योरियुवर्णे। अर्त्तौत्यनेन ऋप्रापणे इति भौवादिकस्यापि ग्रहणात् समृच्छते इत्यपि बोध्यं स्यादानेति ऋच्छादेशः। संपश्यते इति सुगमम्॥८७५॥

गेः पराभ्यां अस्यु इर्च्छेपे ऊहङ तर्के इत्येताभ्यां मं स्याद्वा घे। ढेः कर्म्मणि विद्यमाने चकारात् कर्म्माभावे च। सन्ततं तिमिरमिन्दुरुदासे इति दिशः समूहन्निवेति च भारविः। गेः किम्? अस्यति ऊहते॥८७६॥

गेरित्यस्य ऊहस्योपादानात् पूर्व्वतः किमपि नानुवर्त्तते। गेः परस्य ऊहः स्वः स्यादणौ ये परे। समुह्यादिति संपूर्व्व ऊहङ तर्के पूर्व्वेण व्याः परस्मैपदविधानेन ह्रस्वः। अणौ किं ण्यणि समूह्यः॥८७७॥

आत्माङ्गं ढं यस्य स आत्माङ्गढः तस्मात्। नास्ति ढं यस्य सोऽढः तस्मात्। हन च यम च हनयम्। आङो हनयम् तस्मात्। मण्डूकप्लुताधिकारात् घे मं इत्युभयमनुवर्त्तते। स्वाङ्गकर्म्मकाभ्यामकर्म्मकाभ्याञ्च आपूर्व्वहनयमाभ्यां घे मं स्यात्। उरो वक्ष आहते पीड़यतीत्यर्थः। पादमायच्छते दीर्घं करोतीत्यर्थः। कर्म्माविवक्षायान्तु आहते पीड़ितो भवतीत्यर्थः। आयच्छते दीर्घो भवतीत्यर्थः। स्वाङ्गढ़ादित्यनेनैवेष्टसिद्धे आत्माङ्गढ़ादिति गौरवम् अद्रवं मूर्त्तमित्यादिपारिभाषिकस्वाङ्गव्यावृत्त्यर्थम्। इह तु आत्मनोऽङ्गम् आत्माङ्गमिति। अतएव परशिरआयच्छतीत्यत्र परशिरसः पारिभाषिकस्वाङ्गत्वेऽपि न स्यात्। गाण्डीवी कनक-

## ८७९। हनः कित् सिः।

हनः ५।, कित् ।१।, सिः १। ।

हनः परः सिः कित् स्यात्। आहत आवधिष्ट, आह-सातास् आवधिषाताम्।

## ८८०। यमः सूचने वा तूद्वाहे।

यमः ५।, सूचने ७।, वा ।१।, तु ।१। उद्वाहे ७।।

आयत। रामः सीतामुपायत उपायंस्त।

## ८८१। व्युत्तपः।

वि उत्-तपः ५।।

वितपते उत्तपते पाणिं जनः। आत्माङ्गढ़ादढ़ाच्च किं-मह्नीं वितपत्यर्कः।

---

शिलानिभं भुजाभ्यामाजघ्ने विषमविलोचनस्य वक्ष इति भारवौ पराङ्कर्म्मकत्वा-दसाधु इति भागवृत्तिजुमरकुलचन्द्राः। वस्तुतस्तु गाण्डीवी कनकशिलानिभं भुजाभ्यां स्वं वक्ष आजघ्ने विषमविलोचनस्येति अनादरे षष्ठी तमनादृत्य स्वबला-धिक्यं सूचितवानित्यर्थः॥ ८७८॥

हनः परः सिः कित् स्यात्। आहतेत्यादि पूर्वेणात्मनेपदेऽनेन सेः कित्त्वा-हनतनेति यलोपे सेर्लोपः। पचे टौ मे तु वा इति बधादेशे इमि आवधिष्ट॥८७९॥

यमः परः सिः कित् स्यात् आत्मनेपदे सूचनेऽर्थे विवाहे तु वा। सूचनमि-ङ्गितादिना विज्ञापनम् आयत इति पूर्वेणात्मनेपदेऽनेन सेः कित्त्वे हनतनेति मलोपे सेर्लोपः। उपायतेत्यादि उपयमौ विवाहे इति वक्ष्यमाणादात्मनेपदे अनेन सेः किद्वा। पूर्वतरसूत्रस्य प्रत्युदाहरणमाह ऋतुमाहन्तीत्यादि॥८८०॥

तपः कित् कार्य्यासम्भवात् कित् सिरिति नानुवर्त्तते। मण्डूकप्लुत्या ङे मम् इत्यनुवर्त्तते। व्युड्भ्यां परादात्माङ्गढ़ादढ़ाच्च तपो घे मं स्यात्। पाणिमिति हस्तम् उपतप्तं करोतीत्यर्थः। वितपते उत्तपते जनः उपतप्तः स्यात् इत्यर्थः॥८८१॥

८८२। तपोढ़ाद् यक् च रे।

तपोढ़ात् ५।, यक् ।१।, च ।१।, रे ७।।

तप्यते तपस्तापसः। रे किम्? अतप्त।

८८३। सृजः श्राद्धघात्तनीण् च।

सृजः ५।, श्राद्धघात् ५।, तनि ७।, इण् ।१।, च ।१।।

सृज्यते स्रजं भक्तः। असर्जि। श्राद्धघात् किम्? सृजति मालां मालिकः।

८८४। नि-सं-व्युप-ह्वः।

नि सं-वि उप-ह्वः ५।।

निह्वयते संह्वयते विह्वयते उपह्वयते।

८८५। स्पर्द्धायामाङः।

स्पर्द्धायां ७।, आङः ५।।

कृष्णश्चानूरमाह्वयते।

---

तपो ढं कर्म्म यस्य स तपोढ़ः तस्मात्। पृथक् योगाद्रुदिति नानुवर्त्तते। एवं तपोढ़ादित्यनेन आत्माङ्गढ़ादढ़ाच्चेत्यपि निरस्तम्। तपोढ़ात्तपः सर्वविभक्तीनामात्मनेपदं स्यात् घे। रे परे यक् च स्यादित्यर्थः। तप्यते तपस्तापस इति दुःखेन तपो जनयतीत्यर्थः। एवं तप्येत तप्यताम् अतप्यत। रे किम्? अतप्तेति निमित्तगतविशेषत्वेन बलवत्त्वात् ज्यां सिरेव। एवं तेपे तप्ता इत्यादि। तपोढ़ादिति किम्? मह्रीं वितपत्यर्कः ॥८८२॥

श्रद्धा अस्त्यस्येति प्रज्ञादित्वात् णे श्राद्धः घः कर्त्ता यस्य स श्राद्धघः तस्मात्। श्राद्धघात् सृजः सर्वविभक्तीनामात्मनेपदं स्यात् घे। रे परे यक् तनि इण् च स्यादित्यर्थः। एवं सृज्येत असर्जि ससृजे स्रष्टा इत्यादि। श्राद्धघात् किम्? सृजति मालां मालिकः ॥८८३॥

अनिष्टत्वात् यगिणौ नानुवर्त्तेते। निसंव्युपेभ्यः परात् ह्वयतेर्मं स्यात् ॥८८४॥

आङः परात् ह्वयतेर्मं स्यात् स्पर्द्धायाम्। स्पर्द्धा पराभिभवेच्छा। स्पर्द्धायां किम्? पिता पुत्रमाह्वयति ॥८८५॥

८८६। सूचनावक्षेपणसेवासाहसप्रतियत्नकथोपयोगे कृञः।

सूचन—उपयोगे ७।, कृञः ५।।

अपकुरुते। श्येनो वर्त्तिकाम् उपकुरुते। विष्णुं प्रकुरुते। परदारान् प्रकुरुते। एधोदकस्य उपस्कुरुते। गीताः प्रकुरुते। शतं प्रकुरुते।

८८७। अधेः शक्तौ।

अधेः ५।, शक्तौ ७।

दैत्यान् अधिकुरुते कृष्णः।

८८८। शब्दढ़ाढ़ाद्वेः।

शब्दढाढात् ५।, वेः ५।।

स्वरान् विकुरुते। वायुर्विकुरुते। अन्यत्र चित्तं विकरोति कामः।

---

आङ्पूर्वस्य करोतेः सूचनादावनभिधानादाङ इति नानुवर्त्तते। सूचनं परदोषाद्याविष्करणम्। अवक्षेपणं तिरस्कारः। सेवा अनुवृत्तिः। साहसं पश्चाद्दोषमनालोच्य करणम्। हिंसा चौर्य्यपरदारगमनादि। प्रतियत्नः सतो गुणान्तरम्। कथा आख्यानम्। उपयोगो धर्म्माद्यर्थं द्रव्यविनियोगः। एष्वर्थेषु कृञो मं स्यात् घे। अपकुरुते कस्यचिद्दोषमाविष्करोतीत्यर्थः। श्येनो वर्त्तिकामुपकुरुते तिरस्करोतीत्यर्थः। परदारान् प्रकुरुते सेवते साहसात् तेषु प्रवर्त्तते वा इति सेवासाहसयोरेकमुदाहरणम्। एधोदकस्योपस्कुरुते इति एधः काष्ठं तस्य उदकं रसः। एधोदकम् औषधाद्यर्थं तस्य उष्णत्वादिगुणान्तराधानं करोतीत्यर्थः। एधोदकस्येति प्रतियत्ने कर्म्मणि षष्ठी। उपस्कुरुते इति संपरेरिति सुम्। गीताः प्रकुरुते कथयतीत्यर्थः। शतं प्रकुरुते शतं द्रव्याणि विनियुङ्क्ते इत्यर्थः॥ ८८६॥

अधेः परात् कृञो मं स्यात् घे शक्तौ। शक्तिरभिभवः। दैत्यानधिकुरुते अभिभवतीत्यर्थः। शक्तौ किम्? अधिकरोति राजा। अधेः कृञ उपेक्षायां त्वामधिकुरुते उपेक्षत इत्यर्थ इति कश्चित्॥ ८८७॥

८८९। ज्ञानार्चोत्क्षेपोपनयनभृतिविगणनव्ययेषु नीञः।

ज्ञान—व्ययेषु ७॥, नीञः ५।।

शास्त्रे नयते, विष्णुं नयते, दण्डमुन्नयते, पुत्रमुपनयते, भृत्यमुपनयते, ऋणं विनयते, द्रव्यं विनयते।

८९०। घस्थामूर्त्तढ़ात्।

घस्थामूर्त्तढ़ात् ५।।

क्रोधं विनयते।

घस्थं किम्? गुरोः क्रोधं विनयति। अमूर्त्तं किम्? गण्डं विनयति।

---

शब्दो ढम् कर्म्म यस्य स शब्दढ़ः। नास्ति ढं यस्य सोऽढ़ः। शब्दढ़श्च अढ़श्च शब्दढाढ़ं तस्मात्। वेः परात् शब्दकर्म्मकात् अकर्म्मकाच्च कञो मं स्यात् घे। स्वरान् विकुरुते विशेषेण करोति इत्यर्थः। वायुर्विकुरुते विशेषेण विकृतो भवति इत्यर्थः। चित्तं विकरोति कामः इति विरुद्धं करोतीत्यर्थः॥ ८८८॥

एष्वर्थेषु नीञो मं स्यात् घे। ज्ञानं प्रमेयनिश्चयः। शास्त्रे नयते शास्त्रं निश्चिनोतीत्यर्थः विष्णुं नयते पूजयतीत्यर्थः। उत्क्षेप ऊर्द्धप्रापणं दण्डमुन्नयते उत्क्षिपतीत्यर्थः। उपनयनं यज्ञोपवीतदानसंस्कारः पुत्रमुपनयते पुत्रं यज्ञोपवीतदानेन संस्करोतीत्यर्थः। भृतिः कर्म्मवेतनम्। भृत्यमुपनयते भृतिदानेन समीपमानयतीत्यर्थः। विगणनम् ऋणादिपरिशोधनम्। ऋणं विनयते विशोधयतीत्यर्थः। व्ययो धर्म्मादौ द्रव्यविनियोगः द्रव्यं विनयते विनियुङ्क्ते इत्यर्थः। एषु किम्? गां वनं नयति नयते॥ ८८९॥

घे कर्त्तरि तिष्ठतीति घस्थं घस्थम् अमूर्त्तं ढं कर्म्म यस्य सः तस्मात् नीञो मं स्यात् घे। क्रोधं विनयते उपशमयतीत्यर्थः। विपूर्वस्यैवोपशमनार्थत्वादेरिति नोक्तम्। गण्डं विनयतीति गण्डं व्रणम्॥ ८९०॥

८९१। वृत्त्युत्साहतायने क्रमः परोपक्रमः।

वृत्ति-उत्साह-तायने ७।, क्रमः ५।, परा-उप-क्रमः ५।।

ऋचु क्रमते बुद्धिः। धर्माय क्रमते साधुः। सतां श्रीः क्रमते। पराक्रमते, उपक्रमते।

८९२। आङो भोद्गमे।

आङः ५।, भोद्गमे ७।

आक्रमते अर्कः। भोद्गमे किम्? आक्रामति धूमः खं व्याप्नोतीत्यर्थः।

८९३। वेः पद्भिः।

वेः ५।, पद्भिः ३॥।

साधु विक्रमते वाजी। पद्भिः किम्? वाजिना विक्रामति राजा।

८९४। प्रोपादारम्भे।

प्र-उपात् ५।, आरम्भे ७।

भोक्तुं प्रक्रमते उपक्रमते।

---

वृत्तिरप्रतिबन्धः। उत्साह उद्यमः। तायनं स्फीतता। एष्वर्थेषु मं स्यात् घे। परोपाभ्यां क्रमोऽपि एष्वर्थेष्वेव। परोपग्रहणमन्योपसर्गनिरासार्थम् ऋचु क्रमते बुद्धिः अप्रतिहता भवतीत्यर्थः। धर्माय क्रमते साधुः उत्सहत इत्यर्थः सतां श्रीः क्रमते स्फीता भवतीत्यर्थः। एष्वर्थेष्वेवेत्यर्थः। अन्यत्र क्रामति पराक्रामति ॥८९१॥

भा ज्योतिरस्यास्तीति भः अर्ण आदित्वात्। भानां चन्द्रसूर्य्यादीनाम् उद्गमे ऊर्द्धगमने आङः परात् क्रमी मं स्यात् घे। आक्रमते अर्कः उद्गच्छतीत्यर्थः। एवं चन्द्र आक्रमते अग्निराक्रमते दिवम्। दिवमाक्रममाणेव केतुताराभयप्रदेति भट्टिः। ऊर्द्धगमनादन्यत्र न स्यात्। तेन अग्निरिन्धनमाक्रामति प्राप्नोतीत्यर्थः। नभः समाक्रामति कृष्णवर्त्मना स्थितैकचक्रेण रथेन भास्कर इत्यत्र नभो व्याप्नोतीत्यर्थः। इति दुर्गसिंहः ॥८९२॥

वेः परात् क्रमी मं स्यात् घे पद्भिर्धात्वर्थे। पद्भिरित्यत्र बहुलमविवक्षितं तेन पद्भ्यामपि यथा साधु विक्रमते हंस इति ॥८९३॥

## ८९५ । वाऽगेः ।

वा ।१।, अगेः ५। ।

**क्रमते क्रामति ।**

## ८९६ । निह्नवे ज्ञः ।

निह्नवे ७।, ज्ञः ५। ।

**शतमपजानीते ।**

## ८९७ । अढ़ात् ।

अढ़ात् ५। ।

**सर्पिषो जानीते ।**

## ८९८ । संप्रतेरस्मृतौ ।

सं-प्रतेः ५।, अस्मृतौ ७। ।

**संजानीते प्रतिजानीते । अस्मृतौ किम् ? पुत्रं संजानाति ।**

---

प्रोपाभ्यां परात् क्रमो घे मं स्यादारम्भे । भोक्तुं प्रक्रमते आरभत इत्यर्थः । आरम्भे किं ? पूर्वेद्युः प्रक्रामति गच्छतीत्यर्थः परेद्युरुपक्रामति आगच्छतीत्यर्थः ॥८९४॥

नास्ति गिर्यस्मिन् सोऽगिः तस्मात् । अगेः क्रमो मं स्याद्वा घे । अगेः किम् ? संक्रामति । वारिपूर्णां मही क्रत्वा पश्चात् संक्रमते गुरुरित्यत्र समृशब्दस्य उपसर्गप्रतिरूपकत्वेनानुपसर्गत्वात् ॥८९५॥

जानातेर्घे मं स्यात् निह्नवे । निह्नवोऽपलापः अपपूर्वजानातिर्निह्नवार्थः ॥८९६॥

अकर्म्मकाज्जानातेर्घे मं स्यात् । सर्पिषो जानीते इति ज्ञोऽज्ञाने षे इत्यनेन सर्पिष इति करणे षष्ठी सर्पिषा करणेन प्रवर्त्तत इत्यर्थः । जानातिरत्र प्रवृत्त्यर्थः ॥८९७॥

सम्प्रतिभ्यां पराज्जानातेर्घे मं स्यात् न तु स्मृतौ । संजानीते प्रतिजानीते अङ्गीकरोतीत्यर्थः । स्मृतौ तु संजानाति प्रतिजानाति ॥८९८॥

## ८९९ । अर्द्वेऽणौ घे ।

अे: ५।, ढे ७।, अणौ ७।, घे ७। ।

दर्शयते भवो भक्तान् । अणौ यत् ढं तच्चेत् घ इति किम्? दर्शयति शम्भुं भक्तान् भक्तिः । स्मृतौ तु, स्मारयति भक्तान् हरिः ।

## ९०० । ज्ञान-यत्न-प्रलोभे वदः ।

ज्ञान-यत्न-प्रलोभे ७।, वदः ५। ।

पाणिनिर्वदते, चैत्रे वदते, शिष्यमुपवदते ।

## ९०१ । अनोरढात् ।

अनोः ५।, अढात् ५। ।

अनुवदते ।

## ९०२ । विमति-व्यक्त-सहोक्त्योः ।

विमति-व्यक्त-सहोक्त्योः ७।। ।

विवदन्ते शिष्याः । ब्राह्मणा वेदं संप्रवदन्ते । व्यक्त किम्? संप्रवदन्ति खगाः ।

---

अणौ अणन्तदशायां ढे कर्म्मणि णन्तस्य घे कर्त्तरि सति णन्ताद्धातोर्वे मं स्यात् नतु स्मृतौ । भक्ता यं भवं पश्यन्ति स भवो भक्तान् दर्शयते अर्थादात्मानमित्यर्थः । दर्शयति शम्भुमित्यादि अत्राणौ कर्म शम्भुः णन्तस्य कर्त्री भक्तिरिति नात्मनेपदम् । स्मारयतीत्यादि अत्र अणन्तदशायां कर्म्मणो हरेर्णन्तस्य कर्त्तृत्वेऽपि स्मरणार्थत्वान्नात्मनेपदम् ॥ ८९९ ॥

एष्वर्थेषु वदेर्बाचीत्यस्मात् घे मं स्यात् । पाणिनिर्वदते वदितुं जानातीत्यर्थः । चैत्रे वदते यत्नं करोतीत्यर्थः । शिष्यमुपवदते प्रलोभयतीत्यर्थः । केचित्तु प्रकाशोत्साहसान्त्वेष्वपि स्मृतौ मनुर्वदते प्रकाशमानोऽर्थं प्रतिपादयतीत्यर्थः युद्धे वदते उत्साहमानो वदतीत्यर्थः । क्लिष्टमुपवदते उपसान्त्वयतीत्यर्थः इत्युदाहरन्ति ॥९००॥

अनोः परादकर्म्मकात् वदो घे मं स्यात् । अनुवदते रामस्य कृष्णः । रामो यथा वदति कृष्णोऽपि तथा वदतीत्यर्थः । अढात् किम्? पूर्वोक्तमनुवदति ॥ ९०१ ॥

विविधा नानाप्रकारा मतिर्विमतिः । व्यक्ता चासौ सहोक्तिश्चेति व्यक्तसहोक्तिः ।

## ९०३। तद्योगे वा।

तद्योगे ७।, वा।१।।

विप्रवदन्ते विप्रवदन्ति वैद्याः।

## ९०४। अवाद्गिरः।

अवात् ५।, गिरः १।।

अवगिरते।

## ९०५। समः प्रतिज्ञायाम्।

समः ५।, प्रतिज्ञायाम् ७।।

शतं सङ्गिरते।

## ९०६। उच्चरः सद्वात्।

उत् चरः ५।, सद्वात् ५।।

धर्ममुच्चरते। सद्वात् किम्? धूम उच्चरति।

## ९०७। समस्त्र्या।

समः ५।, त्र्या ३।।

अश्वेन सञ्चरते।

---

विमतिश्च व्यक्तसहोक्तिश्च विमतिव्यक्तसहोक्ती तयोरर्थयोर्वर्त्तमानाद्वदो घे मं स्यात्। विवदन्ते शिष्या इति द्वयोरुदाहरणम्। नानाप्रकारकज्ञानपूर्वकं वदन्ति व्यक्तं सह वदन्ति वेत्यर्थः॥९०२॥

तयोर्विमतिव्यक्तसहोक्त्योर्योगस्तद्योगः। एतस्मिन्नर्थे वर्त्तमानाद्वदो घे मं स्याद्वा। विप्रवदन्ते वैद्या इति नानाप्रकारकज्ञानपूर्वकं व्यक्तं सह वदन्तीत्यर्थः॥९०३॥

अवात् परात् गिरतेर्घे मं स्यात्॥९०४॥

समः परात् गिरतेर्घे मं स्यात् प्रतिज्ञायाम्। शतं संगिरते प्रतिजानीते इत्यर्थः। प्रतिज्ञायां किम्? संगिरति भुङ्क्ते इत्यर्थः॥९०५॥

उदः परात् सकर्म्मकाच्चरो घे मं स्यात्। धूम उच्चरतीति उद्गच्छतीत्यर्थः। चरः प्रतिज्ञार्थत्वाभावात् प्रतिज्ञायामिति नानुवर्त्तते॥९०६॥

पृथग्योगात् सद्वादिति नानुवर्त्तते समः पराच्चरो घे मं स्यात् साधनतृतीया-

९०८। दान: सा चेच्चार्थे।

दान: ५।, सा ।१।, चेत् ।१।, च्यर्थे ७।।

दास्या संयच्छते कामी। च्यर्थे किम्? दास्या संयच्छति भिक्षां भिक्षवे।

९०९। उप-यमो विवाहे।

उप यम: ५।, विवाहे ७।।

राम: सीतामुपायत उपायंस्त।

९१०। भुजोऽशने।

भुज: ५।,अशने ७।।

शालीन् भुङ्क्ते गौ:। अनशने तु, पृथ्वीं भुनक्ति राजा।

---

न्तेन योगे सति तेन हेतौ सहार्थे च विहिततृतीयान्तेन योगे न स्यात्। यथा पुत्त्रेण सञ्चरति पुत्रेण सञ्चरति ॥९०७॥

सा तृतीया चेत् यदि चतुर्थ्यर्थे भवति तदा तेन तृतीयान्तेन योगे सम्पूर्वाद्दानो घे मं स्यात्। दास्या इति सन्दानो मे इत्यधर्म्म्यसम्प्रदाने तृतीया दास्या संयच्छति भिक्षामित्यत्र दास्येति करणे तृतीया। उपसर्गान्तरव्यवधानेऽपि स्यादिति दुर्गसिंह:। तेन दास्या संयच्छते मालां कामुक:। न च सन्दानो मेऽधर्म्म्ये इति चतुर्थ्यर्थे तृतीयाविधानादेव सन्दान: प्राप्ताविह तदुपादानं व्यर्थमिति वाच्यम्। निमित्तस्य सन्दानोऽनुक्तौ केवलेन कार्य्येणात्मनेपदेन सूत्रत्वासम्भवात्। तथाच कार्य्यी कार्य्यं निमित्तञ्च त्रिभि: सूत्रमुदाहृतम्। कदाचित् कार्य्यिकार्य्याभ्यां क्वचित् कार्य्यनिमित्तत इति सम्प्रदाय:। न च तर्हि त्ये इत्यस्यापि सूत्रत्वासम्भव इति वाच्यम्। तत्र पूर्वतश्चप्रत्ययोरनुवृत्ति: किं चात्र दानोऽनुक्तौ पूर्वतश्चरोऽनुवृत्तौ तद्योगे चतुर्थ्यर्थे तृतीयाविधानाभावादुन्मत्तप्रलापवद्वचनं स्यादिति ॥९०८॥

उपाद्यमो घे मं स्याद्विवाहे। विवाहोऽत्र स्वीकारमात्रम्। वर: कन्यामुपयच्छते रामो विश्वामित्रवादस्त्रमुपयेमे। कोपात् काश्चित् प्रियै: प्रत्यमुपायंसत नास्त्रमिति भट्टौ न स्वीकृतवत्य इत्यर्थ:। उपायत इत्यादि यम: सूचने इत्यादिना से: कित्त्वपक्षे वनतनेति मलोपे सेर्लोप:। पक्षे मस्यानुस्वार: ॥९०९॥

### ९११। संक्ष्णोः ।

संक्ष्णोः ५।।

शस्त्रं संक्ष्णुते ।

### ९१२। युजिर उद्ग्यचोऽयज्ञपात्रे ।

युजिरः ५।, उद्ग्यचः ५।, अयज्ञपात्रे ७।।

उद्युङ्क्ते प्रयुङ्क्ते । यज्ञपात्रे तु, प्रयुनक्ति यज्ञपात्रम् ।

### ९१३। प्रतारे वञ्चिगर्द्धेः ।

प्रतारे ७।, वञ्चि-गर्द्धेः ५।।

वटुं वञ्चयते गर्द्धयते । प्रतारे किम् ? श्येनोऽहिं वञ्चयति ।

### ९१४। पूजाभिभवे च लापेः ।

पूजाभिभवे ७।, च ।१।, लापेः ५।।

जटाभिर्लापयते । श्येनो वर्त्तिकामुल्लापयते । पुत्रमुल्लापयते । एषु किम् ? घृतं विलापयति ।

---

भुजोऽन्ने इत्यनेनैवेष्टसिद्धौ अशने इति गौरवं ज्ञापयति भुजोधौ बाधे भक्षणेऽनेकार्थादुपभोगेऽपि मं स्यादिति । भक्षणे शालीन् भुङ्क्ते । उपभोगे तु बुभुजे पृथिवीपालः पृथिवीमेव केवलामिति रघुः । एवं वृद्धो जनो दुःखशतानि भुङ्क्ते सुखमुपभुङ्क्ते इत्यादि । अनशने तु इति अत्र नञोऽल्पार्थत्वादशनभिन्ने पालने एव नतूपभोगे इत्यर्थः ॥९१०॥

समः परात् क्ष्णौतेर्घे मं स्यात् । शस्त्रं संक्ष्णुते शाणयतीत्यर्थः ॥९११॥

गेरच् ग्यच् उत् च ग्यच्च तत् तस्मात् । उदो गेरचश्च परात् युजिरो ञ युतौ इत्यस्मात् मं स्यात् घे नतु यज्ञपात्रे प्रयुज्यमाने । यज्ञपात्रे तु प्रयुनक्ति स्रुवमिति स्रुवः । उद्ग्यचः किम् ? संयुनक्ति निर्युनक्ति ॥९१२॥

वन्चु गत्यां गृधियु लिप्से इत्येताभ्यां णिरणञन्ताभ्यां घे मं स्यात् प्रतारे । प्रतारो वञ्चनं विसंवादनमिति दुर्गसिंहः । वटुं ब्राह्मणकुमारं वञ्चयते गर्द्धयते प्रतारयतीत्यर्थः । प्रतारे किम् ? श्येनः पक्षी अहिं सर्पं वञ्चयति गमयतीत्यर्थः ॥९१३॥

लापिरिति लिनातेर्णौ मिश्र्योरिति ञापचे लातेश्च णौ उभयोरादन्तत्वात्

## ९१५। मिथ्याकारेऽभ्यासे।

मिथ्या ।५।, कारे: ५।, अभ्यासे ७।।

पदं मिथ्या कारयते। मिथ्या किम्? साधु पदं कारयति। अभ्यासे किम्? सकृत् पदं मिथ्या कारयति।

## ९१६। व्यतीहारे गतिहिंसाशब्दार्थ-हसान्यह्ववहोऽनन्योन्यार्थे।

व्यतीहारे ७, गति—वहः ५,, अनन्योन्यार्थे ७।।

व्यतिभवते अर्कमिन्दुः, व्यतिहरते व्यतिवहते। व्यतिजज्ञिष्व व्यतिजज्ञिध्वम्।

---

पथि रूपम्। लापयतेर्वे मं स्यात् पूजायामभिभवे चकारात् प्रतारे च। जटाभिर्लापयते पूजामभिगच्छतीत्यर्थः। श्येनो वर्त्तिकामुल्लापयते अभिभवतीत्यर्थः। पुवमुल्लापयते प्रतारयतीत्यर्थः। एषु किम्? घृतं विलापयति द्रवीकरोतीत्यर्थः॥९१४॥

मिथ्येत्यव्ययं लुप्तपञ्चम्यन्तम्। मिथ्याशब्दात् परात् कारयतेर्वे मं स्यात् पौनःपुन्ये। पदं मिथ्या कारयते स्वरादिदुष्टं पदं पुनःपुनरुच्चारयतीत्यर्थः। मिथ्योपपदात् किम्? साधुपदं कारयति पुनःपुनरुच्चारयतीत्यर्थः। अभ्यासे किम्? सकृत्पदं मिथ्या कारयति सकृदुच्चारयतीत्यर्थः॥९१५॥

व्यतीहारः परस्परस्यैकजातीयक्रियाकरणम्। गतिश्च हिंसा च शब्दश्च गतिहिंसाशब्दाः तेऽर्था येषां ते गतिहिंसाशब्दार्थाः। ते च हसश्च गतिहिंसाशब्दार्थहसाः। तेभ्योऽन्यः गतिहिंसाशब्दार्थहसान्यः। गतिहिंसाशब्दार्थहसान्यश्च ह्वश्च वह् चेति तस्मात्। अन्योन्यस्य अर्थ इव अर्थो यस्य सोऽन्योन्यार्थः न अन्योन्यार्थः अनन्योन्यार्थः तस्मिन्। गत्यर्थ हिंसार्थ शब्दार्थ हसति-एतद्भिन्नधातुभ्यो ह्ववहाभ्याञ्च मं स्यात् घे व्यतीहारे नत्वन्योन्यार्थशब्दे प्रयुज्यमाने। परस्परमेकजातीयक्रियाकरणं व्यतीहारः। ह्ववहोर्गत्यर्थत्वात् सम्पूर्वस्य हिंसार्थत्वाच्च निषेधे पृथगुक्तिः। इन्दुरर्कं व्यतिभवते इति अर्को यथा इन्दावस्तं गते उदेति इन्दुरपि तथा अर्के अस्तं गते उदेतीति व्यतीहारः। व्यतिहरन्ते धान्यं चौराः। व्यतिसंहरन्ते राजानः। व्यतिवहन्ते भारं क्षपकाः। व्यतिजज्ञिष्वेत्यादि। जनमलिर्जनौ ह्रादी रेदिरिति द्वित्वे सध्वोरस्येति इमि हनगमित्युङ्लोपः। व्यतिपूर्वत्वाभावेऽपि प्रियामुखं किंपुरुषश्चुचुम्बे इति कालिदासः॥९१६॥

## ९१७। ह्रोऽस्तेरेति ।

ह्रः १।, अस्तेः ६।, एति ७।।

अस्तेर्ह्रः स्यात् एकारे परे। व्यतिह्रे। गत्यर्थादेस्तु व्यति-सर्पन्ति व्यतिघ्नन्ति व्यतिजल्पन्ति व्यतिहसन्ति। अन्योन्यार्थे तु, परस्परं व्यतिलुनन्ति।

## ९१८। स्मृ दृशऽननुज्ञानाप्रतिश्रोः सनः।

स्मृ—श्रोः ५।, सनः ५।।

एभ्यः सनन्तेभ्यो मं स्यात् घे। सुस्मूर्षते दिदृक्षते जिज्ञासते शुश्रूषते। अन्यत्र अनुजिज्ञासति आशुश्रूषति प्रतिशुश्रूषति।

## ९१९। जित् अन्त-पिव धे नृहद वस दमुचाद परिमुहायमयसोऽगिज्ञापवदाग्न्योत्-समायमः फलिनि।

जित्—यमः ५।, अगिज्ञा—यमः ५।, फलिनि ७।,

जितो अन्तपिवादे-रगिजानाति-रपवदोऽग्न्योदादि-

---

सुगमम्। गत्यर्थादेस्तु व्यतिसर्पन्तीत्यादि गत्यर्थादेर्व्यतीहारे कर्त्तर्य्येवात्मने-पदनिषेधो भावकर्म्मणोस्तु स्यादेव। तेन व्यतिगम्यते ग्रामो जनैरित्यादि। अन्योन्यार्थे तु परस्परं व्यतिलुनन्ति। एवम् अन्योन्यम् इतरेतरम्। तत्र परस्पर-शब्देनैव व्यतीहारस्योक्तत्वात् नात्मनेपदम्। सम्यग्विनिमयेनोभौ दधतुर्भुवनद्वय-मिति रघौ। विनिमयशब्दस्यापि अन्योन्यार्थत्वान्नात्मनेपदम् ॥९१७॥

नास्ति अनुर्यस्मिन् सोऽननुः। स चासौ ज्ञश्चेति अननुज्ञः। न विद्येते आप्रती यस्मिन् सोऽनाप्रतिः। स चासौ श्रुश्चेति अनाप्रतिश्रुः। स्मृश्च दृश् च अननुज्ञश्च अनाप्रतिश्रुश्चेति तस्मात्। एभ्यः सनन्तेभ्यो मं स्यात् घे। दिदृक्षते इति वर्द्धोऽकिज्झश इत्यत्र वाशब्दस्य व्यवस्थावाचित्वात् ऋकारस्य न रेफः। शुश्रू-षते इति तालव्यादिः ॥९१८॥

परिमुंहः परिमुहः। आङ्‌ो यमयसौ आयमयसौ। ततः पिवश्च धेश्च नृत् च वदश्च वसश्च दम च दृषश्च परिमुहश्च आयमयसौ चेति। अन्तश्चासौ पिवधे-

पूर्वंयमश्च फलवति घे मं स्यात् । यजते । पाययते धापयते नर्त्तयते वादयते वासयते दमयते रोचयते आदयते परिमोहयते आयामयते आयासयते । जानीते अपवदते उद्यच्छते संयच्छते आयच्छते, ग्रन्थे तु, वेदमुद्यच्छति । फलिनि किम् ? यजति याजकः ।

इति मपादः ।

---

नृङ्दवसदमुचादपरिमुहयमयस् चेति आन्तपिवादियमयस् जिच्च आन्तपिवादियमयस् चेति तस्मात् । नास्ति गिर्यस्मिन् सोऽगिः अगिश्चासौ ज्ञाश्चेति अगिज्ञा अपाङ्वदः अपवदः । उद् च सन् च आङ् च उत्समाः तेभ्यो यम् उत्समायम् । न ग्रन्थोऽग्रन्थः । अग्रन्थे उत्समायम् अग्रन्थोत्समायम् । ततोऽगिज्ञाश्च अपवदश्च अग्रन्थोत्समायम् चेति तस्मात् अत्र जित्पदेन गणे जानुबन्धाः आन्ताश्च गृह्यन्ते । तेन जित्वेनैव आन्तप्राप्तौ आन्तपिवादेर्ग्रहणम् कम्पान्तार्थे ङित्यादिना विहितपरस्मैपदस्य बाधनार्थम् । अन्यथा पिवधे ञ्ट् एवानन्तार्थत्वादन्येषामपि प्राणिघाढत्वात् तेन परस्मैपदापत्तिरासीदेव । ततश्च कम्पान्तेत्यादिविशेषविधेरविषये सर्वआन्तेभ्यः फलवत्कर्त्तर्य्यात्मनेपदं सिद्धमिति । जिच्च खमजक् वितर्के इत्यादिजानुबन्धेन चुरादेर्ञ्जकारेण जानुबन्धित्वं नास्तीति सूचनाद्गणपठितजानुबन्धभिन्नचुरादेर्नेयं व्यवस्था । यजते इत्यादि । यजेञौ देवार्चादौ एवं पा दाने धेट पाने । नृत्य नर्त्ते । वदे वाचि । वसे ओ निवासे । दमभु दर्शने । रुच ङल्ट प्रीतिप्रकाशयोः । अदॢ भक्ष्ये । मुह्य ऌङि वैचित्त्ये । यमौ उ विरतौ । इर्य्यसूर्य्येतने । एकादशैते आन्ताः । ज्ञाग बोधने । वदे वाचि यमौ उ विरतौ । इत्थं नृपः पूर्वमवालुलोचे ततोऽनुजज्ञे गमनं सुतस्येति भट्टौ । अनुशब्दस्य उपसर्गप्रतिरूपकत्वेनानुपसर्गत्वात् । कर्म्मणि प्रत्यये वा राज्ञा सुतस्य गमनम् अनुजज्ञे अनुज्ञातमित्यर्थः । जनीय्यङ जनौ इत्यस्य वा रूपम् । सुतस्य गमनं ततो जातमित्यर्थः । फलवति घे किम् ? यजति याजकः अत्र वेतनद्वारा यजमानस्यैव फलम् । नवशः पमे इत्यनेनोभयपदप्राप्तौ नियमोऽयम् । नियमश्च फलवत्कर्त्तर्य्येव आत्मनेपदमिति चेत् तर्हि अफलवत्कर्त्तरि आत्मनेपदनिषेधे फलवत्कर्त्तरि परस्मैपदापत्तिः । फलवत्कर्त्तर्य्यात्मनेपदमेव इति चेत् वा तर्हि च फलवत्कर्त्तरि परस्मैपदनिषेधे अफलवत्कर्त्तर्य्यात्मनेपदापत्तिः स्यात् इत्युभयथैव आघातः । वस्तुतस्तु नवशः पमे इत्यादिनोः

## द्वितीयः पादः—ढ-भावम्।

### ९२०। ढ भावे मम्।

ढ भावे ७।, मम् १।।

**धोर्ढे भावे च मं स्यात्।**

### ९२१। र-तनोर्यगिणौ।

र-तनोः ७॥, यक् इणौ १॥।

**धोः रे परे यक्, तनि परे इण्, स्यात् ढे भावे च।**

**स्तूयते विष्णुः, स्तूयेत स्तूयताम् अस्तूयत अस्तावि।**

---

भयपदग्रामो व्यवस्थेयम्। फलवति कर्त्तरि आत्मनेपदम् अफलवति परस्मैपदमिति राजा भृत्येन शत्रुं घातयतीत्यादौ कर्त्तुः फलवत्त्वं न विवक्षणीयम्। वृक्षं परिवारयन्ते कण्टका इत्यादौ कर्त्तुः फलवत्त्वं विवक्षणीयमिति वृद्धाः। लौकिकवाक्ये नियमो नास्ति वैदिकवाक्येष्वेव नियमः इति प्रामाणिकाः। तथाच वर्द्धमान इह लौकिकवाक्येषु व्यभिचारोऽतिपुष्कलः। वेदवाक्येषु यद्यस्ति नियमः केन वार्य्यते॥ विशेषः पाणिनेरिष्टः सामान्यं सर्ववर्म्मणः। सामान्यमनुगृह्णाति तत्राचार्य्यपरम्परेति। अतएव अकरोदचिरेश्वरः क्षितौ द्विषदारम्भफलानि भस्मसादिति रघुः। तनोति शुभ्रं गुणसम्पदा यश इत्यादेः फलवत्कर्त्तरि परस्मैपदम्। फलं विश्वोपकारार्थं धत्ते पर्वणि पर्वणीति कमलवनोद्घाटनं कुर्वते ये सूर्य्यस्य रश्मय इत्यादौ अफलवत्कर्त्तर्य्यात्मनेपदं सिद्धमिति ॥९१९॥

इति म पाद

---

भावे मादर्मिति वक्ष्यमाणेन भावपदस्य चरित्यर्थत्वादियहणं रतनोर्यगिणाविन्यादिष्वनुवृत्त्यर्थम्। धोरिति व्याख्यानं धातुमात्रप्राप्त्यर्थम्। तेन पच्यते चिकित्स्यते कार्य्यते पिपक्ष्यते पापच्यते इत्यादि ॥९२०॥

अयेरत विशेषाद्विनिमित्तत्वाद्वान्तरङ्गस्य बलवत्त्वात् ध्यां सिना यक् बाध्यते। इणा सिर्बाध्यते। किन्त्वात् यकि न गुणः। णित्त्वादिणि वृद्धिः। स्तूयते इत्यादि वौऽजप्यरे इति दीर्घः। अस्तावीति ञ्णित्यन्तेजिति वृद्धिः इणस्तन् लोप्यः ॥९२१॥

## ९२२ । हन-ग्रह-दृशचः सि-ड्यादेर्मिण् वा ।

हन ग्रह-दृश-अच: ५।, सि ड्यादे: ६।, मिण् ।१।, वा ।१।।

एभ्यः परासां सिडीढीतीथीनां मिण् वा स्यात् ढ भावे। अस्ताविषाताम् अस्तोषातां हरिहरौ। तुष्टुवे, स्ताविता स्तविता स्तोता, स्ताविषीष्ट स्तोषीष्ट, स्ताविष्यते स्तोष्यते, अस्ताविष्यत अस्तोष्यत। स्मर्य्यते अर्य्यते संस्क्रियते।

## ९२३ । नेण् तपोऽनुतापे ।

न ।१।. इण् ।१।, तप: ५।, अनुतापे ७।।

अन्वतप्त। दीयते।

## ९२४ । यन् ञ्णित्कृदिण्यातः ।

यन् ।१।, ञ्णित्कृदिणि ७।, आत: ६।।

आदन्तानां यन् स्यात् ञ्णिति कृति इणि च।

अदायि, अदायिषाताम् अदिषाताम्।

हन्यते अवधि अघानि, अघानिषाताम् अवधिषाताम् आहसाताम्।

---

हनश्च ग्रहश्च दृश् च अच्च हनग्रहदृशच्, तस्मात्। सिश्च ड्यादिश्च सिड्यादि: तस्य। मिण्वादादौ णित्वात् वृद्धि:। इमौ बाधकोऽयम्। अस्ताविषातामित्यादि मिणि वृद्धि:। पक्षे नेमैकाजिति इम्निषेध:। स्तावितेति मिणि वृद्धि: पक्षे वेमसहेतीम् वा। अन्यत् सुगमम्। स्मर्य्यते इति स्याद्यर्तृत इति गुण:। एवम् अर्य्यते संस्क्रियते इति स्कृ स्तु व्यामिवेति गुणनियमाभावे ऋद्रि: ॥९२२॥

तपोऽनुतापेऽर्थे इण् न स्यात् ढभावे। अन्वतप्तेति तनि इणो निषेधे स्यां सौ औदित्वादिमो निषेधे सेर्लोप:। अनुतापे किम्? अतापि सूर्य्येण भूमि:। दीयते इति दाञ दान दो दाल देङ् दामागै इति ङी ॥९२३॥

ञ च ण च ञ्णौ ञ्णावितौ यस्य स ञ्णित् ञ्णिच्चासौ कृच्चेति ञ्णित्कृत् ञ्णित् कृच्च इण्च ञ्णित्कृदिण् तस्मिन्। ञ्णितीत्यनेनैवेष्टसिद्धौ कृदिति विशेषणं दरिद्रातेर्णपियनागमनिषेधार्थम्। अन्यथा लोपस्याप्यादेशत्वे आगमादेशयोर्मध्ये बलो-

গৃহ্যতে অগ্রাহি, অগ্রাহিষাতাম্ অগ্রহীষাতাম্।

দৃশ্যতে অদর্শি, অদর্শিষাতাম্ অদৃক্ষাতাম্।

শম্যতে মোহো মুকুন্দেন, অশমি অশামি, অশমিষাতাম্ অশামিষাতাম্, অশময়িষাতাম্ অশাময়িষাতাম্।

## ৯২৫। ভাবে মাদ্যম্।

ভাবে ৭, মাদ্যম্ ১।।

মস্যাদ্যং বচনং ভাবে প্রযুজ্যতে। ময়া ভূয়তে, অভাবি, বভূবে বুভূবে ভাবিতা ভবিতা। শম্যতে মুনিনা অশমি। অকামি অবামি আচামি। ব্যশমি ব্যশামি। অবধি। অজাগারি। জৌ তু অজাগরি অজাগারি।

---

যানাগমো বিধিরিতি ন্যায়াৎ দদরিদ্র ইত্যত্র দরিদ্র আলোপ ইতি সূত্রং বাধিত্বা যনাগমাপত্তেঃ। অদায়ীতি দাস্বরূপাৎ ... ইণি তনো লোপে অনেন যন্। অদায়িষাতামিতি আতাং ব্যাং সিঃ মিণ্ ইণ্ নিঘারভেদাৎ ঘণ্। পক্ষে স্থাদীরিতি ঙিঃ অদিষাতাম্ অঘানীতি হনতন্ ইণি তন্লোপঃ। খিহৌ ঘ ইতি হস্য ঘঃ বৃদ্ধিঃ অঘানিষাতামিত্যাদি হন আতাং ব্যাং সিঃ মিণি হস্য ঘঃ বৃদ্ধিঃ। মিণো প্রাপ্তৌ হনঃ কিত্সিরিতি সেঃ কিত্ত্বে বনতনেতি নলোপঃ। পক্ষে বধাদেশঃ। গৃহ্যতে ইতি গ্রহাদিত্বাৎ জিঃ। অগ্রাহিষাতামিত্যাদি মিণি বৃদ্ধিঃ। পক্ষে ইমি গ্রহেরিমো ঘঃ। অদর্শিষাতামিত্যাদি মিণি গুণঃ। পক্ষে ঔদিত্বাৎ নেম্ শক্রাজেবি ষঙ্ ষঢোঃ কঃ সে ইগুঙুরিতি সেঃ কিত্ত্বে ন গুণঃ ক্বিত্বাদিতি ষত্বম্। শম্যতে ইতি শমুভির্যশমে জিঃ বৃদ্ধিঃ ঘটাদিজনীতি হ্রস্বঃ। শমি ইতি স্থিতে যকি ঞেলোপঃ। মোহ ইতি অজান্তকর্ত্তুঃ কর্ম্মত্বাদুক্তকর্ম্মণি প্রথমা অশমীত্যাদি শমি ইতি স্থিতে তন্ ইণি তল্লোপে ঞৌষমীস্তু ঘংশেতি হ্রস্বো দীর্ঘশ্চ ঞেলোপঃ। অশমিষা-তামিত্যাদি শমি আতাং ব্যাং সিঃ ঞ্যন্তত্বেন অজন্তত্বাৎ মিণ্। ঞৌষমীস্তু ঘংশেতি হ্রস্বে দীর্ঘে চ ঞেলোপঃ। মিণোঽভাবপক্ষে ইমি ন ঞেলোপঃ॥ ৯২৪॥

অকর্ম্মকাদ্ধাতোরেব ভাবেত্যাদি বিভক্তয়ঃ স্যুর্নতু সকর্ম্মকাৎ, কৃত্প্রত্যয়াস্তু সকর্ম্মকাদকর্ম্মকাচ্চ ভাবে স্যুঃ। তেন কাং দিশং গন্তব্যং সভাং বা ন প্রবেষ্টব্যং

## ९२६। भन्ज्ऽगिलम्भो वेण्णमो र्नं लोपः।

भन्ज् अगिलम्भः ६।, वा ।१।, इण्णमोः ७॥, न लोपः १।।

अनयोर्नलोपो वा स्यात् इण्णमोः परयोः।

अभाजि अभञ्जि, अलाभि अलम्भि। गौ तु प्रालम्भि।

## ९२७। ढवत् ढघोऽढ़े।

ढवत् ।१।, ढघः १।, अढ़े ७।।

ढमेव घत्वं प्राप्तं ढघः, स च ढवत् स्यात् न तु ढे सति। तथाच—क्रियमाणन्तु यत् कर्म्म स्वयमेव प्रसिध्यति।

---

क्वाचित्क ग्रन्थस्य पाठः शिष्टोः ग्रयनमित्यादि। भावी धात्वर्थः। या विभक्तिर्भवितु-मर्हति तस्या आद्यं वचनं स्यादित्यर्थः। तेन भूयते भूयेत भूयतामित्यादि। ननु धात्वर्थस्य वाच्यत्वे युष्मदस्मदोरवाच्यत्वात् से-प्रभृतयो न स्युः एवं धात्वर्थस्य द्वित्वादेरविवक्षायां द्विवचनबहुवचने न स्त इति पारिशेष्यादेवाद्यं वचनं भविष्यति किमनेनेति चेत् प्रक्रियैवेयं गरीयसीति सूत्रविधानं धात्वर्थस्य द्वित्वविवक्षया देवाभ्यां भूयते इत्यत्र द्विवचनप्रसक्तिनिरासार्थं वेति विद्यानिवासः। भूयते इति भू सत्तायाम् अकर्म्मकत्वाद्भावे ते यक्। अभावीति तनि इणि वृद्धिः। बभूवे इत्यादि भूवोऽङ्ङ् ठ्यामिति अङ् वा इटं परे नेच्छन्ति। भाविवेत्यादि मिण् वा। शम्यत इणि समुभिर्यक्षमे ते यक्। अशमीति इणि ञ्णित्यन्ते जुङ्तोरिति वृद्धौ जनबध इति ह्रस्वः। कम वमाचम वर्जनात् अकामि अवामि आचामि एषु न ह्रस्वः। आचमो वर्जनात् अचमीत्यत्र ह्रस्वः। अमयमविश्रमस्तु वेति व्यश्रमि व्यश्रामि। एवं मा अमि आमि अयमि अयामि। अवधीति बध हतौ जन बधेति ह्रस्वः। अजागरीति जाग्रोऽणव्वीणिति गुणनिषेधे वृद्धिः। औ तु औरस्-मोस्तुर्घश्च जागृश्चेति वा दीर्घे अजागरि अजागारीति॥ ९२५॥

नास्ति गिर्यस्मिन् सोऽगिः। अगिश्चासौ लम्भ चेति अगिलम्भ। भन्ज च अगिलम्भ च भन्जगिलम्भ तस्य। अनयोर्मस्य लोपः स्याद्वा इणि नमि च परे। अभाजीत्यादि भन्ज धौ मोटने नलोपभावे वृद्धिः। अलाभीत्यादि लभङ्डौङ् यमाप्तौ इणि परे नुण् बध इति नुणि अनेन नकारलोपे वृद्धिः णमि भाजं भाजं भन्जं भन्जं लाभं लाभं लम्भं लम्भम्। गौ तु इति उपसर्ग उपपदे सतीत्यर्थः। अस्येव

सुकरैः स्वैर्गुणैः कर्त्तुः कर्मकर्त्तेति तद्विदुः ॥
स्वयमेव भिद्यते काष्ठम् अभेदि।

## ९२८। कुषि-रन्जः श्यन्-पे वा रे।

कुषि रन्जः ५।, श्यन् पे १॥, वा ।१।, रे ७।।

कुष्यति कुष्यते रज्यति रज्यते।

---

घटः। पश्य इत्यादौ कर्म्मतोऽपि कर्त्तुर्बलवत्त्वात् कर्मकर्त्तरि कर्त्तृविहितकार्य्य-प्राप्तौ कर्मविहितकार्य्यायमाह ॥ ९२६ ॥

ढश्च तत् घश्चेति ढघः। आदौ ढं पश्चात् घः इत्यर्थः। कर्मणः कर्त्तृत्वविवक्षायां कर्मकर्त्ता स च ढवत् स्यात् न तु ढे कर्मणि सति। द्विकर्मकाणामेक-कर्मणि विद्यमाने कर्मान्तरस्य कर्त्तृत्वविवक्षा नास्तीत्यर्थः तेन याच्यते राजा स्वयमेव भूमिमिति न स्यात्। कर्मस्थभावधातूनामेव कर्मणः कर्त्तृत्वविवक्षा यथा। पच्यते ओदनः स्वयमेव भिद्यते काष्ठं स्वयमेवेत्यादि। आतिदेशिक-मनित्यमिति न्यायात् कर्त्तृस्थभावधातूनां न स्यादिति बोध्यम्। तेन खाद्यते ओदनः स्वयमेव गम्यते ग्रामः स्वयमेव इत्यादि न स्यात्। तथाच कर्मस्थः पचतेर्भावः कर्मस्थाश्च भिदादयः। बुधस्तु भावः कर्त्तृस्थः कर्त्तृस्थाश्च गमादयः इति प्राञ्चः। पच्यतेर्भावस्तण्डुलादीनां विक्लित्तिस्तण्डुलादिष्वेव भवति न तु पाक-कर्त्तरि। एवं भिनत्त्यादेर्भावो भेदादिः काष्ठादिष्वेव न तु भेदाद्विकर्त्तरि। बुधेर्भावो ज्ञानं शिष्येष्वेव न तु ग्रन्थादौ। एवं गमादीनां भावः पादचलनादि-र्गमनादिकर्त्तृष्वेव न तु ग्रामादावित्यर्थः। ढवदित्यनेन कर्मविहितमात्मनेपद-गमादिकमतिदिश्यते न तु कर्मकर्त्तुः कर्मत्वं विधीयते। तेनाकर्मकत्वात् भिद्यते काष्ठेन स्वयमेवेति भावे प्रत्ययः स्यात् किञ्च एकक्रियाकर्मणः कर्त्तृत्वं विवक्ष्यते इति बोध्यम्। तेन पचत्योदनं राध्यते स्वयमेवेत्यत्र न स्यात्। एवं भिन्नप्रकरण-त्वात्तव्यादौ विषयेऽपि कर्मणः कर्त्तृत्वं न विवक्ष्यते तेन कर्त्तव्यं कटेन स्वयमेव इत्यादि न स्यात्। एकक्रियायामेकस्य कर्मत्वं कर्त्तृत्वञ्च कथं सम्भवतीत्याह। क्रियमाणमित्यादि। क्रियमाणं यत् कर्म तत् स्वैर्गुणैः स्वयमेव यदि प्रसिध्यति निष्पद्यते तदा तत् कर्मकर्त्तेति विदुर्जानन्ति बुधा इति शेषः। स्वैर्गुणैः कीदृशैः कर्त्तुः सुकरैः सुखकरैरित्यर्थः ॥ ९२७ ॥

श्यन् च पश्च श्यन्पे। आभ्यां रे विषये श्यन् परस्मैपदञ्च स्याद्वा कर्मकर्त्तरि।

## ९२९। वेणज्दुहः।

वा।१।, इण्।१।, अज्दुहः ५।।

अजन्तात् दुहश्च इण् स्यात् वा ढघे। अकारि अक्वत, अदोहि अदुग्ध।

## ९३०। न तप-रुधः सढ़-पच-दुहः।

न।१।, तप रुध सढ़ पच-दुहः ५।।

तपो रुधः सढ़ाभ्यां पचदुहाभ्यां च इण् न स्यात् ढघे। अतप्त, अरुद्ध। अपक्त आम्रः फलं, अदुग्ध गौर्दुग्धम्। अत-एवानयोर्ढेऽपि ढघत्वम्।

---

कुष्यतीत्यादि कुष ग निष्कर्षे रे परे परस्मैपदं श्यन् च वा। पच्चे ते यक्। रज्य-तीत्यादि रन्जौ रागे हसुङ् इति नलोपः। रे किम्? अकोषि चुकुषे अरांजि ररंजे ररञ्जे पं वेति क्ततेऽपि रतनोर्यगिणावित्यनेनापीष्टसिद्धौ श्यन्विधानं कुष्यन्ती बाला स्वयमेव रज्यन्ती शाटी स्वयमेव इत्यत्र अप्यनी नित्यमिति नुणार्थम्॥ ९२८॥

अजन्ताद् दुहश्च इण् वा स्यात् तनि परे कर्म्मकर्त्तरि। वा ग्रहणं वाधिकार-निवृत्त्यर्थम्। अकारीत्यादि इण्तनो लोपे वृद्धिः। पच्चे ठ्यां सिः नेमिकाज्जिति नेम् इगुङुरिति सेः कित्त्वाद्गुणाभावे सेर्लोपः। अदोहीत्यादि इणि गुणः पच्चे गृहदुहदिहलिहामित्यनेन सेर्निषेधे सकोऽप्राप्तिपच्चे अदुग्धेति॥९२९॥

सह ढेन वर्त्तेते यौ तौ सढौ सढौ च तौ पचदुहौ चेति सढपचदुहौ। तपश्च रुधश्च सढपचदुहौ चेति तस्मात्। अतप्तेत्यादि ठ्यां सिः औदित्त्वान्नेम् सेर्लोपः। अपक्ताम्र इत्यादि काल आम्रवृत्तं फलं पचति गोपो गां दुग्धं दोग्धि इति स्थितम्। ततो आम्रवृत्तः स्वयं फलमपक्त गौश्च स्वयं दुग्धमदुग्ध इत्याम्रस्य गौश्च कर्म्मकर्तृत्वम्। अतएवेति सकर्म्मकपचदुहाभ्यां कर्म्मकर्त्तरि इण् निषेधादेव अनयोः कर्म्मान्तरे विद्यमानेऽपि कर्म्मकर्त्तृत्वम्॥९३०॥

**९३१। सन श्रन्थ ग्रन्थ ब्रू कॄ गॄ दुह नम-भूषार्थाद् यक् च ञि स्नु श्रिमाढ़ात्त्वमिण्।**

सन—भूषार्थात् ५।, यक् ।१।, च ।१।, ञि—माढात् ५।, तु ।१।, अमिण् ।१।।

सनन्तादेरिण् यक् च न स्यात् ढघे, ञ्यन्तादेस्तु मिण्-वर्जम्। चिकीर्षते अचिकीर्षिष्ट। श्रथ्नीते अश्रन्थिष्ट, ग्रथ्नीते अग्रन्थिष्ट। ब्रूते अवोचत। किरते अकीर्ष्ट, गिरते अगीर्ष्ट। दुग्धे अदुग्ध। नमते अनंस्त। तंसते अतंसिष्ट। कारयते, अचीकरत अकारिष्ट अकारयिष्ट। स्नुते अस्नाविष्ट अस्नोष्ट। श्रयते अशिश्रियत अश्रायिष्ट अश्रयिष्ट। आहते आवधिष्ट आघानिष्ट आहत।

---

सन् सनन्तः। भूषा अर्थो यस्य स भूषार्थः। सन् च श्रन्यश्च ग्रन्यश्च ब्रूश्च कॄश्च गॄश्च दुहश्च नमश्च भूषार्थश्चेति तस्मात्। ञिर्ञ्यन्तः। मे आत्मनेपदेऽढोऽकर्म्मकः माढः। ञिश्च स्नुश्च श्रिश्च माढ़श्चेति तस्मात्। न मिण् अमिण्। सनन्तादेरिण् यक् च न स्यात् इणोऽभिन्नत्वेन मिणपि न स्यात् ढघे। ञ्यन्तादेन्तु मिण् भिन्नः इण् यक् च न स्यात् मिण् तु स्यादेवेत्यर्थः। चिकीर्षते इति करोतेः सनन्तात् ते यको निषेधे आंशिककर्त्तृत्वात् शप्। इति घे शप्रे इत्यत्र व्याख्यातम्। अचिकीर्षिष्टेति तनि इणो निषेधे ञ्यां सिः मिणोऽपि निषेधे वसोऽरस्येतीम्। न च सकृद्गतौ विप्रतिषेधौ यद्बाधितं तद्बाधितमेवेति न्यायात् सिबाधकस्य इणोऽपि निषेधे पुनः कथं ञ्यां सिरिति वाच्यं न्यायानामसार्वत्रिकत्वात्। अतएव शिष्टपद-साधनायैव न्यायः स्वीक्रियते नत्वनिष्टार्थमिति सम्प्रदायः। श्रथ्नीते इति श्रन्थ गमोचे ते यको निषेधे आंशिककर्त्तृत्वात् श्ना श्नात्योरिति ईः इसुङ् इति न लोपः। अश्रान्थिष्टेति तनि इणो निषेधे सिः एवं ग्रन्थकिग दर्भे ग्रथ्नीते अग्रन्थिष्ट। मैत्रेयस्तु श्रथिङ् शैथिल्ये ग्रथिङ् कौटिल्ये इति भौवादिकौ मत्वा श्रन्थते ग्रन्थते इति स्वयमेवोदाहरति। ब्रूते श्लोकः स्वयमेव ब्रूलनुक्तौ ते यको निषेधे शप् शपो लुक्। अवोचतेति तनि इणो निषेधेऽरविषये वचादेशे नक्यस्येतिङे वोचादेशः। किरते इति कृश विक्षेपे ते यको निषेधे शः। अकीर्ष्टेति तनि इणो निषेधे सिः

**९३२। न्यादिञान्ताढ़गत्यर्था मुख्ये ढे ढत्वमाप्नुयुः।
गौणे याचादयोऽन्ये तु यथेष्टं ढिढ़धुष्विति॥**

न्यादि-गत्यर्था १।॥, मुख्ये ७।, ढे ७।, ढत्वं २।, आप्नुयुः क्रियापदं गौणे ७।, याचादयः १।॥, अन्ये १।॥, तु ।१।, यथेष्टं २।, ढिढ़धुषु ७।॥, इति ।१।।

**निन्ये विजनमजागरि रजनिमगमि मुदमयाचि सम्भोगम्।**

स्याद्यृद्दृदुरिति इमोऽभावपक्षे इगुङुरिति सेः किच्चे इरि दीर्घः। एवं गृप्त निगरणे गिरते अगीर्ष्टि। दुग्धे इति दुहलञौ दुहि ते यकी निषेधे शप् शपी लुक्। अदुग्ध इति तनि इणी निषेधे गुहदुहदिहेति सकोऽप्राप्तिपक्षे सेर्निषेधः। किञ्च दुहधातोः पूर्व्वेणैव इण् निषेधे सिद्धेऽत्र ग्रहणं यक्निषेधार्थम्। नमते इति नमौ शब्दनत्योः ते यकी निषेधे शप्। नमतिरिहान्तर्भूतञ्यर्थः। तेन शिशुर्यां शाखां नमयति सा शाखा स्वयमेव नमते इत्यर्थः। अनंस्तेति तनि इणी निषेधे ष्यां सिः। तसते इति तसि कलङ्कृतौ ते यकी निषेधे शप्। अतंसिष्टेति इणी निषेधे सिः। कारयते इति कृञ ञिः कारीति स्थिते ते यकी निषेधे शप्। अचीकरतेति कारि-तन् इणी निषेधे ञिश्रीत्यङ्। अङी नित्यत्वेऽपि विधिबलादातो य्यत्वमितिवत् ञ्यादेस्तु सिण्वर्जमिति वचनेन सिणः प्राप्त्यनुरोधात् ञ्यन्तश्रिभ्यां पक्षे ष्यां सिः। अकारयिष्टेति सिणोऽप्राप्तिपक्षे इमि ञेर्न लोपः अकारिष्टेति सिणि ञेर्लोपः। दुर्गसिंहस्तु ञ्यन्तब्रूञोः कर्तृस्थ भावत्वात् कर्म्मकर्तृत्वाभावे यगादिर्न स्यादेव आत्मनेपदन्तु फलवत् कर्तृकत्वादित्याह। वस्तुतस्तु प्रेरणवचनयोरपि कर्म्मस्थत्वं सम्भवतीति यगादिनिषेधः सफलः। सूते इति षूल प्रसूत्यां ते यकी निषेधे शप् शपी लुक्। असोष्टेत्यादि सिणोऽप्राप्तिपक्षे स्नुक्रमोऽमे इति नियमान्न इम्। सिण्-पक्षे वृद्धिः। स्नुनमोः परप्रयोज्यत्वे न स्यात्। यथा प्रस्नौति गौर्दोग्धुः कौशलेन नमति शाखाभारेण श्रयते इति श्रिञ सेवने ते यकी निषेधे शप्। अश्रायिष्टे-त्यादि अङी नित्यत्वेऽपि सिण् प्राप्त्यनुरोधात् पक्षे ष्यां सिः सिणि वृद्धिः। सिणो-ऽप्राप्तिपक्षे इम्। आहते इति हन ते यकी निषेधे शप् शपी लुक् वनतनेति न लोपः। आहतेत्यादि तनि इणी निषेधे ष्यां सिः सिणोऽप्राप्तिपक्षे सेः किच्चे वनतनेति न लोपे सेर्लोपः सिण् पक्षे तु खेर्हीघ इति हस्य घत्वे वृद्धिः आङ्पूर्व-हन्तेरकर्म्मकादात्मनेपदविधानात् सकर्म्मकोऽप्ययं माढ़ः अकर्म्मकस्य कर्म्मकर्तृत्वा-सम्भवात्। आहते शत्रुः स्वयमेवेत्यर्थः। माढ़ात् किम्? हन्यते शत्रुः स्वयमेव अघानि अत्र यगिणौ स्यातामेव। द्विकर्म्मकेभ्यः कर्म्मणि वाच्ये प्रत्ययोत्पत्तौ मुख्यं गौणं-मुभयं वा कर्म्म उक्तं भवतीति सन्देहे व्यवस्थामाह॥९३१॥

गोपी ह्यावमकार्य्यत भावश्चेनामनन्तेन ॥

इति ढभाव-पादः।

---

नास्ति ढं कर्म्म यस्य सोऽढः। अढश्च गत्यर्थश्च अढगत्यर्थौ। न्यन्तौ च तौ अढगत्यर्थौ चेति न्यन्ताढगत्यर्थौ। न्यादयश्च न्यन्ताढगत्यर्थौ च ते द्विकर्मकधातुषु मध्ये न्यादयो नी वह हृदण्डि ग्रह क्रुष मन्थ मुष पचाद्या नव। न्यन्ताकर्मका न्यन्तगत्यर्थाश्च धातवो मुख्ये ढे कर्मणि वाच्ये ढत्यम् कर्म्मप्रत्ययं प्राप्नुयुः। याचादयो याचार्द्द दुह चि प्रच्छ रुध ब्रू शास जीत्यष्टौ धातवो गौणे कर्मणि वाच्ये कर्म-प्रत्ययं प्राप्नुयुः। अन्ये तु न्यन्ताः शब्दार्थ अशनार्थ ग्रह क्रुष युह हृ कृ इत्यष्टौ धातवो यथेष्टं मुख्ये कर्मणि वाच्ये गौणे कर्मणि वाच्ये वा कर्मप्रत्ययं प्राप्नुयुरिति व्यवस्था। निन्ये इत्यादि। अनन्तेन गोपी विजनं निन्ये अत्र गोपीति मुख्यम् कर्म उक्तम्। अनन्तेन गोपी रजनिम् अजागरि। देशाध्वकालेत्यादिना रजनेः कर्मत्वे सकर्मकस्यापि जागृधातोः स्वभावादकर्मकत्वात् अन्यन्तकर्त्त्र्या गोप्याः कर्मत्वम्। ततश्च प्रेरणक्रियाया मुख्यम् कर्म गोपीत्युक्तम्। अनन्तेन गोपी मुदं हर्षम् अगमि प्रापितेत्यर्थः। अत्रापि गोपी मुख्यम् कर्म उक्तम्। अनन्तेन गोपी सम्भोगम् अयाचि अत्र गोपीति गौणम् कर्म उक्तम्। यथेष्टमाह। अनन्तेन गोपी ह्यावमकार्य्यत अत्र गोपीति मुख्यम् कर्म उक्तम्। अनन्तेन एनां गोपीं भावश्च अकार्य्यत अत्र भाव इति गौणम् कर्मोक्तम्। कृत्प्रत्ययेषु अपि एवम्। यथा तेन गावो वनं नीताः शायिताः शिशवो निशाम्। सन्तोषं गमिता गोप्यो यशोदा याचिता घृतम्। प्रणामं कारितो ब्रह्मा ब्रह्माणं कारिता स्तुतिः। यथेष्टमिति कस्यचिदनुरोधादुक्तम्। सर्वत्र न्यन्तानां प्रयोज्यकर्मैवोक्तं भवतीति पाणिनिसर्ववर्मक्रमदीश्वराः। एवं द्विकर्मकाणामेककर्मप्रयोगे तदेवोक्तं भवति यथा नीयते ग्रामः याच्यते भूमिरित्यादि। अकर्मकास्तु—सत्ताजीवनदर्पभीतिशयन-क्रीडानिवासच्युया व्यक्तध्याननभोगतिस्थितिजरालज्जाप्रमादोदये। उन्मादे च पला-यनभ्रमणयोः ख्यातौ चवे खोटने, साहि धावनयुद्धगृद्धिदहने शान्तौ प्लुतौ मज्जने। दीप्तौ जागरशोषवक्रगमनोल्लाहे स्तौ संशये, ग्लानौ मन्दगतौ च नृत्यपतने चेष्टा-कुर्धोरोदने। वृद्धौ ह्यावकृतौ च सिद्धिविरतौ हर्षोपवेशे बले, कम्पोद्देगनिमेष सङ्कुचतनखेदे धवोऽकर्मकाः। दौर्बल्यादिषु चार्थेषु वर्त्तमानास्तु धातवः। वाचका भावमात्रस्य यतस्तस्मादकर्मकाः। कौटिल्यादिषु चार्थेषु प्रोक्ता ये ते तु धातवः। ऽदाद्येऽकर्मकाः स्युस्तदन्यार्था सकर्मकाः। इति। सकर्मकाश्च कर्माविव-

# चतुर्थः पादः—क्तिः ।

## ९३३ । भवद्भूत-भव्ये त्रिशः क्याद्याः ।

भवत् भूत भव्ये ७।, त्रिशः ।१।।।, काद्याः १।।। ।

क्याद्याः त्रयस्त्रिस्त्रिसः क्रमाद्वर्त्तमानातीतभविष्यत्सु कालेषु स्युः ।

शेते स चित्तशयने मम मीनकुर्म्म-
कोलोऽभवन्नृहरिवामनजामदग्न्यः ।
योऽभूद्बभूव भरताग्रजकृष्णबुद्धः
कल्कौ सताञ्च भविता प्रहरिष्यतेऽरीन् ॥

---

चायामकर्मका भवन्ति । तथाच गोयीचन्द्रः । धातोरर्थान्तरे वृत्तेर्धात्वर्थेनोप सग्रहात् । प्रसिद्धेरविवक्षातः कर्मणोऽकर्मिका क्रियेति । धात्वर्थेन सह कर्मण उपसंग्रहादित्यर्थः । क्रमेणोदाहरणानि । नदी वहति चरतीत्यर्थः । अघयति व्याधः । भवति घटः । आह्वते जनः । तपस्यति मुनिरित्यादि ॥ ९३२ ॥

इति ढभावपादः ।

---

भवंश्च भूतश्च भव्यश्च तत् भवद्भूतभव्यं तस्मिन् । अत्र काले इति विशेष्यं पद मध्याहार्य्यं भवन्निति वर्त्तमाने शतुर्विधानाद्वर्त्तमानः । भूत इति अतीते क्तवि- धानादतीतः । भव्यो भविष्यत्कालः सामान्यकाले तव्यादिविधानादिह भविष्यत्- काले यः । ननु एको नित्यः कालस्तस्य भूतत्वं भविष्यत्त्वञ्च कथं सम्भवतीति चेत् सत्यं क्रियाया भूतत्वभविष्यत्त्वाभ्यां कालस्य भूतत्वभविष्यत्त्वे उपचारात् । एक- स्याप्याकाशस्य घटाकाशपटाकाशादिभेदवत् । आरब्धपरिसमाप्तिर्वर्त्तमानः। यथा महाभारतं पठति । सोऽपि चतुर्विधः । यथा प्रवृत्तोपरतश्चैव वृत्ताविरत एव च । नित्यप्रवृत्तिः सामीप्यो वर्त्तमानश्चतुर्विधः । मांसं न खादति आदौ प्रवृत्तं मांसभोजनं निवर्त्तयतीत्यर्थः । इह कुमाराः क्रीड़न्ति तदानीन्तनक्रीडना- भावेऽपि पूर्वक्रीड़ाया बुद्धौ वर्त्तमानत्वात् । पर्वतास्तिष्ठन्ति नित्यप्रवृत्तत्वात् । किञ्च पर्वतानां स्थितेर्वर्त्तमानत्वेऽपि भूतभविष्यत्कालाभ्यां सम्बन्धविवक्षया पर्वतास्तस्थुः पर्वताः स्थास्यन्तीत्यपि स्यात् । सामीप्यो द्विविधः भूतः भविष्यञ्च । भूतसामीप्यो

## ९३४। की स्मेनातीते।

की ।१।, स्मेन ३।, अतीते ७।।

**स्मेन योगे अतीते काले की स्यात्।**

**हन्ति स्म रावणं रामः।**

---

यथा कदा आगतोऽसीति प्रश्ने अध्वखेदाद्वर्त्तमानत्वात् एषोऽहमागच्छामीति आगतोऽपि वदति भविष्यत्सामीप्यो यथा कदा गमिष्यसीति प्रश्ने एषोऽहं गच्छामीति गमनाय क्रियमाणोद्यमोऽपि वदति। खीमीटीनां विशेषं वक्ष्यतीति ता विहायोदाहरन् दशावतारान् कीर्त्तयति शेते इत्यादि। यो मीनकूर्मकोलोऽभवत् नृहरिवामनजामदग्न्योऽभूत् भरताग्रजकृष्णबुद्धो बभूव कल्की भविता स तानरीन् प्रहरिष्यते च स मम चित्तशयने शेते इत्यन्वयः। मीनकूर्माभ्यां सहितः कोलः मीनकूर्मकोल इति मध्यपदलोपी समासः पृथक्साहित्यात् मीनकूर्मावभवतां कोलश्चाभवदित्यर्थः। एवं नृहरिवामनाभ्यां सहितो जामदग्न्यः। भरताग्रजकृष्णाभ्यां सहितो बुद्ध इति विग्रहः। अन्ये तु अद्यभवोऽद्यतनः स च पूर्वापरनिशायामौ दिनेनाद्यतनं विदुरिति पारिभाषिकः। अद्यतनेऽतीते टी स्यात्। अद्याभूदवलोकनं मृगदृशः। अनद्यतनेऽतीते घी। अकरीदचिरेश्वरः चितौ द्विषदारम्भफलानि भस्मसात् इति रघौ। अनद्यतने परोक्षेऽतीते ठी। यशोधनो धेनुमृषेर्मुमोच। अत्यन्तापह्नवे चित्तविक्षेपे च ठी। यथा त्वं मया कलिङ्गे दृष्टोऽसि इत्युक्तो नाहं कलिङ्गं जगाम। रचितन्तु कलिङ्गशब्दं नित्यबहुवहुवचनान्तमाह। चित्तविक्षेपे यथा सुप्तोऽहं किम्? विललाप मत्तोऽहं किम् विचचार इत्याह। किञ्च अभूत् नृपो विबुधसख इति भट्टिः। खहस्तदत्ते मुनिमासने मुनिश्चिरन्तनस्तावदभिन्यवीविशदिति माघः। इत्यादावनद्यतनेऽपि टीदर्शनात्। एवम् अद्यावदद्दशमुखैर्दशकन्धरोऽसाविति भट्टिः। इत्यादावद्यतनेऽपि घीदर्शनात्। एवञ्च व्यातेने किरणावलीमुदयनः सत्तर्कतेजोमयीम् इत्याचार्यः। इत्यादावपरोक्षेऽपि ठीदर्शनादेतान्यनेनोपेक्षितानि। ततश्च चिरातीते निकटातीते वा परोक्षे अपरोक्षे वा घीटीठ्यः स्युरिति। एवम् अद्यतनभव्ये ष्टी दूरभव्ये तीति सम्प्रदायः। श्वो भविता। वर्षान्तरे भविष्यति सुखम्॥ ९३३॥

स्मेन योगे अतीते की स्यात्। एवं प्रश्नोत्तरवचने ननुना योगे अतीते कीति वक्तव्यम्। अभूत् किम्? घटः ननु भवति॥ ९३४॥

## ९३५ । यावत्-पुराभ्यां भव्ये ।

यावत्-पुराभ्यां ३॥, भव्ये ७। ।

यावद्भवति कल्को, पुरा दृश्यते कल्की ।

## ९३६ । कदा-कर्हिभ्यां वा ।

कदा-कर्हिभ्यां ३॥, वा ।१। ।

कदा पश्यामि गोविन्दं, कर्हि द्रक्ष्यामि शङ्करम् ।

## ९३७ । किम्भिर्लिप्सायाम् ।

किम्भिः ३॥, लिप्सायाम् ७। ।

डतरडतमत्यन्तकिमोरूपैर्योगे भव्ये कौ वा स्यात् लिप्सायाम् । कतरः कतमः को वा भिक्षां रास्यति राति वा ।

## ९३८ । लिप्स्यसिद्धौ ।

लिपस्यसिद्धौ ७। ।

लिप्स्येनान्नादिना स्वर्गादेः सिद्धौ सत्यां भव्ये कौ वा स्यात् । यो भिक्षां ददाति दास्यति वा स स्वर्गं याति यास्यति वा ।

---

आभ्यां योगे भव्ये कौ स्यात् । निकटागामिके पुरा तत्साहचर्य्यात् यावदित्यव्ययमेव । तेन यावत् दास्यति तावत् भोक्ष्यते भव न स्यात् ॥ ९३५ ॥

आभ्यां योगे भव्ये कौ वा स्यात् ॥ ९३६ ॥

लब्धुमिच्छा लिप्सा । रास्यतीति रालदाने ॥ ९३७ ॥

लब्धुमिष्यते यत्तत् लिप्स्यम् । तेन सिद्धिर्लिप्स्यसिद्धिः पृथक्योगात् किम्भिरिति नानुवर्त्तते ॥ ९३८ ॥

## ९३९। ग्यर्थाशंसयोः।

ग्यर्थाशंसयोः ७॥।

ग्या अर्थे प्रैष्यादौ आशंसायाञ्च भव्ये क्रौ वा स्यात्। गुरुश्चेदायाति आयास्यति वा, अथ त्वं वेदमधीष्व वयं तर्कमधीमहे।

## ९४०। जात्वपिभ्यां सदा क्षेपे।

जा तु-अपिभ्यां ३॥, सदा ७, क्षेपे ७।

जातु निन्दसि गोविन्दमपि निन्दसि शङ्करम्।

## ९४१। कथमा खौ च वा।

कथमा ३।, खौ ।१।, च ।१।, वा ।१।

कथं निन्दस्यजं, निन्देःशम्भुं, देवीं निनिन्दिथ।

## ९४२। किम्भिः खौ-त्यौ।

किम्भिः ३॥, खौ-त्यौ १॥।

को निन्दिष्यति लक्ष्मीशं निन्देत् कतर ईश्वरम्।

---

ग्या अर्थः ग्यर्थः। वक्ष्यमाणग्यर्थेषु विध्यादिषु लक्षे प्रैष्यदात्मकालानुमतय एव गृह्यन्ते। आशंसा आशीः। अधीष्वेति प्रैष्यादौ आशंसायां वा गौ। पक्षे अधीषे इति क्रौ च। अधीमहे इति पक्षे अध्ययामहे इति गौ च। आशंसायां क्षिप्रार्थेभव्ये तौ नित्यमिति वक्तव्यम्। वृष्टिश्चेदायास्यति क्षिप्रं चेत्रे धान्यं वप्स्यामि। अत्र नान्या विभक्तिः॥ ९३९॥

सदा शब्दस्योभयार्थत्वात् जात्वपिभ्यां योगे सर्वेषु कालेषु गर्हायां नित्यं क्रौ स्यादित्यर्थः। सर्वेषु कालेष्वित्यधिकारः। जातु कदाचित्॥ ९४०॥

कथं शब्देन योगे सर्वेषु कालेषु क्रौख्यौ वा लः गर्हायाम्। कथं निन्दसीति कथं शब्दस्य त्रिषु सम्बन्धः॥ ९४१॥

डतरडतमप्रत्ययान्तस्य किमो रूपैर्योगे सर्वेषु कालेषु खौत्यौ स्यातां गर्हायाम्। विभाषाद्वयान्तःपाठात् नित्यम्॥ ९४२॥

## ९४३ । अन्यैश्चाश्रद्धामर्षे ।

अन्यैः ३।।।, च ।१।, अश्रद्धामर्षे ७।।

किम्भिश्च [ ९३७ ]

न श्रद्दधे मर्षये नो यत् स गर्हिष्यते हरिम् ।
हरं गर्हेत को निन्देत् विष्णुं निन्दिष्यतीश्वरम् ॥

## ९४४ । किंकिलास्त्यर्थाभ्यां तौ ।

किंकिल-अस्त्यर्थाभ्यां ३।।, तौ ।१। ।

त्वं किंकिल हृषीकेशं निन्दिष्यसि, न मंस्यसे ।
महादेवं चास्ति नाम श्रद्दधे नो न मर्षये ॥

## ९४५ । जातु-यद् यदा-यदिभिः खी ।

जातु-यद् यदा यदिभिः ३।।।, खी ।१। ।

एभिर्योगे अश्रद्धामर्षे सदा काले खी स्यात् ।
न मर्षये श्रद्दधे नो जातु निन्देत् जनार्दनम् ॥

---

श्रद्धा सम्भावना मर्षः क्षमा । श्रद्धाया अभावः अश्रद्धम् । मर्षस्याभावः अमर्षम् अश्रद्धञ्च अमर्षञ्च अश्रद्धामर्षं तस्मिन् । किम्भिश्चेति वृत्तिः । डतरडतमन्त्यन्तस्य किमो रूपैरन्यशब्दैश्च योगे सर्वेषु कालेषु खीत्यौ स्तोऽश्रद्धामर्षेऽर्थे । स जनो यत् हरिं गर्हिष्यते हरं गर्हेत तदहं न श्रद्दधे । को जनो विष्णुं निन्देदीश्वरं निन्दिष्यति तदहं न मर्षये इत्यन्वयः ॥ ९४३ ॥

किमः परः किल किंकिल । अस्त्यर्थोऽस्ति भवत्यादिः । आभ्यां योगे सर्वेषु कालेषु तौ स्यादश्रद्धामर्षे । त्वमित्यादि त्वं किंकिल निश्चितं हृषीकेशं निन्दिष्यसि तदहं न श्रद्दधे न मर्षये नाम सम्भावनायां महादेवञ्च न मंस्यसे अस्ति एवमप्यस्ति तदहमिदं सम्भावयामि त्वां न श्रद्दधे न मर्षये च इत्यर्थः । केचित्तु । किम् किल इति द्वौ शब्दावन्यरहितौ व्यवहितौ च तेन किम् क्रमिष्यति किलैष वामन इति माघः इत्याहुः ॥ ९४४ ॥

जातुश्च यद् च यदा च यदिश्च ते तैर्योगे सर्वेषु कालेषु खी स्यादश्रद्धामर्षे । न मर्षये इत्यादि भवान् जातु कदाचिदपि जनार्दनं निन्देत् तन्न श्रद्दधे न मर्षये इत्यर्थः । एवं यत् निन्देत् यदा निन्देत् यदि निन्देदिति ॥ ९४५ ॥

## ९४६ । यच्च यत्राभ्यां चेपचित्रे च ।

यच्च यत्राभ्यां ३॥, चेपचित्रे ७, च ।१। ।

यच्च निन्देत् विभुं गर्हे चित्रं श्रद्धां न मर्षये ।

## ९४७ । चित्रे त्ययदिना ।

चित्रे ७, ती ।१।, अ-यदिना ३। ।

यदि-वर्जितेन शब्दमात्रेण योगे चित्रे गम्ये सदा ती स्यात् ।
चित्रं द्रक्ष्यति नामान्धः कृष्णं पश्येत् यदीश्वरम् ॥

## ९४८ । वाढ़ेऽप्युताभ्यां खौ ।

वाढ़े ७, अपि उताभ्यां ३॥, खौ ।१। ।

अपि हन्यादघं शम्भुरुत दुःखं जयेदजः ।

## ९४९ । प्रौढ्या सम्भावने ।

प्रौढ्या ३।, सम्भावने ७। ।

प्रौढ़िः सामर्थ्यम् । सम्भावनं क्रियासु योग्यताध्यवसायः प्रौढ़िहेतुक-सम्भावनोपाधिकेऽर्थे वर्त्तमानात् धोः सदा खौ स्यात् । अपि हिंस्यात् जगन्नाथो महापातकपञ्चकम् ।

---

यच्चश्च यत्रश्च तौ ताभ्याम् अश्रद्धामर्षे चेति वृत्तिः । यच्च यत्र इत्येताभ्यां योगे चेपे चित्रेऽश्रद्धामर्षे च सर्वेषु कालेषु खौ स्यात् । चेपो गर्हा । चित्रमाश्चर्य्यम् । जनो विभुं यच्च निन्देत् तदहं गर्हे तच्चित्रं तत्र श्रद्धां न करोमि तदहं न मर्षये इत्यर्थः । एवं यत्र निन्देदिति ॥ ९४६ ॥

अन्धः कृष्णं द्रक्ष्यति नाम सम्भावनायां तच्चित्रम् । अयदिना किम् ? अन्धः कृष्णं यदि पश्येत्तच्चित्रम् । अत्र खौप्रयोगं दर्शयता यदिना योगे चित्रे गम्ये सदा खौ स्यादिति सूचितम् ॥ ९४७ ॥

अतिशयार्थे वर्त्तमानाभ्यामप्युताभ्यां योगे सर्वेषु कालेषु खौ स्यात् । शम्भुरघम् अपि हन्यात् पापहननेऽतियोग्य इत्यर्थः । अजः दुःखम् उत जयेत् दुःखजयेऽतियोग्य इत्यर्थः ॥ ९४८ ॥

अपि हिंस्यादिति जगन्नाथः सामर्थ्यान्महापातकपञ्चकहिंसायां योग्य इत्यर्थः ॥ ९४९ ॥

## ९५०। अङ्गार्थैर्वाऽयदि।

अङ्गार्थैः ३॥, वा ।१।, अयदि ७।।

अङ्गधेऽजं भजेः प्राणैर्भक्ष्यसेऽजं बभक्थ तम्।

## ९५१। भव्ये वा फल-हेत्वोः।

भव्ये ७।, वा ।१।, फल-हेत्वोः ७॥।

शं यायाच्चेन्नमेदीशं श्चोशं नंक्ष्यति यास्यति।

## ९५२। कामोक्तेऽकच्चिति।

कामोक्ते ७।, अकच्चिति ७।।

कामं भजेत् भवान् भर्गं कच्चिदर्चिष्यते शिवम्।

## ९५३। गी चेच्छार्थैः।

गी ।१।, च ।१।, इच्छार्थैः ३॥।

इच्छामि, सर्वं सेवेत श्रीपतिं सेवतां भवान्।

कामोक्त इति किम्? इच्छन् करोति।

---

न यद् अयद्। अङ्गार्थैर्योगे प्रौढ्या सम्भावने सर्वेषु कालेषु खी स्याद्वा न तु यच्छब्द प्रयोगे। अङ्गधे इत्यादि। त्वं प्राणैः सामर्थ्यैरजं भजेः अङ्ग अङ्गधे। पचेऽजं भक्ष्यसे तं बभक्थ इति यथाकालं विभक्तिः। अयदि किम्? अङ्गधेऽज भवान् प्राणैर्भजेत्-यत् पुरुषोत्तमं पूर्वेण नित्यम्॥ ९५०॥

वाग्रहणं परत्र वाधिकारनिवृत्त्यर्थम्। फलक्रियायां हेतुक्रियायाञ्च वर्त्तमाना-द्धातोर्भव्ये खी वा स्यात्। जन ईशं नमेच्चेत् शं कल्याणं यायात् प्राप्नुयात्। ईशनमस्कारो हेतुः कल्याणप्राप्तिफलम्। पचे श्रीशं नंक्ष्यति चेत् शं यास्यति। भव्ये किं? हन्ति पलायते॥ ९५१॥

मण्डूकप्लुताधिकारात् सदेत्यनुवर्त्तते। कामोक्तमिच्छाप्रकाशः। तस्मिन्नर्थे सर्वेषु कालेषु खी स्यान्न तु कच्चिच्छब्दप्रयोगे। कामं भजेदित्यादि। भवान् कामं यथेष्टं यथा स्यात् तथा भर्गं शिवं भजेदिति वक्तुरिच्छया एतद्वाक्यम्। अकच्चि-दिति किं? कच्चिदर्चिष्यते शिवम् इति कच्चिच्छब्देन वक्तुरिच्छा व्यज्यते तथा च कच्चित् कामप्रवेदने इत्यमरः॥ ९५२॥

## ९५४ । विधिनिमन्त्रणामन्त्रणाध्येषण-संप्रश्न-प्रार्थना-प्रेष्य-प्राप्तकालादौ ।

विधि—प्राप्तकालादौ ७। ।

सदा । यागं कुर्य्यात्, इह भुञ्जीत भवान् इह शयीत भवान्, पुत्रमध्यापयेत् भवान्, किं भो वेदमधीयीय उत तर्कमधीयीय, भो भोजनं लभेय, प्रेषितस्त्वं गच्छेः, प्राप्तस्ते कालस्तपः कुर्य्याः । एवं गौ ।

## ९५५ । समर्थनाशिषोर्गौ ।

समर्थन-आशिषोः ७॥, गौ ।१। ।

सिन्धुमपि शोषयाणि ।

---

इच्छार्थैर्योगे सर्वेषु कालेषु कामोक्तै खौ गौ च स्यात् । इच्छामीत्यादि अहमिच्छामि भवान् शर्वं सेवेत श्रीपतिं सेवतां वा । पृथग् योगात् कश्चित् योगेऽपि इच्छामि कश्चित् सेवेत श्रीपतिं सेवतां भवानिति कश्चित् इच्छन् करोतीति इच्छावान् यः सः करोतीत्यर्थः । अत्र वक्तुरिच्छा नास्तीति न खौगौ ॥ ९५३ ॥

विधिश्च निमन्त्रणञ्च आमन्त्रणञ्च अध्येषणञ्च संप्रश्नश्च प्रार्थना च प्रेष्यञ्च प्राप्तकालादिश्चेति तस्मिन् । सदेति वृत्तिः । एष्वर्थेषु सर्वेषु कालेषु खौ गौ च स्यात् । अप्राप्तप्रापको विधिः । यथा यागं कुर्य्यादिति । निमन्त्रणमामन्त्रणञ्च नियोजनविशेषः तत्र यस्याकरणे प्रत्यवायस्तन्निमन्त्रणं यथा इह भुञ्जीत भवानिति यस्याकरणे प्रत्यवायो न स्यात्तदामन्त्रणं यथा इह शयीत भवानिति निमन्त्रणामन्त्रणयोर्भेदः । सत्कारपूर्वकनियोजनमध्येषणम् । यथा पुत्रमध्यापयेद्भवानिति । संप्रश्नः जिज्ञासा । यथा किं भो वेदमधीयीय ? इति । प्रार्थना याच्ञा यथा भो भोजनं लभेय अहम् इति शेषः । कर्म्मणि प्रेषणं प्रेष्यं यथा प्रेषितस्त्वं गङ्गां गच्छेरिति । तत्क्रियोचितकाललाभः प्राप्तकालः यथा प्राप्तस्ते कालस्तपः कुर्य्याः इति । आदिशब्दादनुमतौ च यथा श्राद्धमहं करिष्ये इति प्रश्ने कुरुष्व इति अनुमतौ ख्या न प्रयोगः । एवं गौति यागं करोतु इह इत्यादि ॥ ९५४ ॥

इष्टार्थस्याशंसनमाशीः । जीवतु भवानित्यादि ॥ ९५५ ॥

## ६५६ । तु-ह्योस्तातङ् वाशिषि ।

तु-ह्योः ७॥, तातङ् ।१।, वा ।१।, आशिषि ७। ।

पातु पातात् वा शिवः, पाहि पातात् वा शिव ।

## ६५७ । मुहुर्भृशार्थे हि-त-स्व-ध्वम् ।

मुहुर्भृशार्थे ७।, हि-त-स्व-ध्वम् ।१॥ ।

पौनःपुन्ये अतिशये चार्थे सदा काले ग्या हि त स्व ध्वं स्युः मुहुर्भृशं वा लुनाति लुलाव लुविष्यति वा, लुनीहि लुनीत लुनीष्व लुनीध्वम् ।

## ६५८ । मास्मेन घी-स्थौ ।

मास्मेन ३।, घी-स्थौ १॥ ।

मास्मशब्देन योगे सदा घीस्थौ स्तः । मास्म भवद्दुःखं मास्म भूत् शोकः ।

---

तुह्योस्तातङ् वा स्यादाशिषि सर्वावयवादेशोऽयम् । तेन ङित्वेऽपि नान्त्यस्य स्थाने । किञ्चात्र ङित्वं भवान् राजत्वं कुरुतादित्यादावगुणार्थम् । वश ल कान्तौ भवान् स्वर्गमुष्टादित्यादौ जिप्राप्त्यर्थञ्च ॥६५६॥

पौनःपुन्ये अतिशये चार्थे सर्वेषु कालेषु लिङ्गे युष्मदि अस्मदि च प्रयुज्यमाने तेषामेकत्वे द्वित्वे बहुत्वे च ग्या हि त स्व ध्वमिति चत्वारि वचनानि स्युरित्यर्थः तत्रायं विशेषः । कर्त्तरि वाच्ये परस्मैपदिनो हि त इति द्वयम् आत्मनेपदिनः स्वध्वमिति द्वयम् उभयपदिनश्चत्वारीति । क्रियासमुच्चये सत्येवायं विधिरिति वक्तव्यम् । तथाहि पुरीमवस्कन्द लुनीहि नन्दनं मुषाण रत्नानि हरामराङ्गनाः । विगृह्य चक्रे नमुचिद्विषो वली य इत्थमस्वास्थ्यमहर्दिवं दिव इति माघः । स्वमट व्यामटाब्धोर्वीमित्यटन्त्योऽतिपावनाः । यूयमादौ विजानीत मनोवृत्तिं शुभां मम । रसानुद्धर दीप्यस्व ध्वान्तं जहि नभो भ्रम । इतीहमानास्तिभांशोर्वृत्तिं ज्ञातुं घटस्व मे इति भट्टिः । केचित्तु लुनीहीत्यादिपदानामव्यक्ततया तेन धातुना तेन कारकेणानुप्रयोगे सत्येवायं विधिरित्याहुः । किञ्च माघभट्ट्यादावनुप्रयोगं विनापि दृश्यनादनेनोपेक्षितः ॥६५७॥

## ९५९। मा टी वा।

मा ।३।, टी ।१।, वा ।१।।

मायोगे सदा टी स्यात् वा। मा विरंसीत् सुखं, मा विरमतु, मा विरंस्यति।

## ९६०। ढ्याशिषि।

ढी ।१।, आशिषि ७।।

जीव्याच्चिरं सज्जनः।

## ९६१। स्मर्थैस्त्ययदि त्वतीते।

स्मर्थैः ३।।।, ती ।१।, अयदि ७।, तु ।१।, अतीते ७।।

स्मरणार्थैर्योगे अतीते काले ती स्यात्। यच्छब्दश्चेत् न प्रयुज्यते। व्यपवादोऽयम्। स्मरस्येनं नंस्यसीशं, यत् स्मरस्यानमः शिवम्।

---

माश्मयोगेऽवाव्यवहितो व्यवहितश्च। तेन भवत् दुःखं माश्म भूच्छोको माश्म-दृत्यपि ॥९५८॥

अत्रापि योगेऽव्यवहितो व्यवहितश्च। तेन मा सुखं विरंसीदित्यपि अत्र वाशब्दस्य व्यवस्थावाचित्वात् मायोगाभावेऽपि आमन्त्रणेऽर्थे भविष्यत्कालेऽपि टी स्यात् वा। तेन सौमित्रे मामुपायंस्थाः कम्रामिच्छुर्वशंवदामिति भट्टिः ॥९५९॥

इष्टार्थस्याशंसनमाशीः। आशिषि गम्यमानायां टी स्यात्। आशीर्भव्य एव सम्भवति ॥९६०॥

स्मृधातोरर्थ इव अर्थो येषां ते स्मृर्थाः तैः। व्यपवादोऽयम् इति। एतेन यदः प्रयोगेऽस्याप्राप्तौ घी एव स्यात् न तु टीव्याविल्यर्थः। अयदीत्यस्य त्वन्तत्वात् परत्र नानुवृत्तिः। स्मरस्यदो दाशरथिर्भवन् भवानमुं वनान्तादवनितापहारिणम्। पयोधिमावद्धचलज्जलाविलां विलङ्घ्य लङ्कां निकषा हनिष्यतीति माघः ॥९३१॥

## ९६२। वानेकस्मार्य्ये।

वा ।१।, अनेकस्मार्य्ये ७।

अनेकस्मार्य्ये प्रयोक्तरि सति स्मरणार्थैर्योगे अतीते तौ वा स्यात्। ध्यायसीदं यदीशानं द्रक्ष्यति स्तोष्यते भवान्।

## ९६३। ध्वर्थासम्भवे थौ।

ध्वर्थासम्भवे ७।, थौ ।१।।

धोरर्थस्यानिष्पत्तौ सदा थौ स्यात्। ज्ञानञ्चेदभविष्यत् सुखमभविष्यत्।

## ९६४। लि-युष्मदस्मदि त्यादि त्रिशः।

लि-युष्मद्-अस्मदि ७।, त्यादि ।१।।।, त्रिशः ।१।।।।

लौ युष्मदि अस्मदि च तस्यार्थे प्रयुज्यमाने त्यादीनि त्रीणि त्रीणि क्रमात् स्युः।

जानाति योऽखिलं यञ्च न जानीतः श्रुतिस्मृती।
शास्त्राणि च न जानन्ति स मया सेव्यते शिवः।

---

स्मार्य्यमिति ञ्यन्तात् कर्म्मणि यः। अनेकमेकभिन्नं स्मार्य्यं स्मारणीयं येन सोऽनेकस्मार्य्यः तस्मिन्। ध्यायसीदमित्यादि भवान् यत् ईशानं द्रक्ष्यति स्तोष्यते च इदं इयं ध्यायसि स्मरसीत्यर्थः पचे ध्यायसीदं यदद्राचीदस्तावीच्च शिवं भवानिति। स्मार्य्यस्य परस्परसाकाङ्क्षत्वे विधिरयम्। तेन स्मरसि यत् त्वं तर्कमपठः काशीमगच्छश्च इत्यादौ न स्यात्॥९६२॥

परत्वात् सर्वेषां बाधकोऽयम्। ज्ञानञ्चेत्यादि। ज्ञानस्यासम्भवात् सुखस्याप्यसम्भव इति ध्वर्थासम्भवः। भविष्यत्काले एवायं विधिरिति केचित्। कौमारास्तु भूते भविष्यति चेमं विधाय भूते यथन्नार्थी पथिकोऽत्र दृष्टोऽभविष्यत् तदा अभोक्ष्यत। भविष्यत्काले यदि मत्समीपमागमिष्यत् भवान् तदा घृतेनान्नमभोक्ष्यत इत्युदाहरन्ति॥९६३॥

असि त्वमेको विश्वेश! आथोऽच्युतशिवौ! युवाम्।
आथ यूयं हरिहरब्रह्माद्या:! पाह्यनेकश:॥
एको भवामि स्म भवेऽहमादौ
दारैरथोभौ स्म भवाव आवाम्।
वयं भवामो बहव: स्म पुत्रै-
स्त्वन्माययाद्यापि विभो! प्रसीद॥

इति क्ति-पाद:।

इति त्याद्यन्ताध्याय:।

---

त्यस्यार्थे इति कर्त्तरि कर्म्मणि चेत्यर्थ:। यथा नवश: पमे इत्यादिना कर्त्तरि वाच्ये प्रत्यये कर्त्तव्ये कर्म्म य: कश्चिद्भवतु लिङ्गे कर्त्तरि तिवादित्रयं, युष्मदि कर्त्तरि सिबादित्रयम् अस्मदि कर्त्तरि मिबादित्रयम्। एवमात्मनेपदेऽपि ढभात्रेमभित्यनेन कर्म्मणि वाच्ये प्रत्यये कर्त्तव्ये कर्त्ता य: कश्चिद्भवतु लिङ्गे कर्म्मणि ते आदित्रयं, युष्मदि कर्म्मणि से आदित्रयम् अस्मदि कर्म्मणि ए आदित्रयम् इति। तथापि तेषामेकत्वद्वित्वबहुत्वेषु विभक्तीनामप्येकवचनद्विवचनबहुवचनानीति। जानातीत्यादि। योऽखिलं सकलं जानाति श्रुतिस्मृती च यं न जानीत: ज्ञापयितुं न शक्नुत: अन्तर्भूतण्यर्थोऽयम्। शास्त्राणि च यं न जानन्ति ज्ञापयितुं न शक्नुवन्ति, इति कर्त्तरि प्रत्यय:। स हरिर्मया सेव्यते इति कर्म्मणि प्रत्यय:। हे विश्वेश! त्वम् एको आसि हे अच्युतशिवौ! युवां आथ: हे हरिहरब्रह्माद्या! अनेकशो यूयं आथ पाह मुहुर्भृशं वा पाहीत्यर्थ:। मुहुर्भृशार्थे इत्यादिना हि। अत्र संसारे आदौ उत्पत्तिकाले एकोऽहं भवामि स्म। सोऽहं दारै: सह उभौ आवां भवाव: स्म। तथा पुत्रै: सह बहवा वयं भवाम: स्म। एतत् सर्वं त्वन्मायया। अतएव हे विभो! अद्यापि त्वं प्रसीद प्रसन्नो भव यथा पुनर्न भवामीत्यभिप्राय:। हे विभो! प्रसीद इत्युदाहरता युष्मदस्मदोरध्याहारेऽपि मध्यमवयशेषवये स्यातामिति सूचितं तेन शिष्य! किं पचसि? ओदनं पचामीत्यादिसिद्धम्। इमाविमान् वित्त शैवानित्यत्र द्वयोर्विशेष्ययो: शैवानित्येकविशेषणकथनेन द्वयोर्बहूनां युगपदुक्तौ परस्य बलवत्त्वं सूचितम्। तेनात्रापि

लिङ्गयुष्मदस्मदां युगपदुक्तौ तिबादित्रयसिबादित्रयमिबादित्रयाणां युगपत्प्राप्तौ यत् परं भवति तदेव स्यात्। तथापि समुदायस्य संख्यानुसारेण द्विवचनं बहुवचनं वेति। किञ्चात्र लिङ्गादीनां पाठक्रममननादेव भविष्यद्विभक्तीनां परत्वमेव ग्राह्यम्। यथा कर्त्तरि वाच्ये स च त्वञ्च चन्द्रं पश्यथः त्वञ्च स च पश्यथः स चाहञ्च पश्यावः अहञ्च स च पश्यावः त्वञ्चाहञ्च पश्यावः अहञ्च त्वञ्च पश्यावः स च त्वञ्चाहञ्च पश्यामः अहञ्च त्वञ्च स च पश्यामः। कर्म्मणि वाच्ये तु चैत्रेण स च त्वञ्च दृश्येथे त्वञ्च स च दृश्येथे स चाहञ्च दृश्यावहे अहञ्च स च दृश्यावहे त्वञ्चाहञ्च दृश्यावहे अहञ्च त्वञ्च दृश्यावहे स च त्वञ्चाहञ्च दृश्यामहे अहञ्च त्वञ्च स च दृश्यामहे। तथाच अहञ्च भाष्यकारश्च कुशाग्रीयधियावुभौ। नैव शब्दाम्बुधेः पारं किमन्ये जड़बुद्धय इति। अत्र ऐव इति क्रियापदम् इलगताविति धौविभक्तेर्विकृते अमागमद्वयं न गतवन्तावित्यर्थः। एवं विभक्तीनां लिङ्गानाञ्च परस्य बलवत्त्वमिति इमाविमानित्यत्र लिखितम्। भवच्छब्दस्य युष्मत्समानार्थस्यापि लिङ्गविहिता विभक्तिः। भवान् चन्द्रं पश्यति चैत्रेण भवान् दृश्यते। एवं युष्मदस्मदोरपि मुख्ययोरेव ग्रहणम्। गौणयोस्तु लिङ्गविहिता विभक्तिः अत्वं भवति अनहं भवति अतित्वं भवति अत्यहं भवति चैत्रेण अत्वं दृश्यते अनहं दृश्यते इत्यादि। अत्र परिहासे गम्यमाने मन्यतेस्तद्युक्तधातोरपि मध्यमत्रयस्य शेषत्रयम्। शेषत्रयस्य मध्यमत्रयं स्यादिति वक्तव्यम्। यथा। एहि त्वं मन्ये रथेनाहं यास्यसि। एवम् अहं मन्यसे रथेन त्वं यास्यामीति। अत्रापि द्वित्वे बहुत्वेऽप्येकवचनमिति दुर्गसिंहः। एवं प्रकृतेर्विकृतेर्वापि यथोक्तत्वं द्वयोरपि। वाचकः प्रकृतेः संख्यां गृह्णीयाद्विकृतेर्न तु इति प्राञ्चः। यथा एको वृक्षः पञ्च नौका भवति पञ्चवृक्षा एका नौर्भवन्तीत्यादि। यत्तु द्वौ द्वौ माघादिमासौ स्यादृतुस्तैरयनमृतौ स्यादिति क्रियापदं तस्याध्यस्य एकत्वानुरोधात् एवं नैषधेऽपि विभज्य मेरुर्न यदर्थिसात्कृतो न सिन्धुरुत्सर्गजलव्ययैर्मरुः। अमानि तत्तेन निजायशोयुगं द्विफालबद्धाश्चिकुराः शिरःस्थितमिति। अस्यार्थः। तेन नलेन द्विफालबद्धाश्चिकुराः शिरःस्थितं निजायशोयुगम् अमानि। अत्र चिकुरा इति प्रकृतिकर्मणो बहुत्वेऽपि निजायशोयुगमिति विकृतिकर्मणः एकत्वादमानीति एकवचनान्तं क्रियापदमिति तत् न समीचीनम्॥ ९६४ ॥

इति तिङ्‌पादः ।

---

# प्रथमः पादः—ल्यः ।

---

## ९९५ । कृद्धोः क-भावे ।

कृत् ।१।, धोः ५।, क-भावे ७। ।

**वक्ष्यमाणस्त्यः कृत्संज्ञः स्यात्, स च धोः परः स्यात्, स च के भावे च स्यात् ।**

## ९९६ । सरूपो बाध्यः ।

सरूपः १।, बाध्यः १। ।

**समानरूपस्त्यः कृता बाध्यते नत्वसरूपः ।**

---

प्रकरणभेदात् पूर्वोक्तानामननुवृत्त्यभावे वक्ष्यमाणमाचिपति । वक्ष्यमाणस्त्यादि चणम्पर्य्यन्तस्त्यः प्रत्ययसमूहः कृत्संज्ञः स्यादित्यर्थः । स च धातुविशेषाद्विहितोऽपि प्रयोगानुसारादन्यस्मादपि स्यादित्यत आह स च धोः परः स्यादिति । धोर्धातु-मात्रादित्यर्थः । तेन शीव्रजादिभ्यो विहितः क्यप् ईरधातोरपि स्यात् यथा ईर्य्या । तथाच व्रज्याटाट्या पर्य्यटनं चर्य्यात्वीर्य्यापथस्थितिरित्यमरः । एवं सकृत्सम्भादि-परात् कृादेर्विहितोऽपि इः प्रत्ययः देवादिपूर्वात् यजतेश्च स्यात् यथा देवान् यजतीति देवयजिः । तथाच अदृमो द्विजान् देवयजीन्निहन्म इति भट्टिः । एवम् अर्थविशेषे विहितोऽपि कृत्प्रयोगानुसारादर्थान्तरेऽपि स्यादित्यत आह स च के भावे चार्थे इति । तेन टभावयोर्विहितस्तव्यो वसतेः कर्त्तर्य्यपि स्यात् । यथा वसतीति वास्तव्यः । अत्र मनीषादित्वात् वृद्धिः । एवं भियोऽपादानेऽपि भव्यः । भेतव्या रजनी । एवञ्च सम्प्रदानकरणाधिकरणेष्वपि अनीयं स्यात् । यथा ददात्यस्मै इति दानीयो विप्रः । स्नायतेऽनेनेति स्नानीयं जलम् । रम्यतेऽस्मिन्निति रमणीयं गृहम् । एवं कर्त्तर्य्यपि घ्यण् । यथा नियोक्तुमर्हति नियोग्यः प्रभुरिति । एवं जायते इति जन्यः । एवञ्च गां हन्ति यस्मै स गोघ्नोऽतिथिः । अत्र हनचर-गष्टक् इत्यनेन कर्त्तरि विहितष्टक् सम्प्रदानेऽपि स्यादिति । अतएव कृद्धोः कभाव इत्युक्तेरन्यत्रापि प्रयोगत इति स्वयं वक्ष्यति । विशेषेण सामान्यस्य बाधनं नियमयति ॥ ९९५ ॥

विशेषेण कृता सामान्यः कृत्सरूप एवं बाध्यते इत्यर्थः । सरूपत्वन्तु अनुबन्ध

## ९९७। तव्यानीय-या ढ-भावे।

तव्य-अनीय याः १॥ ढ भावे ७।

धोरेते स्युर्ढभावे। चेतव्यं चयनीयं चेयं पुण्यम्। भवि-तव्यं भवनीयं भव्यं त्वया।

---

हित्वा स्थायिभागेन एकावयवत्वम्। यथा विशेषे घ्यणा सामान्यो य एव बाध्यते न तु तव्यानीयौ। एवम् एकार्थे एव सरूपत्वं गृह्यते न तु भिन्नार्थत्वे, तेन पचादित्वात् कर्त्तरि विहितेन विशेषेण अना सामान्यः सरूपोऽपि घञ् न बाध्यते। अतएव पचतीति पचः पचनं पाकः इत्यादि स्यादेव। एवं जौषि ग्रन्थि ग्रन्थि इत्यादिना विहितेन अनेन अनट् न बाध्यते स्त्रीविहितत्वेन अर्थभेदात्। तेन कारणा कारणं यातना यातनं सूचना सूचनं विस्मापना विस्मापनं अतिशायना अतिशायनं मारणा मारणं विदारणा विदारणम् इत्यादयः सिद्धाः। एवं सेमक्तात्सरीरिति विहितेन अप्रत्ययेनापि घञलौ न बाध्येते। तेन चेष्टङीहे ईहङ्चेष्टे अहिकभासे इत्यादि वोपदेवः। एवञ्च शंस्वाद इति विहितेन अ-प्रत्ययेनापि घञलौ न बाध्येते। तेन ललत् केशं प्रच्छीशन्नीप्से लूट्रूह्यू जिघांसे इत्यादि वोपदेवः। अतएव विशेषेणापि सामान्यो न बाध्यते क्वचित् इति जौमराः। किं चात्र समो बाध इत्यनेनापीष्टसिद्धौ सरूपग्रहणं ज्ञापयति। स्त्रीविहितप्रत्ययेन क्वचिदसरूपोऽपि स्त्रीविहितप्रत्ययो बाध्यते, तेन शंस्वाद इति अप्रत्ययेन जौषि ग्रन्थि इति अनप्रत्ययेनापि तौर्बाधात् चिकीर्षकारि इत्येतयोः चिकीर्ष्टिः कार्त्तिरिति न स्यात्। क्वचित् न बाध्यते च तेन शसतेः शस्तिः पच्चयतेः पङ्क्तिः आस्तेरुपास्तिरित्यादि सिद्धमिति। एवञ्च ईषद्दुःसुपूर्वकधातोः परविधानात् विशेषाभ्यां खल् अन इति हाभ्याम् असरूपाऽपि तव्यादयः पञ्च बाध्यन्ते। तेन दुःखेन क्रियतेऽसौ दुष्करो धर्मः। एवं दुर्गमो देशः दुर्द्धर्षः दुर्द्दर्शनः सूर्य्य इत्यादौ तव्यादयो न स्युरेव॥९९६॥

चेतव्यमित्यादि। च्चिन चिञ चित्यां कर्मणि वाच्ये तव्यः नेमिकाजिति इम् निषेधः। पुण्यस्य कर्मणः क्लीवत्वात् तद्विशेषणानां चेतव्यादीनामपि क्लीवत्वम्। एवं भावे तव्यादौ भवितव्यमित्यादि। भव्यमित्यत्र ओदौतोऽज्वदित्यनेन यकारस्य अज्वत्वादोकारस्य अवादेशः। भावप्रत्ययान्तात् क्लीवत्वम्। तथाच, अनाम्नि

## ९६८ । नोऽचोऽन्तरदुर्गेः प्राग्वणोऽख्याभाभूपूञ्कमगमप्यायवेपायवेपानिजादीदितो ञि-ह-सादीजुङस्तु वा ।

नः ६।, अचः ५।, अन्तरदुर्गेः ५।, प्राग्वत् ।१।, णः १।, अख्या अनिजादीदितः ५।, ञि ह सादीयुङः ५।, तु ।१।, वा ।१। ।

**अन्तरो दुर्वर्जगेश्च परस्य णविधिहेतौ सति नस्याचः परस्य णः स्यात्, न तु ख्यादेः इजादिवर्जेदितश्च, ञान्ताद्धसादीजुङस्तु वा । अन्तर्याणीयं प्रयाणीयम् । प्रयापणीयं प्रयापनीयं प्रकोपणीयं प्रकोपनीयम् । ख्यादेस्तु प्रख्यानीयं प्रख्यापनीयं प्रभानीयं प्रभापनीयं, प्रभवनीयं प्रभावनीयं, प्रपवनीयं प्रपावनीयं, प्रकमनीयं प्रकामनीयं, प्रगमनीयं प्रप्यायनीयं प्रवेपनीयं प्रकम्पनीयम् । इजादेस्तु प्रेङ्खणीयम् ।**

---

कारके वाच्ये वाच्यलिङ्गः कृदुच्यते । भावे त्व्यर्थखलर्थान्ता अनटाद्या नपुंसके । क्त्याद्यन्ताश्च स्त्रियां ज्ञेयाः पुंस्यघुर्घञलौ तथा अन्येषान्तु कृतां लिङ्गं वेदितव्यं प्रयोगतः ॥९६७॥

नास्ति दुर्यत्र सोऽदुः । अदुश्चासौ गिश्चेति अदुर्गिः । अन्तर् च अदुर्गिश्च अन्तरदुर्गिः तस्मात् । इच् आदिर्यस्य स इजादिः नास्ति इजादिर्यत्र सोऽनिजादिः अनिजादिश्चासौ इदिच्चेति अनिजादीदित् । ख्याश्च भाश्च भूश्च पूञ् च कमश्च गमश्च प्यायश्च वेपश्च अनिजादीदिच्चेति न ख्या भा भू पूञ् कम गम प्याय वेपानिजादीदित् अख्याः भा भू पूञ् कम गम प्याय वेपानिजादीदित् तस्मात् । हसादिश्चासौ इजुङ् चेति हसादीजुङ् । ञिश्च हसादीजुङ् चेति तस्मात् । अन्तरदुर्गेः पराद्धातोः परस्य कृत्सम्बन्धिनकारस्य अचः परत्वे सति णः स्यादित्यर्थः अन्तर्याणीयमित्यादि । एवं प्रयायिणौ अन्तर्याणं प्रयाणं प्रहीणः प्रहीणवान् प्रहाणिरित्यादि । विकल्पमाह प्रयापणीयं प्रयापनीयमित्यादि । एवं प्रयापणं प्रयापनम् इत्यादि । प्रकोपणीयं प्रकोपनीयम् । एवं प्रमेहणीयं प्रमेहनीयम् इत्यादि । ख्यादेस्तु ख्यादीनां केवलानां ञान्तानाञ्च वर्जनात्

## ९६९ । खनाट्टेरे ये ।

खनात् टे: ६।, ए ।१।, ये ७। ।

**खन आदन्तस्य च टे रे स्यात् ये परे । खेयं देयम् ।**

## ९७० । घ्यणोरावश्यके ।

घ्यण् ।१।, श्री: ५।, आवश्यके ७। ।

**उवर्णान्तादवश्यम्भाविऽर्थे घ्यण् स्यात् ढभावे ।**
**विप्रेण शुचिना भाव्यम् ।**

## ९७१ । हस्टयासोः ।

हस्-ऋ-यु-आ-सो: ५। ।

**हसन्तात् ऋवर्णान्तात् यौतेरासुनोतेश्च घ्यण् स्यात् ढभावे ।**
**बाह्यं घात्यं जन्यं वध्यं कार्य्यं याव्यम् आसाव्यम् ।**

---

प्रख्यानीयं प्रख्यापनीयं प्रभानीयं प्रभापनीयं प्रभवनीयं प्रभावनीयं प्रपवनीयं प्रपावनीयं प्रक्रमनीयं प्रकामनीयं प्रगमनीयं प्रप्यायनीयं प्रवेपनीयं प्रकम्प-नीयम् । गमादीनां केवलानां ञ्यन्तानाञ्च अत्र तुल्यं रूपम् । इजादेस्तु प्रेङ्खणीयम् अत्र नित्य णत्वम् । अच: किम् ? प्रभुग्न: प्रविग्न: । प्राग्वत् किम् ? प्रतियानीयम् ॥ ९६८ ॥

खन् च आश्च खनातौ । खनातोष्टि: खनाट्टि: तस्य । प्रकरणबलात् ये इति ल्यसंज्ञके यकारे परे इत्यर्थ: । खेयमिति खनतेर्हस्ऋयुासोरिति घ्यणि अनेन टेरेकार: । देयमिति दास्वरूपात् तव्यानीययाा इति ये टेरेकार: । ल्यसंज्ञके इति किम् ? खन्यते दीयते प्रखन्य प्रदाय इत्यादौ न स्यात् । एवं ये परे गणयते-रपि टेरेकारो वा वक्तव्य: । तेन गणेय: गण्य: ॥ ९६९ ॥

सूत्रत्वात् नकारस्य द्वित्वाभाव: । अवश्यम् इत्यस्य भावे ष्णे कृते व्यटेर्लोप इति टेर्लोपे आवश्यं तत आवश्यमेव आवश्यकं स्वार्थे क: । मण्डूकप्लुताधिकारात् ढभावे इत्यनुवर्त्तते । उवर्णान्ताद्धातोर्ढे भावे च घ्यण् स्यात् क्रियाया अवश्यम्भावे अर्थे । घणावितौ । भाव्यमिति भूधातोर्घ्यंणि णित्त्वात् वृद्धौ यस्य अज्वत्वादौ-कारस्य आवादेश: । एवं तपस्विना विष्णु: स्ताव्य: । अनावश्यके तु ये भव्यं क्यपिस्तुत्य: ॥ ९७० ॥

## ९७२ । चजोः कगौ घित्यसेम्क्त-यज्ञाङ्ग-यज-गत्यर्थ वन्चाम् ।

चजोः ६॥, कगौ १॥, घिति ७।, असेम्क्त यज्ञाङ्गयज-गत्यर्थ वन् चां ६॥। ।

**घिति परे चजोः कगौ स्तो न तु सेम्क्तादेः ।**

**पाक्यं रोग्यम् । गतौ तु वञ्च्यम् । अन्यत्र वङ्क्यं काष्ठम् ।**

## ९७३ । नावश्यके त्यज-यज-प्रवचाञ्च घ्यणि ।

न ।१।, आवश्यके ७।, त्यज-यज-प्रवचां ६॥।, ।१।, घ्यणि ७। ।

**आवश्यकेऽर्थे एषां चजोः कगौ न स्तो घ्यणि ।**

**अवश्यं पाच्यं, त्याज्यः याज्यः प्रवाच्यः ।**

---

हस् च ऋत स्नु ञ ग्लानु शेति तस्मात् । पृथग्योगादावश्यक इत्यस्य नानुवृत्तिः । वाच्यमिति वच्धातोर्ण्यणि वृद्धिः । घात्यमिति हनधातोर्घ्यणि । खेर्हो घ इति हस्य घत्वे वृद्धौ हनस्तोऽङ् इति तङ् । जन्यमिति कभाव इत्युक्तेः कर्त्तरि घ्यण् । वध्यमिति वध हतौ कर्मणि घ्यण् । उभयत्र वृद्धौ जनवध इति ह्रस्वः । कार्य्यमिति डुकृञ् कृञ्विद्धोरे इति ऋद्दीर्घान्ताभ्यां घ्यणि वृद्धिः । याव्यमिति युल मिश्रणे घ्यणि वृद्धौ यस्य ऋक्यायादावादेशः । एवम् आसाव्यमिति आङ्पूर्वसुनोतेर्घ्यण् ॥९७१

सेम् क्तो यस्मात् स सेम् क्तः । यज्ञस्याङ्गं यज्ञाङ्गं यज्ञाङ्गे यजः यज्ञाङ्गयजः । गत्यर्थश्चासौ वन्च चेति गत्यर्थ वन्च । सेम् क्तश्च यज्ञाङ्गयजश्च गत्यर्थ वन्च चेति । ततो नञ् समासः । तेषाम् । पाक्यमिति डुञौ श पच घ्यणि वृद्धौ चस्य कः । एवं षिच पर्शो ञ सेक्यम् । रोग्यमिति रुजशौ भङ्गे घ्यणि गुणे जस्य गः । एवं षन्जौ ञ सङ्गे सङ्ग्यमिति । एवं घञि पाकः सेकः रोगः सङ्गः । सेम् क्तादेश्च टुडु याचृञ याच्यः । लोचृ ङीर्चे लोच्यः । यज्ञाङ्ग यजस्तु घञि प्रयाजः अनुयाजः उपांशुयाजः ऋतुयाजः । प्रधानयज्ञस्याङ्गयज्ञा एते । यज्ञाङ्ग इति किम् ? यागः प्रधानयज्ञ इत्यर्थः । वन्चु गत्याम् । वञ्च्योग्रामः । अनेकार्थत्वात् वक्रीभावे कर्त्तरि घ्यणि वङ्क्यं काष्ठम् । केचित्तु श्वानं पचतीति श्वपाकः एवं मांसपाकः कपोतपाकः उलूकपाकः एषु ढात् षश्चिति षणि परेऽपि चकारस्य ककारमिच्छन्ति । स्वमते तु पच्यतेऽसाविति कर्मणि घञि पाकः । ततः श्वा पाको यस्य स श्वपाकः इत्यादि । एषु शङ्खभिन्नादिवत् विशेषणस्य परस्थितिरिति ॥९७२॥

## ९७४ । भुज-वच-निप्रयुजोऽन्नाशब्दशक्ये ।

भुज-वच- निप्रयुजः ६।, अन्न-अशब्दशक्ये ७। ।

भुजो भक्ष्येऽर्थे, वचोऽशब्देऽर्थे, निप्रपूर्वस्य युजः शक्येऽर्थे, चजोः कगौ न स्तो घ्यणि । भोज्यं, वाच्यं, नियोज्यः प्रयोज्यः । एषु किम् ? भोग्या भूः, वाक्यं पदसमुदायः, नियोक्तुमर्हति नियोग्यः प्रभुः ।

## ९७५ । पाय्य धाय्य प्रणाय्यानाय्य कुण्डपाय्य सन्नाय्य राजसूय सान्नाय्य निकाय्य परिचाय्योपचाय्य चित्याग्निचित्या समूह्यामावस्यामावास्या याज्याः ।

पाय्य—याज्याः १।।। ।

एते घ्यणन्ता निपात्यन्ते ।

पाय्यं मानम् । दधात्यग्निमिति धाय्या सामधेनी, धाय्या ऋत्विजः । प्रणाय्यः असम्मतः प्रियो वा । अनाय्यो दक्षि-

---

क्रियाया अवश्यम्भाविऽर्थे सर्वेषां धातूनां चजोः कगौ न स्तो घ्यणि परे त्यजयजप्रवचान्तु आवश्यकेऽनावश्यके चार्थे चजोः कगौ न स्तो घ्यणि परे इत्यर्थः । अवश्यं पाच्यम् एवम् अवश्यं रीज्यम् । त्यजादेस्तु त्याज्यः याज्यः ·प्रवाच्य इति । समाहारेणैवेष्टसिद्धौ प्रवचामिति बहुवचनात् केषाञ्चिदनिम् क्तानामपि न स्यात् । तेन मुचलृशपञ्जौ मोचे मोच्यं शुच शोके शोच्य इत्यादि । शुचेर्वेमसहेत्यादिना वेमत्वान् नेमडीश्वीति इमो निषेधादनिम् क्तत्वम् ॥९७३॥

भुजश्च वचश्च निप्राभ्यां युज च तस्य । अन्नञ्च अशब्दश्च शक्यञ्चेति तस्मिन् । भुज्यते यत् तत् तद्भोज्यं अन्नादि । वाच्यं वचनीयमित्यर्थः । नियोक्तुं शक्यतेऽसौ नियोज्यः प्रयोज्यः सेवकः । एषु किम् ? भोग्या भूः उपभोग्या पालनीया वा इत्यर्थः । वाक्यं परस्पराकाङ्क्षायुक्तपदसमूहः । नियोक्तुमर्हति योग्यो भवति नियोग्यः प्रभुः अत्र कभावः इत्युक्तेः कर्त्तरि घ्यण् ॥९७४॥

पा पाने घ्यणि पाय्यं परिमाणं पेयमन्यत् । दधात्यग्निमिति धाय्या सामधेनी

णाग्निः । कुण्डैः पीयते अत्र सोम इति कुण्डपाय्यः क्रतुः । सञ्चाय्यः क्रतुः । राज्ञा सूयते राजसूयः क्रतुः । सान्नाय्यं हविः । निकाय्यो निवासः । परिचाय्योऽग्निः, उपचाय्योऽग्निः चित्योऽग्निः । अग्नेश्चयनमिति अग्निचित्या । समूह्योऽग्निः संवाह्य इत्यर्थः । अमा सह वसतोऽस्यां चन्द्रार्काविल्य-मावस्या अमावास्या । यजन्ति अनया इति याज्या । निपातो ह्यर्थविशेषे ।

**९७६ । पु शक सह तक चत यत शसो-ऽचम वप रप लप त्रप ढभो यो भज जप यजा-नमस्तु वा ।**

पु—शसः ५।, अचम—ढभः ५।, यः १।, भज—आनमः ५।, तु ।१।, वा ।१।

पवर्गान्तात् शकादेश्च चमादिवर्जात् यः स्यात् ढभावे भजादेस्तु वा ।

---

अग्निज्वालनमन्त्रः । एवं धाय्याः ऋत्विजः धेयमन्यत् । प्रणीयतेऽसौ प्रणाय्यः असम्मतः प्रियो वा । अन्यत्र प्रणेयः । गार्हपत्यादग्नेरानीयो यः प्रणीयते स आनाय्यो दक्षिणाग्निः । अन्यत्र आनेयः । कुण्डैः पीयतेऽत्र सोम इति कुण्डपाय्यः क्रतुः । सोमो लताविशेषस्य रसः । अन्यत्र कुण्डपेयं दुग्धम् । सञ्चीयतेऽसौ सञ्चाय्यः क्रतुः । अन्यत्र सञ्चेयं पुष्पम् । सुनञ् सन्धे क्लेदपीड़ामन्थे । राज्ञा सूयते मङ्गलपूर्वकं स्नायतेऽस्मिन्निति राजसूयः क्रतुः सन्नीयते इदं सान्नाय्यं हविः । अन्यत्र सन्नेयम् । चिन् चिञ् चित्यां निचीयतेऽसौ निकाय्यो निवासः अत्र चस्य कः । अन्यत्र निचेयम् । परिचीयतेऽसौ परिचाय्योऽग्निः उपचीयतेऽसौ उपचाय्योऽग्निः उपचेयमन्यत् चीयतेऽसौ चित्योऽग्निः चेयमन्यत् । अग्नेश्चयनमग्नि-चित्या । सम्पूर्वंवहेञो समूह्यतेऽसौ समूह्योऽग्निः अत्र घ्यणि निपातनात् जिः तस्य दीर्घश्च । अन्यत्र संवाह्यः । अमा चन्द्रस्य आद्या कला । तया सह वसतोऽस्यां तिथौ चन्द्रार्कौ इत्यर्थे अमावस्या अमावास्या इति द्वयम् । यजन्त्यनयेति याज्या ऋक् । एतेऽर्थविशेषाः कुतो लभ्यन्ते इत्याशङ्क्याह निपातो ह्यर्थविशेष इति ॥९७५॥

रम्यं शक्यं सह्यं तक्यं चत्यं यत्यं शस्यम्। भज्यं भाग्यं, जप्यं जाप्यं, यज्यं याज्यं, आनम्यम् आनाम्यम्। अमादेस्तु आचाम्यं वाप्यं राप्यं लाप्यं त्राप्यं दाभ्यम् अनकारनिर्देशात्।

## ९७७। ग्यालभो मुण्।

यि ७।, आलभः ६।, मुण्।१।।

आङ् पूर्वस्य लभो मुण् स्यात् यकारे परे। आलम्भ्या गौः।

## ९७८। उपात् स्तुतौ।

उपात् ५।, स्तुतौ ७।।

उपपूर्वस्य लभो मुण् स्यात् ये परे प्रशंसायाम्। उपलम्भ्यः साधुः। स्तुतौ किम्? उपलभ्यमस्मात् किञ्चित्।

## ९७९। गद मद यम चराचरोऽगेर्यः।

गद-मद-यम-चर-आचरः ५।, अगेः ५।, यः १।।

अगिभ्य एभ्यो यः स्यात् ढभावे। गद्यं मद्यं यम्यं चर्य्यम् आचर्य्यम्। अगेः किम्?, प्रगाद्यम् अभिचार्य्यम्।

---

पुश्च शकश्च सहश्च तकश्च चतश्च यतश्च शस चेति तस्मात्। चमश्च वपश्च रपश्च लपश्च त्रपश्च दभश्च ते, न विद्यन्ते ते यत्र सोऽचम वप रप लप त्रप दभ-तस्मात्। भजश्च जपश्च यजश्च आनम चेति तस्मात्। हसन्तात् प्राप्तस्य घ्यणो बाधकोऽयम्। रमुङ्जौ रम्यम् एवं तपौ तप्यं शपौञ शप्यः कड्ङ स्तुतौ वर्ण्यं कव्यः। लभ्यग-हिंसे लभ्यः। शक्यमित्यादि सुगमम्। दाभ्यमिति दन्भु दम्भे इत्यस्य दभ इति नकाररहितपाठात् नकारस्य लोपे वृद्धिरित्यर्थः॥९७६॥

आङ् पूर्वस्य लभो मुण् स्यात् ये परे। मित्वादन्त्याचः परः। आङ् पूर्व लभ-धातुर्मारणे वर्त्तते। आलम्भ्या गौर्मारणीया इत्यर्थः॥९७७॥

उपलम्भ्यः साधुः स्तव्य इत्यर्थः॥९७८॥

अगेः किं प्रगाद्यं प्रमाद्यं प्रयाम्यम् एषु हसन्तात् घ्यणेव चरः केवलस्य आङ्-पूर्वस्य च ग्रहणात् चर्य्यम् आचर्य्यम्। अन्यत्र अभिचार्य्यमिति। ये पं ङ्गुतेऽर्थे आचरेः सुम् वाच्यः। आश्चर्य्यम्॥९७९॥

৯৮০। পণ্যাবদ্য বর্য্যাচার্য্য বহ্য জয্য ক্ষয্য ক্রয্যার্য্যোপসর্য্যাজর্য্যম্।

পণ্য—অজর্য্যম্ ১।।

এতে যান্তা নিপাত্যন্তে। পণ্যং বিক্রেয়ম্। অবদ্যম্ অনিষ্টম্। বর্য্যা কন্যা, বর্য্যং শ্রেষ্ঠম্, আচার্য্যো গুরুঃ। উহ্যতেঽনেনেতি বহ্যং শকটম্। জেতুং শক্যং জয্যম্, এবং ক্ষয্যম্। ক্রয্যং হট্টে প্রসারিতম্। অর্য্যঃ স্বামী বৈশ্যো বা। উপস্রিয়তে ইত্যুপসর্য্যা ঋতুমতী। ন জীর্য্যতি ইতি অজর্য্যং সঙ্গতম্।

৯৮১। ই ভৃ জুষস্ত্বিন্-শাসৃদুঙ্ বৃঞোঽক্লপ চৃত ঋচ পাণিসৃজ্ সমবসৃজঃ ক্যপ্।

ই—বৃঞঃ ৫।, অক্লপ—সমবসৃজঃ ৫।, ক্যপ্।১।।

ইাদেঋকারোঙো বৃঞশ্চ ক্লপাদিবর্জাৎ ক্যপ্ স্যাৎ ঢভাবে।

---

পণঙ্ ব্যবহৃতৌ স্তুতৌ পণ্যং বিক্রেয়দ্রব্যম্। অন্যত্র বিপণঃ পণ্যী স্তব্য ইত্যর্থঃ। নঞ্পূর্ব্বস্য বদতেঃ অবদ্যং নিন্দনীয়ম্। অন্যত্র অবাদ্যং বাক্যম্। বৃঞ্গ সম্ভক্তৌ বর্য্যা কন্যা বর্য্যং শ্রেষ্ঠম্ অন্যত্র বার্য্যঃ। আচার্য্যো গুরুঃ অন্যত্র আচর্য্যম্। উহ্যতেঽনেনেতি বহ্যং শকটম্। অন্যত্র বাহ্যম্। জয্যং জেতুং শক্যম্। অন্যত্র জেয়ম্। ক্ষয্যং ক্ষেতুং শক্যম্। অন্যত্র ক্ষেয়ম্। ক্রয্যং হট্টে প্রসারিতম্। অন্যত্র ক্রেয়ম্। ঋ গতৌ অর্য্যঃ স্বামী বৈশ্যো বা। অন্যত্র আর্য্যঃ। উপস্রিয়তে ইতি উপসর্য্যা ঋতুমতী। অন্যত্র উপসার্য্যম্। ন জীর্য্যতি ইতি অজর্য্যং সঙ্গতম্ অন্যত্র অজার্য্যম্ ॥৯৮০॥

ঋৎ উঙ্ যস্য স ঋদুঙ্। ইশ্চ ভৃশ্চ জুষশ্চ স্তুশ্চ ইন চ শাস চ ঋদুঙ্ চ বৃঞ্ চেতি তস্মাৎ। পাণেঃ সৃজ্ পাণিসৃজ্। সমীঽবঃ সমবঃ সমবাৎ সৃজ্ সমবসৃজ্। ক্লপশ্চ চৃতশ্চ ঋচশ্চ পাণিসৃজ্ চ সমবসৃজ্ চ ন বিদ্যন্তে তে যত্র সোঽক্লপ চৃত ঋচ পাণিসৃজ্ তস্মাৎ ॥৯৮১॥

## ९८२ । ह्रस्य तन् पिति ।

ह्रस्य ६।, तन् ।१।, पिति ७। ।

ह्रान्तस्य तन् स्यात् पिति । आदृत्यः भृत्यः जुष्यः स्तुत्यः इत्यः शिष्यः वृध्यः वृत्यः । क्रपादेस्तु कल्प्यं चर्त्यम् अर्च्यं पाणिसर्ग्या समवसर्ग्या रज्जुः ।

## ९८३ । कृ वृष मृज गुह दुह शनस सं भृ प्रत्यपिग्रहो वा ।

कृ—ग्रहः ५।, वा ।१। ।

एभ्यः क्यप् स्यात् वा ढभावे । कृत्यं कार्य्यं, वृष्यं वर्ष्यं, मृज्यं मार्ग्यं, गुह्यं गोह्यं, दुह्यं दोह्यं, शस्यं शंस्यं, संभृत्यः संभार्य्यः, प्रतिगृह्यं प्रतिग्राह्यम्, अपिगृह्यम् अपिग्राह्यम् ।

---

ह्रस्वान्तस्य तन् स्यात् पिति कृति परे । अत्र येन केनापि प्रकारेण ह्रान्तस्य ग्रहणम् । न तु स्वभावह्रान्तस्यैव । तेन प्रवत्य प्रतत्य इत्यादौ वनतनेति ञम् लोपेऽनेन तन् । आदृत्य इति । आङ्पूर्वं दृङ शादरे क्यपि कित्त्वाद्गुणाभावे पित्त्वात् तन् । शिष्य इति शास्तेः क्यपि शासुङिति आकारस्य इकारे शास वस-घसेति षत्वम् । वृध्य इति वृधु इत्यस्यान्तर्भूतणार्थत्वात् सकर्म्मकत्वे कर्म्मणि क्यप् । वृत्य इति ञानुबन्धस्य वृञ वरण इत्यस्य ग्रहणात् वृङग सम्भक्तौ इत्यस्य वार्य्यं इत्येव । कल्प्यमिति कृपुङल्ट कल्पने कृप कॢप इति कृपादेशे घ्यणि गुणः । चृतश्च चर्त्यम् । ऋचश्च अर्च्यम् । पाणिभ्यां सृज्यतेऽसौ पाणिसगर्या रज्जुः । अत्र चजोः कगाविति जस्य गः । एवं समवसर्ग्या ॥९८२॥

समो भृ सम्भृ प्रत्यपिभ्यां ग्रह प्रत्यपिग्रह । कृश्च वृष च मृज च गुह च दुह च शनस संभृश्च प्रत्यपिग्रहश्चेति तस्मात् । गुह्यं गोह्यमिति घ्यणि गुणे कृतः परत्वाभावात् गुहोणोरूरित्यनेन ऊत्वं स्यादिति तत्रैव व्याख्यातम् । अन्यत् सुगमम् ॥९८३॥

**९८४। गृह्य विनीय विपूय जित्या सूर्य्य रुच्याव्यथ्य भिद्योद्ध्यपुष्य सिद्ध्य तिष्याज्य युग्य कृष्टपच्य कुप्य भार्य्याः।**

गृह्य—भार्य्याः १॥।

**एते क्यबन्ता निपात्यन्ते।**

**प्रगृह्यं पदं, कृष्णगृह्यः कृष्णवर्ग्यः, गृह्योऽस्वैरी, ग्रामगृह्या ग्रामवाह्या। विनीयः कल्कः। विपूयो मुञ्जः। जित्या हलिः। सरतीति सूर्य्यः। एवं रुच्यः, अव्यथ्यः। कूलं भिनत्तीति भिद्यो नदः। वारि उज्झतीति उद्ध्यो नदः। कार्य्यं पुष्णातीति पुष्यो नक्षत्रम्। कार्य्यं साधयतीति सिद्ध्यः, स एव तिष्योऽपि। आज्यं घृतम्। युग्यं वाहनम्। कृष्टे स्वयं पच्यते इति कृष्टपच्यो व्रीहिः। कुप्यं सुवर्णरूप्याभ्यामन्यत्। भार्य्या बधूः क्षत्रिया च।**

---

पदपक्षपरतन्त्रवहिर्भूतेषु गृह्यपदं निपात्यते। यथा प्रगृह्यं पदं यत् स्वरेण समुन्नीयते। कृष्णगृह्यः कृष्णपक्षः पाण्डव इत्यर्थः। गृह्योऽस्वैरी अधीन इत्यर्थः। ग्रामगृह्या ग्रामवाह्या नदीत्यर्थः एभ्योऽन्यत्र ग्राह्यम्। विनीयः कल्कः। कल्कोऽस्त्री समलैलसीरित्यमरः। अन्यत्र विनेयः। विपूयो मुञ्जः शरपुङ्ख इत्यर्थः। अन्यत्र विपव्यः जित्या हलिर्महत् हलमित्यर्थः। अन्यत्र जेयः। सरति गच्छतीति सूर्य्योऽर्कः। सूर्य्यादयः सिष्यान्ता अष्टौ कर्त्तरि क्यबन्ताः। अन्यत्र सार्य्यः। रोचते रुच्यः। न व्यथते अव्यथ्यः। कूलं भिनत्तीति भिद्यो नदः। वारि उज्झतीति उद्ध्यो नदः। कार्य्यं पुष्णातीति पुष्यो नक्षत्रम्। कार्य्यं साधयतीति सिध्यः। तोषतीति तिष्यः। सिध्यतिष्यौ पुंष्यनक्षत्रे। अनजुघञि अज्यते अन्यते अनेनेति आज्यं घृतम्। युज्यते इति युग्यं वाहनम्। कृष्टे क्षेत्रे स्वयं पच्यते इति कर्म्मकर्त्तरि कृष्णपच्यो व्रीहिः। गुपू रक्षे गुप्यते इदम् कुप्यं स्वर्णरूप्याभ्यामन्यत् गस्य कः अन्यत्र गोप्यं वचः। भ्रियतेऽसौ भार्य्या बधूः क्षत्रिया च ॥९८४॥

## ९८५। लेर्वदः क्यप्-यौ।

लेः ५।, वदः ५।, क्यप्-यौ १॥।

लेः परात् वदः क्यप् यौ स्तः ढभावे।

ब्रह्मणा उद्यते इति ब्रह्मोद्या ब्रह्मवद्या कथा।

## ९८६। मृषोद्यं नित्यम्।

मृषोद्यं १।, नित्यम् १।।

## ९८७। भू-हनः क्यप् भावे न तश्च।

भू-हनः ५।, क्यप्।१।, भावे ७।, न।१।, तः १।, च।१।।

लेः पराभ्यामाभ्यां क्यप् स्यात् भावे, हनो नस्य तश्च। ब्रह्मभूयं ब्रह्मत्वं ब्रह्महत्या।

## ९८८। धोः केलिमो ढघे।

धोः ५।, केलिमः १।, ढघे ७।।

धोः परः केलिमः स्यात् ढघे।

स्वयमेव पच्यन्ते इति पचेलिमाः तण्डुलाः। एवं भिदेलिमाः माषाः।

---

ब्रह्मणा उद्यत इति कर्म्मणि क्यपि ग्रहस्वपेति जौ ब्रह्मोद्या, यै ब्रह्मवद्या कथा। भावे तु ब्रह्मोद्यं ब्रह्मवद्यम्। इत्यादौ स्याद्यन्तोपपदस्य कृदन्तेन धातुना समासो वक्तव्यः। एवम् आशुगः गिरिशः वराहः उदधिक्रा इत्यादि। उपसर्गादन्यस्याव्ययस्य कृदन्तेन धातुना समासो न स्यात्। अलं कृत्वा कृत्वालं भोक्तुं कालः कालो भोक्तुम्। ऊपसर्गात्तु प्रकृत्य अनुभूय। नञा निर्दिष्टमनित्यमिति न्यायात् कदाचिदन्यस्याव्ययस्यापि स्यात्। तेन नगः अग इत्यादि मृषोद्यम्। यप्रत्ययनिषेधार्थमिदं तेन मृषावद्यमिति न स्यात् ॥९८६॥

ब्रह्मणो भावः ब्रह्मभूयम्। ब्रह्मणो हननं ब्रह्महत्या अभिधानात् स्त्रीत्वम् ॥९८७॥

ढश्च तत् घश्चेति ढघः तस्मिन्। धोरुपादानं सर्वधातुप्राप्त्यर्थम्। तेन सर्वधातुभ्यः केलिमः स्यात् कर्म्मकर्त्तरि। कित्त्वान् न गुणः। स्वयमेव पच्यन्त इति पचेलिमास्तण्डुलाः। एवं भिदेलिमं काष्ठं मुचेलिमं वारि ॥९८८॥

**९८९। ते त्व्याः शक्याद्यर्थे प्रैष्यानुज्ञाप्राप्त-कालेवा।**

ते १।॥, त्व्याः १।॥, शक्य—प्राप्तकाले ७।, वा ।१। ।

**तव्यादयो त्व्यसंज्ञाः स्युः ते च शक्याद्यर्थेषु वा स्युः। वोढुं शक्यो वोढव्यः वहनीयः वाह्यः। स्तोतुमर्हः स्तोतव्यः स्तवनीयः स्तुत्यः। प्रेषितस्त्वं त्वया गन्तव्यं गमनीयं गम्यम्। अनुज्ञातस्त्वं त्वया अध्येतव्यम् अध्ययनीयम् अध्येयम्। प्राप्तस्ते कालः त्वया ध्यातव्यं ध्यानीयं ध्येयम्।**

**इति त्व्यपादः।**

---

शक्यतेऽसौ शक्यः कर्म्मणि यः, अर्हयोग्यत्वे अन्तर्भूतत्वार्थत्वात् सकर्म्मकत्वे कर्म्मणि घ्यणि अर्ह्यते योग्यः क्रियतेऽसाविति अर्ह्यः। निर्यकार पाठे तु कर्म्मणि घञ्। शक्यश्च अर्हश्च प्रैष्यश्च अनुज्ञा च प्राप्तकालश्चेति तस्मिन्। ते तव्य अनीय य घ्यण् यक्यप् केलिमा त्व्यसंज्ञाः स्युः। पृथक्योगात् भावे ढघे च इति द्वयोरनु-वृत्त्यभाव इत्यस्यैवानुवृत्तिः। ते च शक्याद्यर्थेषु कर्म्मभावयोः स्युः। अत्र वाशब्दस्य समुच्चयार्थत्वात् शक्याद्यर्थाभावेऽपि केवलयोर्ढभावयोश्च स्युरित्यर्थः। तत्र केवलयोः कर्म्मभावयोस्तु चेतव्यं चयनीयं चेयं पुष्पमित्यादीनि प्रागेव उदाहृत-वान्। इदानीन्तु शक्याद्यर्थेषु उदाहरति। वोढुं शक्य इत्यादि वहेञो प्रापणे शक्यार्थे कर्म्मणि तव्ये ह्रोढीभाविति हस्य ढत्वे सहवहोरिति अकारस्य ओत्वे ढभात्तयोरिति तस्य धत्वे ष्टुभिरिति धस्य ढत्वे ढ्रीढ्रीति ढस्य लोपः। वोढव्यः स्वल्पो भार इत्यर्थः एवं वहनीयो वाह्यः। स्तोतव्य इति स्तोतव्यो गुरुः शिष्येण स्तोतुं योग्यः क्रियते इत्यर्थः। एवं स्तवनीयः स्तुत्यः। अर्ह्यश्चेति चकारात् शक्यार्थेऽपि। यथा कविना स्तोतव्यः स्तवनीयः स्तुत्यो राजा स्तोतुं शक्यते इत्यर्थः। तव्यादीनां कालविशेषानुपदेशेऽपि भवद्भूतभव्ये इत्यत्र भविष्यत्काले भव्य-शब्दप्रयोगात् तव्यादयो भविष्यत्काले स्युरिति बोध्यम्। किञ्च ब्रह्मणा उद्यत इति अर्थोद्या इति ज्ञापकात् वर्त्तमानेऽपि स्युरिति ॥९८९॥

इति त्व्यपादः।

## द्वितीयः पादः—तृनादिः ।

---

### ९९० । तृन् णकौ घे ।

तृन् णकौ १।, घे ७। ।

धोस्तृन्णकौ स्तो घे । करोति इति कर्त्ता, कारकः, दरिद्रायकः ।

### ९९१ । गलेचोपकपादहारकौ ढे ।

गलेचोपक-पादहारकौ १॥, ढे ७। ।

एतौ निपात्यौ ढे ।

### ९९२ । माहात् क्रमो नेम् तृणः ।

माहात् ५।, क्रमः ५।, न ।१।, इम् ।१।, तृणः ६। ।

प्रक्रान्ता उपक्रान्ता । अन्यत्र क्रमिता अतिक्रमिता ।

---

तृन् इति टन्त्यनकारौ घावखसृतृच इत्यादौ औणादिकप्रत्ययान्तानां पित्रादीनाम् अप्राप्तये विशेषार्थः । णकस्य णकारो वृद्ध्यर्थः दरिद्रायक इति दरिद्र आलोप इत्यत्र अकवर्जनादाकारलोपाभावे यन्ञ् णित्कृदीति यन् । तच्छीलतद्धर्मतत्साधुकारिष्वपि कर्त्तरि तृन् स्यात् । अधिकन्तु प्रविष्टं न तु तद्धानिरिति न्यायात् । शीलं फलनिरपेक्षप्रवृत्तिः । जनापवादं वदिता खलः । धर्मः शास्त्रविहित आचारः प्रयागादौ मुण्डयिता । साधु गन्ता जन इत्यादि । अतएव कारके शीलार्थं तृन् इति स्वयमुक्तम् ॥९९०॥

एतौ कर्म्मणि वाच्ये णकप्रत्ययेन निपात्यौ । गले चुप्यतेऽसौ गलेचोपकः अत्र ङेरलुक् । पादाभ्यां ह्रियतेऽसौ पादहारकः ॥९९१॥

मम् आत्मनेपदम् अर्हतीति मार्हः तस्मात् । आत्मनेपदप्राप्तियोगग्रात् क्रमः परस्य तृन् इम् न स्यात् । प्रक्रान्तेत्यादि प्रोपादारम्भ इति आत्मनेपदयोगग्रत्वम् । अयोगग्रात् किम् ? क्रमिता अतिक्रमिता ॥९९२॥

## ९९३। ग्रह-नन्दि-पचादेर्णिननान् घे।

ग्रह-नन्दि-पचादेः ५।, णिन्-अन-अन् ।१।, घे ७।।

**ग्रहादेर्णिन्, नन्द्यादेरनः पचादेरन् स्यात् घे। ग्राही स्थायी प्रपायिणी, नन्दनः विचक्षणः जनार्दनः मधुसूदनः लवणः, पचः देवः लेल्यः, लोलुवः रोरुयः।**

---

ग्रहश्च नन्दिश्च पचश्च ते आदयो यस्य स ग्रहनन्दिपचादिः तस्मात्। णिन् च अनश्च अन् चेति। णिनः पूर्वणकारो वृद्ध्यर्थः। अनोऽकारान्तः। अन् इत्यस्य नकारो यङो लुग्वेति सूत्रे अनि तु नित्यमित्यत्र ग्रंस्याद् इति अप्रत्ययस्य अप्राप्तये विशेषार्थः गणाश्च प्रयोगानुसारेण बोध्याः। गृह्णातीति ग्राही णित्वात् वृद्धिः। स्थायीति आदन्तत्वात् यन् प्रपायिणी इति नीचोऽन्तरदुर्गे इति णत्वम्। नन्दयतीति नन्दनः। अने ञेर्लोपः। विचक्षण इति चक्षः क्शाञ इत्यत्र अनवर्जनान्न क्शाञख्याञौ षृ्र्ण इति णत्वम्। जनम् अर्दयतीति जनार्दनः। मधुं सूदयतीति मधुसूदनः। लुनातीति लवनः खड्गः। रसे वाच्ये लवण इति णत्वम्। पचतीति पचः। दिव्यतीति देवः अत्र कृगज्ञेति कप्रत्ययस्य बाधकोऽयम्। लेल्य इति यङन्तात् लेलीय इत्यस्मादनि अनि तु नित्यमित्युक्तेर्यङो लुक् यङ्लुक् क्वलोपे इति गुणनिषेधे श्र्ध्वोरिति यः। लोलुव इति यङन्तादनि यङो लुकि श्र्ध्वोरियुव्। रुल ध्वनौ यञ्चिर्घोऽज्व्यरे इति दीर्घे रोरुयभागात् अनि ऋस्वोदन्तात् परविहितस्य यङो न लुक्। तव्यानीयया इत्यस्मात् व्यणोराव-श्यके इत्यत्र यथा ढभावे इत्यनुवर्त्तते। तथा तृणकौ वे इत्यस्मात् मण्डूकप्लुताधि-कारादवापि घे इत्यस्यानुवृत्तावपीष्टसिद्धौ अधिकं घग्रहणं यान् ज्ञापयति तानहं विवृणोमि। यथा नञ्पूर्वात् याचवदव्रजवसो णिन्। न याचतीति अयाची। एवम् अवादी अव्राजी अवासी। एभ्यः किम् अपठिता अपाठकः। नञः परा-दजन्तादचेतने कर्त्तरि। अकारी घर्म्मस्य बालातपः। नञः किम्? छेदकर्त्ता खड्गः। अचेतने किम्? अकर्त्ता विप्रः। षिञो देशे। विषयी देशः। मनीषादित्वान्न वृद्धिः। व्यभिपरेर्भुवः विभावी अभिभावी परिभावी अत्र मनीषादित्वात् गुणः। एवम् उत्साही उदासी निवेशी। पट्वीमात्मानं मन्यते पटुमानिनी अत्र पुंवत् स्युक्त इति पुंवद्भावः। नात्युपसर्गभिन्नपूर्वकधातोस्ताच्छील्ये णिन्।

ष्णभोजी। जातिपूर्वात् तु ब्राह्मणान् आमन्त्रयिता। अत्र शीलार्थे तृन् कर्म्मणि षष्ठी न स्यात्। उपसर्गपूर्वात् तु संभोक्ता उपभोक्ता। उन्मद द्विष द्रुह दुह दुष आक्रीड़ अनुरुध आयम आयस अतिचर अपचर व्याङ् मुष अभ्याहन परिदिव परिक्षिप एभ्यस्ताच्छील्ये णिन्। उन्मादी द्वेषी द्रोही दोही दोषी आक्रीड़ी अनुरोधी आयामी आयासी अतिचारी अपचारी व्यामोषी अभिघाती आघाती परिदेवी परिक्षेपी। उदासावी प्रत्यासावी ब्रह्मवादी साधुदायी इत्यादिषु ताच्छील्याभावेऽपि ग्रहादित्वात् णिन्। कर्त्तुरुपमानात्। खर इव क्रोशति खरक्रोशी। एवम् उष्ट्रक्रोशी। जातिपूर्वत्वेऽपि ताच्छील्याभावेऽपि स्यादिति पृथग्वचनम्। व्रताभीक्ष्णयोः। व्रतं शास्त्रीयनियमः। आभीक्ष्ण्यं पौनःपुन्येन करणम्। अलवणभोजी नक्तंभोजी अश्राद्धभोजी। आभीक्ष्ण्ये तु चीरपायिणः उशीनराः। सौवीरपायिणो बाह्लीकाः। कषायपायिणो गान्धाराः। करणात् यजोऽतीते। अग्निष्टोमेन यजते स्म। अग्निष्टोमयाजी। कदाचित् भविष्यत्कालेऽपि। कल्की भावी ग्रामंगामी पान्थः। एवं कदाचित् तद्व्रभावे ग्रामंगमीत्यपि स्यात्। एवम् ऋणपरिशोधनेऽपि। मोक्षमृणंदायी। उभयत्र भव्यर्णार्थणिनः कर्मणि न षष्ठी। शमादिभ्यः शमी तमी दमी श्रमी भ्रमी क्षमी क्लमी। एषु जनबध इति ह्रस्वः। समो ज्वरित्वरिभ्याम्। संज्वरी संत्वरी। ज्वरत्वरो ञौ घटादित्वात् ह्रस्वे त्वलोपे त्वलक्षणमिति न्यायात् ञिव्यवधानेन पुनर्न वृद्धिः। वेः कत्थस्नभुकसलसेभ्यः। विकत्थी विस्रम्भी विकासी विलासी। प्रान्मथद्रुवदवसलपेभ्यः। प्रमाथी प्रद्रावी प्रवादी, वसे तु प्रवासी प्रलापी। परेः सूदहिभ्याम्। परिसावी परिदाही। अस्त्यर्थे इना एव सिद्धौ णिन् करणं ताच्छील्यविवक्षायामेभ्यस्तृणो निषेधार्थम्। परेः क्षिपवटवदवादिदेविभ्यो णकश्च। परिक्षेपी परिक्षेपकः परिवाटी परिवाटकः परिवादी परिवादकः। परिवादयतीत्यर्थेऽप्येवम्। परिदेवी परिदेवकः। अत्र ताच्छील्यविहितप्रत्ययेन असरूपोऽपि तृन् बाध्यते इति बोध्यम्। निन्द हिंस क्लिश खाद गण विनाशि व्याभाषासूयेभ्यो णकः। निन्दकः हिंसकः क्लेशकः खादकः गणकः विनाशकः व्याभाषकः असूयकः। उपसर्गात् देविक्रुशाभ्याम्। आदेवकः आक्रोशकः। कर्मपूर्वकनिन्दार्थहन्तेरताच्छील्येऽपि णिन्। पितृघाती मातृघाती कुमारघाती। प्रात्जुसुव इन्। अयमनुबन्धशून्यः। प्रजवी सू प्रसवे प्रसवी। इण जि दृक्षि विश्रि वम अभ्यम अव्यथेभ्यश्च एभ्यस्ताच्छील्ये इन् स्यात्। अत्ययी विजयी आदरी क्षयी विश्रयी वमी अभ्यमी, न व्यथते अव्यथी। युज भञ्ज

## ९९४। चिक्लिद चक्नस चराचर चलाचल पतापत वदावद घनाघन पाटपटा वा।

चिक्लिद—पाटपटाः १॥, वा।१।।

एते अनन्ता निपात्यन्ते वा। पक्षे, क्लेदः क्नसः चरः चलः पतः वदः हनः पाटः।

---

भुज त्यज संसृज रन्ज भन्ज विविच संपृचिभ्यो घिनिस्ताच्छील्ये। शाकटायनानुरोधादस्य शेष इकार उच्चारणार्थः। युजिर युजौङ योगी भागी भोगी त्यागी संसर्गी घिति परे एषां जस्य गः। रागी इत्यत्र तु रन्जोऽपघकेत्यादिना न लोपे णित्त्वात् वृद्धौ जस्य गः। भङ्गी विवेकी सम्पर्की। नन्दि वासि मदि दूषि साधि शोभि वर्द्धिभ्यो अन्तेभ्योऽसंज्ञायामनः। नन्दनः वासनः मदनः अत्र घटादित्वात् ह्रस्वः। दूषणः अत्र दुषेरीदूरिति दीर्घः। साधनः शोभनः वर्द्धनः। संज्ञायान्तु चन्दनः दर्पणः विभीषण इत्यादि सह तप दम जल्प रम हृष श्वस स्पृशादेरजन्तात्। सहनः तपनः दमनः जल्पनः रमणः हर्षणः श्वसनः स्पर्शन इत्यादि। क्रोधकम्पभूषाशब्दार्थेभ्योऽनः। क्रोधनः कोपनः कम्पनः चलनः भूषणः मण्डनः शब्दनः रवणः। शब्दार्थादकर्मादेव। तेन विद्यां पठिता विप्रः। रुचादेश्च इसादेः। रोचनः वर्द्धनः जुगुप्सनः तितिक्षणः मीमांसनः वीभत्सनः। इसादेः किम्? एधिता। अत्रापि अकर्मकादेवेति बोध्यं तेन वस्त्रं वसिता जनः। चंक्रम्य दंद्रम्य जु सृ गर्धि ज्वल शुच लष पत वदेभ्यः। चंक्रमणः दंद्रमणः उभयत्र इसाल्लोप इति अकारलोपे यकारलोपः। जवनः सरणः गर्द्धनः ज्वलनः शोचनः अभिलषणः प्रपतनः प्रवदनः। अत्र पतपदोर्ज्जुकेन बाधितत्वात् अनस्य अप्राप्तौ वचनम्। तेन ताच्छील्ये प्रत्ययेन विशेषेण असरूपोऽपि सामान्यो बाध्यते इति बोध्यम्॥ ९९३॥

क्लिदु इर् क्लेदे। क्नसु म उद्धृतौ। चर गतौ। चल म लतौ। पतॢज गत्याम्। वदे वाचि। हन ल गतौ वधे। पट क ष लिपि। इत्यष्टभ्यः पचादित्वात् अनि एते वा निपात्यन्ते। पक्षे क्लेद इत्यादि। पाट इति चुरादित्वात् ञौ वृद्धिः॥ ९९४॥

## ९९५। रात्रेर्मन् वा कृति।

रात्रेः ६।, मन् ।१।, वा ।१।, कृति ७।

**रात्रेर्मन् स्यात् वा कृति। रात्रिञ्चरः रात्रिचरः।**

## ९९६। कॄ-गॄ-ज्ञा-प्रीजुङः को दुहो घङ् च।

कॄ-गॄ-ज्ञा-प्री-इजुङः ५।, कः १।, दुहः ६।, घङ् ।१।, च ।१।।

**कादेरिजुङश्च कः स्यात् तस्मिंश्च दुहो घङ् स्यात् घे। किरः गिरः ज्ञः प्रियः चिपः भूरुहः कामदुघा गौः।**

---

रात्रेः परत्र कृतीऽसम्भवात् कृदन्ते धातौ परे इत्यर्थः। रात्रौ चरतीति पचादित्वादनि अनेन मनि रात्रिञ्चरः पक्षे रात्रिचरः। एवं रात्रौ अटतीति रात्रिमटः रात्र्यटः। वाशब्दोऽत्र व्यवस्थावाची च। तेनेदं विवृणोमि। अगदसत्यास्तूनां मन् कारे। अगदं करोतीति टात् षणिति षणि वृद्धौ कारे परे अगदस्य मनि अगदङ्कारः एवं सत्यङ्कारः। अस्तुङ्कारो देवविशेषः। अस्तु इत्यव्ययशब्दः। अगिलस्य गिले तिमिं गिरतीति कॄगॄज्ञाप्रीति कप्रत्यये ऋदिरणाविति इरि गोरल इत्यत्र वक्तव्यात् रेफस्य लत्वे अनेन मनि तिमिङ्गिलः एवं रिपुङ्गिलः। अगिलस्येति किम्? गिलगिलः तिमिङ्गिलगिलः। तथाच अस्ति मत्स्यस्तिमिर्नाम शतयोजनविस्तृतः। तिमिङ्गिलगिलोऽप्यस्ति तद्गिलोऽप्यस्ति राघव इति॥ ९९५॥

इच् उङ् यस्य स इजुङ् कृश्च गृश्च ज्ञाश्च प्रीश्च इजुङ् चेति तस्मात्। दुहो घङ् चेति चकारात् इजुङन्तत्वात् के सतीत्यर्थः। कीरतीति किरः अत्र कप्रत्यये ऋदिरणाविति इर्। गिरतीति गिरः। जानातीति ज्ञः। परत्र आदन्तत्वात् डप्रत्ययेनैवेष्टसिद्धौ इह ग्रहणं कथमिति चेन्न परत्र उपपदपूर्वादेव डो विधीयते इह तु केवलाज्जानातेः क इति भेदात्। प्रीणातीति प्रियः चिपतीति चिपः भुवि रोहतीति भूरुहः। कामं दोग्धीति कप्रत्यये कृते दुहस्य घङि स्त्रियामत आपि कामदुघा। चकारस्यानुक्तसमुच्चयार्थत्वात् तुन्दं परिमार्ष्टि तुन्दपरिमृजोऽलसः एव। अन्यत्र टात् षणि तुन्दपरिमार्जः शिशुः। एवं शोकमपनुदतीति शोकापनुद आनन्दकर एव। अन्यत्र टात् षणि शोकापनोदो धर्मकथकः। अत्र इजुङ्भावनिमित्तकतया विशेषेण कप्रत्ययेन कर्मपरत्वात् विशेषोऽपि सर्वधातुनिमित्तकतया

९९७। हन-जनाद्गमादेर्डः।

हन जन-आत्-गमादेः ५।, डः १।।

**हनो जन आदन्तात् गमादेश्च डः स्यात् घे। शोकापहः वराहः सरसिजं पङ्कजम् अजः गोदः द्विपः प्रह्वः आशुगः नगः गिरिशः, वारि चरतीति वार्चो हंसः।**

९९८। धेटदृशपाघ्राध्मः शः।

धेट—ध्मः ५।, शः १।।

**एभ्यः शः स्यात् घे। उद्धयः उत्पश्यः उत्पिबः उज्जिघ्रः उद्धमः।**

---

सामान्यो ढात् षण् बाध्यते। एवञ्च काकेभ्यो ग्रहीतव्याः काकग्रहास्तिला। इत्यत्र कर्म्मणि अपि कः॥ ९९६॥

हन च जन च आच्च गमादिश्चेति तस्मात्। शोकम् अपहन्तीति शोकापहः वरम् आहन्तीति वराहः। एवं तमोपहः दुःखापहः ज्वरापहः। क्रोशं हन्ति गच्छतीति क्रोशहः वातपित्तकफापहः विश्वाग्निदर्पापहः। इत्यादि उदाहरण-दर्शनात् शोकवरादिकर्मपूर्वकतया अतिशेषेण डप्रत्ययेन सर्वकर्मपूर्वकसामान्यो हनचरगःटक् बाध्यते। दारु आहन्तीत्यादि वाक्ये दार्वाघातः एवं चार्वाघातः वर्णसङ्घातः पाणिघातः पाणिघ इत्यादौ निपात्यन्ते। सरसिज सरोज विभक्ते-रलुक् मनीषादित्वात्। पङ्काज्जायते पङ्कजम् न जायते अजः। एवं द्विर्जायते द्विजः। अत्र मनीषादित्वात् सूचः सस्य लोपः परिजः अभिजः पुमांसमनुजातः पुमनुजः। एवं स्त्र्यनुजः सहजः प्रजायते प्रजा स्त्रियाम्। गां ददातीति गोदः द्वाभ्यां पिबतीति द्विपः प्रह्वयतीति प्रह्वः अत्र डप्रत्ययप्राप्तेः पूर्वावस्थायामशितिविषये एचोऽशित्येति आकारे आदन्तत्वात् डः। आशु शीघ्रं गच्छतीति आशुगः। न गच्छतीति नगः एवम् अगः गिरौ शेते गिरिशः। परिखन्यते इति परिखा कर्मणि डः। तथा आखूनामुत्थानम् आखूत्थं भावे डः। एतौ निपात्यौ॥ ९९७॥

उद्धयतीति उद्धयः। शप्रत्ययोऽस्य शित्त्वात्‌रसंज्ञायां शपि लोपोऽतोऽदेचोरित्य-कारलोपः। एवमुत्पश्य इत्यादौ स्थादानेत्यादेशाश्च। साहचर्य्यात् पा इति भौवाः

### ९९९। साहिसातिचेतिवेद्येजिधारिपारिलिम्प विन्दोऽगेः।

साहि—विन्दः ५।, अगेः ५।।

अगिभ्यः एभ्यः शः स्यात् घे। साहयः सातयः चेतयः वेदयः एजयः धारयः पारयः लिम्पः विन्दः गोविन्दः।

### १००० । दुनीभूज्वलाद्यास्रुसंस्रोर्णो वा।

दु—संस्रोः ५।, णः १।, वा।१।।

अगिभ्य एभ्यो णः स्यात् घे वा। दावः दवः नायः नयः भावः भवः, ज्वालः ज्वलः, चालः चलः, आस्रावः आस्रवः, संस्रावः संस्रवः।

---

दिक एव। उद्वय इत्याद्युदाहरता सोपसर्गाणामेवायं विधिरिति सूचितम्। अत्रापि प्रयोगत इत्युक्तेः पश्यतीति पश्यः व्याघ्र इत्यत्र संज्ञानुरोधात् ड एव॥९९८॥

सह जङ शक्तौ सात क सुखे इति सौवः। चितीसंज्ञाने विदल्मतौ एजृ कम्पे धृ शङ स्थितौ पृ लि पालने। एते ञ्यन्ताः। ञिलिपी [illegible] ञ लेपे। विदॢ शपञौ लाभे। इत्यष्ट। साहयतीति साहयः शस्य [illegible]ायां अपि लोपोऽत इत्यकारलोपः। एवं सातय इत्यादि। लिम्पः विन्द [illegible]भयत्र तुदादित्वात् शे मुचादित्वात् नुण्। उदेजयान् भूतगणान्निषेधीदिति भट्टौ। उदशब्दस्य उपसर्गप्रतिरूपकत्वेन अनुपसर्गत्वात्। एवं निलिम्पः इत्यादौ च व्याख्येयम्॥९९९॥

दुनोतीति दावः णित्त्वात् वृद्धिः। पक्षे पचादित्त्वात् अनि दवः। नयतीति नायः नयः। भवतीति भावः भवः। ज्वलतीति ज्वालः ज्वलः। चलतीति चालः चलः। एवं कौचतीति कौचः पक्षे कुजुङत्वात् के कुचः। आस्रवतीति आस्रावः आस्रवः। संस्रवतीति संस्रावः संस्रवः। उभयत्र स्रुर्दन्त्यादिः। तथाच अवश्यायकणास्रावाश्चारुमुक्ताफलत्विषः। कुर्वन्ति चित्तसंस्रावं चलत्पर्णाग्रसम्भृता इति भट्टिः। अगेः किम्? प्रदव इत्यादि। आसंस्रोरित्यनेनैवेष्टसिद्धौ आस्रुसंस्रोरिति गौरवं ज्ञापयति। गदह्वातेरपि घे णो वा स्यादिति। प्राह्वौ

## १००१ । श्वसव्यधेन तन दावह्नसः ।

श्वस—ह्नसः ५।।

एभ्यो णः स्यात् घे। श्वासः व्याधः प्रत्यायः अवतानः दायः धायः अवहारः अवसायः ।

## १००२ । नृत्-खन-रन्जः षकः ।

नृत्-खन रन्जः ५।, षकः १।।

एभ्यः षकः स्यात् घे। नर्त्तकी खनकी रजकी ।

## १००३ । गो थनट्-थकौ ।

गः १।, थनट्-थकौ १॥ ।

गायतेः एतौ घे स्तः। गायनी गाथकः ।

---

हिंस्रजलजन्तुः। ग्रहः सूर्य्यादिः। एवमस्मात् कप्रत्यये ग्रहस्खपाद्योरिति जौ गृह्णातीति गृहं गृहाः ॥१०००॥

ह्नश्च साश्च ह्नसौ अवात् ह्नसौ अवह्नसौ। श्वसश्च व्यधश्च इन च तन च दाश्च अवह्नसौ चेति तस्मात्। पृथग्योगी नित्यार्थोऽगैरित्यस्य निवृत्त्यर्थश्च। श्वसितीति श्वासः विध्यतीति व्याधः। प्रत्येतीति प्रत्यायः। अवतनोतीति अवतानः। दा इति संज्ञा। तेन ददातीति दायः दधातीति धायः। अवहरतीति अवहारः। सा इति षीय नाशे अवस्यतीति अवसायः। एषु आदन्तत्वात् यन् दिहि लिहि श्लिषिभ्यः कस्य बाधको णो वाच्यः। देग्धीति देहः लेढीति लेहः। श्लिष्यतीति श्लेषः। तथा अवात् दुश्यार्भ्यां णः। अवदुनोतीति अवदावः अवश्यायते इति अवश्यायः ॥१००१॥

नृत्यतीति नर्त्तकी खनतीति खनकी, रजतीति रजकी षके परे न लोपः। सर्वत्र षित्त्वादीप् ॥१००२॥

गायतीति गायनी ष्णित आदन्तत्वात् यन् टित्त्वादीप् ॥१००३॥

## १००४। हायनः।

हायनः १।।

अयं निपात्यते।

भावं जहातीति हायनो वर्षः। अम्बु जहातीति हायनो व्रीहिः।

## १००५। प्रु द्रु सु सृ ल्वोऽकः।

प्रु—ल्वः ५।, अकः १।।

एभ्योऽकः स्यात् घे। प्रवकः द्रवकः स्रवकः सरकः लवकः।

## १००६। आशिषि।

आशिषि ७।।

जीवतादिति जीवकः।

## १००७। नाम्न्यन्ये तिक् च।

नाम्नि ७।, अन्ये १॥, तिक् १।, च ।१।।

धीराशिषि अन्येऽपि क्तः स्युः, तिक् च संज्ञायाम्। देवरातः रन्तिः।

---

हायनः। वत्सरव्रीहिभ्यामन्यत्र हातः। निपातो ह्यर्थविशेषे इत्युक्तेः॥१००४॥

एभ्योऽकः स्यात् घे साधुकारिणि। साधु प्रवते प्रवकः। एवं द्रवतीति द्रवकः। लुनातीति लवकः। साधुकारिणि किम्? प्रोता॥१००५॥

पृथग्योगात् सर्वधातुभ्योऽकः स्यात् आशिषि कर्त्तरि। जीवतादिति जीवकः। एवं नन्दकः वर्द्धकः॥१००६॥

धीराशिषि गम्यमानायां संज्ञायां कर्त्तरि। अन्येऽपि क्तः स्युः तिक् च स्यात्। देवाय रायात् देवरातः। एवं देवाय देयात् देवदत्तः। यज्ञाय देयात् यज्ञदत्तः। एषु कर्त्तरि क्तः। एवञ्च अस्य वीरो भूयादिति वीरभूः अस्य मित्रं भूयादिति मित्रभूः। इत्यादौ क्विप्। तिकि तु रमतां रन्तिः। अत्र वनतनेत्यत्र तिग्वर्जनात् न मलोपः। एवं तनुतां तन्तिः अग्निरस्य भूयात् इति अग्निभूतिः इत्यादि॥१००७॥

## १००८। सति-साती वा ।

सति-साती १॥, वा ।१।।

**एतौ निपात्यौ । सन्तिस्य ।**

## १००९। ढात् षण् ।

ढात् ५।, षण् ।१।।

**ढात् परात् धोः षण् स्यात् घे ।**

**कुम्भकारः अघटं घटं करोतीति घटीकारः ।**

## १०१०। हन-चर-गः टक् ।

हन-चर-गः ५।, टक् ।१।।

**ढात् परेभ्य एभ्यः टक् स्यात् वे । पापघ्नः कुरुचरः सामगः ।**

---

सतिश्च सातिश्च सतिसाती। सनोतेराशिषि तिगन्तस्य एतौ वा निपात्यौ। पक्षे सनुतादिति वाक्ये तिकि क्ते ह्वदतेरिति इम् निषेधे वनतनेत्यत्र तिग्वर्जनात् नलोपाभावे सन्ति ॥१००८॥

कुम्भं करोतीति कुम्भकारः। महान्तं घटं करोति अत्र सापेक्षत्वात् न स्यात्। अघटं घटं करोतीति घटीकारः। अत्र तु सापेक्षत्वेऽपि अभिधानात् स्यादेव। आदित्यं पश्यति हिमवन्तं शृणोति ब्रह्म वदति ग्रामं गच्छति इत्यादौ अनभिधानात् न स्यात्। ह्वयति वयति मातिभ्य आदन्तात् डप्रत्ययस्य बाधकः अण् वाच्यः। स्वर्गह्वायः तन्तुवायः धान्यमायः। एवं कर्मपूर्वकात् सोपसर्गा-दादन्तात् कदाचित् डबाधकः षण् वाच्यः गोसन्दायः। ईक्षक्षमाचरिरमिभ्यः षणो बाधकोऽन् वाच्यः। सुखप्रतीक्षा बहुक्षमा कल्याणाचारा मनोरमा। अर्हि-शीलिकामिभक्षिभ्यो वा। पूजार्हा पूजार्ही मांसशीला मांसशीली पुत्रकामा पुत्रकामी मांसभक्षा मांसभक्षी। श्वानं पचतीति श्वपाकश्वपचौ निपात्यौ ॥१००९॥

पापं हन्तीति पापघ्नः कित्त्वात् गुणे हनगमित्युङ्लोपे हनोघ्नी घ्नः। कुरून् चरतीति कुरुचरः। साम गायतीति सामगः। अत्र ढस्येतीत्याकारलोपः। टित्त्वादीपि पापघ्नीत्यादि। एवं वातघ्नः पित्तघ्नः कफघ्नः शत्रुघ्नः इत्यादि। लक्षणे जायापतिभ्यां हनः। जायाघ्नो वृषलः पतिघ्नी पाणिरेखा। हस्तिबाहुकपाटेभ्यो

## १०११। स्ट-कुः टः।

स्ट-कुः ५।, टः १।।

ढात् पराभ्याम् आभ्यां टः स्यात् घे। पुरःसरी, यशस्करी विद्या। भास्करः चपाकरः, कर्म्मकरी दासी।

---

हनः शक्तौ। हस्तिघ्नः वाहघ्नः कपाटघ्नः। नगरादहस्तिनि। नगरघ्नोऽग्निः। अहस्तिनि किम्? नगरघाती हस्ती। ब्रह्मभ्रूणवृत्रवाद्दनोऽतीते क्विप्। ब्रह्माणं हतवान् ब्रह्महा एवं भ्रूणहा वृत्रहा। सुरा सीधुभ्यामगेः पिबतेः टक् वाच्यः। सुरापी सीधुपी स्त्री। अगेः किम्? सुराप्रपायः। पिबतेः किम्? सुरां पातीति सुरापायः। कदाचिद्धन्तेः घञपि दृश्यते। आखुघातः चौरघातः इत्यादि॥ १०१०॥

पुरोऽग्रं सरतीति पुरःसरी। यशः करोतीति यशस्करी विद्या। टित्त्वादीप्। भासं करोतीति भास्करः। चपां करोतीति चपाकरः। कर्म्मकरी दासी। पुरोऽग्रेऽग्रतोभ्यः सरतेः टा वाच्यः। पुरसरः अग्रेसरः। अत सप्तम्या अलुगभिधानात्। अग्रतःसरः। पूर्व्वात् कर्त्तुश्च। पूर्व्वो भूत्वा सरतीति पूर्व्वसरः। पूर्व्वात् कर्त्तुः किम्? पूर्व्वं सरतीति पूर्व्वसारः। एवं तदनुसार इत्यादि। कुम्भकार इत्यादिकमुदाहरतापि इह क्वञो ग्रहणं यानि ज्ञापयति तान्यहं विवृणोमि। यथा कर्म्मणः परात् क्वञो हेतुताच्छील्यानुलोम्येष्वर्थेषु कर्त्तरि टः स्यात्। हेतुः प्रतीतशक्तिकं साधनम्। ताच्छील्यं फलनिरपेक्षा प्रवृत्तिः। आनुलोम्यम् अनुकूलता। हेतौ यशः करोतीति यशस्करी। ताच्छील्ये जनापवादकरः खलः। आनुलोम्ये श्राद्धकरः इत्यादि। एवं तदाद्यादिभ्यां परात् क्वञः टक्। तदादेर्य्यथा तत्करः मत्करः एतत्करः इदङ्करः किङ्करः। आद्यादेर्य्यथा। आदिकरः अन्तकरः वहुकरः बाहुकरः अहस्करः विभाकरः निशाकरः एककरः द्विकरः विकरः चतुष्करः प्रभाकरः भास्करः चित्रकरः नान्दीकरः श्रीकरः लिपिकरः बलिकरः भक्तिकरः क्षेत्रकरः जङ्घाकरः धनुष्करः अरुष्करः रजनीकरः चपाकरः चण्डाकरः दिनकरः दिवाकरः इत्यादि। कर्म्मशब्दात् परात् क्वञो भृतौ टः। भृतिः कर्म्ममूल्यम्। कर्मकरी वैतनिकः। कर्मकरी दासी अन्यत्र कर्मकारः। शब्द श्लोक कलह गाथा वैर चाटु सूत्र मन्त्र ग्रन्थ कुम्भ क्रम पद सूपान्धादेः परात् क्वञस्तु हेत्वाद्यर्थे तदभावेऽपि घञेव। शब्दकारः श्लोककारः कलहकारः गाथा-

**१०१२। शकृत्-स्तम्बात् दृति-नाथात् फले-रजो-मलात् देववातात् कृ-हृ-ग्रहाप इः।**

शकृत्-स्तम्बात् ५।, दृति-नाथात् ५।, फले रजस्-मलात् ५।, देववातात् ५।, कृ-हृ-ग्रह-आप: ५।, इ: १।।

**एभ्यः परेभ्यः क्रमादेतेभ्यः इः स्यात् घे। शकृत्करिः वत्सः, स्तम्बकरिः व्रीहिः, दृतिहरिः श्वा, नाथहरिः पशुः, फलेग्रहिः रजोग्रहिः मलग्रहिः देवापिः वातापिः।**

**१०१३। कुक्ष्यात्मोदरात् भुः खिः।**

कुक्षि-आत्मन्-उदरात् ५।, भु: ५।, खि: १।।

**एभ्यः परात् भृञः खिः स्यात् घे।**

---

कारः वैरकारः चाटुकारः सूत्रकारः मन्त्रकारः ग्रन्थकारः कुम्भकारः क्रमकारः पदकारः सूपकारः अन्धकार इत्यादि। ढात् परात् हृञोऽवहनेऽन्। अंशहरो दायादः, व्याधिहरम् औषधं, दुःखहरा सम्पत्तिः। वहने तु भारहारी वैतनिकः। वयोबोधकवहने च। कवचहरी युवा। आङ्स्ताच्छील्ये। पुष्पाहरः कुशाहरः। अदण्डसूत्रात् प्रहरणात् धृञः। वज्रधरः चक्रधरः गदाधरः शूलधरः धनुर्द्धरः। अदण्डसूत्रादिति किम्? दण्डधारः सूत्रधारः। दण्डधर इत्यपि दृश्यते। सूत्र-वर्जनात् प्रहरणभिन्नादपि भूधरः जटाधरः महीधरः गङ्गाधरः विद्याधरः। दण्डा-दिभ्यो ग्रहो वा। दण्डग्रहः दण्डग्राहः धनुर्ग्रहः धनुर्ग्राहः। शक्तिलाङ्गूलाङ्कुशयष्टि-तोमरसूत्रघटघटीभ्यो ग्रहोऽन्। शक्तिं गृह्णातीति शक्तिग्रहः। एवं लाङ्गूलग्रहः अङ्कुशग्रहः यष्टिग्रहः तोमरग्रहः सूत्रग्रहः घटग्रहः घटीग्रहः॥ १०११॥

पृथक् पदकरणं यथासंख्यार्थम्। तेन शकृत्स्तम्बाभ्यां कृञः दृतिनाथाभ्यां हृञः फलेरजोमलेभ्यो ग्रहः देववाताभ्यामापः परः इः स्यात् घे इत्यर्थः। शकृत्करिरित्यादि। शकृत् तालव्यादिर्विष्ठावाचकः। शकृत् करोतीति शकृत्करि-र्वत्सः। एवं स्तम्बकरिर्व्रीहिः। दृतिश्चर्मतां हरतीति दृतिहरिः श्वा। एवं नाथहरिः पशुः। फलं गृह्णातीति फलेग्रहिः। फले इत्येकारान्तग्रहणादकारस्य एकारः एवं रजोग्रहिः मलग्रहिः। देवम् आप्नोतीति देवापिः एवं वातापिः॥ १०१२॥

कुक्षिश्च आत्मा च उदरञ्चेति तस्मात्॥ १०१३॥

१०१४। खित्यन्व्याजरुषो मन्खौ द्वीकान्तत्वं त्वेकाजिचः।

खिति ७।, अन्व्याजरुषः ६।, मन्खौ १॥, द्वीकान्तत्वं १।, तु।१।, एकाजिचः६।।

व्यवर्जस्याजन्तस्यारुषश्च मन् स्यात् स्वश्च एकाजिचस्तु द्वीकान्तत्वं स्यात् खिदन्ते धौ परे। कुक्षिम्भरिः आत्मम्भरिः उदरम्भरिः।

१०१५। खशेजेः।

खश् ।१।, एजेः ५।।

ढात् परात् एजयतेः खश् स्यात् घे। जनमेजयः।

१०१६। मन्यात् स्वार्थे।

मन्यात् ५।, स्वार्थे ७।।

आत्मानं गां मन्यते गांमन्यः श्रियंमन्या।

---

नास्ति व्यं यत्र सोऽव्यः अव्यश्चासौ अच् इति अव्याच् अव्याच्च अरुस् च अव्याजरुस् तस्य द्वौ द्वितीया तस्याः कम् एकवचनं द्वीकम् अन्तौ यस्य न द्वीकान्तः तस्य भावः द्वीकान्तत्वम्। एकाच्चासौ इच् इजन्तश्चेति एकाजिच् तस्य। कुक्षिं बिभर्ति इति कुक्षिम्भरिः। पूर्वात् खिप्रत्ययेऽनेन पूर्वस्य मन्। आत्मानं बिभर्त्तीति आत्मम्भरिः। अत्र कोर्लुकि विरामे नस्य लुपि नञा निर्दिष्टमनित्यमिति न्यायात् तदादिविधेर्निषेधस्यानित्यत्वे मन् स्यात् एवम् उदरम्भरिः॥१०१४॥

एजेरिति एज् कम्पे इत्यस्य ज्यन्तस्य ग्रहणम्। जनम् एजयतीति जनमेजयः। खशः शित्त्वाद्रत्वे श्यपि जेर्लोपाभावे लोपोऽत इत्यकारलोपे पूर्वस्य मन्॥१०१५॥

ढात् परात् मन्यतेः खश् स्यात् कर्त्तरि स्वार्थे स्वनिमित्तधात्वर्थे। आत्मानं गां मन्यते इति गांमन्यः। अत्र खशः शित्त्वाद्रत्वे दिवसुतुदेति श्यनि लोपोऽत इत्यकारलोपे गोशब्दस्य द्वितीयैकवचनान्तत्वम्। एवं श्रियंमन्या॥१०१६॥

## १०१७। मुञ्ज-कूलास्यपुष्पात् धेटः।

मुञ्ज-कूल-आस्य-पुष्पात् ५।, धेटः ५।।

एभ्यः परात् धेटः खश् स्यात् घे। मुञ्जन्धयः कूलन्धयः आस्यन्धयः पुष्पन्धयः मुञ्जन्धयी, धेटः टित्त्वादीप्। [२५७]।

## १०१८। नाड़ी-शुनी-स्तन-कर-मुष्टि-पाणि-नासिकात् ध्मश्च।

नाड़ी-नासिकात् ५।, ध्मः ५।, च ।१।

एभ्यः परात् ध्मो धेटश्च खश् स्यात् घे। नाड़िन्धमः नाड़िन्धयः।

## १०१९। घटी-खारी-वाताद् विध्वरुस्तिला-दसूर्य्योग्राल्ललाटा-न्मित-नख-मानात् ध्मा-तुद-दृश-तप-पचः।

घटी-खारी-वातात् ५।, विधु अरुस्-तिलात् ५।, असूर्य्य-उग्रात् ५।, ललाटात् ५।, मित-नख-मानात् ५।, ध्मा-तुद-दृश-तप-पचः ५।।

एभ्यः परेभ्यः क्रमादेतेभ्यः खश् स्यात् घे। घटिन्धमः, खारिन्धमः वातन्धमः विधुन्तुदः, अरुन्तुदः तिलन्तुदः असूर्य्यम्पश्यः उग्रम्पश्यः ललाटन्तपः मितम्पचः, नखम्पचः द्रोणम्पचः।

---

मुञ्जं धयतीति मुञ्जन्धयः। अत्र शिति परे एचोऽशित्या इत्यस्याप्राप्तौ एकारस्यायः। खिदन्ते परे पूर्वस्य मन्। एवं कूलन्धय इत्यादि। धेटः टित्त्वादिति यत्र धेटधातोरेकारस्य अयादेशः स्यात् तत्रैव टित्त्वादीप् इत्यर्थः। तेन मुञ्जन्धयी। एवं धेटदृशपाघ्रेति शप्रत्यये उद्धयी। नाड़ीशुनीत्यादिना खश्प्रत्यये नाड़ीन्धयीत्यादि। अयादेशाभावे तु धातव्या धानीया इत्यादौ न ईप् ॥१०१७॥

नाड़ी च शुनी च स्तनश्च करश्च मुष्टिश्च पाणिश्च नासिका चेति तस्मात्। नाड़ीं धमतीति नाड़ीन्धमः। खशः शित्त्वाद्ध्मत्वे अपि धमादेशे खित्त्वात् पूर्वस्य घन् स्वौ। एवं नाड़िन्धय इत्यादि ॥१०१८॥

पृथक्पदकरणं ध्मादिभिर्यथासंख्यार्थम्। तेन घटीखारीवातेभ्यो ध्मः विध्वरु-

## १०२०। कूलादुद्रुजुद्वहः।

कूलात् ५।, उद्-रुजः उद्-वहः ५।।

कूलात् आभ्यां खश् स्यात् घे। कूलमुद्रुजा नदी, कूलमुद्वहः समुद्रः।

## १०२१। प्रियवशाद्भयर्त्तिमेघात् सर्वकूलाभ्रकरीषात् वद-कृ-कषः खः।

प्रियवशात् ५।, भय-ऋति-मेघात् ५।, सर्व-कूल-अभ्र-करीषात् ५।, वद-कृ-कषः ५।, खः १।।

एभ्यः परेभ्यः क्रमादेतेभ्यः खः स्यात् घे। प्रियंवदः वशंवदः भयङ्करः ऋतिङ्करः मेघङ्करः सर्वङ्कषः कूलङ्कषः अभ्रङ्कषः करीषङ्कषः।

---

स्तिलेभ स्तुदः असूर्य्योग्राभ्यां दृशः ललाटात्तपः मितनखमानेभ्यः पचः परः खश् स्यात् कर्त्तरि। घटीं धमतीति घटिन्धमः। खशः शित्त्वात् अपि धमादेशे खित्त्वात् पूर्वस्य मन् स्त्री। एवं खरीं गर्गरीं धमतीति खरिन्धमः। खारीति पाठे परिमाणविशेषः। अरुस्तुदतीति अरुन्तुदः अत्र खशः शित्त्वादसंज्ञायां दिवसुतुदेति अप्रत्यये तस्य ङित्त्वाद्गुणाभावे लोपोऽत इत्यकारलोपे पूर्वस्य मनि स्यादेः संो लोप इति सलोपः। सूर्य्यं न पश्यतीति असूर्य्यम्पश्यः। मानमिह परिमाणवाचकं द्रोणाढ़कादि, तेन द्रोणम्पचः आढ़कम्पच इत्यादि। अन्यत् सुगमम् ॥१०१९॥

उभयत्र उदो ग्रहणं स्पष्टार्थम्। रुजशो भङ्गे। कूलसुद्रजतीति कूलमुद्रजः। खशः शित्त्वादत्वे दिवसुतुदेति अप्रत्यये ङित्त्वात् गुणाभावे पूर्वस्य मन्। एवं कूलमुद्वहः ॥१०२०॥

पृथक्पदकरणं वदादिभिर्य्यथासंख्यार्थम्। तेन प्रियवशाभ्यां वदः भयर्त्तिमेघेभ्यः कृञः सर्वकूलाभ्रकरीषेभ्यः काषः परः खः स्यात् प्रियं वदति कथयतीति प्रियंवदः एवं वशंवदः। भयं करोतीति भयङ्करः एवम् ऋतिङ्करः मेघङ्करः। सर्वं कषति हन्तीति सर्वङ्कषः। एव कूलङ्कषः अभ्रङ्कषः करीषङ्कषः ॥१०२१॥

## १०२२। क्षेमप्रियमद्रात् कुर्वा।

क्षेम-प्रिय मद्रात् ५।, कुः ५।, वा ।१।।

एभ्यः कृञः खो वा स्यात् घे। क्षेमङ्करः प्रियङ्करः मद्रङ्करः। पक्षे क्षेमकारः।

## १०२३। भावघे त्वाशिताद्भुवः।

भाव-घे ७।, तु ।१।, आशितात् ५।, भुवः ५।।

आशिताद्भुवः खः स्यात् भावे घे (करणे) वा। आशितम्भवं वर्त्तते, आशितं भवत्यनेनेति आशितम्भवः ओदनः।

## १०२४। तॄ भृ वृ दॄ जि धृ तप यम दम मद लिह गम सहाजो नाम्नि।

तॄ—अजः ५।, नाम्नि ७।।

एभ्यः खः स्यात् संज्ञायाम्। रथेन तरतीति रथन्तरः, विश्वम्भरः, पतिंवरा, पुरन्दरः भगन्दरः धनञ्जयः वसुन्धरा, शत्रुन्तपः परन्तपः वाचंयमः अरिन्दमः, इरया माद्यतीति इरम्मदो हस्ती, वहंलिहः भुजङ्गमः (पतङ्गमः प्लवङ्गमः) सर्वंसहः वातमजः।

---

क्षेमङ्करोतीति क्षेमङ्करः। पक्षे वाशब्दस्य व्यवस्थावाचित्वात् हेतुताच्छील्यानुलोम्येष्वर्थेषु तदभावेऽपि ढात् पण एव। तेन क्षेमकार इत्यादि ॥१०२२॥

आशितस्तृप्तः आशितस्य भवनम् आशितम्भवम् अत्र भावे खः। आशितम्भवत्यनेनेति आशितम्भव ओदनः अत्र करणे खः ॥१०२३॥

तॄ तरे भृञि भृतिपुष्ट्योः वृ न ञ ग वृतौ दॄयगि विदारे जि जये धृ ञच धृत्यां तपौ तापैश्वर्ययोः यमौ उ विरतौ दन्भू उपशमे मदीभिर्यञि हर्षे लिह स्वादे औगम्लृ गत्यां सहजङ शक्तौ अज क्षेपे गतौ। इत्येतेभ्यः खः स्यात् नाम्नि। रथेन तरतीति रथन्तरः विश्वं बिभर्त्तीति विश्वम्भरः। पतिं वृणोतीति पतिंवरा। पुरं दारयतीति पुरन्दरः। एवं भगन्दरः। धनं जयतीति धनञ्जयः। वसूनि धरतीति वसुन्धरा। शत्रुं तपतीति शत्रुन्तपः एवं परन्तपः। वाचं यच्छतीति

१०२५। शर्द्धंजहोरङ्गमोरगतुरगतुरङ्गमविहगविहङ्गमभुजगभुजङ्गपतगपतङ्गप्लवगप्लवङ्गाः।

शर्द्धंजह—प्लवङ्गाः १॥।

एते खान्ता निपात्यन्ते। शर्द्धं जहातीति शर्द्धंजहो माषः, उरसा गच्छतीति उरङ्गमः, उरगः त्वरया गच्छतीति तुरगः तुरङ्गमः। विहायसा गच्छतीति विहगः, विहङ्गमः, भुजेन गच्छतीति भुजगः भुजङ्गः, पतेन गच्छतीति पतगः पतङ्गः, प्लवेन गच्छतीति प्लवगः प्लवङ्गः।

१०२६। नग्नपलितप्रियान्धस्थूलसुभगाढ्यात् कुः खनट् धे च्व्यर्थे।

नग्न—आढ्यात् ५।, कुः ५।, खनट् ।१।, धे ७।, च्व्यर्थे ७।।

एभ्यः परात् कृञः खनट् स्यात् धे च्व्यर्थे। अनग्नो नग्नः

---

वाचंयमः अत खिति परे पूर्वस्य मन आपोऽपि ह्रस्वः। अरीन् दाम्यतीति अरिन्दमः। इरा जलम् इरा भूवाक् सुरासु स्यात् इत्यमरात् इरया माद्यतीति इरम्मदो वज्राग्निः। वहं लेढीति वहंलिहः। खनिगदिमदोत्यत इत् कारणज्ञापकादत न गुणः। भुजेन गच्छतीति भुजङ्गमः। भुजो शौ वक्रणे कङ्गोः कभाव इति भावे कप्रत्यये भुजो वक्रणम्। एवं प्लवेन गच्छतीति प्लवङ्गमः। सर्वं सहते सर्वंसहः। वातमजतीति वातमजो मृगविशेषः। खनिगदिमदोत्यत इत् कारणज्ञापकादत नकी आदेशः। एषूपदेष्वेव संज्ञा सम्भवतीति उपपदनियमो बोध्यः। किन्तु कदाचिदनाम्नि च दृश्यते। यथा रिपुञ्जयः बलास्ते कुम्भकर्णादयः इति महानाटकम्। एवं हृणुते हृदयङ्गमः सखा इति कालिदासः॥१०२४॥

ग्रधुञ क्लेदने। शर्द्धम् आर्द्रत्वं जहातीति शर्द्धंजहो माषः। उरसा गच्छतीति उरङ्गमः उरगः। त्वरया गच्छतीति तुरगः तुरङ्गमः। विहायसा गच्छतीति विहगः विहङ्गमः। भुजेन गच्छतीति भुजगः भुजङ्गः पत्यतेऽनेनेति पतः पक्षः पतेन गच्छतीति पतगः पतङ्गः। प्लवेन गच्छतीति प्लवगः प्लवङ्गः बहुवचनादन्येऽपि त्वरया गच्छतीति तुरङ्गः; विहायसा गच्छतीति विहङ्गः॥१०२५॥

क्रियतेऽनेनेति नग्नङ्करणं द्यूतं, पलितङ्करणं प्रियङ्करणम् अन्धङ्करणः शोकः, स्थूलङ्करणं दधि, सुभगङ्करणं रूपम्, आढ्यङ्करणं वित्तम्।

## १०२७। भुवो घे खिष्णु-खुकञौ।

भुवः ५।, घे ७।, खिष्णु खुकञौ १॥।

नग्नादिभ्यः परात् भुवस्त्वर्थे एतौ घे स्तः। नग्नम्भविष्णुः नग्नम्भावुकः।

## १०२८। ढात् भज-वह-सहो विण्।

ढात् ५।, भज-वह-सहः ५।, विण्।१।।

ढात् परेभ्य एभ्यो विण् स्यात्। सुखभाक् प्रष्ठवाट् तुराषाट्।

## १०२९। अनडुच्छ्वेतवाहादिः।

अनडुच्छ्वेतवाहादिः १।।

एते विणन्ता निपात्यन्ते। अनो वहतीति अनड्वान् वृषः। श्वेतैरुह्यते श्वेतवाः इन्द्रः। अवयजतीति अवयाः,

---

अनग्नो नग्नः क्रियतेऽनेनेति नग्नङ्करणं खित्त्वात् पूर्वस्य मन्। अप्रियः प्रियः क्रियतेऽनेनेति प्रियङ्करणी सेवा टित्त्वादीप्। च्व्यर्थे प्रत्ययविधानात् च्विप्रत्ययो न स्यात्। तेन नग्नीकरोत्यनेनेत्यत्र खनट् न स्यात्। अनट् च न स्यादित्येके ॥१०२६॥

अनग्नो नग्नो भवतीति नग्नम्भविष्णुः खित्त्वात् पूर्वस्य मन्। एवं पलितम्भविष्णुः प्रियम्भविष्णुः अन्धम्भविष्णुः स्थूलम्भविष्णुः सुभगम्भविष्णुः आढ्यम्भविष्णुः। एवं नग्नम्भावुकः इत्यादौ खित्त्वात् पूर्वस्य मन् ञित्वात् वृद्धिः ॥१०२७॥

सुखं भजतीति सुखभाक् विण् इकार उच्चारणार्थः। णकारो वृद्ध्यर्थः त्यो वमात्र इति वस्य लोपः। प्रष्ठः पुरोगः तं वहतीति प्रष्ठवाट्। तुरा वेगः तुरां सहते तुराषाट् अत्र ढोढ़ीभाविति ढत्वे शासवसघससाढ़ाञ्चेति षत्वम्। भजतेरुपसर्गपूर्वकादपि विणित्येके। प्रभाक् विभाक्। सहि वहिभ्यां छन्दस्येव विणित्येके ॥१०२८॥

उक्थानि शंसतीति उक्थशाः यजमानः। पुरोडाः हविः, पुरोडाशः।

**१०३०। क्रम गम खन सन जनो विट्।**

क्रम—जनः ५।, विट् ।१।।

एभ्यो विट् स्यात् घे।

**१०३१। विड्वनोर्ङा।**

विड्वनीः ७॥, ङा ।१।।

धोरन्त्यस्य ङा स्यात् विटि वनि च। उदधिक्राः अग्रेगाः विसखाः गोषाः अब्जाः।

**१०३२। वासुसिस् मन् क्वनिप् वनिप् विच् क्विपः।**

वासु—क्विपः १॥।

धोरेते स्युः के भावे च। नीयते अनेनेति नेत्रं दंष्ट्रा

---

श्वेतवाह आदिर्यस्य स श्वेतवाहादिः अत्र विरामेऽपि डसङ्गोऽप्राप्तिः सूत्रत्वात्। अनः शकटं वहतीति अनड्वान् वृषः। श्वेतैरुह्यते इति श्वेतवा इन्द्रः। अत्र कर्त्तुः परात् वहेः कर्मणि वाच्ये विण्। अवयजतीत्यवयाः कर्मपूर्वकत्वाभावेऽपि विण्। उक्थानि शंसतीति उक्थशाः यजमानः, अत्र तकारस्य थकारे शंसतेर्नलोपे वृद्धिश्च। पुर आदौ दाश्यते यत् स पुरोडा हविः, अत्र कर्मणि विणि दकारस्य डकारः पुंस्त्वञ्च। पुरोडाश इत्यकारान्तोऽपि तथाच सदा पुरोडाश पवित्रिताधर इति॥ १०२९॥

अग्रे गच्छतीति अग्रेगा इत्यधिकरणादपि विट् स्यात् इत्याशङ्क्य ढादिति नोक्तम्॥ १०३०॥

विट् साहचर्य्यात् गुणी वन्नेव ग्राह्यः। तेन सुपीवा प्रातरित्वा इत्यादौ क्वनिपि न प्रसङ्गः। उदधिं क्रामतीति उदधिक्राः पूर्वेण विट्। गां सनति ददातीति गोषा इति सनधातोः सस्य कृतत्वात् षत्वम् अप्सु जायते अब्जाः॥ १०३१॥

नद्धी योत्रम्, उरुव्यचाः नृचचाः रजः चक्षुः सर्पिः सुष्ठु ददातीति सुदामा गन्मा।

### १०३३। हब्-व-तेर्नेम्।

हब्-व-तेः ६।, न ।१।, इम् ।१।।

**क्तो हबस्य वस्य तेश्च इट् न स्यात्। सुशर्म्मा सुपीवा प्रातरित्वा सुत्वा, भूरिदावा वारिजावा सोमपाः रेट् रोट् क्रुङ् युङ् प्रत्यङ् अवन्यूः मित्रश्रीः आश्रीः गीः बहुभ्रट् बहुभ्रट् घृतस्पृक् शस्यात् क्रव्यात्।**

---

वश्च अस् च उस् च इस् च मन् च क्वनिप् च विच्च क्विप् च ते। पृथग्-योगात् सर्वधातुभ्यो विहिता अपि प्रयोगानुसारात् धातुविशेषेभ्य एव कारकविशेषे भावे च स्युरिति बोध्यम्। अन्यथा गत्तम् इत्याद्यप्रयोगापत्तेः। नीयतेऽनेनेति नेत्रम्। दश्यतेऽनयेति दंष्ट्रा एव नस्यानुस्वारे शङ्काजिति षङि ष्टुभिरिति तस्य च टत्वे अभिधानात् स्त्रीत्वे आप्। नह्यतेऽनयेति नद्धी रज्जुः। अत्र नही धङ् भाविति हस्य ढभात्तथोरिति तस्य धत्वे भषभसोरिति पूर्व धस्य दत्वेऽभिधानात् स्त्रीत्वे नदादित्वात् ईप्। यूयतेऽनेनेति योत्रम्। एवं युजिर्योजे योक्त्रं दाव लूनौ दात्रं पा पाने पात्रं तुद त्रोशे तोत्रं मिह्यौ सिचि मेढ्रं षिणञ् बन्धे सेत्रं सिच पश्चौजे सेक्त्रं ष्टुञल स्तुतौ स्तोत्रं शसि बधे शस्त्रम् अस इट् अस्त्रं पूञ शोधे पोत्रं पतल्लञ पत्रं भसञि द्युतौ भस्त्रा अमगतौ अन्त्रीत्यादि। एषु ये सेमस्तेभ्यो हब वतेरिति वक्ष्यमाणादिम् निषेधः। असमाह। उरु महान्त विचति उरुव्यचाः व्यचोजिरित्यत्र अस् वर्जनात् न जिः। नरं चष्टे नृचचाः चचः कसात्र इत्यत्र अस् वर्जनात् न आदेशः। रज्यतेऽनेनेति रजः रञ्जोऽपथकेति न लोपः। एवं विधश्च विधौ विधतीति वेधाः। उसमाह। चचलञ वदे अनेकार्थत्वात् दर्शनार्थः। चष्टेऽनेनेति चक्षुः चचः क्साञ इत्यत्र उस् वर्जनात् न आदेशः। एवं धन रवे धनुः। इसमाह। सर्पतीति सर्पिः एवं ह्रयते यत्तद्धविः। मनमाह। सुष्ठु ददातीति सुदामा। गच्छतीति गन्मा। अत्र धोर्मन भावे मस्य नः॥ १०३२॥

हब इति शेषमकारान्तः प्रत्याहारः। तेल उष्णक् घृणाक् गृधुः घृणाः रक्षाः यवः इत्यादौ इम् न स्यात्। न च उकारा .... प्रत्ययस्य असम्भवे जकारादेः सम्भवेऽपि तस्य इम .... इति ग्राह्यम्। तथाक्तौ

यमः प्रत्याहारस्य अप्रसिद्धतया वकारमकारयोरेव ग्रहणमिति भ्रमापत्तेः। सुशर्मा-तीति सुशर्म्मा अनेन इम् निषेधः। क्वनिपमाह। सुष्ठु पिवतीति सुपीवा अत्र क्वनिप इकार उच्चारणार्थः किच्चात् गुणे दामागे इति ङी। प्रातरेति प्रातरित्वा सुनोतीति सुत्वा उभयत्र किच्चात् गुणाभावे पिच्चात् खस्य तन्। कर्म्मपूर्वकदृशो-ऽतीति क्वनिप्। मेरुं दृष्टवान् मेरुदृश्वा एवं बहुदृश्वा। राजसहाभ्यां युधोऽत्य-तीति। राजयुद्धा सहयुध्वा एवं राजानं कृतवान् राजकृत्वा। वनिपमाह। भूरि ददातीति भूरिदावा। वारिणि जायते वारिजावा उभयत्र विड्वनोरिति ङा। एवं यजते स्म यज्वा अत्र स्वनिगदिमदीत्यत्र इतुकरणज्ञापकात् नङा आदेशः। विच-माह। सोमं पिवतीति सोमपाः अत्र विच इकार उच्चारणार्थः चकारस्तु प्राचीन-मतानुवादार्थो नत्वन्ययार्थः। त्वो वमाव इति वस्य लोपः। रेषति रोषतीति रेट् रोट् विचि गुणः। क्रुन्चु गत्यां विचि क्रुङ् अस्मात् क्विप् न स्यादनभिधानात्। क्विपमाह। अस्य इकार उच्चारणार्थः क्विपः किच्चात् गुणाभावादिः। पिच्चात् खस्य तन् त्वो वमाव इति वस्य लोपः। युनक्तीति युङ् अत्र क्विपि नलोपेऽपि युजिरो-ऽसे इति नुण्। प्रत्यञ्चतीति पूजार्थस्य नलोपाभावे प्रत्यङ्। गत्यर्थस्य तु नकार-लोपेऽपि त्रिदचोऽवेरिति नुणि प्रत्यङ् अर्चेदीव्यतीति अत्यद्यूः क्वौ शूटाविति ऊट्। मित्रं शास्तीति मित्रशीः क्वौत्वाशास्त्रेर्युक्तेः आकारस्य इकारे शासवसेति षत्वम्। आशासनमाशीः इकारे षत्वम्। आशास इति किम्? प्रशाः। गृणातीति गीः अत्र ऋदिरणाविति इर्। वहतीति वहो घोटकादिः। तस्मात् भ्रश्यति वहभ्रट् हसुङ् न इति न लोपे शक्लादेरिति षङ्। घृतं स्पृशतीति घृतस्पृक् किच्चात् न गुणः। शस्य-मतीति शस्यात्। एवं क्रव्यात्। ईषद्दुःसोः पराविहिताभ्यामाभ्याम नखला-भ्याम् असरूपाणां तव्यादीनां बाधनात् कर्म्मपूर्वकधातोः परविहितो असरूपा-वपि क्विप् विचौ ढात् षणिति हनचरत्यादि स्कुट इत्येतैः क्वचित् बाध्येते क्वचि-दिति किं क्रव्यात् क्रव्यादः अत्र क्विप् षण् च। शत्रुहाः शत्रुघ्नः अत्र विट् टक् च। कर्म्मकृत् कर्मकरः अत्र क्विप् टश्च। अग्निश्चित् सोमात् सुनोऽतीति क्विप् अग्निं चितवान् अग्निचित् एवं सोमसुत्। सु पुण्य पाप धर्म्म मन्त्र पदेभ्यः कृञोऽतीति क्विप्। सुष्ठु कृतवान् सुकृत् पापकृत् धर्म्मकृत् मन्त्रकृत् पदकृत्। समाहारे येवेष्टसिद्धौ विच् क्विप इति बहुवचनं प्रत्ययान्तरप्राप्त्यर्थम्। इन कुत्सायां विक्रीणातेरिणतीति कर्त्तरि। सोमं विक्रीतवान् सोमविक्रयी एवं शुक्रविक्रयी घृतविक्रयी लवण-विक्रयी लौहविक्रयी विप्रः॥१०३३॥

१०३४ । छादे-स्त्रमन्-क्वीस्-घे स्वः ।

छादेः ६।, त्र-मन्-क्वि-इस्-घे ७।, स्वः १।।

छादयतेः स्वः स्यात् त्रे मनि क्वि-इसि घे च । छत्रं छद्म तनुच्छत् छदिः उरश्छदः ।

१०३५ । दद्दज्जुहू वाक् प्राट् श्री स्रू द्रू ज्वायतस्तू कटप्रू परिव्राट् दिद्युज्जगत् दधृक् स्रगुष्णिहः ।

दद्दत्—उष्णिहः १॥।

एते क्विबन्ता निपात्यन्ते । दीव्यतीति दद्दत्, जुहोत्यनयेति जुहूः, वक्त्यनयेति वाक्, पृच्छतीति प्राट्, श्रयत्येनां श्रीः, स्रवतीति स्रूः द्रवतीति द्रूः जवतीति जूः आयतं स्तौति आयतस्तूः कटं प्रवते कटप्रूः, परिव्रजतीति परिव्राट्, द्योतते इति दिद्युत्, गच्छतीति जगत्, धृष्णोतीति दधृक्, सृज्यते इति स्रक्, ऊर्ध्वं स्निह्यतीति उष्णिक् ।

१०३६ । जिर्घोऽन्त्यः ।

जिः १।, घः १।, अन्त्यः १।।

अन्त्यो जिर्घः स्यात् । मित्रं ह्वयतीति मित्रह्वः ।

---

छदकिच संवृतौ छाद्यतेऽनेनेति छत्रम् अत्र इवततेरितीम् निषेधे ञेर्लोपे ऽनेन ह्रस्वे झपझसोरिति दस्य तः । छद्म इति मनि ह्रस्वः तनुं छादयतीति तनुच्छत् अत्र क्विपि ह्रस्वः । छाद्यतेऽनेनेति छदिः अत्र इसि ह्रस्वः । घे परे ह्रस्वविधानात् छादयतेः कर्त्तरि पुंसि संज्ञायां घः प्रत्ययो मन्तव्यः । तेन उरश्छादयतीति उरश्छदः एवं प्रच्छदः दन्तच्छदः छदः एषु घे परे ह्रस्वः ॥१०३४॥

षोडशैते क्विबन्ता निपात्यन्ते ॥१०३५॥

अन्त्यः कृत्प्रत्ययाव्यवहितपूर्ववर्त्ती । मित्रह्वरिति क्विपि ग्रहस्वपाद्योरिति जौ

## १०३७। वे-ध्याप्यां क्वौ ।

वे-ध्या आप्यां ६।।।, क्वौ ७। ।

ऊः धीः आपीः । ध्याप्योः अतएव जिः ।

## १०३८। अमुङो झस्यणौ चातिकि ।

अमुङः ६।, झसि ७।, अणौ ७।, च ।१।, अतिकि ७। ।

अमन्तस्योङोर्घः स्यात् अणौ झसे क्वौ च, न तु तिकि । प्रशान् ।

## १०३९। स्निवाव मव ज्वर त्वरो वूडुङा अमे च ।

स्निव अव मव-ज्वर त्वरः ६।, व् ।१।, ऊट् ।१।, उङा ३।, अमे ७।, च ।१। ।

एषां व उङा सह ऊट् स्यात् क्वौ झसि अणौ अमे च । स्रूः ऊः मूः जूः तूः ।

---

अनेन दीर्घः । एवं हूतः हूतवान् हूतिः हूत्वा । ज्यागि जरायां जीनः टु ओश्वि शूनः । अन्त्यः किम् इष्टिः उष्टः पृष्टः ॥१०३६॥

ऐञ वे स्यूतौ वयतीति ऊः क्विप् ग्रहस्वपाद्योरिति जौ पूर्वेण दीर्घे सिद्धे नियमः । तेन अस्य जेः क्वावेव दीर्घो नान्यत्र क्वाविति किम् ? उतः उतिः उत्वा ध्यायत्यनया इति धीः । आप्यायते आपीश्च । एतयोः क्वौ जेरसम्भवेऽपि जेः दीर्घविधानात् क्वौ जिः ततो दीर्घश्च ॥१०३७॥

अम् अमन्तो धातुः । तस्य उङ् अमुङ् तस्य । प्रशाम्यतीति प्रशान् क्विपि उङो दीर्घे धोर्मं न इति मस्य नः । एवं कनीञि प्रकान् अणौ झसे तु शान्तः शान्तिः शान्त्वा । झसि किम् ? प्रशम्य । अणौ किम् ? गन्ता । हतिः हतः हत्वा इत्यादौ तु वनतनेति अम्लोपे अमन्तत्वाभावात् न दीर्घः । अतिकीति किम् ? रन्तिः तन्तिरित्यादि ॥१०३८॥

स्निव्यु शोषे गतौ । सीव्यतीति स्रूः अव रक्षादौ अवतीति ऊः । मव नद्धे मवतीति मूः । एषामौकारादौ धोरियुवचीति उवि स्रुवौ उवौ मुवौ इत्यादि । ज्ञ झर्म रोगे ज्वरतीति जूः । जित्वरषमङ सदे, त्वरते तूः । अणौ-झसे तु स्रूतः स्रूतिः । ऊतिः मूतिः जूर्तिः तूर्तिः । अमे तु मनि स्रोमा । अव-तेर्मनि मनीषादित्वात् मनः टिलोपे गुणे ओम् ॥१०३९॥

१०४०। राच्छ्वोर्लोपः।

रात् ५।, च्छ्वोः ६॥, लोपः १।।

रात् परयोः छकारवकारयोर्लोपः स्यात् क्वौ झस्यणौ अमि च। मुर्च्छा मूः धुर्वी धूः।

१०४१। आदूटो व्रिः।

आत् ५।, ऊटः ६।, व्रिः १।।

अवर्णात् परस्य ऊटो व्रिः स्यात्। जनान् अवतीति जनौः।

१०४२। यम-मन-तन गमोऽन्तलोपः क्वौ।

यम-मन तन-गमः ६।, अन्तलोपः १।, क्वौ ७।।

एषाम् अन्तस्य लोपः स्यात् क्वौ। संयत् परिमत् परीतत् सङ्गत्।

---

मूर्च्छा मोह उच्छ्रये ऋखौ क्विपि अनेन छलोपेऽर्य्यनचतयीति दीर्घे मूः। अचि तु मुरौ मुरः इत्यादौ ऋखस्थितिः। धुर्वी हिंसे ऋखौ क्विपि वलोपे र्व्यनचतयीति दीर्घे धूः धुरौ धुरः। अणौ झसि तु मूर्त्तः मूर्त्तिः धूर्त्तः धूर्त्तिः। अत्र रेफसान्निध्यात् वकारो दन्त्य एव ग्राह्यः। तेन घर्व गतौ नर्व गतौ इत्यादौ न प्रसङ्गः॥१०४०॥

जनानवतीति जनौः अत्र अवर्णान्तकर्म्मोपपदस्य क्विवन्तधातुना समासेऽनेन व्रिः। यत्रादौ क्विप् ततः समासस्तत्र गुण एव। तेन ननस्य ऊः जनोः तत्र ऊः तवोः इति असमासेऽपि गुण एव। एकपदे तु श्रवविकारे क्विपि च्छ्वोः शूटाविति ऊटि अनेन वृद्धौ श्रौः श्रावौ श्रावः। धावुञ जवे धौः धावौ धावः। क्तौ श्रौतिः। एवं धौतिः धौत्वा॥१०४१॥

संयच्छतीति संयत्। परिमन्यते परिमत्। परितनोतीति परीतत्। एवं संगच्छते सङ्गत्। एषु जमलोपे स्वस्य तन्। परीतदिति दीर्घविधानात् क्विबन्ते धातौ उपसर्गादेः क्वचित् दीर्घः स्यादिति सूचितम्। तेन तनि रुहि नहि वृति इषि व्यधि रुचि सहादिषु क्विबन्तेषु उपसर्गाकारयोर्दीर्घ इति बोध्यम्। परितनोति परीतत् विरोहतीति वीरुत्। उपनह्यतीति उपानत्। उपवर्त्तते

१०४३। स्रि-विष्वग्देवस्य टेरद्र्यञ्चौ क्वौ।

स्रि विष्वच्-देवस्य ६।, टेः ६।, अद्रि १।, अञ्चौ ७।, क्वौ ७।।

स्रेर्विष्वचो देवस्य च टेरद्रिः स्यात् क्विबन्तेऽञ्चतौ। सर्वान-ञ्चतीति सर्वद्र्यङ्, विष्वद्र्यङ्, देवद्र्यङ्।

१०४४। अमुद्र्यङ् अमुमुयङ् अदमुयङ् अदद्र्यङ्।

अमुमञ्चतीत्यर्थे एते निपात्यन्ते।

१०४५। सह-सन्तिरः सध्रि-समि तिरि।

सह सम्-तिरः ६।, सध्रि समि तिरि।१।।

एषां क्रमादेते स्युः क्विबन्तेऽञ्चतौ। सध्र्यङ् सम्यङ् तिर्यङ्।

१०४६। वीरुहो धङ् क्वौ।

वीरुहः ६।, धङ्।१।, क्वौ ७।।

वीरुत्।

१०४७। त्यदादि-भवत्-समानान्योपमानात् दृशः टक्-सक्-क्विपो ढे।

त्यदादि—उपमानात् ५।, दृशः ५।, टक्-सक्-क्विपः १॥, ढे ७।।

त्यदादेर्भवतः समानादन्यस्माच्चोपमानात् दृश एते स्युः ढे।

---

उपाहत्। प्रवर्षतीति प्रावृट्। मर्म्म विध्यतीति मर्म्मावित् एवं मृगावित्। निरोचते नीरुक्। ऋतिं सहते ऋतीषट् अत्र अम्बष्ठादित्वात् षत्वम्॥ १०४२॥

स्रिश्च विष्वक् च देवश्चेति तस्य। विष्वगिति मुहुर्मध्यं चालमव्ययं विष्वगञ्चतीति विष्वद्र्यङ्॥ १०४३॥

सुगमम्॥ १०४४॥

सह अञ्चतीति सध्र्यङ्। समञ्चतीति सम्यङ्। तिरोऽञ्चतीति तिर्यङ्॥१०४५॥

विपूर्वस्य रुहो धङ् स्यात् क्वौ। वेर्दीर्घस्य वीजं यममनेत्यत्र लिखितम्॥१४६॥

त्यद् आदिर्यस्य स त्यदादिः। त्यदादिश्च भवांश्च समानश्च अन्यश्चेति। त्यदादि-

१०४८। स्बे र्ङ्गा।

स्बे: ६।, ङ्गा ।१।।

स्बे र्ङ्गा स्यात् टगाद्यन्ते दृशि। स इव दृश्यते तादृश: तादृक्ष: तादृक्, भवादृश:।

१०४९। समानेदं किमद: सेक्यमू।

समान-इदम् किम-अद: ।६।।, स-ई को अमू ।१।।।

एषां स्थाने स ई को अमू एते क्रमात् स्यु: टगाद्यन्ते दृशि। सदृश: ईदृश: कीदृश: अमूदृश: अन्यादृश:।

इति दृनादिपाद:।

---

भवत्समानान्यं तच्च तत् उपमानञ्चेति त्यदादिसमानान्योपमानं तस्मात्। उपमानभूतेभ्य: एभ्य: परात् दृश: एते स्युर्ढे ॥ १०४७ ॥

ङित्वादन्त्यस्य स्थाने। स इव दृश्यते इति टकि कित्वात् गुणाभावे तादृश: टित्वादीपि तादृशी। एवं सकि कित्वात् गुणाभावे शक्नाजिति षङि षढो: क: सि इति षस्य कत्वे चुङ् क्रुङिति शस्य कत्वे वा तादृक्ष:। स्त्रियान्तु तादृक्षा। एवञ्च क्विपि कित्वात् गुणाभावे तादृक् एवं यादृश: एतादृश: त्वमिव दृश्यते त्वादृश: अहमिव दृश्यते मादृश: आवामिव दृश्येते अस्मादृशौ वयमिव दृश्यन्ते अस्मादृशा:। त्वमिव दृश्यते त्वादृश: युवामिव दृश्येते युष्मादृशौ यूयमिव दृश्यन्ते युष्मादृशा:। मुख्ययोर्युष्मदो: साचात् द्विवचनाभावे युवावौ न स्यातामिति पूर्वं लिखितम्। एवं भवानिव दृश्यते भवादृश: ॥ १०४८ ॥

समानश्च इदम् च किम् च अदस् चेति। सश्च ईश्च कोश्च अमूश्चेति। समान इव दृश्यते सदृश: अयमिव दृश्यते ईदृश: क इव दृश्यते कीदृश: असाविव दृश्यते अमूदृश:। अन्य इव दृश्यते अन्यादृश: ॥ १०४९ ॥

इति दृनादिपाद:।

## तृतीयः पादः—क्तादिः ।

---

### १०५० । क्त-क्तवतू भूते ढभावे घे ।

क्त-क्तवतू १॥, भूते ७।, ढभावे ७।, घे ७। ।

धोरतीतेऽर्थे ढभावे क्तो घे क्तवतुः स्यात्, उकाविती । स्तुतस्त्वया विष्णुः, स्नातं मया, विष्णुर्विश्वं कृतवान् ।

### १०५१ । च्वे घोऽढे भावदैन्याक्रोशे तु वा ।

च्वेः ६।, घः १।, अढे ७।, भावदैन्याक्रोशे ७।, तु ।१।, वा ।१। ।

च्वे घः न तु ढे, भावदैन्याक्रोशे तु वा, तयोः परयोः ।

### १०५२ । सूल्वाद्योदिद्दृच्वी-यल् स्यातो न तोऽपृमूर्च्छख्याध्यामदो दस्य ।

सू-लू-आदि-ओत्-इत् र-च्वी-यल्-स्य-आतः ५।, न ।१।, तः ६।, अपृ-मदः ५।, दः ६।, च ।१। ।

स्वादेर्ल्वादेरोकारेतो दान्तात् रेफात् च्वीशब्दात् यलस्य युक्ताकारान्तात् परयोस्तयोस्तस्य नः स्यात्, पूर्वस्य च दस्य नः, न तु प्रादिभ्यः । च्वीणः च्वीणवान् । अढे किम् ? च्वितः कामो मया ।

---

ष्टुञ्ल स्तुतौ कर्म्मणि क्तः वेम सहेति वेमत्वेऽपि वृदु श्रीति इमो निषेधे कित्त्वात् गुणाभावे स्तुतः । स्नाल शौचने भावे क्तः स्नातं कृ ञ द डु कर्त्तरि क्तवतुः कित्त्वात् गुणाभावे उदित्वात् ञिदच इति नुणि अत्वसोधोरिति दीर्घे कृतवान् ॥ १०५० ॥

अविशेषात् च्विनग हिंसायां चि च्वतैश्वर्य्ययोः च्विश वासगत्योः इति त्रयाणां ग्रहणम् ॥ १०५१ ॥

सूश लूश सूल्वौ तौ आदी ययोस्तौ सूल्वादी । ओत् इत् यस्य स ओदित्

## १०५३ । वॄदुश्विञूर्णौ कितो नेम् ।

वृ ॠ उ-श्वि ञ्-ऊर्णौ: ५।, कित: ६।, न ।१।, इम् ।१। ।

**वृञो वृङ ॠदन्तात् उवर्णान्तात् श्विञ ऊर्णोश्च कित इम् न स्यात् । वृतः वृतवान् दीनः लूनः जीनः रुग्णः भुग्नः प्रहीणः, भिन्नः निर्विण्णः, प्यानः ग्लानः स्नाणः । प्रादेस्तु—पूर्त्तः मूर्त्तः ख्यातः ध्यातः मत्तः । वृतः भूतः श्वितः शॄतः ऊर्णुतः ।**

---

यलो यलान्तः स चासौ स्यश्चेति यलस्यः तेन युक्तः आत् यलस्यात् । ततः सूल्वादी च ओदिच्च द च रश्च चीश्च यलस्याच्चेति तस्मात् । पॄश्च मूर्च्छश्च ख्याश्च ध्याश्च मद चेति । न पॄमूर्च्छख्याध्यामद चेति तस्मात् । चीण इति अकर्म्मकात् वक्ष्यमाणेन कर्त्तरि क्ते पूर्वेण दीर्घेऽनेन तस्य नकारे षॄ्णं इति णत्वम् एवं चीणवान् । अढे इति किम् ? चितः कामो मया हिंसित इत्यर्थः । चीशब्दोपादानात् चीञ हिंसे इत्यस्मादपि चीणः । भावादौ स्वयमुदाहरिष्यति ॥ १०५२ ॥

वृश्च ॠश्च उश्च श्विञ च ऊर्णूश्चेति तस्मात् । वृॠतोः स्याद्‌दॄदुरिति वेमत्वे श्रयतेः भ्रस्ज श्रि स्वृ इति वेमत्वे नेम् डीश्वीत्यादिना क्तक्तवत्वो रिम् निषेधे सिद्धे हवनतेरित्यादिना क्त्यादीनाञ्च इम् निषेधे सिद्धे एषां त्रयाणामिहोपादानं क्ताच इम् निषेधार्थमेव । तेन वृत्वा तीर्त्वा श्वित्वा इति । एवं उवर्णान्तत्वेनैव प्राप्तौ ऊर्णोः पृथक् ग्रहणम् कथमिति चेत् सत्यम् । भ्रस्जश्रिस्वृ इत्यत्र ऊर्णोर्वेमत्वे नेम् डीश्वीत्यनेन वेमधातुभ्यः क्तक्तवत्वो रिम् निषेधे तत्रैव अनेकाचो वर्जनात् ऊर्णो-रिमः प्रसक्तौ पुनर्निषेधार्थमिहोपादानम् । स्वादिमाह । सून इति सुयौङ गतौ कर्म्मणि क्तः अनेन इम् निषेधे पूर्वेण तस्य नः । एवं सूनवान् । ओदीङ्य चये दीनः । ल्वादिमाह । लूञगि छिदि लूनः । ज्यागि जरायाम् अत वक्ष्यमाणेन कर्त्तरि क्ते ग्रहस्वपाद्योरिति जौ जीर्घोऽन्त्य इति दीर्घे जीनः । ओदितमाह । भुजो शौ वक्रणे भुग्नः अन्तरङ्गत्वान्निरवकाशत्वाच्च आदौ चुङ्क्रुङिति जस्य गकारे पश्चात् तस्य नः । ओहाङ्लित्यागे प्रहीणः अत दामा गे इति ङी नीचोऽन्तरेति णत्वम् । दान्तमाह । इभिदा संहने भिन्नः । आदित इति वक्ष्यमाणादिम् निषेधे पूर्वेण तस्य नः । निर्विण्ण इति विद्यौङ भावे पूर्वापरहायणादित्वात् णत्वम् । निर्विण्णोऽध्ययने जड़ इत्यर्थः । रान्तस्य तु गुर्ङौश्चि उद्यमे गूर्णः । चूर्णषी दहिचूर्णं इत्यादि ऊह्यम् । एषु नेम्डीश्वीत्यनेन इमो निषेधः । यलस्यात-

## १०५४। दिव्यश्च श्योऽजिगीषाजास्पर्शे न तस्तयोः।

दिवि-अञ्च श्यः ५।, अजिगीषा-अज अस्पर्शे ७।, न ।१।, तः ६।, तयोः ६॥ ।

दिवेरजिगीषायामञ्चतेः अजे श्यायतेः अस्पर्शे तयोस्तस्य नः स्यात्। आद्यूनः समक्तः।

## १०५५। घन स्पर्शे श्यो जिः।

घन स्पर्शे ७।, श्यः ६।, जिः १। ।

घने स्पर्शे चार्थे श्यो जिः स्यात् तयोः। शीनं घृतम्।

---

माइ ग्लै क्षमे ग्लानः म्लाञ खेदे म्लाणः। एवं द्यै न्यक्करणे द्यानः। यतस्मात इति धातोरेव न तु उपसर्गस्य। तेन निर्यातः निर्वात इत्यादौ न प्रसङ्गः। अत्र मूर्च्छवर्जनात् येन केनापि प्रकारेण यो रान्तस्तस्मादपि तयोस्तस्य नः स्यादिति सूचितम्। तेन राक्षोर्लोप इति कवयोर्लोपे खुर्क स्फुर्को तु विस्मृतौ। आदित इति इमो निषेधे खूर्णं स्फूर्णः। धुर्व दुर्वी बधे नेम् डीश्वीति इमो निषेधे धूर्ण दूर्णः इति एवं कॄश विचेपे तॄतरेऽभिभवे इत्यादीनां इरि कृते कीर्णः तीर्णः इत्यादि अत्र धूर्वी हिंस इत्यस्य तु वकारलोपेऽपि कितवे वाच्ये मनीषादित्वात् तस्य नो न स्यात्। तेन धूर्त्तः कितवः। अन्यत्र धूर्णो मृगः सिंहेन हत इत्यर्थः। प्रादेस्तु। जिपृ गिजि तु पालने। अस्य ल्वादित्वात् प्राप्तौ निषेधे पूर्त्तः मूर्च्छा मोह उक्त्ये आदित इति इमो निषेधे राक्षोरिति छलोपे मूर्त्तः। ख्यातः ध्यातः इति यस्य युक्ताकारान्ततया प्राप्तौ निषेधः। मत्त इति मदीभिर्षङि हर्षे दान्तत्वात् प्राप्तौ निषेधः वृदुश्वि इत्यस्य उदाहरणमाह। वृत इति वृनगज वृङ वृतौ वृञ्ण सम्भक्तौ इति वयाणाम्॥१०५३॥

दिविश्च अञ्चश्च श्याश्चेति तत् तस्मात्। न जिगीषा अजिगीषा। जम् अपादानं न जम् अजम् न स्पर्शोऽस्पर्शः। अजिगीषा च अजश्च अस्पर्शश्चेति तस्मिन्। एषु नञ्समासः स्पष्टार्थः। आद्यून इति आङ्पूर्वात् दिव्यु जिगीषादौ अकर्मकत्वात् कर्त्तरि क्ते नेम् डीश्वीति इमो निषेधे क्वौ शूटाविव्यूटि अनेन तस्य नः। समक्त इति अनृचु गतिपूजनयोः कर्म्मणि क्ते नेम् डीश्वीति इमो निषेधे हसुङ्न इति नलोपे चुङिति कुङि अनेन तस्य अनेन तस्य नः॥ १०५४॥

घने द्रवद्रव्यस्य घनीभावे इत्यर्थः। शीनमिति श्यैङ गतौ क्ते अनेन नौ

जिगीषादौ तु द्यूतम् । उदक्तमुदकं कूपात् । श्यीतं जलम् ।
घनस्पर्शे किम् ? संश्यानो वृश्चिकः श्योतात् सङ्कुचित इत्यर्थः ।

## १०५६ । प्रतेः ।

प्रतेः ५।।

प्रतिपूर्वस्य श्यो जिः स्यात् तयोः । प्रतिश्यीनः ।

## १०५७ । अभ्यवात् वा ।

अभि अवात् ५।, वा ।१। ।

अभ्यवात् परस्य श्यो जिः स्यात् वा तयोः । अभिश्यीनः अभिश्यानः, अवश्यीनः अवश्यानः ।

## १०५८ । षिञो ढघे न तो ग्रासे ।

षिञः ५।, ढघे ७।, न ।१।, तः ६।, ग्रासे ७। ।

षिञः परस्य तयोस्तस्य नः स्यात् ढघे, ग्रासे वाच्ये ।
सिनो ग्रासः स्वयमेव ।

## १०५९ । पूञो नाशे ।

पूञः ५।, नाशे ७। ।

पूनो नष्टः । अन्यत्र पूतः पवितः ।

---

जीर्णोऽन्त्यः पूर्वेण तस्य नः । पूर्वस्य प्रत्युदाहरणमाह । द्यूतमिति भावे क्तः जिगीषायां तस्य नो न स्यात् । उदक्तमिति उद्गतमित्यर्थः । अत्र कूपादिति अपादानप्रयोगात् तस्य नो न स्यात् । शीतमिति स्पर्शार्थे जिः स्यात् तस्य नो न स्यात् । संश्यान इति घनस्पर्शाभावे जिर्न स्यात् तस्य तु नकारः स्यात् ॥१०५५॥

पृथग्योगात् घनस्पर्शयोर्नानुवृत्तिः ॥ १०५६ ॥

सुगमम् ॥ १०५७ ॥

षिञ्च बन्धे इत्यस्मात् कर्म्मकर्त्तरि क्तस्य तस्य नकारः स्यात् ग्रासे वाच्ये ।
ग्रासः कवलः । सिनो ग्रासः स्वयमेव बद्ध इत्यर्थः । ग्रासे किम् ? सितश्चौरः स्वयमेव । वाद्यमध्यवर्त्तित्वादेतदादीनां चतुर्णां नित्यता ॥ १०५८ ॥

पूञ शोधे इत्यस्य अनेकार्थत्वात् नाशार्थे तयोस्तस्य नकारः स्यात् ॥ १०५९ ॥

## १०६० । दुग्वोः र्घश्च ।

दुग्वोः ६॥, र्घः १।, च ।१। ।

आभ्यां तयोस्तस्य नः स्यात् तयोर्घश्च । दून: गून: ।

## १०६१ । व्रश्चेः कङ् च ।

व्रश्चेः ६।, कङ् ।१।, च ।१। ।

व्रश्चेस्तयोस्तस्य नः स्यात् कङ् च । वृक्णः ।

## १०६२ । क्रीघ्राचोन्दनुदविन्दो वा ।

क्री—विन्दः ५।, वा ।१। ।

एभ्यस्तयोस्तस्य नः स्यात् वा । क्रीणः क्रीतः, घ्राणः घ्रातः, त्राणः त्रातः, उन्नः उत्तः, नुन्नः नुत्तः, विन्नः वित्तः ।

## १०६३ । चै-शुष् पचो मकवः ।

चै-शुच्-पचः ५।, म-क-वः १। ।

एभ्यस्तयोस्तस्य मकव एते क्रमात् स्युः । चामः शुष्कः पक्वः ।

---

दुट्वोऽनुतापे गुश्रि तु विष्ठोत्सर्गे इत्येताभ्यां तयोस्तस्य नः स्यात् तयोर्दीर्घश्च । ओदूङय खेदे गुश्रि तु विट्सृजौ इति दीर्घान्ताभ्याम् एवेष्टसिद्धौ एतद्विधानं ह्रस्वान्तयोः दुग्वोः. प्रयोगनिषेधार्थम् ॥१०६०॥

न च ञङ्ङित्यनेनैवेष्टसिद्धौ इह कङ्विधानं वृथेति वाच्यम् । अक्ङाजिति विशेषविधानात् षङः प्राप्त्यत्वात् । वृक्ण इति व्रश्चू श्छेदे कर्म्मणि क्ते नेम् डीश्वीति इमो निषेधे ग्रहस्वपाद्योरिति जौ अनेन तस्य नत्वे चस्य च कङि नैमित्तिकस्याप्यभाव इति न्यायात् तालव्यशस्य दन्तत्वे स्यादेः सो लोपः ॥१०६१॥

क्रीण इति क्रीङि लज्जे कर्त्तरि क्ते अनेन तस्य नः पक्षे क्रीतः । घ्रा गन्धग्रहणे कर्म्मणि क्ते घ्राणः घ्रातः । त्रैङ पालने कर्म्मणि क्ते त्राणः त्रातः । उन्दश्री क्लेदे कर्त्तरि क्ते नेम् डीश्वीति इमो निषेधे हसुङ्न इति नलोपे उन्नः उत्तः । कर्म्मणि क्ते नुन्नः नुत्तः । धौ विदङ मीमांसे कर्म्मणि क्ते विन्नः वित्तः । संज्ञायान्तु देवत्रातः इत्येव वाशब्दस्य व्यवस्थावाचित्वात् ॥१०६२॥

त्रै चये चामः, शुष्योल्ट शोषे शुष्कः । उभयत्र अकर्म्मकत्वात् कर्त्तरि क्तः ।

## ১০৬৪। প্রস্ত্যো ম বা জিশ্চ।

প্র স্ত্যঃ ৫।, ম।১।, বা।১।, জিঃ ১।, চ।১।।

প্রস্ত্যস্তয়োস্তস্য মঃ স্যাৎ বা জিশ্চ। প্রস্তীমঃ প্রস্তীতঃ। প্রাৎ কিং, সংস্ত্যানঃ।

## ১০৬৫। নির্বাণ ভিত্তর্ণ বিত্ত ফুল্লোৎফুল্ল সম্ফুল্ল প্রফুল্ল ক্ষীব কৃশ পরিকৃশোল্লাঘাঃ।

নির্বাণ—উল্লাঘাঃ ১॥।

এতে ক্তান্তা নিপাত্যন্তে। নির্বাণঃ শান্তঃ নির্বাণং মুক্তিঃ, ভিত্তং খণ্ডম্ ঋণং বিশোধ্যং, বিত্তং ধনং বিত্তঃ প্রতীতঃ। ফুল্লো বিকসিতঃ উৎফুল্লঃ সম্ফুল্লঃ প্রফুল্লশ্চ। ক্ষীবো মত্তঃ, কৃশস্তনুঃ পরিকৃশশ্চ, উল্লাঘো নীরুজঃ।

---

ডুপচীঁষ পচ পাকে কর্ম্মণি ক্তে অন্তরঙ্গত্বাৎ নিরবকাশত্বাচ্চ আদৌ চুঙ্ক্তিতি কুঙি পশ্চাদনেন তকারস্য বঃ পক্বঃ ॥১০৬৩॥

অত্র বাশব্দস্য মকারেণৈব সম্বন্ধত্বাৎ জিৰ্নিত্যঃ। স্ত্যৈ সংহতৌ ধ্বনৌ কর্ত্তরি ক্তে প্রস্তীমঃ প্রস্তীতঃ। প্রাৎ [illegible] স্ত্যানঃ সংস্ত্যানঃ ॥[illegible]৬৪॥

বা ল্ব গমনহিংসয়োঃ নির্বা[illegible] শান্তঃ নির্বাণং মুক্তিঃ উভয়ত্র নোঽবোঽন্তরেতি ণত্বম্। অন্যত্র নির্বাতঃ। ভিদৌ ভিদির ভিত্তং খণ্ডম্ অন্যত্র ভিন্নম্। ঋণদুক্ষ গতৌ ঋণং বিশোধ্যম্ অন্যত্র ঋতম্। বিদল্ৃ মতৌ বি[illegible]ং ধন বিত্তঃ প্রতীতঃ অন্যত্র বিদিতঃ। ফুল্ল বিকসনে ইমোঽভাবে তকারস্য লোপ[illegible]কারস্য পূর্ব্বেণ যোগে ফুল্লাদিচতুষ্টয়ম্। কেবলস্য উৎসম্প্রপূর্ব্বস্য চ নিপাতনাদন্যত্র ফুল্লিত ইত্যাদি। জৌমরাস্তু ঞিফলাভিদীত্যস্যৈব ফুলাদেশং তকারস্য চ লকারং কৃত্বা ফুল্লাদিচতুষ্টয়ং সাধয়ন্তি। তন্মতে ফুল্ল বিকসনে ইত্যস্য ফুল্লিত ইতি স্যাদেবেতি বিরোধঃ। স্বমতে তু ফলনিষ্পত্তৌ ফলজ গতৌ ইতি দ্বয়োঃ সেমোঃ ফলিতঃ ফলিতবান্ ইতি। ঞিফলাভিদীত্যস্য আদিত ইতি ইমো নিষেধে চফলোদুরিতি অকারস্য উকারে প্রফুল্ত ইতি বোপদেবলিখনাৎ ফুল্লো বিকসিত ইতি ব্যাখ্যানাচ্চ ফুল্ল বিকসনে

**१०६६। क्षुधवसपूजार्थाञ्चागार्ध्यार्थलुभः क्तस्येम्।**

क्षुध—लुभः ५।, क्तः ६।, च ।१।, इम् ।१। ।

**एभ्यः परयोस्तयोः क्तस्य इम् स्यात्। क्षुधितः उषितः अञ्चितः लुभितः। गतौ तु। अक्तः। गार्ध्यार्थे तु लुब्धः।**

**१०६७। पू क्लिश वम जप व्याम्बसस्तयोर्वा।**

पू—व्याम्बसः ५।, तयोः ६॥, वा ।१। ।

**एभ्यस्तयोः इम् स्यात् वा।**

**१०६८। पू शी धृष मिद ष्विद स्विद क्षमार्थमृषां सेमोर्गुः।**

पू—मृषां ६॥, सेमोः ७॥, गुः १। ।

**एषां गुः स्यात् तयोः सेमोः। पवितः, पूतः, क्लिशितः**

---

इत्यस्यैव निपातनं प्रतीमः। चीहङ दर्पे चीवो मत्तः। सोपसर्गस्य तु प्रचीवितः। कृशिर्यत्त कार्श्ये। कृशस्तनुः एवं परिकृशः। अन्यत्र परिकृशितः। लाघृङ शक्तौ। उल्लाघो रोगान्मुक्तः, केवलस्य छदो ग्रहणात् प्रोल्लाघितः प्रलाघितः शक्तः इत्यादौ न निपातः॥ १०६५॥

गार्ध्यं लिप्सा। गार्ध्यमर्थो यस्य स गार्ध्यार्थः न गार्ध्यार्थः अगार्ध्यार्थः स चासौ लुभ चेति अगार्ध्यार्थलुभः ततः क्षुधश्चेत्यादि द्वन्द्वे तस्मात्। क्षुध वसोः औदित्वात् पूजार्थाञ्चोरुदित्वेन क्त्वाचो वेमत्वे अगार्ध्यार्थलुभस्य वेम् सहेत्यादिना वेमत्वे नेम् डीश्वीति निषेधादप्राप्तौ विधिरयम्। क्षुधित इत्यादि सुगमम्। लुभित इति लुभ विमोहने। गार्ध्ये तु लुभ्यं गार्ध्ये क्तः। नेम् डीश्वीति इमो निषेधे ढभान्तघोरिति तस्य धे भाप्भसोरिति भस्य बः। क्त्वाचस्तु क्षुधित्वा उषित्वा अञ्चित्वा, लुभस्तु पक्षेन इमि व्युजोगो हसादेरिति कित्त्वविकल्पे लुभित्वा लोभित्वा॥१०६६॥

पूङ् पूञोः वृदुश्वीत्यादिना निषेधात् क्लिश्ञू उपतापे क्लिशूगतु विवाधे इत्येतयोर्वेमतया वेम् डीश्वीत्यनेन निषेधादप्राप्तौ यमादीनां नित्यप्राप्तौ विभाषेयम्॥ १०६७॥

क्षमार्थश्चासौ मृष चेति क्षमार्थमृष। ततः पूश्च शीश्च धृषश्च मिदश्च ष्विदश्च

क्लिष्टः, वमितः वान्तः, जपितः जप्तः, विश्वसितः विश्वस्तः, आश्वसितः आश्वस्तः । ग्रथितं धर्षितं मेदितं चेदितं स्वेदितं मर्षितम् । क्षमार्थः किम् ? अपमृषितं वाक्यम ।

**१०६९ । भावादिढ़े वोदुङोऽब्वतः ।**

भाव-आदिढ़े ७।, वा ।१।, उत् उङः ६।, अप्वतः ६। ।

विहिताप उदुङो भावादिढयो र्गुर्वा स्यात् तयोः सेमोः । द्योतितं द्युतितं तेन । अनपस्तु क्षुधितम् ।

**१०७० । लोपो ञेः ।**

लोपः १।, ञेः ६। ।

ञेर्लोपः स्यात् तयोः सेमोः । भावितः भावितवान् ।

---

ञ्विदश्च क्षमार्थस्य च तेषाम् । सह इमा वर्त्तेते यौ तौ सेमौ तयोः । पवित इति पूर्वेण इमि अनेन गुणः । ञिधृषान् प्रागल्भ्ये भावे क्ते भावादिढे वेति इम् पक्षे ऽनेन गुणे धर्षितमिति । एवम् इर्मिदा स्नेहने ञ्चिदजि मोचे एषामपि साध्यम् । मर्षितमिति मृष्यञ् चान्तौ वसोऽरस्येति इमि अनेन गुणः । अन्यत्र अपमृषितं निन्दितं वाक्यमित्यर्थः ॥१०६८॥

आदिढ़ं क्रियारम्भः । अप्शपौ विधाने उपचारात् । अप् अस्त्यस्य अब्वान् तस्य । इत्यत आह विहिताप इति । विहितः कृतोऽप् यस्मात् स विहिताप् तस्य । भ्वादेरदादेश्चेत्यर्थः । अदादेः शपोऽस्थायित्वेऽपि तद्विधानमेतदर्थम् । भ्वादेस्तु द्युत्लङ द्युत्यां भावे क्तः वसोऽरस्येति इमि अनेन वा गुणे द्योतितं द्युतितं तेन । एवं शुभलङ शोभितं शुभितम् । अदादेस्तु लघिर रुद रोदे रोदितं रुदितम् । तुरलिबेगे तोरितं तुरितम् । आदिढ़े तु घे चादिढे इति वक्ष्यमाणात् कर्त्तरि क्ते प्रद्योतितः प्रद्युतितः स इत्यादि बोध्यम् । भावादिभ्यामन्यस्य तु । क्षुधयौ क्षुधि क्षुधितं प्रक्षुधितः सः । एवं कुणश उपकरणे कुणितं प्रकुणितः सः । भावादिढयोः किम् ? अकर्म्मकलात् कर्त्तरि क्ते द्युतितः । सेमोः किम् ? गुप्तं दुग्धम् । भावादिढयोः क्तवतोरसम्भवेऽपि तयोरित्यस्यानुवर्त्तनं परेषु सार्थकम् ॥१०६९॥

भावित इति ञेर्लोपे त्यलोपे त्यलक्षणमिति न्यायात् वृद्धिः । एवं जिमुदञ,

१०७१। नेम् डीश्वीदिद्वेमोऽपत्यनेकाज्निष्कुषः।

न।१।, इम्।१।, डी श्वि ईदित् वेमः ५।, अ पति-अनेकाच्-निष्कुषः ५।।

डीङः श्वयतेः ईकारेतो विकल्पितेमश्च पत्यादिवर्जात् तयोः इम् न स्यात्। डीनः शूनः दीप्तः गूढ़ः स्तः ततः। पत्यादेस्तु पतितः दरिद्रितः निष्कुषितः।

१०७२। आदितः।

आदितः ५।।

आकारेतस्तयोः इम् न स्यात्। मिन्नः मिन्नवान्।

---

मोदितः मोदितवान्। ञधृङ्वल्ट वञ्चितः इत्यादौ गुणः। भनञ्जो घौ भञ्जित इत्यादौ अगुणनिमित्तको नलोपो न स्यात्॥१०७०॥

ईत् इत् यस्य स ईदित्। वा इम् येभ्यः ते वेमः। ततः डीश्च श्विश्च ईदिच्च वेमश्चेति तस्मात्। पतिश्च अनेकाच्च निष्कुष् च ते, न विद्यन्ते ते यत्र सोऽपत्यनेकाज् निष्कुष तस्मात्। डीन इति ओडीङ्य गतौ अनेन इमो निषेधे ओदित्त्वात् तस्य नः। अविशेषात् डीङ्च नभोगतौ इत्यस्मादपि इमो निषेधे डीत इति। शून इति टु ओश्वि क्तो यहस्वपाद्योरिति जौ जीर्घोऽन्त्य इति दीर्घे ओदित्त्वात् तस्य नः। ईदितमाह। दीपीङ्य् दीपने दीप्तः। वेममाह। गुहञ संवृतौ क्तः वेमूदिदित्यनेन वेमत्वादिमो निषेधे होढ़ोभावित्यादि कार्य्ये गूढ़ः। स्त्रल ध्वनौ वेमूदिदित्यनेन वेमत्वात् इम् निषेधे स्तः। तनदुञ विस्तृतौ पूक्ति शुदित इति वेमत्वात् इम् निषेधे वनतनेति न लोपे ततः। एवं षहजङ शक्तौ वेमसहेति वेमत्वात् इमो निषेधे सोढ़ः। नृत्य नर्त्ते नृतृक्तत् इत्यादिना वेमत्वात् इमो निषेधे नृत्तः। पतितः दरिद्रितः इत्युभयत्र असज श्रिसृ इत्यनेन वेमत्वेऽपि निष्कुषित इत्यत्र वेमूदिदित्यनेन वेमत्वेऽपि पत्यनेकाज् निष्कुषां वर्ज्जनात् इम् स्यात्॥१०७१॥

आत् इत् यस्य स आदित् तस्मात्। इञिमिंदा स्नेहने अकर्म्मकत्वात् कर्त्तरि क्तो अनेन इम् निषेधे सूलाद्योदीति तस्य दस्य च ने मिन्नः। एवं मिन्नवान्॥१०७२॥

## १०७३ । भावादिढे वा ।

भाव-आदिढे ७, वा ।१। ।

भिन्नं मेदितं तेन । प्रभिन्नः प्रमेदितः सः ।

## १०७४ । शकेर्ढे ।

शकेः ५।, ढे ७। ।

शकितोऽचिंतुं शिवस्तेन, शक्तः ।

## १०७५ । क्षुब्ध वाढ़ स्वान्त ध्वान्त फाण्ट कष्ट घुष्ट लग्न म्लिष्ट विरिब्ध धृष्ट विशस्त परिवृढ़ दृढ़ शृत वृत्ताभ्यर्णाः ।

क्षुब्ध—अभ्यर्णाः १॥ ।

एते क्तान्ता निपात्यन्ते । क्षुब्धो मन्थः, वाढ़ं भृशं, स्वान्तं मनः, ध्वान्तं तमः, फाण्टं कषायभेदः, कष्टं कृच्छ्रं, घुष्टं शब्दितं लग्नं सक्तं म्लिष्टम् अस्पष्टं विरिब्धः स्वरः, धृष्टः प्रगल्भः, विशस्तश्च, परिवृढ़ः, प्रभुः, दृढो बली, शृतं पक्वं, वृत्तो गुणः छावेण, अभ्यर्णं समीपम् ।

---

आदिढं क्रियारम्भः । भावश्च आदिढश्चेति तस्मिन् । आकारेतो धातोर्भावे आदि कर्म्मणि च विहितयोस्तयोः इम् न स्यात् वा । भावादिढयोः क्तवतोरसम्भवात् क्तस्यैव । ञिमिंदा मिन्न पचे पूर्वोद्ध्येति गुणे मेदितं तेन एवं प्रभिन्नः प्रमेदितः सः । अत्र वक्ष्यमाणात् कर्त्तरि क्तः ॥१०७३॥

शकेः कर्म्मणि विहितयोः इम् न स्यात् वा । कर्म्मणि तु क्तवतोरसम्भवेऽपि तयोरित्यस्यानुवर्त्तनं नेम् उभिव्यङ् इत्यादौ सार्थकम् । ढे किं तेन शकम् अत्र वेमत्वात् नेम् डीम्बीति नेम् ॥१०७४॥

क्षुभलृङ सञ्चले । क्षुब्धो मन्थः आलोडित इति यावत् । अन्यत्र क्षुभितः । वाहॄङ यत्ने वाढ़ं भृशम् । अन्यत्र वाहितम् । स्वन प शब्दे स्वान्तं मनः । अन्यत्र

## १०७६। नेम् संनिव्यर्दः।

न ।१।, इम् ।१।, सं-नि-वि अर्दः ५।।

**संनिविपूर्वात् अर्दतेस्तयोः इम् न स्यात्। समर्णः न्यर्णः व्यर्णः।**

## १०७७। वा रुषाम ह्रष त्वर सङ्घुषास्वनः।

वा ।१।, रुष अम-हृष-त्वर-सङ्घुष-आस्वनः ५।।

**एभ्यस्तयोः इम् न स्यात् वा। रुष्टः रुषितः, आन्तः अमितः, हृष्टः हृषितः तूर्णः त्वरितः, संघुष्टं संघुषितम्, आस्वान्तम् आस्वनितम्।**

---

स्वनितम्। मिध्वन रवे ध्वान्तं तमः। अन्यत्र ध्वनितम्। फण ण निस्ने हे निस्ने हो-ऽनायासेनीत्पत्तिः। तस्य प्रेरणञौ फाण्टम् अनायासकृतः कषायभेद इत्यर्थः। अनायासकृतं फाण्टमित्यमरात्। अन्यत्र फाणितम्। कष बधे काष्टं कृच्छ्रम्। अन्यत्र कषितम्। घुष कि इर्नुतौ विशब्दे घुष्टं शब्दितं स्वार्थे निपात्यम्। लग्ने सङ्गे लग्नं सक्तं स्वार्थे निपात्यम्। म्लेच्छ कि देश्योक्तौ म्लिष्टम् अस्पष्टम्। अन्यत्र म्लेच्छितम्। ङ रेभृशब्दे विरिब्धः स्वरः अन्यत्र रेभितम्। ञिधृषा न प्रागल्भ्ये। धृष्टः प्रगल्भः। स्वार्थे निपात्यः। किञ्च आदित इति इम् निषेधादेवेष्टसिद्धौ निपातनम् आदि कर्मणि कर्त्तरि क्तो भावादिढ़े वेति पाक्षिकस्य इमो निषेधार्थम्। शस बधे विशस्तः प्रगल्भः क्तावेमतया नेम् डीश्वीत्यनेन इम् निषेधादेवेष्टसिद्धौ प्रगल्भात् अन्यत्र विशसित इत्यत्र इम् प्राप्त्यर्थं निपातनम्। वृहि वृद्धौ। परिवृढ़ः प्रभुः अन्यत्र परिवृंहितम्। दृहि वृद्धौ दृढ़ो बली अन्यत्र दृंहितम्। श्राम पाके केवलस्य ञ्यन्तस्य च शृतं पक्वम्। एतच्च चीरे हविषि च वाच्ये निपातनम्। अन्यत्र श्राणा श्रपिता यवागूः। वृतङुवञ वर्त्तने। ञ्यन्तस्य वृत्तः गुणो ग्रन्थविशेषम्क्रमेण अधीत इत्यर्थः। अन्यत्र वर्त्तितः। अर्द्द यातनागतियाचने अभ्यर्णं समीपम्। अन्यत्र अभ्यर्द्दितः॥ १०७५॥

अर्द्द यातनादौ अनेन इम् निषेधे तस्य दस्य च ने समर्णः एवं समर्णवान्। एभ्यः किम्? अर्द्दितः प्रार्द्दितः अर्द्दितवान्॥ १०७६॥

रुष्येञि क्रुधि रुष्टः रुषितः। अस्य वेमसहेति वेमत्वेऽपि नेम् डीश्वीति निषेधा-दप्राप्तौ विभाषा, अम गतौ आन्तः अमुङ्भास्यषाविति दीर्घः। पक्षे अमितः

१०७८। दान्त शान्त पूर्ण दस्त स्पष्ट च्छन्न-ज्ञप्ता वा।

दान्त-ज्ञप्ताः १।।।, वा ।१।।

एते अयन्ताः क्तान्ता निपात्यन्ते वा। पक्षे दमितः शमितः पूरितः दासितः स्पाशितः छादितः ज्ञपितः।

१०७९। स्फायः स्फी वा।

स्फायः ६।, स्फी ।१।, वा ।१।।

स्फीतः स्फीतवान्, स्फातः स्फातवान्।

१०८०। प्यायोऽगेः प्यस्वाङ्गे तु वा।

प्यायः ६।, अगेः ६।, पी ।१।, अस्वाङ्गे ७।, तु ।१।, वा ।१।।

अगेः प्यायः पी स्यात्, स्वाङ्गात् अन्यत्र तु वा तयोः।

पीनं मुखं, प्यानः पीनः स्वेदः।

---

हृष्यु इर तुष्टौ। हृष्टः हृषितः। अस्य क्ताच वेमत्वात् नेम् डीश्वीति निषेधा-दप्राप्तौ विभाषा। जित्वरषमङ स्वदे। स्विवावमवेति ऊटि सूत्वाद्योदिदिति तस्य ने तूर्णः। पक्षे त्वरितः। घुष क्रि इर्नुतौ वि शब्दे। सङ्घुष्टं सङ्घुषितम्। स्वन ण शब्दे। आस्वान्तम् आस्वनितम्॥ १०७७॥

दमादीनां अयन्तानाम् एते क्तान्ता वा निपात्यन्ते। दन्भु इर्शमे शमुभिर्यशमे प्रेरणञौ कर्म्मणि क्ते दान्तः शान्त इति। पक्षे घटादीति ह्रस्वे वसोऽरस्येति इमि लोपी ञेरिति ञेर्लोपे दमितः शमित इति। पूरी यङ पूर्त्तौ प्रेरणञौ पूर्णः। पक्षे इमि ञेर्लोपे पूरितः। दसु इर् तु उत्क्षेपणे प्रेरणञौ दस्तः। पक्षे दासितः। स्पशंञ ग्रन्थबाधयोः प्रेरणञौ स्पष्टः। पक्षे स्पाशितः। छद क्रिञ संवृतौ। स्वार्थञौ छन्नः। पक्षे छादितः। ज्ञप क्म तु ज्ञप्तौ स्वार्थञौ ज्ञप्तः। पक्षे ज्ञपितः॥ १०७८॥

स्फायीङ संवृद्धौ ईदित्वात् इमो निषेधे स्फीतः स्फीतवान्। पक्षे य्वोर्लोप इति यलोपे स्फातः स्फातवान्॥ १०७९॥

ओ प्यायीङ वृद्धौ क्ते ईदित्वात् इमो निषेधे ओदित्वात् तस्य ने पीनं मुखम्।

## १०८१। आङोऽन्धूधसोः।

आङः ५।, अन्धु-उधसोः ७॥।

आङः परस्य प्यायः पी स्यात् तयोः, अन्धूधसोः। आपीनोऽन्धुः, आपीनम् उधः।

## १०८२। ह्लादेः ह्लः क्तौ च।

ह्लादेः ६।, ह्लः १।, क्तौ ७।, च।१।।

ह्लादेः ह्लः स्यात् तयोः क्तौ च। प्रह्लन्नः।

## १०८३। दो-षो-मा-स्थां ङिस्त्यणौ।

दो—स्थां ६॥।, ङिः १।, ति ७।, अणौ ७।।

एषां ङिः स्यात् अणौ तकारे परे। दितः सितः मितः स्थितः।

## १०८४। छाशोर्वा।

छा-शोः ६॥, वा।१।।

छितः छातः शितः शातः।

---

अणेः किम्? प्रप्याणं मुखम्। य्वोर्लोप इति यलोपः। अस्वाङ्गे तु प्यानः पीनः स्वेदः॥१०८०॥

आङः परस्य प्यायः पी स्यात् तयोः परयोः अन्धौ उधसि च वाच्ये। अन्धुः कूपः उधो गवादेः स्तनः॥१०८१॥

ह्लादीङ मोदने कर्त्तरि क्ते ईदित्त्वात् इमो निषेधे अनेन ह्रस्वे दान्तत्वात् तस्य दस्य च ने प्रह्लन्नः ह्लन्नवान् क्तौ ह्लत्तिः॥१०८२॥

दो य छेदे दितः। षो य नाशे सितः। मा इति स्वरूपात् मेङ प्रतिदाने माङलि शब्दे माल च माने माङय च माने इत्येतेषां मितः। ञि ष्ठा स्थाने स्थितः एवं दितवान् दितिः दित्वा। अणौ किम्? दाता दातुं दातव्यमित्यादि॥१०८३॥

छाशोर्ङिः स्यात् वा अणौ तकारे। छो य लूनौ एचोऽशित्या छितः छातः एवं शो यः निशाने शितः शातः॥१०८४॥

## १०८५। शो व्रते नित्यम्।

शः ६।, व्रते ७।, नित्यम् १।।

संशितं व्रतम्।

## १०८६.। धाञो हिः।

धाञः ६।, हिः १।।

धाञो हिः स्यात् क्तौ ते परे। हितः।

## १०८७। चरफलोऽदुः।

चर फलः ६।, अत् ।१।, उः १।।

अनयोः अकार उः स्यात् क्तौ ते। चरितं प्रफुल्तः।

## १०८८। दद्दोऽधः।

दत् ।१।, दः ६।, अधः ६।।

दासंज्ञकस्य धावर्जस्य दत् स्यात् क्तौ ते। दत्तः। अधः किम्?, धीतः।

---

शो य निशाने इत्यस्य नित्यं ङिः स्यात् क्तौ तकारे व्रते वाच्ये। संशितं व्रतम्। अत्र व्रते वाच्ये क्तस्यैव प्रयोगः ॥१०८५॥

हितः हितवान् हितिः हित्वा हित्विमम् ॥१०८६॥

चर गमनेऽदने आचारे अस्मात् क्तक्तवत्वोः क्तश्च वसोऽरस्येति इमि अव्यव-हिततकाराभावादुकाराभावे चरितः चरितवान् चरित्वा। क्तौ तु इवव्रतेरिति इमो निषेधे अनेनाकारस्य उकारे व्यंनचतयीति दीर्घे चूर्त्तिरिति। ञिफला भिदि आदित इति इमो निषेधेऽनेनाकारस्य उकारे प्रफुल्तः एवं फुल्तवान् फुल्तिः ॥१०८७॥

दाल लूनौ, दा तु दाने डुदाञ्लि च देङ पालने इति चतुर्णां दत्तः एवं दत्तवान् दत्तिः दत्त्वा। डुदाञलि दाने इत्यस्य तु दत्त्विमम् इत्यपि। अधः किम्? धेट पाने क्ते दामागे ह्वाकेति ङी धीतः इत्यादि ॥१०८८॥

## १०८९। ग्यचस्त वा।

गि-अचः ५।, त ।१।, वा ।१।।

**गेरचः परस्य अधो दासंज्ञकस्य वा तः स्यात् अणौ ते। प्रत्तः प्रदत्तः।**

## १०९०। र्घौ दा-ते गीचः।

र्घः १।, दा-ते ७।, गीचः ६।।

**नीत्तम्। इचः किम्? प्रत्तं निर्दत्तम्।**

## १०९१। जग्धोऽदो यपि च।

जग्धः १।, अदः ६।, यपि ७।, च ।१।।

**अदो जग्धः स्यात् अणौ ते यपि च। जग्धम्।**

## १०९२। घे चादि-ढे क्तः।

घे ७।, च ।१।, आदिढे ७।, क्तः १।।

**आदिढे विहितः क्तो घे स्यात् ढभावयोश्च। प्रकृतः कटः सः, प्रकृतः कटस्तेन। [१०५१] चे र्घ इति प्रवीणः सः।**

---

प्रत्तः प्रत्तवान् प्रत्तिः। कुदाञ्जलि इत्यस्य तु प्रत्तिममित्यपि। पक्षे प्रदत्तः इत्यादि। अधः किम्? धेट पाने प्रधीतः। अचः किम्? निर्दत्तः ॥१०८९॥

वाद्वयमध्यवर्त्तित्वादेतदाद्यष्टानां नित्यत्वम्। गेः इचो दीर्घः स्यात् दास्थानजाते तकारे परे। नीत्तमिति पूर्वेण दा स्थाने तकारेऽनेन नेर्दीर्घः एवं नीत्तवान् नीत्तिः परीत्तम् अनुत्तम्, इचः किम् प्रत्तम् ॥१०९०॥

अदत्तौ क्तः अनेन जग्धादेशे पश्चात् यवादेशेऽपीष्टसिद्धौ यपः पृथग् ग्रहणं ज्ञापयति यवादेशादादौ प्रकृतेः किमपि कार्य्यं न स्यादिति। तेन विमुच्य इत्यादौ न कुङ् प्रविश्य इत्यादौ न षङ् प्रपाद्य इत्यादौ न धङ् प्रलिह्य इत्यादौ न ढः। आपृच्छ्य प्रदीव्य अत शकार ऊटौ न स्तः। एवं क्ते परे रूढौ जग्धादेशो न स्यादित्यपि। तेन अन्नं खिन्नतण्डुले रूढम्। यत्र क्रियापदत्वेन प्रयुज्यते तत्र तु स्यादेव। जग्धं फलं तेन खादितमित्यर्थः ॥१०९१॥

प्रक्षीणं प्रक्षितं तेन, क्षीणः क्षितोऽयं तपस्वी, क्षीणायुः क्षितायुः शत्रुः ।

१०९३ । गत्यर्थाढ़शीस्थासवसजनजॄश्लिषरुहः ।

गत्यर्थ—रुहः ५। ।

एभ्यो घे क्तः स्यात् ढभावयोश्च । गङ्गां गतः कृष्णं प्राप्तः, शयितः, शेषमधिशयितो विष्णुः, वैकुण्ठमधिष्ठितः, शिवमुपासितः, हरिदिनमुपोषितः, राममनुजातोऽच्युतः, विश्वमनुजीर्णोऽनन्तः लक्ष्मीमाश्लिष्टो मुकुन्दः, गरुड़मधिरूढ़ो गोविन्दः ।

---

कर्म्मशब्दः क्रियाव्याप्यवाची क्रियामात्रवाची च कर्म्म क्रिया तत् सातत्ये इत्यमरात् । तेन क्रियाव्याप्यकर्म्मणो ढसंज्ञाविधानेन क्रियाया अपि ढे संज्ञासिद्धिः । ततश्च आदिढम् आदिक्रिया क्रियारम्भ इति यावत् । प्रकृतः कटं सः, कटं कर्त्तुमारब्धवान् इत्यर्थः । प्रकृतः कटस्तेन कटः कर्त्तुमारब्ध इत्यर्थः । अत्र प्रशब्द आदिकर्म्मद्योतकः । कदाचित् प्रशब्दाभावेऽपि आदिकर्म्म प्रयोगो दृश्यते । यथा नृब्रह्मक्षत्रविट्शूद्रैः साङ्गोपाङ्गैरिहोदिता इत्यमरः । धातवः पठिताः पाठ सूत्रलोकागमस्थिता इति वोपदेवश्च । प्रक्षीणः स इति कर्त्तरि क्ते चेर्घ इति दीर्घे सूत्वाद्योदिदिति तस्य नकारे पृ,र्ण इति णत्वम् । प्रक्षीणं प्रक्षितं तेन । अत्र भावे क्ते दीर्घपक्षे प्रक्षीणं तदभावे प्रक्षितम् । दैन्ये तु क्षीणः क्षितोऽयम् तपस्वी । अत्राकर्म्मकत्वात् कर्त्तरि क्त उपपन्न इत्यर्थः । आक्रोशे तु क्षीणायुः क्षितायुः शत्रुः अत्रापि कर्त्तरि क्तः ॥१०९२॥

नास्ति ढं येषां ते अढ़ाः । गत्यर्थाश्च अढ़ाश्चेत्यादिसमाहारे तस्मात् । घे च क्तः इति त्रयमनुवर्त्तते । गङ्गां गत इति औगमॢ गत्यां कर्त्तरि क्ते वनतनेति नलोपः । गत्यर्थप्राप्त्यर्थयोरैक्यं दर्शयन्नाह । कृष्णं प्राप्त इति आप्ॢन्रौ क्ि व्यापने । एवं लभ ङ्रौ ङष प्राप्तौ धनं लब्धः । परसूत्रेणैवेष्टसिद्धेरत्र गत्यर्थग्रहणं ज्ञापयति । गत्यर्थप्राप्त्यर्थयोरैक्यात् द्वाभ्यां कर्त्तरि क्तः स्यात् । अधिकरणे तु गत्यर्थादेव क्तो न तु प्राप्त्यर्थादिति । शीङ्ॢ स्वप्ने अकर्म्मकत्वात् कर्त्तरि क्ते वसोऽरस्येति इमि पूशी धृषेति गुणे शयितः । अकर्म्मकत्वादेव प्राप्तौ शीस्थादीनां ग्रहणं सकर्म्मकत्वेऽपि प्राप्त्यर्थम् । तेन अधिकरणस्य कर्म्मत्वेऽपि शेष-

## १०९४ । ध्रौव्यगत्यदनार्थात् डे च ।

ध्रौव्य-गति अदनार्थात् ५।, डे ७।, च ।१।।

**निश्चलार्थात् गत्यर्थात् भोजनार्थाच्च क्तो डे स्यात् ढभावे घे च ।**

**मुकुन्दस्यासितमिदमिदं यातं रमापतेः ।**
**भुक्तमेतदनन्तस्येत्यूचुर्गोप्यो दिदृक्षवः ॥**

---

मधिशयितः । ञिष्ठा स्थाने अधिकरणस्य कर्मत्वेऽपि कर्त्तरि क्तः दीषोमास्थामिति ङौ वैकुण्ठमधिष्ठितः । ञिला सङ उपवेशे उपपूर्वत्वेन आराधनार्थत्वात् सकर्म्मकत्वेऽपि शिवमुपासितः । अधिकरणस्य कर्म्मत्वेऽपि घोषमध्यासितः । वसौ औ निवासे देशाध्वकालेत्यादिना कालस्य कर्म्मत्वेऽपि कर्त्तरि क्ते चुधवसेति इमि ग्रहस्वपायोरिति जौ शासवसेति षत्वे हरिदिनमुपोषितः । जनीम्यङ जनौ । जॄङ्रषस्यच इत्येतयोः कर्मासम्भवेऽपि पृथक् ग्रहणं ज्ञापयति । अनुपूर्वयोरेतयोः प्रयोगे यस्य पश्चात् जननं यस्य पश्चात् जरणञ्च तस्य कर्म्मत्वं स्यादिति । तेन राममनुजातोऽच्युतः अत्र नेमडीश्वीति इमो निषेधे खनसनेति ङा । विश्वमनुजीर्णोऽनन्तः । अत्र वृदुश्वीति इमो निषेधे ऋदिरणाविति इरि व्यंनचतयोति दीर्घे सूत्वाद्योदिदिति तस्य नः । श्लिषौषलत्ञि श्लेषे आलिङ्गनार्थे सकर्म्मकत्वेऽपि लक्ष्मीमाश्लिष्टो मुकुन्दः । ञिज रुहौ जन्याम् । आरोहणार्थे सकर्मकत्वेऽपि कर्त्तरि क्ते । औदित्वादिमोऽभावे होढोभावित्यादिकार्य्ये गरुड़मधिरुढ़. । एवं वृषमारूढ़ः शिवः ॥१०९३॥

ध्रुवो निश्चलस्तस्य भावो ध्रौव्यम् । मुकुन्दस्येत्यादि मुकुन्दं दिदृक्षवो गोप्य इत्यूचुः । तत् किमित्याह मुकुन्दस्येदं कुञ्जमासितम् । ञिलासङ उपवेशे । उपवेशनार्थत्वेन निश्चलार्थत्वात् अधिकरणे क्तो आसितम् । अत्र इदमित्यधिकरणमुक्तम् । रमापतेरिदं कुञ्जं यातम् । या ल गतौ अधिकरणे क्तो यातम् अत्र इदमित्यधिकरणमुक्तम् । अनन्तस्य एतत् तरुतलं भुक्तं भुजो घौ चाणे भचे अधिकरणे क्तो भुक्तम् अत्र एतदिति अधिकरणमुक्तम् । सर्वत्र कामुकसड्डेत्यादिना कर्त्तरि षष्ठी । चकारात् ढभावघेषु चेति । कर्म्मणि यथा मुकुन्देन पीठमध्यासितम् । मुकुन्देन मथुरा याता मुकुन्देन याज्ञिकान्नं भुक्तमिति । भावे तु मुकुन्देन आसितं यातं भुक्तमिति, कर्त्तरि तु मुकुन्दः पीठे आसितः मथुरां यात याज्ञिकान्नं भुक्त इति ॥ १०९४ ॥

## १०९५ । ज्ञार्च्चेच्छार्थञीच्छीलादेः सति ।

ज्ञा-अर्च्चा-इच्छार्थ ञि इत शीलादेः ५।, सति ७।।

**एभ्यो वर्त्तमाने क्तः स्यात् तेषु । विदितः, पूजितः वाञ्छितः, इद्धः, शीलितः, शिवोऽनुवर्त्तते ।**

## १०९६ । ठी-प-म-वत् क्वसु-कानौ ।

ठी-पम-वत् ।१॥, क्वसु कानौ १॥ ।

**धोरेतौ क्रमात् व्याः प-म-वत् स्तः । बभञ्ज्वान्, जजागर्वान् जजाग्रवान्, दुधूवान्, दिदिवान्, विविश्वान् विविच्छान् ।**

---

ज्ञा ज्ञानम् । ज्ञाञ्च अर्च्चा च इच्छा च ज्ञार्च्चेच्छाः । ज्ञार्च्चेच्छा अर्था येषां ते ज्ञार्च्चेच्छार्थाः । ञिरित् यस्य स ञीत् । ज्ञार्च्चेच्छार्थाश्च ञीच्च शीलादिश्चेति तस्मात् । पूर्वतश्चकारोऽनुवर्त्तते । तेन एभ्यो वर्त्तमाने क्तः स्यात् चकारात् अतीते च । एतत् तु कालमात्रविधायकं, कर्म्मभावकर्त्तृषु तु यथासम्भवं स्यादित्यर्थः । विदल मतौ विदितः ज्ञायते इत्यर्थः । पुज क पूजे पूजितः लोपो ञेरिति ञेर्लोपः । पूज्यते इत्यर्थः । वाछि कामे वाञ्छितः वाञ्छ्यते इत्यर्थः । एष कर्म्मणि क्तः । इन्धीञिधङ् दुतौ अकर्म्मकत्वात कर्त्तरि क्तो नेम् ङीञ्चीति इमो निषेधः इमुङ् इति न लोपः दभात्तथोर्धिति तस्य धः झपभझेरिति धस्य दकारे इद्धः दीप्यते इत्यर्थः । ञिशील स्यात् समाधौ कर्म्मणि क्तः शीलितः ध्यायते इत्यर्थः । शीलादिगणस्थ ञि रक्ष पालने रक्षित इत्यादि । स्वमते तु शीलादयोऽपि त्रिकालानुबन्धाः । शिवोऽनुवर्त्तते इति प्रतिपदेन शिव इति पदं योक्तव्यमित्यर्थः न च विशेषविधानादेभ्यो वर्त्तमाने एव क्तः स्यात् नत्वतीत इति वाच्यम् अतीते बहुतरप्रयोगदर्शनात् । यथा परस्परेण विदितान् तेषूपायनपाणिषु । राज्ञा हिमवतः सारो राज्ञः सारो हिमाद्रिणेति रघौ कालिदासः । ज्ञातो लङ्केश्वरः कृच्छ्रादाञ्जनेयेन तत्र व्रत इति दण्डी । जनैरविदितविभवो भवानीपतिरिति भारविः । स पुण्यकर्म्मा भुवि पूजितो नृपैरित्यादि सुश्रुतः न च एष्वपि वर्त्तमाने क्त इति वाच्यं वर्त्तमाने क्तो कामुकमर्हति कर्त्तरि षष्ठ्यापत्तेः ॥१०९५॥

ठीपमे इव ठीपमवत् । तेनातीते काले कर्त्तरि वाच्ये परस्मैपदिभ्यः क्वसुः

## १०९७। वसोर्घसेकाज्निनात इम्।

वसो: ६।, घस एकाच्-ऋ-इन-आत: ५।, इम् ।१।।

**घस एकाचोऽर्त्तेरिन आदन्ताच्च वसोरिम् स्यात् नान्यत:।**

**जक्षिवात् आदिवान् आरिवान् ईयिवान् ददिवान्।**

---

आत्मनेपदिभ्य: कान: उभयपदिभ्यो द्वयं स्यात्। एवमतीते काले कर्म्मणि सर्व-धातुभ्य: भावे त्वकर्म्मकेभ्य: कान: स्यात् इत्यर्थ:। ठीपमत्वेनैव कित्त्वसिद्धे एतयो: पुन: कित्करणं स्यात् ठापिदिति विभाषाबाधनार्थं तेन भन्ज धौ मोटने. क्वसौ ह्ववतेरिति इम् निषेधे हसुङ्क इति न लोपे द्वित्वादौ बभञ्जस् इति लिङ्गस्य उदित्वात् त्रिदच इति नुणि नसञ्महन्न इति दीर्घे संयोगान्तलोपे बभञ्चान्। एवम् उदित्वादीपि बभञ्जुषी। जागृ न्, जागरे क्वसौ जाग्रोऽणब्वीति गुणविकल्पे जजागृवान्। दिव्यु जिगीषादौ क्वसौ क्वी: शूटाविति ऊटि द्वित्वे दुद्यूवान्। पचे यूर्लोप इजि वलोपे दिदिवान्। एवं विच्छ्श गतौ छकारस्य शकारविकल्पे विविश्वान् विविच्छ्वान्॥ १०९६॥

घस च एकाच्च ऋश्च इन् च आच्चेति तस्मात्। घस: पृथग्ग्रहणात् एकाजिति द्वित्वे कृतेऽपि य एकाच् स एव ग्राह्य:। नेमसुमित्यनेन असुम् क्वादिभिन्नधातुभ्य: ठ्रा इम: प्राप्तावपि ह्ववतेरिति निषेधादप्राप्तौ पुनरिह हसन्तानां मध्ये घसते-र्द्वित्वेऽप्येकाच आदन्तानाम् ऋ इति द्वाभ्याञ्च परस्य वसोरिम् स्यादिति घसादे-र्विधौ सुतरामन्यतोऽप्राप्तौ नान्यत इति ज्ञापयति कदाचिदन्यतोऽपि स्यादिति। तेन चवाय साधु: चचिय: इत्यादौ कारकविधावव्यकारकात् प्रत्ययो जात:। जघ्नि-वानिति। अद्लौ क्वसौ घ्यां वेति घसादेशे अनेन इमि द्वित्वादिकार्य्ये हनगमेति झपझसोरिति घस्य कत्वे शासवरीति षत्वम्। पचे अदो द्वित्वे दस्य लोपे सन्धौ एकाचत्वात् इमि आदिवान्। एवम् ईड ईडिवान्। एवञ्च यज: खेर्मूलस्यापि जौ ईजिवान् घस ऊषिवान् इत्यादि। एवञ्च डुजौष पच पाके तृफलेति खेर्लोपे पेचिवान् भन्ज जौ भेजिवानित्यादि। ऋ गत्याम् ऋ प्रापे च इति द्वयो: क्वसौ द्वित्वे खेर्ऋकारस्य अत्वे स्याद्यत्यृत इति गणे सन्धौ इमि आरिवान्। स्वरूपग्रह-णात् ऋर्न हिंसे इत्यस्य तु स्याद्यत्यृत इत्यत्र अर्त्तिग्रहणात् गुणाभावे आदिगेचो-रिति गणे आरिवान्। इन गतौ क्वसौ द्वित्वे खे: कितिर्घ इति दीर्घे इमि यिणी-ऽच्यणाविति मूलस्य यकारे ईयिवान्। दास्वरूपात् क्वसौ द्विले इमि ञादाोरिति

## १०९८ । हन गम दृश विश विन्दो वा ।

हन—विन्दः ५।, वा ।१। ।

**एभ्यो वसोरिम् स्यात् वा । जघ्निवान् जघन्वान् जग्मिवान् जगन्वान्, ददृशिवान् ददृश्वान्, विविशिवान् विविश्वान्, विविदिवान् विविद्वान् ।**

## १०९९ । दाश्वान् साह्वान् मीढ्वान् ।

दाश्वान् साह्वान् मीढ्वान् ।१॥ ।

**एते वस्वन्ता निपात्यन्ते । चक्राणः, जजागराणः, जजाग्राणः, अनूचानः ।**

## ११०० । की-प-म-वत् शतृ-शानौ ।

की-प-म-वत ।१॥, शतृ शानौ १॥ ।

**धोरेतौ क्रमात् क्या: प-म-वत् स्तः । पचन् ।**

---

आलोपे दिदिवान् । एवं ख्या चख्यिवान् इत्यादि । एभ्यः किम् ? चिती ज्ञाने चिचित्वान् । इगताविति भौवादिकस्य ईवान् ॥ १०९७ ॥

हनलौ क्रसौ इमि द्वित्वे हनगमेति उङ् लोपे हनो घ्नौ इति घ्नादेशे जघ्निवान् । पक्षे खेर्हो घ इति हस्य घे जघन्वान् । औगम्लृ क्रसौ इमि उङ् लोपे जग्मिवान् । पक्षे धोर्मं न इति मस्य नकारे जगन्वान् । इरदृशौ क्रसौ इमि ददृशिवान् पक्षे ददृश्वान् । औविश क्रसौ इमि विविशिवान् पक्षे विविश्वान् । विद लृ शदृजौ लाभे क्रसौ इमि विविदिवान् पक्षे विविद्वान् ॥ १०९८ ॥

दाशृङ दाने तालव्यान्तः दाश्वान् । दन्त्यान्त इत्येके । षह्यकि शक्तौ साह्वान् । मिहौ सिचि मीढ्वान् । कानमुदाहरति । डुकृञ् च उभयपदित्वात् कर्त्तरि काने चक्राणः कुम्भं कुम्भकारः । एवं कर्मणि काने कुम्भकारेण कुम्भश्चक्राणः । भावे तु कानेन जजागराणम् । जागृ्ह्लु जागरे कालस्य कर्मत्वात् सकर्मकत्वे कर्मणि काने जागोऽगाऽवीति विभाषया गुणे पाक्षिकेन मासो जजाग्राणः जजागराण इत्यर्थः । अनुपूर्वं ब्रूञ्जुक्तौ कासे वचादेशे द्वित्वे खेर्मूलस्य च जौ अनूचानः ॥१०९९॥

की पमे इव कीपमवत् । एतेन वर्त्तमानकाले कर्त्तरि परस्मैपदिभ्यः शतृ

## ११०१। शानेऽतो मन्।

शाने ७।, अत: ६।, मन् ।१।

**अकारस्य मन् स्यात् शाने। पचमान:।**

## ११०२। या सोऽस्य।

ई ।१।, आ ।१।, आस: ५।, अस्य ६।।

**आस: परस्यास्य (शानस्य) आ ई स्यात्। आसीन:।**

## ११०३। वेत्ते: शतु: क्वसुर्वा।

वेत्ते: ५।, शतु: ६।, क्वसु: १।, वा ।१।।

**विद: परस्य शतु: क्वसु: स्यात् वा। विद्वान् विदन्।**

---

आत्मनेपदिभ्य: शान: उभयपदिभ्यो द्वयं स्यात्। एवं वर्त्तमाने कर्म्मणि सकर्म्मकेभ्य: भावे त्वकर्म्मकेभ्य: शान: स्यात् इत्यर्थ:। शित्त्वाद्रसञ्ज्ञायां शवादौ गच्छन् दीव्यन् शृण्वन् तुदन् इत्यादि। एवं पित्त्वाभावाच्च ङित्वे दल ध्वनौ दलन् ष्टुञ स्तुतौ स्तुवन् इत्यादौ गुणाभावे श्नुभ्रोरियुव्। एवञ्च ऋर्लिं गत्यां शतृशानयो: शित्त्वाद्दृच्छादेशे इयृच्छत् समियृच्छान:। कातन्त्रास्तु। शतृशानयो: प्रथमान्तेन सामान्याधिकरण्याभावे आमन्त्रणे शतृशानौ न स्त:। तेन हे पचन् छात्र! हे पचमान छात्र! इति स्यात्। हे पचन्! हे पचमान! इत्यादि न स्यात् इत्याहु:। एतयो: प्रयोगे क्रियासमाप्तिर्नास्तीति बोध्यम्। पचन्निति डुञौष श पच. पाके शतृ घे शपे लोपोऽत इत्यकारलोपे ऋदित्त्वात् त्रिदच इति नुमि स्यान्तस्य लुप् स्त्रियाम् इपि पचन्ती ॥११००॥

पचमान इति कर्त्तरि शान:। कर्त्तरि विप्र ओदनं पचमान आस्ते कर्म्मणि विप्रेण पच्यमान ओदन: शोभते। भावे तु विप्रेण दीप्यमानम् ॥११०१॥

ई आ इत्युभयं लुप्तप्रथमैकम्। आस: परस्य शानस्य आकार ईकार: स्यात् इत्यर्थ:। जिआसङ् कर्त्तरि शाने शप् तस्य लुकि अनेन आकारस्य ईकारे आसीन: ॥११०२॥

वेत्ते: परस्य शतु: क्वसु: स्यात् वा। शतृस्थानजातत्वेन द्वित्वम् अतीतबोधकत्वञ्च न स्यात्। विदज्ञ मतौ शतृ तस्य स्थानेऽनेन क्वसौ विद्वान्। पक्षे विदन् ॥११०३॥

## ११०४। शक्तिवयस्ताच्छील्ये शतुः शानः।

वक्ति वयस-ताच्छील्ये ७।, शतुः ६।, शानः १।।

**शत्रुं निघ्नानः, कवचं बिभ्राणः, भोगं भुञ्जानः।**

## ११०५। तौ-प-म-वत् स्यट्-स्यमानौ।

तौ-प-म-वत् ।१॥, स्यट्-स्यमानौ १॥।

**धोः एतौ क्रमात् त्वाः प म-वत् स्तः। करिष्यन् करिष्यमाणः।**

**इति क्तादिपादः।**

---

एश्वर्येषु शतुः स्थाने शानः स्यात्। शत्रुं निघ्नान इति हनल्लौ गतौ शट् शक्त्यर्थे-ऽनेन शतुः स्थाने शाने शपो लुकि हनगमित्युङ् लोपे हनो क्ङो घ्न इति घ्नादेशः। कवचं बिभ्राण इति भृलि टुडु शट् यौवनवयस्यर्थेऽनेन शतुः स्थाने शाने शपो लुकि ह्वादेरेद्विरिति द्वित्वे खेर्भकारस्य वकारे पृभादेरिति ङौ ष्ऱ्णं इति णत्वम्। भोगं भुञ्जान इति भुजघौ वाणे शट् ताच्छील्ये शतुः स्थाने शाने रुधादित्वा-न्नणि नणोर्न् इति नणो नकारे तस्य ञकारः। धृशङ् स्थितौ इत्यस्य प्रेरणे ञौ धारि। एवम् अधीङल अध्ययने इत्येताभ्यामक्रक्के शट् एव स्यात् न तु शान इति वक्तव्यम्। धारयन्नुपनिषदम् अधीयन् तर्कम्। क्रक्के तु धारयमाणः अधीयानः॥११०४॥

तेन भविष्यत्काले कर्त्तरि परस्मैपदिभ्यः स्यट् आत्मनेपदिभ्यः स्यमानः उभय-पदिभ्यो द्वयं स्यात्। एवं भविष्यत्काले कर्मणि सकर्म्मकेभ्यो भावे त्वकर्म्मकेभ्यः स्यमानः स्यादित्यर्थः॥११०५॥

इति क्तादिपादः।

## चतुर्थः पादः—इष्ण्वादिः ।

**११०६ । जि भ्राज भू सह रुच चर वृध वृत प्रजनापत्रपालंकृ निराकृन्मद पत पच इष्णुर्घे ।**

जि—पचः ५।, इष्णुः १।, घे ७।।

एभ्य इष्णुः स्यात् घे । कारयिष्णुः, भ्राजिष्णुः भविष्णुः सहिष्णुः रोचिष्णुः चरिष्णुः वर्द्धिष्णुः वर्त्तिष्णुः प्रजनिष्णुः अपत्रपिष्णुः अलङ्करिष्णुः निराकरिष्णुः उन्मदिष्णुः उत्पतिष्णुः उत्पचिष्णुः ।

**११०७ । ष्णुक् भू-जेः ।**

ष्णुक् ।१।, भू-जेः ५।।

आभ्यां ष्णुक् स्यात् घे । भूष्णुः जिष्णुः ।

**११०८ । ग्ला म्ला स्था क्षि पच परिमृजः स्नुः ।**

ग्ला—परिमृजः ५।, स्नुः १।।

एभ्यः स्नुः स्यात् घे । ग्लास्नुः म्लास्नुः स्थास्नुः क्षेष्णुः पक्ष्णुः परिमार्ष्णुः ।

---

प्रात् जन प्रजन अपात्रप अपत्रप अलम् कृ अलङ्कृ । निर् आ निरा तस्मात् कृ निराकृ । मद च पत च पच चेति मदपतपच उदो मदपतपच उन्मदपतपच । ततो जिश्च भ्राजश्चेत्यादि तस्मात् । जिर्भ्रान्तः । मण्डूकप्लुताधिकारात् शक्तिवयः-स्ताच्छील्ये इत्यस्मात् ताच्छील्यमनुवर्त्तते तस्य च स्वयं प्रविशं प्रादिति पर्य्यन्तेष्वधिकारः । तेन कारयितुं शीलमस्येत्यादिवाक्ये कारयिष्णुरित्यादि ॥ ११०६ ॥

भूष्णुः अत्र कित्त्वात् हृद्गुस्थीति इम् न स्यात् गुणाभावश्च ॥ ११०७ ॥

**११०९। क्षिप त्रस गृध धृषः क्नुः।**

क्षिप—धृषः ५।, क्नुः १।

एभ्यः क्नुः स्यात् घे। क्षिप्नुः त्रस्नुः गृध्नुः धृष्णुः।

**१११०। शॄ स्था भू कम गम हन लष वृष पत पदो ञुकः।**

शॄ—पदः ५।, ञुकः १।

एभ्यो ञुकः स्यात् घे। शारुकः स्थायुकः भावुकः कामुकः गामुकः घातुकः लाषुकः वर्षुकः पातुकः पादुकः।

**११११। भिक्ष जल्प कुट्ट लुण्टवृञः षाकः।**

भिक्ष—वृञः ५।, षाकः १।

एभ्यः षाकः स्यात् घे। भिक्षाकी जल्पाकी कुट्टाकी लुण्टाकी वराकी।

---

ग्लास्नुरित्यादि त्रयं सुगमम्। क्षेष्णुरिति एकाजिवर्णान्तत्वात् इमो निषेधे गुणे षत्वम्। पक्ष्णुरिति औदित्त्वात् नेम् कुङिति कुङि षत्वम्। परिमार्क्ष्णुरिति मृजलूष शुद्धौ ऊदित्त्वात् अनिम् पक्षे मृजोऽकङिति वृद्धौ शक्राजेति षङि षढोः कः से इति षस्य कत्वे क्विलादिति षत्वम्। अस्य इम् पक्षे न प्रयोगः॥ ११०८॥

क्षिप अज्ञौ क्षिप्यौ क्षिप्नुः कित्त्वात् न गुणः। त्रस्य असीष भये त्रस्नुः। गृधिषुं च लिप्से गृध्नुः। ञिधृषा न प्रागल्भ्ये धृष्णुः॥ ११०९॥

शृगि हिंसे ष्ठिञा स्थाने, भूस्वरूपम्। कमुङ स्पृहि। औगम्लृ गत्याम्। हनलौ गतौ। लष्य लषञ स्पृहि। वृषु सेचने। पत्लृज गत्याम्। पद्यौङ गतौ। एभ्यो ञुकः स्यात् घे। ञित्त्वात् वृद्धिः। स्थायुक इत्यत्र यनञ्णित् कृदिणीति यन्। घातुक इत्यत्र खेह्नौ घ इति हस्य घे हनस्तङिति तङ्॥ १११०॥

भिक्षङ लाभादौ। जल्पवाचि। कुट्टकङ प्रतापने कुट्टक कुत्साछिदोरिति द्वयम्। लुण्टक्यवज्ञा चौर्य्ये वङग सम्भक्तौ। एभ्यः षाकः स्यात् घे। षित्त्वादीपि॥ ११११॥

## ११११२। पति गृहि स्पृहि शीङ आलुः।

पति—शीङः ५।, आलुः १।।

एभ्यः आलुः स्यात् घे। पतयालुः गृहयालुः स्पृहयालुः शयालुः।

## ११११३। शत सद सि घे दो रुः।

शत—दः ५।, रुः १।।

एभ्यो रुः स्यात् घे। शतुः सद्रुः सेरुः धारुः दारुः।

## ११११४। घसस्वदः क्मरः।

घस-सृ-श्वदः ५।, क्मरः १।।

एभ्यः क्मरः स्यात् घे। घस्मरः सृमरः अद्मरः।

## ११११५। मिद भासभन्जो घुरः।

मिद भास भन्जः ५।, घुरः १।।

एभ्यो घुरः स्यात् घे। मेदुरः भासुरः भङ्गुरः।

## ११११६। छिदभिदविदः कुरः।

छिद-भिद-विदः ५।, कुरः १।।

एभ्यः कुरः स्यात् घे। छिदुरः भिदुरः विदुरः।

---

पतत् कैश्यगत्योः। गृहत् काङ्ग्रहे। स्पृहत्कोप्से। वयोऽदन्तचुरादयः। शीङत्वजि स्वप्ने। एभ्यः आलुः स्यात् घे। ञेर्लोप इत्यत्र आलुवर्जनात् न ञेर्लोपः ॥११११२॥

शदलृजौ शाते। षदलृजौश विषादे। षिनगञ बन्धे। धेट पाने। धेटः पृथग् ग्रहणात् दा इति स्वरूपम्। तेन दाव लूनौ दातु दाने डुदाञिलृच देङ पालने दैप शोधने दोषच्छेदे इति षणां ग्रहणम् एभ्यो रुः स्यात् घे ॥११११३॥

सृघसौ भचे। सृगतौ। अदृौ भचे। एभ्यः क्मरः स्यात् घे कित्वात् न गुणः॥११११४॥

ञमिदा स्नेहने। भासङ दीप्तौ। भन्जधौ मोटने। एभ्यो घुरः स्यात् घे। भन्ज धातोरनेकार्थत्वात् वक्रीभावे घुरे कृते घिति नस्य गकारे भङ्गुरं काष्ठं वक्रमित्यर्थः। यत्र परं भनक्ति तत्र तु भङ्क्ता इत्येव ॥११११५॥

## १११७। जागृ यङन्त यज जप वद दन्श ऊकः।

जागृ—दन्शः ५।, ऊकः १।।

**एभ्यः ऊकः स्यात् घे। जागरूकः यायजूकः जञ्जपूकः वावदूकः दन्दशूकः।**

## १११८। यङन्त-चल पत सह वहः किः।

यङन्त-वहः ५।, किः १।।

**एभ्यः किः स्यात् घे। चाचलिः पापतिः सासहिः वावहिः।**

## १११९। द्विश्चाद्दृङ्लोपिनः।

द्विः १।, च।१। आत् ऋ-उङ्-लोपिनः ५।।

**आदन्तात् ऋवर्णान्तात् उङ्लोपिनश्च किः स्यात् घे तेषाञ्च द्वित्वम्। ददिः चक्रिः जज्ञिः।**

---

छिनत्तीति छिदुरः। भिनत्तीति भिदुरः। वेत्तीति विदुरः। एषु कित्त्वात् न गुणः। छिद्भिदौ कर्म्मकर्त्तरीति केचित्। तन्नेयम्। हन्ती विप्रचक्छिदुर इति दीपान्धकार भिदुर इत्यादिदर्शनात्॥१११६॥

यजश्च जपश्च वदश्च दन्शश्च चेति। यङन्तश्चासौ यज जप वद दन्श चेति पश्चात् जागृश्च यङन्त यज जप वद दन्श चेति तस्मात्। जागर्त्तीति जागरूकः। पुनः पुनरतिशयेन वा यजतीति यङ् यायज्य भागात् ऊके हसात् लोप इत्यकारयकारयोर्लोपे यायजूकः। एवं जञ्जप्यते इति जञ्जपूकः। वदेर्वाचि वावद्यते इति वावदूकः। दन्दश्यते इति दन्दशूकः॥१११७॥

चलअ गतौ। पत्यङैश्ये। सह्यकि शक्तौ सह अङच इति द्वयम्। वहैञौ॰ प्रापणे। यङन्तेभ्य एभ्यः किः स्यात् घे। पापतिरिति मीन वम्च इत्यत्र पतल्ट ञ गत्याम् इत्यस्य ग्रहणात् पत्यङैश्ये इत्यस्मात्। यङि र्विर्नीनीऽप्राप्तौ घौं नित इति दीर्घे पापत्यभागात् कौ हसात् लोप इत्यकारयकारयोर्लोपः॥१११८॥

आत् च ऋश्च उङ्लोपी चेति तस्मात्। ददातीति ददिः कौ द्वित्वे कित्त्वाद् गुणे उस्येचीत्याकारलोपः। करोति किरति इति द्वयोश्चक्रिः। जायते इति जज्ञिः। अत्र कौ क्ङिते हनगमित्युङ् लोपः स्नुस्रुभिरिति नस्य ञकारः। एवं हन्तौ जघ्निः गौगमल्ट जग्मिः खनञ चख्निः सृघस्ती जक्षिः॥१११९॥

## ११२०। यायाय भास कस स्थेश पिश प्रमदो वरः।

यायाय—प्रमदः ५।, वरः १।।

एभ्यो वरः स्यात् घे। यायावरः भास्वरः कस्वरः स्थावरः ईश्वरः पेश्वरः प्रमद्वरः।

## ११२१। क्वरप् सृ जीन्नश गमस्त मश्च।

क्वरप् ।१।, सृ-जि-इन्-नश-गमः ५।, त ।१।, मः ६।, च ।१।।

एभ्यः क्वरप् स्यात् घे, मस्य च तः। सृत्वरी जित्वरी इत्वरी नश्वरी गत्वरी।

## ११२२। हिंस दीप कम्पाजस स्मिङ कम नमो रः।

हिंस—नमः ५।, रः १।।

एभ्यो रः स्यात् घे। हिंस्रः दीप्रः कम्प्रः अजस्रः स्मेरः कम्रः नम्रः।

---

वक्रं यातीति यङि यायाय भासृङन दीप्तौ। कसज गतौ ष्ठिा स्थाने। ईशलङ ऐश्वर्य्ये। पिश अपावयवे। प्रपूर्वमदीभिर्यङि हर्षे। एभ्यो वरः स्यात् घे। यायावरः इति यायाय भागात् वरे इववतेरिति इम् निषेधे हसात् लोप इत्यकारलोपे यॄर्लोप इति यलोपः। ईश्वर इति वरस्य प्रत्ययत्वेन दन्त्यादित्वात् भसत्वाभावे शक्राजेति न षत्व्॥ ११२०॥

सरतीति सृत्वरी कित्वात् गुणाभावे स्वस्य तन्निति तनि षित्वादीप्। एवं जयतीति जित्वरी एतीति इत्वरी नश्यतीति नश्वरी। अत्र इववतेरिति इम् निषेधे प्रत्ययवकारस्य दन्त्यत्वात् भसत्वाभावे मुहादित्वात् घङ् शक्राजेति षङ् च न स्यात् गच्छतीति गत्वरी अनेन मस्य तः॥ ११२१॥

हिनस्तीति हिंस्रः इत्यादौ इववतेरिति इम् निषेधः। एवं दीप्यते इति दीप्रः। कम्पते इति कम्प्रः। अजस इति नञ् पूर्वजसुइर्य मोचे। न जस्यतीति अजस्रः। स्मयते इति स्मेरः। कमुकङ स्पृहि। वारे इति णितोऽप्राप्तिपचे कम्रः। नमतीति नम्रः॥ ११२२॥

## ११२३। सन् भिक्षाशंस उः।

सन्-भिक्ष-आशंसः ५।, उः १।।

एभ्यो उः स्यात् घे। रिप्सुः भिक्षुः आशंसुः।

## ११२४। विन्दिच्छू।

विन्दिच्छू १॥।

एतौ निपात्यौ। वेत्तीति विन्दुः, इच्छतीति इच्छुः।

## ११२५। स्वप तृष धृषो ङ्नज्।

स्वप तृष-धृषः ५।, ङ्नज् ।१।।

एभ्यो ङ्नज् स्यात् घे। स्वप्नक् तृष्णक् धृष्णक्।

## ११२६। शॄ वन्द आरुः।

शॄ-वन्दः ५।, आरुः १।।

आभ्यामारुः स्यात् घे। शरारुः वन्दारुः।

## ११२७। क्रु क्लुकौ भियः।

क्रु-क्लुकौ १॥, भियः ५।।

भीरुः भीलुकः।

---

रभीङ् राभस्ये। रब्धुमिच्छतीति सनि मिमीमादेति खेऽलोपे भकारस्य इति स्यादेः सोलोप इति सलोपे झप्भसोरिति भस्य पत्वे रिप्सभावात् धनेन उप्रत्यये हसात् लोप इति भकारलोपे रिप्सुः। भिक्षते भिक्षुः आशंसते आशंसुः ॥११२३॥

सुगमम् ॥ ११२४ ॥

स्वपितीति स्वप्नक्। तृष्यतीति तृष्णक् धृष्णोतीति धृष्णक् इति उभयत्र इय-वतेरिति इम् निषेधे ङित्त्वात् न गुणः ॥ ११२५ ॥

शृणातीति शरारुः। वन्दते इति वन्दारुः ॥ ११२६ ॥

भिय एतौ स्यातां घे। बिभेतीति भीरुः भीलुकः, उभयत्र कित्त्वात् न गुणः ॥ ११२७ ॥

## ११२८। स्पृहि गृहि श्रु दृ जेराय्यः।

स्पृहि—जेः ५।, आय्यः १।।

एभ्यः आय्यः स्यात् घे। स्पृहयाय्यः गृहयाय्यः श्रवाय्यः दराय्यः जयाय्यः।

## ११२९। गण्डि मण्डि जि जनि नन्दिभ्योऽन्तः।

गण्डि—नन्दिभ्यः ५॥ अन्तः १।।

एभ्योऽन्तः स्यात् घे। गण्डयन्तः मण्डयन्तः जयन्तः जनयन्तः नन्दयन्तः।

## ११३०। स्तनि गदि मदि हृदि दूषि रित्नुः।

स्तनि—दूषेः ५।, इत्नुः १।।

एभ्यः इत्नुः स्यात् घे। स्तनयित्नुः गदयित्नुः मदयित्नुः हृदयित्नुः दूषयित्नुः।

---

स्पृहि गृहि स्पृशत् केप्से। गृहत् कङ ग्रहे। हावदन्तचुरादौ श्रुन गतौ श्रुतौ। दृङ आदरे। जि जये। एभ्य आय्यः स्यात् घे। स्पृहयाय्यः गृहयाय्य इत्युभयत्र ञेर्लोप इत्यादौ आय्यवर्जनात् न ञेर्लोपः ॥११२८॥

गड़ि गण्डे। किमडि भूषे। जि जये। जनीम्यङ जनौ। टुनदि समृधि अत्र जिवर्ना: सर्वे ञ्यन्ताः गण्डयन्त इत्यादिषु ञेर्लोप इत्यादौ अन्तवर्जनात् न ञेर्लोपः ॥११२९॥

स्तनत्काभ्रशब्दे। गदत्काभ्रध्वनौ। हावदन्तचुरादौ। मदीभिर्यञि हर्षे अस्य गर्वे ग्लेपने वा मानुबन्धत्वात् ञौ ह्रस्वे मदि। हृन्मनः। हृत्करोत्याचष्टे वा इति ञौ हृदिरिति। इदुंष्यौं वैकृते। अस्य ञौ गुणे: दुषेरोदूरिति ऊकारे दूषिः। एभ्य इत्नुः स्यात् घे। स्तनयित्नुरित्यादिषु ञेर्लोप इत्यादौ इत्नुवर्जनात् न ञेर्लोपः। अत नु इति कृतेऽपि इमा एवेष्टसिद्धौ ञेर्लोप इत्यत्र इत्नुवर्जनेऽप्य-वक्तव्ये इत्नुकरणं ज्ञापयति क्वचिद्विहितोऽपि न स्यादिति तेन वहंलिह इत्यत्र न गुणः। वातमज इत्यत्र वौ आदेशो न स्यात् ॥११३०॥

## ११३१। कॄ-गॄ-जागुः क्विः।

कॄ गॄ-जागुः ५।, क्विः १।।

एभ्यः क्विः स्यात् घे। कीर्विः गीर्विः जागृविः।

## ११३२। स्वयं शं वि सं प्राद्भुवो डुः।

स्वयं—प्रात् ५।, भुवः ५।, डुः १।।

एभ्यो भुवो डुः स्यात् घे। स्वयम्भुः शम्भुः विभुः सम्भुः प्रभुः।

## ११३३। लू-ऋ-धू-खन-सू-चर-पू-सह-वह इत्रो घे।

लू-ऋ-धू-खन सू-चर-पू सह वहः ५।, इत्रः १।, घे ७।।

एभ्यः इत्रः स्यात् घे। लवित्रम् अरित्रं धवित्रं खनित्रं सवित्रं चरित्रं पवित्रं सहित्रं वहित्रम्।

## ११३४। घञलनटोऽघे।

घञ्-अल् अनटः १।।।, अघे ७।।

घोरेते स्युर्न तु घे। प्राकारः पादः दासः उपाध्यायः प्रासादः। समाजः, शमः कामः वामः आचामः श्रमः श्रामः यमः यामः विश्रमः विश्रामः।

---

कॄश विक्षेपे गॄश निगरणे गॄञि शब्दे इति द्वयं जागृच्लु जागरे। एभ्यः क्विः स्यात् घे। किरतीति कीर्विः अत्र कित्त्वात् ह्ववतेरिरिति इर्मो निषेधे ॠदिरणाविति इरि र्व्यंनचतयोरिति दीर्घः। गिरति गृणाति वा गीर्विः। जागृविरिति जाग्रोऽणब्वीत्यत्र विवर्जनात् न गुणः॥११३१॥

एभ्यः परात् भवतेर्डुः स्यात् घे। डित्त्वात् टिलोपः। स्वयम्भुरित्यादिः सम्भुश्च इति द्वयं कातन्त्रसम्मतम्। एतत्पर्य्यन्तेषु ताच्छील्याधिकारः॥११३२

लूञगि छिदि। ऋ प्रापे च। धूनगिञ कम्पे। खनुञ विदारे। सूङल सूतौ। चरगमनेऽदने आचारे। पूञगि शोधे। सह्यकि शक्तौ सह षङ्च। वहेञौ प्रापणे। एभ्य इत्रः स्यात् करणे। लूयतेऽनेनेति लवित्रम् एवम् अरित्रं धवित्रं खनित्रं सवित्रं चरित्रं पवित्रं सहित्रं वहित्रम्॥११३३॥

अर्थानुक्तावपि घस्य वर्जनात् कर्त्तुः कभाव इत्युक्तेः कारकभावयोः प्राप्तौ

## ११३५। क-भावेऽमी।

क-भावे ७।, अमी १॥।

**प्रघसः बधः धरः करः निलयः समजः मयः लयः। स्नानं मानं दानं प्रवेपनं वपनं वयनम् अजनं दरिद्राणं शयनम्।**

---

भीरिते सुः कर्त्तृभिन्नकारकेषु भावे च इत्यर्थः। घञो घकारश्ञो: कगार्थः। अकारो वृद्ध्यर्थः। यथा पाकः भाग इत्यादि। अलो लकारष्टाविभक्तेष्टकारवत् प्राचीनमतानुवादार्थः। अनटष्टकार ईवर्थः। भूष्यतेऽनयेति भूषणी। डुकृञ प्रकर्षेण क्रियतेऽसौ इति कर्मणि घञि ञित्त्वात् वृद्धौ प्राकारः। प्रस्य दीर्घविधानात् घञन्तधातौ परे क्वचिदुपसर्गस्य दीर्घः स्यादिति सूचितम्। तेन प्रासादः नीशारः नीहारः नीवारः व्यतीपातः परीरम्भः परीवादः प्रतीकारः अतीसारः इत्यादि। करणे पद्यौङ गतौ पद्यतेऽनेनेति पादः। सम्प्रदाने दाणञ दाने दास्यतेऽस्मै इति दासो विप्रः। अपादाने उपेत्य अधीयते अस्मादिति उपाध्यायः। अधिकरणे प्रसीदन्ति मनांसि अस्मिन्निति प्रासादः। भावे तु समजनं समाजः समूहः अत्र व्यजोऽरे वेत्यत्र घञवर्जनात् न वी। शमुभिर्य शमे घञि वृद्धौ जनबध इति ह्रस्वे शमः। कमुङ स्पृहि वारे इति ञिङोऽप्राप्तिपक्षे घञि वृद्धौ कमवमचमां वर्जनात् ह्रस्वाभावे कामः एवं वामः आचामः। अमयमविश्रमां वा ह्रस्वे अमः आमः यमः यामः विश्रमः विश्रामः। ननु भावो भूधातोर्थस्तत्र सर्वधातुभ्यः कथं भावे प्रत्ययाः स्युरिति चेत् सत्यम्। भाव इह क्रियामात्रवाची। अतएव धात्वर्थः केवलो भाव इति। एवं क्तभ्वस्तथः क्रियासामान्यवचना इति प्राञ्चः। एवञ्च अवस्थे द्वे क्रियायाः स्तः साध्यता सिद्धतापि च। साध्यता त्यादिवाच्या स्यात् सिद्धता द्रव्यवत् भवेत्। द्रव्यवत्त्वे घञादि स्यात् योगलिङ्गेन संख्ययेति। तेन पाकः पाकौ पाकाः॥ ११३४॥

घञादयः कर्त्तरि न स्युरित्युक्तापि अमी सर्वकारकेषु भावे च स्युरित्युक्तवता प्रयोगानुसारेण संज्ञायां क्वचित् कर्त्तर्यपि स्युरिति सूचितम्। घञि यथा रुजतीति रोगः। उच्यतीति ओकः सरति कालान्तरं सारः स्थिरो भागः, अतिसरतीति अतीसारो व्याधिः। अत्ति प्राश्नातीति प्रघसः। विशति चित्तं वेशः। स्पृशति देहं स्पर्शः। चयतीति चयो व्याधिः। धरतीति धरः पर्वतभेदः।

## ११३६। ष्ठीवन-सीवने वा।

ष्ठीवन-सीवने १॥, वा।१।।

**एते निपात्ये वा। पक्षे ष्ठेवनं सेवनम्।**

---

अनटि एकं वक्तीति एकवचनम् एवं द्विवचनं बहुवचनम्। क्वचिदिति किम्? नदतीति नदः अत्र संज्ञायामपि पचादित्वादल्लेव। प्रघस इत्यादि। अद्यौ भक्षे कर्त्तर्य्यलि घस्लृद इति घसादेशः। हननं वधः भावे अलि हनो बधादेशः। धरतीति धरः कर्त्तर्य्यल्। क्रियतेऽनेनेति करणेऽलि करः। निलीयतेऽस्मिन्निति अधिकरणेऽलि निलयः। सिव्योरित्यत्र अल् वर्ज्जनात् नञा। समजनं समजः पशूनां समूहः भावेऽलि व्यजोऽरे वेत्यत्र अल्वर्ज्जनात् न वी। डुमिञन क्षेपे मीञग बधे इति द्वाभ्यां भावेऽलि मयः। मिस्योरित्यत्र अल्वर्ज्जनात् न ञा। लीगि श्लिषि भावेऽलि लयः। मास्वरूपाणां मिस्योरित्यपि भावेऽनटि मिस्योरिति ञादेशे मानं प्रवेपनमिति मोऽचोऽन्तरित्यत्र वेपवर्ज्जनात् न णत्वम्। अज क्षेपे गतौ भावेऽनटि व्यजोऽरे इत्यत्र वी आदेशे वयनं पक्षे अजनम्। दरिद्रातेर्भावेऽनटि दरिद्र आलोप इत्यत्र अल्वर्ज्जनादालोपाभावे दरिद्राणं शीङ लञि भावेऽनटि शयनम्। कारके तु क्रियतेऽनेनेति छेदनः खड्गः राजभोजनाः शालयः। साधनी बन्धनी रज्जुरित्यादि॥ ११३५॥

ष्ठीवन। ष्ठिव्यु निरासे सिव्यु तन्तुसन्तती एतयोर्भावेऽनटि दीर्घो वा निपात्यते। पक्षे गुणः। अत्र ष्ठीव निरासे इति दीर्घवता एवेष्टसिद्धौ निपातनं दीर्घवत कातन्त्राद्यसम्मतत्वात्। वाशब्दस्य अव्ययत्वेन अनेकार्थत्वात् इदं विवृणोमि। यथा व्युपाभ्यां शीङः पर्य्याये घञ्। तव राजविशायः राजोपशायः। राज्ञः सम्बन्धे शयितुं पर्य्याय इत्यर्थः। उन्निभ्यां गिरः। उद्गारः निगारः। किरतेर्धान्ये। उत्कारः निकारः धान्यस्य। धान्ये किम्? पुष्पनिकरः पुष्पोत्करः। अत्र अलेव। वे स्तोऽशब्दे विस्तीर्णे। पटस्य विस्तारः, शब्दे तु वाक्यस्य विस्तरः। गेरदोऽल्। प्रघसः। गेः किम्? घासः। नेर्णश्च। नेः परादत्तेर्णोऽल् च स्यात्। न्यादः निघसः। प्रसम्भ्यां मदोहर्षेऽल्। प्रमदः सम्मदः। हर्षे किम्? प्रमादः। अगेर्व्यधजपमदेः। व्यधः जपः मदः। गेस्तु आव्याधः उपजापः उन्मादः। स्वनहसाभ्यां वा। स्वनः स्वानः हसः हासः। गेस्तु प्रस्वानः प्रहासः। यमः सन्निव्युपेभ्यश्च। एभ्यः परात् केवलाच्च यमोऽल् स्याद्वा। संयमः संयामः नियमः

## ११३७ । मुण् लभोऽनेक टुः सोर्गे खल-घञोः ।

मुण् ।१।, लभः ६।, अन् एक टुः-सोः ५।, खल् घञोः ७॥ ।

**केवलटुःसुवर्जात् गेः परस्य लभो मुण् स्यात् खलि घञि**

---

नियामः विषमः विषामः उपयमः उपयामः यमः यामः । लेर्गदनदपठस्वनिह्वसिभ्यः । निगदः निगादः निनदः निनादः निपठः निपाठः निस्वनः निस्वानः निह्वसः निह्वासः । लेः किम् ? पाठः । अगेश्च क्वणो वीणायाम् । क्वणः क्वाणः प्रक्वणः प्रक्वाणः निक्वणः निक्वाणः । आङो रुप्लुभ्याम् । आरवः आरावः आप्लवः आप्लावः अवादग्रहो वृष्टिविघाते । अवग्रहः अवग्राहः । प्रात् रज्जौ । प्रग्रहः प्रग्राहः रज्जुः । परेर्भुवोऽवज्ञायाम् । परिभवः परिभावः । पणः परिमाणे नित्यमल् । पणः । परिमाणे किम् ? दास्या पाणः । ग्लहोऽच्चविषये । ग्लहः । सरतेर्गर्भग्रहणे गवामुपसरः । अन्यत्र उपसारः । अभ्युपनिविभ्यो ह्वो हुश्च । एभ्यः परात् ह्वयतेरल् स्यात् तस्य हुरादेशश्च । अभिहवः उपहवः । निहवः विहवः । एभ्यः किम् ? प्रह्वायः । आङो युद्धे । आह्वयन्ते योद्धारोऽस्मिन्निति आहवो युद्धम् । अन्यत्र तु आह्वयन्ते पानाय गावोऽत्र स आह्वावो जलाशयः । अत्र घञि हुरादेशो निपात्यः । काठिन्ये हन्तेर्घनादेशश्च । दध्नो घनः घनं दधि इति तु अभेदात् । प्रादग्टहैकादेशे हनो घञ् च । ग्टहैकादेशे वाच्ये प्राद्धन्तेर्घञलौ स्तो हन्तेर्घनादेशश्च । प्रघाणः प्रघणः उभयत्र णत्वं निपात्यम् । अयो विद्रुभ्यो हन्तेरल् करणे घनादेशश्च । अयो हन्यतेऽनेनेति अयोघनः । एवं विघनः द्रुघणः । परेर्डश्च । परिपूर्वाद्धन्तेर्डः स्यात् करणे घनादेशश्च । परिहन्यतेऽनेनेति परिघः । परेः किम् ? विघातः समुद्भ्यां गणप्रशंसयोर्हन्तेर्डो घनादेशश्च । समो हन्तेर्डः स्यात् गणे उदो हन्तेर्डः स्यात् प्रशंसायाम् । उभयत्र घनादेशः संहननं संहन्यतेऽस्मिन्निति वा सङ्घः समूहः । उत्कृष्टं हन्यते ज्ञायते इति उद्घः प्रशस्त इत्यर्थः । उपात्क आश्रये । उपाद्धन्तेः कः स्यात् आश्रये । क्त्वाद्यनगमित्युलोपे हनो क्ङी घ्न घादेशः उपघ्नः आश्रयः । स्तम्बात् करणे कः स्तम्बो हन्यतेऽनेनेति के क्त्वात् हनगमित्युङ् लोपे हनो क्ङी घ्ने स्तम्बघ्नो दण्डः । उद्घनान्तर्घनौ अलन्तौ निपात्यौ । ऊर्ध्वं हन्यतेऽस्मिन्निति उद्घनः अन्तर्हन्यतेऽस्मिन्निति अन्तर्घनो देशः ॥ ११३६ ॥

च । प्रलम्भः । अन्यत्र दुर्लाभः । एकेति किम् ?, अति-दुर्लम्भः ।

## ११३८ । स्यदैधावोद्द ह्रिमश्रथ प्रश्रथ स्फारस्फाल राग काय निकायाकायाः ।

स्यद—काया, १॥ ।

एते घञन्ता निपात्यन्ते । स्यदो वेगः । एधः इध्मम् अवोदः अवक्लेदः । ह्रिमश्रथः ह्रिमश्रन्थनम् । प्रश्रथः प्रश्रथ-न्थनं स्फारः स्फोरणम् । स्फालःस्फोलनम् । रज्यतेऽनेनेति रागः । कायो देहः । निकायो निवासः । आकायश्चितिः ।

## ११३९ । खनो ड डरे केकवकाः ।

खनः ५।, ड डर-इक इकवकाः १॥ ।

आखः आखरः आखनिकः आखनिकवकः ।

---

एकौ अद्वितीयौ च तौ दुःसू चेति एकदुःसू न विद्यते तौ यत्र सोऽनेकदुःसुः तस्मात् । यथा खलि अगिदुर्लम्भः अतिसुलम्भः घञि प्रलम्भः । नुण्रध इत्यने-नैवेष्टसिद्धौ एतद्विधानं नियमार्थम् । तेन खलि दुर्लभः सुलभः । घञि लाभः दुर्लाभः सुलाभः । एषु पूर्वेणापि नुण् न स्यात् ॥ ११३७ ॥

स्यन्दङ्वल्ल स्रुतौ स्यदो वेगः अन्यत्र स्यन्दः । इन्धौञिधङ् द्युतौ । एधः काष्ठम् अन्यत्र इन्धः । अवपूर्व उन्दधौ क्लेदे अवोदः अवक्लेदः । अवादन्यत्र इन्दः प्रोन्दः । श्रन्थग मोचे । ह्रिमस्य श्रन्थनं ह्रिमश्रथः । प्रश्रन्थनं प्रश्रथः । अन्यत्र श्रन्थः परिश्रन्थः । स्फुरश्चि स्फूर्त्तौ आन्तस्य स्फारः । क्वौ जौ ङ इत्यनेन उका-रस्याकारेणैवेष्टसिद्धौ निपातनं घञि स्फोर इत्यनिष्टपदनिरासार्थम् । स्फुल श्चि स्फूर्त्तौ । आन्तस्य स्फालः । स्फल श्च चाले इत्यनेनैवेष्टसिद्धौ निपातनं स्फोल इत्यनिष्टनिवारणार्थम् । रन्जौञ रागे भावे करणे वा घञि रागः अन्यत्र रङ्गः । चिञ चिञि चित्यां कायो देहः । अन्यत्र चायः । एवं निकायो निवासः । अन्यत्र निचायः । आकायश्चितिः अत ककार एव निपातफलम् ॥ ११३८ ॥

डश्च डरश्च इकश्च इकवकश्च ते ॥ ११३९ ॥

## ११४० । व्याप्तौ भावे णिनः ।

व्याप्तौ ७, भावे ७, णिनः १। ।

धोर्भावे णिनः स्यात् व्याप्तौ सत्याम् । णिनान्तात् स्वार्थे ष्णः । सांराविणं वर्त्तते ।

## ११४१ । व्यतीहारे णन् स्त्री ।

व्यतीहारे ७, णन् ।१।, स्त्री ।१। ।

धोर्भावे णन् स्यात् व्यतीहारे, णनन्तात् स्वार्थे ष्णः, तदन्तस्य स्त्रियाम् । व्यवहारी ।

## ११४२ । ट्वितोऽथुर्भावे ।

ट्वितः ५।, अथुः १।, भावे ७। ।

टुकारितो धोरथुः स्यात् भावे । वेपथुः ।

## ११४३ । ड्वितस्त्र्जे त्रिमक् ।

ड्वितः ६।, तज्जे ७।, त्रिमक् ।१। ।

डुकारितस्त्रिमक् स्यात् ध्वर्थान्निष्पन्ने । करणाज्जातं कृत्रिमम् ।

---

सम्पूर्वरुल ध्वनौ भावे णिने णित्त्वात् वृद्धौ संराविणः इति स्थिते स्वार्थे ष्णे ष्णित्ते त्रिराद्यच इति वृद्धौ यवोर्लोप इत्यकारलोपे सांराविणं हदस्य । सम्यक् शब्दो व्याप्त इत्यर्थः ॥११४०॥

णनः प्रथमणकारो वृद्ध्यर्थः । शेषो दन्त्यः नकारस्तु य्वोर्युमदान्ते इत्यत्र दुनीभूज्वलाद्येति विहितस्य णप्रत्ययस्य अप्राप्तये विशेषणार्थः । व्यवपूर्वहृञ इत्यामनेन णनि वृद्धौ व्यवहार इति स्थिते स्वार्थे ष्णे य्वोर्युम इत्यत्र णनन्तवर्जनात् यकारस्य इमोऽप्राप्तौ ष्णित्ते त्रिरिति वृद्धौ यवोर्लोप इत्यकारलोपे षित्त्वादीपि व्यवहारी । अन्योन्यव्यवहरणमित्यर्थः । एवम् अन्योन्याक्रोशनं व्याक्रोशीत्यादि ॥११४१॥

टुरित् यस्य स ट्वित् तस्मात् पृथग्योगात् व्यतीहारस्य स्त्री इत्यस्य च नानुवृत्तिः। टुवेपृ कम्पने चले । वेपनं वेपथुः । एवं याचथुरित्यादि ॥ ११४२॥

डुरित् यस्य स ड्वित् तस्मात् । तस्मात् धात्वर्थात् जातमिति कृजनात् इति

**११४४ । स्वप रच्च यत प्रच्छ विच्छ याच यजो नङ् भावे न जिः ।**

स्वप—यजः ५।, नञ् ।१। भावे ७, न ।१।, जिः १। ।

एभ्यो नङ् स्यात् भावे, न च जिः । स्वप्नः रच्णः यत्नः प्रश्नः विश्नः याञ्चा यज्ञः ।

**११४५ । किर्दोऽन्तर्गेः ।**

किः १।, दः ५।, अन्तर्-गेः ५। ।

अन्तरो गेश्च परात् दा-संज्ञकात् किः स्यात् भावे । अन्तर्द्धिः आदिः ।

**११४६ । ढाड्डे ।**

ढात् ५।, डे ७ ।

ढात् परात् दः किः स्यात् डे । वारिधिः पयोनिधिः ।

**११४७ । क्तिः स्त्र्यघे ।**

क्तिः १।, स्त्री ।१।, अघे ७ ।

धोः क्तिः स्यात् न तु घे, तदन्तश्च स्त्रियाम् ।

---

ङ्प्रत्यये तञ्जं तस्मिन् । डुकृञ विमके कित्वात् गुणाभावे कृत्रिमम् । एवं डुधाः द्धित्रिमम् । एवं डुदाञ दत्रिममित्यादि ॥११४३॥

स्वप्नौ ञिष्वप् शये, स्वप्नः । ञि रच्च पालने रच्णः । यतीङ यत्ने यत्नः । प्रच्छौ श ज्ञीप्से प्रश्नः अत्र न जिरिति निषेधात् ग्रहस्वपाद्योरिति जिर्न स्यात् । च्छ्वोः शूटा विति छस्य शः विच्छश गतौ विश्नः छस्य शः । टुडु [:]याचृञ याचने :नञि स्नुश्नुभि-रिति नस्य ञकारे अभिधानात् स्त्रीत्वे आपि याच्ञा यजे ञौ यज्ञः । रच्च यत विच्छ याच एभ्यो ङ्वनतेरिति इम् निषेधः ॥११४४॥

अन्तर्द्धानम् अन्तर्द्धिः कित्वात् गुणे उस्येचीति आलोपः । आदिरिति । आङ्-पूर्वाणां दातु दाने इत्यादि दास्वरूपाणां कौ आदिः ॥११४५॥

डुधाञ जलि धारणे । वारि धीयतेऽस्मिन् इति वारिधिः । एवं पयो निधीयतेऽस्मिन् इति पयोनिधिः ॥ ११४६ ॥

कृतिः बुद्धिः मतिः स्मृतिः प्रकृतिः।

[१०८२] ह्लादेः ह्रस्वः क्तौ च। प्रह्लत्तिः भूतिः फुल्तिः।

**११४८। कॄ गॄ ज्या ग्ला हा ल्वादेर्निः।**

कॄ—ल्वादेः ५।, निः १।।

एभ्यः परस्याः क्तेः निः स्यात्। कीर्णिः गीर्णिः ज्यानिः ग्लानिः हानिः लूनिः पूर्णिः।

---

घस्य वर्जनात् कर्त्तृभिन्नकारकेषु भावे च स्यादित्यर्थः। डु कृञ् क्रियते असाविति कर्म्मणि करणमिति भावे च कृतिः। बुध्यी ङ वेदने। बुध्यतेऽनया बोधनमिति वा बुद्धिः। अत्र ढभात्तथोरिति तस्य धे झप्झसोरिति धस्य दः। स्मरणं स्मृतिः। ह्लादीङ मोदने क्तौ इवर्त्तेरिति इमो निषेधे ह्लादेः ह्रस्व इति ह्रस्वे झप्झसोरिति दस्य ते प्रह्लत्तिः। भूयतेऽनया इति भूतिः सम्पत्तिः भवनमिति वा भूतिः। अत्र वृदुश्रीति इम् निषेधः। ञिफला भिदि इवर्त्तेरिति इम् निषेधे अरफली दुरित्यकारस्य उकारे फुल्तिः ॥११४७॥

कॄश्च गॄश्च ज्याश्च ग्लाश्च हाश्च लूश्च ते, ते आदयो यस्य स तस्मात्। क्र्यादिस्तु ग्रादिभिन्नदीर्घऋदन्ताः। यथा कॄश विक्षेपे, गॄश निगरणे, जॄ वयोहानौ च, झॄष्य च, तॄतरे, दॄभये दॄयगि विदारे, नॄस नीतौ, पॄलि पालने। दर्शते। चुरादेर्नित्य-ञ्यन्तत्वात् ऋदन्तत्वं नास्तीति। कीर्णिरिति। अनेन क्तेः स्थाने नौ कृते स्थानि-वत्त्वात् नेः कित्त्वे वृदुश्रीति इमो निषेधे ऋदिरणाविति इरि व्यंनचतयोरिति दीर्घः। एवं गीर्णिरित्यादि। ज्या इत्यस्य ल्वादित्वादेव प्राप्तौ पृथग्ग्रहणं ज्ञापयति। ज्यादेः परस्य नि आदेशस्य स्थानिवत्त्वं नास्तीति। तेनास्य कित्त्वाभावात् ज्यानिरित्यत्र न जिः। एवं संज्ञाविशेषे ज्यादित्वात् क्तेर्नि आदेशे श्रोणिर्नितम्बः श्रेणिः पङ्क्तिरित्यादौ गुणः। ग्लादिस्तु ग्लै क्षमे ग्लानिः एवं म्लै म्लानिः। हादिस्तु ओहाक्षि त्यागे हानिः। अत्र दा मा गै इत्यत्र गौरवज्ञापकात् नङीः। हादेः पृथग्विधानं ज्ञापयति क्तिः। स्त्यघे इत्यत्र अघ इति नञोऽल्पार्थत्वात् वहप्रभृते-र्नामि कर्त्तरि क्तौ तस्य नि आदेशे स्थानिवत्त्वाभावात् जेरभावे वहतीति वह्निः एवं अग्निः। नाम्नि किम्? ऊढिः। ल्वादिस्तु लूञगि छिदि लूनिः अत्र वृदुश्रीति

**११४९। साति हेति यूति जूति।**

स्यति हिनोति यौति जवतीनाम् एते क्त्यन्ता निपात्यन्ते।

**११५०। शी व्रज यज विद् स्वास मन चर भटाट्येन समज निपत निसदः क्यप्।**

शी—निसदः ५।, क्यप् ।१।।

**एभ्यो भावे क्यप् स्यात् तदन्तश्च स्त्रियाम्। शय्या व्रज्या इज्या विद्या सुत्या आस्या मन्या चर्य्या भृत्या अटाट्या इत्या समज्या निपत्या निषद्या।**

---

इमी निषेधः। ञि पॄ मिखि तु पालने वृद्गमीति इमी निषेधे ऋदिरखाविति ऊरि व्यंञ्चयतीति दीर्घे पूर्णिः। पूर्त्तिरिति तु पूरीषङ् पूर्त्तौ इत्यस्य। जौमरास्तु त्वरत्वरश्वरद्दर्छ्धा, धुर्वीतुर्वीत्येतान् वर्जयित्वा रेफान्तादपि क्तेर्निरित्याहुः। तन्मते ईर मङ कम्पगत्योरित्यादेरपि ईर्णिरित्यादि ॥११४८॥

सोय नाश्रि निपातनात् द्रो सो मा स्यामिति ङिर्न स्यात् हिनोतेर्गुणः युल मिश्रणे जुरंहसि इत्येतयोर्दीर्घः ॥११४९॥

अत्र सूत्रे भावे इति नोक्ता वृत्तौ भावे इति व्याख्यानादत्र प्रयोगानुसारेण भावे कर्तृभिन्नकारके च स्यात्। परसूत्रेषु तु भावस्यैवानुवृत्तिः कदादित् कारकस्येति ज्ञापनार्थम्। यथा शीञलिञि स्वप्ने शेतेऽस्यामिति क्यपि शीङोङ्य्येणाविति ङयि स्त्रीत्वादापि शय्या खट्वादिः। व्रज मतौ व्रजनं व्रज्या। यजै ञौ यजनं इज्या ग्रहस्वपाद्योरिति जिः। विदल मतौ विदन्त्यनया इति विद्या सवनं सुत्या क्यपि कित्त्वात् गुणाभावे स्वस्य तन्। ञिलासङ आसनं आस्या। मन यौङ बोधे। मन्यतेऽस्यामिति। चर्गमनेऽदने आचारे चरणं चर्य्या। भृ लिटुभी भरणं भृत्या। अट गतौ यङि अटाट्यभागात् भावे क्यपि स्तसान्लोप इत्यकारलोपे पुनस्तेनैव यकारलोपे अटाट्या। इन मतौ एत्यनया अयनं वा इत्या। अज चेपे गतौ समजन्त्यस्यामिति समज्या सभा। अत्र व्यजोऽरे वेत्यत्र क्यप्वर्जनात् न वी। पतल्लन गत्यां निपतन्त्यस्यामिति निपत्या युद्धभूमिः। सदलृजौश्र विषादादौ। निषीदन्त्यस्यामिति निषद्या क्रयविक्रयभूमिः ॥११५०॥

## ११५१ । कुः शश्च ।

कुः ५।, शः १।, च ।१। ।

करोतेः शः स्यात् क्यप् च भावे स च स्त्रियाम् । क्रिया, कृत्या ।

## ११५२ । सृ-जागुर्यः ।

सृ-जागुः ५।, यः १। ।

आभ्यां यः स्यात् भावे, स च स्त्रियाम् । परिसर्य्या जागर्य्या ।

## ११५३ । शंस्त्यादः ।

शंस्-त्यात् ५।, अः १। ।

आभ्यामः स्यात् भावे स च स्त्रियाम् । प्रशंसा दिदृक्षा आटाटा कण्डूया ।

## ११५४ । सेमक्तात् सरोः ।

सेमक्तात् ५।, सरोः ५। ।

यस्मात् क्तो विहितः सेम् स सेमक्तः, तस्मात् रुमतो धोः

---

डुकृञ भावे शप्रत्यये रतनोर्यमिणाविति षकि ऋद्रिः शयगिति ऋकारस्य रिकारे क्रिया । क्यपि तु गुणाभावे खस्येति तनि कृत्या । अत्र चकारेण क्तेरपि मुख्यात् कृतिरपि । एवं चकारात् मृगयतेरपि शप्रत्यये मृगया ॥११५१॥

परिसरणं परिसर्य्या, परिपूर्वस्यैव प्रयोगः । जागरणं जागर्य्या ॥११५२॥

शनृस च त्यश्चेति शंस्त्यं तस्मात् । शनृसु हिंसास्तुत्योः । प्रशंसनं प्रशंसा । त्यः प्रत्ययान्तः । दृशं औ प्रेच्छे सनि शङ्काजेति षञ्चि षढ़ोः कः से इति षस्य ककारे दिदृक्षभागादनेन भावे अप्रत्यये लोपोऽत इति सनोऽकारलोपे स्त्रीत्वादापि दिदृक्षा । एवं स्वार्थे सनन्तादपि चिकित्सा इत्यादि । अट गतौ यङि अटाट्य-भागादप्रत्यये इसाल्लोप इत्यकारलोपे पुनस्तस्यैव यकारलोपेऽपि अटाटा । कण्डू-शब्दात् क्यें कृते कण्डूयभागादप्रत्यये कण्डूया । एवं पुत्रकाम्या प्रामीया इत्यादि । कम ऋतेति ईयादौ ऋतीया गोपाया ॥११५३॥

सह इमा वर्त्तते यः स सेम् । सेम् क्तो यस्मात् स सेमक्तः तस्मात् । यस्मात् धातोः परस्य क्तस्य इम् सम्भवति स सेमक्तः। सेमक्तात् गुर्व'चरवतो धातो रः

ङः स्यात् भावे स च स्त्रियाम्। ईहा जागरा। सेमन्तात् किम् ?, नीतिः राद्धिः। रुमतः किम् ?, पत्तिः।

**११५५। तुलेच्छारा तारा धारा कारा हारा गोधा लेखा रेखा चूड़ाः।**

तुला—चूड़ाः १॥।

एते आन्ता निपात्यन्ते। चोदना चूड़ा।

**११५६। भीषि चिन्ति पूजि कथि कुम्बि चर्चि स्पृहि तोलि दोलि षिङ्गिदाद्यात्वर्घटादेर्ङः।**

भीषि—आत्वर्घटादेः ५।, ङः १।।

एभ्यो भावे ङः स्यात् स च स्त्रियाम्। भीषा चिन्ता पूजा

---

स्यादित्यर्थः। ईहङ चेष्टे ईहा जागृच् लु जागरे। सेमन्तात् किं नीञ प्रापणे नीतिः। राध्यौ सिद्धौ राद्धिः। रुमतः किं पट गतौ पत्तिः ॥११५४॥

तुल कि उन्मितौ। तोलयत्यनयेति तुला परिमाणदण्डः। इषुश वाञ्छे इच्छा। ऋ गतौ आरा क्षुरिका। तॄतरे तारा। धृञ धारा। गुध्य वेष्टे गोधा। हृ हारा। कृञ कारा। लिखश लेखा। लकारस्य रेफे रेखा च चुदकर्तुः चूड़ा। चूड़ा इति बहुवचनादन्येऽपि निपात्यन्ते। यथा भिदादेर्भावे णकः स्त्री। भेदनं भेदिका अतएव चिकीर्षा यस्य भेदिकेति स्वयमुक्तम्। एवं विभीषणं भीषणा विभीषिका। रोगाख्यायाम्। प्रवाहिका प्रच्छर्दिका विचर्चिका। संज्ञायाम् उद्यानपुष्पाणि भज्यन्तेऽस्यामिति उद्यानपुष्पभञ्जिका क्रीड़ा। ऋणार्ह-पर्यायेषु च ऋणे पायसभोजिकां मे धारयसि। अर्हे इक्षुभक्षिकां भवान् अर्हति। पर्याये अद्य तव शायिका। एवम् आसिका आसनमित्यर्थः। एवञ्च सम्पादेः पद्यतेर्भावे क्विप् स्त्रियाम्। पद्यौङ गतौ सम्पत् आपत् विपत् प्रतिपत्। एवं टुक्षुल क्षुते। क्षवणं क्षुत्। प्रतिश्रुत् प्रतिध्वनिः विपाशा विपाट्। क्षुधा क्षुत् इत्यादयः॥११५५॥

कथा कुम्बा चर्चा स्पृहा तोला दोला पचा भिदा छिदा गुहा विदा चिपा जना पीड़ा सरा वसा रुजा घटा व्यथा त्वरा ।

११५७ । आतोऽन्तः श्रद्भे ।

आतः ५।, अन्तर्-अत् गेः ५। ।

एभ्यः परादादन्तात् ङः स्यात् स च स्त्रियाम् । अन्तर्द्धा श्रद्धा, संज्ञा प्रमा ।

---

ष इत् यस्य स षित् । भिद आदिर्यस्य स भिदादिः । षालर् त्वरपर्यन्तः । स चासौ घटादिश्चेति आत्वर्घटादिः । ततो भीषिश्च चिन्तिश्चेत्यादि समाहारस्तस्मात् । ञिभीलि भीत्यां णौ भीषादेश्चपचे भीषिः । चिति क स्मृतौ । पूजक पूजे । कथत् क वाक्यप्रबन्धे । कुविकि स्तुत्याम् । चर्च केङ समः । स्पृहत् केप्से । तुलकि उन्मितौ । दुलकुत् चेपे । नवैते अन्ताः । एभ्यो भीषिः अन्यीत्यादिना प्राप्त-व्यं अनं बाधित्वा अनेन ङप्रत्यये जेर्लोपे स्त्रीत्वादापि भीषा इत्यादि । षितस्तु जुहोत्प पच पाके पचा । एवं चिनगण चिया । स्जलुष शुद्धौ स्जूषकि भूषे च इति द्वयोः स्जा । लभङ्डीङ्षः लभा । चमुङ्ञिषः क्षमा इति । भिदादेस्तु । भिदृ र भिदा । छिदिर छिदा । गुहञ गुहा । विदल मतौ विदा । चिपषजौ पा । एषु ङित्वात् न गुणः । जनीम्यङ जनी हनगमेत्यत्र ङवर्जनात् न लोपः । पीड़क पीड़ा अत्र अन्तत्वादन प्राप्तौ ङः । सृ गतौ सरा । ङे परे ष्टर्म्योरिति गुः । श्रौवसे निवासे वसा । रुजीश्रौ रुजा अत्र ङित्वात् न गुणः । इत्यादिराकृतिगणः सृजौ विसर्गे सृजा इत्यपि केचित् । आत्वर्घठादिस्तु । घट-षमङ चेष्टने । जृष्ट्रषम्य ज्यानौ । चजि चजष मङ त्वारि गतौ । प्रथ षमङ ख्यातौ व्यथषमङ दुःखे । कद क्रद क्लदषङ वैक्लव्यविकलत्वयोः । मदृषङ चोदने स्वद्रङ्ष विदारे क्रपषमङ क्लपायां स्यात् । क्लवषङ तु भये । दचषङ हिंसने । त्रपूषमिङ लज्जायाम् । प्रसाषञ प्रसवे ततौ, ञित्वरषमङ वेगे स्यादमी आत्वर्घटा-दयः । घटा व्यथा इत्यादयः ॥ ११५६ ॥

अन्तर्द्धानम् अन्तर्द्धा । एवं श्रद्धा अदित्यव्ययम् । संज्ञायतेऽनया संज्ञा नाम । प्रमीयतेऽनया प्रमाणमिति वा प्रमा । एषु उस्येचीत्याकारलोपे स्त्रीत्वादाप् ११५७॥

## ११५८। ञी षि श्रन्थि ग्रन्थि वेत्ति वन्दासोऽनः।

ञि—आस: ५।, अन: १।।

एभ्योऽन: स्यात् स च स्त्रियाम्। कारणा ईषणा श्रन्थना ग्रन्थना वेदना वन्दना आसना।

## ११५९। प्रश्नाख्याने णिः।

प्रश्न—आख्याने ७।, णि: १।।

प्रश्ने आख्याने च धोर्णि: स्यात् स च स्त्रियाम्। काङ्कारिमकार्षीः सर्वाङ्कारिमकार्षम्।

## ११६०। नञोऽन्याक्रोशे स्त्री।

नञ: ३।, अनि।१।, आक्रोशे ७।, स्त्री।१।।

नञ: पराद्धोरनिः स्यात् आक्रोशे, स च स्त्रियाम्। अजीवनिस्तस्य भूयात् अप्रयाणिः।

## ११६१। ईषद्दुःसोः खल् भावे ढे।

ईषत्-दुर्-सो: ५।, खल्।१।, भावे ७।, ढे ७।।

एभ्य: पराद्धोः खल् स्यात् भावे ढे च। ईषदाढ्यम्भवं भवता। दुराढ्यम्भवं भवता। ईषत्करः कटस्त्वया, दुष्करः सुकरः।

---

डुकृञ्न्त:। कारणा। ईषुञ्छे ईषणा। ग्रन्थ क्लिश दर्भे ग्रन्थना। श्रन्थ श मोचे प्रतिहर्षे श्रन्थना। विदज्ञानौ वेदना। वदिङ स्तुत्यभिवादनयो: वन्दना। ञिआसङ उपवेशे आसना॥ ११५८॥

कृञदडुच योर्णिलात् हड्डौ कारि:। केचित् तु प्रश्ने आख्याने च सकं क्तिं शं क्यपञ्च कृत्वा काङ्कारिकां काङ्कृतिं काङ्क्रियां काङ्कृत्याम् अकार्षीः सर्वाङ्कारिकां सर्वाङ्कृतिं सर्वाङ्क्रियां सर्वाङ्कृत्याम् अकार्षम् इत्युदाहरन्ति॥ ११५९॥

जीवङ्क प्राणे अनि: अजीवनि:। याल गतौ अप्रयाणि:। नीऽच इति णत्वम्। स्त्र्यधिकारेऽपि स्त्रीग्रहणं स्त्र्यधिकारनिवृत्त्यर्थम्॥ ११६०॥

एषामव्ययत्वात् खिल्कार्याभावेऽपि ईषत् दुःसोः परात् धातोः खल्विधाना-

## ११६२। आतोऽनोऽदरिद्रः।

आतः ५।, अनः १।, अदरिद्रः ५।।

दरिद्रावर्जात् आदन्तादीषद्दुःसोः परात् अनः स्यात् भावे ढे च। ईषत् पानः दुष्पानः सुपानः। अदरिद्रः किम् ? ईषद्दरिद्रम्।

## ११६३। दृश शास युध धृष मृषो वा।

दृश—मृषः ५।, वा ।१।।

ईषद्दुःसो परेभ्य एभ्योऽनः स्यात् भावे ढे च वा। सुदर्शनः सुदर्शः, दुःशासनः दुःशासः, दुर्य्योधनः दुर्य्योधः, सुधर्षणः सुधर्षः, ईषन्मर्षणः ईषन्मर्षः।

## ११६४। तादर्थ्ये चतुम्।

तादर्थ्ये ७।, चतुम् ।१।।

धोश्चतुम् स्यात् तादर्थ्ये। कृष्णं द्रष्टुं याति।

---

...दा ह्यादिशब्दव्यवधानेऽपि स्यात् तेन ईषदाढ्योपपदात् भवतेर्भावे खलि गुणे खिता-...व्यस मनि ईषदाढ्यं भवम्। एवं दुराढ्यं भवम्। ईषत् क्रियतेऽसौ इति ...र्म्मणि खलि ईषत्करः एवं दुःखेन क्रियतेऽसौ दुष्करः। सुखेन क्रियतेऽसौ सुकरः॥ ११६१॥

ईषत् पीयतेऽसौ इति कर्म्मणि अने ईषत्पानः। एवं दुष्पानः। अत्र दुर्वर्जनात् ...त्वम्। सुपानः। अदरिद्रः किम् ? ईषत् दरिद्रायते इति भावे खलि दरिद्र आलोपे ईषद्दरिद्रम्॥ ११६२॥

सुखेन दृश्यतेऽसौ इति कर्म्मणि अने सुदर्शनः खलि सुदर्शः। एवं सुखेन शिष्यतेऽसौ सुशासनः सुशासः। एवं दुःशासनः दुःशासः। युध्यौङ युद्धे अन्त-र्भूतण्यर्थत्वात् सकर्म्मकत्वे दुःखेन युध्यतेऽसौ इति कर्म्मणि अने दुर्य्योधनः खलि दुर्य्योधः धृषा कि त्वमर्षे अमर्षं इह अभिभवः। सुखेन धृष्यतेऽसौ सुधर्षणः सुधर्षः। मृषुञ क्षान्तौ। ईषत् मृष्यतेऽसौ ईषन्मर्षणः ईषन्मर्षः॥ ११६३॥

स धात्वर्थः स चासौ अर्थः प्रयोजनश्चेति तदर्थः तस्य भावस्तादर्थ्यं तस्मिन्।

## ११६५ क्वाच् वा निषेधेऽलं खलुना।

क्काच् ।१।, वा ।१। निषेधे ७।, अलं ।१।, खलुना ३।।

**निषेधार्थयोः अलं खल्वोर्योगे धोः क्काच् स्यात् वा भावे। अलं दत्त्वा अलंदानेन, खलुपीत्वा खलुपानेन।**

## ११६६। पूर्वकाले।

पूर्वकाले ७।।

**पूर्वस्मिन् काले स्थिताद्धोः क्काच् स्यात्। विष्णुं नत्वा स्तौति।**

---

यस्य धातोरर्थः अन्यधात्वर्थस्य प्रयोजनं भवति तस्मात् धातोर्भावे भविष्यत्काले च्तुम् स्यादित्यर्थः। चकारोऽव्ययार्थः दृश्ँशौ प्रेक्षे चतुम् औदित्त्वात् इमोऽभावे वर्द्दोऽकिदिति ऋकारस्य रेफे शक्राजेति षङि तस्य टत्वे द्रष्टुम् अव द्रश्धातोरर्थः या धात्वर्थस्य प्रयोजनं भवतीति दृश्धातोश्चतुम्। अव क्रिययोरेककर्त्तृत्वे सत्येव चतुम् स्यात्। तेन विप्रमन्नं भोक्तुं निमन्त्रयते इति न स्यात् अन्नभोजनाय विप्रं निमन्त्रयते इत्येव स्यात्॥ ११६४॥

चकारोऽव्ययार्थः। भीव्रज इत्यादिसूत्रस्य वृत्तौ भावपदव्याख्यानात् इत्यादौ भावस्यैवानुवृत्तिः। तेन डुदाञलि दाने भावे क्काचि दद्दोध इति दतादेशे द त्वा यचेऽनटि सह वारणेत्यादिना तृतीया दानेन। पा पाने भावे क्काचि दामागे इ ई पीत्वा यचे पानेन॥ ११६५॥

यदा कर्त्ता क्रियाद्वयं क्रियात्रयं करोति तदा परक्रियापेक्षया पूर्वस्मिन् काले वर्त्तमानात् धातोर्भावे क्काच् स्यात् इत्यर्थः। तेन पक्त्वा भुङ्क्ते पक्त्वा भुक्त्वा याति। विष्णुं नत्वा स्तौतीति स्तवनक्रियायाः पूर्वकाले वर्त्तमानान्नमो यन्दनत्योरित्यस्मात् क्काचि वनतनेति मलोपे नत्वा। पूर्वकाले किं नमति च स्तौति च इत्यादौ न स्यात्। अव क्रियाणामेककर्त्तृत्वे एव क्काच् स्यात्। तेन गुरौ गते शिष्यो भुङ्क्ते इत्यादौ न स्यात्। किन्तु पुत्रं दृष्ट्वा सुखं भवति शत्रुं दृष्ट्वा दुःखं भवतीत्यादौ स्थितस्य इत्यध्याहारादेककर्त्तृकत्वे क्काच्। यद्यपि कंसपतनानन्तरमेव झनत्कारो भवति तथापि झनदिति कृत्वा कंसः पतति इत्यादौ झनत्कारस्य पूर्वकालविवक्षया क्काच् स्यात्। एवं सुखं व्याद्राय निद्रातीत्यादि॥ ११ ॥

## ११६७। न कित् स्कन्दस्यन्दः ।

न ।१।, कित् ।१।, स्कन्द स्यन्दः ५। ।

स्कन्त्वा। स्यन्त्वा।

## ११६८। सेमऽक्षुध कुष क्लिश गुध मृड़ मृद वद वस ग्रहः ।

सेम् ।१।, अक्षुध—ग्रहः ५। ।

धोः पर इम् सहितः क्त्वाच् कित् न स्यात्, न तु क्षुधादेः। शयित्वा। सेम् किम्? श्रुत्वा। क्षुधादेस्तु क्षुधित्वा।

## ११६९। तृष मृष कृष वञ्च लुञ्चृतो वा।

तृष—ऋतः ५।, वा ।१। ।

एभ्यः सेम् क्त्वाच् कित् न स्यात् वा। तर्षित्वा मर्षित्वा कर्षित्वा व[illegible]त्वा लुञ्चित्वा अर्त्तित्वा। पक्षे तृषित्वा इत्यादयः।

---

आभ्यां परः क्त्वाच् कित् न स्यात्। स्कन्दिरौ गतिशोषणयोः। क्त्वाचः कित्त्वाभावात् हसुक् इत्यनेन नलोपाभावे एकवर्गीयवर्णत्रयमध्यवर्त्तित्वात् दलोपे [illegible]न्त्वा। स्यन्दङ्वल्ल स्रुतौ क्त्वाचि ऊदित्त्वात् इमोऽभावपक्षे स्यन्त्वा। अत्र नञा निर्दिष्टमनित्यमिति न्यायात् क्त्वाच् स्थानजातस्य यपः कित्त्वे प्रस्काद्य प्रस्यद्य इत्यत्र न लोपः स्यात्॥ ११६७॥

सम इमा वर्त्तते योऽसौ स सेम्। शीङ्लञि क्त्वाच् वसोऽरस्येति इमि अनेन कित्त्वनिषेधे गुणे शयित्वा। एवम् ऋचश स्तुत्याम् अर्चित्वा इत्यादि। सेम् किम्? जित्वा श्रुत्वा कृत्वा। क्षुधलृषौ क्त्वाचि क्षुधवसेति इमि क्षुधित्वा। कुषग निष्कर्षे। कुषित्वा। क्लिशुञ चोपतापे। क्लिशूगतु विबाधे एतयोः इम् पक्षे क्लिशित्वा। गुध्य वेष्टे गुधग रुषि गुधङ क्रीड़े इति त्रयाणां गुधित्वा। मृड़गश्च मोदे मृड़ित्वा मृदग क्षुदि मृदित्वा एषु कित्त्वात् न गुणः। वदे वाचि ग्रहस्वपाद्योरिति जौ उदित्वा वसेश्ची निवासे क्षुधवसेति इमि ग्रहस्वपाद्योरिति जौ शासवसेति षत्वे उषित्वा। गग्रहज च ग्रहस्वपाद्योरिति जौ ग्रहेरिमोर्घ इति दीर्घे गृहीत्वा। क्षुध-क्लिश वस इति विभ्योऽन्येषु वसोऽरस्येति इम्॥ ११६८॥

## ११७० । थ-फात् नुङः ।

थ-फात् ५।, नुङः ५। ।

नकारोङस्थान्तात् फान्ताच्च सेम् क्वाच् कित् न स्यात् वा। ग्रन्थित्वा ग्रथित्वा ग्रन्थित्वा ग्रथित्वा गुम्फित्वा गुफित्वा। नुङः किम्? कोथित्वा रेफित्वा।

## ११७१ । नश्-जोऽनिमः ।

नश्-जः ५।, अनिमः ५। ।

नशो जान्ताच्च नुङोऽनिमः परः क्वाच् कित् न स्यात् वा। नष्ट्वा नंष्ट्वा, भक्त्वा भंक्त्वा। अनिमः किम्? अञ्जित्वा।

[८१८] व्युङोऽवोहसादेरिति द्योतित्वा, द्युतित्वा लेखित्वा, लिखित्वा। रुदादेस्तु रुदित्वा विदित्वा मुषित्वा। अवः किम्? देवित्वा। हसादेः किम्?, एषित्वा ओषित्वा।

---

इर्षञ्जि तृष तृषि। क्वाचः कित्त्वाभावे गुणे तर्षित्वा कित् पक्षे तृषित्वा। ए मृषु सेचने मृष्यञङु मृष्यञ चान्तौ एषां मर्षित्वा मृषित्वा। कृशिर्ष तु काङ्क्षः कर्शित्वा कृशित्त्वा। वन्चु गत्यां वञ्चित्वा कित् पक्षे वचित्वा। एवं लुन् चापनयने लुञ्चित्वा लुचित्वा। ऋत स्पर्द्धनैश्वर्ययोः अर्त्तित्वा ऋतित्वा॥ ११६९॥

ग्रन्थग मोचे ग्रन्थित्वा ग्रथित्वा। गुन्फश ग्रन्थे गुम्फित्वा गुफित्वा। नकारोङः किम्? कुथ्यतु पूतित्वे कोथित्वा। रिफश्अर्फे रेफित्वा॥ ११७०॥

नश च ज चेति तस्मात्। नश्लृ नाशे ऊदित्त्वात् वेमूदिदित्यनेन इमोऽभावपक्षे नुष् रध इति नुणि कित् पक्षे हसुङ्ण इति नलोपे शक्त्राजेति षङि नष्टा भन्जोधौ मोटने औदित्त्वात् इमोऽभावे न लोपे चङ्ङिति जस्य गकारे झप्झसोरिति गस्य ककारे भक्त्वा। पक्षे नस्यानुस्वारे ञपेञमनीरिति तस्य ङकारे भङ्क्त्वा। अनिमः किम्? अञ्जधञ्जि इम् पक्षे सेमक्त्वेति कित्त्वनिषेधे नस्यानुस्वारे तस्य ञकारे अञ्जित्त्वा। वुङोऽवो हसादेरित्यस्योदाहरणमाह द्युत्लृङ द्युत्यां द्युतित्वा द्योतित्वा लिखश लेखने लिखित्वा लेखित्वा। रुदादेस्तु रुदित्वा विदित्वा मुषित्वा। अवः

## ११७२। पू-क्लिशुदित इम्।

पू-क्लिश-उदितः ५।, इम् ।१।।

एभ्यः क्त्वाच् इम् स्यात् वा। पवित्वा पूत्वा, क्लिशित्वा क्लिष्ट्वा, शमित्वा शान्त्वा।

## ११७३। क्रमोर्घो वा।

क्रमः ६।, र्घः १।, वा ।१।।

क्रमित्वा क्रान्त्वा क्रन्त्वा।

## ११७४। जॄ-व्रश्चो न जिः।

जॄ व्रश्चः ६।, न ।१।, जिः १।।

आभ्यां क्त्वाच् इम् स्यात् न तु व्रश्चेर्जिः। जरित्वा व्रश्चित्वा।

---

किम्? दिव्यु जिगीषादौ उदित्वेन क्त्वाच् वेट्त्वात् इम् पक्षे सेमच्चुधकुषेत्यादिना। यकित्त्वाभावे गुणे देविता पक्षे द्युत्वा इति बोध्यम्। इसादेः किम्? एषित्वा षित्वा। अनयोरपि वेमत्वात् इम् पक्षे कित्त्वाभावो नित्यः॥११७१॥

वॄदुश्चोत्यनेन कितामिम् निषेधात् पू इत्यस्याप्राप्तौ विकल्पार्थं ग्रहणम्। क्लिश्युप्त चोपतापे अस्य स्वमते उदित्त्वेऽपि पुनर्ग्रहणम् अन्येषां मते उदित्त्वाभावात्। पूस्वरूपात् क्त्वाचोऽनेन इमि सेमच्चुधकुषेत्यादिना कित्त्वनिषेधात् गुणे पवित्वा पक्षे पूत्वा। क्लिश्युत्त क्त्वाच इमि सेमच्चुत्रेत्यत्र क्लिशवर्जनात् गुणाभावे क्लिशित्वा पक्षे क्लिष्ट्वा। शमुभिर्ष शमे उदित्त्वादनेन इमि शमित्वा पक्षे जमुङ भस्यणाविति दीर्घे शान्त्वा॥११७२॥

क्रमो र्घः स्यात् क्त्वाचि। क्रमु गतौ क्त्वाच् वेट्त्वात् इमोऽभावपक्षेऽनेन दीर्घे क्रान्त्वा पक्षे क्रन्त्वा। इम् पक्षे क्रमित्वा इति बोध्यम्॥११७३॥

विभाषाद्वयमध्यवर्त्तित्वादस्य नित्यत्वम्। जॄस्वरूपात् वॄदुश्चोत्यनेन कितामिम् निषेधेऽपि अनेन इमि सेमच्चुधेत्यादिना कित्त्वनिषेधात् गुणे जरित्वा। पक्षे वॄतो वेम इति दीर्घे जरीत्वा इत्यपि। जॄ इति दीर्घान्तस्य ग्रहणमिति दुर्गसिंहः। लु

## ११७५। ह्राको ह्रिः।

ह्राकः ६।, ह्रिः १।।

ह्रित्वा।

## ११७६। व्यादनञः क्त्वो यप् से।

व्यात् ५।, अनञः ५।, क्त्वः ५।, यप् ।१।, से ७।।

नञ्वर्जात् व्यात् परात् धोः क्त्वो यप् स्यात् से सति प्रकर्षेण कृत्वा प्रकृत्य, प्रवत्य प्रतत्य प्रहत्य, उदज्य, प्रदाय प्रमाय प्रगाय प्रह्राय प्रपाय प्रसाय प्रस्थाय। [ ७५३ ] दीङ्छ्रामिति यपि ङा। प्रदाय [ ७४५ ] मिम्योरिति ङा प्रमाय प्रलाय प्रलीय।

---

न्यक्वारे इति ऋखान्तस्य ग्रहणमित्येके। व्रयूश् छेदे ऊदित्त्वेन वेमत्वेऽपि ग्र न नित्ये मि व्रश्चित्वा। सेम् क्त्वाचः कित्त्वनिषेधादेव ञेरप्राप्तौ अत्र ञेर्निषेधो ज्ञापय ति कस्यचिद्विधेर्निषेधेऽपि पुनः प्रसक्तिः स्यादिति। तेन ह्वव्रतेरिति इम् निषेधे पि उणादेः क्तेः इम् स्यात्। यथा भणितिः सङ्कुचितिः निकुचितिः आलोचिति पठितिः गृहीतिः क्षिहितिः उदितिः मुदितिः दीधितिरित्यादि ॥११७४॥

ह्राको ह्रिः स्यात् क्त्वाचि। ह्रित्वा। ह्राकः किम्? ओह्राङ्लि गतौ ह्रात्वा ॥११७५॥

नास्ति नञ् यत्र सोऽनञ् तस्मात्। कृञदड्ड च प्रकर्षेण कृत्वा इति व्यस्य ग्यनु-कारेति समासे अनेन क्त्वाचो यपि तस्य स्थानिवत्त्वेन कित्त्वात् गुणाभावे खस्य तनि प्रकृत्य। वनुम व्याप्तौ प्रवत्य। तनदुञ विस्तृतौ प्रतत्य। हनत्वौ प्रहत्य। एषु वनतनेति न लोपे खस्य तन्। अञ्जूधञि ह्मुङ्ङ इति नलोपे उदज्य। दा इति स्वरूपस्य प्रदाय। मा इति स्वरूपस्य प्रमाय। गै प्रगाय। ह्राक प्रह्राय। पा पाने प्रपाय। षोय नाशे प्रसाय। स्था प्रस्थाय। एषु दामागैह्रागित्यत्र यप्वर्जनात् न ङी। ओदीङ्य चये दीङ्छ्रामिति ङादेशे प्रदाय। डुमिञन चेपे मीङ्षतु नीञन वधे एषां मिम्योरिति ङादेशे प्रमाय। लौ इत्यस्य लियस्तु वेत्यनेन ङादेशविकल्पे प्रलाय प्रलीय। अनञः किम्? अकृत्वा न कृत्वा। से किम्?

## ११७७। म्लोपो वा अनिमः।

म्-लोपः १।, वा ।१।, अनिमः ६। ।

अनिमो मस्य लोपः वा स्यात् यपि। प्रणत्य प्रणम्य। अनिमः किम्? प्रशम्य।

## ११७८। घोर्ञेरयः।

घोः ५।, ञेः ६।, अयः १। ।

घुपूर्वस्य ञेरयः स्यात् यपि। विगणय्य। घोः किम्? सम्प्रधार्य्य।

## ११७९। वापः।

वा ।१।, आपः ५। ।

आपः परस्य ञेरयः स्यात् वा यपि। प्रापय्य प्राप्य।

## ११८०। वा-मेच्योर्मिच्यौ।

वा ।१।, मे-च्योः ६॥, मिच्यौ: १॥ ।

मेङो मिः चेः चीः स्यात् वा यपि। अपमित्य अपमाय, प्रचीय प्रचित्य।

---

यदि कृत्वा इति। कदाचिदनव्ययपूर्वादपि तेन स्वप्नं त्यज्य गच्छति। सन्ध्या-वधूं गृह्य करेण गाढ़मित्यादि जौमराः॥ ११७६॥

नमौ शब्दनत्योः मलोपे स्वस्य तनि प्रणत्य पचे प्रणम्य। एवम् औगम आगत्य आगम्य। अनिमः किम्? विक्राम्य आचम्य। निर्जित्य आहत्य विष्टत्य इत्यादौ आगमा-दृष्टयोरागमस्य बलवत्त्वादौ स्वस्य तनागमे घोँऽजय्यरे इति न स्यात्॥ ११७७॥

लघोरव्यवहितपरस्य ञेरसम्भवात् हसव्यवधाने इत्यर्थः। गणत्क संख्याने। ञौ हसाल्लोप इत्यकारलोपे गणिभागात् क्त्वाचो यपि अनेन ञेरयि विगणय्य एवं विघटय्य इत्यादि। घोः किम्? संपूर्वात् धृक धृत्यां ञौ धारिभागात् क्त्वाचो यपि गुर्वक्षरपूर्वत्वात् ञेरयाभावे ञेर्लोपे सम्प्रधार्य्य। एवं प्रपाठ्य प्रभाव्य इत्यादि॥ ११७८॥

प्रापय्य प्राप्य। अत्र गुरुपूर्वत्वात् अप्राप्तौ विभाषा॥ ११७९॥

## ११८१ । न वे-ज्या-व्यो जिः ।

न ।१।, वे ज्या—व्यः ६।, जिः १।।

एषां जिर्न स्यात् यपि । प्रवाय प्रज्याय प्रव्याय ।

## ११८२ । संपरि-व्यो वा ।

सम्-परि-व्यः ६।, वा ।१।।

आभ्यां व्येञोजिर्वा स्यात् यपि, संवीय संव्याय, परिवीय परिव्याय ।

## ११८३ । घणम् वाभीक्ष्ण्ये पूर्वकाले ।

घणम् ।१।, वा ।१।, आभीक्ष्ण्ये ७।, पूर्वकाले ७।।

धोः पूर्वकाले घणम् वा स्यात् पौनःपुन्ये । स्मृत्वा स्मृत्वा नमसि, स्मारं स्मारं नमसि ।

कृतो ये यत्र विहितास्तत्र नूनं भवन्ति ते ।
क्वचित् कभाव इत्युक्तेरन्यत्रापि प्रयोगतः ॥

तथाच ।

कृत्तद्धितसमासानामभिधानं नियामकम् ।
लक्षणं त्वनभिज्ञानां तदभिज्ञानसूचकम् ॥

---

मेङ प्रतिदाने क्त्वाचो यपि अनेन मि आदेशे स्वस्य तनि अपमित्य । पक्षे एचोऽशित्या अपमाय । चित्स्वरूपात् क्त्वाचो यपि दीर्घान्तादेशे प्रचीय पक्षे स्वस्य तनि प्रचित्य । पुनर्वाग्रहणं परतो वाधिकारनिवृत्त्यर्थम् ॥ ११८० ॥

वेञ्वे स्युतौ ज्यागि जरायां व्येञ् वृतौ एषां ग्रहस्वपाद्योरिति प्राप्तौ जिर्न स्यात् यपि ॥ ११८१ ॥

सम्परिपूर्वस्य व्येञ् वृतावित्यस्य जिर्वा स्यात् यपि । संवीय परिवीय । उभयत्र जौ कृते जीर्घोऽन्त्य इति दीर्घः । सम्परिपूर्वस्य किम् ? प्रव्याय प्रतिव्याय ॥११८२॥

अभीक्ष्णं मुहुरर्थमव्ययं तस्य भावः आभीक्ष्ण्यम् । अत्रापि क्रिययोरेककर्तृकत्वे सतीति बोध्यम् । स्मृ स्मृतौ घणम् णित्त्वात् वृद्धौ स्मारं स्मारं आभीक्ष्ण्ये पूर्व-

र्तत्वात् डित्वम्। चित्वादव्ययम्। पचे स्मृत्वा स्मृत्वा। अत्र वाशब्दस्य व्यवस्था-वाचित्वात् क्वचित् पौनःपुन्याभावेऽपि चणम् स्यात्। तदेवाहं विवृणोमि। अग्रे प्रथमपूर्वेभ्यो भीश्चणम् वा। अग्रे भोजं व्रजति अग्रे भुक्त्वा व्रजति। एवं प्रथमं पूर्वम्। कर्म्मणः कृञश्चणमः। खणमाक्रोशे। चौरं कारमाक्रोशति। खित्वात् मन्। णित्वात् वृद्धिः। चौरं कृत्वा आक्रोशतीत्यर्थः। आक्रोशे किम्? साधु कृत्वा स्तौति। स्वार्थात् कृञः। स्वादुङ्कारं भुङ्क्ते। सुरसङ्कारं भुङ्क्ते। कथङ्कारं भुङ्क्ते। दीर्घात् नेष्यते। स्वादूकृत्य अत्रोकारो दीर्घः। स्वादीं कृत्वा यवागूं भुङ्क्ते। कथमित्थमेवमन्यथाभ्यः कृञश्चणम्। कथङ्कारं भुङ्क्ते। इत्थङ्कारम्। एवङ्कारम्। अन्यथाकारम्। यथातथाभ्यामचमोत्तरे। यथाकारं तथाकारम्। अहम् भोक्ष्ये तवानेन किम्। अचमोत्तरे किम्? यथा कृत्वा अहं भोक्ष्ये तथा कृत्वा अहं द्रक्ष्यामि। दृशविदभ्यां साकल्ये। कन्यादर्शं वृणोति यां यां कन्यां पश्यति तां तां सर्वां वृणोतीत्यर्थः। विप्रवेदं भोजयति यं यं विप्रं वेत्ति विन्दति वा तं तं भोजयतीत्यर्थः। साकल्ये किम्? किञ्चिद्विप्रं दृष्ट्वा भोजयति। यावतो जीवविन्दात्। यावज्जीवमधीते यावज्जीवति तावदधीते इत्यर्थः। यावद्वेदं भुङ्क्ते यावन्तं विन्दति तावन्तं भुङ्क्ते इत्यर्थः। चर्म्मोदराभ्यां पूरेः। चर्म्मपूरं ददाते। उदरपूरं भुङ्क्ते उदरं पूरयित्वा भुङ्क्ते इत्यर्थः। वर्षप्रमाणे ऊकारलोपश्च वा। गोष्पदप्रं गोष्पदपूरं वृष्टो देवः गोष्पदं पूरयित्वा ववर्षेत्यर्थः। वस्त्रार्थात् क्नोपेः। वस्त्रार्थात् परात् ज्ञाल्लकुयधातोश्चणम् स्यात् वर्षप्रमाणे। वस्त्रक्नोपं चेलक्नोपं वृष्टो देवः वस्त्रम् आर्द्रं कृत्वा वृष्ट इत्यर्थः। निमूलसमूलाभ्यां गतार्थे कषः। निमूलकाषं समूलकाषं कषति समूलं कषतीत्यर्थः। यत्र गतार्थात् चणम् स्यात् तत्र तद्धातुरनुप्रयुज्यते। गतार्थादिति किम्? चेलक्नोपं वृष्टो देवः। समूलात् गतार्थहन्तेः। समूलघातं हन्ति समूलं हन्तीत्यर्थः। शुष्कचूर्णरूक्षाद्गतार्थपिषः। शुष्कपेषं पिनष्टि शुष्कं पिनष्टीत्यर्थः। एवं चूर्णपेषम्। रूक्षपेषम्। जीवाद्गतार्थग्रहः। जीवग्राहं गृह्णाति जीवं गृह्णातीत्यर्थः। अकृताद्गतार्थे कृञः अकृतकारं करोति अकृतं करोतीत्यर्थः। करणाद्गतार्थहन्तेः। पादघातं भूमिं हन्ति पादेन भूमिं हन्तीत्यर्थः। हस्तार्थकरणाद्गतार्थग्रहवर्त्तिवृतः। हस्तग्राहं गृह्णाति हस्तेन गृह्णातीत्यर्थः। हस्तवर्त्तं वर्त्तयति हस्तेन वर्त्तयतीत्यर्थः। करवर्त्तं वर्त्तते करेण वर्त्तते इत्यर्थः। आत्मीयबन्धुवित्तवाचकात् करणाद्गतार्थपुषः। स्वपोषं पुष्णाति स्वेन पुष्णातीत्यर्थः। एवं

आत्मपोषं आत्मीयपोषं ज्ञातिपोषं बन्धुपोषं धनपोषम् । छेदनात् करणाद्गतार्थे-पिषः । छिद्यतेऽनेनेति छेदनं जलादि । उदकपेषं पिनष्टि उदकेन पिनष्टीत्यर्थः । एवं तैलपेषं घृतपेषम् । आधाराद्गतार्थबन्धः । चक्रबन्धं बद्धः चक्रे बद्ध इत्यर्थः । मुष्टिबन्धं बद्धः मुष्टौ बद्ध इत्यर्थः । संज्ञायाञ्च । क्रौञ्चबन्धनं बद्धः । एवं मयूरिका-बन्धं बद्ध इत्यादि । बन्धनविशेषाणामियं संज्ञा । कर्त्तृजीविपुरुषाद्गतार्थनशवहः क्रमात् । जीवनाशं नष्टः जीवो नष्ट इत्यर्थः । पुरुषवाहं वहति पुरुषो भूत्वा वहतीत्यर्थः । विद्युत्प्रणाशम् । अयं निपात्यते । विद्युत्प्रणाशं नश्यति विद्युदिव नश्यतीत्यर्थः । ऊर्द्ध्वाद्गतार्थशुषिपूरेः । ऊर्द्ध्वात् कर्त्तुः पराभ्यां गतार्थशुषिपूरिभ्यां णम् स्यात् । ऊर्द्ध्वशोषं शुष्कः । ऊर्द्ध्वपूरं पूर्णः । तृतीयान्ताद्युपपदेन णमन्तस्य समासो वा वक्तव्यः । तृतीयान्तपदादुपदंशे । तृतीयान्तपदादुपदंशेश्णम् यात् । तृतीयान्तेन समासश्च वा । मूलकेनोपदंशं भुङ्क्ते । हिंसार्थाच्चैककर्म्म ात् । तृतीयान्तादिपदाद्धिंसार्थधातोश्चानुप्रयोगेण चेदेककर्म्मकात् णम् स्यात् तेन समासश्च वा । दण्डेनोपघातं दण्डोपघातं गाश्चालयति । केशेषु केशैर्वा ग्राह्यं युध्यन्ते केशग्राहं युध्यन्ते । पार्श्वयोः पार्श्वाभ्यां वा उपपीड़ं शेते । मुष्टि ीड़ दधाने इति भट्टिः । एवं पाण्युपकर्षं भक्षयति पाणिना उपलक्ष्य जनो भ य-तीत्यर्थः । अपादानाद्धातोश्णम् । त्वरायां समासश्च वा । शय्याया उत्थानं श य्यो-त्थायं धावति । द्वितीयान्ताद्ग्रासीश्णम् समासश्च वा । लोष्ट्रं ग्राहं चौर ग्राहं युध्यन्ते । स्वाङ्गाच्चाध्रुवाद्धातोश्णम् समासश्च वा । यस्मिन्नङ्गे छिन्ने प्राणी न म्रियते तत् अध्रुवम् । भ्रुवौ विक्षेपं भ्रू विक्षेपं वक्ति । अध्रुवादिति किम् ? । र उत्क्षिप्य कथयति । परिपीड्यमानस्वाङ्गाद्धातोश्णम् समासश्च वा । उर । परिपेषम् उरःपरिपेषं युध्यन्ते कृत्स्नमुरः पीड़यित्वा युध्यन्ते इत्यर्थः । उरो विदारं प्रतिचस्करे नखैरिति माघः । उपपदवीप्सायां धोश्णम् स्यात् समासश्च । शिलायां शिलायामुपविश्य शिलोपवेशं लतां लतामनुपात्य लतानुपातम् । नदीं नदीमवस्कद्य नद्यवस्कन्दमिति नाम्न आदिशग्रहः समासश्च वा । नामान्यादेशं नामादेशं ददाति एवं नामानिग्राहं नामग्रहं आह्वयति । तसन्तस्वाङ्गात् धोश्णम् । क्राचौ समासश्च वा । मुखतःकारं मुखतःकृत्य मुखतःकृत्वा आस्ते । तसन्तत्वेनाव्ययत्वात् क्राचौ यप् । तसन्तस्वाङ्गात्तु च्वीसंश्च भुवश्णम् क्राचौ समासश्च वा । मुखती भावं मुखती भूय मुखती भूत्वा आस्ते । एवं तूष्णीम्भावं तूष्णी-भूय तूष्णीम्भूत्वा । एवञ्च प्रयोगानुसारात् धातुविशेषेभ्यः अर्थविशेषेषु प्रत्ययविशेषान्

## ११८४। बहुलं ब्रह्मणि।

बहुलं १।, ब्रह्मणि ७।।

यत् इदं लौकिकप्रयोगव्युत्पत्तये लक्षणमुक्तं तत् वैदिकप्रयोगव्युत्पत्तौ बहुलं ज्ञेयम्। क्वचित् विहितं न स्यात्। [१] क्वचित् निषिद्धं स्यात् [२]। क्वचित् वा स्यात्। क्वचित् ततोऽन्यथापि इत्यर्थः। यथा पूर्वैभिः [१] ब्राह्मणाम् [२] इत्यादौ वेदसिद्धेः।

ब्रह्मशब्दोऽत्र मङ्गलार्थः।

### इति उणादि-पादः।

इति कृदन्ताध्यायः।

### समाप्तम्।

---

कृ ऽन्येऽपि साधुशब्दा व्युत्पाद्याः। यथा उणिकृते करोतीति कारुः। वातीति वा :। भातीति भवान्। बिभेत्यस्मादिति मे कृते भीमभीष्मौ निपात्यौ। एवं धा भावाभावे इः। यथा भवनं भविः त्यजनं त्यजिः नर्त्तनं नृतिः। अत्र किम्? र्न दनं बुधिः दर्शनं दृशिरित्यादि। धातोः स्वरूपकथने तिप्। यथा भवतिः त्तिः दीव्यतिः। एवं स्वरूपकथने इर्भुवादेर्न च गुणः। भविः ग्रहिः रञ्जिः। भुवादेस्तु भुविः युजिः मुहिः सिचिः दुहिः दृशिरित्यादि। अतएव नाम च धातुजमाह निरुक्ते व्याकरणे शकटस्य च तोकम्। यन्न पदार्थविशेषसमुत्थं प्रत्ययतः प्रकृतेश्च हि दृष्टमिति प्राञ्चः।

कृतो ये यत्रेति—

ये कृतः यत्र येष्वर्थेषु विहितास्ते तत्र तेषु नूनं निश्चितं भवन्ति। प्रयोगतः महाकविप्रयोगानुसारेण अन्यत्रापि स्युः। तत्र हेतुमाह। कृद्भोः कभाव इति वचनात्। उदाहरणं तत्रैव द्रष्टव्यम्। न केवलमहमेवं ब्रवीमि प्राञ्चोऽप्येवमाहुः इत्यत आह कृत्तद्धितसमासानामिति ॥११८३॥

बहुलमिति। बहवः प्रकाराः सन्त्यस्येति बहुलं चूडादित्वात् लः। अथवा बहून् अर्थान् लाति गृह्णाति बहुलम् ॥११८४॥

मुग्धबोध-पठन-प्रयोजनम्।

गीर्वाणवाणीवदनं मुकुन्द-
सङ्कीर्त्तनञ्चेत्युभयं हि लोके।
सुदुर्लभं तच्च न मुग्धबोधा-
न्नलभ्यतेऽतः पठनीयमेतत्॥

ग्रन्थकृत्-परिचयः।

विद्वद्धनेश्वरच्छात्रो भिषक्केशवनन्दनः।
वोपदेवश्चकारेदं विप्रो वेदपदास्पदम्॥

वोपदेव प्रशंसा।

यो वाचस्पतिनेव, पन्नगपुरी शेषाहिनेवाभवत्
येनैकेन विदुष्मती वसुमती मुख्येन सद्भावताम्।
सोऽयं व्याकरणार्णवैकतरणिश्चातुर्य्यचिन्तामणि-
र्जीयात् कोविदगर्वपर्वतपविः श्रीवोपदेवः कविः॥

ग्रन्थोत्कर्षं ख्यापयन्नाह गीर्वाणेत्यादि। गीर्वाणवाणीवदनं संस्कृत यत् मुकुन्दसंकीर्त्तनञ्च इत्युभयमेव लोके सुदुर्लभं भवति। तच्च उभयं न मुग्धबोधात् मुग्धबोधभिन्नग्रन्थात् न लभ्यते अतो हेतोः एतत् पठनीयम्। नानादर्शि-शिष्यपरम्परया नामोत्कीर्त्तनयशोवर्द्धनार्थं गुरोः पितुरात्मनश्च नाम निर्दिशति वोपदेवः विद्वद्धनेश्वरेत्यादि। उः शिवः अः विष्णुः उश्च अश्च वौ तयोरुपसमीपे दीव्यतीति इदानीं तत् शिष्यस्तत्कीर्त्तिं वर्द्धयन् श्लोकद्वयमाह यो वाचस्पतिनेत्यादि॥

दुर्गादासो व्यरचयदिमां मुग्धबोधस्य टीकां,
नानाविद्वन्मताव्याख्यासतामाशुबोधां सुबोधाम्।
आलोकन्तामपिशुनबुधाः सूयमानाः स्वभावात्
दोषं त्यक्त्वा लवमपि गुणं भूरिवद्भावयन्तु॥

इति श्रीदुर्गादासविद्यावागीशविरचितायां
मुग्धबोधस्य टीकायां कृदन्ताध्यायः।

सम्पूर्णोऽयं ग्रन्थः।

# सूचीपत्राणि ।

---

## सूत्रसूची ।

# संज्ञा-सूची।

---

# आगम सूची ।

| | | | |
|---|---|---|---|
| स्वमि | १०४५ | स्मात् | ११२,११४ |
| स्राघ | ४७० | स्मिन् | ११२, ११४ |
| स्रीट | ५९७ | स्मै | ११२ |
| स्रं | ४७० | स्य | १०६ |
| स्रव | ४७० | ह्व | ९१७ |
| स्रु | ११६ | ह्वि | १०८६, ११७५. |
| स्रा | ४७० | ह्रद | ११६ |
| स्री | १०७९ | क्रस | ४७० |

# स्त्रीत्व-सूची ।

| | सूत्राङ्कः । | | सूत्राङ्कः । |
|---|---|---|---|
| आप् | २४९, २५० | ऊप् | २७७-२७९ |
| ईप् | २५३,२५७,२६१-२७३,३६९-३७२ | ङाप् | २५१-२५२ |

# तद्धित-सूची ।

| | सूत्राङ्कः । | | सूत्राङ्कः । |
|---|---|---|---|
| अ | ४४६ | इन | ४४६ |
| अयट् | ४६१ | इभ | ४४६ |
| अस् | ५२२ | इम | ४८९ |
| आ | ५२० | इमन् | ४७५ |
| आत् | ५२१ | इय | ४२९ |
| आरक | ४४६ | इर | ४४६ |
| आलु | ४४६ | इल | ४४६ |
| आहि | ५२० | इष्ठ | ४६६ |
| इत | ४९४ | ईयस् | ४६६ |
| इन् | ४४४, ४४९ | ईर | ४४६ |

## स्त्रीत्य·समासान्त·तद्धित·कृदन्तेतर·प्रत्यय—(धात्ववयव)—सूची ।





